---

Printed by S. V. Parulekar, at the Bombay Vaibhav Press, Servants of India Society's Home, Sandhurst Road, Girgaon, Bombay.

Published by Jivanchand Sakarchand Javeri for Sheth Devchand Lalbhai Jain Pustokoddhar Fund, at Sheth Devchand Lalbhai Dharmashala, Badekhan Chaklla, Surat.



# श्रेष्ठी देवचन्द लालभाई जव्हेरी.

| | |
|---|---|
| जन्म १९०९ वैक्रमाब्दे<br>कार्तिकशुक्लैकादश्यां (देवदीपावली सोमवासरे)<br>सूर्यपूरे. | निर्याणम् १९६२ वैक्रमाब्दे<br>पौषकृष्णतृतीयायाम् (मकरसंक्रान्तमंदवासरे)<br>मुम्बय्याम्. |

## The Late Sheth Devchand Lalbhai Javeri.

Born 22nd Nov. 1852 A. D Surat, Died 13th January 1906 A. D Bombay.

7-27 -Copies 5000.

N. S P

श्रेष्ठिवर्य देवचन्द लालभाई-जैनपुस्तकोद्धारे ग्रंथांकः ७६ ।

श्रीसर्वज्ञाय नमः ।

श्रीमद्विजयानंदसूरीश्वरपादपद्मेभ्यो नमः

श्रीशुभशीलगणिविरचिता

# श्रीभरतेश्वरबाहुबलिवृत्तिः ॥

युगादौ व्यवहाराध्वा, सर्वो येन प्रकाशितः । स श्रीवृषभयोगींद्रो, दद्याद्वोऽव्ययसम्पदम् ॥ १ ॥ त्यक्त्वा चक्रिश्रियं सद्यो, ललौ यः संयमश्रियम् । स श्रीशान्तिजिनो भूया–ज्जनानां शिवशर्मणे ॥२॥ येनासाववतारेण, यदुवंशः पवित्रितः । स श्रीनेमिजिनाधीशो, भूयादव्ययसम्पदे ॥३॥ यस्य नामश्रुतेर्विघ्न–श्रेणिर्याति क्षयं क्षणात् । स श्रीपार्श्व-प्रभुर्दद्या–त्कल्याणकमलां सताम् ॥ ४ ॥ सेवतेऽङ्कमिषात्सिंहो, यं बलेन पराजितः । स श्रीवीरविभुर्वर्यः श्रिये भूया-

च्छरीरिणाम् ॥५॥ महात्मनां मुमुक्षूणां, सतीनां च सुयोगिनाम् । नामोत्कीर्तनमात्रेण, शिवश्रीर्जायते नृणाम् ॥ ६ ॥ तपागच्छाधिपाः श्रीमन्–मुनिसुन्दरसूरयः । तच्छिष्यः शुभशीलाव्हो, भरतादिकथां व्यधात् ॥७॥ तथाहि, तत्र प्रथमगाथा–

भरहेसरबाहुबली, अभयकुमारो य ढंढणकुमारो ।
सिरिओ अन्निआउत्तो, अइमुत्तो नागदत्तो अ ॥ १ ॥

इत्यादि त्रयोदश गाथा । दानविषये श्रीभरतचक्रिबाहुबलिकथा । सा तु श्रीमहावीरस्वामिनं विना वक्तुं न शक्यते, तेनादौ श्रीयुगादिदेवस्य त्रयोदश भवा उच्यन्ते––" धण १ मिहुण २ सुर ३ महब्बल ४ ललिअंगय ५ वयरजंघ ६ मिहुणे य ७ ॥ सोहम्म ८ विज्ज ९ अच्चुय १० । चक्की ११ सव्वट्ठ १२ उसभे अ १३ ॥ १ ॥" तथाहि––पूर्वं क्षितिप्रतिष्ठिते पुरे धननामा सार्थवाहोऽजनि । तेनाऽन्यदा चिंतितं, लक्ष्मीं विना नरः शोभां नाप्नोति । यतः–" वरं वनं व्याघ्रगणैर्निषेवितं, जलेन हीनं बहुकण्टकाकुलम् । तृणैश्च शय्या वसनं च वल्कलं, न बन्धुमध्ये धनहीनस्य जीवितम् ॥ १ ॥ हुंतिए हुंति गुणा, जंतिए जीइ जंति संतावि । जीसे निस्सेसगुणा, भजामो तां अत्थलच्छी ॥ २ ॥ आलस्यं स्थिरतामुपैति भजते चापल्यमुद्योगितां, मूकत्वं मितभाषितं वितनुते मौढ्यं मनोज्ञजीवत । पात्रापात्रविचार-

भावविरहो यच्छत्युदारात्मतां, मातर्लक्ष्मि! तव प्रसादवशतो दोषा अपि स्युर्गुणाः॥३॥"विमृश्येति लक्ष्म्यर्थं वसंतपुरपत्तने गन्तुं पुरमध्ये पटहोद्घोषणामदापयद्धनः। ततो भूरिसमुदाये मिलिते सन्मुहूर्त्तं जग्राह। तृतीया तिथिः भृगुवारः रेवतीनक्षत्रम्। यतः—"आदित्यहस्तो गुरुणा च पुष्यो, बुधाऽनुराधा शनिरोहिणी च। सोमेन सौम्यं भृगुरेवती च, भौमाश्विनी चामृतसिद्धियोगाः ॥ ४ ॥ अश्विनीपुष्यरेवत्यो मृगमूलं पुनर्वसुः। हस्तज्येष्ठाऽनुराधाः स्युः, यात्रायै तारकाबले ॥ ५ ॥" यावद्धनश्चलितुकामोऽभूत्तावच्छ्रीधर्मघोषसूरयस्तत्राभ्येत्य, धर्मलाभपूर्वं धनदत्तासने उपविश्य, धर्मकथामिति प्रोचुः। —"चत्वारो धनदायादा, धर्मचौराग्निभूभुजः। ज्येष्ठेऽप्यपमानिते पुंसां, घ्नन्ति त्रीणि बलाद्धनम् ॥१॥ गव्यूतं प्रव्रजन्मार्गे, यः पाथेयं करोति सः। मृत्युमार्गे न वै कुर्या-दुर्बुद्धिः सज्जनैर्विना ॥२॥ शम्बलं कुरु रे मूढ धर्मं दानं तपो जपम्। इहाऽमुत्र हितार्थाय, न ज्ञातं व्रजनं भवेत् ॥३॥ धर्माच्छम्बलतो नृदेवखचरव्यालेन्द्रसौख्यं भवे--दत्राऽमुत्र च चन्द्रनिर्मलयशः पूजादिकं प्रत्यहम्। पापेनैव च दुःखदुर्गतिभवं श्वभ्रादिकं दुःसहं, निन्दाकीर्तिगणं तदेव कुरु भो भ्रातः! यदिष्टं तव ॥ ४ ॥ श्रुत्वेति धनः प्राह—किं कार्यं श्रीपूज्यपादानामादिशन्तु, गुरुभिरुक्तं वयं वसन्तपुरपत्तने जिगमिषवः स्मः। धनः प्राह—"भगवन्ममोपरि कृपां कृत्वा मया सार्धं समागच्छत। ममापि

मार्गे धर्मश्रवणश्रीपूज्यपादनमनात्पुण्यं भवति।" ततः शोभने दिने सुशकुनेषु जायमानेषु, जम्बूचासमयूरदर्शनप्रदक्षिणावर्त्तोत्तरणादिना धनसार्थवाहः श्रीधर्मघोषसूरिभिः सह चचाल। यतः—"जंबूचासमयूरे, भारद्दाये तहेव नउले य। दंसणमेव पसत्थं, पयाहिणे सव्वसंपत्ती ॥ १ ॥ व्रजित्वा वामदिग्भागं, दक्षिणात्मधुरस्वरः। काकः पूरयते नित्यं, प्रस्थितानां मनोरथान् ॥ २ ॥ चक्रवाकभारद्वाज–हंसहारीतसारसाः। कलविंकस्तु दात्यूह–चकोरजलकुर्कुटाः ॥ ३ ॥ एतेषां लोमशश्चापि, दर्शनं मङ्गलप्रदम्। लटाखंजनचाषानां, दक्षिणे गमनं शुभम् ॥ ४ ॥ टिट्टिभः कौशिकश्चापि, वामो राजशुकः शुभः। मयूरश्च तथा श्येनो, दक्षिणाद्वामगः शुभः ॥ ५ ॥" मार्गेऽन्येद्युरुपायनागतं, परिपक्वरसालफलपरिपूर्णं स्थालं, श्रीगुरूणां पुरो मुक्त्वा धनः सार्थवाहः प्राह—"भगवन्! अमूनि सहकारफलानि गृहाण, मम पुण्यं भवति।" गुरवस्तं भद्रकस्वभावं विज्ञाय जीवाजीवादिस्वरूपं तस्य पुर एवं प्ररूपयामासुः। मूलं धम्मस्स दया, असेसजीवाण होइ सा जणणी। जं तसथावरजीवाण, रक्खणं होइ जइ धम्मो ॥ १ ॥ जीवस्वरूपं त्वेव प्रोच्यते जिनेन्द्रैः—भूजलजलणाऽनिलवण–बितिचउपंचेंदिएहि नवजीवा। मणवयणकायगुणिया, हवंति ते सत्तवीसाओ ॥ २ ॥ इक्कासीई ते करणकारणाणुमइताडिया होइ। सच्चिय तिकालगुणिया, दुन्निसया हुंति तेआला

॥ ३ ॥ एतेषां जीवानां यो वधं मनसा वचसा कायेन करोति, तस्य दुर्गतिपातो भवति । यतः—"जीवहिंसां जनः कुर्व–न्निहाशं लभतेतराम् । परलोके समाप्नोति, दुःखं श्वभ्रादिकं स्फुटम् ॥१॥ जीवरक्षां जनः कुर्वन्, वाचा कायेन चेतसा । इहाऽमुत्र सुखश्रेणी, नराणां लभतेतराम ॥२॥ आउं दीहमरोगमंगमसमं रूवं पगिट्ठं बलं, सोहग्गं तिजगुत्तमं निरूवमो भोगो जसो निम्मलो । आएसिक्कपरायणो परियणो लच्छी अविच्छेयणी, हुज्जा तस्स भवंतरे कुणइ जो जीवाणुकंपं णरो ॥३॥ परसमयेऽप्युक्तम्—" यो दद्यात्कांचनं मेरुं, कृत्स्नां चैव वसुन्धराम् । एकस्य जीवितं दद्या–न्नच तुल्यं युधिष्ठिर ! ॥ १ ॥ देहिनः सुखमीहन्ते, विना धर्म्मं कुतः सुखम् । दयां विना कुतो धर्म्मः, तस्मात्तस्यां रतो भव ॥ २ ॥ अथ हृदयमंजरीशैवागमेऽपि प्रोक्तम्—" सर्वेषां धर्माणामादि-रहिंसा निगद्यते सद्भिः । तद्रहिता नश्यन्ति हि, हतनायकसैन्यवत् धर्माः ॥ १ ॥ " गीतायां—" पृथिव्यामप्यहं पार्थ ! । वायावग्नौ जलेऽप्यहं । वनस्पतिगतश्चाहं, सर्वभूतगतोऽप्यहम् ॥ १ ॥ यो मां सर्वगतं ज्ञात्वा, न हिंसेत कदाचन । तस्याहं न प्रणश्यामि, स च मां न प्रणश्यति ॥ २ ॥ " यत्र जीवस्तत्र शिव इति वचनात । अतः स्थावरेष्वपि जीवत्वं सिद्धं, अतः साधुभिः सर्वप्रकारेण त्रसेषु स्थावरेषु जीवेषु हिंसा न कर्तव्या । ततः प्रासुकान्येवान्नपानानि गृहीतव्यानि, तदलमेभिः फलैः

सचित्तैः। ततो धनोऽवग्—"भगवन्! अद्य प्रभृति मया प्रासुकान्येवान्नादीनि दातव्यानि" । ततः क्रमाच्चलनात् सार्थस्य प्राप्तो वर्षाकालः समागमत्। स च कीदृग्-"सर्वत्रोद्गतकन्दला वसुमती वृद्धिर्जडानां परा, जाता निःकमला स्थली समलिनैः घनैरुन्नतिः । सर्प्पन्ति प्रतिमंदिरं द्विरसनाः संत्यक्तमार्गो जनः, हा कष्टं कालिकाल एष वहति प्रावृट्स्वरूपं भुवि ॥१॥ मेघो वृष्टुं लग्नः, वैषम्यं कर्दमादिना जातं, क्वापि शैलपार्श्वे वर्यायां भुवि सर्वः सार्थो निवेशितो धनेन । माणिभद्र-श्राद्धदत्तोपाश्रये गुरवः स्थिताः। कालविलम्बेन क्षीणपाथेये, सर्वलोका कन्दमूलादि भक्षितुं लग्नाः। तत्र मासद्वये जातेऽकस्मात् धनसार्थवाहस्य गुरवश्चेतोमार्गे समाययुः । ध्यातं च तेन, मया श्रीगुरवः सार्थमाकारिताः एकशोऽपि मया न तेषां भक्तपानादिचिन्ता कृता । अतो धिग् मामधमं, प्रतिपन्नविस्मारकम्। ये प्रतिपन्नं न कुर्वन्ति ते अधमा एवोच्यन्ते ।

चलति कुलाचलचक्रं, मर्यादामधिपतन्ति जलनिधयः । प्रतिपन्नममलमनसां, न चलति पुंसां युगान्तेऽपि ॥ १ ॥

तत्तियमित्तं जंपह, जत्तियमित्ता च होइ निव्वाहो । वाया मूयाण नासइ, जीवंता मा मूया होंति ॥ २ ॥

ततस्तत्कालं समुत्थाय धनः श्रीगुरुपार्श्वे गतः, ननाम च तान् । ततो धनोऽवग्—"भगवन्! नाहं भाग्यवानस्मि । मया श्रीपूज्यपादानां सार्थमाकारितानामेकशोऽपि सारा न कृता । श्रीपूज्यपादानां निर्वाहो दुःशक्योऽस्ति। "

गुरवो जगुः—" महानुभाग ! महान् सार्थो विद्यते, श्राद्धाश्च बहवः सन्ति, तेषां शकटेषु प्रासुकमन्नपानादि सर्वं विलोक्य-मानं सदा लभ्यतेऽङ्गीक्रियते च । भवतः सार्थ एव वयमागताः तत्पुण्यं तव महज्जायमानमस्ति "। सार्थेशोऽवग्—" यत्स्वहस्तेन दीयते तदेव लभ्यते शरीरिभिः । स्वहस्तेनान्नपानादि, दीयते यद्विवेकिभिः । लभ्यते तज्जनैः संख्या—तीतपुण्यं न संशयः ॥१॥ मृतानामपि जन्तूनां, श्राद्धं चेत्तृप्तिकारणम् । तन्निर्वाणप्रदीपस्य, स्नेहः किं वर्द्धते शिखाम्"॥२॥ धनसार्थवाहः प्राह—साधुयुग्मं प्रेष्यतां तत्र किमप्यहं प्रासुकान्नादि दास्ये। ततो गुरुभिस्तस्य शुद्धभावं मत्वा साधुयुग्मं धनस्योत्तारके प्रेषितम्। अन्नं दातुं यावत् सार्थपो विलोकतेस्म, तावदमत्रेषु किमपि न दृश्यते, पूर्वव्यय-करणात्। ततः स्त्यानीभूतं घृतं भाजनस्थं दातुं शुद्धभावात् सार्थप उत्थितो यावत्तावत् सार्थेशस्य शुद्धभावं मत्वा, प्रासुकं घृतं च वीक्ष्य साधुनाऽग्रेतनेन विहृतम्, तदा तेन सार्थेशेन घृतं ददता मनुष्यभवायुः, पुण्यानुबन्धिपुण्यमर्जितं, बोधिबी-जं च। तथा च जिनागमः—"केसिंचि होइ विचं, पत्तं अन्नेसु उभयमन्नेसु । चित्तं वित्तं पत्तं, तिन्निवि केसिंचि धन्नाणं" ॥ १ ॥ सिद्धांतेऽप्युक्तं—तहारुवाणं समणाणं माहणाणं भंते ! फासुएणं एसणिज्जेणं असणपाणखाइमसाइमेणं पडिलाभेमाणेणं किं किज्जइ ? गोयमा ! तत्थ अट्ठकम्मपयडीओ घणीयबंधणबद्धाओ सिढिलबंधणबद्धाओ पगरइ,

दीहकालट्ठिआओ रहस्सकालट्ठिआओ पगरइ, इमं च णं दीहमद्धं चाउरंतं संसारकंतारं थेवेणावि कालेण परियट्टइ ।
तथा चोक्तं—" अन्नपानं तथा वस्त्रं, आलयः शयनाऽसने । शुश्रूषा वंदनं तुष्टिः, पुण्यं नवविधं स्मृतम् ॥ १ ॥
साहूण कप्पणिज्जं जं नवि दिन्नं कहिंवि किंपि तहिं । धीरा जहुत्तकारिणो, सुसावगा तं न भुंजंति ॥ २ ॥
तथा च—ददस्वान्नं ददस्वान्नं, ददस्वान्नं युधिष्ठिर ! । सद्यः प्रीतिकरं लोके, किं दत्तेनापरेण हि ॥ ३ ॥
इत्यादि पात्रदानफलं धनो मत्वा घृतदानात्तदा मुक्तिगमनयोग्यं पुण्यं भावनयाऽर्जयामास। ततो धन उपाश्रये गुरून् वंदितुं सदा याति, गुरूक्तं धर्ममश्रृणोदिति-संसारसागरोत्तारतरीतुल्यस्य श्राद्धधर्मस्य प्रतिष्ठानप्रतिष्ठमादौ सम्यक्त्वं वीतरागेणोक्तम्—"वीतरागप्रभुर्देवः, सुसाधुश्च परो गुरुः । कृपामूलस्तु सद्धर्मः, सम्यक्त्वमभिधीयते ॥१॥ जिणवयणमेव तत्तं तत्थ रुई होइ दव्वसम्मत्तं । जहभावणाण सद्धा, परिसुद्धं भावसम्मत्तं ॥ २ ॥ सम्मत्तंमि य लद्धे, पलियपुहुत्तेणसावओ हुज्जा । चरणोवसमखयाणं, सायरसंखंतरा हुंति ॥३॥ अंतमुहुत्तं पालिय, सम्मत्तं जो वमेइ पज्जंते । तस्स य अवड्ढपुग्गल, परियट्टो चेव संसारो ॥ ४ ॥ भट्ठेण चरित्ताओ, सुट्ठुयरं च दंसणं गहेयव्वं । सिज्झंति चरणरहिया, दंसणरहिया न सिज्झंति ॥ ५ ॥ सव्वत्थ उचियकरणं, गुणाणुराओ रई अ जिणवयणे । अगुणेसु अ मज्झत्थो, सम्म-

दिट्ठिस्स लिंगाइं ॥ ६ ॥ आइपुढवीसु तीसुं, खइयं उवसामगं च सम्मत्तं । वेमाणियदेवाणं, पणियं तिरियाण एमेव ॥ ७ ॥ सेसाणं नारयाणं, तिरियित्थीणं च तिविहदेवाणं । पंचविहं सम्मत्तं, पन्नत्तं वीयराएहिं ॥ ८ ॥ अण-कोहाइचउक्के, सम्माईपुंजतियगखवियंमि । जीवस्स सुहो भावो, अपुग्गलं खाइयं सम्मं ॥ ९ ॥ मिच्छत्तं जमुइन्नं तं–खीणं अणुदियं च उवसंतं । मीसीभावपरिणयं, वेज्जं जं तं खउवसमं ॥१०॥" इत्यादिसदुपदेशामृतैर्मिथ्यात्वं मुक्त्वा सम्यक्त्वं धनसार्थवाहो ललौ । वर्षान्तेऽगस्त्युदयं ज्ञात्वा धनसार्थवाहस्ततश्चचाल । यतः–" दिवा च कुरुते यस्मि–न्नुदयं मुनिपुङ्गवः । अनावृष्टिस्तदा घोरा, पिता विक्रयते सुतम् ॥ १ ॥ वर्षाकाले दिने यस्मि–न्नुदिते मुनिपुङ्गवः । ततः स्तोकं पयोवाहो, मुञ्चते सलिलं भुवि ॥ २ ॥ " क्रमाद्धनसार्थेशो वसन्तपुरं ययौ । तत्र कृतक्रयविक्रयोपार्जित-भूरिधनः पुनः स्वपुरं प्रति चचाल । स्वपुरं समागतश्च क्रमात् समायातावसाने सप्तक्षेत्र्यां धनं व्यधत् । कृताराधनकः, पालितनिःकलङ्कश्रावकधर्म्मः, समाधिना विपद्य, उत्तरकुरुषु सीतासरित उत्तरतो जम्बूतरोश्च पूर्वतो युगलिधर्मत्वे-नोत्पेदे धनः । तत्र दशविधकल्पद्रुमास्तस्य मानसेप्सितं ददुः । तथाहि—" ते मत्तंगा १ भिंगा २ तुडीयंगा ३ दीव ४ जोइ ५ चित्तंगा ६ । चित्तरसा ७ मणियंगा ८, गेहागारा ९ अगणिया य १० ॥ १ ॥ मत्तंगएसु मज्जं,

मधु पिज्जं भायणाइ भिंगेसु । तुडियंगेसु य संगयतुडियाइं बहुपयाराइं ॥ २ ॥ दीवसिहा जोइसि—नामगा एए करंति उज्जोयं । चित्तंगेसु य मज्जं, चित्तरसा भोयणट्ठाणा ॥ ३ ॥ मणियंगेसु य भूसण—वराइ भवणरुक्खेसु । अणियंगेसु य घणियं । वत्थाइ बहुप्पगाराइं ॥ ४ ॥ इत्थं दशविधकल्पवृक्षेभ्योऽधिगतानि सुखान्यनुभूय, तदायुःप्रांते विपद्य, प्राग्जन्मकृतदानपुण्यानुभावात् सौधर्मे स्वर्गे सुरोऽजनि ॥

॥ इति तृतीयभवः ॥

तत्र सुखान्यनुभूय चिरं ततश्च्युतः स सुरोऽपरविदेहे गन्धिलावतीनाम्नि विजये वैताढ्यगिरौ गन्धारदेशे गन्धसमृद्धपुरे शतबलनाम्नो विद्याधरस्य महाबलनामा सुतोऽजनि । सचाभ्यस्तशस्त्रशास्त्रकलाकलापः समये पित्रा राज्येऽभिषिक्तः । तत्सुखानि भुंजानोऽन्यस्मिन्नवसरे समलंकृतास्थानसिंहासनः, संगीतके प्रवर्तमाने स्वयम्बुद्धाभिधेन सचिवेन राजा विज्ञप्तः इति—धिद्धी एस पमाओ, गलहत्थइ जो जियाण जिणधम्मं । नलिणीदलग्गघोलिर—जललवपरिचंचले जीए ॥ १ ॥ इति तस्यानवसरोपदेशात् स नृपः किमेतदिति पृच्छन् मन्त्रिणाऽभाणि—"यदद्य मया वने गतेन चारणमुनिर्भवत आयुःस्वरूपं पृष्टः सन् जगौ । मासमेकमस्य भूपस्यायुरस्ति" । इति तद्वचनादनु राजा जगौ—"अद्य निशाशेषे संभिन्नश्रोतप्रमुखैरमात्यैरहमंधकूपे पातितोऽपि स्वयम्बुद्ध! भवता एकेनोद्धृतः, इति

सद्यः स्वप्नफलसंवादी ममायं भवदुपदेशः" । स नृपः इत्युच्चरन् क्षीणे आयुषि किंकर्तव्यतामूढतयाऽनुतप्यमानः सचिवेनोचे—"एगदिवसंपि जीवो, पवज्जमुवागओ अनन्नमणो । जइवि न पावइ मुरकं अवस्स वेमाणिओ होइ॥१॥" इति जैनसिद्धान्तगिःप्रामाण्यात् चारित्रग्रहणात् सफलय स्वं जन्म, परलोकं साधय । श्रुत्वेति मंत्रिवचः क्षितिपतिः स्वं पुत्रं राज्ये निवेश्य, कृताष्टान्हिकामहःपुरस्सरं प्रव्रज्यां जग्राह, गुरुपार्श्वे । गुरूक्तविधिना गृहिताऽनशनः समाधिना विपद्य, ईशानदेवलोके श्रीप्रभविमाने ललिताङ्गनामा सुरः, प्रस्फुरद्दीतिभासुरशरीरः समजनि । तस्य स्वयम्प्रभाभिधा देवी-पत्नी बभूव तया समं दिव्यान् भोगान् चिरं भुञ्जानस्य तस्य देवस्य कदाचिदायुःक्षये स्वयम्प्रभा देवी स्वर्गात् च्युता । तस्या देव्या विरहेण विधुरोऽभूल्ललिताङ्गः । ततः उद्यानादिवापिषु रममाणः क्षणं न रतिं लेभे । यतः—" देवाऽवि देवलोए, दिव्वाभरणेण रंजियसरीरा । जं परिवट्टंति तत्तो, तं दुक्खं दारुणं तेसिं ॥ १ ॥ तं सुरविमाणविभवं, चिंतिअ चवणं च देवलोगाओ । इंय बलियं च जं नवि, फुट्टइ सयसक्करं हियय़ं ॥ २ ॥ ईसा-विसायमयकोह—मायालोभेहि एवमाईहिं । देवाऽवि समभिभूया, तेसिं कुतो सुहं नाम ॥ ३ ॥ इतश्च स्वयम्बुद्धोऽपि मंत्री गृहीतव्रतोऽनशनेन मृत्वा तस्मिन्नेव कल्पे दृढधर्माभिधः शक्रसामानिकोऽभूत् । यतः—तवनियमेण य मुरको

दाणेण य हुंति उत्तमा भोगा । देवच्चणेण रज्जं, अणसणमरणेण इंदत्तं ॥ १ ॥ स एव देवः प्रागभवसौहार्दात्, ललिताङ्गसुरं विरहविह्वलं वीक्ष्य प्राह शोकापनोदाय—" विषयगुणः कापुरुषं, करोति वशवर्तिनं न सत्पुरुषम् । बध्नाति मशकमेव हि, लूतातन्तुर्न मातङ्गम् ॥ १ ॥ स्त्रीरागसागरस्यान्तश्चेतःपोतान्निमज्जतः । अपयाति मतिर्लज्जा पौरुषं साधुतावृत्तिः ॥ २ ॥ मा विषादं कुरुष्व त्वं, देव्या विरहितो मनाग् । कुरु चित्तं स्थिरं तस्मात्, सुखीभवसि संततम् ॥३॥ संझरागजलबुब्बुउवमे, जीविए वि जलबिंदुचंचले । जुव्वणे य नईवेगसन्निभे, पावजीव किमयं न बुज्झसि ॥४॥ दुप्पयं चउप्पयं बहुप्पयंच अप्पयं समिद्धमहणं वा । अणवकएवि कयंतो हणइ हयासो अपरितंतो ॥ ५ ॥ एवमुपदेशे दीयमाने तेन सुरेण ललिताङ्गो न मनाग् मोहान्निवृत्तः ततो दृढधर्मा देवस्तस्या देव्याः प्राप्त्युपायं प्रोक्तवानिति धातकीखण्डे प्राग्विदेहे नन्दग्रामे नागिलस्य दरिद्रस्य श्रेष्ठिनः सप्तानां पुत्राणामुपरि तस्यां पत्न्यामष्टम्यां पुत्र्यां जातायां कुरूपायां भाग्यहीनायां पितरि प्रणष्टे, उद्वेगात् नामाकरणात् निर्नामिकेति नामाऽजनि, निर्नामिका क्रमाद्ववृधे, क्वचिद् निर्नामिका गगनतिलकपर्वते दारूण्यानेतुं गता, तत्र तत्कालोत्पन्नकेवलज्ञानं युगन्धराभिधं मुनिं सिंहासनस्थं धर्ममुपदिशन्तं शुश्रावेति । " आयुर्वायुचलं सुरेश्वरधनुर्लोलं बलं यौवनं

। स्नेहं कुञ्जरकर्णतालचपलं देहं च रोगोकुलं ज्ञात्वा भव्यजनाः सदा
विद्युद्दंडतुलं धनं गिरिनदीकल्लोलवच्चञ्चलम् । स्नेहं कुञ्जरकर्णतालचपलं देहं च रोगोकुलं ज्ञात्वा भव्यजनाः सदा
कुरुत भो धर्मं महानिश्चलम् ॥१॥ दारिद्रनाशनं दानं, शीलं दुर्गतिनाशनम् । अज्ञाननाशिनी प्रज्ञा, भावना भवना-
शिनी ॥ २ ॥ " एवं गुरुपार्श्वे धर्म्मं श्रुत्वा प्राप्तगृहिधर्मा कुमारिका निर्नामिका सा सम्प्रति वर्तते । साम्प्रतं चान-
शनं सा जग्राह, ततस्तत्र गत्वा स्वरूपं तस्या दर्शय कथय च, यथा सा निर्नामिका त्वदनुरागिणी भूत्वा मृत्वा च
स्वयम्प्रभैव प्रिया उत्पद्यतेऽत्रैव स्वर्गे, तथा कृते तेन देवेन सा निर्नामिका तत्रैव स्वर्गे ललिताङ्गस्य प्रियाऽभवत् ।
ततः स देवरतया प्रियया सह विलसन् सुखीजातः ॥ इति ललिताङ्गदेवभवः ॥ ततः क्रमादायुःक्षये ललि-
ताङ्गसुरो जम्बूद्वीपे प्राग्विदेहे सीतासरिदुत्तरे तटे पुष्कलावतीविजये लोहार्गलपुरे स्वर्णजङ्घस्य राज्ञः लक्ष्मीदेवी-
कुक्षिजन्मा प्रद्युम्नप्रतिमो वज्रजङ्घोऽङ्गजोऽभवत् । पित्रा जन्मोत्सवः कृतः यौवनं प्राप क्रमाद्वज्रजङ्घकुमारः । इतः
स्वयम्प्रभापि स्वर्गात् च्युत्वा तस्मिन्नेव विजये पुण्डरीकिण्यां नगर्यां वज्रसेनतीर्थकरचक्रवर्तिनः श्रीमती नाम्ना सुताऽ
भूत्, सा क्रमाद्यौवनालङ्कृतदेहाऽजनि । एकदा श्रीमती सन्निहितवने समुत्पन्नकेवलज्ञानं मुनिं प्रेक्ष्य जाति-
स्मृतिं प्राप । ततः पूर्वभवपतिं करिष्यामीति निर्बन्धपरा पितुर्निर्देशात् पूर्वभवं स्वं स्वरूपं चित्रपट्टे लेखया-

मास । प्राप्तवयो मम पूर्वभवं कथयिष्यति, तमहं वरिष्ये । ततः स्वयंवरमण्डपो मण्डितः । आहूता अनेके नृपराजकुमाराः ॥ तैर्भूपैस्तस्याः पूर्वभवो न कैरपि प्रोक्तः । तेषु तेषु सङ्केतेषु अपूरितेषु तत्रागाद्वज्रजङ्घकुमारः चित्रपट्टे लिखितं पूर्वभवं स्वं वीक्ष्याकस्माज्जातिस्मृतिं प्राप । ततः कुमार्या हृदयस्थान् पूर्वभवसङ्केतान् कुमारः कथयामास । ततस्तया स पूर्वभवसम्बन्धिनं पतिं मत्वा वरमालान्यासपूर्वमुपयेमे । ततो वज्रजङ्घस्तां परिणीय सन्महं स्वपुरमाययौ । ततः क्रमात् स्वर्णजङ्घः पुत्राय राज्यं दत्वा स्वयं दीक्षां जग्राह । प्राप्तराज्यो वज्रजङ्घो न्यायाध्वना भुवं शशास । यतः—“ यो न्यायेन भुवं सर्वां, पैतृकीं पृथिवीपतिः । जुगोप स प्रयात्येव, वृन्दारकनिकेतनम् ॥१॥ राज्ञि धर्मिणि धर्मिष्ठाः, पापे पापाः समे समाः । राजानमनुवर्तन्ते, यथा राजा तथा प्रजाः ॥ २ ॥” क्रमेण तस्य राज्ञो नन्दनो जातः । तस्य वज्र इति नाम दत्तम् । अन्येद्युः श्रीमतीभ्रातुः पुष्कलपालस्य राज्ञः सीमालभूपालैराक्रान्तस्य साहाय्याय वज्रजङ्घश्चचाल । मार्गे वज्रजङ्घश्चलन् दृष्टिविषं सर्पं तस्मिन् मार्गे श्रुत्वा तत्र गत्वा सर्प्पं प्रबोधयामास तद्द( स्वद )र्शनात् । ततश्चलन् पुष्कलावतीं पुरीं ययौ । तत्रागतान् सर्वान् पुष्कलपालस्य रिपून् हत्वा स्वां पुरीं प्रति चचाल । इतस्तस्मिन् मार्गे मुनियुगस्य ध्यानं कुर्वतः सर्वकर्मक्षयात् केवलज्ञानं जातम् । वज्रजङ्घः पत्नीयुतो

मुनिसेनसागरसेनाख्यमुनियुगं प्रणनाम । तयोर्मुन्योः पृथग् पृथग् उपदेशं श्रुत्वा स्वपुरमाययौ । अन्येद्युर्वज्रजङ्घेनोक्तम्—प्रिये ! व्रतमहं ग्रहीष्ये त्वं समाधिना गृहिधर्मं पालय । पत्नी जगौ । पुराऽहमपि व्रतं ग्रहीतुकामाऽस्मि, यदि त्वया व्रतं ग्रहीष्यते, तदाऽहमपि त्वया सह दीक्षाग्रहणं करिष्ये । अत्रान्तरे पुत्रो मातापित्रोः संयमग्रहणाभिप्रायमजानानो विषं दातुकामोऽभूत् । ततः पुत्रेण राज्यार्थिना विषदानात् मातापितरौ हतौ । इतिवज्रजङ्घभवः ॥ ६ ॥ शुभध्यानात् तौ मृत्वा उत्तरकुरुषु समुत्पन्नौ । युग्मधर्मेण तत्र दशविधकल्पवृक्षपूर्णमनोरथौ सुखिनौ बभूवतुः । इति युग्मिभवः सप्तमः ॥ ७ ॥ ततो मृत्वा तौ मिथः स्नेहलौ प्रथमस्वर्गे सुरावभूताम्, तत्रातीव सुखिनौ जातौ । इतिसुरभवोऽष्टमः ॥८॥ स्वर्गात् च्युत्वा जम्बूद्वीपे विदेहे क्षितिप्रतिष्ठितपुरे स्वर्गिपुरसोदरे, सुविधिवैद्यस्य जीवानन्दनामा पुत्रोऽभूत् । तत्रैवेशानचन्द्रस्य भूपस्य महीधरनामा पुत्रो बभूव १ ॥ मन्त्रिपुत्रः सुबुद्धिरासीत् २ ॥ सार्थवाहाङ्गजः पूर्णभद्रः ३ ॥ श्रेष्ठिसूनुर्गुणाकरोऽभूत् ४ ॥ श्रीमतीजीवः स्वर्गात् च्युत्वा तत्रैव श्रेष्ठिपुत्रः केशवनामाऽभवत् ५ ॥ एतेषां जीवानन्देन सह सौहार्दमभूत् अत्यन्तम् । कदाचिज्जीवानन्दवैद्यस्य सद्मनि तेषां वयस्यानां पञ्चानां तस्थुषां गुणाकराख्यो जैनमुनिः कुष्टगलदेहः पारणार्थं समागात् । तस्य यतेस्तादृशं देहं कुष्टव्याधिग्रस्तं वीक्ष्य मिथश्चि-

न्तयामासुः । एष मुनिरतीव व्याधिना ग्रस्तो दृश्यते । ततः सानुकम्पो जीवानन्दो जगौ—अयं मुनिर्महता धनव्ययेन सज्जीक्रियते । लक्षपाकतैलं गोशीर्षचन्दनं रत्नकम्बलं च विलोक्यते । तैलं तु मम मन्दिरे समस्ति । शेषवस्तुद्वयोपायश्चिन्त्य एव । असौ यतिः सुमहाभागस्तपस्वी स्वशरीरनिरपेक्षोऽस्ति । यद्यस्योपकारः करिष्यते कुष्टस्फेटनेन तदा मुक्तिगमनयोग्यं कर्मोपार्ज्यते । यतः—"ज्ञानवान् ज्ञानदानेन, निर्भयोऽभयदानतः । अन्नदानात् सुखी नित्यं, निर्व्याधिर्भेषजाद्भवेत् ॥ १ ॥" अथ तदौषधप्राप्तये महीधरपुत्राद्याः पञ्चापि जीवानन्देन समं कस्यापि सुहृदो महेभ्यस्याऽऽपणे मूल्येन यत्यर्थं गोशीषचन्दनरत्नकम्बले याचन्ते स्म । धर्मेण तेन तद्वस्तुद्वयं यत्यर्थं दत्तम् । प्रोक्तं ममापि पुण्यं भवति । पापिनामौषधे दत्ते पापमेव भवति । धर्मिणां तु दत्ते धर्म एव भवति । धर्मी तु धर्ममेवकरोति । तस्य पुण्यविभागो वैद्यस्यौषधदातुर्भवति । ततस्ते सर्वे सुहृदस्तानि औषधानि लात्वा वने ययुः तस्य मुनेस्तेन तैलेन प्रथमं देहेऽभ्यङ्गनं कृतम् । तत्तैलयोगात् अतीव तापिते साधुवपुषि रत्नकम्बलं निदधे । तापव्याकुलाः साधुदेहस्थाः कृमयो रत्नकम्बले लग्नाः । ततो वैद्येन दीर्घदर्शिना ते कृमयोऽतीवार्द्रगोशबमध्ये स्थापिताः । ततस्तद्देहे शीतनिमित्तं गोशीर्षचन्दनाङ्गरागः कारितः इति । एवं त्रिःकृत्वा प्रतीकारेण मुनिं पटूकृत्य ते क्षमयामासुरिति

भगवन्! युष्मच्छरीरे किमप्यपराधः कृतः स क्षम्यताम्। ततस्तं यतिं प्रणम्य तस्मै श्रेष्ठिने यतिर्नीरोगः कृतोऽस्ति
भवत औषधाभ्यामिति निवेद्य च स्वस्थानं ययुः। स च श्रेष्ठी तदौषधदानपुण्यमनुमोदमानो गृहस्थ एव सर्वकर्म-
क्षयात् केवलज्ञानं प्राप। तेऽपि च सुहृदो गोशीर्षरत्नकम्बलौ विक्रीय तद्द्रव्येण निजकाञ्चनलक्षद्वयेन च जिनालयं
कारयामासुः। इति नवमो भवः ॥९॥ ते सर्वे जीवानन्दादयः क्रमात् प्रव्रज्यां गृहीत्वा द्वाविंशतिसागरा-
युष्काच्युते स्वर्गे त्रिदशा बभूवुः ॥ इति दशमो भवः ॥ १ ॥

अथ जीवानन्दजीवस्ततश्च्युत्वा प्रथमं जम्बूद्वीपे प्राग्विदेहे पुष्कलावतीविजये पुण्डरीकिण्यां वज्रसेनस्य
तीर्थंकरभूपतेः धारिणीदेव्याः—कुक्षौ चतुर्दशस्वप्नसूचितोऽवततार क्रमात् पुत्रोऽभवत्। वज्रनाभनामा ज्येष्ठनन्दनः
समभूत्। नृपामात्यश्रेष्ठिसार्थेशानां जीवास्ततश्च्युताः क्रमेण बाहुसुबाहुपीठमहापीठनामानः कनीयांसस्तस्य सोदरा-
श्चत्वारो बभूवुः। केशवजीवस्तु स्वर्गाच्च्युतः सुयशा नामा भूपपुत्रो भूत्वा वज्रनाभं सिषेवे। वज्रसेनभूपो वज्रना-
भाय पुत्राय राज्यं वितीर्य लोकान्तिकदेवैर्जय नन्देति जल्पिते सांवत्सरिकं दानं दत्त्वा दीक्षां जग्राह। क्रमेण केवल-
ज्ञानं प्राप। वज्रनाभस्तु प्राप्तषट्खण्डराज्यः स्वयं समस्तचक्रवर्तिपदभागभूत्। अन्येद्युस्तस्मिन्नेव पुरे श्रीवज्रसेन-

स्तीर्थंकरः समवसृतः। तदा चक्री सपरिवारः पितुः तीर्थकृतो धर्मोपदेशं श्रोतुं गतः। जिनेन्द्रस्तत्रेति धर्म्मोपदेशं प्राह "न श्रीर्मे विपुला जने न च मतिर्जाता न वा सूनवो, जाता वा न गुणास्पदं न च मुदं धत्ते कुटुम्बं मम। द्विष्टो-भूमिपतिः खलाश्च कुदृशो देहं रुगार्तं सुतो—द्वाह्या भूरिऋणं ऋणन्ति गृहिणां चेतांसि चिन्ता इमाः॥१॥ प्राग् जन्मजाते सुकृते सति प्रभो!, विवेकिभिस्तत् पुनरर्ज्यते नवम्। नीवीधनाऽदस्य पुनः कुतोऽर्जनं, वापः क्व वा प्रोषितबीजभोजिनः॥ २ ॥" एवं धर्मोपदेशं श्रुत्वा सञ्जातवैराग्यो वज्रनाभो बाहुसुबाहुपीठमहापीठभ्रातृभिः सुयशसा च सार्धं संयमश्रियं जग्राह। वज्रनाभो यतिः क्रमाद् गुरुपार्श्वे पठन् द्वादशाङ्गभृत् बभूव, शेषा एकादशाङ्गधारिणोऽभवन्। अर्हदादिभिर्विंशतिस्थानकैस्तीर्थकरपदवीं बबन्ध वज्रनाभः। यतः—"वज्रनाभस्तु विंशतिस्थानैरोभिर्मनोरमैः। निर्ममे तीर्थकृन्नाम—कर्म भवाब्धितारकम्॥१॥" तथाहि—"अरिहंत १ सिद्ध २ पवयण ३ गुरु ४ थेर ५ बहुस्सुए ६ तवस्सीसुं ७। वच्छल्लयाइ एसिं अभिक्खनाणोवओगे य ८॥ १॥ दंसण ९ विणए १० आवस्सए य ११ सीलव्वए निरइआरो १२। खणलव १३ तव १४ च्चियाए १५ वेयावच्चे १६ समाही १७ य॥ २॥ अपुव्वनाणगहणे १८ सुअभत्ती १९ पवयणे पभावणया २०। एएहि कारणेहिं तित्थयरत्तं लहइ जीवो॥ ३॥"

युगलमभत् २। तयोश्च यशस्वी स्वरूपेति युगलं बभूव ३। अस्य राज्ये मकारनीतिरभूत्। ततोऽभिचन्द्रः प्रियङ्गुरीति युगलं जातम् ४। यतः—"नवधणुसयाइ पढमो, अट्ठसत्तद्धसत्तमाइं च। छच्चेव अद्धछट्ठा, पंचसया पणवीसं तु ॥ १ ॥ संघयणं संठाणं, उच्चत्तं चेव कुलगरेहि समं। वन्नेण एगवन्ना, सव्वाओ पियङ्गुवन्नाओ ॥ २ ॥" ततस्तदपत्यद्वयं प्रसेनजित् पूर्णकांता इति युगलं जातम् ५। अस्य काले धिक्कारनीतिरजनिष्ट, तस्यापत्यद्वयं मरुदेवः श्रीकांता इति युगलं जज्ञे ६। ततः सप्तमं श्रीनाभिर्मरुदेवीति युगलं बभूव ७। नाभिस्तु सपादपञ्चशतधनुर्देहः मरुदेवी अपि सपादपञ्चशतधनुर्देहाऽभूत्। इतस्तृतीयारस्य चतुरशीतिपूर्वलक्षेष्वेकोननवतिपक्षाधिकेषु अवशिष्टेषु आषाढशुद्धचतुर्दश्यामुत्तराषाढानक्षत्रे सर्वार्थसिद्धिविमानात् त्रयस्त्रिंशत् सागरोपमप्रमितायुरनुभूय ततश्च्युत्वा श्रीवज्रनाभजीवः मतिश्रुतावधिज्ञानशाली गजादिचतुर्दशमहास्वप्नसूचिततीर्थंकरजन्मा मरुदेव्याः कुक्षाववातरत्। तदा च नारकाणामपि सुखमजनि। यतः—"नारका अपि मोदन्ते, यस्य कल्याणपर्वसु। पवित्रं तस्य चारित्रं, को वा वर्णयितुं क्षमः ॥ १ ॥" तस्मिन् काले स्वप्नपाठकादयो न सन्ति। तदा शक्रः प्रभुभक्त्या स्वामिरक्षार्थं आभियोगिकान् स्वसेवकान् मुमोच। नवमासे सार्द्धसप्तदिने व्यतिक्रान्ते चैत्रासि-

ताष्टम्यां उत्तराषाढानक्षत्रे गते चन्द्रे युगलधर्मिणं पञ्चशतधनुस्तनुमानं सुवर्णवर्णशरीरं वृषभध्वजं सर्वाद्भुतलक्षणं प्रथमं जिनं पुत्रं मरुदेवी स्वामिनी सुषुवे। जन्माभिषेककरणं शक्रश्चक्रे। अवतारितस्वाङ्गुष्ठामृतास्वादादुपचित-तनुर्लाञ्छनवृषभस्य दर्शनात् स्वप्नेऽप्यादौ वृषभदर्शनात् वृषभ इति नाम दत्तम्। युगलजातायाः कन्यायाः सुमङ्गलेति नाम दत्तम्। वृषभस्य किञ्चिदूने हायने व्यतिक्रान्ते, शक्रः इक्षुदण्डं लात्वा प्रभुं नन्तुं वंशस्थापनाय चागात्। तदा वृषभेण बालस्वभावात् इक्षुदण्डं गृहीतुं हस्तः क्षिप्तो भक्षणेच्छया। ततः शक्रेण वृषभवंशस्य इक्ष्वाकुरिति नाम दत्तम्। ततः सदा सुरा उत्तरकुरुतः फलानि प्रभुकृते प्रत्यहं क्षीरोदजलानि चोपनयन्ति स्म। अथ दश (देशोन) वर्षदेश्ये प्रभौ अकाले तालफलपतनतो युगलिनः पुरुषस्य (जन्मदिने) मृतिरभवत्। स्त्री तु स्थिता सुनन्देति तस्या नाम। ततो युगलिभिः श्रीनाभिकुलकराय युगलिनो मृतिस्वरूपं प्रोक्तम्। अथ यौवनस्थस्य प्रभोः श्रीनाभिराज्ञा सुमङ्गलासुनन्दयोः पाणिग्रहे क्रियमाणेऽवधिना विज्ञाय वासवः सहाप्सरोभिस्तत्र समागात्। प्रभुरपि अवश्यभोग्यं कर्म जानन् सर्वमनुमेने। ततः प्रथममेव स्वामी सुमङ्गलासुनन्दाभ्यां सह दिव्यधात्रीभिः स्नपितोऽवलिप्तो भूषितश्चानीतो मण्डपद्वारे कृतं दधिदूर्वालवणादि मङ्गलकर्म प्रभोरिन्द्रेण ततः शक्रः स्वर्गं समागात्। नवपरिणीतस्य प्रभोर्म-

ङ्गलानीति मरुदेवाऽवग्—सूनो! जङ्गमकल्पवृक्षविततः शाखाशतेन क्रमात्, त्रैलोक्यं निखिलं समीहितफलैः संतर्प्य यैः सन्ततम्। सत्याशीरिति या वधूद्वयजुषः प्रोवाच तत्राङ्गिनां, प्रीत्यै श्रीमरुदेव्यसौ विजयतां तीर्थङ्करस्य प्रसूः ॥ १ ॥ इति मातुराशिषं प्रभुः पाप। किञ्चिदूनेषु षड्वर्षलक्षेषु व्यतिक्रान्तेषु सर्वार्थसिद्धिविमानाच्च्युत्वा बाहुपीठजीवौ सुमङ्गलादेव्याः कुक्षाववातरतुः। तदा सुमङ्गला चतुर्दश महास्वप्नानि गजादीनि ददर्श। क्रमात् तयोर्जातयोर्जन्मोत्सवे कृते पुत्रस्य भरत इति नामाऽभूत् पुत्र्याश्च ब्राह्मीति नामाऽजनि। सुबाहुमहापीठजीवौ सुनन्दायाः कुक्षौ युग्मत्वेन बभूवतुः। पुरुषस्य बाहुबलिरिति नामाऽभूत्, पुत्र्याश्च सुन्दरीति नाम दत्तम्। क्रमात् सुमङ्गला एकोनपञ्चाशत् युगलानि प्रासूत। एवं ऋषभदेवस्य पुत्रशतं पुत्र्यौ ब्राह्मीसुन्दर्यौ। क्रमात् कल्पवृक्षेषु हीनसत्त्वेषु फलदानशक्तिषु कषायबहुलानां नीतिमर्यादालङ्घनपराणां मिथः कलिपराणा युगलिनां श्रीनाभिकुलकरेण श्रीऋषभदेवः समर्पितो मर्यादायै। ततस्ते युगलिन एकीभूय परमेश्वरं महतः स्थलस्योपरि उपवेश्य नलिनीपत्राण्यादाय हस्तेषु भगवत्स्नानार्थं जलाशये गताः। इतः शक्रः स्वर्गादेत्य परमेश्वरं तादृशे रत्नसिंहासने निवेश्य द्वापञ्चाशच्चन्दनरसेनोपलेप्याभरणाम्बराणि परिधाप्य प्रच्छन्नः स्थितः। इतस्ते युगलिनो गृहीतपद्मिनी-

पत्ररथजलाः प्रभुं तादृशं दृष्ट्वा प्रदक्षिणीकृत्य चिन्तयामासुः । यदि जलं मस्तकोपरि प्रक्षिप्यते । तदा सर्वाणि वस्त्राणि
विनक्ष्यन्ते । ततस्ते प्रभोः पदयोरधस्तादभिषेकं चक्रुः । तद्विनयसन्तुष्टः शक्रः प्रकटीभूय प्रभुं भक्त्या प्रणम्य सुवि-
नीता एते युगलिन इत्युक्त्वा तस्मिन् स्थाने द्वादशयोजनायामां नवयोजनविस्तृतां नवां पुरीं विनीतामिति चकार ।
प्रभोर्जन्मतो विंशतिपूर्वलक्षाणि व्यतिक्रान्तानि । ततः प्रभुणा केचिद्युगलिनः सचिवाः कृताः । केचिद् दुर्गाऽऽरक्षकाः
कृताः केचिच्च भोगा–गुरवः कृताः केचिद्वयस्या–राजन्याः कृताः शेषाश्च युगलिनः क्षत्रियाः पत्तयश्च कृताः । ततः
करितुरगगोमहिषादिसङ्ग्रहः कारितः प्रभुणा । अथ कल्पद्रुमेषु उच्छिन्नेषु गतेषु अपक्वौषधिभक्षणपराणां युगलिना-
मुदरेषु दुष्यत्सु प्रभुणोक्तम् । हस्ततले कुक्षौ (कक्षायां) च मुक्त्वौषधीः भक्षयत । यतः-"ओमपाहारंता, अजीरमाणंमि
ते जिणमुविंति । हत्थेहिं घंसिउणं, आहारेह त्ति ते भणिआ ॥१॥ आसी अ पाणिघंसी तिम्मिअतंदुलपवालपुडभोई ।
हत्थतलपुडाहारा, जइआ किर कुलकरो उसहो ॥ २ ॥" ततस्तथा कुर्वत्सु तेषु अग्निरुत्पन्नस्तं दृष्ट्वा भीतास्ते
प्रभुपार्श्वेऽभ्येत्य जगुः । भगवन्नस्माकमौषधीर्भक्षयन् राक्षस उत्पन्नोऽस्ति । प्रभुणा ज्ञानेनाग्निमुत्पन्नं ज्ञात्वोक्तम्–तस्य
राक्षसस्याग्नेर्मध्ये मुक्त्वा यूयं भक्षयत । ततस्तथा कुर्वत्सु तेषु राक्षसरूपोऽग्निः सर्वं भक्षयति । ततस्ते प्रभुपार्श्वे गत्वा

तदपि प्रोचुः। ततो वृषभेण कुम्भिकुम्भस्थलस्थेन मृत्तिकामानाय्य प्रथमं कुम्भं घटयित्वाऽर्पयामास। प्राह च-एवंविधान् कुम्भान् कृत्वा वह्निना पाचयित्वा तेषु औषधीः स्थापयित्वा भक्षयत। ततः प्रभूक्तविधिना ते औषधीर्भक्षयन्तिस्म। ततस्ते सुखिनोऽभवन्। ततः प्रभुः शिल्पशतं प्रकाशयामास। ततः प्रजास्तथा चक्रुः। चतुर्धा सामदामादिनीतीः प्रकाशयामास। द्वासप्ततिं कला नराणां भरतं शिक्षयामास। स्त्रीणां चतुःषष्टिं कलाः बाहुबलिं शिक्षयामास। अश्वेभादीनां लक्षणानि प्रभुः प्रकाशयामास। दक्षिणहस्तेनाष्टादश लिपीर्ब्राह्म्यै, वामेन शयेन गणितानि सुन्दर्यै प्रकाशयामास सारस्वतादिदेवा अभ्येत्य प्रभुं प्रोचुः—धर्मं तीर्थं प्रवर्तय त्वम्। ततः संयमग्रहणावसरं प्रभुरवधिना विज्ञाय भरतायायोध्याराज्यं वितीर्य बाहुबलये बहलीदेशराज्यं च शेषेभ्योऽङ्गजेभ्यो यथायोग्यं पुरग्रामादि वितीर्य सांवत्सरिकं दानं ददौ॥ ततः प्रभुः त्रिषष्टिपूर्वलक्षाणि निष्कण्टकां राज्यश्रियमुपभुज्य वसन्तसमये अष्टादशभारवनस्पतिशोभाकारके चैत्रासिताष्टम्यां उत्तराषाढानक्षत्रगते चन्द्रे सुरासुरौघवाह्यां सुदर्शनाख्यां शिबिकामारुह्य सुरेन्द्रादिभूपपरिवृतो राजमार्गे चचाल। प्रभुः क्रमाद्देवदुदुम्भौ वाद्यमानायां सिद्धार्थोद्यानमाजगाम। प्रभुः शिबिकाया अवरुह्याशोकतरुतले वसनाभरणानि मुमोच। प्रभुः ततो जम्भारिन्यस्तं देवदूष्यमंसे दधानश्चतुर्मुष्टिलोचं चकार। तदा

प्रभुर्नमस्कारोच्चारणपूर्वं संयमं जग्राह । शक्राग्रहादेका मुष्टिः स्थिता प्रभोर्मस्तके । वासवेन कोलाहले निषिध्यमाने तदा नाभेयस्य चतुर्थं ज्ञानं समुत्पन्नम् । यतः "काऊण नमुक्कारं, सिद्धाणमभिग्गहं तु सो गिण्हे । सव्वं मेऽकरणिज्जं, पावं ति चरित्रमारूढो ॥ १ ॥ तिहि नाणेहि समग्गा, तित्थयरा जाव हुंति गिहवासे । पडिवन्नंमि चरित्ते, चउनाणी जाव छउमत्था ॥ २ ॥ तदा भरताद्यैर्बहुभिर्भूपैर्निषिध्यमाना अपि कच्छमहाकच्छादयश्चत्वारो नृपसहस्राः प्रभुणा समं संयमं ललुः । इन्द्रादिषु यथास्थानं गतेषु प्रभुरन्यत्र विजहार । प्रभुः पूर्वभवोपार्जिताशुभकर्मवशाद् भिक्षामलभमानो वर्षं यावन्निराहारो विहृत्य गजपुरं समाजगाम । तत्र बाहुबलिपुत्रः सोमयशाः, तस्य पुत्रः श्रेयांसस्तत्साहाय्यात् शत्रुभिराक्रांतो महाभटो जयीजात इति स्वप्नमपश्यत् सोमयशा नृपः १। रविमण्डलतः भ्रस्तः करौघो घटितः पुनः श्रीश्रेयांसकुमारेण स्वप्नं श्रेष्ठीति लब्धवान् २। पुनः श्रेयांसकुमारेण स्वप्नो दृष्टः मेरुर्मलिनो जातः सो मया पायसेन उज्वलीकृतः ३। प्रातरतः शुभं भावि श्रेयांसस्योदयो महान् कोऽपीति मन्त्रयित्वा ते स्वस्ववेश्म त्रयोऽप्ययुः ॥३॥ लाति श्रीऋषभः किञ्चिन्नेति कोलाहलं नृणाम् । श्रुत्वा गवाक्षतोऽधाव-द्युवराजा प्रभुं प्रति ॥ ४ ॥ प्रभोर्दर्शनात्तदा जातिस्मृतिं प्राप्य पश्चान्नवभवं स्वं गृहीतसंयमं ज्ञात्वा प्रभुं चान्नग्रहणतत्परं ज्ञात्वा यावत् प्रासुकान्नं दातुकामः

श्रेयांसोऽभवत् तावल्लोकैर्ढौक्यमानानि गजाश्वकन्याभरणादीनि वस्तूनि त्यजन् श्रेयांसकुमारगृहे प्रभुः समागात् । इतोऽकस्मादिक्षुरसभृतं कुम्भशतं केनचिद्राज्ञा श्रेयांसकुमाराय ढौकनीचक्रे । ततो निरवद्याहारं तमिक्षुरसं विज्ञाय समुल्लसदतीवभावः संयोजितकरकमलः प्रभुं प्रति श्रेयांसः प्राह । प्रभो ! प्रसारयाह्नाय करौ निस्तारयात्र माम् । द्वाचत्वारिंशद्दोषरहितमाहारं लाहि साम्प्रतम् । अत्र कविघटना । दक्षिणकरं भिक्षामगृह्णानं दृष्ट्वा प्रभुः प्राह—भो दक्षिणकर कथं भिक्षां न गृह्णासि ? दक्षिणहस्तोऽवग्—अहं दातृहस्तस्याधः कथं भिक्षां गृह्णामि । यतः—"पूजाभोजनदानशान्तिककलापाणिग्रहस्थापना—चौक्षप्रेक्षणहस्तकार्पणमुखव्यापारबद्धस्त्वहम् । ततो वामो हस्तो जगौ—वामोऽहं रणसम्मुखाङ्कगणनावामाङ्गशय्यादिकृत्, द्यूतादिव्यसनी त्वसौ धनिगृहे गृह्णातु भिक्षामपि ॥ १ ॥ राज्यश्रीर्भवतार्जिताऽर्थिनिवहस्त्यागैः कृतार्थीकृतः, सन्तुष्टोऽपि गृहाण दानमधुना तन्वन्दयां दानिपु । इत्यब्दं प्रतिबोध्य दक्षिणकरं श्रेयांसतः कारयन्, प्रत्यग्रेक्षुरसेन पूर्णमृषभः पायात् स वः श्रीजिनः ॥ २ ॥" तदा जिनस्य पारणे जाते श्रेयांसस्य यशसा भुवनं पूर्णम् । भवनाङ्गणं सार्द्धद्वादशरत्नकोटिभिः परिपूर्णम् । घुट्ठं च अहोदाणं, दिव्वाणि अ आहियाणि तूराणि । देवा वि य संनिहिया, वसुहारा चेव वुट्ठी य ॥ २ ॥ भुवणं जसेण भयवं, रसेण भवणं धणेण पडिहत्थो । अप्पा निरु-

रिसहेससमं पत्तं, निरवज्जं इक्षुरससमं दाणं । सेयंससमो भावो, हविज्ज
वमसुक्खे, सुपत्तदाणं महग्घविअं ॥ ३ ॥ इतः कच्छादयो भिक्षामलभमाना वनमध्ये तापसा जाताः, जटाधराभिधा अधुना निगद्यन्ते
जइ मग्गियं हुज्जा ॥ ४ ॥ इतः कच्छादयो भिक्षामलभमाना वनमध्ये तापसा जाताः, जटाधराभिधा अधुना निगद्यन्ते
लोकैः । तत्पुत्रौ नमिविनमी दूरगतत्वात् प्रभुदीक्षाग्रहणादनु समायातौ । भरतं सेवितुमनीहमानौ श्रीऋषभदेव-
पार्श्वे गत्वा प्रोचतुरिति—स्वामिन्नावां तव सेवकौ तेन भरतपार्श्वे किमपि राज्यादिकं न याचिष्यते आवाभ्याम् । यत्र
यत्र स्वामी पादौ धत्ते तत्र तत्र कण्टकादीन्यपसारयतस्तौ, यत्र प्रभुः कार्योत्सर्गे तिष्ठति तत्र तौ खड्गधरौ उभयतः पार्श्व-
योस्तिष्ठतः सेवायै, प्रातः कमलैः प्रभुं प्रपूज्य राज्यमावयोर्देहीति जल्पतः । ततो धरणेन्द्रस्तत्रागतोऽवक्—भो नमिवि-
नमी भवन्तौ राज्यार्थिनौ दृश्येते, प्रभुस्तु निर्ममो निर्द्रव्यश्च तेन भरतं राज्यं याचेथाम्, तावूचतुर्यदि प्रभुः राज्यं
दास्यति तदा ददातु नो चेदेवं तिष्ठावः आवाम्, ततस्तयोर्दृढां भक्तिं ज्ञात्वा धरणेन्द्रोऽतीव सन्तुष्टः सन् प्रभुमुखे-
ऽवतीर्य प्राह—चलतं युवां वैताढ्ये राज्यं दास्यामि युवाभ्याम्, ततो द्वितीयं वृषभरूपं कृत्वा धरणेन्द्रो वैताढ्यं
गत्वा तयोर्दक्षिणश्रेण्युत्तरश्रेण्योर्राज्यं ददौ, ४८ सहस्रं विद्याश्च वितीर्णवान् । उक्तं च—" मुणिणोऽवि तुह छीणा,
नमिविनमी खेहराहिवा जाया । गुरुआण चलणसेवा, न निप्फला होइ कइयावि ॥१॥ नमिविनमीणं भायाण, नागिंदो

विज्जदाणवेयड्ढे। उत्तरदाहिणसेढी, सट्ठी पन्नास नयराइं ॥२॥" अन्येद्युर्भगवान् विहरमाणो बहुलीदेशविभूषणस्य तक्षशिलापुरस्य बहिरुद्याने सन्ध्यायां समेत्य कार्योत्सर्गे स्थितः। तदा पितुरागमनं ज्ञात्वा बाहुबलिर्ध्यातवान्। अधुना रात्रौ प्रायो वन्दनं मम न शोभते, प्रातर्विस्तरात् प्रभुं प्रणंस्यामि एवं ध्यात्वा प्रातर्विस्तरं कृत्वा यावत् प्रभुं नन्तुं याति बाहुबलिः तावदितः पूर्वं प्रभुर्विहारं व्यधात्। बाहुबलिः प्रभुमदृष्ट्वा खिन्नः सन् रुरोदतमाम्। अलक्ष्यलक्ष्य! क गतस्त्वम्, एकशो दर्शनं देहि। ततो मन्त्रिवचसा स्वस्थीभूय तत्र प्रभुपादुकायुक्तं स्तूपं महान्तं रत्नमयं कारयामास बाहुबलिः। प्रभुरपि मौनावलम्बी वर्षसहस्रान्ते पुरिमतालपुरे शकटाह्वे वने कृताष्टमतपा वटवृक्षस्याधः स्थितः। फाल्गुनकृष्णैकादश्यां उत्तराषाढानक्षत्रे प्रातः प्रभुः केवलज्ञानं प्राप। तत्क्षणादेव सर्वे सुरेन्द्रास्तत्र समेत्य समवसरणं रचयामासुर्यथाधिकारम्, ततो 'नमो तित्थस्से'ति कृत्वा भगवान् सिंहासनमुपविष्टः। द्वादश पर्षदः उपविष्टाः, इतो भरतस्यायुधशालायां चक्ररत्नं समुत्पन्नम्, ततो द्वयोश्चक्ररत्नप्रभुकेवलज्ञानोत्पत्त्योः वर्धापनिका समकालं भरताग्रे समायाता। भरतो ध्यातवान्, प्रथमं चक्रपूजां करोमि अथवा युगादिदेवपूजां करोमि, एवं ध्यात्वा क्षणाद्भरतो दध्यौ धिग् मां यदेवं ध्यातं मया। यतः—"तायंमि पूइए चक्कं, पूइयं पूअणरिहो ताओ। इह लोइयंमि चक्कं, परलोअसुहावओ

ताओ ॥ १ ॥ ” ततो मरुदेवीं पितामहीं पुत्रवियोगाश्रुजातनेत्रपटलां हस्तिकुम्भस्थलमध्यारोप्य भरतः परमेश्वरं वन्दितुं
प्रतिचचाल । समवसरणं दृष्ट्वा भरतोऽवग्–हे मातर्विलोकय स्वपुत्रस्याद्भुतां विभूतिं शृणु च देवदुन्दुभिनिनादांश्च ।
एका तावत् स्वल्पा मम ऋद्धिः द्वितीया प्रभुता तव पुत्रस्य विभूतिः, द्वयोरंतरं मेरुसर्षपयोरिव हंसकाकयोरिव चिन्ता-
मणिकर्करयोरिव राजरङ्कयोरिव दृश्यते । ततो मरुदेवी देवदुन्दुभिशब्दं श्रुत्वा हर्षाश्रुपतनादुत्तरितनेत्रपटला समव-
सरणं ददर्श । तत्क्षणात् सर्वकर्मक्षयात् केवलज्ञानं प्राप्यायुषः क्षयान्मुक्तिं गता । “ सूनुर्युगादीशसमो न विश्वे,
भ्रान्त्वा क्षितौ येन शरत्सहस्रम् । यदर्जितं केवलरत्नमग्र्यं,स्नेहात्तदेवार्प्यत मातुराशु ॥ १ ॥ अतिमोहं जिने कुर्यात्,
त्यक्तुं चेच्छक्यते न सः । यथा श्रीमरुदेव्याप, कुम्भिकुम्भस्थिता शिवम् ॥ २ ॥ ” तदा देवाः समेत्याग्निसंस्कार-
क्रियां व्यधुः । भरतः समवसरणे गत्वा प्रदक्षिणात्रयं दत्त्वा प्रभुं प्रणम्य धर्मं श्रोतुमुपविष्टः । प्रभुणेति धर्मोपदेशो
ददे शोकच्छिदे । संसारंमि समुद्दे, अणोरपारंमि दुल्लहं एअं । मणुअत्तजाणवत्तं, विसालकुलजाइदलकलियं ॥ १ ॥
निव्वाणपुरी चिट्ठइ, भवपारावारतारणसमत्था । ते न पवडंति जीवा, मुत्तुं मणुअत्तबोहित्थं ॥ २ ॥ लोभमूलानि पापानि,
रसमूलाश्च व्याधयः ॥ स्नेहमूलानि दुःखानि, त्रीणि त्यक्त्वा सुखीभव ॥ ३ ॥ संसारंमि असारे, नत्थि सुहं वाहिवे-

यणापउरे । जाणंतो इह जीवो, न कुणइ जिणदेसियं धम्मं ॥ ४ ॥ अथिरं जीयं रिद्धी च, चंचला जुव्वणं च खणसरिसं । पच्चक्खं पिरकंतो, तहवि य वंचिज्जए जीवो ॥ ५ ॥ अत्र मधुबिन्दु कथा ज्ञातव्या । धर्मोपदेशं श्रुत्वा भरतपुत्रः पुण्डरिको दीक्षां जग्राह । स च गणधरपदव्यां स्थापितः प्रभुणा । 'उप्पन्नेइ वा, विगमेइ वा, 'धुवेइ वा' इति । अन्ये त्र्यशीतिः गणधराः स्थापिताः । तत्र भरतस्य पुत्रपञ्चशती दीक्षां जग्राह, नप्तृसप्तशती व्रतं जग्राह, मरीचिः ब्राह्मी च संयमं जग्राह । पुण्डरीकाद्याः साधवः ब्राह्मयाद्याः साध्व्यो भरताद्याः श्राद्धाः सुन्दर्याद्याः श्राद्ध्यः इति चतुर्विधः श्रीसङ्घः । ततो भरतः प्रभुं प्रणम्य स्वगृहे गत्वा प्रभुं पूजयित्वा भक्त्या चायुधशालायां गत्वा चक्ररत्नं पूजयामास भक्त्या । ततः शुभे दिने भूरिभिर्भूपैः सेव्यमानो भरतश्चक्रेणोपदेश्यमानं मागधतीर्थसन्निधिं प्राप्य तत्र स्कन्धावारं स्थापितवान्, कृताष्टमतपाः तत्पारणके तु रथाधिरूढो भरतो नाभिदघ्ने जले स्थित्वा स्वनामाङ्कितं बाणं मुमोच । भरतचक्रिनामाङ्कितं बाणं दृष्ट्वा मागधकुमारस्तत्राभ्येत्य किरीटकुण्डलादि प्राभृतं दत्तवान्, ततो जगौ–अहं तव सेवकोऽस्मि । ततस्तं स्वसेवकं मागधं कृत्वा स्वस्कन्धावारं प्राप्तवान् भरतः, अनेन विधिना दक्षिणवारिधौ वरदामं साधयामास भूपः । ततः पश्चिमपाथोनिधिस्वामिनं

पूर्ववत् प्रभासं सिन्धुदेवञ्च भरतः साधयामास, ततो वैताढ्यस्य दक्षिणनितम्बे शिबिरं स्थापयामास । तत्र पूर्वरूढ्या वैताढ्यदेवमप्याराध्य तमिश्रागुहासमीपमाससाद, तद्गुहारक्षकं कृतमालं देवमाराध्य दक्षिणसिन्धुनिष्कुटं साधयितुं सेनापतिं सुषेणाह्वं प्रेषयामास । ततः सकटकः स सुषेणो जलस्थलदुर्गनिवासिनः सिंहबर्बरादीन् म्लेच्छाधिपतीन् निजाज्ञावशंवदान् कृत्वा तेषामुपायनान्यादाय स्वस्वामिपार्श्वे समागात् । अथ तमिश्रागुहोद्घाटनाय सप्रसादं देवं भरत आराधयामास, तत्र गत्वा तमिश्रागुहाद्वारं दण्डरत्नेनोद्घाटयामास । चक्री करिरत्नमारुह्य तत्कुम्भे मणिरत्नं निधाय गुहांतः सञ्चरन् द्वादशाश्रिणा द्वादशयोजनप्रकाशमयेन काकिणीरत्नेन गोमूत्रिकाक्रमात् गुहाभित्त्यो-र्योजनान्ते योजनान्ते पञ्चधनुःशतायामानि एकोनपञ्चाशन्मण्डलानि तमश्छिदे भरतो व्यधात् । ततो यत्र शिलाऽपि क्षिप्ता तरति—तुम्बीफलवत् सा उन्मग्ना नदी, यत्र क्षिप्तं तुम्बीफलमपि शिला-वन्मज्जति सा निमग्ना नदी, ते द्वे तटिन्यौ वार्द्धकिमणिविहितया पद्यया सकटको भरत उत्ततार । पञ्चा-शत् योजनमानाया गुहाया बहिर्निर्गत्य तत्रस्थान् सर्वान् किरातादीन् रिपून् प्रबलानपि सेनापतिर्जिगाय । अथ तत्र केचित् किराताः स्वगोत्रदेवीमाराध्य द्वादशयोजनमितामतीव वृष्टिं कारयामासुः । तज्जलोपद्रवरक्षणाय द्वादशयोज-

नायामे चर्मरत्ने शिबिरं निवेश्य तदुपरि तत्प्रमाणं छत्रं संनिवेश्य प्रकाशाय छत्रदण्डमूले मणिं निधाय च सप्त दिनानि यावत् चक्रिणा स्थितम् । ततो यदा सप्तदिनान्ते चर्मरत्नात् चक्रं निर्गतं तदा लोकैरुक्तम् । ब्रह्मत इदं अण्डं निर्गतं, इति प्रघोषो जातः । ततः क्षुद्रहिमवद्गिरिनाथं संसाध्य पश्चात् भरतो चचाल । वैताढ्याद्रिदक्षिणोत्तरस्थौ नमिविनमी द्वादशवर्षयुद्धविधानेन जिगाय भरतः । विनमिः—स्वां पुत्रीं सुभद्राभिधां दण्डदानपुरस्सरं भरताय ददौ । उत्पन्नवैराग्येण स्वपुत्रौ स्वपदे निवेश्य नमिविनमी—श्रीऋषभपादान्ते प्रव्रज्यां ललतुः । ततो गङ्गातीरे आवासेषु दत्तेषु सुषेणेन सेनापतिना तदुत्तरतटे पूर्वरीत्या साधिते देव्याऽनुरक्तया समं चक्री वर्षसहस्रं रेमे । पश्चात् स्वपुरीं प्रत्यागच्छन् गङ्गातटे नवनिधानानि भरतः प्राप । तेषामेतानि नामानि—नैसर्प्प १ पाण्डुकश्चाथ २, पिङ्गलः ३ सर्वरत्नकः ४ । महापद्म ५ काल ६ महा—कालौ ७ माणवक ८ शङ्खकौ ९॥ १॥ ते प्रत्येकं दैर्घ्येण द्वादशयोजनानि विस्तरेण च, पल्योपमायुषः । ततश्चक्री महोत्सवपुरस्सरं स्वां राजधानीमयोध्यामाययौ । चक्ररत्नपूजापुरस्सरं भरतस्य च द्वादशवर्षाणि राज्याभिषेकः कृतः। एवंविधा विभूतिरभूद्भरतस्य—चतुःषष्टिसहस्रा अंतःपुर्यः, सपादलक्षपिण्डविलासाः, चतुरशीतिलक्षाः प्रत्येकं गजतुरङ्गमरथाः, ९६ कोटिपत्तयः ग्रामाश्चैतावन्तः, ७२ सहस्रपुरवराः,

३६३ सूपकाराः, १८ श्रेणयः अनेके व्यवहारिणः, इत्यादिऋद्धिः, षष्टिवर्षसहस्रैः सर्वा दिशश्चक्रिणा साधिताः । कदाचित्
सुन्दरीं भगिनीं कृशाङ्गीं दृष्ट्वा तस्याः परिवारो भरतेन दुर्बलकारणं पृष्टोऽवग्—युष्माकं दिग्यात्राचलनादनु अनया
आचाम्लान्येव क्रियमाणानि सन्ति, षष्टिवर्षसहस्राणि जातान्यस्यास्तपस्तपन्त्याः । प्रभुणा युगलधर्मे निषिद्धेऽपि स्वं
सौन्दर्यं सोदरस्य मोहजनकं (च) विमृशन्ति तन्निग्रहाय सा सती सुन्दरी तपश्चकार । अहो नाभेयवंशेऽस्मिन्, धर्मा-
धिक्यमनर्गलम् । यत्तद्विधेन तपसा, बाल्येऽरमत सुन्दरी ॥ १ ॥ समुद्धाराशु तपःकृशाऽपि, मोहाम्बुराशौ भरतं
निमग्नम् । महीभृतं शीलगुणेन तेन, बलीयसी बाहुबलेः स्वसाऽपि ॥ २ ॥ अथ भरतेन क्षमयित्वा, विसृष्टा सुन्दरी
श्रीऋषभपार्श्वे दीक्षां जग्राह । अथ चक्ररत्ने आयुधशालायामप्रविशति मन्त्री भरतेन पृष्टश्चक्ररत्नस्यायुधशालाया-
मप्रवेशहेतुं प्राह—भवतो बाहुबलिर्भ्राता सेवां कर्तुमागतो नास्ति, तेनेदं चक्ररत्नमायुधशालां न प्रविशति । ततो
भरतेन प्रेषितो दूतो बाहुबलिपार्श्वे गत्वा जगाद—भवतो भ्राता भरतः षट्खण्डं साधयित्वा स्वपुरं प्राप्तोऽस्ति ।
अन्येषां राज्ञां गजतुरङ्गमादिदेशदानान्मनांसि तोषयामास भरतः । त्वं नागाः, भ्रातुर्मिलनार्थमपि । त्वमपि तत्रा-
गच्छ भूरिदेशादि दास्यति भ्राता । बाहुबलिः प्राह—कः कस्य भ्राता । अहमपि यदि तस्य भ्रातुः सेवां करिष्ये तदा

मम सर्वस्वं गतम् । ममासौ देशस्तु तातेनार्पितोऽस्ति । अस्मिन् देशे भरतस्य का तृप्तिः ? दूतोऽवग्—एवं वक्तुं न युज्यते भवतोऽधुना गजाश्वरथपत्त्यादिभिः स तव भ्राता बलिष्ठो विद्यतेतराम् । यदि त्वं तत्र समेष्यसि तदा तुभ्यं बहून् देशान् दास्यति । यदि त्वं न तत्रैष्यसि सोऽत्र समेष्यति तदा त्वां हत्वा देशं ग्रहीष्यति अधुना तव तस्य सेवां कर्तुमवसरोऽस्ति, बलिष्ठो विद्यते । बाहुबलिर्जगौ—यदाहं भरतेन समं रममाणो गङ्गातीरे भरतमुत्पाट्य हस्तेन नभसि दूरं क्षिप्त्वा पुनस्तं पतन्तं स्वहस्तेनाधरिष्यं तत्तस्य किं विस्मृतम्। एवं मया तत्र पूर्वं भरतो बहुशो जितः। अधुना किं असौ आत्मीयं बलं ज्ञापयति । दूतोऽवग्—यस्य सेनया चलन्त्याऽधुना पृथ्वी कम्पते शेषोऽपि कम्पते तीव्रभारत्वात्, वैताढ्यपर्वतवासिनमिविनमिविद्याधरमागधादिबहून् बलिष्ठान् स साधयामास । ततो दूत एवं जल्पन् हक्कितो बाहुबलिना । ततो दूतो भरतपार्श्वे गत्त्वा सर्वं बाहुबल्युक्तं जगाद । ततो भरतः संनह्य चचाल यदा तदा बहवोऽपशकुना बभूवुः, पश्चाच्छकुना वर्या बभूवुः । भरतो बहुलीदेशे गत्वा तक्षशिलां वेष्टयित्वा स्थितः । इतो बाहुबलिः सभायामुपविष्टोऽन्यचक्रं समागतं श्रुत्वा मनसि किमपि भयं नानैषीत् । यदा बाहुबलिर्युद्धाय निर्गतः, तदा सुमतिसागरमन्त्री प्राह—एवमकस्माद्रणं कर्तुं न युज्यते पश्चादपसार्य चमूं भुक्त्वा पश्चात् सङ्ग्रामः क्रियते । ततः

पश्चाच्चमूमपसार्य श्रीऋषभदेवस्य पूजां कृत्वा सर्वैः पत्तिभिः समं भुक्तवान् भरतः। ततो द्वादशवर्षाणि युद्धं भरत बाहु-
वल्योरभूत् । एकोऽपि द्वयोर्मध्ये न भनक्ति । यदा तदा बहुजीवसंहारं दृष्ट्वा शक्रोऽभ्येत्य द्वयोरग्रे प्राह एवं भवतो-
र्युद्धं बहुसंहारकारकं कर्तुं न युज्यते, मिथः युवां युद्धं कुरुत । प्रथमं दृष्टियुद्धे भरतेन हारितं बाहुबलिना जितम्,
देवैः पुष्पवृष्टिर्बाहुबलेर्मस्तकस्योपरि कृता । इत्यादिदृष्ट्यादियुद्धे जायमाने भरतेन हारितम् । उक्तं च—" पढमं दिट्ठी-
युद्धं वायायुद्धं तहेव बाहाहिं । मुट्ठीहि य दंडेहि य, सव्वत्थ विजिप्पए भरहो ॥ १ ॥ " ततो भरतेन चक्रं मुक्तं
बाहुबलिं हन्तुम्, चक्रमपि बाहुबलिं प्रदक्षिणीकृत्य हस्ते उपविष्टम् । बाहुबलिरवग् भो भरत! इदं चक्रं चूर्णीकरोमि
त्वया सह परं किं क्रियते त्वं तु भ्राता ज्येष्ठोऽसि । चक्रं मयेदं पश्चात् प्रेष्यमाणमस्ति । या तव शक्तिः स्यात् सा करिष्य-
ताम् । ततो बाहुबलिना प्रेषितं चक्रं भरतपार्श्वे गतम् । मन्त्री जगौ एकस्मिन् गोत्रे चक्रं न प्रभवति, ततो भरतेन
मुष्टिना बाहुबलिर्मस्तके आहतो जङ्घां यावद्भूमौ गतः, बाहुबलिना (ऽपि भरतस्य मारणाय मुष्टिरुत्पाटितस्ततो) ध्यातं
मया मुष्टिरुत्पाटितो निष्फलो मा भवतु, तेन मे मस्तकस्योपरि मुच्यते लोचकरणेन । संसारश्चासारोऽसौ यदि भ्राता
एवंविधमकृत्यं करोति, तदा कस्य दोषो दीयते, ततः स्वयमेव पञ्चमुष्ट्या लोचं कृत्वा आत्मानं व्युत्सृजामीत्युक्त्वा,

कायोत्सर्गे तस्थौ बाहुबलिः । दध्यौ च बाहुबलिः—मम पूर्वं अष्टानवतिर्भ्रातरो व्रतं ललुः । यदि केवलज्ञानं विना तत्र भगवतः समीपे गम्यते मया तदा ते लघवोऽपि भ्रातरो लब्धकेवलज्ञाना नम्यन्ते इति मत्वा मौनी बभूव । भरतस्तत्रैत्य, पदयोर्लगित्वा भो भ्रातर्मुञ्च मौनं राज्यमङ्गीकुरु बाहुबलिं क्षमयित्वा भरतः प्राह—अहं त्वभाग्यवानस्मि । यत्त्वं मया कटकवधकरणादिना खेदितोऽसि । ततो भरतः तस्य बाहुबलेः पुत्राय सोमाय राज्यं वितीर्य, स्वपार्श्वात हितबुद्ध्याऽधिकराज्यग्रामदानात् प्रमोदयामास । ततो भरतः स्वपुरमभ्येत्य द्वादशवर्षीयराज्याभिषेकं स्वस्मिन् कारयामास । इतो बाहुबलेः कायोत्सर्गस्थस्य वर्षं जातं विनाऽशनादिना । इतः श्रीनाभेयेन ब्राह्मीसुन्दर्यौ बाहुबलिप्रतिबोधाय प्रेषिते । ताभ्यां तत्राभ्येत्योक्तम् । 'हत्थीउ उत्तर भाय' । इति श्रुत्वा बाहुबलिर्दध्यौ । वर्षं जातं ममात्र स्थितस्य हस्त्यारोहणं विना । ततो निजभगिन्योः शब्दमुपलक्ष्य बाहुबलिर्दध्यौ मानगजमहमारूढोऽस्मीति ज्ञापयितुमिहागते स्तो भगिन्यौ । ततो मानं मुक्त्वा यावच्चलितुं पादौ दत्ते तावत् सर्वकर्मक्षयात् केवलज्ञानं प्राप । ततो नाभेयपर्षदि गत्वा, परमेश्वरं प्रदक्षिणीकृत्य, केवलिपर्षदि उपविष्टो बाहुबलिः । उक्तञ्च "कियन्तो बहिरङ्गाश्चान्तराश्च षडपि द्विषः । तपसा तीव्रतीव्रेण, यत्नेनाशु विजिग्यिरे ॥ १ ॥ नासीरवीरभरतं समरेऽचिरेण, यो हेलयैव

जितवानपि मोहराजम् । ज्ञानश्रियः सपदि संघटनैकहेतु-र्वीरः स बाहुबलिरेव मुदं तनोतु ॥ २ ॥ भग्ने श्रीभरते स्वपत्तिसदृशैराजन्मपुष्टैर्मदै-स्तद्वैरादिव निर्जितं विगणयन् स्वं श्रीसुनन्दाङ्गजः । हत्वा तान् जिनवाक्यशाणकषणात्तीक्ष्णेन बोधासिना, वीराणामथ पूर्वकेवलभृतां मुक्तिं गुणैर्लब्धवान् ॥३॥ हेतोः केवलसम्पदः किल तपस्यन्तं जिनोक्ते क्षणे, श्रीमद्बाहुबलिं समेत्य मुदिता ब्राह्मीयुता सुंदरी । वल्लीव्यूहविभूषितं मुनिवरं दर्पेभकुम्भस्थला-दुत्तार्याथ तपोवशंवदतमामुद्वाहयामास ताम् ॥ ४ ॥ अथ कदाचित् पञ्चभिः शकटशतैरन्नभृतैः ऋषभदेवपार्श्वे गत्वा भरतोऽवग्—स्वामिन्नद्यान्नदानग्रहणेन मामनुगृहाण । ऋषभोऽवग्—छत्रधरराज्ञामाहारः साधूनामधुना न कल्पते, तेन भवता साधर्मिकाणां धर्मतत्पराणामन्नं देयम् । ततो भरतेन ये ये धर्मिष्ठाः श्राद्धा ब्रह्मव्रतधारिणो भवन्ति, ते ते स्वगृहे भोज्यन्तेस्म । अथ सूपकारेण विज्ञप्तं स्वामिन् ! बहवो ब्रह्मचारिणो भोक्तुमायान्ति तेनास्माभिरन्नं दातुं तेभ्यो न शक्यते । ततो भरतेन ये ये ज्ञानदर्शनचारित्रस्वरूपं जानन्ति, तेषां काकिणीरत्नेन कण्ठे रेखात्रयं कारितमभिज्ञानार्थम्, ये नवतत्त्वविदस्तेषां नव, क्रमात्तेषां यज्ञोपवीतं जातम् । अन्येद्युर्भरतेनोक्तम्—भगवन् ! भवत्तुल्याः कियन्तोऽर्हन्तो भविष्यन्ति ? प्रभुः प्राह—होही अजिओ संभव—अभिनंदणसुमइसुप्पभसुपासो । ससिपुप्फदंतसीयल—

कायोत्सर्गे तस्थौ बाहुबलिः । दध्यौ च बाहुबलिः--मम पूर्वं अष्टानवतिर्भ्रातरो व्रतं ललुः । यदि केवलज्ञानं विना तत्र भगवतः समीपे गम्यते मया तदा ते लघवोऽपि भ्रातरो लब्धकेवलज्ञाना नम्यन्ते इति मत्वा मौनी बभूव । भरतस्तत्रैत्य, पदयोर्लगित्वा भो भ्रातर्मुञ्च मौनं राज्यमङ्गीकुरु बाहुबलिं क्षमयित्वा भरतः प्राह—अहं त्वभाग्यवानास्मि । यत्त्वं मया कटकवधकरणादिना खेदितोऽसि । ततो भरतः तस्य बाहुबलेः पुत्राय सोमाय राज्यं वितीर्य, स्वपार्श्वात हितबुद्ध्याऽधिकराज्यग्रामदानात् प्रमोदयामास । ततो भरतः स्वपुरमभ्येत्य द्वादशवर्षीयराज्याभिषेकं स्वस्मिन् कारयामास । इतो बाहुबलेः कायोत्सर्गस्थस्य वर्षं जातं विनाऽशनादिना । इतः श्रीनाभेयेन ब्राह्मीसुन्दर्यौ बाहुबलिप्रतिबोधाय प्रेषिते । ताभ्यां तत्राभ्येत्योक्तम् । 'हत्थीउ उत्तर भाय' । इति श्रुत्वा बाहुबलिर्दध्यौ । वर्षं जातं ममात्र स्थितस्य हस्त्यारोहणं विना । ततो निजभगिन्योः शब्दमुपलक्ष्य बाहुबलिर्दध्यौ मानगजमहमारूढोऽस्मीति ज्ञापयितुमिहागते स्तो भगिन्यौ । ततो मानं मुक्त्वा यावच्चलितुं पादौ दत्ते तावत् सर्वकर्मक्षयात् केवलज्ञानं प्राप । ततो नाभेयपर्षदि गत्वा, परमेश्वरं प्रदक्षिणीकृत्य, केवलिपर्षदि उपविष्टो बाहुबलिः । उक्तञ्च "कियन्तो बहिरङ्गाश्चान्तराश्च षडपि द्विषः । तपसा तीव्रतीव्रेण, यत्नेनाशु विजिग्यिरे ॥ १ ॥ नासीरवीरभरतं समरेऽचिरेण, यो हेलयैव

जितवानपि मोहराजम् । ज्ञानश्रियः सपदि संघटनैकहेतु-र्वीरः स बाहुबलिरेव मुदं तनोतु ॥ २ ॥ भग्ने श्रीभरते स्वपत्तिसद्दशैराजन्मपुष्टैर्मदै-स्तद्वैरादिव निर्जितं विगणयन् स्वं श्रीसुनन्दाङ्गजः । हत्वा तान् जिनवाक्यशाणकषणाचीक्ष्णेन बोधासिना, वीराणामथ पूर्वकेवलभृतां मुक्तिं गुणैर्लब्धवान् ॥३॥ हेतोः केवलसम्पदः किल तपस्यन्तं जिनोक्तेक्षणे, श्रीमद्बाहुबलिं समेत्य मुदिता ब्राह्मीयुता सुंदरी । वल्लीव्यूहविभूषितं मुनिवरं दर्पेभकुम्भस्थला-दुत्तार्याथ तपोवशंवदतमामुद्बाहयामास ताम् ॥ ४ ॥ अथ कदाचित् पञ्चभिः शकटशतैरन्नभृतैः ऋषभदेवपार्श्वे गत्वा भरतोऽवग्-स्वामिन्नद्यान्नदानग्रहणेन मामनुगृहाण । ऋषभोऽवग्—छत्रधरराज्ञामाहारः साधूनामधुना न कल्पते, तेन भवता साधर्मिकाणां धर्मतत्पराणामन्नं देयम् । ततो भरतेन ये ये धर्मिष्ठाः श्राद्धा ब्रह्मव्रतधारिणो भवन्ति, ते ते स्वगृहे भोज्यन्तेस्म । अथ सूपकारेण विज्ञप्तं स्वामिन् ! बहवो ब्रह्मचारिणो भोक्तुमायान्ति तेनास्माभिरन्नं दातुं तेभ्यो न शक्यते । ततो भरतेन ये ये ज्ञानदर्शनचारित्रस्वरूपं जानन्ति, तेषां काकिणीरत्नेन कण्ठे रेखात्रयं कारितमाभिज्ञानार्थम्, ये नवतत्त्वविदस्तेषां नव, क्रमात्तेषां यज्ञोपवीतं जातम् । अन्येद्युर्भरतेनोक्तम्—भगवन् ! भवत्तुल्याः कियन्तोऽर्हन्तो भविष्यन्ति ? प्रभुः प्राह—होही अजिओ संभव—अभिनंदणसुमइसुप्पभसुपासो । ससिपुप्फदंतसीयल—

सिज्जंसो वासुपुज्जो अ ॥ १ ॥ विमलमणंतयधम्मो, संती कुंथू अरो अ मल्ली य । मुणिसुव्वयनमिनेमी, पासो तह वद्धमाणो अ ॥ २ ॥ अस्यां पर्षदि कोऽप्यस्ति ? योऽग्रे भवत्तुल्यस्तीर्थकृद्भवति ? युगादिदेवो जगौ—यो भवतः पुत्रो मरीचिः, प्राप्तचारित्रोऽधुना परीषहानसहमानः जलस्नानं मस्तकोपरि छत्रधारणोपानत्परिधानादिप्रमादपरो विद्यते पर्षदो बहिस्तात् । सोऽग्रे अस्यां चतुर्विंशतौ प्रथमो वासुदेवस्त्रिपृष्ठनामा भविष्यति । महाविदेहे मूकायां पुरि चक्री, भरते चास्मिन्नेव चतुर्विंशतितमो वीरनामा जिनश्च भविष्यति । ततो भरतो हृष्टो झटिति उत्थाय तत्र गत्वा तं मरीचिं त्रिःप्रदक्षिणीकृत्य प्राह—भवान् त्रिपृष्ठो नाम वासुदेवो, मूकायां चक्री, अस्मिन्नेव भरते चतुर्विंशतितमो वीरो जिनो भविष्यति, तेनाहं तुभ्यं वन्दमानोऽस्मि, एवमुक्त्वा मरीचिं नत्वा स्तुत्वा च भरतः पुरीमध्ये गतः । तद्वचनं श्रुत्वा मरीचिः प्राह—अहो मदीयं कुलमुत्तमं, यतो मे पितामहो युगादीशः, पिता तु भरतः, अहं च क्रमात्सार्वभौमः, अत्र चान्तिमो वीरजिनेन्द्रो भविष्याम्यहमेव । एवं जल्पनेन तेन मरीचिना नीचगोत्रकर्मार्जितम् । यतः ॥ "जातिलाभकुलैश्वर्य-बलरूपतपःश्रुतैः । कुर्वन् मदं पुनस्तानि, हीनानि लभते जनः ॥ १ ॥" ऋषभदेवस्य प्रथमो गणधरः पुण्डरीकाभिधश्चैत्रशुद्धपूर्णिमायां पञ्चकोटियतियुतो विमलगिरौ मुक्तिमगात् । ततो भरतेन तत्राभ्येत्य श्री-

ऋषभदेवस्य पुण्डरीकस्य च शरीरमानप्रमाणाः काञ्चनबलानकस्थाः कारिताः। एकः प्रासादो महान् शत्रुञ्जयशिखरे च श्रीयुगादिदेवपुण्डरीकप्रतिमायुतः कारितश्च । श्रीऋषभदेवः श्रीशत्रुञ्जये बहुशो वारान् समागतः उक्तञ्च—
" नवनवई पुव्वाइं, विहरंतो आगओ सि सत्तुंजे। उसभो सुरेहि सहिओ, समोसढो पढमतित्थंमि ॥१॥ " चतुर्विधं श्रीसंघं स्थापयित्वा विंशतिपूर्वलक्षाणि कौमारपदव्यां त्रिषष्ठिपूर्वलक्षाणि राज्यपदव्यां च स्थित्वा एकं पूर्वलक्षं श्रामण्यं पालयित्वा समस्तक्षीणायुष्कर्मा सर्वायुः प्रपाल्य निर्वाणकल्याणकं स्वं ज्ञात्वा दशसहस्रयतियुतोऽष्टापदगिरौ चतुर्दशभक्तेन गृहीतानशनः आसनकम्पात् समागतसौधर्मेन्द्रादिचतुःषष्टिशक्रः श्रीभरते तत्र समेते अव-सर्पिण्यास्तृतीयारकस्य एकोननवतौ पक्षेषु शेषेषु माघकृष्णत्रयोदश्यां अभिजिन्नक्षत्रे क्षीणभवोपग्राहिकर्मा पर्यङ्कासन-समासीनो लोकाग्रं मुक्तिमङ्गीचकार । तदानीमशेषाः साधवः क्षीणकर्माष्टका मुक्तिं ययुः । अथ देवैः प्राच्यां दिशि गोशीर्षचन्दनेन चिता चक्रे प्रभोः। ऐक्ष्वाकुमुनीनां दक्षिणस्यां दिशि त्र्यस्रा, शेषमुनिवराणां पश्चिमस्यां दिशि चतुरस्रा चक्रे। इत्थं संस्कारादनु तद्भस्म सुरैर्नरैश्च ववन्दे । ततोऽग्नित्रयं तत्र गृहीतं ब्रह्मचारिभिः तदद्यापि ब्राह्मणगृहेषु पूज्यमानमस्ति। देवेषु स्वस्थाने गतेषु क्रमाद् भरतः श्रीऋषभदेवनिर्वाणगमनस्थाने सिंहनिषिद्याकारं प्रासादं कार-

यित्वा स्वस्वशरीरमानप्रमाणाश्चतुर्विंशतिर्जिनप्रतिमा दक्षिणस्यां ४, पश्चिमायां ८, उत्तरस्यां १०, पूर्वस्यां २, स्थापयामास ।
तीर्थरक्षानिमित्तं दण्डरत्नेन शिखराणि उच्छेद्य योजनप्रमाणानि सोपानानि चक्रे । तत्र पूजामहिमादिकृत्यं निर्माय
श्रीभरतोऽयोध्यां प्राविशत् । तस्य राज्ञोऽन्येद्युरन्तःपुरस्थस्य सर्वाभरणभूषितशरीरस्य पुरुषप्रमाणात्मादर्शमुपनीतवान्
सेवकः, तदानीमादर्शमध्ये स्वदेहं विभूषणभूषितं पश्यतोऽकस्मान् मुद्रिकाऽङ्गुलीतः पपात । तदा मुद्रिकां विना कृतं
हस्तं वीक्ष्य निःश्रीकं देहात् मुकुटकुण्डलादीन्याभरणान्युत्तारयामास । ततो देहं समग्रं निःशोभमङ्गारसदृशं दृष्ट्वा
भावनां भावयामास, ततोऽनित्यादिभावना भावयन् केवलज्ञानं प्राप । देहं समग्रमभवद्भरतेश्वरस्य, रूपावलोकन-
विधौ मणिदर्पणस्य । आत्मानमात्मनि मनीषितया दिदृक्षो-स्तत्त्वप्रकाशविमलं परमात्मरूपम् ॥ १ ॥ राज्ञां दशभिः
सहस्रैः गृहीतव्रतैरनुगम्यमानः पूर्वलक्षं यावत् भुवि विहृत्य भव्यजीवान् प्रबोध्य अष्टापदगिरौ मासं यावदनशनीभूय
मुक्तिमाससाद भरतेश्वरः । भरतसूनुः सूर्ययशाः स्वयं शक्रेणाभ्यसिच्यत । बाहुबलिः क्षीणकर्मा मुक्तिं गतः । ब्राह्मी-
सुन्दर्यौ मुक्तिं गते । एतेषां निर्वाणगमनमहिमा देवैरभ्येत्य कृतः । इति श्री भरतबाहुबलिकथा समाप्ता ॥

---

**औत्पत्यादिधियां योगा–दभयो मन्त्रिनायकः। मुक्तिं ययौ पुरा प्राप्य, विशुद्धां संयमश्रियम् ॥१॥**

अतोऽभयकुमारस्योत्पत्तिस्वरूपं मुक्तिपर्यन्तं व्याख्यायते। तथाहि–जम्बूद्वीपे लक्षयोजनप्रमाणे दक्षिणस्यां दिशि भरतखण्डमध्यस्थमगधदेशो विराजते। तत्र राजगृहं नाम पुरं नवद्वादशयोजनप्रमाणनानाप्रकार-मणिमुक्ताफलप्रवालादिवस्तुपूरितं विभासतेतराम्। तत्रासन्नप्रदेशे दक्षिणभागे गङ्गानदी वहते। तत्र वैभारगिरि-नामा पर्वतो विद्यते। राजगृहे पुरेऽनेकमहेभ्योच्चतरगृहजिनप्रासादान् वीक्ष्य केषां न मुद् प्रजायते? अपि च सर्वेषाम्। तत्र क्रमात् प्रबलवैरिकुञ्जरकेसरी न्यायसागरसमुल्लासनचन्द्रमाः प्रसेनजितमहीपालो राज्यं करोतिस्म। वप्र उच्चैस्तरो नगरं परितः कुण्डलीव निधानपरितः शोभते। तत्र तस्य राज्ञो राज्ञीनां शतमभूत्। तासां मुख्या कलावती। श्रेणिककुमारप्रभृतिपुत्राणां शतमासीत्। सर्वेऽपि पुत्राः शस्त्रशास्त्रकलाः पाठिताः पित्रा। यतः-
“प्रथमे नार्जिता विद्या, द्वितीये नार्जितं धनम्। तृतीये नार्जितो धर्म–श्चतुर्थे किं करिष्यति ॥ १ ॥ जायंमि जीव-लोए, दो चेव नरेण सिक्खिअव्वाइं। कम्मेण जेण जीवइ, जेण मुओ सुहगइं जाइ ॥ २ ॥ अन्येद्युर्भूपतिश्चिते, चिन्त-

यामासिवानिति । सर्वे पुत्रा अमी तुल्य—बला विद्याविशारदाः ॥ ३ ॥ न परीक्षां विना राज्य—योग्यो हि ज्ञायते सुतः । प्रजाया वल्लभो बुद्धि—युक्तो विनीतमानसः ॥ ४ ॥ राज्ययोग्यो भवेत् पुत्रस्तेन कार्यं परीक्षणम् । ” यतः—“ताते जीवति यदि तातः परीक्षां कृत्वा मर्यादया पुत्रान् न स्थापयागास तदा पितरि मृते बलोत्कटाः पुत्रा मिथो युद्ध्वा युद्ध्वा म्रियन्ते, राज्यं चान्यत्र याति । यतः—“देहे नष्टे कुतो बुद्धि-र्बुद्धिहीने कुतः स्मृतिः । स्मृतिहीने कुतो ज्ञानं, ज्ञानहीने कुतो गतिः ॥ १ ॥” विमृश्येति राज्ञा वर्यं पक्वान्नं कारयित्वा चोल्लका वंशमया भरिताः अपवरकमध्ये ते मोचिताः, कोरकाः कुम्भा जलभृतास्तत्र मोचिताः भूपेन, ततः सर्वान् पुत्रान् गर्भगृहे मुक्त्वा भूपः प्राह—भो पुत्राः भवद्भिश्चोल्लकानां [ करण्डकानां च ] जलकुम्भानां च मुखं नोद्घाटनीयं तृप्तैर्भवितव्यम्, बुद्ध्या स्वकीयया करण्डकमध्यगं पक्वान्नादि भोज्यं, उद्घाटनं विना जलकुम्भेषु नीरं च पेयम् । श्रेणिकादयः कुमाराः स्वस्वबुद्ध्या चिन्तयन्ति स्म जल्पन्तिस्म च कथं भोक्ष्यते कथं पितुराज्ञा अखण्डा स्यात् कस्यापि बुद्धिर्नोपपद्यते, तदा सर्वान् सहोदरान् बुभुक्षया पीडितान् वीक्ष्य श्रेणिककुमार आचष्ट—मम बुद्धिं यदि कुरुत यूयं, तदा तृप्ता भविष्यथ । सर्वे सहोदरा जगुः—यदि नस्तृप्तिर्भवति तदा वरम् । श्रेणिकः सर्वेषां स्वच्छानि स्वच्छानि-

वस्त्राणि गृहीत्वा जलकुम्भानां परितो वेष्टयन्, ततः करण्डकान् धूनयित्वा धूनयित्वा पक्वान्नचूर्णं पतितं पतितं खादं खादं कोरकघटवेष्टितवस्त्राणि मर्दयित्वा मर्दयित्वा तद्गालितं जलं पायं पायं तृप्ताः सर्वे कुमारा बभूवुः। ततोऽखिलाः कुमारा राज्ञः पार्श्वे समेताः। पृष्टं च भूपेन कथं सर्वे तृप्ता जाताः। एकेन पुत्रेणोक्तम्, श्रेणिकबुद्ध्या। ततो राजाऽवग्, यस्यैवंविधा धीरुत्पन्ना, स रङ्क एव खज्जकचूर्णकरणात्, ततः प्रसेनजितभूपः पायसं कारयित्वा सर्वेषां पुत्राणामग्रे अमत्राणि मण्डयित्वा क्षैरेयीं परिवेष्य च तत्कालं सारमेयान् बुभुक्षितान् मोचयामास। कुमाराः तां यावद्भक्षयन्ति तावत् सारमेया घुर्घुरशब्दं कुर्वन्तः क्षैरेयीं भक्षयितुं कुमारभाजनेषु आगताः, ततः सर्वे कुमाराः खरण्टितहस्ता भयभीताः श्रेणिकं विना भाजनानि मुक्त्वा नष्टा दिशोदिशं। श्रेणिकस्तु निर्भयीभूय कुमाराणां सहोदराणां भाजनानि सारमेयसंमुखं चिक्षेप। सारमेयास्तु खरण्टितेषु खरण्टितेषु भाजनेषु स्थिताः पुच्छानि चालयन्तः कुमारस्य दासा इव जाताः। ततः श्रेणिकः समाधिना स्वभाजनस्थां क्षैरेयीं भुक्त्वा, तृप्तीभूय चाचमनं गृहीत्वा राज्ञः समीपे गतः। परेऽप्यायाताः कुमाराः। राजा श्रेणिकं तृप्तीभूतमपरान् बुभुक्षाशुष्काननान् दृष्ट्वा तृप्तं श्रेणिकं [जगौ। ततः] कृत्रिमां भृकुटीं कृत्वा [राजा] प्राह—श्रेणिकोऽयं सारमेय-

पङ्क्तिषु जिजेम येन, तेनायं तत्कल्पो जातः । ग्रामीणजनगोपालतुल्योऽसौ येनानेन एवंविधं भोजनं कृतम् । यस्य पङ्क्तिषु यो जेमति स तादृश एवोच्यते जनैः । एते कुमारा वर्याः शुचयः पवित्राः, ततस्ते हृष्टाः । श्रेणिकस्य मनसि खेदो नाभून् मनागपि । प्रसेनजितभूपः प्राह—धवलगृहे ज्वलति त्वं मयाऽग्रे परीक्षितः इति, हीरान् मणीन् मुक्ताफलानि, मुक्त्वा भम्भाह्वां वादित्रं च गृहीत्वा निर्ययौ तस्माद् गृहात्, तेन त्वं इमां भम्भां गृहीत्वा गच्छ गृहे गृहे वादय उदरम्भरिरसि । अथ राजकुमारा यद्यन्मुञ्चन्ति, तत्तत्त्वं भक्षयाग्रे । यदि त्वमेतदपि जानीहि, तदा त्वं दक्षस्तवाज्ञा । इति शब्दच्छलेन तस्य राज्यं ज्ञापितं पित्रा । सर्वेषां पुत्राणां यथा॰योग्यं ग्रामान् विभज्य राजार्पयामास । अपरे पुत्रा हस्तिघोटकरथपत्त्यादिसङ्ग्रहं कुर्वते, एषः श्रेणिककुमारः केषाञ्चित् घोटकादीनामपि सङ्ग्रहं न करोति, अनेन सारमेयैः समं भक्षितं परमान्नं, पक्वान्नं चूर्णीकृतं, प्रदीपने ज्वलति भम्भा एव गृहीतास्ति, तेनासावधुना राज्ययोग्यो नास्ति । वणिगिव बद्धमुष्टिः किमपि न व्ययति, इत्युक्ते पित्रा श्रेणिकः कुमारः एकाकी रात्रौ विदेशं प्रतिचचाल स्कन्धे खड्गं दधानः । श्रेणिक औषधमन्त्रतन्त्रादिप्रयोगं जानाति । षट्त्रिंशद्दण्डायुधश्रमकरणकुशलः उदयमानाद्भुतकर्मा निर्भयः सन् सिंह इव वने

भ्रामं भ्रामं भुवं बह्वीं, कुमारः श्रेणिकः क्रमात् । वज्राकरं महाशैलं, ददर्श मुदिताशयः ॥ १ ॥

चचार श्रेणिकः । श्रेणिकस्य कुमारस्य तत्रस्थस्य वज्राकरगिरिसमधिष्ठायकदेवो भाग्यं महत्तमं वीक्ष्य रात्रौ स्वप्नछलेनेदं प्राह–हे कुमार! इतो गव्यूतान्ते सुरनदीतीरे समस्ति । पिप्पलयुगलं हस्तमेलापकाकारं बृहच्छाखं तयोर्मध्ये शाखायामेको महान् धवलप्रस्तरोऽस्ति । तस्य प्रस्तरस्य गुणा मेरुतुल्याः सन्ति । तस्य मध्ये अष्टादश महाप्रभावाणि रत्नानि एकैकोपरि सन्ति । तथाहि–एकेन अष्टादश वर्णा वशीभवन्ति १ एकेन रत्नेन सर्वाणि विषाणि उत्तरन्ति २ एकेन राजामात्यमहेभ्यादयो मानं ददते ३ एकेन ऋद्धियुक्तं सन्तानं भवति ४ एकेन दिव्यभोगाः स्युः ५ एकेन जलपूरस्तीर्यते ६ एकेन विवेक उत्पद्यते ७ एकेन क्षुद्रोपद्रवा न भवन्ति ८ एकेन शरीरे घातो न लगति ९ एकेन पठितं विना विद्या समेति १० एकेन अनीकबन्धो भवति ११ एकेन जात्यन्धा अपि जनाः पश्यन्ति पुरस्थितम् । १२ एकेन पावकोऽङ्गं न दहति १३ एकेन वस्तुपरीक्षा ज्ञायते १४ एकेन बुभुक्षातृषे न लगतः १५ एकेन मार्गे गच्छतां नृणांव्याघ्रसिंहादयो दुष्टा जीवा न मीलन्ति १६ एकेन रूपपरावर्तो भवति १७ एकेन देहाद्रोगा गच्छन्ति लोका नमन्ति सर्वे १८ अष्टादश रत्नानि गृहीत्वा अक्षराणि लिखित्वा आत्मनः पार्श्वे त्वमसि दक्षः, एष पाषाणस्त्वया विलोकनीयः ।

स्थापनीयानि च । पूजा कर्तव्या तेषां मदीयं नाम चित्ते धरणीयम् । त्वं तत्र यावद् गच्छसि छायायां विश्रामं यावच्च करिष्यसि, तावत् पाषाणोऽपि विकाशं गमिष्यति । यस्य यः प्रभावो मया प्रोक्तोऽस्ति स सत्यस्त्वया ज्ञातव्यः । तव भाग्यं वर्द्धमानं वीक्ष्योक्तं मयैतत् । एतेषां रत्नानां विंशतिवर्षाणि यावन्महान् प्रभावो भविष्यति । ततः परं महत्तमोत्तमः प्रभावो भविष्यति । एवंविधं स्वप्नं वीक्ष्य यावज्जागर्ति कुमारः, तावत् प्रातर्जातम् । पञ्चपरमेष्ठिनमस्कारशतत्रयं गणयित्वा स्वप्नस्वरूपं हृदि चिन्तयन् चचाल कुमारः । देवोक्तानुसारेणाचलत् कुमारः श्रेणिकः । नदीतीरे हस्तमेलापकाकारौ महीरुहौ ददर्श । तयोर्मध्ये महान् धवलप्रस्तरो दृष्टः पूजितः श्रेणिकेन । ततः एकतः पार्श्वे यावदुपविष्टः, तावत्तयोर्वृक्षयोर्मध्यात् प्रस्तरः पतन् सन् श्रेणिकेन गृहीतो हस्ते । सर्वेषां रत्नानां प्रभावचिन्हानि कृत्वा शनैः शनैरग्रतश्चचाल । यतः—"सुराज्यं सम्पदो भोगाः, कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं, धर्मस्यैतत्फलं विदुः ॥१॥" पथि गच्छन् श्रेणिकोऽन्येद्युः नद्या उपकण्ठे चम्पकाशोकपुन्नागमाकन्दराजादनप्रभृतितरून् पुष्पफलशालिनो ददर्श । ये ये वर्या वृक्षा उपलक्षिता भवन्ति, तेषां तेषां वृक्षाणां मृष्टानि फलान्यास्वादमानो मृगादिभिः सह क्रीडां कुर्वाणो नद्यादिस्वच्छप्रवाहेषु जलं पिबन् चचाल । मृदुपत्रनिष्पादितशय्यासु रात्रौ स्वपिति

श्रेणिकः। पर्वतशिखरतः प्रवाहानुत्तरतः प्रेक्ष्य मयूरान् नृत्यतश्च जहर्ष श्रेणिकः। पल्लीमध्ये चलन् राज्यगृहनिवासादधिकं
सुखं मन्यतेस्म। गच्छत एकाकिनो वने अकस्माद् भिल्लपुत्री कुमारिका दृष्टिपथमवतीर्णा। भिल्लिका श्रेणिकं देवकुमारतुल्य-
मागच्छन्तमालोक्य नूपुरनिनादपूरितदिगन्तराला मयूरपिच्छनिर्मापितचरणसालंकृतगात्रा हर्षोत्कर्षपूर्णस्वान्ता चलन्ती
क्रममाणा गजगत्या शनैः भिल्लिका कुमारी मुमुदे चन्द्रमिव चकोरीका। पर्वतशिखरादुत्तरन्ती श्रेणिकसमीपमागता
भिल्लिका जगाविति। अथ मम जन्म कृतार्थमजनि। यत् त्वमेवंविधस्तरुणो रूपवान् वरो लब्धः। तव शरणमागतास्मि।
तिष्ठ तिष्ठ स्वामिन् प्रसादं कृत्वा ममोपारि। पल्ल्यामस्यां मदीयः पिता राजास्ति। मां यदि त्वं परिणेष्यसि तदा मत्पिता
त्वां देशाधिपं कृत्वा स्थापयिष्यति। यदि मदीयं कथितं नैव करिष्यसि तदा त्वमकाले मृतिं गमिष्यसि। यानि यानि
औषधानि मणिमन्त्रतन्त्रप्रभावाश्च वर्तन्ते तानि सर्वाणि जानाम्यहम्। एकमौषधमस्ति ममेदृशं येन मनुष्योऽपि पशु-
र्भवति पशुरपि मनुष्यः स्यात्। एकेन मनुष्यो मर्कटो भूत्वा पदे पदे लगन् चलति। एकेन मर्कटोऽपि मनुष्यो भवति।
अहं वृक्षान् प्रति पादौ मुञ्चन्ती अन्येषां जनानां मदनभीष्टानां हस्तपादं भिनद्मि। अहं व्याघ्रसिंहेभ्योऽपि न बिभेमि।
वनमध्ये चलन्ती न बिभेमि, भूतप्रेतपिशाचेभ्योऽपि न बिभेति। अहं चौरसर्पादिभ्योऽपि न बिभेमि। ममोपान्ते सन्ति

सङ्केताः। अहं पानीयपूरेभ्योऽपि न बिभेमि । कुञ्जरं कर्णे धृत्वा रक्षामि । एकस्माद्वैश्वानराद्दूरे नश्यामि । मत्वेति त्वं वरो मां परिणेतुं मन्यस्व । मम पितुर्देशसीमा योजनशतं यावद्विद्यते । तेन ममाग्रतः कथं त्वं गमिष्यसि ममाङ्गीकरणं विना । हसतामहसतामपि प्राघूर्णो भवति यथा तथा मां परिणेतुं हस्तं धर । श्रेणिकः कुमारो दध्याविति । इमां शाकिनीं कथमहं परिणेष्यामि । एकं तावदियं मलिना । नीचा जात्या कामुका वदन्ती च बलिष्ठा धूर्तिका च अहमग्रे सारमेयादिभिः जेमनादिक्रियां कुर्वाणस्तातेन निष्कासितः स्वदेशात् । यद्यस्याः स्यां भर्ता तदा मम ज्ञातृत्वस्य मस्तके क्षारः पतिष्यति । अगमनगमनेन कुलं क्षिप्यते तथाऽधमैः । यदि मयेयं परिणेष्यते तदा क्षत्रियकुलं भिल्लकुलसमानं मया गण्यते । यदीयं परिणेष्यते मया तदा अस्या हस्ते गृहीतव्य आहारः। अस्याः पितुश्च मया नमस्कारः करणीयः । यदि मया पाणिग्रहोऽस्याः क्रियते तदा मम मातापित्रादयो लज्जन्ते। कथमपि नारीमिमां न वरिष्ये । किमस्याः पार्श्वात् नश्यामि अथवा मृतिं करिष्ये श्रेणिक इति दध्यौ । यतः—

" अर्जयित्वा कुलं वर्य-तमं ये मनुजाः खलु । अधमैः सह कुर्वन्ति, मैत्रीं ते ह्यधमाः स्मृताः॥ १ ॥ संसारे हयविहिणा, महिलारूवेण मंडियं पासं । बज्झन्ति जाणमाणा, अयाणमाणा न बज्झन्ति ॥२॥ अनृतं साहसं माया, मूर्ख-

दर्शने हरते चित्तं, स्पर्शने हरते बलम् ।
त्वमतिलोभता । निःस्नेहो निर्दयत्वं च, स्त्रीणां दोषाः स्वभावजाः ॥ ३ ॥ दर्शने हरते चित्तं, स्पर्शने हरते बलम् ।
सङ्गमे हरते वीर्यं, नारी प्रत्यक्षराक्षसी ॥ ४ ॥" कृत्वा मौनं क्षणं तस्मात्, स्थानकाच्च शनैः शनैः । चचाल श्रेणिको
यावत्, तावत् पृष्ठे चचाल सा ॥ ५ ॥ अग्रतो गच्छन् श्रेणिको दावं ज्वलन्तमालोक्य अग्निस्तम्भनमणिं हृदि स्मरन्
अग्निमध्ये प्रविवेश । अग्निमध्ये ऊर्ध्वीभूतः श्रेणिकस्तां प्रति प्राह । रे भिल्लिके यदि मां परिणेष्यसि तदाऽत्र मम
समीपं समागच्छ । आकर्ण्यैतद् भिल्लिका हस्तौ घर्षयन्ती बभाण—अहं त्वरितगतिकाऽभूवं यद्यहं स्थिराऽभविष्यं
तदाऽसौ शनैः शनैर्मां पर्यणेष्यत । अनेन धूर्तेन संमुखाऽहं छलिताऽस्मि । अकरिष्यमहं बाढं, विनयमस्य सन्ततम् ।
अजल्पिष्यं वचो भीति-दायकं न मनागपि ॥ १ ॥ अभविष्यमहं दासी, यद्यस्य मृदुजल्पनात् । अपतिष्यत्तदा-
पाशे, मदीयेऽसौ सुनिश्चितम् ॥ २ ॥ यन्मया जल्पितं तन्मे, मस्तके पतितं खलु । मन्त्रतन्त्रादिकोटीना-मेष जानाति
निश्चितम् ॥ ३ ॥ रङ्कस्य चटितं रत्नं, हस्ते किं तिष्ठति स्फुटम् । मया मौग्ध्यात् स्वमन्त्रादि-ज्ञातृत्वं जल्पितं खलु
॥ ४ ॥ अनेन येन दावाग्निर्गृहीतो मां वञ्चयित्वा । अहं किं करिष्ये क्व गच्छामि कस्याग्रे वदामि ऊर्ध्वस्थिता भिल्लिका
कुमारं गच्छन्तं दर्शं दर्शं मनसि खेदं दधती हृदयं कुट्टयामास । क्षणेनैकेन तया चिन्तितं गच्छन् म्रियमाणो वा

केनापि रक्षितुं न शक्यते। अहं तु मुधैव विषादं करोमि, भाग्यं विना चिन्तामणिर्गृहे न तिष्ठतीति ध्यायन्ती सा तत्र तस्थौ। कुमारो मुष्टिं बध्वा चचाल। ततो बलेन क्रमात् श्रेणिको गङ्गाप्रवाहं प्राप। जलं भूरि पश्यन् कुमारस्तरंश्चतस्रो दिशः पुनः पुनर्विलोकयामास। तस्या उपकण्ठे महाचन्दनतरुं शुष्कमालोक्य हर्षितः श्रेणिककुमार आरुरोह। यावदुपरि चटितस्तावत् कडकडशब्दं कुर्वन् वृक्षो गजेन्द्र इव पानीयमध्ये पपात। रत्नं जलतारकं मनसिकृत्य शुष्कवृक्षारूढः कुमारः विमानस्थ इव चलन् शुशोभ। चन्दनपादपाधारेण रत्नप्रभावेण च विंशतिदिनप्रान्ते वेन्नातटपुरसमीपे प्राप्तः। कुमारः यावत् विमानतरुं तत्र स्थापयामास तावत् पुरमध्ये सर्वतः तस्य तरोः परिमलः प्रससार। परिमलानुसारेण तत्र बहवो महेभ्या आगता भ्रमरा इव जातिपुष्पपार्श्वे। महेभ्या जगुः। भो सार्थवाह अस्य चन्दनस्य किं मूल्यम्, कुमारेणोक्तम्—अस्य मूल्यं वक्तुं न शक्यते। मणिमाणिक्यतुलया विक्रीयते। एवंविधं चन्दनं कस्यापि राज्ञो भाण्डागारे नास्ति। सुवर्णेन समं तोलयित्वा अर्पयिष्यामि चन्दनं शुष्कमपि। यूयमप्यर्पयिष्यथ क्रयाणकं वयं सर्वमपि क्षमते। अत्रान्तरे बहुषु लोकेषु मीलितेषु महेभ्यैरुक्तम् भो लोका दूरीभवन्तु, मा जानीथ एवं एककोऽस्ति, वयं सर्वे अस्य साधर्मिकाः स्मः, यदस्य स्वल्पमपि चन्दनं गच्छति तदस्माकमेव गतं, तेन न केनापि

श्रीश्रेणिकस्य वेन्नातट गमनम्

अस्य क्रयाणके हस्तः क्षेप्यः, योऽस्य क्रयाणकमध्ये हस्तं स्थापयिष्यति तस्य चौरदण्डो भविष्यति, राजा अन्या-
यिनां निग्रहं करोति न्यायिनां रक्षां करोति च। ततो दिशो दिशो वंशिकाः कुठाराः कुद्दालादयोऽप्या-
गच्छन्ति खंडीकर्तुं, शाखामूलादि सर्वं स्वर्णतोल्यं विक्रीयते। कुमारेण कंपाणके चटापयित्वा हेममूल्येन सर्वं चन्दनं
विक्रीतम्। ततस्तेन हेम्ना जात्यरत्नानि गृहीतानि। क्षणमध्ये सर्वं चन्दनं गृहीत्वा स्वर्णदानेन महेभ्याः स्वस्व-
गृहे ययुः हर्षिताः। रत्नानि ग्रन्थौ बध्वा वेषपरावृत्तिं कृत्वा श्रेणिककुमारो वेन्नातटपुरमध्ये प्रविवेश। कुमारः
प्रविशन् हट्टश्रेणिमध्ये प्रथमं धनावहहट्टे जगाम। यावत् क्षणमुपविष्टः कुमारस्तत्र तावच्छ्रेष्ठिनो बहुलाभो जाय-
सानोऽजनि। श्रेष्ठी कुमारं प्रति प्राहेति—एकस्मिन् भाजने मदनफलानि सन्ति, द्वितीये रोहिणित्वचा, तृतीये सुण्डलके
यवाः सन्ति, एतानि मया कल्ये आनीतानि सन्ति। गडूचीकच्चूरकपाटलादि चतुर्थे सुण्डलके, त्रिगडू त्रिफला
सैन्धवगिरिमालकादि अस्ति, यच्च वस्तु सुण्ठीमुख्यं तव विलोक्यते तद् गृहाण। एतदाकर्ण्य कुमारोऽवग्—श्रेष्ठिन्
हस्ते बहुमुत्कलोऽसि त्वं किमर्थं, त्वं ममोपरि एवं कुर्वन्नासि, अथवा तवैवंविधः स्वभावोऽस्ति। ततो हट्टा-
धिपो हसन्नाह—आत्मनोऽर्थ एव वल्लभो विद्यते नृणाम् नतु कस्यापि परकार्यं वल्लभम्। श्रेणिकः प्राह—

कः आत्मनः स्वार्थः ? श्रेष्ठी प्राह–अद्य रात्रौ केनचित् सुरेण स्वप्नछलान्ममाग्रे प्रोक्तमेवम्, यः प्रभाते विंशतिवर्षप्रमाणो धवलवस्त्रधारी पूर्वदिशायाः कश्चित् समेष्यति सप्तसु घटीषु गतासु अष्टम्यां घट्यां भवद्धट्टाग्रे स तवापदां सर्वां भेत्स्यति । एवंविधं स्वप्नं दत्त्वा कोऽपि देवो विद्युदिव तिरोदधे । ततः प्रातरुत्थाय मया चिन्तितं वर्यं स्वप्नमिदम् । यतः स्वप्नशास्त्रे-"देवताश्च द्विजा गावः, पितरौ लिङ्गिनो नृपाः । यद्वदन्ति नृणां स्वप्ने, तत्तथैव भविष्यति ॥ १ ॥ कृष्णं कृत्स्नमशस्तं, मुक्त्वा गोवाजिराजगजदेवान् । सकलं शुक्लं शस्तं, मुक्त्वा कर्पासलवणानि ॥ २ ॥ गायने रोदनं ब्रूयान्, नर्तने वधबन्धनम् । हसने शोचनं ब्रूयात् पठने कलहं तथा ॥ ३ ॥" ततोऽहं हट्टे समेत्य यावदुपविष्टः तावत्त्वं तादृग्लक्षणलक्षितो मया दृष्टः । कुमारो दध्यौ । एष श्रेष्ठी मुग्धः किमपि गुह्यं न स्थगयति । यथा यथा श्रेष्ठी स्वप्नस्वरूपं कथयति तथा तथा कुमारः कौतुकं चित्ते धत्ते । अपवरकमध्ये वस्तु दृष्ट्वा कुमारः प्राह–गर्भगृहमध्ये यद्वस्तु मुक्तं तत् किमर्थं ? श्रेष्ठी प्राह–परद्वीपसम्बन्धिवाहनं समुद्रमध्ये वहमानं चौरैर्गृहीतम्, तैः स्तेनैस्त्वरितमत्रानीय मम भूरिद्रव्येण भरितं समर्पितम् । गतेषु स्तेनेषु राज्ञा तद्वृत्तान्तं ज्ञात्वा प्रथमं धनकणकर्पटकाञ्चनरूप्यादि सर्वं मदीयं दण्डे गृहीतम्, श्रेष्ठिपदव्यपि उद्दालिता, वाहनमध्यस्थं क्रयाणकमपि

गृहीतम् । तन्मध्ये या धूलिर्दृष्टा राज्ञा उक्तं च एषा धूलिरस्य गले बन्धनीया । यतः । अद्यप्रभृति एवंविधं स्तैन्यं न करोति श्रेष्ठी । ततोऽहमेवंविधो भूपेन कृतोऽखिलधनापहारात् । यदि दूरं त्यज्यते, तदा लोका हसन्ति माम्, ततो मया चिन्तितम् । वर्षाकाले कर्दमो हट्टश्रेणौ भवति तेन कियती धुलिर्हट्टाग्रे स्थापिता, कियती हट्टमध्ये स्थापिता मया, यद्वाहनं मया गृहीतं तदपि दिनपञ्चसप्तमध्ये गङ्गापूरेण दृष्टिपथमागमिष्यति । धननामाप्यहं निर्धनोऽभूवम् । श्रेणिकः प्राह—अहो वस्तुस्वरूपं यो न जानाति स कथं क्रयविक्रयौ करोति । श्रेष्ठी जगौ—अग्रे लोका मां हसन्ति यदि त्वमप्येवं मां हससि तदा का गतिर्मम । लोका जानन्ति एषोऽत्र किं वसति । वयं गृहं गृहं मया विक्रीष्यते नगरमिदं त्यक्ष्यते । यस्मिन् पुरे मयानेक-वर्षं हट्टं मदीयं लातुं सर्वे जनाश्चिन्तयन्ति स्म । तस्मिन्नधुना यत्तदाहारवस्त्रादिना निर्वाहो मया क्रियते । अहं नानाविधमधुराहारदिव्यवस्त्रपरिधानादि कृतम् । लक्ष्मीं विना नरो न शोभते । यतः—" वरं जानामि किं कूपे पतित्वा मरणं साधयामि, अथवा वन्हौ प्रविशामि । वनं व्याघ्रगणैर्निषेवितं, जनेन हीनं बहुकण्टकावृतम् । तृणानि शय्या वसनं च वल्कलं, न बन्धुमध्ये निर्धनस्य जीवितम् ॥ १ ॥ " करुणासागरः कुमारः श्रेष्ठिनं दुःखिनं दृष्ट्वा दुःखितोऽजनि । यतः—चेतः सार्द्रतरं वचः समधुरं

दृष्टिः प्रसन्नोज्ज्वला, शक्तिः क्षान्तियुता मतिः श्रितनया श्रीर्दीनदैन्यापहा । रूपं शीलयुतं श्रुतं गतमदं स्वामित्व-सुसेकता—निर्मुक्तं प्रकटान्यहो नवसुधाकुण्डान्यमून्युत्तमे ॥ १ ॥ कुमारोऽवग्—श्रेष्ठिन् कथं सत्यां श्रियि त्वया म्रियते ? श्रेष्ठी जगौ—मम गृहे तन्नास्ति यद्भुज्यते, एवं त्वं कथं जल्पसि ? कुमारः प्राह—यद्विलोक्यते तद्गृहाण त्वं वाहनं गङ्गातटस्थं यत्नेन रक्षितुं । या धूलिः समागता सा सर्वा यत्नेन रक्षणीया भूरि धनं भविष्यति । तत्र गृहे यावद् धूल्येव धनं भवति तावन्मदीयै रत्नैर्व्यवसायं कुरु त्वम् । वेन्नातटपुराधिपमावर्जय । ये ये तव सेवकास्तान् तान् अङ्गीकुरु । यावदहं देशान्तरं विलोक्य पश्चादागमिष्यामि तावदेतैः रत्नैस्त्वं व्यवसायं कुरु । धनपतिर्भणति—त्वयेदमेवं कथं जल्पितम् ? अनेन वचनेन मम हृदयेऽतीवोच्चाटोऽजनि । यत्त्वया चलितुं वार्ता कृता सा मच्चित्ते शल्यमिवाजनि । यत्त्वया वचनयानं मम मज्जत आपदम्भोधौ तरितुं दत्तं तत्कथमधुनैवोद्दाल्यते । उत्तमानामेवं जल्पितुं न युज्यते । यद्वचनं त्वया जल्पितं तत् क्रियताम् । पश्चाद्यथारुचि देशान्तरं विलोकय । त्वं यदि मामवगणय्य यास्यसि, तदा देवतोक्तं वचनमपि निष्फलं भविष्यति । तव बुद्धिप्रपंचं विना धूल्या धूलिमेवाहं लप्स्ये । त्वमथकल्पतरुरिवात्रागत्य किं गच्छसि । इमां धूलिं त्वं विक्रीणीहि । यद्द्रविणमुत्पद्यते तदर्धेन गृहीष्यते आवा-

भ्याम् । एवं चेन्नाक्रियते भवता तदा गङ्गाप्रवाहे प्रक्षिप । यथा सन्तापो न भवति । कुमार आचष्ट । यदि मम पितृनामकुलवसनग्रामादि न पृच्छ्यते, तदाऽहं दिनानि कतिचित् स्थास्यामि धनो बभाण—अहं तव पार्श्वे किमपि नामादि न पृच्छामि । त्वमात्मीयेन नाम्ना सह राज्यं कुरुष्व । मम सम्बन्धि वस्तु इदं त्वदीया बुद्धिः । तव बुद्ध्या विक्रीयेदं वस्तु आवाभ्यामर्धेन विभज्य गृहीष्यते धनेनावर्जितः श्रेणिकः । ततो दन्तधावनार्थं नीरमानीतम् । एकं-दातनकं द्विस्फटिकां कृत्वा द्वाभ्यां धनश्रेणिकाभ्यां मुखशोधनं कृतम् । द्वाभ्यां परस्परं प्रीतिः कृता । कुमारस्य रत्नानि गृहीतानि श्रेष्ठिना । दातनकजले ययाऽऽनीते सा धनपुत्री बालकुमारी विद्यते । दातनकं कृत्वा कुमारो यावद् हट्टे उपविष्टः । तावत्तया कन्यकया सुलक्षणवान् कुमार उपलक्षितः । दध्यौ च कुमारी । यद्ययं मम भर्ता भवति तदा सुकृत-स्यानन्तस्योदयोऽजनि मम, एवं ध्यात्वा कुमारी पितुः पुरः प्राह—यदि तात त्वं मां परिणायिष्यसि एनं तदासौ वरो मे भवतु, नो चेत् चारित्रं भवतु मम । ततो धनः श्रेष्ठी प्राह—भो वत्से एवं वक्तुं तव न युज्यते गृहे गच्छ, गृहं प्रमार्जय । दूरत आत्मनः प्राघूर्णक आगतोऽस्ति । ततो धनपुत्री गृहे गत्वा जननीपार्श्वे प्राहेति—एक आगतोऽस्ति पुमान् दूरतः आत्मीयहट्टे, तं दृष्ट्वा मदीयं मानसमुल्लसितम् । मम सुखभक्षिकायै योऽर्थो विधीयते विद्यते वा

तेनार्थेन प्राघूर्णकार्थे वर्यां रसवतीं कुरु त्वं मातरस्य प्राघूर्णकस्यार्थं आलस्यं त्यक्त्वा । स्नानान्नदानादिना तं प्राघूर्णकं सत्कृत्य त्वं मां तेन सह परिणायय । माता प्राह—रे निर्लज्जे वत्से किमर्थं कथितं विना हट्टे गता, यान् यान् द्रक्ष्यसि तांस्तान् यदि त्वं वरिष्यसि तदा त्वं अस्माकं हस्तादुच्चरिताऽसि । एवंविधानि स्वेच्छाजल्पकानि यद्यपत्यानि यानि भवन्ति तानि दुःखीनि भवन्ति । त्वं महाकुले उत्पन्ना सती कथमेवं जल्पसि । तवाधुना लज्जाऽपि कुत्राऽगात् । पुत्री बभाण—मातरेवं मा जल्प, मम शीलं मेरुसमं निश्चलं जानीहि, त्वया विकारः कोऽपि नानेयो मनसि, अहं तु तव पुत्र्यस्मि यो मया पतिर्वाञ्छितः स एवास्मिन् जन्मनि मम भर्ता भवतु नो चेत् संयम एव शरणम् । मातृपुत्र्योरेवं जल्पत्यो रसवतीं कुर्वत्योः सत्योः स एव प्राघूर्णकः प्राङ्गणे आगतः अत्रान्तरे धनश्रेष्ठी भार्यापुत्रीजल्पनोदन्तं श्रुत्वा गृहमध्येऽभ्येत्य पत्न्याः पुरः प्राह—एष वरोवर्योऽत्रागतोऽस्ति, एषा पुत्री विवाहयोग्याऽस्ति यदि अनयोर्विवाहेन संयोगो भवति तदा चन्द्ररोहिण्योरिव सूर्यरत्नादेव्योरिव कन्दर्प्परत्योरिव कृष्णरमयोरिव शक्रेन्द्राण्योरिव शोभा भवति । अन्तरायो यदि नैव भवति तदाऽनयोर्योगो वर्यो भविष्यति । जीवानां लक्ष्म्यर्जने पुण्यकृत्यकरणे ( च ) विघ्नानि भूरिशो जायन्ते

स्वमातापित्रोः पार्श्वे श्रीश्रेणिकस्य वरत्वेन सुनन्दायाः याञ्चा

उत्पद्यन्ते ततः सद्भिः, कर्तव्यं साहसं सदा ॥ १ ॥”
यतः—“ पुण्यं वितन्वतां नृणां, विघ्नानि भूरिशः स्फुटम् । एतदर्थं साम्प्रतमहं नियमः कारितोऽस्मि, तत एष अत्रा-
एतस्य पार्श्वे भवत्या ग्रामनामकुलगोत्रादि न पृष्टव्यम्, एतदर्थं साम्प्रतमहं नियमः कारितोऽस्मि, तत एष अत्रा-
त्मीयगृहे आगतोऽस्ति । तदानीं सुनन्दा जगौ—हे तात त्वया नामस्थानककुलगोत्रादिकस्य वार्तापि न पृष्टव्या ।
यदि एष कुमारो मामङ्गीकरोति तदा विवाहं कुरुष्व मया सहास्य नो चेन्मम दीक्षां दापय । पुत्र्या निश्चयं मत्वा
पिता जहर्ष । ततो द्वयोः स्नानदानदेवपूजावर्यरसवतीपरिवेषणादिपर्यन्तं धनपुत्री भक्तिं चकार । ततश्चित्रशालाया-
मुपविष्टौ द्वौ । धनेन प्रोक्तम्—यदि भवता विरूपं न मन्यते तदा किमपि प्रोच्यते श्रेणिकोऽवग्—यन्मम रोच्यमान-
मस्ति तज्जल्पनीयं त्वया, धनश्रेष्ठ्यवग्—एषा मम पुत्री तां त्वं परिणय पथिक ! अर्थलोभो मनसि न कर्तव्यः ।
विंशमर्द्धविंशं वा जामातुर्न रक्षामि । कन्याविक्रयं ये जनाः कुर्वन्ति तेषां बहुपापं लगति । यतः—“ ये कन्यानां
जना एवं, विक्रयं कुर्वते स्फुटम् । ते लभन्ते इहामुत्र, दुःखश्रेणिमनुत्तराम् ॥ १ ॥” या एव पुत्री त्वया
परिणेतव्याऽस्ति । नो चेच्चारित्रं गृहीष्यति । सान्यं नरं नेहते, ततः कुमारो धर्मिष्ठां तां विज्ञाय मनो गुप्तं
कृत्वा च प्रोचे एषा पुत्री ग्रथिलाऽस्ति यं यं वरं पश्यति तं तं वरिष्यति यदि तदा एषा मूर्खाणां मध्ये रेखां

श्रेष्ठिनो वचनमाकर्ण्य, श्रेणिको जगौ श्रेष्ठिनं प्रति त्वं पटहं स्पृश । ततस्तस्य वचसा पटहे स्पृष्टे भूपसेवकैर्भूपोपान्तेऽभ्येत्योक्तं धनश्रेष्ठिना पटहः स्पृष्टः । तदा राजादयोऽखिला जना जहसुः, धनगृहे धूलिरेवागतास्ति, अपरं धनं तु सर्वं गतं तेन ग्रथिलो जातोऽथवा वातेसुप्तोऽथवा श्रेष्ठी । येनाधुना पटहः स्पृष्टोऽनेन । अथवा अनेन धूलिर्यदा दर्शयिष्यते सार्थवाहस्य । तदात्मीयपुरस्य माहात्म्यं यास्यति । ततो राज्ञा धनमाकारयितुं स्वसेवकाः प्रेषिताः धनपार्श्वे । धनस्तान् भूपानुगानाकारयितुमागतान् दृष्ट्वा श्रेणिकाग्रे जगौ—किं करिष्यते । राज्ञो भृत्या आगताः । श्रेणिको जगौ—भवता खेदो नानेयः । राजवशीकरणरत्नं ग्रन्थौ बध्वा मनसि स्मृत्वा च राज्ञो मीलितव्यं । मणिप्रभावेण यदा राजा तुष्टो भवति तदा त्वया माण्डविका भूरिधनेन दृढीकृत्य गृहीतव्या । तेजनतूरिकाप्यर्पयिष्यते ततो धनो रत्नसहितो राज्ञो यावन् मीलितः नृपं प्रणणाम च, तावद्राजा प्रसन्नीभूय रत्नं गृहीत्वा प्राह—मन्त्रिणं प्रति भवता माण्डविका अस्यार्पणीया । अस्य हस्ताद् धनं चटाप्यापि लोकैरन्यैर्माण्डविका न ग्राह्या । ततो मण्डपिका गृहीता । ततो राज्ञोक्तं—श्रेष्ठिन्नस्य सार्थवाहस्य रोच्यमानं वस्तु दाप्यतां त्वया । श्रेष्ठिनोक्तं । जीर्णा तेजनतूरिका विलोक्यते नवा वा एतस्य

दिव्यवस्त्रादिना सन्मान्य धनः श्रेष्ठी सार्थपयुग् प्रेषितः । श्रेष्ठिनोऽग्रे स्वर्णबीजपू-
सार्थपस्य एतच्छ्रुत्वा राजा हृष्टः । दिव्यवस्त्रादिना सन्मान्य धनः श्रेष्ठी सार्थपयुग् प्रेषितः । श्रेष्ठिनोऽग्रे स्वर्णबीजपू- असावेव जानाति सर्वम् । द्वयोः
राणि यावत् सार्थपो मुञ्चति तावत् श्रेष्ठी जगौ—अस्य श्रेणिककुमारस्याग्रे मुञ्च असावेव जानाति सर्वम् । द्वयोः
प्राभृतं कृत्वा सार्थपः प्राह—अहो धनो धन्योऽस्ति यस्य ईदृक्षे विभवे सति एवंविधो विनयः । यस्मिन् देशे ईदृक्षा
व्यवहारिणो भवन्ति स देशो धन्यः । श्रेणिकं दृष्ट्वा तदा सार्थपः प्राह—अहो कुमार ! त्वं राजगृहे दृष्टोऽभूर्मया ।
कुमारोऽवग्—राजगृहो वैरिणामपि मा भवतु, यद्येवंविधमशुभं वचनं जल्प्यते भवता, तदा अन्येषां गृहे
गत्वा वस्तु गृहाण, अस्मदीयं वस्तु गृहितारो बहवो भविष्यन्ति । ततो रुष्टं श्रेणिकं मत्वा सार्थप
उत्थाय तस्य पादयोः पतित्वा प्राह—अहं मुग्धोऽभूवं यदेवंविधं वचोऽत्र जल्पितं मया क्षम्यताम् ।
ततो कुमारोऽवग्—एकं तेजनतूरिकाया गद्यानकं वन्हिमध्ये क्षिप्त्वा तन्मध्ये भारप्रमाणं ताम्रं क्षिप्यते,
ततः सर्वं सुवर्णं भवति, ततो नायको हृष्टो न्युंछनकं चकार तस्य । ततः स प्राह—तेजनतूरिकायाः वर्णिकां,
दर्शय, ततो धनेन वर्णिका दर्शिता । तेजनतूरिकां दृष्ट्वा सार्थपो दध्यौ । अहो धन्योऽसौ यस्य गृहे एवंविधे
वैभवे सत्यपि एवंविधो दाक्षिण्यादिगुणः । धन्यमिदं पुरं धन्योऽसौ भूपः यस्य राज्ये एवंविधा व्यवहारिणः सन्ति ।

लप्स्यते । नामस्थानककुलगोत्रादि ज्ञातं विना यद्येषा वरं वरति तदासौ ग्रथिला निश्चितम् । कुमारी प्राह—यद्येष कथयति, तत् कथयतु अहं अमुमेव वरिष्यामि, राजहंसानां कुलं कः पृच्छति । यथा तेषामुत्तमं भवति । उत्तमानां कुलमाकारं जल्पनेन ज्ञायते । राजहंसी मानससरोवरे एव रुचिं करोति नान्यत्र तथा एषापि । प्रकटं प्राह च कुमारः । मयि अङ्गीकृते तव को लाभः अहं तु वैदेशिकः । घटीमध्येऽत्र स्थितोऽपि यामि । अभ्रच्छायेव मम मेलापको भविष्यति तव । ततः सुनन्दाऽवग्—सत्यं वचस्तव, अभ्रस्याधारे चन्द्रसूर्यौ, अभ्रस्याधारे जलधरपूरः, अभ्रस्याधारे ताराः सर्वाः स्युः, अभ्रस्याधारे लोकाः सर्वे, तथाहं तवाधारेऽस्मि । कृपां कृत्वा मम पाणिग्रहं कुरु । अभ्रमिव भवान् पुत्रपौत्रादिना विस्तरतु । कुमारः प्राह—पाणिग्रहः स्वप्नतुल्यो मम तव भविष्यति । विवाहानन्तरं यावद् दिनानि पञ्चदश भविष्यन्ति तावदहं वैदेशिको विदेशं प्रति चलिष्याभि । देशान्तरितोऽथवा अवधूतः उत्थाय चलितः, लग्नं भूतं यस्य स यथा उत्थाय याति तदा तस्याः का गतिः । पुनरपि सुनन्दा जगौ—अहं व्रतं ग्रहीतुकामाऽभूवम् । अधुना त्वां दृष्ट्वा मनः एवंविधमभूत् । तव करो हस्ते लगति अथवा संयमश्रियः करः । यदि त्वं मां परिणीय गमिष्यसि तदाऽहं शीलव्रतं पालयिष्यामि । अथवा संयमं—निष्कलङ्कं । मां परिणीय त्वं देशान्त-

धन श्रेष्ठिनः सुनन्दायाः पाणिग्रहणाय श्रीश्रेणिकस्य अभ्यर्थना.

राणि विलोक्यात्मीयराज्यं कुरु । श्रुत्वैतत् कुमारो ग्रन्थि बध्वा प्राह—एषैव वेला वर्या वर्तते । यत् रोचते भवतः तत् कुरु । ततः श्रेष्ठी स्वां पुत्रीं समहोत्सवं श्रेणिकाय पर्यणाययत् । अन्येद्युः श्रेणिको हट्टे उपविष्टः । अत्रान्तरे पुरे-पटहो वाद्यमानः कुमारेण श्रुतः । पृष्टं च तेन । श्रेष्ठिन् किमर्थं पटहो वाद्यते ? श्रेष्ठी प्राह सपादलक्षबलीवर्दभृत-नानावस्तुसमुच्चयो देवनन्दिसार्थवाहोऽत्रागात् । तस्यास्ति एकः शुकः । षण्मासान्ते जल्पति पृष्टः सत्सत्यं । देव-नन्दिसार्थपेनैकदाऽऽत्मपुरस्थेन स शुकः पृष्टः । तेजनतूरिका कुत्रास्ति ? शुको जगाद वेन्नातटपुरेऽधुना समस्ति सा तेजनतूरिका । ततः स सार्थवाहो भूरिक्रियाणकपूर्णसपादलक्षपृष्ठवाहयुतो गतदिनेऽत्रागात् । राज्ञो मीलितः प्राभृतं वर्यं कृतं । राज्ञोक्तं किं विलोक्यते ? तेन प्रोक्तं तेजनतूरिका । राज्ञाऽऽकारिता मन्त्रिणः पृष्टाश्च कस्यास्ति तेजनतूरिका ? मन्त्रिभिरुक्तम्—न ज्ञायते कस्यास्ति । राजा प्राह—तन्नगरं वर्यं । यत्र पुरे सर्वाणि वस्तूनि लभ्यन्ते । आयान्ति च यत्र भूरिधनिनो व्यवहारिणो वसन्ति । यत्रागता वस्तु न लान्ति जनाः । यत्र सर्वाणि क्रयाणकानि न सन्ति । तदपि पुरं पुरमध्ये कथं गण्यते । इत्यादि प्रोक्त्या राजानं खेदं दधानं दृष्ट्वा मन्त्रिणो जगुः पटहो वाद्यते । आत्मीयं पुरं महद्दिद्यते । कस्यापि गृहे कदाचिद्भविष्यति । एतद्विचार्य राज्ञाऽऽदिष्टा मन्त्रिणः पटहं वादयन्ति ।

श्रेष्ठिनो वचनमाकर्ण्य, श्रेणिको जगौ श्रेष्ठिनं प्रति त्वं पटहं स्पृश । ततस्तस्य वचसा पटहे स्पृष्टे भूपसेवकैर्भूपोपान्तेऽभ्येत्योक्तं धनश्रेष्ठिना पटहः स्पृष्टः । तदा राजादयोऽखिला जना जहसुः, धनगृहे धूलिरेवागतास्ति, अपरं धनं तु सर्वं गतं तेन ग्रथिलो जातोऽथवा वातेसुप्तोऽथवा श्रेष्ठी । येनाधुना पटहः स्पृष्टोऽनेन । अथवा अनेन धूलिर्यदा दर्शयिष्यते सार्थवाहस्य । तदात्मीयपुरस्य माहात्म्यं यास्यति। ततो राज्ञा धनमाकारयितुं स्वसेवकाः प्रेषिताः धनपार्श्वे । धनस्तान् भूपानुगानाकारयितुमागतान् दृष्ट्वा श्रेणिकाग्रे जगौ—किं करिष्यते । राज्ञो भृत्या आगताः । श्रेणिको जगौ—भवता खेदो नानेयः । राजवशीकरणरत्नं ग्रन्थौ बध्वा मनसि स्मृत्वा च राज्ञो मीलितव्यं । मणिप्रभावेण यदा राजा तुष्टो भवति तदा त्वया माण्डविका भूरिधनेन दृढीकृत्य गृहीतव्या । तेजनतूरिकाप्यर्पयिष्यते ततो धनो रत्नसहितो राज्ञो यावन् मीलितः नृपं प्रणणाम च, तावद्राजा प्रसन्नीभूय रत्नं गृहीत्वा प्राह—मन्त्रिणं प्रति भवता माण्डविका अस्यार्पणीया । अस्य हस्ताद् धनं चटाप्यापि लोकैरन्यैर्माण्डविका न ग्राह्या । ततो मण्डपिका गृहीता । ततो राज्ञोक्तं—श्रेष्ठिन्नस्य सार्थवाहस्य रोच्यमानं वस्तु दाप्यतां त्वया । श्रेष्ठिनोक्तं । जीर्णा तेजनतूरिका विलोक्यते नवा वा एतस्य

सुनन्दायाः पाणिग्रहणं तेजनतूरिकार्थे देवनन्दि-सार्थवाहस्यागमनम्

दिव्यवस्त्रादिना सन्मान्य धनः श्रेष्ठी सार्थपयुग् प्रेषितः । श्रेष्ठिनोऽग्रे स्वर्णबीजपू-
सार्थपस्य एतच्छ्रुत्वा राजा हृष्टः । दिव्यवस्त्रादिना सन्मान्य धनः श्रेष्ठी सार्थपयुग् प्रेषितः । श्रेष्ठिनोऽग्रे स्वर्णबीजपू-
राणि यावत् सार्थपो मुञ्चति तावत् श्रेष्ठी जगौ—अस्य श्रेणिककुमारस्याग्रे मुञ्च असावेव जानाति सर्वम् । द्वयोः
प्राभृतं कृत्वा सार्थपः प्राह—अहो धनो धन्योऽस्ति यस्य ईदृक्षे विभवे सति एवंविधो विनयः । यस्मिन् देशे ईदृक्षा
व्यवहारिणो भवन्ति स देशो धन्यः । श्रेणिकं दृष्ट्वा तदा सार्थपः प्राह—अहो कुमार ! त्वं राजगृहे दृष्टोऽभूर्मया ।
कुमारोऽवग्—राजगृहो वैरिणामपि मा भवतु, यद्येवंविधमशुभं वचनं जल्प्यते भवता, तदा अन्येषां गृहे
गत्वा वस्तु गृहाण, अस्मदीयं वस्तु गृहितारो बहवो भविष्यन्ति । ततो रुष्टं श्रेणिकं मत्वा सार्थप
उत्थाय तस्य पादयोः पतित्वा प्राह—अहं मुग्धोऽभूवं यदेवंविधं वचोऽत्र जल्पितं मया क्षम्यताम् ।
ततो कुमारोऽवग्—एकं तेजनतूरिकाया गद्यानकं वन्हिमध्ये क्षिप्त्वा तन्मध्ये भारप्रमाणं ताम्रं क्षिप्यते,
ततः सर्वं सुवर्णं भवति, ततो नायको हृष्टो न्युंछनकं चकार तस्य । ततः स प्राह—तेजनतूरिकायाः वर्णिकां,
दर्शय, ततो धनेन वर्णिका दर्शिता । तेजनतूरिकां दृष्ट्वा सार्थपो दध्यौ । अहो धन्योऽसौ यस्य गृहे एवंविधे
वैभवे सत्यपि एवंविधो दाक्षिण्यादिगुणः । धन्यमिदं पुरं धन्योऽसौ भूपः यस्य राज्ये एवंविधा व्यवहारिणः सन्ति ।

ततः सार्थपः सपादलक्षपृष्टवाहिकान् रत्नसुवर्णरूप्यपट्टकुलपञ्चवर्णमयकर्पटकचन्दनकर्पूरकस्तूरिकाजवादिप्रभृतिबहुमूल्यक्रयाणकपूर्णान् धनश्रेष्ठिगृहप्राङ्गणे आनिनाय ॥ धनश्रेणिकौ तान् पृष्टवाहकांस्तादृग्वस्तुभरितान् वीक्ष्य चमत्कृतौ । ततः परस्परं वस्तु विलोक्य मिथः प्रोच्यमानधनसार्थपौ ललतुः । मिथो हृष्टौ बभूवतुः । ततः सार्थवाहधनश्रेणिका जिनप्रासादे जिनस्य शतपत्रसहस्रपत्रजातियूथिकादिभिः पूजां रचयित्वा वर्तनगीतगानादिभावपूजां च कारयामासुः । व्यवहारिणो जाता मिथः प्रीतिश्च । ततो वस्तु गृहीत्वा राजपार्श्वे गत्वा सार्थपः प्राह—राजन् धन्योऽसि पुण्यवानसि त्वम् ? । यस्य पुरे एवंविधो धनो व्यवहारी वसति पुण्यवान् जिनधर्मवासितसप्तधातुः नवनिधिचतुर्दशरत्नानि तव पुरे प्राप्तानि सन्ति मया । ततो धनोऽसौ व्यवहारी अन्यव्यवहारितुल्यो मा गणितव्यो भवता । एवंविधो व्यवहारी बहुपुरेषु कुत्रापि न दृष्टो मया । राजा तस्य सार्थपस्य वर्यदुकूलाद्याभरणदानेन सन्मानं चकार । ततः सार्थपः पुनर्धनपार्श्वेऽभ्येत्य नानाप्रकारभक्तिपुरस्सरं श्रेणिकधनौ प्रणम्याह—अहं पुनः पुनः स्मरणीयश्चित्ते न विस्मार्यः, इति जल्पन् चचाल सार्थपः । यतः—"सत्प्रीतिवल्ली हृदयालवाले, निवेशिता शैशवतोऽपि यत्र । सा वर्धनीया सततप्रवृत्ति-पत्रादिसम्प्रेषणनीरपूरैः ॥ १ ॥ तव वर्त्मनि वर्ततां शिवं, पुनरस्तु त्वरितं

समागमः । अयि साधय साधयेप्सितं, स्मरणीया समये वयं वयम् ॥२॥" ततश्चतसृभ्यो दिग्भ्यो नवीनानि पात्राणि धनस्य तस्य गृहे नर्तितुमागच्छन्ति स्म याचका धनं याचितुं च । अयं श्रेष्ठी अभाग्यवान् मूर्ख इत्यादि ये ये जजल्पुरिभ्यास्ते ते अस्य धनसाधोर्वणिजोऽभूवन् पदयोस्तलेऽस्य लुठन्ति च । श्रेणिकेनात्मनो नाम्नि गोपाल इति नाम स्थापितम् । श्रेष्ठी धनधान्यादिपूर्णोऽजनि । सुनन्दानाथको देवगृहे जिनपूजादि सप्तक्षेत्रे धनव्ययं करोति स्म । यद्यत् क्रयाणकं धनो गृह्णाति तत्र तत्रानर्गलो लाभो भवति । अनेके घोटका गृहीता धनेन आवासः कैलाससोदरोऽङ्गीकृतः । घोटकशालायां घोटका बद्धास्तेषां रक्षणार्थं पाण्डवाः स्थापिताः । बहवः व्यवहारिणोऽपि तस्य किङ्करीभूय सेवां कुर्वन्ति । यस्य गृहे लक्ष्मीर्भवति तस्य सर्वे जनाः सेवां कुर्वन्ति । यतः—" एहि गच्छ पुरे तिष्ठ, वद मौनं समाचर । एवमाशाग्रहग्रस्तैः, क्रीडन्ति धनिनोऽर्थिभिः ॥ १ ॥" श्रेणिकस्य सुनन्दया सह प्रीतिरजनि बाढम् । सुनन्दा भर्तुर्मनसा चलति । क्रमाद्वर्षद्वयातिक्रमे सुनंन्दा गर्भं दधार । यथा यथा गर्भो वर्धते तथा तथा तस्या बुभुक्षा न लगति । कदाचित् कवलद्वयं कवलत्रयं जेमते न वा सा । यदुक्तं तया तद् द्वितीयदिवसे वमति । क्रमादतीव दुर्बलाऽभूत् सुनन्दा । चलन्त्याः सुनन्दाया मुखे श्वासो न माति । सोजकः पदयोर्लग्न-

स्तस्या जीवन्तीमृतायाः क्षणं न ज्ञायते । पुनः पुनः बभाणेति सा पानीयमानीयतां तृषा लग्नाऽस्ति । श्रेणिक एवंविधां प्रियामालोक्य अन्येद्युः श्वश्रूं प्रति प्राह—तव पुत्रीयं किं दुर्बला दृश्यते । कोऽपि दोहलोऽस्या जातोऽस्ति नवेति पृच्छ्यतां स्वपुत्री । यो दोहलो भवति अस्याः स पूर्यते नोचेन्मृतैवेयम् । ततः सुनन्दोपान्ते गत्वा माता जगाद । पुत्रि ! किं तवाङ्गं दुर्बलं दृश्यते ? तव कस्य विषये वाञ्छा विद्यते ? । सुनन्दा जगौ—दोहलोत्पत्तिस्वरूपं यदि कथ्यते तदा मनसि न माति कस्यापि, दुःशक्योऽस्ति दोहलः तेन मे मरणं, माता जगौ—पुत्रि ! मातुः कथ्यते । ततः सुनन्दावग्—अहमेवं जानामि कुञ्जरारूढा राजपथे दानं ददाना गच्छामि, राजा तदा सपरिवारोऽग्रे चलति, स्वहस्तेन जिनालये गत्वा वर्यपुष्पैः द्रव्यपूजां करोमि संस्तवनेन भावपूजां च, जानेऽहं राज्ञो वादित्राणि ममाग्रे वाद्यन्ते, ममाग्रे च पात्राणि नृत्यन्ति, जानेऽहं पञ्चपरमेष्ठिमन्त्रं स्मरामि, जानेऽहं मस्तके छत्रं धारयामि, जानेऽहं मनोऽभिमतं दानं ददामि । जानेऽहं सधार्मिकान् भोजयित्वा दुकूलादिभिः परिधापयामि, जानेऽहं देशमध्ये अमारिं प्रवर्तयामि, जानेऽहं शीलं पालयामि, जानेऽहं चैत्यपरिपाटीं कृत्वा गृहे आगच्छामि, जानेऽहं घृतादिशुद्धाहारं यतिभ्यो ददामि । एषा वार्ता मयोक्ता तवाग्रे अभयदानं विना मम जीवितं नास्ति, श्रुत्वेति जननी पुत्रीप्रोक्तं—

जामातुरग्रे जगाद । श्रेणिकः पत्नीमनोरथं श्रुत्वा हृष्टः । यस्या एवंविधो दोहलो जायते, तस्या गर्भे कोऽपि पुण्यवान् नरः । गर्भानुभावादेवंविधो दोहलो भवति । यतः—"भवन्ति भूरिभिर्भाग्यै—र्धर्मकर्ममनोरथाः । फलन्ति यत्पुनस्ते तु, तत् सुवर्णस्य सौरभम् ॥ १ ॥ प्रतिपन्नं यदभ्यस्तं, जीवैः कर्म शुभाशुभम् । तेनैवाभ्यासयोगेन, तदेवाभ्यस्यते पुनः ॥ २ ॥" ततः कुमारेणोक्तं, राज्ञोऽस्य या पुत्री जात्यन्धाऽभवत् । साऽधुना जीवन्त्यस्ति अथवा मृताऽस्ति ? । धनोऽवग्--अद्य यावत् जात्यन्धा विद्यते । वेन्नातटपुरस्वामी तस्या एव आज्ञां कारयति वल्लभत्वात् । बाल्येऽपि चारित्रं गृहीतुकामा प्रचण्डं तपः करोति । तस्याः प्रसृतिप्रमाणलोचने दृष्ट्वा लोका जानंत्येषा इति पश्यन्त्यस्ति, स्वभावेनापश्यन्त्यपि, सुलोचनेति प्रोच्यते । यस्तां राजपुत्रीमन्धां वदति । तस्य राजा शिक्षां ददाति । राज्ञोऽतीव वल्लभाऽस्ति । भूपपुत्रीमन्धां मत्वा श्रेणिकोऽवग्--तव पुत्र्या यो दुःशको दोहद उत्पन्नोऽस्ति, तस्य पूरणे उपायोऽस्ति । श्रेष्ठिनोक्तं कः उपायः ? श्रेणिकः प्राह—इदं रत्नं गृहीत्वा राजोपान्ते गत्वेदं कुरु । अनेन रत्नजलेन राज्ञः पुत्रीनेत्रे छण्टय, ततो दिव्ये चक्षुषी भविष्यतः। राजा यदा तुष्टो भवति तदा त्वत्पुत्रीदोहदपूरणं मार्गय । ततो धनो रत्नमादाय यावन्नृपोपान्ते गतस्तावद्राजा समुत्तस्थौ । मिथः प्रीतिवृद्धिं चक्रतुः श्रेष्ठी रहसि जगौ । तवाग्रे

कथितुं न शक्यते, तथापि किमप्यनुच्यमानमपि मयोच्यते । भवत्पुत्रीं अत्रानय त्वम् । तत्रानीता नृपेण । रत्नाम्बुछटया सुलोचनानेत्रे प्रक्षालिते, ततः सुलोचना दिनेऽपि ताराः पश्यन्त्यभूत् । ततो राजा जगौ—अर्धराज्यं गृहाण । धनोऽवक् मम राज्येन किमपि कार्यं नास्ति, परं मम पुत्र्या यो दोहदो जातोऽस्ति तं पूरय । ततो राज्ञा स्वपुत्रीयुता सुनन्दा कुञ्जरारूढा कृता । राजाग्रे चचाल, नृत्यादि कारयन् छत्रचामरवादित्रादिपुरस्सरं नरपतिर्भूपमार्गे चचाल । सर्वप्रासादेषु जिनान् पूजयामास सुनन्दा । ततः स्वगृहेऽभ्येत्य यतीनाकारयित्वा प्राशुकान्नपानैः प्रतिलाभयामास । ततोऽखिलदेशेषु अमारिः कारिता । ततो भूपधनयोः सुलोचनासुनन्दयोर्बाढं मैत्री जाता । गृहे गृहे घृतलभनादि कृतम्, हट्टश्रेणिमध्ये तलिकातोरणानि च कारयामास भूपः । अन्येद्युः श्रेणिकेनोक्तं प्रियां प्रति यद्यात्मनः पुत्रो भविष्यति तस्याभयकुमारेति नाम दास्यते, यतोऽमारिप्रवर्तनादिदोहलोत्पत्तेः । इतः स सार्थपः पृथिवीपीठे भ्रमन्नुपार्जितभूरिधनो राजगृहे नगरे जगाम । प्रसेनजितराजा नवनवातिं पुत्रान् परस्परं विरोधं कुर्वतो वीक्ष्य श्रेणिकं कुमारं तादृशं विनीतं स्मरन् पुनःपुनरेवं तस्थौ प्रियाग्रे एवं जजल्प च । मयाऽपमानितो राज्यं मुक्त्वा श्रेणिकः कुमारो दूरं गतः, स कथं भविता । मम

सुनन्दायाः दोहदपूर्त्तिः

तेन पुत्रेण विना रात्रिन्दिवं निद्रा नायाति स निःश्वासो मुखे न माति च । यदा तस्य सूनोर्मम वियोगोऽभूत्, ततः प्रभृति सुखं गतम् । मया अविमृश्य कार्यं कृतम् । न ज्ञायते स मम कुमारो जीवन् मृतो वाऽथवा क्वापि श्वापदैर्भक्षितः । कस्यापि गृहेऽथवा दासीभूय स्थितोऽस्ति । जलदे वर्षति गृहे गृहे भिक्षां मार्गमाणोऽस्ति । बुभुक्षितस्तृपितो दुःखीजातो भावी । वर्षाकाले स्थानकाभावात् पशूनामिव मस्तकोपरि सर्वं जलं पतिष्यति । शीतकाले भृशं शीतेन ताड्यमानोऽतीव दुःखितो भावी । श्रेणिकः उष्णकाले तृषातापादि कथं सहिष्यति । एवं स्मारं स्मारं श्रेणिकं भूपो दुःखितोऽभूत् । कदाचिदेवं ध्यायतिस्म राजा । कस्य पुत्राः केषां पिता कस्य माता कस्य सुहृद् कस्य प्रिया इत्यादि सर्वं स्वप्नजालतुल्यं दृश्यते । मिथोऽनन्तेषु भवेषु जीवाः सर्वे सर्वसम्बन्धिनोऽभूवन् भवन्ति भविष्यन्ति च । एवं स्वं चित्तं स्थिरीकृत्य यावद् राजा तिष्ठति स्म, तावत् सार्थपोऽभ्येत्य जगौ—देव ! युष्माकं पुत्राणां शतं श्रुतं। अधुना नवनवतिः कथं दृश्यते ? राज्ञोक्तं श्रेणिकगमनस्वरूपं ततोऽवग् सार्थपः भवत्पुत्रतुल्यो वेन्नातटपुरे धनश्रेष्ठिगृहे महाबुद्धिमान् दृष्टः । तत्र यदा मयोक्तं—भवान् राजगृहे दृष्टः, तदा तेन 'राजगृहो वैरिणामपि मा भवतु' तस्य मुखादित्यादि श्रुत्वा प्रसेनजितभूपस्य हृदि पुनः शल्यं प्रकटीजातम् । प्रसेनजितो जगौ च । अहो तेन पुत्रेणैकशोऽपि आत्मनः

स्थितिर्न ज्ञापिता । तथास्य स्थितिः साम्प्रतमेतेषां पुत्राणामग्रे न प्रोच्यते । इति राजा मानसं गूढं कृत्वा सार्थपाग्रे जगाद--मुधैवं कथं जल्प्यते त्वया । स पुत्रोऽलसो मूर्खोऽधम इतो निस्सरणादनु रुलित्वा मृतो भावी । य एवं स्वेच्छया गृहान्निसरति । स म्रियते एव । रङ्क इव गृहे गृहे भ्रमति च । कर्म प्रकटीभूय किमपि न दर्शयति । किन्तु कामपि तां बुद्धिं ददाति यया रंक इव रुलति लोकः । यतः--"विरंचिर्न नरं हन्ति, प्रादुर्भूय चपेटया । किन्तु तां ददते बुद्धिं, यया रुलति रङ्कवत् ॥ १ ॥ स्थापनिकामन्यस्य योऽपलपति विश्वस्थं नरं च यो वञ्चयति तयोस्तृतीयस्त्वं यदि एवं कूटं जल्पसि । ततो नायको रहसि समेत्यावग् । स्थापनिकापलापविश्वस्थघातन-कन्याविक्रय-कूटकक्रयविक्रय--स्त्रीहत्या-गोहत्या-बालहत्या-यतिहत्यादि-पापानि मम लगन्ति, यदि स श्रेणिको न भवति । नायकोऽवग्--मया वेन्नातटपुरे धनहट्टे राजहंस इव कुमार उपविष्टो दृष्टः । तस्य श्रेष्ठी देवशेषामिवाज्ञां सर्वकार्येषु मन्यते । तस्य कुमारस्य प्रसादवचनेन अहं धनश्रेष्टिहट्टात्तेजनतूरिकामगृह्णम् । तया मम-गृहे भूरिशः काञ्चनकोटयोऽभूवन् । एवमेव जाने धनस्य पुत्री भवत्पुत्रेण परिणीताऽस्ति । नायकवचनेन राजा हृष्टो नन्दनमानेतुमुत्सुकोऽभूत् । ततो राज्ञोक्तं । यदि तत्रास्ति तदा तत्रात्मीयः कोऽपि विचक्षणः पुरुषः

स्वनिर्मितसमस्यायुक्तः प्रेष्यते । ततो यदि मदीयः पुत्रो भविष्यति तदा मत्कृतां समस्यां श्रुत्वा त्वरितमागमिष्यति । ततः आत्मीयो विज्ञः पुरुषः प्रसेनजितराज्ञा प्रेषितः सन् वेन्नातटपुरे धनश्रेष्ठिगृहे गत्वा समस्यामेवंविधां गोपाल-कुमारहस्ते प्रसेनजितप्रेषितः पुरुषो ददौ । गोपालस्तां समस्यामेवं वाचयामास । येन कुमारेण स्वबुद्ध्या पक्वान्न-भृतपूर्णकरण्डकेभ्यो मुखकृतचिन्हेभ्योऽम्बुघटेभ्यश्च स्वसोदरा भोजिताः । येन सारमेयान् खरण्टितक्षीरभाजनानि क्षेपं क्षेपं कुकुरान् वाहयित्वा स्वयम्बुभुजे । इत्यादि यस्यावदातः स कथं वेन्नातटपुरे जीवन् धनेभ्यपुत्रीं परिणीय तिष्ठति । यः आत्मीयमातापितरौ सहोदरान् मुक्त्वा दूरदेशे गत्वाऽन्यस्य गृहे गृहजामातृकीभूय तिष्ठति, स जनः कथं जीवंस्तिष्ठति । यस्य मातापितरावधुना दुःखिनौ बभूवतुः, स कथं वराक इव दूरे तिष्ठति-कुकर कहतां कोपि चडिओ, घरजमाई थाई । हईया हईयालीको कहइ; कवण भणंउ चित्तमाहि ॥ १ ॥ एवंविधां समस्यां वाचयित्वा तस्या अर्थं विज्ञाय पुनः पुनश्चक्षुःक्षरज्जलबिन्दुको गोपालः स्वमनसि दध्याविति । मारण ताडण जे करइं, येवी केवी लहंति अह्मसरीखा बेटडा, ते बोले न रहंति ॥ १ ॥ अमीयरसायणआगली मायतायगुरु सिस । जे नवि मन्नइ बप्पडा, ते रुलीया सविदीस ॥ २ ॥ एवं चिन्तयित्वा स एव

भृत्यो लेखसहितः प्रेषितः । प्रसेनजितभूपपार्श्वे श्रेणिकेन । ततो राजा तं लेखं वाचयामासेति । मम ऊपहरा बोलडा, लहसिइं रायकुआरा । हुं तुह्मि भणिओ वाणिओ, नहि वयण फलाऽऽसाइं ॥ १ ॥ जीणि अवसरि जोईइ, स्वामी तणउ पसाउ । तीणि नीचउतारणओ, किम सेवीजइ राउ ॥ २ ॥ घरजमाई घरसुणह ते कुण हुंस धरंति । पण अपमान्यां छोरडां मरइं कि दुरि फिरंति ॥ ३ ॥ एवं लेखं वाचयित्वार्थं ज्ञात्वा च पुनरपि प्रसेनजितो लेखं श्रेणिकपार्श्वे प्रेषयामास । छन्नं श्रेणिकेन रहसि तातलेखो वाचित इति । जे मइ सभामांहि बोलिउं, ते अपमान किं मानसो । जि संभारि विचारकरि, तो आरोगो धान ॥ १ ॥ मोर भणइ अह्म पीछडां, मइं मेल्यीयां वणमाहिं । हुं अ जिअगासउ, तीह विण ते सिरिराय वहेइ ॥२॥ यद्यत्तातवचनं तत्तत्तस्यामृतमिव परिणमति । श्रेणिकेन प्रेषितं पत्रं राजा वाचयामासेति । जातइ एकजि पिछडइ, मोर दोहिल्लउ काईं । ते नवाणू पीछडा भरी पूरी रहिआइं ॥ १ ॥ प्रसेनजितेन प्रेषितं लेखं पुत्रो वाचयामासेति । बेडी केरां पाटीयां, बांधाबहु अ गुणेहिं । पइट्ठाणुं छांडइ, रहण तु तारिज्जइ केण ॥ १ ॥ कल्पतरू केरुं पानडुं, ऊडिउ वायवसेण । तु तिहा सीली छांहडी, जे सीअला ते सील ॥ २ ॥ अत्र जीवन्नहं यावदस्मि तावत्तत्र भवता । प्रेषितव्यः पुनर्लेखो ममोपान्ते निरन्तरम् ॥

॥ ३ ॥ ततः श्रेणिकेन नवनवतिभ्रातृनिमित्तं आभरणादीनि कारितानि । मातृभगिनीकृते कनकरत्नादीनां शृङ्गारः कारितश्च । पितृबान्धवार्थं जात्यतुरङ्गमान् अङ्गीचकार । इत्यादीनि वर्याणि प्राभृतानि नामाङ्कितानि रहसि श्रेणिकः पितृपार्श्वे प्रेषयामास । पित्रा च हर्षितेन भम्भानाम भेरी सूनवे तस्मै प्रेषिता ज्ञापितं चेति हि तं तथा हि—

या पल्ली लङ्घीता पूर्वं, या भिल्ली सुंदरी त्यक्ता, त्वया पुत्र वनान्तरे । तद्द्वयं विहित चक्रे, कुलोद्योतश्चसर्वतः ॥ १ ॥ या पल्ली लङ्घीता पूर्वं, गच्छताऽतः पुरात्सुत ! । तस्यां ये सन्ति भिल्लास्ते, रुष्टाः सन्ति तवोपरि ॥ २ ॥ इति तातवचो निशम्य श्रेणिको रहसि शनैः शनैः तुरङ्गमान् द्रविणं सेवकान् पुराद् बहिः कर्षयामास । ततश्च प्रियाग्रे प्राह--अहं स्वपितुः पार्श्वे यास्यामि । ततः सुनन्दा जगौ--अहं भवता सार्धमागमिष्यामि त्वां विना क्षणं स्थातुं न शक्नोमि । श्रेणिकोऽवग्--त्वयाऽधुना सार्धमागन्तुं न वक्तव्यं मनागपि । पुनः सुनन्दा प्राहावयोर्नन्दनो भविष्यति तस्य किं नाम दास्यते ? श्रेणिकोऽवग्-यादृशस्तव दोहदोऽभूत्तादृशनामाऽभयेति दातव्यं त्वया । सुनन्दाऽवक्-यदा पुत्रोऽष्टनववर्षीयो भूत्वा पृच्छति, मत्पिता कुत्राऽस्ति तदा किं मया तस्य कथ्यते ? ततः कुमारः खटीं लात्वा हस्तेन चित्रशालाभारपट्टे अक्षराण्येवं लिलेख राजगृहि पालिगाम गोवालि धवले टोडे घर कहीइ । ततोऽन्यदा रहोवृत्त्या श्रेणिको बहिर्निर्गत्य पूर्वप्रेषित-

सैन्यमध्ये जगाम । ततः ससैन्यश्चलन् कुमारो भिल्लराजधानीसमीपे भम्भां वादयामास तथा । यथा तस्या रवं श्रुत्वा भिल्लपतिः संनह्य सर्वबलेन दधावे । यावद्भिल्लपतिना शिङ्गिका वादिता । तावल्लक्षशो भिल्लाः किलकिलारवं विकुर्वाणाः स्वभल्लीरुच्छालयन्तः क्रोधोत्पाटितभ्रकुटयो वयमरीन् हन्मो हन्म इति जल्पन्तो मीलिताः । श्रेणिकेन शरीररक्षणरत्नस्मरणेन युद्धं कर्तुमारब्धम् । भिल्लाः शरनाराचकुन्ताद्यायुधानि मुमुचुः, परमेकस्य श्रेणिकानुगस्य एकमपि शस्त्रं न लगति । ततो भिल्ला बाणादीन्यायुधानि क्षेपं क्षेपं भग्नाः सन्तः श्रेणिकाय नमस्कारं चक्रुः । नश्यन् भिल्लपतिर्बद्धः, श्रेणिकेन रणाङ्गणे । गृहीतं विषमं स्थानं, तदीयं च धनान्वितम् ॥ १ ॥ यतः—"न श्रीः कुलक्रमायाता, शासने लिखिताऽपि वा । खड्गेनाक्रम्य भुञ्जीत, वीरभोज्या वसुन्धरा ॥ २ ॥ नाभिषेको न संस्कारः, सिंहस्य क्रियते मृगैः । विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ ३ ॥ श्रेणिको जगौ—रे भिल्लपते अग्रे भव राजगृहपुरवर्त्म दर्शय 'यद्घट्टं' समेति तदुत्तारय नोचेन्मद्धस्तेन मृत एव । ततो भिल्लेन सेवकीभूय राजगृहवर्त्म दर्शितम् । क्रमेण सर्वान् घट्टानुल्लंध्य सपादलक्षभिल्लपरिवारयुतो भूरितुरङ्गमादियुक्तश्च श्रेणिको भक्त्या पितुः मातुश्च पादयोरपतत् । श्रेणिकसमागमं श्रुत्वा सर्वे बान्धवास्तत्रैत्य ज्येष्ठभ्रातरं विनयेन नेमुः । ततः प्रसेन-

श्रीश्रेणिकस्य राजगृहीगमनं राज्यप्राप्तिश्च

तपोऽङ्गीचक्रे । स भिल्लो लज्जितस्तापसो भूत्वा कोट्यां
जितराज्ञा सर्वपुत्रयुतेन श्रेणिकाय राज्यं दत्तं स्वयं च तपोऽङ्गीचक्रे । स भिल्लो लज्जितस्तापसो भूत्वा कोट्यां
प्रविश्योत्तमार्थमङ्गीचकार । ततस्तस्य पुत्रमाकार्य स्वसेवकं कृत्वा च तस्यैव तद्देशं समर्पयामास श्रेणिकः । सर्वान्
सहोदरानाकार्य यैर्वैरिभिः पितुराज्ञा नाङ्गीकृता तानरीन् स्वपदोस्तले लोठयामास श्रेणिकः । अन्येद्युः श्रेणिकेन
परीक्ष्य परीक्ष्यैकोना पञ्चशती मन्त्रिणां स्थापिता । एकमतीव वर्यं मन्त्रिणं कर्तुकामो दध्यौ श्रेणिकः । वर्यतमं मन्त्रिणं
विना राज्यसूत्रं न तिष्ठति । ये ये मन्त्रिणः कृताः सन्ति, ते ते सर्वे गर्वोद्धताः ईर्ष्यालवः । यावद्वर्यतमो निरहंकारी
विनयी धर्मिष्ठो विशुद्धमतिमान् मन्त्री मम न भवति तावदहं प्रधान एव न राजा । यतो विशिष्टं मन्त्रिणं विना
राज्यं न स्थिरतामेति । यतः—" कुलशीलगुणोपेतं, सत्यधर्मपरायणम् । रूपिणं सुप्रसन्नं च, राजाऽध्यक्षं तु का-
रयेत ॥ १ ॥ शीलवृद्धिकरो धीरः, सर्वरत्नपरीक्षकः । शुचिरव्यभिचारी च, भाण्डाध्यक्षोऽभिधीयते ॥ २ ॥
इङ्गीताकारतत्त्वज्ञः, प्रियवाक् प्रियदर्शनः । सकृदुक्तगृही दक्षो, मन्त्रिनाथः प्रशस्यते ॥३॥" एवं हृदये विचार्य श्रेणिकः
शुष्ककूपे आत्मीयां मुद्रां क्षिप्त्वा प्राह—यः कश्चिन्नरः अस्य कूपस्य कण्ठोपविष्टो निजबुद्ध्या इमां मुद्रां परिदधाति तस्याहं
राज्यार्धदानपूर्वं मन्त्रिमुख्यमुद्रां दास्यामि । एवंविधां बुद्धिं कृत्वा कूपसमीपे निजसेवकान् मुक्त्वा प्राह श्रेणिकः ।

श्रीश्रेणिकस्य मुख्यमन्त्रिगवेषण श्रीअभय कुमार जन्मम्

यः कूपकण्ठस्थो मुद्रां परिदधाति स कथनीयो मम, अपरो यो नरो मन्त्री वा परिधत्ते तदपि ममाग्रे कथनीयम्। सर्वे मन्त्रिणो दर्शं दर्शं मुद्रां कूपकण्ठस्थाः खिन्ना जजल्पुश्चेति। कोऽपि कौहतिको मण्डितोऽस्ति राज्ञा आत्मनामपाये पातयितुम्। ततोऽन्येऽपि पौरा लोका आगताश्च, तत्रैत्य मुद्रां कर्षयितुमुपक्रमं चक्रुः तेऽपि खिन्नास्तदा। इतः सुनन्दा पुत्रमसूत। तस्याभयकुमार इति नाम ददौ। वर्द्धितः क्रमाल्लेखशालायां मुक्तः, क्रमात् पण्डितोपान्ते पठन् शास्त्राण्यन्येद्युरपरैर्लेखशालकैः कलहं कुर्वद्भिरुक्तम्, निःपितृकोऽयम, ततोऽभयः खिन्नो गेहेऽभ्येत्य पितृस्वरूपं पप्रच्छ मातरम्। मात्रा प्रोक्तं न ज्ञायते अत्र पूर्वं परिणीय मद्गर्भे त्वामुत्पाद्याकस्माद्विदेशं गतः। खिन्नोऽभयोऽवग्—मम पित्रा गच्छता किमपि जल्पितं किमपि दर्शितम् अक्षराणि वा दत्तानि तुभ्यम्? माता प्राह—तेनातो गच्छता अस्मिंश्च चित्रशालाभारपट्टके अक्षराणि लिखितानि सन्ति। ततो भारपट्टस्थानि अक्षराणि वाचयित्वा कुमारः पितृस्वरूपं जज्ञे। कुमारो हृष्टो मातृसमीपमभ्येत्यावग् च। ज्ञातं मया पितृस्वरूपम्, यत्र मम पिताऽस्ति तत्र गमिष्यामि। मात्रा प्रोक्तमहं सार्थे समेष्यामि। ततो वृद्धपितरं भ्रातरमुत्कलाप्य राजगृहं प्रति चचाल कुमारः। कियन्तीं भूमिमतिक्रम्य राजगृहे पुरोद्यानेऽभ्येत्य मातरं तत्र मुक्त्वा कूपकण्ठे समागात्। लोकैरुक्तम्—यो मुद्रामिमां कूपोपकण्ठस्थः परिदधाति, तस्य सर्वमन्त्रि-

मुख्यपदवीं ददाति राजा। कुमारेणोक्तम्--यस्य शक्तिः स्यात् स मन्त्रिमुद्रां परिदधाति। पश्चादेवं न वक्तव्यम्। अहमेव पर्यदधाम्। सर्वैरप्युक्तम्--त्वमेव परिधेहि। ततः कुमारेणादौ आर्द्रगोमयमानीय मुद्रिकाया उपरि क्षिप्तम्। ततस्तस्योपरि अग्निर्बहुः क्षिप्तः। घटीचतुष्टयेन तदेव गोमयं शुष्कम्, ततश्चासन्नकूपान्नीकाप्रयोगात् पानीयं कर्षयित्वा तमेव-कूपमाकण्ठं पानीयेन पूर्णीचकार कुमारः। तदा कूपे आकण्ठेऽम्बुना पूरिते मुद्राप्युपरि समायाता। ततः कूपमध्यान्मुद्रिकां गृहीत्वाऽङ्गुल्यां पर्यदधात् कुमारः। इयं वार्ता राज्ञा श्रुता तत्क्षणं हृष्टो राजा तत्रागत्य तं कुमारं तादृशाकारं वीक्ष्य मुमुदे। राज्ञा पृष्टं च कुतस्त्वमागतः? तेनोक्तमहं वेन्नातटनगरात्। राज्ञोक्तं त्वं कस्य पुत्रः? तेनोक्तमहं प्रजापालस्य पुत्रः। राज्ञोक्तं तत्र धनश्रेष्ठिनः सुतायाः सुनन्दायाः स्वरूपं ज्ञातम्? तेनोक्तं तया पुत्रो जनितोऽभयकुमारेति नाम दत्तं मात्रा। स कियद्वर्षप्रमाणोऽस्ति? स प्राह—यति वर्षाणि ममाभवन् तति तस्यापि रूपेण मत्तुल्योऽस्ति। राज्ञोक्तं भवतः एवंविधः परिचयः कथं जातः? कुमारोऽवग्—मम तेन क्रमादतीव मैत्री जाता, क्षणमपि तेन विना स्थातुं न शक्नोमि। तत्र तं मुक्त्वाऽत्र कथमायातः? कुमारोऽवक्—अहं तेन सममत्रागतोऽस्मि। कुत्रास्ति स इत्युक्ते भूपेन कुमारोऽवक् स च तन्माताऽधुनात्रोद्याने आगताऽस्ति। ततस्तमग्रे कृत्वा राजा उद्यानं प्रति

चचाल यदा तदा लोका जगुः। राजाऽनेन लघुनाऽपि वाहितः। तत्र वने राजा गतः, प्रियाया मीलितः। प्रोक्तं च राज्ञा यो गर्भोऽभूत् तदा स क्वास्ति ? तयोक्तमयमेव पुत्रः। राज्ञोक्तम्--पुत्र एवं कूटं किं जल्पितं ? अभयकुमारः प्राह—अहं तु मातृहृदये सदा वसामि तेनैवं प्रोक्तम्। ततो राज्ञा कुमार उत्सङ्गे धृतः, आनायितः पट्टहस्ती। भार्यापुत्रौ तस्योपरि कृत्वा महामहोत्सवपुरस्सरं स्वावासे आनिनाय। ततः पुत्रस्य तस्य सर्वबुद्धिनिधानस्य मन्त्रिमुख्यपदवी दत्ता राज्ञा। ततो राजा अभयकुमारं बुद्धिनिधानमग्रे कृत्वा भूरिशो देशान् साधयामास। अथैकदा श्रीवीरसंसदि भूरिदेवदेवीसाधुसाध्वीसङ्कुलायां महर्षिमेकं शान्तं दान्तं कृशगात्रं वीक्ष्य प्राहेत्यभयः। भगवन् कोऽयं यतिरेष साक्षात् दृश्यते ? वीरः प्राह—प्रतीच्यां दिशि वीतभयाख्यपत्तनमस्ति स्वर्गपुरसोदरम्। तस्मिन् उदायनो राजा प्रजां प्रशशास न्यायाध्वना। अन्यदाऽहं तत्र समवासार्षम्। देवैः समवसरणं कृतम्। तस्मिन् समवसरणे वीतभयपत्तनस्वामी उदायनो राजा समागात् धर्मं श्रोतुम्। धर्मः सनातनो येषां दर्शनप्रतिभूरभूत्। परित्यजति च नैव, तेषां मन्दिरमिन्दिरा ॥ १ ॥ धर्मस्य विश्वाधिपतेः प्रसादात्, पुमान् प्रपेदे सुखमुत्तरोत्तरम्। अहो कृतघ्नः स तु मोहमोहितो, धर्मस्य नामापि कदापि नास्मरत् ॥२॥ धर्मः श्रुतो वा दृष्टो वा, कृतो वा

श्रीअभय-
कुमारस्य
पित्रासह
मिलनं
मन्त्रिपद-
प्राप्तिश्च

कारितोऽपि वा । अनुमोदितो वा राजेन्द्र!, पुनात्यासप्तमं कुलम् ॥३॥ बुधैर्विधीयतामेको, धर्मः परमबान्धवः । ददिरे
मदिरावत्यो, येन वाञ्छितसिद्धयः ॥ ४ ॥ दुःखं स्त्रीकुक्षिमध्ये प्रथममिह भवेत् गर्भवासे नराणां, बालत्वे चापि दुःखं
मलमलिनवपुःस्त्रीपयःपानमिश्रम् । तारुण्ये चापि दुःखं भवति विरहजं वृद्धभावोऽप्यसारः, संसारे रे मनुष्या वदत यदि सुखं
स्वल्पमप्यस्ति किञ्चित् ॥ ५ ॥ संझरागजलबुब्बुउवमे, जीविएवि जलबिंदुचंचले । जुव्वणे 'य नइवेगसंनिभे, पाव जीव !
किमयं न बुज्झसि ॥ ६ ॥ श्रुत्वेत्यादि वचो धर्म-नायकस्यं मुखात् पुरा । वैराग्यवासितस्वान्तोऽभवदुदायिनो नृपः ॥ ७ ॥
प्रभावतीप्रियाकुक्षिभव ( मभीचिनामकम् । राज्ये मग्नो हि दुर्गतिं, माऽगात् दुःखप्रदामिति ॥८॥ प्रियं पुत्रं स्वकं मुक्त्वा ।
जाम्याः ) केश्याख्यनन्दनम् । राज्ये निवेशयामासोदायनो धर्मतत्परः ॥ ९ ॥ ततोऽस्मात्कारणादयमुदायनो राजा दीक्षां
जग्राह । अस्मिन्नेव भवे कर्मक्षयं कृत्वा मोक्षं गमिष्यत्येषः । ततः प्राञ्जलिरभयः प्राह । भगवन् कोऽन्यो राजर्षिर्मुक्तिं गतो
भविष्यति । प्रभुराचष्टायमेवान्त्यो राजर्षिः केवली उदायिनः । ततोऽभयः प्रभुं नत्वा गृहे गत्वैवं श्रेणिकपार्श्वे प्राह । मम
दीक्षाग्रहणकृते प्रसन्नीभव । यथाऽहं सर्वकर्मक्षयान्मुक्तिं गमिष्यामि । ततः श्रेणिकोऽवक्-दीक्षाग्रहणविषये ममावसरोऽस्ति,
भवतो राज्यकरणेऽवसरो विद्यते । एवं कथं जल्प्यते त्वया । त्वमेव मम राज्यवर्द्धने समर्थोऽसि । अभयकुमारः प्राह ।

त्वत्पुत्रो भूत्वा यदि व्रतमार्गं न साधयिष्यामि तदाऽहं दुर्भाग्योऽभूवम् । त्वं कृपां कृत्वा दीक्षां दापय । अथ भूपतिः प्राह—यदाऽहं क्रोधेन त्वां प्रत्येवं जल्पामि दूरे व्रज मुखं मा दर्शय, तदा त्वं वत्स ! व्रतमाददीथाः । अभयोऽवक्—तात त्वदीयं वचः प्रमाणमेव । ततो जनकं नत्वा स्थानकेऽभ्येत्यैवमभयो दध्यौ । वज्रेण वज्रं तु यथा तथाऽस्ति, वेध्या स्वबुद्ध्या नृपबुद्धिरेषा । ध्यात्वेति धीमानभयोऽथ भूपं निषेवते प्रत्यहं मुग्धभक्त्या ॥ १ ॥ अथैकदाऽतीव शीते स्फीते पतति लोका अतीव जाड्यपीडिता बभूवुः । यथा—निशासु सन्ध्यासु दिनेषु यस्मिन्, पुरःपुरःपृष्ठिनिवेशितेन । रोरैर्नरैर्जानुकृशानुभानु—त्रयेण शीतं क्रमतो विनीतम् ॥ २ ॥ गाढं वल्लभतामवाप दहनो जाड्यं जने जल्पति, मान्यत्वं बत बालकस्य शिरसा दोषाः प्रवृद्धिं गताः ॥ दृश्यन्तेऽपि च पञ्चषाः सुमनसोऽवन्यां सदा मोदिनः, इत्थं सम्प्रति शीतकालतुलनामालम्बतेऽसौ कलिः ॥३॥ इतः श्रीवीरजिनो राजगृहपुरासन्नवने समवासार्षीत् । श्रेणिकस्तत्र गत्वा परमेश्वरं नत्वा धर्मं श्रुत्वा चिल्लणादेवीयुतः पश्चाद्वले । वर्त्मनि नद्युपकण्ठे साधुमेकं कायोत्सर्गस्थितं शान्तं दान्तं नत्वाऽपराह्णे स्वगृहमाजगाम । राजा जिनपूजां कृत्वा भोजनं चकार । रात्रौ श्रेणिकः सुप्तः, चिल्लणा राज्ञी जागरिता तं यतीश्वरं स्मृत्वा प्राह । 'अहो एवंविधे शीते पतति जीवप्राणान्तकरेऽधुना स कथं भावी' इति प्रियावचः श्रुत्वा

श्रेणिकोऽकस्माज्जागरितः श्रुत्वेदं दध्यौ इयं मे प्रिया व्यभिचारिणी विद्यते अस्या मत्तोऽप्यपरः कोऽपि पुरुषो वल्लभः विद्यते विचारोऽत्र न कार्यः ततो नूनं दुःशीला एवं ध्यायति राज्ञि सूर्य उदियाय । प्रातराहूयाभयं प्रति पृथिवीशो जगौ । इदं मदीयमंतःपुरं दुराचारं विद्यते, तेन प्रज्ज्वाल्यतां द्रुतमिदमन्तःपुरं त्वया विलम्बो न कार्यः । ततोऽभयो दध्यौ । राजाभिप्रायो न ज्ञायते सम्यग् । किमर्थं राजैवं जल्पतीति विमृश्याभयः प्राह–प्रमाणं तात ! ते वचः । ततः श्रेणिकः प्रातर्जिनपार्श्वे जगाम श्रुत्वा धर्मं वीरं पप्रच्छ भगवन्! मदीयाः पत्न्यः सर्वाः सत्यो न वा? भगवन्नाह– चिल्लणाद्याः सर्वाः सत्य एव । श्रुत्वेति प्रभुपार्श्वे त्वरितं पश्चाद्वले श्रेणिकः । इतोऽभयो दध्यौ मम तातेन यदादिष्टं तत् केनापि कारणेन भविष्यति, सहसा कृतं कार्यं विषादाय भवतीति विमृश्य कियन्ति गृहाणि उद्वसानि कृत्वा ज्वालितानि अभयकुमारेण । ततः समवसरणसंमुखं निस्ससाराभयः । वर्त्मनि श्रेणिकोऽभयस्य मीलितः । जगाद किं कृतं त्वया? अभयोऽवक् । त्वदुक्तं कृतं मया । श्रेणिको जगाद–गच्छ परो मद्दृशोः, मुखं मा दर्शय । एवं कोऽपि अविमृश्य कार्यं करोति । तातवचः प्रमाणमिति प्रोक्त्वाऽग्रतो गत्वा–वीरपार्श्वे दीक्षां जग्राह । इतः श्रेणिको गृहेऽभ्येत्य उद्वसकुटिराणि ज्वालितानि दृष्ट्वा दध्यौ । अहं वाहितस्तेन छलेन दीक्षा गृहीता भाविनी अभयेन । ततो मुष्टिं बद्ध्वा यावत्समवसरणे याति

श्रेणिकः तावदभयं गृहीतव्रतं दृष्ट्वा प्राह श्रेणिकः । अहं वाहितस्त्वया इति प्रोच्य पादौ प्रणिपत्य क्षमयित्वा श्रेणिकः पश्चाद् गृहे जगाम । ततः श्रीवीरसमीपे बहु तपस्तप्त्वा कर्माणि छित्त्वा प्रापानुत्तरां गतिम् ॥

इति श्रीअभयकुमारकथा पारिणामिकीबुद्धिविषये ॥

---

कर्मान्तरायं नो कुर्यात् पर्यालोच्यायतौ हितम् । ग्रासमात्रमपि प्रायो, यथा न प्राप ढण्ढणः ॥ १ ॥

द्वारिकायां मुकुन्दस्य, ढण्ढणागेहिनीभवः । ढण्ढणाह्वः कुमारोऽभूत, लसल्लक्षणरूपभृत् ॥२॥ अन्येद्युर्ढण्ढणो नेमिनाथपार्श्वे समागतः । धर्मं श्रीजिननाथोक्तं, शुश्रावेति सुखप्रदम् ॥३॥ कुले जन्मापरोगत्वं, सौभाग्यं सौख्यमद्भुतम् । लक्ष्मीरायुर्यशो विद्या, रम्या रामा तुरङ्गमाः ॥४॥ मातङ्गा जनलक्षैश्च, परिचर्यायुतास्तथा । चक्रिशक्रेश्वरत्वं च, धर्मादेव हि देहिनाम् ॥५॥ तत्रापि यो विशुद्धात्मा, संयमं शुद्धमात्मना । पालयति स्फुटं स स्या–न्नरः कल्याणशर्मभाग् ॥६॥ यतः "दो चेव जिणवरेहिं, जाइजरामरणविप्पमुक्केहिं । लोगंमि पहा भणिया, सुसमण सुसावओ वावि ॥ ७ ॥" प्रभोः पार्श्वे तदा प्राप्त–वैराग्यो ढण्ढणः स्फुटम् । जग्राह संयमं भावा–त्संसाराम्भोधितारकम् ॥ ८ ॥ लप्स्येऽहं यदा

भिक्षा—मात्मलब्धैव कर्हिचित् । करिष्यामि तदा नाथ ! पारणं ढण्ढणो जगौ ॥ १ ॥ इति कृताभिग्रहो ढण्ढण-
स्तस्यां पुर्य्यां भिक्षार्थं भ्रमन्नपि ग्रासमात्रमपि न प्राप । ततोऽन्यदा प्रभुपार्श्वे ढण्ढणेनोक्तं, भगवन् कथं न मे
शुद्धाभिक्षाप्राप्तिर्भवति । नेमिनाथोऽवग्—पुरा मगधदेशे धान्यपूरकग्रामे परासराह्वः कुलपुत्रकोऽभूत् राजकृषि-
चिन्तकश्च, क्षेत्रेषु खेटनं कारयन् भक्ते समागते पञ्चशतहलसक्तवृषभान् हालकांश्च वृषभछोटनवेलायां जाताया-
मपि नामुञ्चत् । वृषभहालिकामुञ्चनार्जितनिकाचितान्तरायकर्मा मृत्वा, परासरो भवं भ्रान्त्वा क्रमादिह कृष्ण-
पुत्रो ढण्ढणनामाऽभवस्त्वम् । इति प्रभुवचो निशम्य तदैव कर्म्मनिर्मूलयितुं यतते ढण्ढणः । कदाचित् भिक्षायां
लब्धमोदकः प्रभोः पार्श्वे पप्रच्छ मम प्राग्भवकर्म क्षीणं न वेति ? भगवानभिदधे । 'कन्हस्स लद्धी नहु
ढण्ढणस्स ।' ततः कृष्णलब्धिं श्रुत्वा मोदकान् परिष्ठापयितुमिच्छुरिष्टिकापाके गत्वा मोदकांश्चूर्णयन् शुक्लध्यानात्
केवलज्ञानमाससाद ।

॥ इति ढण्ढणकुमारकथा ॥

बलेन कार्यमाणोऽपि, तपःकर्म पुमान् स्फुटम् । लभते स्वर्गसौख्यानि, द्रुतं श्रीयकवत्स्फुटम् ॥ १ ॥

पाटलीपुरे अनेकजिनेन्द्रमन्दिरसुन्दरे नवमनन्दभूपते राज्यं कुर्वतः कल्पकवंशावतंसः शकडालनामा महामात्योऽभूत् । तस्य लक्ष्मीवती पत्नी च । तौ जिनधर्म्मकर्म्माणि कर्म्मठौ भवतः स्म । यतः—“ कुलेजन्मापरोगत्वं सौभाग्यं सौख्यमद्भुतम् । लक्ष्मीरायुर्यशो विद्या, हृद्या रामास्तुरङ्गमाः ॥ १ ॥ मातङ्गा जनलक्षैश्च, परिचर्यायुतास्तथा । चक्रिशक्रेश्वरत्वं च, धर्मादेव हि देहिनाम् ॥२॥ ” क्रमात्तयोः पुष्पदन्ततुल्यौ स्थूलभद्रश्रीयकाभिधौ सुतौ बभूवतुः । यक्षा १ यक्षदत्ता २ भूता ३ भूतदत्ता ४ सेना ५ वेणा ६ रेणा ७ भिधाः सप्त पुत्र्यः महाप्रज्ञावत्योऽभूवन् । प्रथमायाः पुत्र्या एकवारश्रुतं समेति । द्वितीयाया द्विवारं एवं सप्तम्याः सप्तवारं श्रुतं शास्त्रं समेति । यतः—“ विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं, विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः । विद्या बन्धुजनो विदेशगमने विद्या परं दैवतं, विद्या राजसु पूज्यते नहि धनं विद्याविहीनः पशुः ॥ १ ॥ ” तस्य नृपतेर्वाराङ्गना कोशानाम्न्यभूत्, अतीव रूपश्रिया सुराङ्गनां जिगाय । तस्यां सक्तः स्थूलभद्रस्तद्गृहे द्वादशवर्षाणि तस्थौ। तत्र बहु धनं भुक्तं तेन । यतः—“ क्षत्राणां हयशस्त्रबन्दिषु भवेद् द्रव्यव्ययः प्रायशो, भूमध्ये कृपणात्मनां व्यसनिनां स्त्रीद्यूत-

चौर्योद्यमे । शृङ्गारे पणयोषितां च वणिजां पण्ये कृषौ क्षेत्रिणां, पापानां मधुमांसयोः सुकृतिनां धर्मोपकारोत्सवे ॥१॥"

तस्य विशेषतो भूपतेः श्रीयको विश्वासभाजनमजनि । अङ्गरक्षाकारी श्रीभारत्या लब्धवरोऽभूच्च । प्रतिदिनं वररुचि-

द्विजो नूतनं कृतमष्टोत्तरं शतं काव्यानि नन्दाय प्राभृतीकुरुते । मिथ्यात्वमयानि काव्यानि मत्वा शकडालो न

प्रशशंस नन्दाग्रे । ततो भूपो द्विजन्मने किमपि न दत्ते । पारितोषिकमलभमानो द्विजो विषादं प्रपेदे । मन्त्रिणा

महीपतेर्मिथ्यादृक्संसर्गपरिहारायैकदा प्रोक्तम्—यानि काव्यानि द्विजो जल्पति भवतोऽग्रे तानि मत्पुत्रीणां समा-

यान्ति । जीर्णानि आनयति काव्यानि नवीनानि कथयति द्विजः राज्ञोक्तमेकदा श्रूयन्ते काव्यानि । ततः शकडा-

लपुत्र्यस्तत्र सभायामैयुः । द्विजोऽपि प्रातः पञ्चशतकाव्यानि कृत्वाऽगात् । एकवारं तेन जल्पितानि यदा । ततः

एकसंस्थिकया पुत्र्या तानि सर्वाणि प्रोक्तानि । ततो द्वितीयया ततस्तृतीयया ततश्चतुर्थ्या एवं सप्तम्या । ततो राजा

चमत्कृतो जगौ । मन्त्रिन्नेता पुत्र्यस्ते साक्षाद्भारत्यो बह्वयोऽवतीर्णाः । ततो राजा वररुचेर्द्वारप्रवेशनिरोधमकरोत् । अथ

स द्विजोऽष्टोत्तरेण काव्यशतेन प्रत्यहं प्रातर्गङ्गां स्तुवन् दीनाराणामष्टोत्तरं शतं लभते । इति प्रसिद्धिः सर्वत्र लोके

प्रससार । तं द्विजं लोकाः स्तुवन्ति । अहो असौ द्विजो भाग्यवान् प्रज्ञावान् पूर्वमनेन ज्ञानमाराधितम् । यतः—

"ज्ञानवान् ज्ञानदानेन, निर्भयोऽभयदानतः । अन्नदानात् सुखी नित्यं, निर्व्याधिर्भेषजाद्भवेत् ॥१॥" इति नद्यां प्रसिद्धिं कूटामवधार्य चतुरचक्रवर्ती गूढपुरुषैस्तन्मुक्तां दीनारग्रन्थिं गङ्गामध्यगुप्तीकृतां मन्त्री आनिनाय। प्रातर्यावत्तां ग्रन्थिं गृहीतुं गत्वा द्विजो गङ्गां स्तौतिस्म, तावद्राजा मन्त्रियुतस्तत्रागात्। पुनः पुनर्द्विजो गङ्गां स्तुवन् यावन्नाप्नोति ग्रन्थिं तावत् शकडालः प्राह अहो किं गङ्गा नार्पयति भवदीप्सितं? ततो द्विजोऽवक्-न ज्ञायते अद्य गङ्गा किमर्थं नार्पयति, अग्रे मम मार्गितं दत्तेऽधुना न दत्ते गङ्गा, ममाभाग्यमधुना यातं किं क्रियते। यतः-"अभाग्येऽभ्युदिते पुंसां, दारिद्र्यमेति लीलया। भाग्योदये तु गीर्वाणा, भवन्ति वशगाः स्फुटम् ॥ १ ॥" ततो मन्त्रिणा ग्रन्थिरानाय्य दर्शिता राज्ञः द्विजस्य कथितं च। इयं ग्रन्थिः कस्य सत्का तदा द्विजो दध्यौ। मम नेयं यद्यहं जल्पामि तदा तु ग्रन्थिर्याति। प्रथममेव नीवी याति। ममेयमिति जल्पामि तदाहं कूटमिति प्रोक्तवान् द्विजः। ततो राज्ञा लोकेन धिक्कृतो मन्त्रिणि वैरं वहति, छलं विलोकयति। अन्यदोत्पन्नकूटबुद्धिः श्रीयकस्यवि वाहसामग्र्यां जायमानायां द्विजो लेखकशालकानेकां गाथामेवं पाठयामास। राउलो उ नवि जाणइ एह, जं सगडाल करेसिइ। नंदराय मारेवि णु, सिरीओ राजि ठवेसिइ ॥ १ ॥ एवं बालान् बहून् जल्पतः श्रुत्वा राजा दध्यौ। बालवाचाऽन्यथा न भवति। यतः "अमोघा वासरे विद्युत्, अमोघं निशि

इति बालवचः सत्यमवगत्य मन्त्रिगृहे सिंहासनछत्रचामरादिकं
गर्जितम्। नारीबालवचोऽमोघं, अमोघं देवदर्शनम् ॥१॥ इति बालवचः सत्यमवगत्य मन्त्रिगृहे सिंहासनछत्रचामरादिकं
गर्जितम्। नारीबालवचोऽमोघं, अमोघं देवदर्शनम्॥१॥

गर्जितम्। नारीबालवचोऽमोघं, अमोघं देवदर्शनम् ॥१॥ इति बालवचः सत्यमवगत्य मन्त्रिगृहे सिंहासनछत्रचामरादिकं
निष्पद्यमानं निशम्य सचिवाय चुकोप, मन्त्रिणं हन्तुं सकुटुम्बं (राजा तत्परोऽभूत्) तं वृत्तान्तं निशम्य मन्त्री
एकदिनमारकविषमश्नातिस्म। ततः कृताराधनको मन्त्री श्रीयकमाकार्य प्राह—मया तु विषं भक्षितं सन्ध्यायां मरणं
भविष्यति। राजा तु आत्मनः कुटुम्बस्योपरि रुष्टोऽस्ति। तेन त्वं मारय माम्, ततः सर्वकुटुम्बस्य कुशलं भविष्यति
ततो यावच्छकडालो राजानं नन्तुं गतस्तावद्राजा पराङ्मुखो बभूव। इतः श्रीयकोऽभ्येत्यावग्—यो राज्ञि द्रोही भविष्यति
तस्यानेनासिना शिरः छेत्स्यते मयेत्युक्त्वा पितुः शिरः कमलनालवत् चिच्छेद। ततो द्रुतं राजा सन्मुखीभूया-
वग्—भो श्रीयक! कथं मुधा त्वया पिता हतः। श्रीयकोऽवग् यो राज्ञि मम स्वामिनि द्वेषी भविष्यति तस्यैवंविधा
शिक्षा दास्यते। ततो राजा प्रसन्नीभूयावग्—त्वया मुधा किं पिता मारितः। ततः श्रीयकेन विप्रस्वरूपं प्रोक्तम्—
ततो राजा विप्रस्य देशत्यागं प्रोक्तवान्। ततः शकडालस्याग्निसंस्कारे कृते श्रीयकं प्रति राजावग्—त्वमेव धन्यः
सेवकशिरोमणिरसि। यादृग् शास्त्रे वर्ण्यते सेवकस्तादृग् त्वमेव दृश्यसे। यतः "युद्धकालेऽग्रगो यः स्यात्, सदा
पृष्टानुगः पुरे। प्रभोर्द्वाराश्रितो हर्म्ये, स भवेद्राजवल्लभः ॥ १ ॥ जीवेति प्रब्रुवन् प्रोक्तः, कृत्याकृत्यविचक्षणः।

करोति निर्विकल्पं यः, स भवेद्राजवल्लभः ॥२॥ भृत्यैर्विरहितो राजा, लोकानुग्रहकारिभिः। मयूखैरिव दीप्तांशुस्तेजस्व्यपि न शोभते॥३॥ भो श्रीयक ! मन्त्रिमुद्रां त्वमङ्गीकुरु । श्रीयको जगौ—मम ज्यायान् सहोदरोऽस्ति स्थूलभद्रः कोशागृहे निवसति च । ततौ राजा दध्यौ । अहो ईदृशो निर्लोभी कोऽपि न दृष्टः । यतः—" दृश्यन्ते लोभिनो लोकाः, प्रायो बहुतरा भुवि । लोभादब्धौ विदेशे वा, गच्छन्तिस्म जना घनाः ॥१॥ दन्तैरुच्चलितं धिया तरलितं पाण्यंघ्रिणा कम्पितं, दृग्भ्यां कुड्मलितं बलेन गलितं रूपश्रिया प्रोषितम् । प्राप्तायां यमभूपतेरिह महाधाट्यां जरायामियं, तृष्णा केवलमेकका च सुभटी हृत्पत्तने नृत्यति ॥ २ ॥" ततो राजा स्थूलभद्रमाकारयितुं स्वसेवकं प्रेषयामास । वेश्यागृहे गतो नृपानुगश्चन्द्रशालायां देवाङ्गनया पण्यस्त्रिया सह सारद्यूतखेलनपरं स्थूलभद्रं प्रणम्य विज्ञपयामास शकडालमन्त्रिमरणस्वरूपं प्रोक्तं, तेन त्वां राजा मन्त्रिमुद्राङ्गीकारायाकारयतिस्म । ततो वज्राहत इव क्षणं भूत्वाऽश्रुपातपातनपूर्वं त्यक्तताम्बूलो नृपमन्दिरगमनाय कोशां प्रति प्राह—ततः कोशया व्यज्ञपि । तथाच—पावसउ मिलियाव तिणि कमलिनी वढीया घटीइ नहीं । पसरतउ वीयालि इत्तीवार कुण पडिखिसिइ ॥ १ ॥ अन्नाइ जाइ मिहुणाइं, जाइ अखंडसुरकविहवाइं । पिच्छंति न विरहदुहं, मरणाउवि जं अणंतगुणं ॥ २ ॥ तं रुद्दं चिय एगं, पसंसिमो जो वियोय-

वररुचेः प्रयोगात् शकडालमन्त्रिमृत्युः श्रीस्थूलभद्रस्य नन्दराजाह्वानम्

दुहभीओ । उज्झियतिलोयलज्जो, किरद्धनारीसरो जाओ ॥ ३ ॥ संखसि उपरि दंड कहि निग्गहु परइ सिरस्स । अज्जि अछइ अग्गलओ, जं विछोह पियस्स ॥ ४ ॥ इत्यादि विज्ञाय गणिकाऽवग्—यावद्भवानभ्युपैति तावत्कोऽप्यत्र मुच्यताम् ततः स्वं सेवकं तत्र मुक्त्वा स्थूलभद्रो भूपोपान्ते गत्वा प्रणणाम । ततो राज्ञोक्तं मन्त्रिमुद्रां परिधेहि । स्थूलभद्रो जगौ—किञ्चिद्विमृश्य विज्ञपयिष्यामि इति प्रोच्य धवलगृहासन्नाशोकवर्ती प्रविश्येति दध्यौ । जानाम्य-मात्यमुद्रेयं पितुर्मारणवैरिणी । तत्त्यागादधुना नाहं पश्याम्यस्या विडम्बनाम् ॥ १ ॥ हं हो शौचसखे विवेक भगवन्-वैराग्य भो मार्दव त्वं मातः करुणे क्षमे भगवति व्रीडे सखि श्रयताम् । यूयं तावदनुक्रमागततया सर्वाणि बन्धून्यपि त्यक्त्वा मामिह यौवनेऽतिगहने क्व प्रोषितानि ध्रुवम् ॥ २ ॥ इहानुभूयते दक्षै—रध्यक्षं च निरीक्ष्यते । राजा न मित्रतां याति, याति चेत् प्रलयस्तदा ॥३॥ नादास्ये नृपतेर्मुद्रां, प्रान्ते परिभवप्रदाम् । जिनेन्द्रस्य गृहीष्यामि, महोदय-निबन्धनाम् ॥ ४ ॥ स्थानं विविधबुद्धीनां, रुद्धो मौलिर्मलीमसैः । एभिः कचैरतः सर्वान्, उच्चखान स तान् क्रुधा ॥ ५ ॥ पुरा रागाधिकवस्त्रा—ण्यनुरूपाणि यो दधौ । विरागाणि तदा तानि, संजग्राह विरागभाक् ॥ ६ ॥ रजांस्युपनयं निन्ये, यः स्वयं व्यसनोदये । प्रतीकारकृते तेषां, रजोहरणमात्तवान् ॥ ७ ॥ इत्थमालोच्योपात्तव्रतः

स्थूलभद्रो नृपोपान्ते गत्वा धर्मलाभाशिषं ददौ । राजा जगौ किमिदं कृतम् । तेनोक्तं आलोचितम् । आसमन्ताल्लोचितं लोचः कृतः केशोत्पाटनात् यतो मन्त्रिमुद्रा दुःखदायिनी भवति ततो मयैवं कृतम् । यतः—"हस्ते मुद्रा मुखे मुद्रा, मुद्रा स्यात्पादयोर्द्वयोः । ततः पश्चाद्गृहे मुद्रा, व्यापारः पञ्चमौद्रिकः ॥ १ ॥" ततो राजा तादृक्षं त्यक्तसर्वगणिकादिसुखं प्रशशंसेति धन्यस्त्वं सहसा त्यक्त्वा, गणिकादि सुखं द्रुतम् । अलाः संयमसाम्राज्य-मनन्तसुखदायकम्॥१॥यतः—"धन्यास्ते व्रतदानतत्परधियो नित्यं जिनेन्द्रार्चकाः, धर्मध्याननिरस्तकल्मषविषाश्चैत्यालयोद्धारकाः । सद्बिम्बान्यपि कारयन्ति निपुणास्तेषां प्रतिष्ठां पुनः, सच्छास्त्रश्रवणैककर्मकुशला ये श्रावकाः स्युः क्षितौ ॥ १ ॥ ततो धर्माशिषं भूपाय वितीर्य स्थूलभद्रो वनं गतः । तत्र श्रीसंभतिविजयगुरुपादान्ते विधिवत् प्रव्रज्यां जग्राह । अथ राजा श्रीयकस्य महामात्यमुद्रां प्रसादीचकार । श्रीयको राज्यव्यापारं कुर्वन् वारत्रयं जिनार्चोभयकालप्रतिक्रान्त्यादि धर्मकृत्यं करोति । सप्तक्षेत्र्यां स्वधनं व्ययतिस्म च । जिनेन्द्रप्रासादशतं धर्मशालाशतत्रयं कारयामास च । यतः—"जिणभवणबिंबपुत्थयसंघसरूवेसु सत्तखित्तेसु । ववियं धणंपि जायइ शिवफलइ अहो अणंतगुणं ॥ १ ॥" क्रमाच्छ्रीयकः क्षितिपपार्श्वात् स्वपुत्रस्य मन्त्रिमुद्रां दापयित्वा श्रीगुरुपार्श्वे दीक्षां जग्राह । एकदा यक्षया महासत्या स्वभगिन्या श्रीपर्युष-

णापर्वणि समायाते श्रीयकस्याग्रे प्रोक्तम् । अद्य वार्षिकपर्व विद्यते । अत्र यत् पुण्यं क्रियते, तस्य फलमनन्तं भवति । यतः—"एगग्गचित्ता जिणसासणंमि, पभावणापूयपरायणा जे । तिसत्तखुत्तो निसुणंति कप्पं, भवण्णवं ते लहु संतरंति ॥१॥ संवच्छरचाउमासीएसु, अट्ठाहीआसु य तिहीसु । सव्वायरेण लग्गइ, जिणवरपूयातवगुणेसु ॥ २ ॥" इत्युक्त्वा प्रथमं श्रीयको नमस्कारसहितं प्रत्याख्यानं कारितस्तया । ततः पौरुषी ततः सार्द्धपौरुषी । ततः पुरिमार्द्धं ततः एकासनादि तावद्यावत् सन्ध्यायामुपवासो यक्षया कारितः श्रीयकस्य । रात्रौ अकस्मान्मृतः श्रीयकः । ततो यक्षाऽतीवदुःखिता श्रीयकगतिज्ञानार्थं श्रीसङ्घसहिता कायोत्सर्गं चकार । ततः शासनदेव्या उत्पाट्य यक्षा महाविदेहक्षेत्रे श्रीसीमन्धरपार्श्वे मुक्ता । श्रीसीमन्धरस्वामिपार्श्वे तया स्वचित्तचिन्तितस्वरूपं पृष्टम् । ततः श्रीसीमन्धरस्वामी जगौ—श्रीयको मृतः स्वायुषः क्षयादेव न पुनस्तपसा । शोको न कर्तव्यः । न केनापि जीवितव्यं बहुक्रियते । यतः—" नो विद्या न च भेषजं न च पिता नो बान्धवा नो सुताः, नाभीष्टा कुलदेवता न जननी स्नेहानुबन्धान्विता । नार्थो नो स्वजनो न वा परिजनः शारीरकं नो बलं, नो शक्तास्त्रुटितं सुराः सुरवराः संधातुमायुर्ध्रुवम् ॥ १ ॥" ततस्तया यक्षयोक्तं क्वोत्पन्नो मम भ्राता ? श्रीसीमन्धरस्वामी जगौ—प्रथमे सौधर्मे स्वर्गे भासुरद्युतिभाग् सुरोऽभूत् श्रीयकः,

धर्मप्रभावान्मुक्तिं गमिष्यति । ततो मुदितमानसा यावच्चलति यक्षा तावत्परमेश्वरेण चूलिकाचतुष्टयं व्याख्यातम् । तया तच्छ्रुतं समायातं च तस्याम् । ततः शासनदेव्या उत्पाट्य श्रीसङ्घमध्ये मुक्ता यक्षा । ततः श्रीगुरूणां श्रीसङ्घस्याग्रे श्रीयकसद्गतिप्राप्तिस्वरूपं प्रोक्तं तया चूलिकाचतुष्टयं श्रीगुरूणामर्पितम् । श्रीगुरुभिश्चूलिकाद्वयं दशवैकालिकप्रान्ते क्षिप्तम्, चूलिकाद्वयं च आचाराङ्गप्रान्ते क्षिप्तम् । ततो यक्षा साध्वी स्वयं विशेषतस्तपः कर्तुं लग्ना । तदा श्रीगुरुभिरुक्तम् । ये जना अष्टम्यादिपर्वसु तपः कुर्वन्ति ते क्रमात् क्षीणकर्माणो मुक्तिं गच्छन्ति । यतस्तप एव निकाचितकर्मच्छेदकमुच्यते । यतः—"पोरसि चउत्थ छट्ठे, काउं कम्मं खवंति जं मुणिणो । तं नो नारइ जीवा, वाससयसहस्सलक्खेहिं ॥ १ ॥ जं नारया ण कम्मं, खवंति एगेहि वरिससहस्सेहिं । तं खलु चउत्थभोई, जीवो निज्जरइ सुहभावो ॥ २ ॥ यद्दूरं यद्दुराराध्यं, यच्च दूरे व्यवस्थितम् । तत् सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ ३ ॥ यक्षा तपस्तप्त्वा क्रमात् स्वर्गं गता ।

॥ इति श्रीयककथा समाप्ता ॥

---

श्रीमत्याः यक्षार्यायाः श्रीसीमन्धरपार्श्वे गमनं श्रीयकस्य यक्षायाश्च स्वर्गगमनम्

घ्नत्सु वैरिषु योऽत्यन्तं, क्षमां कुर्यात्सुभावतः। अन्निकापुत्रसूरीश, इवाप्नोति शिवश्रियम्॥ १॥

तथाहि—पूर्वं राजगृहे नगरे श्रीश्रेणिको राजा राज्यं कुर्वन् श्रीवीरजिनपादाम्बुजसेवया बद्धतीर्थङ्करगोत्रो न्यायमार्गात् पृथिवीं प्रशशास। यतः "राज्ञि धर्मिणि धर्मिष्ठाः, पापे पापाः समे समाः।राजानमनुवर्तन्ते, यथा राजा तथा प्रजा॥१॥" तस्य चिल्लणाद्या बह्व्यो राज्ञ्योऽभूवन्। कोणिकाभयकुमारमेघकुमारादयो बहवः पुत्रा आसन्। कोणिकः श्रेणिकं काष्ठपञ्जरे क्षिप्त्वा राज्ये उपविष्टः। ५०० नाडीभिर्घातयति। मृते श्रेणिके चम्पा वासिता कोणिकेन। चक्रिरत्नानि कृत्वा खण्डत्रयं साधयित्वा वैताढ्याग्रेतनखण्डत्रयं साधयितुं गुहायां गतः। तन्निर्गतज्वालया दग्धः षष्ठनरकं गतः तत्पुत्र उदायीनामा राजाऽभूत् सोऽपि स्वपित्रा कारितानि सभाक्रीडाशयनादिस्थानानि दर्शं दर्शमतीव खिन्नः शोकसागरे पपात। शून्यचित्तस्य राज्ञः सर्वं राज्यकार्यं विसस्मार। ततोऽमात्यैः प्रोक्तम्—स्वामिन्! नवीनं पुरं स्थाप्यते। ततो नव्यं पुरं निवेशयितुं नैमित्तिकवरान् वर्यस्थानगवेषणकृते आदिक्षत राजा। तेऽप्यमात्या वर्यं पुरस्थानं पश्यन्तो गङ्गातटं प्रापुः। तत्र कुसुमपाटलं पाटलिपादपं सच्छायं वीक्ष्य चमत्कृताः। पाटलितरुशाखायां चाषं व्यात्तास्यं स्वयं निपतत्कीटकपेटकं समीक्ष्य चेतस्येवं व्यचिन्तयंस्ते। अहो यथाऽस्य चाषविहङ्गमस्य मुखे स्वयमेव कीटाः पतन्तो विलोक्यन्ते तथाऽत्र स्थाने नगरे स्था-

पिते सति अस्य राज्ञः स्वयं सम्पदो बह्व्यः समेष्यन्ति। एतदालोक्यामात्या राजपार्श्वेऽभ्येत्य जगुस्तत्स्थानस्वरूपम। सोऽपि राजाऽतीव हृष्टः कमपि वृद्धं नैमित्तिकं विचक्षणं पप्रच्छ। अयं पाटलतरुः कीदृग्माहात्म्योऽस्ति? ततो नैमित्तिकोऽवग्-अयं पाटलानोकहो न सामान्योऽस्ति, इति ज्ञानिना ममाग्रे प्रोक्तम्। पाटलद्रुः पवित्रोऽयं महामुनिकरोटिजन्मा। एकावतारी स मूलजीवश्चेति विशेषतो मन्ये। राज्ञोक्तम्॥ कतमः स महामुनिः? तदनुजगाद नैमित्तिकः। तथाहि—देव! उत्तरमथुरायां देवदत्ताह्वो वणिक्पुत्रो वसतिस्म। सोऽन्यदा द्रव्यार्जनहेतवे, दक्षिणमथुरायामगमत्, तत्र तस्य जयसिंहनाम्ना वणिक्पुत्रेण सह मैत्री जाता। तत्रान्येद्युर्जयसिंहवणिग्गृहे भोक्तुं निमन्त्रितो देवदत्तोऽगमत्। तदा देवदत्तो भुञ्जानोऽन्निकाह्वां तज्जामिं परिवेषयन्तीं वीक्ष्य तस्याः सद्रूपालोकनादनुरक्तोऽजनि। यतः—"अरकाणऽसणी कम्माण, मोहणी तह वयाण बंभवयं। गुत्ताण य मणगुत्ती, चउरो दुक्खेण जिप्पंति॥ १॥" द्वितीयेऽहनि मित्रपार्श्वात्तां परिणेतुमयाचिष्ट देवदत्तः। जयसिंहोऽवग्—तस्मै स्वसारमिमां दास्ये यो मद्गृहाद्दूरे न भवति। इयं स्वसाऽतीव प्राणेभ्योऽपि वल्लभाऽस्ति, ततो देवदत्तेनोक्तम् भवद्वचः प्रमाणमेव। ततो वर्येऽहनि तामन्निकां देवदत्तः पर्यणैषीत्। तया सह भुञ्जानस्य भोगान् देवदत्तस्यान्यदा पितृभ्यां लेखः प्रेषितः। तथाहि—

त्वं दूरे वर्तसे पुत्र ! वृद्धावावां बभूविव । त्वमेव चेदिहायासि, तदा नौ जीवितं भवेत् ॥ १ ॥ तं लेखं वाचयतस्तस्य नेत्रे वर्षितुमश्रूणि लग्ने । ततस्तस्य प्रियया रोदनहेतुं पृष्टोऽपि यावन्न ब्रवीति देवदत्तः तावत्तया स्वयं लेखमादायेति अवाचि सः । तत्र चेदं लिखितमासीत् गुरुभ्याम् । यद्वत्सावां वृद्धौ निकटनिधनौ स्वः यदि त्वं जीवितं नौ वीक्ष्यसे तदा शीघ्रमत्रागन्तव्यं त्वया विचारो न कार्यः । ततस्तया प्रियया प्रोक्तं–स्वामिन् ! भवतो मातापितरौ वृद्धौस्तः तेन तत्र गन्तुं विलोक्यते एव । देवदत्तो जगौ । मया पूर्वमुक्तमत्राहं स्थास्यामि । साम्प्रतं यास्यामीति कथं जल्प्यते मया । प्रतिज्ञाया भङ्गो भवति, प्रतिज्ञाभङ्गः केनापि न क्रियते । यतः–"अर्थो विनश्यतु विरज्यतु बन्धुवर्गो, राज्यं क्षयं व्रजतु बन्धनमस्तु बाढम् । प्राणाः प्रयान्तु निधनं न तथापि सन्तो, धीरा निजानि वचनानि विलोपयन्ति ॥१॥ तत्तियमित्तं जंपह, जत्तियमित्तं तु होइ निव्वाहो । वाया मुआण नासइ, जीवंता मा मुआ होंति ॥ २ ॥" तदनुप्रिया प्राह-स्वामिन् मातापित्रोः समं तीर्थं नास्ति तेन तदर्थे कदाचित् प्रतिज्ञाभङ्गः क्रियते तदा न दोषः । यतः–"माता गङ्गासमं तीर्थं, पिता पुष्करमेव च । गुरुः केदारसमं तीर्थं, माता तीर्थं पुनः पुनः ॥ ॥१॥" एवं पतिमाश्वास्य स्वभ्रातरं सुकुमालवचनेन पर्यवसाय्याऽन्तःस्नेहलाऽन्निका पतिं प्राह–स्वामिन्

चल्यतां मया भ्राता पर्यवसायितोऽस्ति । ततो देवदत्तो दध्यौ एवंविधा पत्नी स्नेहला पतिहितकारिणी क्वापि न दृष्टा । यतः—" श्वश्रूश्वशुरननान्दृ-पतिदेवरभक्तिका । धर्मकर्मरता पत्नी, सुभाग्यादेव लभ्यते ॥१॥ " ततो देवदत्तः सप्रियः उत्तरमथुरां प्रति प्रतस्थे । क्रमात्साधानाऽम्बिका मार्गे सुतमसूत । जन्मोत्सवे कृते अम्बिकाऽवग्—अस्य सुनोर्नाम श्वश्रूश्वशुरौ दास्यतः । तदा वर्त्मनि सर्वपरिवारोऽम्बिकापुत्र इति उल्लुलाप । क्रमाद्देवदत्तः स्वपुरं जगाम । मातापित्रोर्मिलितो विनयपूर्वकमम्बिका श्वश्रूश्वशुरयोः क्रमयोः पपात । मातापितृभ्यां संधीरणेति नाम्नि दत्तेऽपि अम्बिकापुत्र इति नाम पप्रथे । ततः सर्वेषामपि हर्षोत्कर्षं चकार वर्द्धमानः कुमारः । क्रमात् प्राप्ततारुण्योऽम्बिकापुत्रो गुरूणां समीपे धर्मं शृण्वानो धर्मपरो बभूवेति । " जन्तूनामवनं जिनेशनमनं भक्त्याऽऽगमाकर्णनं, साधूनां नमनं मदापनयनं सम्यग्गुरोर्माननम् । मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनं, चेतः शोधनमिन्द्रियाश्वदमनं यत्तच्छिवोपायनम् ॥१॥ ' इत्यादि धर्मोपदेशाकर्णनात् भोगांस्तृणवन्मन्यमानो जयसिंहाचार्यपार्श्वे दीक्षामग्रहीत् । अम्बिकापुत्रो विनयपूर्वकं शास्त्राणि पठन् गुरुपार्श्वे आचार्यपदं प्राप । बहुपरिवारसहितो भव्यजीवान् प्रबोधयन् वार्द्धके पुष्पभद्रपुरं गङ्गातटस्थं प्राप । तत्र पुष्पकेतुर्नृपो राजा राज्यं करोतिस्म न्यायात् । यतः " राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।

राजानमनुवर्तन्ते, यथा राजा तथा प्रजाः ॥ १ ॥ ” ततः क्रमात् तस्यासीत् पुष्पवती पत्नी । तयोर्युग्मजौ पुष्पचूलः पुष्पचूला चेति पुत्रः पुत्री जातौ । तौ सह वर्द्धमानौ क्रीडन्तौ च परस्परं प्रीतिमन्तौ जातौ । राजा दध्यौ यद्येतौ दारकौ पृथग् विवाहकरणाद्वियुज्येते तदा नूनमेतौ मृतावेव । अहमप्यनयोर्विरहं सोढुमनीशोऽस्मि तस्मादनयोरेव विवाहं कारयिष्यामीति ध्यात्वा मन्त्रिपौरानाकार्य प्राह—यद्रत्नमन्तःपुरे समुत्पद्यते तस्य कः स्वामी ? तैर्विज्ञप्तं स्वाम्येव स्वामिनः तवान्तःपुरोत्पन्नं वस्तु त्वदीयाभिप्रेतस्थाने त्वया योज्यते । ततो राज्ञोक्तम् । मम पुत्रपुत्र्योर्यदि वियोगो भविष्यति तदा मरणमपि भावि इत्यादि विमृश्य पुत्रपुत्र्योरेव विवाहः कारितो देव्यां वारयन्त्यामपि मेदिनीभुजा । तौ दम्पती भोगान् भुङ्क्तः । सा राज्ञी तु प्राह—स्वामिंस्त्वया किमेवंविधमकर्तव्यं कृतं पुत्रपुत्रीविवाहकरणान्मिथः । ततो राज्ञा हक्किता राज्ञी त्वयैवं किमुच्यते रे पत्नि यदि पुनः प्रजल्पसे तदा त्वां हनिष्यामि इति धिक्कृता राज्ञी समुत्पन्नवैराग्या श्रीगुरूणां पार्श्वे व्रतं जग्राह । तीव्रतरं तपस्तप्त्वा पुष्पवती स्वर्गे देवोऽभूत् । अन्येद्युः पुष्पकेतौ कथाशेषे पुष्पचूलो राजाऽभूत् । पुष्पवतीजीवो देवोऽवधिज्ञानात् पुत्रपुत्र्योरकृत्यं ज्ञात्वा तद्वारणायागत्य पुष्पचूलाया नरकानदर्शयत् तद्दुःखानि ज्ञात्वा सा च प्रबुद्धा भीता च पत्युः पुरः सर्वं निवेदयामास । राजा च

भीतः शान्तिकपौष्टिकादिकर्म कारयामास । स च देवः प्रतिदिनं तस्या नरकावासानदर्शयत् । राजा तु सर्वास्तीर्थिकान् बौद्धादीनाकार्य पप्रच्छ कीदृशा नरकाः कथ्यन्ते । केचिदाहुर्गर्भवासः, केचिदाहुर्गुप्तिवासः, केचिद्दारिद्र्यं, केचित् पारतन्त्र्यं प्रोचुः, राज्ञी तु बौद्धादिप्रोक्तं श्रुत्वा मुखं मोटयन्ती प्राह—एवंविधा नरका न विद्यन्ते । अथ भूपोऽन्निकापुत्राचार्योपान्ते गत्वाऽवग्—कीदृशा नरका भवन्ति ? ततो गुरुभिः प्रोक्तमिति । "इग तिन्नि सत्त दस सत्तर-ऽयर बावीस तित्तीसा । सत्तसु पुढवीसु ठिई, जिट्ठोवरिमाइ हिट्ठपुढवीए । होइ कमेण कणिट्ठा, दस वास सहस्स पढमाए ॥ ॥ १ ॥ सत्तसु खित्तजविअणा, अन्नुन्नकयावि पहरणेहि विणा । पहरणकयावि पञ्चसु, तिसु परमाहम्मियकयावि ॥ २ ॥ राज्ञ्यपि गुरूक्तं श्रुत्वा प्राह—भगवन्! भवद्भिरपि स्वप्नो दृष्टः ? सूरिराह जिनागमात् सर्वं नरकादिस्वरूपं ज्ञायते । पुष्पचूलाचष्ट—भगवन् केन कर्मणा नरकाः प्राप्यन्ते? गुरुराचष्ट—महारम्भपरिग्रहैर्गुरुप्रत्यनीकतया पञ्चेन्द्रियवधात् मांसाहाराच्च तेषु नरकेषु पतान्ति जीवाः। पुष्पवतीजीवसुरस्तस्यै स्वर्गानदर्शयत् स्वप्ने । राज्ञा तथैव स्वर्गस्वरूपं पृष्टाः पाखण्डिनः प्रोचुः । यद्द्रव्यप काद्यादि भक्ष्यते यत्पट्टकूलादि परिधीयते यद्द्रव्ययानासनादिषु उपविश्यते तदेव स्वर्गः कथ्यते। ततो गुरुभिर्भूपभूपपत्नीपृष्टैरुक्तम्—सम्यक्त्वाराधनगृहियतिधर्मसेवनेन द्वादशदेवलोकेषु सुखानि प्राप्यन्ते । बत्तीसट्ठावी-

वरमउड-
सा, वारस अडचउ विमाणलक्खाइं । पन्नासचत्तछसहस कमेण सोहम्ममाईसु ॥ १ ॥ वरमउड-
सा, वारस अडचउ विमाणलक्खाइं । सक्को हियउवएसा, ऐरावणवाहणो जाओ ॥ २ ॥ ततः सा
किरीडधरो, चिंचइओ चवलकुंडलाहरणो । सक्को हियउवएसा, ऐरावणवाहणो जाओ ॥ २ ॥ ततः सा
राज्ञी प्रतिबुद्धा प्राह—भो कान्त ! प्रव्रज्यार्थं मामनुजानीष्व । राजाऽवग्—त्वद्वियोगक्षणमपि न क्षमे । यदि
प्रव्रज्यां गृहीष्यसि, तदा मद्गृहस्था गृहीतव्रता एव शुद्धमाहारं गृहाण । तयोररीकृते नृपवचसि राजा तस्याः
प्रव्रज्यां दापयामास । पतिगृहे स्थिता राज्ञी पुष्पचूला द्विचत्वारिंशद्दोषविशुद्धमाहारं गृह्णातिस्म । अन्यदा भावि
दुर्भिक्षं श्रुतोपयोगात् ज्ञात्वा अन्निकापुत्रसूरिर्गच्छं देशान्तरे प्रैषीत् । प्रक्षीणजङ्घाबलाः सूरयस्तत्र तस्थुरन्निका-
पुत्राह्वाः । भक्तपानं च शुद्धं श्रीगुरुभ्यः पुष्पचूलाऽन्तःपुरादानीय दत्ते । क्रमाद्गुरुशुश्रूषाप्रकर्षात् क्षपकश्रेण्यारोहात्
केवलज्ञानमुत्पेदे महासत्याः । उत्पन्ने केवलज्ञानेऽपि गुरुवैयावृत्त्यान्न विरराम सा । यावन्न ज्ञातं छद्मस्थेन केवलज्ञानो-
त्पत्तिस्वरूपं—तावत्केवल्यपि शुद्धाहारदानादिं विनयं करोतीति । केवलयुताऽपि सा साध्वी शुद्धमाहारमानीय गुरुभ्यो
ददौ । अन्यदा वर्षति जलदे पुष्पचूला साध्वी केवलज्ञानवत्यपि यावद्गुरुपार्श्वे आहारं आनीतवती तावद्गुरुभिरुक्तम्—
वत्से ! पुण्यवति ! श्रुतज्ञाऽसि, किमेवंविधे वर्षति जलदे त्वयाऽऽहार आनीतः । तयोक्तम् । यत्र यत्र प्रदेशेषु अप्कायो-

ऽचित्तोऽस्ति, तेषु यत्नादहमत्रायामि। गुरुराह—कुतस्त्वयाऽचित्तप्रदेशो ज्ञायते। तयोक्तं त्वत्पदप्रसादादेव ज्ञायते। गुरुभिरुक्तम्—प्रतिपातिज्ञानं विद्यतेऽथवाऽप्रतिपाति? तयोक्तमप्रतिपातिज्ञानमस्ति। ततो गुरव उत्थाय मिथ्यादुष्कृतं भवतु, मया हा खेदे केवल्याशातना कृता इति पुनः पुनः स्वं निन्दन्तः पप्रच्छुस्तां साध्वीं प्रति। अहं किं सेत्स्यामि न वेति? केवली प्राह—माकृध्वमधृतिं गङ्गां नदीमुत्तरतां युष्माकं केवलज्ञानं भविष्यति। ततो गङ्गामुत्तरीतुं भूरिलोकैः सह नावमारुरोह सूरिः। यत्र यत्र सूरिन्यर्षीदत्तत्र तत्र नौर्नमत्यधः। तदनु मध्यासीने मुनौ सर्वापि नौर्मङ्क्तुं लग्ना। ततः सूरिर्लोकैर्जले क्षिप्तः। दुर्भगीकरणविराधया प्राग्भवपत्न्या व्यन्तरीभूतयाऽन्तर्जलं शूले निहितः। शूलप्रोतोऽपि हा मदीयरुधिरेणाप्कायविराधना भाविन्यस्तीति क्षपकश्रेण्यारूढः सर्वकर्मक्षयोत्पन्नकेवलज्ञानः सद्यः समाप्तायुष्कोऽन्तकृतकेवली सिद्धोऽन्निकापुत्र आचार्यशिरोमणिः। तदा तत्र समेत्यासन्नैः सुरैस्तस्यान्तकृतकेवलिनः केवलिमहश्चक्रे। अतस्तत्तीर्थं जातं जगति विख्यातं प्रयाग इति लोके। शूलप्रोतत्वाद् गतानुगतिकतयाऽद्यापि परसमये माहेश्वराः स्वाङ्गे क्रकचं दापयन्ति। सूरेः करोटिर्यादोभिस्त्रोट्यमानाऽपि जलोर्मिभिर्नदीतीरं प्राप्ता, इतस्ततो गच्छन्ती शुक्तिवन्नदीतटे क्वापि गुप्तविषमे प्रदेशे विलग्य तस्थौ। तस्य च करोटिकर्परस्यान्तः कदाचित् पाटलाया बीजं पपात। क्रमात्तं करोटिकर्परं

भित्त्वा दक्षिणहनोः पाटलातरुरुद्गतो विशालश्च क्रमादजनि। तदत्र पाटलिद्रोः प्रभावोऽभूत् । तं तादृक्षं पाटलितरुं
प्रेक्ष्य नवीनपुरस्थापनाय राजा स्वसेवकानादिदेश । विचक्षणास्ते पाटलायाः स्थानाच्चतसृषु दिक्षु पूर्वादिषु शिवायाः
शब्दं जायमानं श्रुत्वा तावन्तमवधीकृत्य पुरस्य चतुरस्रं संनिवेशं चक्रुः । पाटलायाश्चतसृषु दिक्षु स्थापनत्वात्
पाटलातरोः समीपे पुरनिवेशनात् पाटलिपुत्रं पत्तनं बभूव । राजा तत्रागत्य तन्नगरं स्थापयामास । महादानं ददौ
च । तस्य पाटलातरोरसमकुसुमबहुलतया च कुसुमपुरमित्यपि रूढं पुरम् । तस्य पुरस्य मध्ये कैलासशैलसोदरं
स्फटिकरश्मिमयं श्रीजिनप्रासादं राजा कारयामास । तन्मध्ये अरिष्टरत्नमयीं नेमिप्रतिमां भूरिद्रव्यव्ययान्महोत्सवपूर्वं
स्थापयामास उदायी राजा । तत्र प्राकारानेकजिनप्रासादमहेभ्यालयवापीकूपतडागावाससत्रागारादिरम्यं पुरं स्वश्रिया
स्वर्गपुरीं जिगाय । तत्रोदायी राजा जिनधर्म्मवासितसप्तधातुश्चिरं राज्यं चकार । अन्येद्युरुदायी भूपः श्रीगुरु-
पार्श्वे धर्म्मं श्रोतुं गतः । तत्रेति धर्म्मः श्रीगुरुभिरुक्तः । प्राज्यानि राज्यानि सुभोजनानि, सौभाग्यनैरोग्यसुयोग्य-
वर्याः । रामा रमा रम्ययशोविलासाः, स्वर्गापवर्गौ प्रभवन्ति धर्मात् ॥१॥ दारिद्र्यमुद्रा परकर्मकृच्च दुष्टस्वभावोऽसुखसङ्ग-
तानि। एकत्वरङ्कत्वकदन्नभोज्यकुरूपमुख्यानि भवन्त्यधर्मात् ॥२॥ यः शत्रुञ्जये गत्वा श्रीयुगादिजिनं प्रणमति स स्वर्गा-

पवर्गों लभते । "शत्रुञ्जये जिने दृष्टे, दुर्गतिद्वितयं क्षिपेत् । सागराणां सहस्रं तु, ध्यानाल्लक्षमभिग्रहात् ॥ १ ॥ नमस्कारसमो मन्त्रः, शत्रुञ्जयसमो गिरिः । गजेन्द्रपदजं नीरं, निर्द्वन्द्वं भुवनत्रये ॥ २ ॥ स्पृष्ट्वा शत्रुञ्जयं तीर्थं, नत्वा रैवतकाचलम् । स्नात्वा गजपदे कुण्डे, पुनर्जन्म न विद्यते ॥ ३ ॥" श्रुत्वेति शत्रुञ्जयमाहात्म्यं राजा भूरिदेशेभ्यः श्रीसङ्घमाकार्य शुभे मुहूर्ते श्रीशत्रुञ्जयं प्रति देवान्नन्तुं चचाल । मार्गे स्थाने स्थाने जिनप्रासादेषु पूजास्नात्रमहोत्सवध्वजावारिकादि कुर्वाणो राजा शत्रुञ्जये ययौ । तत्रापि श्रीयुगादिदेवस्य स्नात्रपूजाध्वजावारिकादिमहोत्सवं भूपश्चकार । ततः श्रीगिरनारगिरावपि गत्वा श्रीनेमिजिनं प्रपूज्य स्वं जन्म कृतार्थं चकार राजा । यतः "शत्रुञ्जयाद्रिरयमादियुगे गरीयान्, आसीदसीमसुकृतोदयराशिरेव । आदीयमानसुकृतः किल भव्यलोकैः, काले कलौ भजति सम्प्रति दुर्बलत्वम् ॥ १ ॥" ततो द्वयोरपि तीर्थयोर्यात्रां कृत्वा श्रीउदायी महीपतिः स्वपुरमाजगाम । स्वपुरेऽपि जिनप्रासादे स्नात्रमहोत्सवं कारयामास । अनेके जिनप्रासादा राज्ञा कारिताः । श्रीदेवगुरुभक्तिं करोतिस्म, उभयकालं प्रतिक्रमणं करोति, त्रिसन्ध्यं जिनपूजां करोति राजा । एवं धर्मं कुर्वाणः क्रमाद्वृद्धभावं प्राप्तः सन् [स्वं पुत्रं राज्ये निवेश्य] स्वयं कृताराधनापताकः स्वर्गं जगामोदायी राजा । ततश्च्युतो मुक्तिमपि यास्यति ॥ इति अन्निकापुत्राचार्योदायिभूपकथा समाप्ता ॥

कृतानेकतमस्कोऽपि, निजं निन्दन् सुभावतः । ईर्यापथिकया सिद्धो–ऽतिमुक्त इव देहभाग् ॥ १ ॥

पेढालपुरे महानगरे श्रीविजयराजा राज्यं चकार । तस्य राज्ञी श्रीमती सच्छीलशालिनी । द्वावपि
जिनधर्मकुशलौ । दानशीलतपोभावनापूजाप्रभावनाऽमारिघोषणासप्तक्षेत्रीस्वधनवपनादि पुण्यं कुरुतः स्मः ।
यतः–" स्वल्पश्रीसंयुता येऽपि, दानं कुर्वन्त्यनेकधा । स्वशक्तिं प्रकटीकृत्य, ते धन्या दानिनां मताः ॥ १ ॥ रोगक्ले-
शमदोन्मादैः, सर्वदुःखपरीषहैः । स्वीकृतं ये न मुञ्चन्ति, व्रतं स्युस्ते बुधैः स्तुताः ॥ २ ॥" क्रमात्तयोर्धर्म्मं कुर्वा-
णयोः सुतोऽभूत् । तस्य पुत्रस्य जन्मोत्सवं कृत्वा राजा अतिमुक्तक इति नाम ददौ । स च कुमारः षट् वार्षिको
बालत्वे रममाणो गोचरचर्यामागतं श्रीगौतमस्वामिनं दृष्ट्वा हृष्टः सन् प्रणम्य प्राह–भगवन्नहं भवादृशो भविष्यामि ।
गौतमेनोक्तं त्वं बालोऽसि दीक्षा दुःकराऽस्ति अत्र दुःशक्यं चारित्रमिति । तथाहि–"तपःक्रियामनोगुप्ति–विनयादि-
सुकर्मभिः । चारित्रं दुष्करं पुंसां, जायते नात्र संशयः ॥ १ ॥" तेनोक्तं शिशुरप्यहं भवादृशो भविष्यामि। श्रीगौ-
तमे विशुद्धान्नादि विहृत्य गते बालको मातापित्रोः पुरोऽभ्येत्यावग्–मम व्रतं ददतं । श्रीगौतमस्वामिसदृशो
भविष्यामि । मातापितृभ्यां प्रोक्तं एवं कथमुच्यते, त्वमेवैकः पुत्र आवयोरसि । राज्यं कस्याधारे भविष्यति ? त्वम-

स्माकं वृद्धत्वे चाधारो भविष्यसि । दीक्षाग्रहणावसरोऽधुना आवयोर्विद्यते । पुत्रः प्राह—मातः किं ज्ञायते को वृद्धः को लघुरनित्यत्वात् ज्ञानाभावाच्च । कः कस्य पुत्रोऽस्ति । संसारे भ्रमतां जीवानां बहवः सम्बन्धा जाताः सन्ति । यतः "माया पियरो भाया, भज्जा पुत्ता य मित्तधणनिवहो । न य सरणं संसारे, जीवाणं मुत्तु जिणवयणं ॥ १ ॥
यः पिता स पुत्रः स्यात्, यः पुत्रः स पिता भवेत् । यः पुत्रः स भवेन्माता, या माता सा सुतो भवेत् ॥ २ ॥
एवं भवे भवेऽनेके, सम्बन्धाः कर्मयोगतः । जायन्ते देहिनां तेन, कः पुत्रः कः पितोच्यते ॥ ३ ॥" एवं मातापितरावनुज्ञाप्यातिमुक्तकः कुमारो महामहोत्सवपूर्वकं श्रीगौतमस्वामिहस्ते प्रव्रज्यां जग्राह । श्रीगौतमस्वाम्यादिष्टां क्रियां कुर्वन् हृष्टचित्तः शुद्धं संयममतिमुक्तकर्षिः प्रपालयन् एकदा क्षुधातुरः प्रत्यूषकाले एव कस्यापि श्रेष्ठिनो गृहे भिक्षार्थं गतो, धर्मलाभमतिमुक्तकः क्षुल्लको यावज्जगौ तावच्छ्रेष्ठिपुत्रवध्वा हसन्त्योक्तम् क्षुल्लकमुने ! किं सकाल एव उत्सूरः ? तस्या अपूर्ववाण्याऽतीव चमत्कृतः क्षुल्लकः प्राह—यज्जानामि तन्न जानामि । ततः तयोक्तं क्षुल्लक ! किमुक्तं भवता ? क्षुल्लको निजोक्तस्यार्थं जगौ—सकाले बालानां क उत्सूरः को व्रतहेतुः । यज्जानामि मरणं तत् कापि वयसि भविष्यतीति तन्न जानामि । उत्सूरः सकालस्तदा ज्ञायते । यदा ज्ञानं भवति तदत्र मे

नास्ति । इति साभिप्रायमुत्तरं ददौ मुनिः । ततस्तया चिन्तितं, अहो क्षुल्लकेन सत्यमुक्तम् । ततस्तया श्राविकया शुद्धधर्मं सम्यक्त्वमूलं द्वादशव्रतं गृहीतं । क्षुल्लकश्च शुद्धान्नपानं विहृत्य धर्मशालायां गतः । अथ क्षुल्लकः कदाचित् वर्षाकाले कल्पिततडागिकायां सवयोभिः शिशुभिः समं नौवत् निजजलपात्रं तारयन् श्रीगौतमस्वामिनं प्रेक्ष्य लज्जितः । ततः सापत्रपः क्षुल्लकः श्रीवीरसमवसरणे जगद्गुरोः पुरो वासनायाः प्रायश्चित्तरूपां ईर्यापथिकीं प्रतिक्रमन् ' दगमट्टी दगमट्टी ' इतिशब्दमुच्चरन् पृथ्वीकायकानप्कायकान् जीवान् क्षामयन् सर्वकर्मक्षयात् केवलज्ञानं प्राप । ततस्तत्राभ्येत्य देवाः केवलिमहोत्सवं चक्रुः । यतः " प्रणिहन्ति क्षणार्द्धेन, साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मकोटिभिः ॥ १ ॥ मन एव मनुष्याणां, कारणं बन्धमोक्षयोः । बन्धाय विषयासङ्गि, मुक्त्यै निर्विषयं मनः ॥ २ ॥ " ततोऽतिमुक्तककेवली भव्यजीवान् प्रतिबोधयन् प्रतिदेशं प्रतिनगरं प्रतिग्रामं सूर्यपुरीबहिरुद्याने समवासार्षीत् । तत्र जितशत्रुनृपतिरनेकजनयुतो वन्दितुं ययौ । त्रिःप्रदक्षिणां दत्त्वा धर्मं श्रोतुमग्रत उपविष्टः । अतिमुक्तककेवली धर्मोपदेशनां ददाविति । तथाहि—आयुर्वायुचलं सुरेश्वरधनुर्लोलं बलं यौवनं, विद्युद्दण्डतुलं धनं गिरिनदीकल्लोलवच्चञ्चलम् । स्नेहं कुञ्जरकर्णतालचपलं देहं च रोगाकुलं, ज्ञात्वा भव्यजनाः सदा कुरुत भो धर्मं महानिश्चलम् ॥ १ ॥

यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा, यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः। आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्, संदीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ २ ॥ जन्तूनामवनं जिनेशनमनं शक्त्यागमाकर्णनं, साधूनां नमनं मदापनयनं सम्यग्गुरोर्माननम्। मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनं, चेतःशोधनमिन्द्रियाश्वदमनं यत्तच्छिवोपायनम् ॥ ३ ॥ ततस्तत्र भूपतिरनेकसुश्राद्धसंयुतः सम्यक्त्वमूलद्वादशव्रतयुतं धर्मं जग्राह। बहुदेशेषु भव्यजीवान् प्रतिबोध्यायुषः क्षयादतिमुक्तकः क्षुल्लको मुक्तिं जगाम।

॥ इति अतिमुक्तककेवलिकथानकं समाप्तम् ॥ ६ ॥

---

**अदत्तं यो न गृह्णाति, परस्य दुःखितोऽपि सन्। नागदत्त इवाप्नोति, स मुक्तिकमलां क्रमात् ॥ १ ॥**

वाणारस्यां जितशत्रुनृपो राज्यं करोति स्म। तत्र यज्ञदत्तः श्रेष्ठी, तस्य प्रिया धनश्रीः। तयोर्जिनोक्तं धर्मं कुर्वाणयोः क्रमात् पुत्रोऽभूत्। जन्मोत्सवं कृत्वा तस्य सूनोर्नागदत्त इति नाम दत्तं मातापितृभ्याम्। लेखशालायां पाठशालायां च कर्मधर्मशास्त्रे पपाठ नागदत्तः। पितरि मृते द्रव्यार्थं कस्यचिद्यानमारुह्य लक्ष्मीकृते पर-

द्वीपे गतो नागदत्तः । ततो बहुधनमर्जयित्वा पश्चाद्यानारूढो महेभ्येन समं चचाल जलधिमार्गेण । अकस्मा-
द्यानपात्रं नीचस्थानस्थितजले पतितं न निर्गच्छति । तदा सर्वेऽपि लोका व्याकुला बभूवुः । शान्तिकपौष्टिकानि
कुर्वन्ति लोकाः । तदा नागदत्तोऽवग्—यानस्वामिनं प्रति आसन्नशैले भारण्डाः पक्षिणो बहव उपविष्टा दृश्यन्ते ।
यदि तत्र गत्वा कोऽपि साहसी पुमांस्तानुड्डापयति तदा तेषां पक्षेभ्यो बहुर्वायुरुत्पत्स्यते, तेन यानं निस्स-
रिष्यति । ततः प्रोक्तं यानस्वामिना कस्याप्यस्ति तत्र गन्तुं शक्तिः । कोऽपि नोत्सहते भयात् तदानीं
यानेशेनोक्तं यो गच्छति तत्र तस्य दीनारशतं दास्यते । ततो नागदत्तस्तत्र गत्वा साहसी नमस्कारोच्चारपूर्वं
यानपात्रकर्षणाय भारण्डानुड्डापयामास । तत्पक्षोत्पन्नवातेनाब्धिजलं मूर्च्छितम् । ततश्चोर्मिभिरुत्पाद्य यानं बहिः
कर्षितम् । यानेशः स्वमन्दिरे गतः । नागदत्तः तत्र स्थितः क्षुधया पीडितो निर्गमनोपायं चिन्तयति । ततश्चिन्तितं
क्षुधया पीडित आर्त्या यदि मरिष्यामि तदा दुर्गतिर्भविष्यति मे, ततोऽधुनैव जले पतित्वा मरिष्ये । एवं विचिन्त्य
झम्पा दत्ता । पतितो नागदत्तो मत्स्यमुखे । मत्स्यो गच्छंस्तटं प्राप्तः । यावन्मत्स्येन मुखं विकासितं तावन्नागदत्तो
बहिर्निस्ससार । कस्मिंश्चिज्जलाशये गत्वा जलं पीत्वा स्वस्थीभूय फलास्वादं चकार । नागदत्तो भ्रमंश्च क्रमात्

स्वपुरं प्राप । धनदत्तश्रेष्ठिपार्श्वे दीनारशतं याचतेस्म । ततो धनदत्तो नार्पयति लोभात् कथयति च । त्वं कः केन दृष्टः कूटं न जल्प्यते, नागदत्तोऽवग्—यदि मम दीनारशतं नार्पयिष्यसि तदा राजपार्श्वे त्वां दण्डयिष्यामि । धनदत्तोऽवग्—यदि तव शक्तिर्भवति तदा स्वचिन्तितं कुरु । नागदत्तः परधनपराङ्मुखो न कस्यापि पतितं धनं गृह्णाति । इतस्तत्र प्रियमित्रसार्थपतेः सुता नागवसुरभूत् । अत्यंतरूपवती वर्द्धमाना क्रमात् प्राप्तसर्वकलाकुशला नागदत्तं वरीतुकामाऽभूत् । इत आरक्षकवसुदेवेन याचिता नागवसुः । प्रियमित्रसार्थपतिस्तां तस्मै न ददौ । ततो नागदत्तेन नागवसुः परिणीता । ततो वसुदेवो जातमत्सरो नागदत्तमनर्थे पातयितुं छलं विलोकयामास । एकदा राजवाहनिकाया व्यावर्तमानस्य नृपतेरनाभोगात् कुंडलं भमण्डले पतितम् । ततस्तत्रागतो नागदत्तोऽदत्तपरिहारव्रती तं कुण्डलं वीक्ष्य मार्गान्तरेण गत्वाष्टमीदिने कार्योत्सर्गे वने स्थितः । तदा स तलारक्षस्तं कुण्डलं दृष्ट्वा गृहीत्वा प्रतिमास्थस्य नागदत्तस्य पार्श्वे वस्त्रेणाच्छाद्य मुमोच विघ्ने पातयितुं तम् । राजा तद्रत्नमयं कुण्डलं विलोकयति यावत्तावद्वसुदेवोऽभ्येत्य जगौ । स्वामिन् राजमार्गेऽहमुपविष्टोऽभूवं यदा तदा नागदत्तेन नीचैर्भूत्वा किं गृहीतं न ज्ञायते । ततो राज्ञ आदेशात् नागदत्तं विलोकयितुं सेवका गताः । भ्रमन्तस्ते प्रतिमास्थं नागदत्तं दृष्ट्वा तत्पार्श्वे गताः । वस्त्रेणाच्छादितं कुण्डलं

नागदत्तपार्श्वे दृष्ट्वा तैः राज्ञः कथितं नागदत्तस्वरूपम् । राजा जगौ । एवंविधो यो दंभं कुर्वन्नीदृशं कर्म करोति, तस्य शूलारोप एव क्रियते । ततोऽवनीपतेरादेशाद्विडम्बनाकृते खरारूढं विधाय नागदत्तं राजसेवकाः शूलारोपकृते वध्यभूमिं नीतवन्तः । तैः वध्यवादित्रेषु वाद्यमानेषु नागदत्तः शूलिकायां यावत् प्रक्षिप्तस्तावच्छूला सिंहासनमभूत् । प्रहारा आभरणानि । एवं द्वित्रिवारे कृते सति राजा तत्रागाद्यावत्तावच्छासनदेव्या तत्पुण्याकृष्टया तत्रागतया व्योमस्थितया प्रोक्तम्—भाग्यवान् विद्यते नागदत्त एष नरोत्तमः । यतोऽसौ परकीयं स्वं न लाति प्राणात्ययेऽपि । अस्य पुरा धनदत्तेन दीनारशतं रक्षितम् । अधुना तु वसुदेवेनेदं छलं कृतम् । असौ परद्रव्यपराङ्मुखो विद्यते । एवमुक्त्वा गतायां शासनदेव्यां, राजा तं सन्मान्य पट्टकुञ्जरारूढं कृत्वा महोत्सवपुरस्सरं स्वगृहे आनीय बहुद्रव्यदानेन सन्मानयामास । यतः—" धम्मो मंगलमूलं, ओसहमूलं च सव्वदुरकाणं । धम्मो बलं च विउलं, धम्मो ताणं च सरणं च ॥ १ ॥ धम्मो मंगलमुक्किट्ठं, अहिंसा संजमो तवो । देवावि तं नमंसंति, जस्स धम्मे सया मणो ॥ २ ॥" ततो राज्ञा धनदत्तपार्श्वाद्दीनारशतं दापितं तस्मै । वसुदेवो देशत्यागं कारितो दुर्जनत्वात् । यतः " अधर्माल्लभते जन्तु–र्दुःखरोगादिसन्ततिम् । अल्पायुस्त्वमसन्मानं, दौर्भाग्यं निःस्वतां पुनः ॥ १ ॥ " ततश्चिरं

जैनधर्म्मसाराध्य प्रान्ते प्रव्रज्यां गृहीत्वा सर्वकर्म्मक्षयात् केवलज्ञानं नागदत्तः प्राप। ततो महीमण्डले भूरिभव्यजन-कुमुदवनं वचनगोभिः प्रबोध्य नागदत्तकेवलिचन्द्रमा मुक्तिं जगाम।

इति अदत्ताग्रहणे नागदत्तकथा समाप्ता ॥ ७ ॥

---

क्रोधमानादिदर्प्पाणां, यो न याति वशं मनाग्। स एव लभते मुक्तिं, नागदत्तकुमारवत् ॥ १ ॥

तथाहि—पूर्वं द्वौ कुमारौ साधू भूत्वा तपः कुर्वाणौ स्वर्गं गतौ। तत्रस्थाभ्यां ताभ्यां मिथः एवं प्रोक्तम्—यः प्रथमं देवलोकान्मर्त्यलोकं प्राप्नोति स देवेन स्वर्गादागत्य प्रतिबोध्यः। लक्ष्मीपुरे पुरे धनदत्तः श्रेष्ठी वसतिस्म। देवदत्ता पत्नी। अन्येद्युः पुत्रार्थं नागदेवतामाराराध श्रेष्ठी। प्रसन्नीभूय देवोऽवग्--तव पुत्रो भविष्यति। इतः क्रमात् स्वर्गादेकः साधुजीवदेवो दत्तपुत्रोऽभूत्। जन्मोत्सवं कृत्वा पिता नागदत्तेति नामादात्सूनोः। क्रमाद्द्वासप्ततिकलाकुशलोऽजनि। गन्धर्वनागदत्तोऽसौ ख्यातो गन्धर्वकौशलात्। भुजङ्गमकेलिव्यसनी जातः। इतोऽवधिज्ञानेन स्वमित्रं नागदत्तं व्यसनिनं मत्वा देवः प्रबोधयति। नागदत्तो मनागपि व्यसनं न मुञ्चति। सर्प्पान् खेलयति। अन्येद्युः सर्प्पैः करंडकं भृत्वा मित्रैः

सहोद्याने गन्धर्वनागदत्तः क्रीडां कर्तुं ययौ । तत्र यावत् सर्प्पान् खेलयति तावद्देवस्तं तत्र ज्ञात्वा गारुडिकरूपधरः
सर्प्पभृतकरण्डकं गृहीत्वा तत्रागात् । ततो मित्रैरुक्तं देवायं सर्प्पखेलको नरो विद्यते । ततस्तं गन्धर्वनागदत्तो जगौ—
किमत्र करण्डकेऽस्ति ? स सुरो गारुडिकवेषभृत् प्राह—सर्प्पाः सन्त्यत्र । ततो नागदत्तो जगौ—रमस्व मम सर्पैस्त्वं,
तव सर्पैरहमपि रेमे । ततो गारुडिकदेवो नागदत्तसर्प्पैः चिक्रीड । तदा तैः सर्प्पैर्दष्टोऽपि गारुडिको न
म्रियतेस्म । गन्धर्वनागदत्तस्तदाऽऽमर्षाज्जगौ—अहं तव सर्पैं रेमे । देवोऽवग्—भो महानुभाग ! मम सर्पैर्दष्टस्त्वं मरिष्यसि ।
नागदत्तो जगौ—मुञ्च त्वं स्वसर्प्पान् । ततस्तत्र मण्डलमालिख्य सर्प्पकरण्डकान् मुक्त्वा चतुर्दिशं गारुडिकः सुर आकार्य
लोकान् जगौ गंधव्वनागदत्तो—इच्छइ सप्पेहि खिल्लियं इहयं । सो जइ कहंवि खज्जइ, ममावि दोसो न दायव्वो ॥ १ ॥
ममायमहिरीदृशोऽस्ति । तरुणदिवायरनयणो, विज्जुलयाचंचलग्गजीहालो । घोरमहाविसदाढो, उक्का इव पज्जलि-
यरोसो ॥ २ ॥ एवंविधोऽहिर्विद्यते क्रूरः । डक्को जेण मणुस्सो, कयमकयं वा न याणइ बहुंपि । अद्दिस्समाणमच्चू,
कहमिच्छसि तं महानागं ॥ ३ ॥ मेरुगिरितुंगसिहरो, अट्ठफणो जमलजुअलजीहालो । दाहिणपासंमि ठिओ, माणेण
वियट्टई नागो ॥ ४ ॥ डक्को जेण मणूसो, थद्धो न गणेइ देवरायमवि । तं मेरुपव्वयनिहं, कहमिच्छसि तं महानागं

॥ ५ ॥ अस्मिन् करण्डके मायानागी समस्ति सा कीदृशी । सललियविल्लहलगई, सत्थियलंछणंकियपडागा । मायामई या नागी, नियडिकवडवंचणाकुसला ॥ ६ ॥ तं च सि वालग्गाही, अणोसहिबलो अ अपडिहत्थो अ । सा य चिर संचियविसा, गहणंमि वणे वसइ नागी ॥७॥ हुज्ज हु ते विणु वाऊ, तीसे दाढंतरं उवगयस्स । अप्पोसहिमंतबलो, नहु अप्पाणं विगिच्छिहिसि ॥ ८ ॥ इत उत्तरस्यामीदृग् नागोऽस्ति । उत्तरमाणो सव्वं, महालओ पुन्नमेहनिग्घोसो । उत्तरभागंमि ठिओ, लोहेण वियट्टई नागो ॥ ९ ॥ डक्को जेण मणूसो, होइ महासागरव्व दुप्पूरो । तं सव्वविससमुदयं, कहमिच्छसि तं महानागं ॥ १० ॥ ए एते पावाही, चत्तारिवि कोहमाणमायलोहा । जेहिं मया संततं, जरियमिव जगं कलकलइं ॥ ११ ॥ एएहि जो अ खज्जइ, चउहिवि आसीविसेहि पावेहिं । अवसस्स नरयपडणं, नत्थि सिआलंबणं किंचि ॥१२॥ एवं प्रोच्य तेन सुरेण गारुडिकेन ते सर्पा मुक्ताः । स गन्धर्वनागदत्तस्तैः सर्पैर्दष्टो मृतस्तदानीम् । गन्धर्वनागदत्तसेवका जगुरहो किं कृतं भवद्भिः सुरो जगौ मयाऽसौ वारितोऽपि न तिष्ठति तदा किं क्रियते । तस्य सुहृद्भिर्भेषजादि कृतं बहु परं गुणो नाभूत् तस्य । ततस्तद्भृत्याः पादयोः पतित्वा जगुरमुं जीवय प्रसद्य । देवोऽवोचत् दष्टोऽहमभूवं पुरा पुनः ईदृक्षया क्रियया जीवितः । मदुक्तां क्रियां करोत्येष यदि तदासौ जीवति । यदि तां क्रियामङ्गीकृत्य

अग्रतोऽसौ न पालयिष्यति तदा पुनर्मृत एव । एतच्चरित्रं शास्त्रकृद् गाथाभिराह—“ एएहि अहं खइओ, चउहि वि आसीविसेहि पावेहिं । विसानिग्घायणहेतुं, चरामि विविहं तवो कम्मं ॥१॥ सेवामि सेलकाणण-सुसाणसुन्नघररुक्खमूलाइं । पावाहीणं तेसिं, खणमवि न उवेमि विसंभं ॥ २ ॥ अच्चाहारो न सहइ, अइनिद्धेणवि सया उइज्जंति । जायामायाहारो, तं पि य गामं न भुंजामि ॥ ३ ॥ ओसन्नकयाहारो, अहवा विगइविवज्जिआहारो । जं किंचि कयाहारो, अवउज्झिय थोवआहारो ॥ ४ ॥ अह जो थोवाहारो, थोवयभणिओ अ थोवनिद्दो अ । थोवोवहिउवगरणो, तस्स हु देवा वि पणमंति ॥ ५ ॥ सिद्धे नमंसिऊणं, संसारत्था य जे महाविज्जा । वुच्छामि दंडकिरियं, सव्वविसनिवारणं विज्जं ॥ ६ ॥ सा चेयं विद्या। सव्वं पाणाइवायं, पच्चक्खाइत्ति अलियवयणं वा सव्वं अदत्तदाणं, अबंभं च परिग्गहं स्वाहा ॥७॥ एतच्छ्रुत्वोत्तस्थौ स मातापितृभिरुक्तं । अयमस्मत्पुत्रः स्वयमुत्थितः । ततस्तथैव पतितः । मातापितृभिरुक्तम् अमुं—जीवय यत्करोतु तत्करोतु । ततः पुनरपि उत्थापितः । ततो देवः प्राग्भवं तस्याचख्यौ । ततो जातिस्मृतिं प्राप्य दीक्षां ललौ । जगौ लोकाग्रे—चतुःसर्प्पतुल्याः क्रोधमानमायालोभाः, एतैः क्रोधाद्यहिभिर्यो न दष्टः स परमं पदं याति । अहं तु पूर्वमेतैः क्रोधाद्यहिभिर्ग्रस्तोऽभूवम् । अधुना त्वनेन देवेन प्राग्भवमित्रेणैतेभ्यः क्रोधाद्यहिभ्यो मोचितोऽहम् ।

तत एतेषां क्रोधाद्यहीनां वशे न गन्तव्यम् । ततो देवः स्वस्थाने गतः । मातापितरावपि स्वस्थाने गतौ । नागदत्तश्च क्रोधाद्यहीन् चतुरो निर्जित्य सर्वकर्मक्षयान्मुक्तिं ययौ ॥ इति नागदत्तकथा समाप्ता ॥ ८ ॥

मेअज्ज थूलिभद्दो, वयररिसी नंदिसेण सीहगिरी।
कयवन्नो अ सुकोसल, पुंडरिओ केसि करकंडू ॥ २ ॥

वाग्मी स्वाङ्गैः समं प्राणि-रक्षां कुर्वन् भवेत् भुवि । मेतार्यर्षिरिवाप्नोति, कल्याणकमलां द्रुतम् ॥ १ ॥

तथाहि । निजर्द्धिपराभूतपुरुहूतपुरे साकेतपत्तने चन्द्रावतंसभूपो न्यायेन राज्यं करोतिस्म । तस्य प्रिया सुदर्शना । सागरचन्द्रमुनिचन्द्रौ सुतौ । सागरचन्द्रस्य युवराजपदवी राज्ञा दत्ता । मुनिचन्द्रायोज्जयिनीराज्यं दत्तम् । क्रमात् तस्य चंन्द्रावतंसस्य प्रियदर्शना पत्न्यभूत् । सा गुणचन्द्रबालचन्द्रौ सुतौ सूतेस्म । चन्द्रावतंस इह लोके परत्र हितं धर्मं करोति । अन्येद्यू राज्यकार्यं सर्वं समाप्य सन्ध्यायां प्रतिक्रमणादि कार्यं कृत्वा कायोत्सर्गं ललौ राजा। यावदयं दीपको ज्वलिष्यति तावन्मया कायोत्सर्गः कर्तव्यः इति । तदा दास्या ध्यातमयं दीपो यदि विधास्यति तदा राज्ञो दुःशकः कायोत्सर्गो भविष्यति । ततस्तदा तया तैलं पुनः पुनस्तावत् प्रक्षिप्तं यावत् प्रातरभूत् । प्रातर्दीपे क्षयं गते

राज्ञा कायोत्सर्गः पारितः। ततोऽकस्मादायुषः क्षये राजा स्वर्गं गतः। तत्पट्टे सागरचन्द्रो राजा न्यायात् राज्यं चकार। स राजाऽन्यदा मातुः सपत्नीं प्रियदर्शनां प्रति प्राह–राज्यश्रीरियं लोकोऽपि तातं विना मां प्रीणाति नो तेन गुणचन्द्रायानुजन्मने राज्यश्रियं वितीर्याहं दीक्षां जिघृक्षामि यदि तवानुमतिर्भवेत्। तयोचे–वत्स धन्यस्त्वं यस्यासारे संसारे मनो न रज्यते। राज्यभारो महान् अस्य त्वदनुजस्य लघोर्दुःशकः तेनाधुना त्वया राज्यत्यजने न वक्तव्यम्। तया प्रियदर्शनया प्रबोधितो निर्विकल्पमना राजा प्रजाः पालयामास। क्रमात् प्रवर्द्धमानमहर्द्धिराजानमवलोक्य स्त्रीस्वभावसुलभामीर्ष्यामुदवहत् प्रियदर्शना। यतः "अन्यस्यापि कलेर्मूलान्, पोषिका एव योषितः। सापत्नकस्य किं वाच्यं, यस्य ता जन्मभूमयः ॥ १ ॥ यो ब्रह्मा विष्टपस्यास्य, स्रष्टेति श्रूयते जनैः। सोऽपि जानाति न स्त्रीणां, चित्तानि चरितानि च ॥ २ ॥" तस्मिन् निर्दोषेऽपि भूपतौ सा द्वेषं दधाति। वाह्यालीलीलयाऽन्येद्युर्वने राजा गतः। तत्रस्थस्य राज्ञो मोदकान् दास्या हस्तेन प्रातराशार्थं सुदर्शना प्रैषीत्। वर्त्मनि प्रियदर्शना सपत्नीजातत्वात् भूपं हन्तुकामा तान् मोदकान् हस्ते गृहीत्वा विषमिश्रितान् कृत्वा प्रीतिपुरस्सरं दास्यै ददौ। वने क्रीडां कृत्वा राजा यावद् बन्धुद्वययुक्तः सिंहासनेऽस्थात् तावद्दासी मोदकानानीय ददौ। राजा तु

करुणापरत्वात् क्षुधार्तयोर्बान्धवयोर्द्विधा कृत्वा ददौ । एतौ बान्धवौ लघू अहं तु वृद्धः । वृद्धस्य यथातथा खादनं न वरम् । ततो यावत्तौ मोदकं खादतः स्म तावदचेतनीभूतौ तौ बान्धवौ दृष्ट्वा दध्यौ राजा । न माता तु विषं ददाति पुत्राय तेनात्र केन कारणेन भाव्यं । ततस्तत्क्षणात् कुमारौ स्वर्णमानीय तत्पानीयं पायितौ राज्ञा । ततस्तौ प्रगुणौ कृतौ । दासीं पृष्ट्वा विषप्रक्षेपस्वरूपं ज्ञात्वा राजांतःपुरमध्येऽभ्येत्य विमातरं प्रति जगौ--धिग् त्वां या त्वमेवंविधं कूटं मम मृत्यवेऽकार्षीः । मयि कूटं रचितं त्वया तत् तव पुत्रयोरुपरि पतितमभूत् । मया तु प्रगुणीकृतौ । मम तु पुराऽपि राज्येच्छा नास्ति । त्वदुपरोधात् राज्यं कृतं—राज्येन किं क्रियते । येनात्रैवंविधा पापनिबन्धिनी श्वभ्रदायिनी बुद्धिर्जायते । ततो वात्सल्यात् प्रियदर्शनापुत्राय गुणचन्द्राय वृद्धायावनीराज्यं दत्त्वा स्वयं संयमं सागरचन्द्रो जग्राह । क्रमादेकादशाङ्गपारीणः सागरचन्द्रर्षिरभूत् । अन्येद्युः साधुसंघाटकोऽवंतीतः समागतः सागरचन्द्रर्षिणाऽवंतीस्वरूपं पृष्टो जगौ—तत्र मुनिचन्द्रराजपुत्रः सौवस्तिकनामपुरोहितपुत्रयुक्तः पाखण्डिनः साधूंश्च बाधते । तन्निशम्य गुरुमापृच्छ्य सागरचन्द्रर्षिः स्वयमवन्त्यामगात् । साधूनामुपाश्रये विश्रान्तो मुनिः । प्रातः स्वागमनस्वरूपं भ्रातृसुतप्रबोधनादियुतं प्रकाश्य मध्यान्हे निर्ययौ मुनिः । सागरचन्द्रराजर्षि राजगृहमध्ये गच्छन्तं दृष्ट्वा

लोका जगुः । महानुभाग ! माऽत्रराजगृहे गच्छ राजपुत्रो दुष्टोऽस्ति । पुरोहितपुत्रश्च मुनीनुपद्रवति तेनान्यगृहे गच्छ । मुनिं राजभुवने प्रविशन्तं दृष्ट्वा तावागत्य जल्पतःस्म । भो मुने आवाभ्यां समं त्वया रम्यते ? मुनिर्जगौ रम्यते मया । ततो रहसि गत्वा चतुःशालायां कुमारौ मुनिना समं क्रीडां कर्तुं प्रवृत्तौ । यथातथा जल्पन्तौ धर्मावहीलनं कुर्वाणौ युद्धप्रपञ्चेन मर्माभिघातेन मुखोद्वान्तफेनौ कृत्वा तद्देहात् सन्धीरुत्तार्य ततो निःसृत्य शनैर्बहिरुद्याने प्रतिमया तस्थौ मुनिः । इतो राजा तौ तथा क्रन्दन्तौ ज्ञात्वा मुनिकृतं पराभवं च रुष्टो जगौ—भो भटा येन मुनिना एतौ कुमारावीदृशीं दशां प्रापितौ तं विलोकयत । ततो राजपुरुषैर्मुनिं प्रतिमास्थं वीक्ष्य राजाग्रे निवेदितम् । आगत्य वने राजा महामुनिं वीक्ष्य प्राह भो यते ! किमीदृक् पापं कृतम्? यतिराह—राजन् महाकुले जातावावां किं यतीनां मारणाद्यन्यायः क्रियते । इति श्रुत्वा राजा लज्जया नत्वाऽधोमुखोऽभवत् ! धर्मलाभाशिषं दत्त्वा राजर्षिराचष्ट । भो चन्द्रावतंसपुत्र ! तव यत्यवगणनावहीलनादि न युज्यते ॥ यतः—"हीलिताः साधवोऽत्यन्तं, ददते नरके गतिम् । आराधिताः शिवं पुंसां, विश्राणयन्ति सन्ततम् ॥ १ ॥" तव पुत्रो वाचंयमादीनामवहीलनां करोति । त्वं तु सहसे स्वं भ्रातरं यतिं ज्ञात्वा राजा जगौ—एतौ कुमारौ मुग्धौ । अतः परं केषाञ्चित् साधूनामवहीलनां

न करिष्यतः। मुनिर्जगौ यद्येतौ संयममङ्गीकुरुतः तदाऽहं मुञ्चामि नो चेत् स्वकृतपापफलमनुभवताम् । ततो राजा तं भ्रातरं भक्त्या प्रणम्य स्वपुत्रपार्श्वे आनिनाय। राज्ञोक्तं भो पुत्र ! अयं यतिस्तव पितृव्यः त्वं तु यतीनामपराधं कुरुषे। यदि युवां दीक्षां गृहीष्यथः, तदाऽसौ युवयोः शरीरं स्वस्थं करोति नो चेदनया पीडया स्वयमेव मरिष्यथः। ततोऽतीव जातवेदनौ तौ जगदतुः—ऋषिप्रोक्तमावां करिष्यावः । ततो मुनिना बन्धनात् मुक्तौ दीक्षां ललतुः। राजाऽपि सागरचन्द्रर्षिमुखात् धर्मं श्रुत्वा सविशेषं पुण्यं कुर्वन् सप्तक्षेत्र्यां स्वां श्रियं व्ययति। द्वावपि राजपुरोहितपुत्रौ शुद्धं चारित्रं पालयतःस्म। द्विजजातित्वात् पुरोहितपुत्रोऽथ किमपि मलादि वीक्ष्यावग्—साधुधर्मे न शुद्धतेति जुगुप्सां करोति । द्वावपि पालितसंयमौ क्रमान्मृत्वा सुरावभताम् । स्वर्गसुखमनुभवन्तौ द्वावपि पूर्वभवस्नेहान्मिथः प्रोचतुः यः पूर्वं स्वर्गाच्च्युत्वा नरो भवेत् स नरः स्वर्गस्थेन देवेन समेत्य धर्मे बोधनीयः । पूर्वं विप्रजीवः स्वर्गाच्च्युतो राजगृहे पुरे चाण्डालकस्य कुटुम्बिन्याः कुक्षाववततार। सा चाण्डालप्रिया कस्यापि श्रेष्ठिनो गृहे कर्म कुर्वती श्रेष्ठिपत्न्या मांसभक्षणदोहदपूरणार्थं मांसादि ददाना श्रेष्ठिप्रियायाः प्रीतिभाजनं जाता। अन्यदा कृष्णास्या श्रेष्ठिपत्नी चाण्डालप्रियया जल्पितेति। सखि स्वामिनि किं तव मनो दूयते किं

किं कस्याग्रे मनोदुःखं कथ्यते । यदपत्यं मम भवति
तत्र भर्त्राऽपराधश्चक्रे अथवाऽन्येन केनचित् ?। श्रेष्ठिपत्नी जगौ—किं कस्याग्रे मनोदुःखं कथ्यते । मम पुत्रा एव जायन्ते ।
तन्न जीवति कर्मवशात् किं करोमि । चाण्डालिकाऽवग्—मम तव च गर्भोऽधुना समस्ति । मम पुत्रा एव जायन्ते ।
ततः प्रच्छन्नवृत्त्या आत्मनोर्गर्भयोर्व्यत्ययः क्रियते । ततस्ताभ्यां स्त्रीभ्यामपत्ययोर्जातयोर्व्यत्ययः कृतः । यदा
मेतपत्नी श्रेष्ठिन्याः पार्श्वे समेति तदा श्रेष्ठिन्या प्रोच्यते—त्वदीयोऽयं पुत्रो वर्धते । ततो मेतार्य इति नाम पुत्रस्य
जन्ममहपूर्वं श्रेष्ठिना दत्तम् । श्रेष्ठिन्या लाल्यमानः क्रमान्मेतार्यो नन्दनः पाठ्यमानः शास्त्राणि षोडशाब्दोऽभूत् ।
इतः स्वर्गस्थेन पूर्वभवमित्रेण सुरेणाभ्येत्य मेतार्याग्रे प्रोक्तं स्वं स्वरूपम् । आवाभ्यां स्वर्गस्थाभ्यां या प्रतिज्ञा कृताऽभूत् सा
स्मरति न वा । संसारोऽयमसारो विद्यते दीक्षां गृहाण । अत्रोपदेशः—"पुरन्दरसहस्राणि, चक्रवर्तिशतान्यपि । कवलीकृतानि
कालेन, प्रदीपा इव वायुना ॥ १ ॥ कायः संनिहितापायः, सम्पदः पदमापदाम् । समागमाः स्वप्नसमाः, सर्वमुत्पादितं चलम्
॥२॥" तेन देवेन सदा मेतार्यो बोध्यमानोऽपि वैराग्यं न गतः । इतो महेभ्यानामष्टभिः पुत्रीभिः समं मेतार्यस्य पित्रा
विवाहो मेलितः । ततः शुभेऽहनि पिता महेभ्यानामष्टौ पुत्रिका मेतार्यं पर्यणाययत् । ततः स्वगेहं प्रति शिबिका-
रूढो नवोढप्रियासहितो मेतार्यः सदुत्सवपुरस्सरं राजमार्गे चचाल । इतः स मेतो मेतार्यप्राग्भवमित्रसुराधिष्ठितदेहो मेतां

प्रियां प्रति जगौ। यद्यात्मनः सा पुत्री मृता नाभविष्यत् तदा तस्या अधुना विवाहमहोत्सवमीदृशमहमपि व्यधास्यम्। तस्याः पुत्र्या विवाहेन मनोरथं सफलमकरिष्ये। मेता स्वपुत्रस्वरूपं जगौ—ततः स मेतो रुष्टः सन् राजमार्गे समेत्य तं मेतार्यं शिबिकाया उत्तार्य लोकसाक्षिकं जगौ—रे पुत्र त्वं कथमसदृशकुलोत्पन्नाः कन्या एताः पर्यणैषीः। आत्मनः कुलस्य सदृशा एव कन्या परिणीयते। ततः एताः कन्या विहायात्मनो गृहमलङ्कुरु। आत्मनः कुलस्य सदृशां कन्यामङ्गीकुरु। पश्यतां सर्वलोकानां स मेतः तं मेतार्यं स्वगृहं नीतवान्। ताः सर्वाः कन्या माता–पितृभिः स्वस्वगृहे नीताः। ततः प्रत्यक्षीभूय देवो रहसि जगौ। त्वया पूर्वं स्वर्गे मया सहोक्तमभूत्। यः पूर्वं स्वर्गाच्च्युत्वा नरो भवेत् स सुरेण प्रतिबोध्यः। त्वं तु प्रथमं च्युतः स्वर्गात्। मनुष्यत्वं च प्राप्तं त्वया। मया प्रतिबोधितोऽपि न प्रबुद्धः तेनेदं कृतम्। मनुष्यजन्म दीक्षाग्रहणेन सफलीकुरु। सोऽपि मेतार्यः प्राह। त्वयाऽहं विषयासक्तो यः प्रतिबोधितस्तद्वरं कृतम्। यत्तु लोकमध्येऽहं विगोपितस्तन्मेऽतीव दुनोति। देवोऽवग्– संसारस्तु विरसोऽस्ति। यतः—

"प्राणेभ्योऽपीह येऽभीष्टा, यैर्विना न क्षणं रतिः। वियोगः सह्यते तेषा–महो कष्टा भवस्थितिः॥१॥ नान्तकस्य प्रियः कश्चि-न्न लक्ष्म्याः कोऽपि वल्लभः। नातो जरायाः कोऽप्यस्ति, यूयं तदपि सुस्थिताः ॥२॥" मेतार्यः प्राह—त्वत्कथितं करिष्ये। यदि

स कलङ्क उत्तरति मम । तदा द्वादशाब्दीं भोगान् भुक्त्वा त्वदुक्तं निश्चयात् करिष्ये । त्वं तु कृपापरोऽसि। ततः प्राग्भवदेवः प्रीतः सन् रत्नौघोत्सर्गिणं छागं दत्त्वा कांचिद्विद्यां चोक्त्वा स स्वर्गेऽगमत् । ततो यानि रत्नानि स छाग उत्ससर्ज । तै रत्नैः स्थालं भृत्वा मेतः पुत्रवचसा भूपपार्श्वे तं प्राभृतीकृत्य स्वसुतार्थं कन्यां याचते । ततो मन्त्रिभिर्हक्कितो मेतः प्रतिदिनं तथा करोति । तानि रत्नानि सर्वदिक्प्रसरतेजांसि वीक्ष्य राजा हृष्टोऽपि निजाङ्गजां न दत्ते । अन्यदाऽभयेनाभयं दत्त्वा रत्नप्राप्तिवृत्तान्तं पृष्टो मेतस्तं च्छागस्वरूपं प्राह । ततोऽभयेन तं छागं रत्नौघोत्सर्गिणं दृष्ट्वा राज्ञोऽग्रे प्रोक्तम् । ततः स्वगृहे आनीतोऽभयेन छागो दुर्गन्धोत्सर्गी (जातः)। पश्चान्मेतायार्पितः । उचे चाभयः स्वामिन् मेतस्य गृहे छागो रत्नौघं देदीप्यमानं यद् व्युत्सृजति । तत्कस्यापि देवस्य चेष्टितं तेनायं न मेतश्चाण्डालः किन्तु कोऽपि सत्तमः पुमान् । तेन परीक्षा क्रियते । ततोऽभयकुमारस्तं मेतमाकार्य तातवचोद्वारेण प्राह—श्रीमहावीरो वैभारगिरौ समायातोऽस्ति । तत्रान्तरा यो विषमो मार्गोऽस्ति । स च त्वया विशिष्टपद्यानिष्पादनात् सुगमः कर्तव्यः । ततस्तेन मेतेन देवतासानिध्यतः क्षणादभयोक्तं कृतम् । तथाऽद्यापि राजगृहे दृश्यते । भूपतिनिर्देशात् प्राकारो हिरण्यमय उत्तुङ्गशृङ्गशृङ्गारोऽभयकुमारेण मेतपार्श्वात् कारितः । अभयोऽवग् भो मेत यदि ते सुतं समुद्र-

प्रवाहे स्नपयसि तदाऽहं तव पुत्राय भूपसुतां दास्यामि । ततो मेतेन देवपार्श्वात् समुद्रप्रवाहमानीय सर्वलोकसाक्षिकं मेतार्यः स्नापितः । तथाऽपि राजा न दित्सति तदाभयोऽवग् पूर्वं किमुत्तममध्यमविवाहो नाभूत् । यतः—"एकवर्णमिदं सर्वं पूर्व० आसीत् ॥१॥" इति अभयोक्तं श्रुत्वा श्रेणिकः पुत्रीं ददौ । अन्या अपि अष्टौ पूर्वं वरिताः कन्या मेतार्यमङ्गीचक्रु । राज्ञा धवलगृहमर्पितम् । नवभिः प्रियाभिः सुखमनुभवन् मेतार्यो द्वादशाब्दीमतिचक्राम । ततः पुनरपि देवेन बोधितः । ततः प्राप्तवैराग्यो मेतार्यः स्वपुत्रेभ्यः स्वां श्रियं वितीर्य सदारो गुरुपार्श्वे व्रतं जग्राह । क्रमेण मेतार्यो जिनकल्पविहारं प्रपेदे । अन्यदा पुरमध्ये गोचर्यायां भ्रमन् मेतार्यः स्वर्णकारगृहे जगाम । तदा श्रेणिको जिनपूजां कुर्वन् त्रिसन्ध्यं अष्टोत्तरशतेन स्वर्णमययवसमूहेन स्वस्तिकं करोति देवाग्रे नित्यम् । तदानीं स्वर्णकारस्तान् यवांस्तत्र हट्टे मुक्त्वा कार्यार्थं गृहमध्ये गतः ततोऽकस्मात्तत्रागतः क्रौञ्चो यवभ्रान्त्या तान् स्वर्णयवान् मुनेः पश्यतो जगाल । ततो बहिरागतो हेमकारो यवानपश्यन् मुनिं पृष्टवान् । क गता मे यवाः ? । त्वया गृहीता अथवा अन्येन केनचिद्गृहीताः । स मेतार्यः पापभीरुर्दध्यौ । यदि यवगमनस्वरूपं कथ्यते तदाऽसौ क्रौञ्चं हन्ति । ततो मौनमाश्रितो मुनिः । कृतमौनं मुनिं चोरस्त्वमिति जल्पन् स्वर्णकृदार्द्रवध्रेण तस्य मस्तकं वेष्टयामास दृढम् । ततस्तस्य जीवदयां

ध्यायतो निर्गतचक्षुपस्तदोत्पन्नकेवलज्ञानस्य मुनेरायुषः समाप्ते तत्क्षणमेव मुक्तिगमनमभूत् । स क्रौञ्चः कुञ्चितग्रीवो विचिन्वन्नङ्गणे गतो दास्या भापितोऽकस्माद्यवांच्छकृद्द्वारेण मुमोच । ततस्तं यतिं मृतं यवान् क्रौञ्चगलितमुक्तान् वीक्ष्य लोकाः प्रोचुः । अयं यतिर्भूपतिजामाताऽनेन स्वर्णकारेण मुधा हतः । तेन राजा एनं सकुटुम्बं हनिष्यति शूलाप्रक्षेपादिना । ततो राजा हतं यतिं ज्ञात्वा तं सकुटुम्बं हन्तुं स्वसेवकान् प्रेषयामास । यावत्ते राजप्रेषितास्तत्र सौवर्णिकगृहे समायातास्तावत् स्वर्णकृत् समुत्पन्नोत्पातिकबुद्धिर्भीतश्च यतिवेषं गृहीत्वाऽस्थात् । यतः—"लज्जातो भयतो वितर्कविधितो मात्सर्यतः स्नेहतो, लोभादेव हठाभिमानविनयशृङ्गारकीर्त्यादितः । दुःखात् कौतुकविस्मय-व्यवहृतेर्भावात् कुलाचारतो, वैराग्याच्च भजन्ति धर्ममलं तेषाममेयं फलम् ॥ १ ॥" ततस्तैः सुभटै राज्ञः पार्श्वे गत्वोक्तम् । स्वामिन् स्वर्णकृत् सकुटुम्बो व्रतं गृहीत्वा भीतोऽस्थात् । ततो राजा तत्रैत्यावग्—भो स्वर्णकृत् त्वया यतिर्हतो महत्पापं लग्नं चारित्रग्रहणात् मया मुक्तोऽसि । सांप्रतं यदि त्वयाऽन्येन केनाचित् कुटुम्बमध्येन संयमो मोक्ष्यते तदा सकुटुम्बं त्वां हनिष्यामि । ततः स सौवर्णिकः श्रीवीरपादान्ते गत्वा दीक्षां लात्वा क्रमात् स्वर्गसौ-ख्यभागभूत् ।

॥ इति श्रीमेतार्यवाचंयमकथानकं समाप्तम् ॥ ९ ॥

सन्तोषैश्वर्यलिप्सूनां, न राज्ये रमते मतिः । त्यक्त्वा मन्त्रिपदं स्थूल-भद्रो भेजे यथा व्रतम् ॥ १ ॥

तत्कथाचेयं । पाटलीपुरे नवमनन्दराज्ञः कल्पवंशावतंसः शकडालमन्त्री बभूव । तस्य लक्ष्मीवती पत्नी । तयोः पुत्रौ स्थूलभद्रश्रीयकाभिधौ जातौ । सप्त पुत्र्यश्च ता इमाः इत्यादिसम्बन्धः श्रीयककथाया ज्ञातव्यः । शकडालाभिधे मन्त्रि-नायके त्रिदिवं गते । नन्दभूपो जगादेति, श्रीयकं तत्सुतं प्रति ॥ १ ॥ मन्त्रिपदं क्रमागतं त्वं गृहाण । श्रीयको जगौ—मम भ्राता वृद्धः स्थूलभद्रः कोशावेश्यागृहे समस्ति । तस्य तत्र तिष्ठतो द्वादशाब्दी जाता । ततो राज्ञा स्थूलभद्रो वेश्यागृहादाकारितः क्षितिपसमीपे गतः । राजानं नत्वा यावत्स्थूलभद्रोऽग्रे ऊर्ध्वं स्थितः तावद्राज्ञा सबहुमानं प्रोक्तम्—तव पिता दिवं गतः तेन क्रमादागतमपि पदं त्वं गृहाण । स्थूलभद्रोऽवक्—स्वामिन्नादेशः प्रमाणं परं विमृश्यैव गृह्यते मन्त्रिपदं मया । राज्ञोक्तं विचारय, ततोऽशोकवनमध्ये गत्वा स्थूलभद्रो विमृशति । हस्ते व्यापारे गृहीते पारवश्यं भवति । यदि राज्ञश्चित्तानुवर्तने न चल्यते । तदा क्षणमध्ये राजा रुष्टः प्राणान्नयति । यतः "जीवन्तोऽपि मृताः पञ्च, श्रूयन्ते किल भारते । दरिद्रो व्याधितो मूर्खः, प्रवासी नित्यसेवकः ॥ १ ॥ ते धन्याः सुधियस्ते च, ये तद्भोगसुखं तदा । विमुच्य संयमं मुक्ति-सुखदं लान्ति हेलया ॥ २ ॥" एवं विमृश्य लोचं

कृत्वा रजोहरणमुखवस्त्रिके गृहीत्वा राजपार्श्वे गत्वा धर्म्मलाभं ददौ । राज्ञोक्तं किमालोचितं स्थूलभद्रोऽवग्—आसमन्तालोचितं लोचकृतो मया व्यापारेण सृतं ममेत्युक्त्वाऽवग् —"हस्ते मुद्रा मुखे मुद्रा, मुद्रा स्यात् पादयोर्द्वयोः । ततः पश्चाद्गृहे मुद्रा, व्यापारः पञ्चमौद्रिकः ॥ १ ॥" इत्युक्त्वा श्रीधर्मलाभाशिषं दत्त्वा श्रीसम्भूतिविजयाचार्यपार्श्वे गत्वा सर्वसामायिकोच्चारपूर्वकं व्रतमादित श्रीस्थूलभद्रः । इतो राज्ञा नन्देन श्रीयकस्य मन्त्रिपदं दत्तम् । स्थूलभद्रवियोगार्तां वेश्यां श्रीयकः प्रबोधयामास शोकमुत्तारयामास तस्याः । स्थूलभद्रस्तु सम्भूतिविजयाचार्यांघ्रिसेवया तपः कुर्वन् सूत्रसूत्रार्थे पपाठ ! अन्यदा तपात्यये शिष्यत्रयं सम्भूतिविजयपार्श्वे एवमभिग्रहं ललौ । एकेनोक्तं सिंहगुहायां मया कायोत्सर्गेण चतुर्मासी स्थातव्या १ द्वितीयेनोक्तं मया दृग्विषाहिबिलद्वारे चतुर्मासी कायोत्सर्गेण स्थातव्या २ तृतीयेनोक्तं मया कायोत्सर्गेण कूपभारपट्टे चतुर्मासी स्थातव्या ३ स्थूलभद्रश्चतुर्थोऽवग्—भगवन् कोशावेश्यागृहे चित्रशालायां मया षड्रसान्नपरेण स्थातव्या चतुर्मासी ४ सम्भूतिविजयेनोक्तं, गच्छत यूयं स्वेहितस्थानेषु । यत्नतः स्थेयं भवद्भिः धर्मपरैः । आद्या ऋषयस्त्रयोऽपि सिंहगुहाद्वारदृग्विषाहिबिलद्वारकूपभारपट्टेषु ययुः । स्थूलभद्रस्तु गुरुं नत्वा कोशावेश्याशालायां गतो यावत्तावत् कोशा वेश्या दृष्ट्वा कृताञ्जलिरभ्युत्थाय

तं ऋषिं प्रति स्वागतं प्राह–आगच्छात्र तिष्ठ त्वं स्वामिन्नादेशं देहि यत्तव रोचते तदहं करोमि। स्थूलभद्रोऽभ्यधाद्भद्रे ! धर्मलाभोऽस्तु ते। चित्रशालां चतुर्मासस्थित्यै त्वं ममार्पय। तया वेश्यया सज्जितायां चित्रशालायां तयाऽनुज्ञातो जितेन्द्रियः स्थूलभद्रः स्थितः। ततो वेश्यया ध्यातं सुकुमारदेहोऽयं व्रतभाराक्षम इहायातो लज्जया न किञ्चिद्वक्ति स्थितः। क्रमाद्वक्ष्यति श्रियं दास्यति च मह्यम्। अस्य कलां शृङ्गाररससागरे मज्जयिष्याम्यहं क्षणात्। ततः षड्रसाहारैर्वेश्या तमभोजयत्। अशनकाले च तदुद्धरितानि स्वयं सा भुनक्ति, संस्कृतानि शम्बाकणशवानेया धान्यभेदास्त्रयो, दुग्धघृतदधिआरनालतक्रमद्यानि इति षट् रसा–मूलकन्दइक्षुलतापत्रपुष्पफलानि इति षट् व्यञ्जनानि भोज्यानि मुनये वेश्या ददौ। मनोरथाढ्या भ्रूचाप–दुःसहा चलदृग्हया। मुनिं गजगतिः साऽऽप, धर्म्मं कामचमूरिव ॥ १॥ बहिर्दृशा बहिश्चारु-तां वीक्ष्य न स रक्तवान्। अन्तर्दृशाऽन्तर्मलिनां, दृष्ट्वा तां च विरक्तवान् ॥ २ ॥ वेश्या यद्यत्तं मोहयितुमुपक्रमं चक्रे तत्तन्निष्फलमभूत्तस्मिन्। यतः–"व्योम्नीव चित्ररचनं, पयसा वाऽग्निदीपनम्। तस्या विलसितं सर्वं, तत्र तस्मिन् मुधाऽभवत् ॥ १ ॥ नित्यं नित्योदयच्छोभा, तत्क्षोभाय दिने दिने। एवं चकार सा ध्यान–रसान्न च चचाल सः ॥ २ ॥ तस्मिन् तदुपसर्गाद्यै-र्ध्यानं प्रत्युत दिद्युते।

सत्त्वं वीरवरवैरि-प्रहारनिवहैरिव ॥ ३ ॥ " अथ प्रागिव मोहं दिदर्शयिषती वेश्या तस्यर्षेः पादयोः पपात मानयितुं
भोगेच्छया । तदा स्थूलभद्रो जगौ—भो महाभाग्ये भोगा जीवैर्बहुशो भुक्ताः परं न तृप्तः यतः—" सल्लं
कामा विसं कामा, कामा आसीविसोपमा । कामे य पत्थयमाणा, अकामा जंति दुग्गइं ॥ १ ॥ रागोऽयं
द्वीपपोपाय, चेतनारहितेष्वपि । मञ्जिष्टाकुट्टनस्थानं, भृशं तापसहा(हम)निशम् ॥ २ ॥ मुखे पुरीषप्रक्षेपं, तथा
पाषाणप्रेपणम् । एकेन्द्रियाऽपि सहन्ते, मृत्तिका रागदोषतः ॥ ३ ॥ विषयगणः कापुरुषं, करोति वशवर्त्तिनं
न सत्पुरुषम् । बध्नाति मशकमेव हि, लुतातन्तुर्न मातङ्गम् ॥ ४ ॥ ( इत्थीण जोणिमज्झे गब्भगया चेव
हुंति नव लक्खा । इक्को य दो व तिन्नि व, लक्खपुहुत्तं च तुक्कोसं ॥ १ ॥ इत्थिण जोणिमज्झे, हवन्ति बेइंदिया
असंखा, य । तुप्पज्जंति चयंति य, समुच्छिमा तह असंखा ॥ २ ॥ ) मेहुणसन्नारूढो, नवलक्ख हणेइ
सुहुमजीवाणं । इय आगमवयणाओ, हिंसा जीवाणमिह पढमा ॥ ५ ॥ " इत्यादि धर्मोपदेशेन स्थूलभद्रोक्तेन
वेश्या स्वं कुलक्रमागतं धर्म्मं त्यक्त्वा श्रावकधर्म्मं जग्राह । न भाग्यं विना कुमार्गत्यजनं भवति । यतः " ये भवन्ति
नरा नार्यः, सन्मार्गगामिनः स्फुटम् । ते च योग्याः प्रजायन्ते, मुक्तिश्रीपतयः क्रमात् ॥ १ ॥ " तस्य स्थूलभद्र-

स्यर्षेरिन्द्रियजयादिजयोत्कर्षदर्शनादेवमभिग्रहं वेश्या ललौ। राजा प्रसन्नः सन् यं भोगाय मत्पार्श्वे प्रेषयति तं विना ममान्ये पुरुषाः सहोदरा भवन्ति अद्यप्रभृति। इतश्चतुर्मासान्ते व्यूढाभिग्रहास्त्रयो यतयो गुरुपार्श्वे प्रतिचेलुः। त्रयोऽप्यागत्य गुरुपादान् नेमुः। ततः श्रीसम्भूतिविजयसूरयो जगुर्यूयं अहो दुष्करकारकाः। ततः स्थूलभद्रमायातं वीक्ष्य स्वयमुत्थाय दुष्करकारक दुष्करकारकेति श्रीगुरुर्जगौ। त्रयोऽपि यतयः पूर्वायाता दध्युरिति। वयं सामान्यकुलोद्भवाः। अयं तु स्थूलभद्रः शकडालमन्त्रिपुत्रः। तेन गुरुभिरस्मास्वेवं प्रोक्तम्। स्थूलभद्रे षड्रसाहारादि भोक्तरि। यतः—" कोशावर्ष्मणि सज्जितेऽङ्कखलके नेपथ्यवृत्त्यावृते, द्वात्रिंशन्मितलक्षणैर्वलयिते तच्छुकशङ्कासुरैः। बोधास्त्रेण निहत्य विश्वजयिनं श्रीस्थूलभद्रः स्मरं, लेभे दुष्करकारकेति मुदिताद्दिप्साप्रसादं गुरोः॥ १ ॥" दुष्करकारक दुष्करकारक इति जगदे। गुरूणामपि एकेऽधिकाः एके स्वल्पा न्यूनाः। अग्रेतनचतुर्मास्यां वयं दुष्करदुष्करकारका भविष्याम इति निश्चित्य कष्टेनाष्टौ मासान् नीत्वा सिंहगुहास्थो मुनिः श्रीस्थूलभद्रव्यूढमभिग्रहं ययाचे। गुरुभिरुक्तं-स्थूलभद्रस्य स्पर्द्धा का तवेयं महानुभाग स्थूलभद्रेण यत् कृतं तदन्यो न कोऽपि कर्तुं शक्नोति। अर्कादन्यो दिनं कः करोति, चन्द्रादन्यः कः सुधां क्षरति, जलदादन्यः कः शस्यं निष्पादयति, चक्रवर्तिनोऽन्यः कः षट्खंडं साध-

यति । अयमभिग्रहो गृहीतस्त्वया तव प्राक्कृततपसो नाशाय भविष्यति। भारसहस्रमितस्य गुडस्य नाशाय तुम्बिकाकलिकेव । एवं श्रीगुरुभिर्निषिद्धोऽपि गृहीतस्थूलभद्रव्यूढाभिग्रहः सिंहगुहामुनिः कोशागृहं प्राप स्थूलभद्र इव चित्रशालायां स्थितश्च । स्थूलभद्रस्पर्द्धयाऽत्रैष समागादिति ध्यात्वा वेश्यया षड्रसाहारैरभोजि सः । ततः कृताद्भुतशृङ्गारा भृङ्गाराभ्युन्नतस्तनी हावभावादिविलासपरा कोशा मुनिपार्श्वेऽभ्येत्यास्थात् । तां तादृशीं वीक्ष्य स मुनिश्चुक्षोभ चेतसि। यतः—"चार्वङ्ग्या को न पात्येत, कीलया को न दह्यते । को न मुह्येत लक्ष्मीभिः, को न याति विधेर्वशम्॥ १ ॥" स्मरातुरं भोगं याचमानं तं मुनिं वीक्ष्य वेश्याऽऽचष्ट। अर्थो विलोक्यते अर्थं विना कोऽपि ईदृग्भोगं भोक्तुं न शक्नोति । स्मरातुरः साधुः प्राह—अधुना मम पार्श्वे नास्ति धनं सुन्दरि ? मया तुभ्यं दास्यते । ततो वेश्या तं प्रतिबोधयितुं प्राह—यदि भोगेच्छाऽस्ति तदा नेपालदेशे व्रज। तत्रापूर्वस्य साधो रत्नकम्बलं लक्षमूल्यं राजा दत्ते। तत्र गत्वा तमानय ततश्चेहितं कुरु। ततः कामातुरो मुनिश्चतुर्मासमध्येऽपि नेपालदेशे गतः। नृपाद्रत्नकम्बलं लब्ध्वा चलितः। वर्त्मनि तस्य गच्छतः पल्ल्यां कीरोऽवग् । लक्षं याति याति । चौरैस्तत्रागत्य रत्नकम्बलं गृहीतम् । ततः पश्चाद् गत्वा रूपपरावृत्तिं कृत्वा पुना रत्नकम्बलं भूपात् प्राप मुनिः। वंशयष्टिमध्ये क्षिप्त्वा पुनश्चलितो मुनिस्तस्मिन्

पूर्ववच्चौरैर्विलोकितो द्वित्रिवारं कीरवचनात्। न लब्धं रत्नकम्बलं, कष्टेनानीय कोशावेश्यायै ददौ मुनिः। वेश्या तं रत्नकम्बलं गृहप्रणालिकापङ्के निःशङ्कं न्यधात्। ततो मुनिःप्राह—भो वेश्ये महामूल्यमिदं रत्नकम्बलं मुधा त्वया कथं खाले क्षिप्तम्। वेश्ययोक्तं किमिदं शोचसि मूढ बहुकष्टोपार्जितं मानुषं जन्म शुद्धचारित्रयुतं स्वं—सदेहाशुचिमलपङ्के क्षिपन् किं न शोचसि। ततस्तस्य स्मरातुरस्य कामरागो विषोपमोऽभूत्। वेश्यासमुत्पादितसंवेगः स मुनिर्जगौ——"पतितोऽहं महामोह-जालेऽनंतासुखप्रदे। उद्धारितस्त्वया वेश्ये, सत्प्रपञ्चविधानतः ॥ १ ॥ अघानि निरघे ! हन्तु, मे तिचारभवान्यहम्। गुरुप्रायें गुरुं यामि, धर्मलाभोऽस्तु तेऽन्वहम् ॥२॥ कोशाप्युवाच युष्माकं, मया ब्रह्मव्रतस्थया। आशातना कृता बोध—कृते सा क्षम्यतां प्रभो ॥ ३ ॥ गिरौ गुहायां विजने वनान्तरे, वासं श्रयन्तो वशिनः सहस्रशः। हर्म्येऽतिरम्ये युवतीजनान्तिके, वशी स एकः शकडालनन्दनः ॥ ४ ॥ योऽग्नौ प्रविष्टोऽपि हि नैव दग्धः, छिन्नो न खड्गाग्रगतः प्रवीरः। कृष्णाहिरन्ध्रेऽप्युषितो न दष्टो, नाक्तोऽञ्जनागारनिवास्यहो यः ॥ ५ ॥ वेश्या रागवती सदा तदनुगा षड्भी रसैर्भोजनं, शुभ्रं धाम मनोहरं वपुरहो नव्यं वयः सङ्गमः। कालोऽयं जलदाविलस्तदपि यः कामं जिगायादरात्, तं वन्दे युवतिप्रबोधकुशलं श्री स्थूलभद्रं मुनिम् ॥ ६ ॥" वेश्यामेवं वदन्तीममोघधर्माशिषा

प्रमोद सिंहगुहामुनिर्गुरुपार्श्वे जगाम । गुरुभिरुक्तं महानुभाग ! मया त्वं निषिद्धस्तत्र गच्छन् । तत्र यत् स्थूलभ-
द्रेण कृतं तत् कोऽपि कर्तुं न शक्नोति । स्थूलभद्रसमः कोऽपि नास्ति । यतः एवं स्तुतिं कुर्वन्ति कवयः । "रे काम वामनयना
तव मुख्यमस्त्रं, वीरा वसन्तपिकपञ्चमचन्द्रमुख्याः । त्वत्सेवका हरिविरंचिमहेश्वराद्या, हाहा हताश मुनिनाऽपि कथं हतोऽसि
॥ १ ॥ श्रीनन्दिषेणरथनेमिमुनीश्वरार्द्र-बुद्ध्या त्वया मदन रे मुनिरेष दृष्टः । ज्ञातं न नेमिजिनजम्बुसुदर्शनानां, तुर्यो
भविष्यति निहत्य रणाङ्गणे माम् ॥ २ ॥ श्रीनेमितोऽपि शकडालसुतं विचार्य, मन्यामहे वयममुं भटमेकमेव । देवोऽद्रि-
दुर्गमधिरुह्य जिगाय मोहं, यन्मोहनालयमयन्तु वशी प्रविश्य ॥ ३ ॥ स्त्रीविभ्रमैश्चलति लोलमना न धीरः,
श्रीस्थूलभद्र इव तादृशसङ्कटेऽपि । चूर्णीयते दृषदयोऽपि जलायते वा, वैडूर्यमेति विकृतिं ज्वलनात् पुनर्न ॥ ४ ॥"
अन्यदा राज्ञा वेश्यायाश्चरित्रस्वरूपं ज्ञातम् । ततो भूपेन कोऽपि रथकारः कुशलो वेश्यायै दत्तः । ततो रथकृद्वे-
श्यायाः पार्श्वे गतः । अकामा वेश्या तं बोधयितुं जगौ । स्थूलभद्रमृते पुमानन्यो धर्मवान् कुशलः कोऽपि न दृश्यते ।
स्थूलभद्रवर्णनं क्रियमाणं वेश्यया तदानीमसहमानो रथकृत् स्वां कलां दर्शयितुं, शयनस्थ एवासन्नाम्रवनाम्रलुम्बीः
पुङ्खमुखपुङ्खाग्रे वेधं वेधं ततोऽर्धचन्द्रबाणेन वृत्तं छित्त्वाम्रलुम्बीं करे गृहीत्वा वेश्यायै ददौ जगौ च । पश्य मम

विज्ञानमिति । ततो वेश्यया सर्षपराशेरुपरि शूचिकां न्यस्य, तदुपरि पुष्पं स्थापयित्वा तदुपरि च नृत्यं कृतम् । तदा मनाक् सर्षपैककणं शूचिका पुष्पाणि (च) न चलितानि । वेश्याकलातुष्टो रथी सादरं जगाद । किन्त्वं वद तुभ्यं दास्याम्यहम् । वेश्ययोक्तम्--मया कापि कला न दर्शिता । जातिसिद्धमिदं जीवानां पूर्वभवाभ्यासात् । यतः—"तरन्ति तिमयोऽम्भोधिं, व्योम्नि चलन्ति पक्षिणः । देवा जगत्सु यान्तीति, जातिसिद्धं न चित्रकृत् ॥ १ ॥ अभ्याससिद्धं ते लुम्बि–कर्तनं मम नर्तनम् । न किञ्चिद्दुष्करं ह्येतत्, कृतं तुष्ट्या तदावयोः ॥ २ ॥ भोगोज्वलवपुः स्थूल-भद्रो भोगैकलालितः । अजात्युत्थमनभ्यस्तं, यच्चक्रे दुष्करं हि तत् ॥ ३ ॥" भोगा मया समं येन द्वादशसंवत्सरीं भुक्ताः । येन च मम चित्रशालायां तिष्ठता षड्रसाहारभोजिता स्थूलभद्रेण यन्न मनाग् व्रतं खण्डितं तच्चित्रकृत् । उक्तं च तया–"न दुक्करं अंबयलुंबतोडनं, न दुक्करं सरिसवनच्चियाए । तं दुक्करं तं च महाणुभावो, जं सो मुणी पमयवणंमि वुछो ॥ १ ॥ रथी तां प्रति जगौ–भद्रे कः स्थूलभद्रः यस्त्वयैवं वर्ण्यते ? तयोचे शकडालमन्त्रिपुत्रः स्थूलभद्रः । रथी जगौ–य एवंविधोऽस्ति तस्य दासानुदासोऽस्मि । तस्याः पार्श्वे स्थूलभद्रस्वरूपं श्रुत्वा धर्ममाकर्ण्य प्राप्तवैराग्यो रथी स्थूलभद्रं च वीक्ष्य राजानमुत्कलाप्य गुरोः पार्श्वे दीक्षां ललौ । क्रमा-

दुष्काले पतिते द्वादशाब्दीमिते साधुसङ्घस्तोयधितीरस्थः श्रीगुरुपार्श्वे समाजगाम । तस्मिन् विषमसमये जायमाने क्रमादगुण्यमानत्वाद् बुभुक्षया पीडितत्वाच्च मुनीनां सिद्धान्तो बहुविस्मृतः, ततः साधूनां पाटलिपुरपत्तने श्रीसङ्घो मिलितः। यो यस्याध्ययनस्योद्देश आयातोऽभूत् स स एकत्र कृत्वा एकादशाङ्गी पूर्णीकृता श्रीसङ्घेन। ततो दृष्टिवादकृते श्रीसङ्घो मुनिद्वयं श्रीभद्रबाहुपार्श्वे प्रैषीत्। ताभ्यां प्रणम्योक्तम् पाटलीपुरे गुरवस्त्वामाकारयन्ति। भद्रबाहुगुरुराह—मया महाप्राणाभिधं ध्यानमारब्धमस्ति। तेनाधुना मम तत्रागमनं न भविष्यति। तन्मुनिद्वन्द्वं पश्चादेत्य श्रीभद्रबाहुना प्रोक्तं जगौ—ततो गुरुणा सङ्घेन चानुशिष्य मुनी द्वौ प्रेषितौ तत्र गत्वोचतुर्भद्रबाहुगुरुपार्श्वे। सङ्घादेशं न यः कुर्या—दण्डः कार्योऽस्य कीदृशः। अथाचार्यो जगादैवं, सङ्घबाह्यः क्रियते सः ॥१॥ तौ यती प्रोचतुः, भगवन्ननेन वचनेन भवन्त एव सङ्घबाह्याः। ततः श्रीभद्रबाहुर्जगौ। सङ्घादेशः प्रमाणं ममाधुना महाप्राणध्यानकरणात् वेला नास्ति। तथापि श्रीसङ्घाग्रहात्तेभ्यो यतिभ्यः सप्त वाचना मया दास्यन्ते। यतः—"एकां भिक्षात आयाते, तत्र दाताऽस्मि वाचनाम्। द्वितीयां कालवेलायां, तृतीयां च बहिर्भुवि ॥ १ ॥ तुर्यां विकालवेलायां, तिस्रश्चावश्यकक्षणे। एवं सङ्घस्य कार्यं च, मम कार्यं भविष्यति ॥ २ ॥" इत्याकर्ण्य श्रीगुरुं नत्वा तौ यती पश्चादेत्य

तत् सङ्घाग्रे जगदतुः । ततः सङ्घो हृष्टो दृष्टिर्वा-भणनाय स्थूलभद्रादिमुनीन्द्रशतपञ्चकं न्ययुङ्क्त । ते यतयो दृष्टिवादं भणन्तोऽल्पवाचनतयोद्विग्नाः स्थूलभद्रं विना निजं निजं स्थानं ययुः । उद्रूज्यमानं स्थूलभद्रं प्रति गुरुर्जगौ किं त्वमुद्रूज्यसे । स्थूलभद्रोऽवक् किन्तु वाचनाल्पत्वं मम तृष्णां न हन्ति । ततो—गुरुणोक्तं भद्र ! त्वया खेदो न कार्यः ध्यानं मम पूर्णमिवास्ति । ततो ध्यानसमाप्तेरनु मया तृप्तिपर्यन्तं तव वाचना दास्यन्ते । ततो ध्यानसमाप्तौ तथा श्रीसूरिणा स्थूलभद्रः पाठितः प्रज्ञाप्रपन्नत्वात् । यथा द्विवस्तूनानि दशपूर्वाणि स जज्ञौ । इतः श्रीयकः श्रीसम्भूतिविजयसूरिधर्मोपदेशं श्रुत्वा प्राप्तवैराग्यो दीक्षां जिघृक्षुरभूद्यावत् सप्तापि भगिन्यो यक्षाद्या जगुः यदि त्वया दीक्षा ग्रहीष्यते तदाऽस्माभिरपि संयमश्रीर्ग्रहीष्यते । संयमश्रियं विना संसारान्निस्तारो न भवति । यतोऽत्र दीक्षासूक्तानि । ततः श्रीयकः स्वं पुत्रं श्रीधरं मन्त्रिपदे स्थापयित्वा राजानमनुज्ञाप्य ताभिर्भगिनीभिः समं संयमं ललौ । श्रीसम्भूतिविजयपार्श्वे यक्षाद्याः साध्व्यः पठनगणनतपस्करणपरा गुरुभिः समं विहारं कुर्वन्ति स्म । अन्येद्युः पर्युषणापर्वणि समायाते यक्षा श्रीयकं भ्रातरं प्रति जगौ—भो सहोदर ! अद्य वार्षिकपर्वदिनं विद्यते तेन प्रत्याख्यानं कुरु । अत्र पर्वणि दानतपस्करणादिपुण्यं अनन्तफलं प्रोक्तम् । यतः—“ एगग्गचित्ता जिणसासणंमि, पभावणापूअपरायणा जे ।

तिसत्तखुत्तो निसुणंति कप्पं, भवण्णवं ते लहु संतरंति ॥ १ ॥" इत्यादि । गुरुपार्श्वस्थेन श्रीयकेन भगिनीवचनात
पौरुषी कृता । ततः सार्द्धपौरुषी ततः पुरिमार्द्धः, ततोऽपार्द्धपौरुषी । तत उपवासः कृतः । दिनं महोत्सवेन जाय-
मानं व्युत्क्रांतं श्रीयकेन समाधिना रात्रिस्तु दुःशक्या जाता । मध्यरात्रौ आकुलव्याकुलः श्रीयकः स्मारितपञ्चनम-
स्कारः परलोकं ययौ । मृते सहोदरेऽग्निसंस्कारे कृते यक्षा दुःखिता श्रीसङ्घाग्रे जगौ—मयाऽतीवाविमृष्टं कृतं यतो
भ्राता एव मारितः । ततः प्रायश्चित्तात् कथं छुटिष्यामि । ऋषिघातो मया विदधे । तेन मम श्वभ्रपातो भविष्यति ।
अहमात्मघातेन मरिष्ये । श्रीसङ्घः प्राह—तव दूषणं न, त्वया तु हितबुद्ध्या भ्रातोपवासं कारितः । तव पुण्यमेव
भविष्यति । स तव भ्राता स्वर्गभागभूत् । तयोचे—जिनवचो विना न मन्येऽहम् । यदि जिनेन्द्रः साक्षादाख्याति,
तदा मम सन्देहो याति क्षयम् । ततः श्रीसङ्घे कायोत्सर्गे स्थिते शासनदेव्या यक्षा शनैरुत्पाट्य व्योममार्गेण श्रीसी-
मन्धरपार्श्वे मुक्ता । ततस्तया श्रीजिनो नतः । स्वसन्देहे पृष्टे तया श्रीसीमन्धरो जगौ । तव दोषो न । श्रीयकस्तु
तेनोपवासेन बहु कर्म क्षिप्त्वा प्रथमदिवि गतः । मुक्तिं यास्यति च । ततः श्रीसीमन्धरस्वामी धर्मोपदेशद्वारा चूलिकाचतुष्टयं
ददौ । तया यक्षयैकचित्तत्वेन चूलिकाचतुष्टयमङ्गीकृतम् । ततो भग्नसन्देहा यक्षा श्रीसीमन्धरस्वामिनं नत्वा शासनदेवी-

सांनिध्यात् स्वस्थानमाययौ। चूलिकाः श्रीसङ्घाय ददौ यक्षा। "चूलियं तु पवक्खामीति०॥" ततो यक्षा श्रीसङ्घयुता धर्मं चकार। अन्येद्युः सप्तापि यक्षाद्या भगिन्यः स्वं भ्रातरं वन्दितुं ययुः। वनमध्ये श्रीगुरुपादान् प्रणम्य प्रोचुः। भगवन्! कास्ति अस्माकं भ्राता। गुरुणोक्तम्—अग्रतो गच्छत यूयं अशोकवृक्षाधः स्थितः स्थूलभद्र एकान्ते स्वाध्यायं कुर्वन्नस्ति। ततस्ताः स्थूलभद्रं नन्तुं यावदग्रतो गच्छन्ति तावत् स्वभ्रातृस्थाने सिंहं वीक्ष्य भीताः पश्चाद्गुरुपार्श्वेऽभ्येत्य खिन्ना जगुः—अस्माकं भ्राता स्थूलभद्रः सिंहेन भक्षितः। तत्र सिंह एव दृष्टो न भ्राताऽस्माभिः। गुरुभिरुक्तं खेदं माकुरुत यूयम्। भवतीनां भ्राता कुशली समस्ति। गच्छत यूयं पुनर्वन्दिष्यते भ्राता भवतीभिः। ततः पुनस्तत्र गता यक्षाद्या भगिन्यः वन्दितो गुरुः स्थूलभद्रस्ताभिः चमत्कृता भगिन्यः, स्थूलभद्रेण पृष्टेन सिंहविकुर्वाणादिस्वरूपं प्रोक्तम्। स्थूलभद्रं नत्वा गुरुपार्श्वे सिंहवृत्तान्तं कथयित्वा गुरुं नत्वा स्वस्थाने गताः। ततः स्थूलभद्रस्तत्र स्वाध्यायं कृत्वा गुरुपार्श्वेऽभ्येत्य वाचनां ययाचे। गुरुराचष्ट अतः परं वाचना न दातव्या अयोग्योऽसि त्वम्। त्वया यदि सिंहरूपं कृतं तर्हि अन्येषां का कथा। कालस्वभावादग्रतो विद्या न जरिष्यति। विद्या सत्पात्रे दातव्या न कुपात्रे। यतः " आमे घडे निहित्तं, जहा जलं तं घडं विणासेइ। इय सिद्धंत रहस्सं, अप्पाहारं विणासेइ ॥ १ ॥" ततः स्थूल-

...जगौ—अहमतः परमीदृगपराधं न करिष्यामि । ततो यदा गुरुर्वा-
भद्रो गुरूणां पादयोः पतित्वा स्वापराधं क्षमयन् जगौ—अहमतः परमीदृगपराधं न करिष्यामि । ततो यदा गुरुर्वा-
चनां न दत्ते । तदा श्रीसङ्घेन प्रोक्तम् । वाचनामग्रतः पूर्वाणां दत्त यूयं गुरुभिरुक्तम्—यदस्य विकार एवंविधो जातोऽ-
न्येषां कथं जरिष्यति । कालो दुषमारूपः समायातः । श्रीसङ्घेनोक्तम्--एवं सर्वेषां पूर्वाणां छेदो भविष्यति । पूर्वछेदपातकं
तव लगिष्यति । ततो गुरुभिः प्रोक्तम् । यदि स्थूलभद्रोऽतः परमन्येषां साधूनामग्रेतनीं चतुःपूर्वीं न ददाति तदास्माभिरस्मै
वाचना दीयते । श्रीसङ्घः प्राह--श्रीपूज्यपादप्रोक्तं भवतु । ततः स्थूलभद्रायाग्रेतनी चतुःपूर्वी सूत्रतो दत्ता न त्वर्थतः स्थूल-
भद्रोऽखिलपूर्वधरो विजहार धरित्र्याम् । ततश्चिरं तपस्तप्त्वाऽनेकभव्यजीवान् प्रतिबोध्य स्थूलभद्रः प्रथमस्वर्गं जगाम ।

॥ इति श्रीस्थूलभद्रकथा समाप्ता ॥ १० ॥

---

वालत्वेऽपि विधातव्यो, धर्म्मो जैनः शिवप्रदः । भव्यजीवेन श्रीवज्र—कुमारेणेव सन्ततम् ॥ १ ॥
एकां प्रभावनां कुर्यात्, पर्याप्तमपरैर्गुणैः । वज्रस्वामी व्यधादेतां, लब्धिमानमितां यथा ॥ २ ॥
सुहस्तिनोऽन्वये वज्र—स्वामी च क्रमयोगतः । अभूत् प्रवचनोद्धर्ता, तत्कथा प्रोच्यते मया ॥ ३ ॥

तथाहि—जम्बूद्वीपविभूषणोऽवन्तिदेशोऽस्ति, तत्र तुम्बवनाभिधसन्निवेशो विद्यते। तत्रैव धनगिरिनामा व्यवहारी धर्मी धनेन धनदोपमो वसतिस्म। लघुत्वेऽपि धनगिरिः शमरसं वहन् बभूव। तस्य च पितरौ विवाहं कर्तुकामौ कन्यां विलोकयामासतुः। यदा धनगिरेर्दातुं सुतां महेभ्या आयान्ति तदा धनगिरिर्जगौ। मह्यं स्वां कन्यां दातुं वाञ्छत यूयम्। परमहं दीक्षां गृहीष्यामि परिणीतां कन्यां त्यजतो मम दूषणं न देयम्। तदा धनपालमहेभ्यपुत्री सुनन्दा जगौ। अस्मिन् भवे धनगिरिं मुक्त्वा नान्यं नरं परिणेष्यामि। धनगिरिस्तां कन्यामनिच्छन्नपि दीक्षां जिघृक्षन्नपि बलात् सा कन्या सुनन्दा तं धनगिरिमङ्गीचकार विवाहमहोत्सवपुरस्सरम्। अन्यदा विरागवानपि कर्मयोगतः ऋतुस्नातां तां कन्यां धनगिरिर्बुभुजे। इतः पूर्वं श्रीअष्टापदतीर्थे यो देवो जृम्भकः श्रीगौतमपार्श्वे पुण्डरीकाध्ययनं शुश्राव श्रद्दधे च स देवः स्वर्गाच्च्युत्वा सुनन्दाया ऋतुस्नातायाः गर्भेऽवततार। ततो धीमान् धनगिरिरापन्नसत्त्वां प्रियां मत्वा जगौ—भद्रे! तवायं गर्भो भद्राय भवतु, यत्र तव भ्राताऽऽर्यशमिताभिधः संयमं ललौ तत्राहं सिंहगिरेर्गुरोः पुरः प्रव्राजिष्यामि। ततः पत्नीं तादृशीं मुक्त्वा संयमं गृहीत्वा धनगिरिस्तपांसि तप्यमानो गुरोर्मुखात् सिद्धान्तामृतरसं पीतवान्। इतः शुभेऽहनि उच्चेषु ग्रहेषु सुनन्दा नन्दनं प्रासूत वज्रं, वज्राकरोर्वीव वज्रं पूर्वेव रविं, सख्यस्तदा समागतास्तं बालमित्थमालपन्,

यतः—" अयि तात ! न ते तातः, प्राव्रजिष्यत् पुरा यदि । अभविष्यत्तदोद्दामो, जातकर्मोत्सवस्तव ॥ १ ॥ विना पुमांसं न स्त्रीभिः, स्याद्विश्वानन्दकृन्महः । असति द्युमणौ दीप्र—दीपिकाभिरिवाभितः ॥२॥ " इत्याद्यालापान् सखिप्रोक्तान् श्रुत्वा दत्तावधानः कुमार ऊहापोहपरो जातिस्मृतिं प्राप्य पूर्वभवं स्मृत्वा प्रव्रज्यां जिघृक्षुर्भृशं रोदनमेव करोति यतो रोदनं विना मां माता न त्यक्ष्यति । ततो मात्रा सखीजनैश्च सुधामधुरैर्वचोभिश्चारूक्तिभिश्च चूलाचुम्बनैश्चान्दोलनादिभिश्च क्रियमाणैर्न रोदनान्निवृत्तः कुमारः । एवं तस्य सुनो रुदतोऽर्द्धसंवत्सरं जातम् । ततः सुनन्दाऽपि रुदन्ती भृशं जगौ—किमस्माच्छिशोश्छुटिष्यते ? देहजातत्वाद्धन्तुं न शक्यते, यद्यस्य पिताऽऽयाति तदा तस्मै दत्त्वाऽहं सुखिनी भवामि, तेन पुत्रेण किं क्रियते येन क्षणमपि सुखं न भवति । अधुना एवं करोति पुत्रः वृद्धः सन् न ज्ञायते किं करिष्यति । एवं विलपन्ती सुनन्दा विलक्षाऽभूत् । इतो धनगिर्यार्यशमितादिसाधुयुतः श्रीसिंहगिरिसूरिरन्यतो विहृत्य तत्रागात् । श्राद्धैः पुरप्रवेशमहोत्सवः कृतः । गुरुभिरुपदेशो दत्तः । मध्यान्हे आर्यशमितान्वितो धनगिरिर्गुरुं प्रति प्राह—भगवन्नादेशं देहि । आवां विहृत्यर्थं पुरमध्ये गच्छावः । गुरुभिरतिशयज्ञानवद्भिः प्रोक्तं भवतोरद्य महान् लाभो भविष्यति । तत्र सचित्ताचित्तविमर्शो न कार्यः । गुरुप्रोक्तं श्रुत्वा तथेत्युक्त्वा

धनगिरिः शमितसाधुयुतो विहरन् श्राद्धगृहे क्रमात सुनन्दाया गृहेऽगमत्। तं मुनिं तत्रागतं दृष्ट्वा सुनन्दा दुःखिता पतिं प्रति जगाद । अहमनेन सूनुना विलक्षीकृताऽतीव दुःखिनीकृता। त्वदीयोऽयं सूनुः त्वमेव गृहाण समानेन न किमपि कार्यं । मयि कालसमो विद्यतेऽयम्। तेनानुग्रहं कृत्वा त्वं लाहि । धुर्योपि निस्पृहाणां त्वं, गृहाणाङ्गजमात्मनः । ममोपरि कृपामत्र, कुरु कारुण्यसागर ॥ १ ॥ स्मृत्वा गुरूक्तं धनगिरिः प्राह—यथा तव रोचते चित्ते तथा कुरु। उक्तं च यतिना । पश्चात्तापवती पश्चात्, पुनर्भद्रे भविष्यसि। अमुं विश्राणितं पुत्रं, लभसे न कथञ्चन ॥ २ ॥ ततः सुनन्दयोक्तं एताः सख्यस्तेऽत्र साक्षिण्यः। अहं पश्चान्न मार्गयिष्यामि । इत्युक्त्वा तं बालं पात्रबन्धे विस्तारिते सुसाधुना सुनन्दा मुमोच। तं बालं गृहीत्वा धनगिरिर्धर्मलाभं पूर्वं दत्त्वा च क्रमाद् गुरुपार्श्वे जगाम। बालभारेण नमद्भुजं धनगिरिमागच्छन्तमालोक्य श्रीगुरुराचष्ट 'अयं बालो वज्र इव भारकृद्विद्यते' इति वज्रकुमारनामास्य भवतु । ततो गुरुभिः सच्चित्तमपि तं बालमुत्सङ्गे लात्वा यावत्संमुखं विलोकितं तावद् बालेन तेन हर्षितम् । ततः सूरिभिः पालनार्थं साध्वीनामर्पितम्। साध्वीभिश्च शय्यातरीणां पालनाय विश्राणितः। ततो रोदनान्निवृत्तो बालः । शालामध्ये पालनस्थः स्तन्यपानादिभिः पाल्यमानः शिशुः साध्वीभिर्गण्यमानामेकादशाङ्गीं पपाठ ।

वर्षत्रयमात्रवयस्को वज्रकुमारः समानवयोभिः शिशुभिः समं धर्मोपकरणै रेमे । उक्तं च । "शय्यातरपुरन्ध्रीणां,
स सौभाग्यनिधानभूः । अङ्कादङ्कं जगामैव, पद्मात् पद्मं मरालवत् ॥ १ ॥ उल्लापयन्त्यस्तं बालं, मन्मयोल्लापपूर्व-
कम् । स्त्रियो गीतानि गायन्ति, कर्णामृतकिरागिरा ॥ २ ॥ वज्रेण तासां यद्वज्रो—पमानि हृदयान्यपि । गुणै-
र्विद्धानि तद्युक्तं, वज्रं वज्रेण विध्यते ॥ ३ ॥ सुनन्दा वन्दनछलात्तत्रैत्य सुतं स्तन्यपानदानात्पुपोष । इतश्च कन्या-
पूर्णाख्यं विख्यातं तटिनीद्वयम् । अचलपटोपेतं महीमण्डनं विद्यते । एतयोर्नद्योरन्तरे भुवि भूतिधवलास्तापसा आहा-
रलीलां ललुः । तेषु तापसेष्वेकस्तापसः पादुके परिधाय लेपवित् सलिलेऽप्यतलस्पर्शी नदीमुत्ततार । कौतुकं
पश्यन्तो लोकास्तस्य तापसस्यान्येषां तापसानां कीर्तनं कुर्वन्ति वदन्ति चैवं भो जैना वो मते ईदृशाः केऽपि विद्यन्ते ?
यतः प्रभावोऽस्ति कस्य मध्ये इति वदन्ति । ततस्तापसभक्ता जना हसन्ति जैनान् प्रति । अस्मिन्नवसरे श्रीआर्य-
शमिताचार्यो वज्रमातुलो विहारक्रमयोगेन योगसिद्धस्तपोनिधिस्तत्राजगाम । ततस्तं गुरुं नत्वा वृद्धाः श्राद्धा जगुः—
भगवन् ! एते तापसा जिनमतावहीलनं कुर्वन्तः सन्ति, आत्मीयं चमत्कारं दर्शयन्ति च ततोऽवधिज्ञानयुक् श्रीआ-
र्यशमिताचार्योऽवग् श्राद्धान् प्रति । तस्य तापसस्य तपःशक्तिर्न किन्तु केनापि लेपेन पादौ लिप्त्वा नद्युपरि गच्छति

स्म । तत एकस्य महर्द्धिकस्य श्राद्धस्याग्रे रहः प्रोक्तं त्वमेवं कुरु । तस्य तापसस्य पार्श्वे गच्छ । तत्र त्वया तत् करणीयम् । ततः श्राद्धस्तस्य तापसस्य पार्श्वे गतोऽवग् । त्वत्तुल्यः कोपि तपस्वी न दृष्टः । यस्येदृशी जलोपरि चलनशक्तिः । मया जैनं मतं विलोकितम् । तत्र कोऽपि तपःप्रभावो न दृश्यते । अतःपरं त्वमेव मम गुरुर्भवतु । तापसेनोक्तम्--त्वं विघटयिष्यसि श्रेष्ठी जगौ--मदीयोक्तं मेरुरिव स्थिरं जानीहि । एकदा मदीये गृहे कल्ये पारणकदिने त्वया भोजनायागन्तव्यम् । तापसोऽवग्--यदि तवेच्छा भवति तदाऽऽगमिष्यते मया । द्वितीयदिने तापसः श्राद्धगृहे भोजनं कर्तुमागात् । तदा श्रेष्ठिनातीव भक्तिं दर्शयता तापसस्य पादौ प्रक्षालितौ । प्रच्छन्नं पादुके अपि प्रक्षालिते । ततः सरसरसवत्या भोजयित्वा तापसं, तापसं प्रेषयितुं मनुष्यसहस्रयुतश्चचाल । नदीसमीपे समागात् तापसो यावत्तावत् आर्यशमिताचार्योऽपि तत्रागात् । तापसो यावन्नदीमध्ये प्रविष्टस्तावन्मज्जन्नभूत् । ततो लोका हसन्त्यहो तापसस्य क्व गतं तपोऽधुना । तत आचार्येणोक्तं भो भो तापसा ! भो भो जना ! विलोकयत सावधानीभूय जिनमतप्रभावम् । गुरुणोक्तं भो नदि ! यदि मम तपो निस्तुषं भवति तदा त्वं द्विधाभूय मार्गं देहि । ततो नद्या दत्ते मार्गे आर्यशमिताचार्यः सपरिवारो नद्या अपरं तटं गतः । तं चमत्कारं श्रीआर्यशमिताचार्यकृतं वीक्ष्य सर्वे तापसा मुक्तगर्वा दीक्षां

जगृहुः । यतः—“ यस्माद्विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते, कामः शाम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति । उन्मीलन्ति महर्द्धयः कलयति ध्वंसं चयः कर्मणां, स्वाधीनं त्रिदिवं शिवं च भवति श्लाघ्यं तपस्तत्र किम् ॥ १ ॥ ” अन्ये बहवस्तापसभक्तजनाः श्राद्धा जाताः । ते तापसा ब्रह्मद्वीपिकनामानोऽभूवन् ब्रह्मद्विपाधिवासात् इतरतत्र श्रीवज्रस्त्रिहायनोऽभूत् । साधवो धनगिर्याद्या विहारं कुर्वाणास्तत्र समाजग्मुः । तत्रायातं धनगिरिं मत्वा स्वपुत्रं तस्मात् पश्चाद् गृहीष्यामीति हृष्टाऽजनि सुनन्दा । महर्षिभ्यः स्वनन्दनमयाचत । तेऽपि यतयस्तमददाना एवं जगुः । त्वया सर्वसाक्षिकं पुत्रो विश्राणितो धनगिरये । अधुना कथं याचसे । लज्जसेऽपि न । विक्रीतस्य दत्तस्य च क्वापि मार्गणं न भवति । सुनन्दाऽवग्—मया विमर्शं विनाऽर्पितः पुत्रः । सहसा कृतं कार्यं न कार्यसंपत्तिघटामाटीकते । श्रीसङ्घो जगाद—सुनन्दे ! त्वया दृढीकृत्य पुत्रः पुरा गुरुभ्योऽर्पितः । अधुना कथं गुरवोऽङ्गीकृतं पुत्रमर्पयन्ति । साधुभिर्यद्विहरितं तत् सर्वथा पश्चान्नार्प्यते । ततः श्रीसङ्घः सुनन्दा च विवदमानौ भूपपार्श्वे ययतुः । साधवोऽपि तत्र गताश्च । राज्ञोक्तं यस्य पार्श्वे स बालो गच्छति तस्याऽयं ज्ञेयः । सुनन्दयोक्तम्—अयं बालः पूर्वमेषां साधूनां चिरपरिचितो जातोऽस्ति । तेनाहं—प्रथमं सुखभक्षिकादिदानेनाऽऽकारयिष्यामि ।

राजाऽवग्--एवं भवतु। ततस्तया सिंहकेसरमोदकमत्संडीद्राक्षावरसोलकादि सुखभक्षिकादि स्वर्णमयकन्दुकभ्रमरकरथगनकवर्त्तुलकहारार्द्धहारकटकादि रमणकयोग्याभरणादि समानीय एकतः सुनन्दया प्रोक्तम्। भो पुत्र! वत्स एतानि वस्तूनि अङ्गीकुरु। त्वं मम त्राणकृद्देवो, गुरुस्त्वं मोददायकः। आधारोऽसि स्फुटं वज्र!, मदुत्सङ्गं समाश्रय ॥ १ ॥ त्वदीयो जनको दीक्षां, ललौ विमुच्य मां द्रुतम्। तेन त्वमेव मे प्राणा--धारोऽसि नन्दनाऽधुना ॥ २ ॥ लोकस्यास्य पुरस्तेजो, दीनाया पुत्र! पुष्य मे। एह्यालिङ्गनदानेन; गर्भवासानृणो भव ॥ ३ ॥ नृपाज्ञया सुनन्दाऽपि, बालक्रीडनकानि च। विविधानि च भक्ष्याणि, दर्शयन्त्येतमभ्यधात् ॥ ४ ॥ हस्तिनोऽमी अमी अश्वाः, पत्तयोऽमी अमी रथाः। तव क्रीडार्थमानीता--स्तद्गृहाणेह बालक! ॥ ५ ॥ मोदका मण्डकाख्या वा, शर्करा मधुधूलिकाः। यदिच्छसि तदस्तीह, गृह्यतामेहि नन्दन! ॥ ६ ॥ जनन्या वचांसि एवंविधान्याकर्ण्य दध्यौ वज्रः। माता तीर्थं निगद्यते लोकैस्तदपि सत्यं परं माता इह लोके सत्यमेव सम्पदि सुखदा भवति। स्वार्थमेव पुत्रमुत्पादयति, न पुत्रस्यार्थम्। श्रीसङ्घः श्रीगुरवश्च इहलोके परलोके च सुखदा भवन्ति। श्रीसङ्घश्च तीर्थङ्करस्यापि मान्योऽस्ति। श्रीसङ्घे आराधिते माताऽऽराधितैव, माता अनन्तेषु भवेषु जाताऽस्ति। यतः " पीयं थण-

संसारंमि अणंते, माऊणं मन्नमाणाणं ॥ १ ॥ " इति वचनात् । श्रीसङ्घश्च-
यच्छीरं, सागरसलिलाउ हुज्ज बहुययरं । प्राप्तेऽपि श्रीसङ्घे तस्य वचनाराधनं स्तोकेष्वेव भवेषु कृतमस्ति ।
तुर्विधो मुक्त्यादिसुखदाता स्तोकेषु भवेषु प्राप्यते । इतो धनगिरिसाधू रजोहरणं दर्शयन्निति प्राह—जइ
यद्यधुना मातुर्वचो मन्यते, तदाऽवश्यं मम श्वभ्रे पातो भवति । कम्मरयपमज्जणं वीरं ॥ १ ॥ जीवानां
सि कयज्झवसाओ, धम्मज्झयभूसियं इमं वयरं । गिन्ह लहुं रयहरणं, इत्यादि श्रीसङ्घधनगिरिप्रोक्तं
कर्मबद्धानां, सुलभाऽम्बा भवे भवे । धर्म्मश्च दुर्लभश्चैकः, कर्मनिर्मूलनक्षमः ॥ २ ॥ यदि तव संयमग्रहणेच्छा
श्रुत्वा कुमारो हृष्टः । ततः श्रीसङ्घेन श्रीगुरुयुक्तेन रजोहरणमुखवस्त्रिके मुक्त्वोक्तं भो वज्र ! ध्यात्वा रजोहरणं मुखव-
भवति तदा रजोहरणादि गृहाण । नो चेन्मातृमुक्तं वस्तु गृहाण । श्रीसंघो मान्य एवेति शमामृतसरोऽम्भोजे, हंस
स्त्रिकायुक्तं कृत्वा मस्तके धृत्वा च ननर्त वज्रः । रजोहरणहस्तोऽयं, पितुरुत्सङ्गसङ्गतः । प्रव्राजितौ मम ।
इवाशुभत् शिशुः ॥ १ ॥ सुनन्दा दुःखिनी भूता व्यचिन्तयदेवम् । पुत्रः प्रव्राजितो भ्रातृ-पती यतयश्च वज्रमादाय
प्रव्रजाम्यहमप्याशु, भामि नैकाकिनी गृहे ॥ १ ॥ विचिन्त्यैवं सुनन्दा स्वगृहे गता । श्रुता-
स्वस्थाने गताः । वज्रस्तु व्रतिनीभ्योऽर्पितः । स च तत्रस्थो यतिनीभिर्गण्यमानामेकादशाङ्गीमपाठीत् । श्रुता-

न्येकादशाङ्गानि, मेधयैवाधिगम्य यः । बालत्वस्याज्ञतादोष-मासंसारमपाहरत् ॥ १ ॥ सुनन्दाऽपि संसारासारतां मत्वा श्रीसिंहगिरिगुरुपार्श्वे व्रतमाददे । षड्वर्षप्रान्ते श्रीसिंहगिरिसूरिभिर्वज्रस्य दीक्षा दत्ता । क्रमादष्टवर्षप्रमाणोऽभूद्वज्रः । वज्रेणसममन्येद्युः श्रीगुरवोऽवन्तीं प्रति चेलुः । मार्गे गच्छतां गुरूणां पर्जन्ये वर्षति यक्षमण्डपे च स्थानमभूत् । इतः प्राग्जन्ममित्राणि जृम्भकाः सुरा वज्रस्य सत्त्वं परीक्षितुं तत्र वने समेत्य सार्थवाहनाम दधाना वसनपटकुटीं विस्तार्य स्थिताः नीरवाहे वर्षति तत्रागत्य गुरुं वन्दित्वा प्रोचुः सुरा वणिग्रूपधराः । भगवन् प्रसादं कृत्वा शुद्धमाहारं लातुमस्माकं पटकुटीषु साधू प्रेष्येतां त्वया । ततो गुरुभिर्जलदमवर्षन्तं दृष्ट्वा प्रोक्तं भो वज्र ! गच्छैषां श्राद्धानां स्थाने विहृत्यर्थम् । सूक्ष्मान् बिन्दून् परीक्षार्थं देवविकुर्वितान् वीक्ष्य यावत्तस्थौ तावद् देवै-र्बिन्दुषु संहृतेषु वनमध्ये तृणकुटीरेषु गतः । सार्थपतिना दीयमानमन्नं वीक्ष्य वज्रो दध्यौ । अस्य पादौ पृथ्वीं न स्पृशतः, नेत्रे मेषोन्मेषौ न कुरुतः, अस्मिन् काले इदमन्नं न भवति, इत्यादि वज्रो ध्यात्वाऽवग्—देवानां पिण्डो यतीनां न कल्पते । ततो वज्रर्षिचातुर्थं सर्वं चावलोक्य प्रकटीभूय देवास्तस्मै वैक्रियलब्ध्यर्थां विद्यां ददुः । ततोऽन्यदा वणिग्रूपै-स्तैरेव देवैरयं वज्रो विहरन् पुरीं बहिर्ज्येष्ठे मासि घृतं दातुं घृतपूरान् निमन्त्रितः । देवान् ज्ञात्वा वज्रोऽवग् यतीनां

देवपिण्डो न कल्पते, ततो देवास्तं वज्रं ज्ञानवन्तं मत्वा व्योमगामिनीं विद्यां तस्मै ददुः । स्थविरैरुक्तं वज्र त्वं पठ । वज्रस्तु स्वां शक्तिं गम्भीरत्वाददर्शयन् तस्थौ । अन्येद्युर्भिक्षार्थं साधुषु गतेषु सूरिषु च बहिर्भूमिं गतेषु वज्र एकाकी वसतौ स्थितः । साधुमण्डलिकाकारेण सर्वामुपधिं स्थापयित्वा, स्वयं मध्ये गुरुरिवोपविश्योच्चैःस्वरेण एकादशाङ्गवाचनां वज्रो ददौ । इतो गुरवो द्वारमागता मध्ये एकादशाङ्ग्या वाचनां ददानं वज्रं श्रुत्वा क्षणं तस्थुर्दध्युश्च । किं साधवो विहृत्यागतास्तेषां वाचनां ददानोऽस्ति वज्रः । द्वारकपाटक्षणके एकाकिनं वज्रमालोक्य गुरवो दध्युः । अहो अस्य शिशोरेवंविधं गाम्भीर्यमेवंविधायां विद्यायामागतायां सत्यां स्वमेकादशाङ्गीज्ञातृत्वं कस्याप्यग्रे न प्रकटीचक्रे वज्रः । एष मुनिरेवंविधां चेष्टां कुर्वन् मास्मलज्जिष्ट । इति ध्यात्वा गुरुभिरुच्चैर्नैषेधिकोच्चारो विहितः । वज्रो गुरुशब्दमुपलक्ष्य तत्क्षणमुपधिं स्वस्थानके विमुच्य संमुखमागत्य द्वारमुद्घाट्य च गुरोः क्रमरेणुं ममार्ज । तेनाद्य मुक्तिवामाक्षी—वशीकरणकारणम् । गुर्वंघ्रिरजसा भाले, बालेन तिलकं कृतम् ॥ १ ॥ प्राग्विष्टरनिविष्टस्य, गुरोः प्रासुकवारिणा । पादौ प्रक्षालयामास, वासनाभासुरोपमः ॥ २ ॥ श्रीगुरवस्तमेकादशाङ्गीविदुरं विनयिनं मत्वाऽन्येद्युः कस्मिंश्चिद्ग्रामे यियासवो यतीन् प्रोचुः । वयं विहारं परिसरे करिष्यामः । दिनचतुष्टयं लगिष्यति तत्र । ततो यतयो जगुः व्यजि-

ज्ञपंश्चेति वयं सार्द्धमेष्यामः । गुरुभिरुक्तम्—बहुस्थानकैः परिसरे गन्तुं न शक्यते । आधाकर्मादिनिष्पत्तिः तत्र दोषोत्पत्तेः । यतः " आहाकम्मुद्देसिय—पूइयकम्मे य मीसजाए य । ठवणा पाहुडियाए, पाउअरकियपामिच्चे ॥ १ ॥ परियट्टिअब्भुहडु, भिन्ने मालोहडे य अच्छिज्जे । अणिसिट्ठुज्झोयरए, सोलस पिंडुग्गमे दोसा ॥२॥" यतयो व्यजिज्ञपन्—कोऽस्माकं वाचनां दास्यति । गुरुभिरुक्तम्—वज्रो वो वाचनां दास्यति । ततस्ते साधवोऽवितथमिदं गुरुवचो मन्यमानाः प्रतिपेदिरे । प्रातर्गुरुषु ग्रामं गतेषु साधुप्रार्थितो वज्रस्तेभ्यः साधुभ्यो वाचनां ददौ । साधवस्ते सुखबोधां वाचनां गृह्णन्तो दध्युः । एषः किं साक्षात सरस्वत्यवतीर्णा अथवा बृहस्पतिः । अथ विहृत्य गुरव आगताः । पृष्टं च गुरुभिः । भो साधवो युष्माकं वाचना सुखेन जाता । तैरुक्तमद्यप्रभृति वाचनाचार्यो वज्रोऽस्माकं भवतु । अयं बालोऽप्यबालभावः साक्षात् सरस्वती मूर्तीभूय समागताऽस्माकं वाचनां दातुम् । ततो वज्रमुज्जृम्भितोदयं गुरवस्तमशेषशास्त्रादिरहस्यमपाठयन् । यावन्मात्रः श्रीदृष्टिवादोऽभूत तावद्वज्रोऽपाठीद्गुरोः पार्श्वे । अथ विहरन्तो गुरवो जन्तुपापापहारका वज्रसहिताः पुरं दशपुरं जग्मुः । एकदा श्रीगुरुपादा जगुः श्रीवज्रं प्रति । अवन्त्यां श्रीभद्रगुप्तसुरिर्दशपूर्वी विद्यते । दशपूर्वीमध्येतुं तस्यान्तिके गच्छ । त्वां विनाऽन्यो मच्छिष्यः कोऽपि तच्छिष्यो कोऽपि दशपूर्वी-

मध्येता नास्ति । ततस्त्वं वत्स गच्छहितकृद्गच्छोज्जयिनीं प्रति दशपूर्वीमधीत्य दशदिग्स्थभव्यजनान् प्रबोधय
वज्र । दशपूर्वीसुधापुर–पानध्यानस्य तेऽनिशम् । संनिधानं विधास्यन्ति प्रीताः शासनदेवताः ॥ १ ॥ इति प्रोक्तं
गुरुवचो दृढीकृत्य चित्ते मुदं वितन्वानो वज्रोऽचलदुज्जयिनीं प्रति । वज्रः साधुभ्यां द्वाभ्यां युक्तो मार्गे गच्छन् गगने
मार्तण्डो बुधशुक्राभ्यामिव शुशोभ । यतः–" युक्तो गुरुनियुक्ताभ्या–मृषिभ्यां स बभौ पथि । सञ्चलन् गगने शुक्र-
बुधाभ्यामिव भानुमान् ॥१॥ दिदृक्षुर्भद्रगुप्ताख्यं, दशपूर्वीसुधावधिम् । उज्जयिन्यामयं यातो, रजन्यामवसद् बहिः ॥ २ ॥
इतः सुप्तोत्थितो भद्र–गुप्तः शिष्यान् प्रगे जगौ । प्रातःक्षणे मया स्वप्न, ईदृशोऽद्य निरीक्षितः ॥ ३ ॥ जानामि कश्चिदा-
गन्तु–र्दुग्धपूर्णं पतद्ग्रहम् । गृहीत्वाऽस्मत्करात्पीत्वा, तृप्तश्च मुमुदेतराम् ॥ ४ ॥ तेनाद्य कोऽपि साधुर्मेधावतां धुर्यः स
समेष्यति । यो मे पार्श्वे दशपूर्वी गृहीष्यति । अद्य मे सफलः सैष, दशपूर्वीपरिग्रहः । भविष्यति द्रुतं तादृग्–वाचंयम-
समागमात् ॥ १ ॥ दिष्ट्या न यास्यति मयि, व्युच्छित्तिं दशपूर्व्यसौ । यतोऽद्यात्र वरं पात्रं, समेष्यति न संशयः ॥ २ ॥
एवं जल्पति सूरीशे, हर्षपूरितमानसे । जल्पन्नैषेधिकीं वज्रो, वसत्या द्वारमागमत् ॥ ३ ॥ आकृतिं प्रकृतिं चास्य, दध्यौ
पश्यन्निदं गुरुः । अयं साक्षात् समायातो, योऽद्य दृष्टो मया निशि ॥ ४ ॥ वज्रो हर्षोत्कर्षवशंवदो गुरुं प्रदक्षिणी-

कृत्य विनयपूर्वं पुनः पुनः प्रणमच्छिरा गुरुपादौ ववन्दे। गुरुणाऽपि कराभ्यां सबहुमानमालिङ्गितो वज्रः। प्रसिद्धसदृशाकृत्या तं वज्रं निश्चित्य गुरुरुवाच। कश्चित् सुखविहारस्ते, कश्चितेऽङ्गमनामयम्। कश्चित्तपस्ते निर्विघ्नं, कच्चित्ते कुशली गुरुः॥ १॥ किमर्थं तेऽत्रावन्त्यां विहारोऽधुनाऽभूत। व्यक्तभक्तिभराभागो गुरून् वन्दित्वा कृताञ्जलिर्वज्रो जगाद आदौ सुखविहारादि, यत्पूज्यैः समपृच्छयत। तदस्त्येवाखिलं देव—गुरुपादप्रसादतः॥ १॥ गुरोरादेशाच्छ्रीपूज्यपादानां पार्श्वे दशपूर्वीमध्येतुमिहागमम्। तेन तत्प्रदानेन प्रसीद मे। ततो भद्रगुप्तो गुरुस्तं योग्यपात्रं मत्वा दशपूर्वीं दातुं प्रवृत्तः। विनयपूर्वं पठन् वज्रः स्तोकेन कालेन दशपूर्वी जातः। यतः—जले तैलं खले गुह्यं, पात्रे दानं मनागपि। प्राज्ञे शास्त्रं समायाति, विस्तारं वस्तुशक्तितः॥१॥" ततः श्रीभद्रगुप्तं गुरुमापृच्छ्य दशपुरं प्रति वज्रश्चचाल। वज्रः प्रीतो ज्ञातदशपूर्वीकः सिंहागिरिं प्रदक्षिणीकृत्य प्रणनाम। जृम्भकैः सुरैः पूर्वसुहृद्भिरभ्येत्य तदा दशपूर्वधरस्य वज्रस्य महोत्सवश्चक्रे। ततः श्रीगुरुभिः वज्राय सूरिपदं दत्त्वा गच्छभारो दत्तः। ततः सिंहागिरिसूरिर्गृहीतानशनः स्वर्गमारुरोह। श्रीवज्रसूरिर्यतिपञ्चशतीपरिवृतो विजहार महीतले। यत्र यत्र वज्रस्वामी गच्छति स्म तत्रानेके जनाः सम्यक्त्वमूलां द्वादशव्रतीं प्रपेदिरे। इतश्च पाटलीपुत्रे पुरे धनाढ्योऽभूद्वणिक्। तस्य पुत्री रुक्मिणी देवकन्येवाभवत्, तस्य श्रेष्ठिनः

श्रीवज्रस्वामिसौभाग्य-शालायां श्रीवज्रस्वामिनः साध्व्योऽवसन् । तासां श्राद्धीनामग्रे साध्व्यो धर्मोपदेशं ददानाः
लावण्यादिगुणस्तवं वितेनुः । श्रावं श्रावं गुणश्रेणीं साध्वीवक्त्राच्च तादृशीम् । श्रीवज्रे गतरागेऽपि रुक्मिणी रागवत्य-
भूत् ॥ १ ॥ रुक्मिणी साध्वीपुरोऽवग्—श्रीवज्रस्वामी ममास्मिन् भवे स्वामी भवतु । साध्व्यः प्रोचुः—मुग्धे ! सुवादिनि !
मैवं वादीः । भवत्या चिन्तितः कदाग्रहोऽयं निष्फलोऽस्मद्गुरोः पुरो भविष्यति । रुक्मिणी जगौ—मच्चिन्तितं यदि
सफलं न भविष्यति तदा संयम एव श्रेयान् । इतः श्रीवज्रस्वामी विहरन् पाटलीपुराद् बहिराजगाम । तत्र मही-
भर्तृकृतप्रवेशमहोत्सवपुरस्सरं पुरमध्ये समागात् वज्रस्वामी । राजा दध्यौ एतेषां मध्ये वज्रः कः । तदा साधुभि-
र्वज्रतुल्यरूपैरुक्तमयं वज्रस्वामी । ततो राज्ञा नतो वज्रो भक्त्या । ततो गुरूक्तं धर्मं श्रुत्वा राजादिलोकः स्वं स्वं स्थानं
जगाम । राज्ञा वर्ण्यमानसौभाग्यादिगुणं श्रीवज्रस्वामिनं राज्यः श्रुत्वा महोत्सवपूर्वं श्रीवज्रं गुरूत्तमं ववन्दिरे । धर्मो-
पदेशरतत्रेति दत्तो गुरुभिः । आसन्ने परमपए, पावेयव्वंमि सयलकल्लाणे । जीवो जिणिंदभणियं, पडिवज्जइ भावओ
धम्मं ॥ १ ॥ द्वितीये दिने तं गुरुमागतं श्रुत्वा ह्रियं मुक्त्वा रुक्मिणी जनकं प्रति जगौ—वज्रस्वामी स समेतोऽस्ति ।
यत्र मे वरणस्पृहा विद्यते । अयं मम वरो भवतु—नो चेन्मृत्युरेव शरणम् । ततो धनो दिव्याभरणभूषितां पुत्रीं कृत्वा श्रीवज्र-

स्वामिने दातुमनाश्चचाल। इतो लोकैः श्रीवज्रस्वामिनो रूपसौभाग्यौदार्यक्षान्तिप्रभृतिगुणान् वर्ण्यमानान् श्रुत्वा धनो दध्यौ। अहो धन्या मदीया पुत्री। या वरस्यैवंविधस्येच्छां करोति वरीतुम्। धनो वज्रस्वामिनं नत्वा धर्मोपदेशमाकर्ण्य कृताञ्जलिर्व्यजिज्ञपत् । इमां मत्सुतां त्वदासक्तां त्वमुद्वह । वज्रस्वामी मम पति–र्मृतिर्वा शरणं मम ॥ इत्यस्यां सप्रतिज्ञायां, कृपां कुरु कृपामय ! ॥ १ ॥ अमूः स्वर्णकोटीरनया कन्यया समं तुभ्यं पाणिमोचनकर्मणि दास्यामीति धनवचः श्रुत्वा वज्रो भाषतेस्म । नदीकल्लोलकुम्भीन्द्र–कर्णध्वजादिचञ्चलाः । भोगाः पुण्यश्रियां रोगा–स्तद्योगानीहतेऽत्र कः ॥ १ ॥ स्त्रियः श्रियश्च निश्चित्य तन्निदानमनादितः । तद्दानमुचितं भाति किं महाभाग ! मां प्रति ॥ २ ॥ किमियं मयि मांसासृग–स्थिकूटेऽनुरागिणी । दिशामस्याः पतितं(तो) यो, देवानामपि दुर्लभः ॥ ३ ॥ यस्य प्रेष्या गुणाः सर्वे, रूपश्रीर्यस्य किङ्करी । यस्य दास्यः श्रियः सर्वा, यस्य किञ्चिन्न दूषणम् ॥ ४ ॥ यत्प्रसादकणाद्भान्ति, सुरासुरनरेश्वराः । कोशो यस्यातिभक्त्यैकप्रदेयपदमव्ययम् ॥ ५ ॥ कृतिन् स तवकन्यायाः, संयमोऽस्तु मनःश्रियः । यदि त्वमनुजानासि तत्करोमीह मेलनम् ॥ ६ ॥ आघ्रातं मरणेन जन्मजरया० ॥ ७ ॥ व्याघ्रीव तिष्ठति जरा परितर्जयन्ती० ॥ ८ ॥ क्षणं बालो भूत्वा० ॥ ९ ॥ रुप्पिणिअहिगरणीए, लोहघणेणं घणं

पि संघडिओ। ईसिं पि जो न भिन्नो, सच्चो सो चेव वयरमणी ॥ १० ॥ इति श्रीवज्रसूरीणां, सुधाभक्तिभिरुक्तिभिः। शान्तमोहज्वरा पथ्यं, व्रतमादित रुक्मिणी ॥ ११ ॥ तदाऽनेके जना वज्र—स्वामिवाणीं मनोहराम्। आकर्ण्य श्रीजिनप्रोक्त—धर्मेऽभूवन् कृतादराः ॥ १२ ॥ महापरिज्ञाऽध्ययनात् श्रीवज्रोऽन्यदा सङ्घार्थं पदानुसारिलब्ध्या चोद्दध्रे विद्यां गगनगामिनीम्। अतः परमल्पसत्त्वा जीवा भवन्तीत्यभिधाय संघाग्रे श्रीवज्रेण कस्मैचित्साधवे मनुष्यक्षेत्रभ्रान्तिमिता खगामिनी विद्या न ददे। अन्येद्युर्वज्रस्वामी विहरन् पूर्वदिग्भागादुदग्दिशं प्रतिप्रावर्तत। तत्रोच्चैर्दुर्भिक्षं दारुणं जातम्। ततोऽतीवक्षुधापीडितः श्रीसङ्घोऽभ्येत्य नत्वा श्रीवज्रयतीशं व्यजिज्ञपत्। इह दुर्भिक्षसाम्राज्ये, भुञ्जानानां मुहुर्मुहुः। अपि भूयोभिरिभ्यानां, प्रभो! तृप्तिर्न जायते ॥ १ ॥ इभ्यौकसां भिक्षुभया—न्नोद्घाट्यन्ते कपाटकाः। पक्ष्माणि विषयत्रासा—दिव योगीन्द्रचक्षुषाम् ॥ २ ॥ राद्धमप्यन्नं कोऽपि भोक्तुं न शक्नोति। क्रयविक्रयादिव्यवहारो दुर्लभोऽभूदधुना। भिक्षुजनो दण्डैस्ताड्यमानोऽपि बलाच्छयस्थमप्यन्नमाच्छिद्य खादति। आगतेषु साधुषु विहृत्यर्थं किमपि शुद्धमन्नं दातुं न शक्यते। द्वारमप्युद्घाटयितुं न शक्यते भिक्षुभयाद्, ग्रहीतमप्यन्नं तपोधनानां हस्ताद् भिक्षवो गृह्णन्ति। धर्मध्यानमपि कर्तुं न शक्यते। यतः—" तदीदृग्दुःख-

संघट्टा–त्सङ्घमुद्धर्तुमर्हसि । प्रभूताद्भुतलब्धीना–मब्धीभूतोऽसि यत्प्रभो ॥ १ ॥ एवंविधं सङ्घं व्याकुलं दृष्ट्वा वज्रो दध्यौ । सति सामर्थ्ये यः सङ्घार्थं स्वां शक्तिं गोपयति स दुर्गतिभाग् भवति ॥ यतः–सङ्घस्तीर्थकृतामपि मान्यः । एवं ध्यात्वा द्रुतं वज्रस्वामी भुवनवत्सलः । विचक्रे चक्रभृच्चर्म-रत्नवद्विकटं पटम् ॥१॥ सङ्घं निवेश्य निःशेषं, तस्मिन्नन्तार्निविश्य च । विद्यां विद्योतयामास, वज्रो गगनगामिनीम् ॥ २ ॥ श्रीवज्रस्वामिना व्योमविद्यया नीयमानः पटो द्युसदां विमानं यातीन्ति भ्रातिं चकार। इतस्तदैव शय्यातरः कस्मैचित् कार्यार्थं गतः । तत्रागतश्च व्योमचालिनं वज्रं वीक्ष्य जगौ । पुराशय्यातरोऽहं वः, स्वामिन् साधर्मिकोऽधुना । तत् किं मामीदृशि स्थाने, मुक्त्वा यासि जगद्गुरो !॥१ ॥ एतच्छय्यातरवचः श्रुत्वा सूत्रार्थमिममस्मरत् वज्रः । यतः–"ये साधर्म्मिकवात्सल्ये, स्वाध्याये चरणेऽपि वा। दीर्घप्रभावनायां चो–द्युक्तास्तांस्तारयेन्मुनिः ॥ १ ॥" इत्यागमार्थं स्मृत्वा सुनन्दासूनुस्तस्मिन् विद्यापटे पर्यारोपयामास तम् । ततः सङ्घतनूतेजः–स्तोमैराशाः रविरिव प्रकाशयन् । पटश्चचाल त्रिश्वस्य, सारोद्धार इवाम्बरे ॥ १ ॥ सर्वैर्गन्धर्वसिद्धाद्यै–र्वन्द्यमानः पदे पदे । भक्तिनम्राननं सङ्घं, मोदयामास वज्रराट् ॥ २ ॥ ततः श्रीवज्रस्वामी तं श्रीसङ्घं पटोपरिस्थं महापुरे आनयामास । तत्र सुभिक्षे जायमाने श्रीसङ्घः सुख्यभूत् । परस्परस्फुरद्वादा जैना जनाश्च

बौद्धाश्च मिथो विवदन्ते । जैनैर्नित्यं बौद्धास्तत्राजीयन्त । इतो वार्षिकपर्वणि समायाते बौद्धा जना बौद्धनृपोपान्ते गत्वा प्रोचुः । स्वामिन्नेषां जैनानामद्य वार्षिकं पर्व समायातमस्ति । तेन पुष्पाणि मालिकानां पार्श्वादात्मीयेषु प्रासादेषु आनीयन्ते । तत एतेषां गर्वोद्धतानां जैनानां गर्व उत्तरति । ततो राज्ञा तथा कृते श्राद्धाः श्रीवज्रस्वामिपार्श्वे गत्वा जगदुः । आत्मनो वार्षिकं पर्व समायातम् । तत्र पुष्पार्चा विना शोभा न भवति । राज्ञा तानि पुष्पाणि निषिद्धानि सन्ति । श्रीपूज्यपादा एव पुष्पानयने समर्था दुष्टनिग्रहे च । तीर्थावहेलना सत्यां शक्तौ न सहितव्या । यतः—"तीर्थोन्नतिकृते नित्यं, यतन्ते साधवोऽपि हि। तेनेह भवता स्वामिन्, कार्या तीर्थप्रभावना॥ १ ॥" निशम्यैतद्वज्रस्वामी तीर्थोन्नतिकृते खगामिन्या विद्यया कृत्वा माहेश्वरीसमीपवने विस्मयावहे ययौ । धनगिरिपितुर्मित्रं मालिकस्ताडिताह्वो वज्रमागतं दृष्ट्वा मुदाऽवदत् । अद्यास्मि कृतकृत्योऽहं, वज्र त्वन्मुखवीक्षणात् । तथाप्यादिश कृत्यं मे, किमपि स्वमुखोक्तिभिः ॥१॥ वज्रस्वामी ततः प्राह—अस्माकं वार्षिकं पर्वदिनं कल्येऽस्ति। तेन पुष्पाणि महापुरपुरे विलोक्यन्ते जिनपूजायै। ततः स मालिकः एकविंशतिकोटिपुष्पाणि ददौ । ततः क्षुल्लहिमवन्तं ययौ, तत्र शाश्वतजिनान्नत्वा तत्रस्थदेवपार्श्वात्पुष्पाणि महापुरं प्रति चालयामास । ततो हुताशनयक्षवनादपि देवपार्श्वात् पुष्पाणि चालयामास । एवं वज्रस्वामी बहुभ्यो

वनेभ्यः पुष्पभृतानि करण्डकान्यानयामास । तदा तस्मिन् पर्वणि बहूनि पुष्पाणि देवैरानीतानि वीक्ष्य जिनालये महोत्सवं जायमानं चानेके बौद्धा मानं मुक्त्वा श्रीवज्रस्वामिपादान् नेमुः । राजापि बौद्धो जिनधर्म्मभक्तोऽभूत् । इतश्च दशपुरे पुरे सोमदेवो द्विजोऽभूत् । रुद्रसोमा जिनधर्मभाग् तस्य पत्न्यभूत् । तयोरुभौ सुतौ आर्यरक्षित-फल्गुरक्षितौ अभूताम् । अधीयानः सुधीर्मौञ्जी–बन्धादेवार्यरक्षितः । यावत्यभूत् पितुः पार्श्वे विद्यामादत्त तावतीम् ॥ १ ॥ ततोऽधिकविद्यार्थी पाटलीपुत्रं आर्यरक्षितो ययौ । तत्र सर्वविद्याविशारदो भूत्वा स्वपुरसमीपे समागात् । सर्वविद्यापारगं मत्वा संमुखमेत्य राजा तं गजारूढं कृत्वा महामहोत्सवपुरस्सरं नृपः पुरमध्ये आनिनाय । राज्ञा सन्मानितश्च धनदानात् । ततोऽनेकलोका उपायनपाणयस्तं सेवन्ते स्म । गृहस्य बहिःशालायां बन्दिभिः स्तूय-मानोऽस्थात् । स्वजनास्तोरणस्वस्तिकादिकं चक्रुः । अन्येद्युरार्यरक्षितो दध्यौ मां धिक् । एवं पदवीं प्राप्तेनापि मया मातृपदौ न नतौ । आर्यरक्षितो दध्याविति । अस्मत्सुखैकसुखिनी–मस्मद्दुःखैकदुःखिनीम् । प्रवासद्रुफलैर्विद्या-वित्तैरानन्दयामि ताम् ॥१॥ एवं ध्यात्वा मध्येगृहं गत्वा मातृपदौ आर्यरक्षितो ननाम । माता जगौ-भो वत्स ! दीर्घायुर्भव । परं मातुस्तादृग् हर्षो न दृष्टः । पुत्रप्रेमान्वितां मातृवाणीमप्राप्यार्यरक्षितो दध्यौ । मयि माता किं प्रसन्नीभूय न वक्ति । कोऽपराधो मया कृतः । प्रणम्य

पप्रच्छ मातरम् । मातरहं भूरिशास्त्राणि अधीत्याऽऽगां तव किं हर्षो न दृश्यते । माताऽऽह-वत्स ! किमनया कुविद्यया नरकहेतुना । किं ताए विज्जाए, पयकोडीए पलालभूआए । जत्थ इत्तियं न नायं, परस्स पीडा न कायव्वा ॥ १ ॥ पुत्रः प्राह । मातः केन शास्त्रेण पठितेन ते हर्षः स्यान्माताऽऽह—वत्स ! यदि मातुर्भक्तोऽसि, तदा दृष्टिवादं मुक्तिसुखदमधीष्व । प्रवणो दृष्टिवादोक्तौ, श्रमणोपासको भव । विना दिनाधिपोपास्तिं, न दृश्यं हि महन्महः ॥ १ ॥ सूरिस्तोसलिपुत्रोऽस्ति, सदिक्षुवणसंश्रितः । भज तं दृष्टिवादाय, यष्टिमादाय भूयसीम् ॥ २ ॥ प्रातर्मातः करोमीद—मित्युदित्वाऽर्यरक्षितः । दृष्टिवादं कदाऽधीये ध्यायन्निति निशि स्थितः ॥ ३ ॥ प्रातर्मातापितरावा(वना)पृच्छय चचाल सः । पुरान्निर्गच्छन्नार्यरक्षितः केनचित् पृष्टः कोऽसि त्वं, सोऽवग्-अहमार्यरक्षितः । ततस्तेन पुरुषेणालिङ्ग्येदमुक्तम् । शाखापुराश्रयोऽहं त्वत्पितृमित्रं महाद्विजः गृहचिन्ताभरमग्नोऽस्मि । त्वमुत्सुकोऽपि प्रातरिमा इक्षुयष्टीः सार्द्धा नव गृहाण । ततस्ता इक्षुयष्टी गृहीत्वा जगौ । अहमग्रतः कार्यार्थी याताऽस्मि । त्वया इक्षुयष्ट्यर्पणवृतान्तो मम मातुरग्रे प्रोक्तव्यः । आर्यरक्षितोऽग्रतश्चचाल । विप्रेणार्यरक्षितस्वरूपे प्रोक्ते रुद्रसोमा दध्यौ । नव पूर्वाणि सार्द्धाणि मत्सुतो लप्स्यते । आर्यरक्षितोऽपि ध्यातवान् अहं सार्द्धनवपूर्वी भविष्यामि सार्द्धनवेक्षुप्राप्तेः गुरूनहं वन्दिष्ये इति ध्यायन्

यावच्छालाद्वारमगात् तावच्छ्रीगुरुभिः पाठ्यमानानां साधूनां मालवकीप्रमुखमन्द्रस्वमाकर्ण्यार्यरक्षितो मुमुदे, वसतौ कथं केन विधिना प्रविश्यते इति च दध्यौ । तदा धार्मिको ढड्ढरो नैषेधकीं कुर्वन् वसतिद्वारं प्रविवेश । उच्चगीः ढड्ढरः प्रत्येकं गुरून् वन्दित्वाऽपरान् साधून् वन्दित्वा प्रमार्ज्य भूमिं स्थितः । ढड्ढरकृतं सर्वं वीक्ष्यार्यरक्षितस्तथैव सर्वान् वन्दित्वाऽस्थात् । सूरिणा ध्यातं को नूतनोऽयं श्राद्धः । यतो ढड्ढरमवन्दित्वोपविष्टः । पृष्टं च गुरुणा तव को गुरुः सोऽवग् ममायमेव श्राद्धो गुरुः । येनास्य पार्श्वात् मया ज्ञाता विद्या । ततः पृष्टं गुरुणा कुत आयातो भवान् ! कृती विनयपूर्वमार्यरक्षितः स्वं वृत्तान्तं सर्वं सोमदेवभूर्गुरुभ्य आचष्ट । भद्रभावं तं च मत्वा गौरवाद् गुरवो जगुः । दृष्टिवादं च परिव्रज्यां विनाऽध्येतुं न बुध्यते । सोमदेवसूनुः प्राह-तर्हि संयमं मह्यं देहि । ततो गुरुस्तं योग्यं पात्रं मत्वा दीक्षां दत्त्वाऽग्रतो विजहार । आर्यरक्षितो गुरुपार्श्वे पठन् स्तोकैरेव दिनैरेकादशाङ्गीमङ्गीचकार । आसीद्यावान् दृष्टिवादो गुरुपार्श्वे तावान् एष गुरुभिः पाठितः । ततः प्रोक्तं वत्स ! यद्यधिकदृष्टिवादभणने वाञ्छाऽस्ति तदा वज्रस्वामिपार्श्वे गत्वा दृष्टिवादमधीष्व । तत आर्यरक्षितो महापुरीं प्रत्यचालीत् । उज्जयिन्यां भद्रगुप्ताचार्यसन्निधौ गत॰ । गुरवो वन्दिताः । गुरुभिरुपलक्ष्योक्तम् । वत्स ! वर्यं कृतं यद ब्राह्मण्यमुन्मुच्य श्रामण्यं गृहीतम् । गुरुभिरुक्तं च अहं वृद्धोऽभूवम् ।

वज्रपार्श्वे गच्छ, तत्र दृष्टिवादं पठेः । वज्रपार्श्वे
तेनानशनं गृहीष्येऽद्य । गृहीतानशनः श्रीभद्रगुप्तसूरिरवादीत । वज्रपार्श्वे गच्छ, तत्र यः श्रीवज्रमण्डल्यां बुभुजे स तेन
विद्यां गृह्णता त्वया पृथगुपाश्रये स्थेयं भोक्तव्यं च कारणमस्ति । तत्र यः श्रीवज्रमण्डल्यां बुभुजे स तेन
सार्द्धमनशनं ग्रहीता भविष्यति । तथेति गुरुवचः प्रतिपद्य निर्यामणां गुरोः कारयित्वाऽऽर्यरक्षितो वज्रस्वामि-
पार्श्वे दृष्टिवादं पठितुमचालीत । वज्रः स्वप्नमितोऽद्राक्षीत, कोऽप्यागत्य मदन्तिकात । पपौ भूरितरं क्षीर—मवशिष्टं
किमप्यभूत ॥ १ ॥ स्वप्नस्यार्थं प्रगे वज्रः शिष्याणामग्रे प्राह-कोऽप्यपूर्वस्तादृशः शिष्यः समेष्यति । यो न्यूनां दश-
पूर्वीमस्मत्पार्श्वात गृहीष्यति । अस्मिन्नवसरेऽकस्मादार्यरक्षितो नैषेधिकीकरणपूर्वं वसतिमध्ये प्रविश्य श्रीवज्रस्वामिनं
ववन्दे । स पृष्टः श्रीवज्रेणागमनकारणं सर्वं जगौ । श्रीभद्रगुप्तवाचानुज्ञाप्य भिन्नं प्रतिश्रुत्य दृष्टिवादमधीयायार्य-
रक्षितः । नवपूर्वी पठित्वा दशमस्य विषमं यमकव्रजं पठत्यार्यरक्षिते पितुः संदेशा आययुः । वत्स त्वां विना वयं
दुःखिता जाताः । तेनात्रागमनेन नः सुखिनः कुरु । ततस्तत्पूर्वं त्वरितमध्येतुं प्रवृत्तः। इतः फल्गुरक्षितोऽनुजोऽभ्ये-
त्यार्यरक्षितं प्रति जगौ । यदि मातृपितृविषये वात्सल्यमस्ति ते तदा तत्रागत्य मातापित्रादिबन्धून् प्रमोदय । केचित
प्रव्रज्यार्थिनः सन्ति बान्धवाः । अथार्यरक्षितोऽवग्—वत्स गमिष्यते तत्र, दीक्षा रोचते तव तदा गृहाण । ततः फल्गु-

रक्षितोऽपि दीक्षां जग्राह । पुनर्भ्रात्रा गन्तुं तत्रोत्साहितो जगौ । श्रीवज्रपार्श्वे कियद्दशमतः पूर्वादधीतं मया कियद्धु-द्वरितं गुरुभिरुक्तम् । एको बिन्दुरधीतोऽस्ति दशमपूर्वाम्बुधेः । ततः सविशेषं पठन् दशमपूर्वार्द्धं पपाठाधिकं नायाति । ततश्चिन्तितं पूर्वं पुरान्निर्गच्छतो मम सार्द्धा नव इक्षुयष्टयो दत्ता जनकमित्रेण । तेनाधिकं नायास्यति मम । ततः प्राप्तसूरिपद आर्यरक्षितो भ्रातृयुतो गुरुं प्रणम्य चलितः क्रमाद्दशपुरं पुरं समागात।पुरीप्रवेशकरणपूर्वं पुरमध्ये आगत आर्यरक्षितः। नृपादि-सर्वलोकैर्धर्मोपदेशः श्रुतः । तैश्चिन्तितं च एवंविधो धर्मोपदेशः कुत्रापि न श्रुतः । राजा श्राद्धोऽभूत् । सोमदेवः प्रबुद्धो दीक्षां जग्राह । यथा च सम्यक्चारित्रं प्रपेदे स सम्बन्ध आर्यरक्षितचरित्राद् ज्ञेयः । इतः श्रीवज्रोऽन्यदा विहरन् दक्षिणां दिशं ययौ । तत्रस्थोऽन्यदा श्लेष्माऽऽकुलो यतिभिराग्रहात् द्विविधं प्रत्याख्यानं कारितो वज्रस्वामी सुंठीं वारां कुर्वन् कर्णपुटस्थितां चकार । पश्चाद् ग्रहणार्थं स्वाध्यायरसेन तां विसस्मार । प्रतिक्रमणक्षणे मुखवस्त्रिकानुन्नां सुंठी-मग्रे पतितां वीक्ष्य दध्यौ । धिग् मां यत ईदृशः प्रमादोऽभूत् । अतः परं ममाल्पायुर्विद्यते ईदृग्प्रमाददर्शनात् । तत्तनोमि देहत्यागमनशनग्रहणात् । तदा द्वादशाब्दे दुर्भिक्षे जायमाने स्वशिष्यमन्यतो वज्रो व्यहारयत् वज्र-सेनम् । तादृशे दुर्भिक्षे जायमाने भिक्षामलभमानांस्तपोधनान् वीक्ष्य विद्याबलाहृतेनान्नेन युष्मान् पोषयामीत्यादिशत्

वज्रसेनः । तथा च—“सव्वत्थ संयमं संजमाउ, अप्पाणमेवराक्खिज्जा । मुच्चइ अववायाओ, पुणो विसोही न से विरई ॥१॥” अथ मुनयो गुरून् विज्ञपयामासुः । “पिंडं असोहयंतो, अचरित्ती इत्थ संसओ नत्थि । चारित्तंमि असंते, सव्वा किरिया निरत्थया ॥ १ ॥” तथा च—“भुक्तोज्झिता मुहुर्मोहा—दमी सर्वेऽपि पुद्गलाः । उच्छिष्टेष्विव तेष्वद्य, विज्ञानां का स्पृहा पुनः ॥२॥” ततो वयममुमन्नमपहातुमीहामहे । एवं वज्रसेनं परिज्ञाप्य श्रीवज्रपार्श्वे पञ्चशतशिष्याः समागता इति तदनुमतो निःसीमसौभाग्यनिधिर्भगवान् वज्रस्वामी वज्रसेनवर्जं पञ्चशत्या तपोधनैः समं कृपया क्वापि ग्रामे क्षुल्लकमेकं विप्रतार्य स्वयं गिरिमारुरोह । स शिष्यो गुरोरप्रीतिपरिहाराय गिरेरधः स्थितोऽपि व्युत्सृष्टचतुर्विधाहारः क्वापि शिलातले तदा नवनीतपिण्डवद्विलीनः सुरलोकमाप । तत्र तद्वपुःपूजार्थं सुरानापततो वीक्ष्य परिवारेण विज्ञप्ता गुरवः क्षुल्लकवृत्तान्तं श्रुतोपयोगात् आख्यातवन्तः । तत्र गिरौ कापि देवता मिथ्यादृग् चालयितुं वज्रं यतियुतं समागात् । चालितोऽपि वज्रस्तया न चलितः । ततो वज्रस्तस्या देव्या अप्रीतिं मत्वाऽन्यत्र गत्वा कृतक्षेत्रदेवीकायोत्सर्गः स्वर्गं प्राप ! ते शिष्या अपि स्वर्गं प्रापुः ततस्तत्रागत्येन्द्रस्तं तीर्थमित्युक्त्वाऽनंसीत् । अथ वज्रसेनस्ताच्छिष्यः सोपारकपत्तने गतो जिनदत्तगृहे । तेन श्रेष्ठिना ईश्वरीपत्न्या च स गुरुर्नमस्कृतः । पिष्य-

माणं विषं दृष्ट्वा गुरुणा प्रोक्तं किं क्रियतेऽधुना ? श्रेष्ठी जगौ—द्वादशवर्षमितो दुर्भिक्षोऽभूत् । धनमस्ति धान्यं स्तोकमपि न लभ्यते । लक्षद्रव्येण इयत् धान्यमानीतमस्ति । अस्य मध्ये विषप्रक्षेपं कृत्वा भुक्त्वा च प्राणत्यागः कुटुम्बेन सह मया करिष्यते । गुरुणोक्तं—कल्ये बहूनि धान्यपूर्णानि यानानि समेष्यन्ति तेनेदं न कर्तव्यम् । श्रेष्ठिनोक्तम्—श्रीपूज्यपादोक्तं यदि भविष्यति सत्यं तदाऽमी चत्वारः सुता दीक्षां गृहीष्यन्ति श्रीपूज्यपादान्ते । ततः प्रातः सुभिक्षेऽन्नागमनाज्जाते सकुटुम्बः श्रेष्ठी वज्रसेनमुनेः पार्श्वे प्रवव्राज । ते चामी—नागेन्द्र १ चन्द्र २ विद्याधर ३ निवृत्ति ४ नामानः सुताः चत्वारः क्रमादाचार्या जाताः । यतः—" गुर्वाज्ञां मस्तके धृत्वा, सर्वज्ञाज्ञानुपालनम् । तज्जायते ततस्तत्र, यथास्यादपुनर्भवः ॥ १ ॥ ततो नागेन्द्रादिभ्य आचार्येभ्यश्चत्वारः शाखा अभूवन् । सोपारकपत्तनेऽद्यापि श्रीवृषभप्रासादे एतेषां मूर्तयो दृश्यन्ते । ॥ इति श्रीवज्रस्वामिचरित्रं समाप्तम् ॥ ११ ॥

---

कुर्वाणोऽग्रं तपो नित्यं, दुष्टं कर्मापि निर्मितम् । जीवो भिनत्ति तत्कालं, नन्दिषेणमुनीशवत् ॥ १ ॥

तथाहि । आसीच्छ्रीपुरं पुरं स्वर्गसंनिभम् । तत्र मखप्रियाह्वो विप्रो वसति स्म । अन्यदा भीमाह्वं दासमासन्नकार्याय

न्ययुङ्क्त मखप्रियः स दासरतं प्रत्यवग्—मखशेषं मह्यं यदि ददासि तदोत्तिष्ठामि नान्यथा। विप्रोऽपि प्रतिपेदे तदीयं वचः। लब्धं लब्धं भीमः साधवे ददाति। तैः पुण्यैः स दिवं गत्वा, च्युत्वा राजगृहे पुरे। श्रेणिकक्षोणिभुग्पुत्रो, नन्दिषेणाभिधोऽभवत् ॥ १ ॥ मखप्रियस्तु भूरिषु भवेषु भ्रान्त्वा वने करिण्या उदरेऽवततार। अस्य यूथस्याधिपोऽन्यो माभूदिति धिया ध्यायन् यूथाधिपतिर्जातं जातमपत्यं हन्ति स्म। स्वान्यपत्यानि यूथपतिना हन्यमानानि दृष्ट्वा दन्तिनी दध्यौ। तनूजरक्षणोत्साहो विद्यते मम। तेन ज्ञायते यः पुत्रोऽधुना भविष्यति स नमितारिर्भावी। तेन जातमात्र एव मया त्रातव्योऽन्यत्र मुक्त्वा इति ध्यात्वा मायया वातग्रस्तीभूय मन्दं मन्दं पश्चात् पतति युथस्य। पशूनामप्यपत्येषु मोहो भवति। यतः "आदाय मांसमखिलं स्तनवर्जमङ्गात्, मां मुञ्च वागुरिक! यामि कुरु प्रसादम्। अद्यापि शष्यकवलग्रहणानभिज्ञा, मन्मार्गमार्गणपराः शिशवो मदीयाः ॥ १ ॥" असौ करिण्यन्यभोग्या मा भवतु। अतः क्षणं प्रतीक्ष्यते। सा तु मन्दं मन्दं चलन्ती घट्या घटीद्वयेन च पत्युर्मिलति। एवं क्रमात् दिनेन दिनद्वयेन च मिलति। हस्ती दध्यौ इयं पत्नी वातग्रस्ताऽभूत्। किं क्रियते। ततोऽभूद्यूथपो विश्रम्भचेताः। कदाचित् प्रसवसमयं मत्वा दूरस्थे यूथपे मौलितृणपूला तापसाऽऽश्रमं ययौ। विनयवतीं करिणीं शरणार्थिनीमिव मत्वा मुनयः प्रोचुः। पुत्रि! तिष्ठ

इह निर्भया । तत्रस्था तस्मिन्नहनि गजं सुलक्षणोपेतमसूत सा हस्तिनी। तं बालं तत्रैव मुक्त्वा मन्दं मन्दं यूथपार्श्वे गता । पयः पाययितुं बालं समायाति चान्तरा । तापसैर्ग्रासदानेन कलभो वृद्धिं नीतः तापसबालैः सह स कलभः करकोटरं पयःपूर्णं कृत्वा वृक्षान् सिञ्चति स्म । ततो मुनिभिः सेचनक इति नाम दत्तम् । सेचनकः क्रमाद्विक्रमी बभूव । सेचनकोऽन्यदा नदीं गतः पानीयं पातुम् । तं पितरं यूथपं युद्धेन हत्वा यूथपतिर्बभूव सेचनकः क्रमात्, स हस्ती दध्यौ । तापसाऽऽश्रमेऽस्मिन् मन्मात्राऽहं छलेन पतिं वञ्चयित्वा जनितो वर्धितश्च। माऽपरा करोत्यस्मिन्नाश्रमस्था इति ध्यायन् दन्ती तमाश्रमं बभञ्ज । अयं दुर्मत्तो हस्ती अस्माकमाश्रमान् भङ्क्ष्यति इति ध्यात्वा तापसाः सेचनकस्वरूपमाचख्युः श्रेणिकभूपस्याग्रे । ततः श्रेणिकः सेनां संनह्य तं हस्तिनं धर्तुं वने गतः। छलेन बलेनापि कोऽपि तं गजं वशीकर्तुं न शक्नोति । तदा राजा विषण्णोऽभूत् । विषण्णं तातमालोक्य सानन्दनन्दिषेणस्तं हस्तिनं वशीकर्तुं स्वयमुत्थितः। नन्दिषेणं समायान्तं वीक्ष्योहापोहपरो जातजातिस्मृतिः पूर्वभवसम्बन्धिनमवगत्योर्द्धस्तस्थौ । तं करिणं वशीकृत्य श्रीश्रेणिकभूपाय ताताय ददौ नन्दिषेणः । ततो राजा तं सेचनकहस्तिनं पट्टहस्तिनं चकार । पुत्रं सविशेषं ग्रासाद्यर्पणात् प्रीणयामास भूपः । इत श्रीवीरः पुरोद्याने समवासार्षीत् । नन्दिषेणोऽन्यदा श्रीवीरपार्श्वे

धर्मोपदेशमाकर्ण्य पप्रच्छ भगवन्! अयं गजो मयि कथं प्रीतिपरोऽभूत्। ततो भगवता तस्य प्राग्भववृत्तान्तः प्रोक्तः। इतः श्रेणिकप्रभृतिलोको धर्मं श्रोतुं तत्रागात्। तथाहि—माणुस्सखित्तजाई कुलरूवारुग्गमाउयं बुद्धी। सवणं गहणं सद्धा, संजमो लोगंमि दुलहाइं॥१॥ इति श्रुत्वा भगवद्वाणीं प्रबुद्धो नन्दिषेणः संयमं ममार्ग प्रभुपार्श्वे। प्रभुणोक्तम्-चारित्रावरण-कर्मभोगफलं च वलवत्। विद्यतेऽद्यापि दीक्षायै, मा भूद्वत्स समुत्सुकः॥१॥ ततः प्रभुणा वार्यमाणोऽपि दीक्षां जिघृक्षुरभूद्या-वच्चावदाकाशे इति दिव्या वाणी जाता। मा ग्रहीस्त्वं दीक्षां भोगफलं विद्यते तव। एवमुक्तेऽपि नन्दिषेणो दीक्षां जग्राह नन्दिषेणः प्रमोदात् षष्ठाष्टमादितपःपरोऽविश्रमं विजहारानुप्रभुं वीरम्। सूत्रार्थवाचनापरो द्वादश भावना भावयन् द्वाविंशतिं २२ परीषहान् सहमानः कर्मद्रुमुन्मूलयामास॥ तथाहि—"खुहापिवासासीउन्ह—दंसाचेलारइत्थिय। चरियानिसीहिआ सिज्जा अक्कोसवहजायणा॥ १ ॥ अलाभरोगतणफासा, मलसक्कारपरीसहा। पण्णाअन्नाणसमत्तं, इय वावीसपरीसहा॥२॥" अथोद्भवन्तीं भोगेच्छां भोगकर्मोदयाद्रोद्धुं तपः प्रबलं करोति नन्दिषेणः आतापनां करोति स वा। यतः—"आयावयंति गिम्हेसु, हेमंतेसु अवाउडा। वासासु पडिसंलीणा, संजयासु समाहिया॥ १ ॥" चारित्रवारिणी देवता नित्यं तस्य भोगाम्बुधौ पातयितुं यततेस्म। ततश्चारित्रं रक्षितुं पर्वतमारुह्य झंपां दातुकामोऽभून्नन्दिषेणो

यावत्तावत्तं पतन्तं करे धृत्वाऽन्यत्र मुक्त्वा देवतोवाच । किं मुधा मर्तुं यतसे।भोगफलमभुक्त्वा न मृतिं यास्यसि । तत एकाकी तीव्रतपःपरो नन्दिषेणोऽन्यदाऽनाभोगात् कस्याश्चिद्वेश्याया गृहे आहारार्थं प्रविष्टो धर्मलाभमुच्चचार । वेश्याऽप्याह सहासेयं, धर्मलाभेन किं मम । शर्मलाभं धनेनाह—मीहे सप्रत्ययं यतः ॥१॥ मामियं हसतीति मानात्तीव्रात्तृणमाचकर्ष ऋषिर्यावत्तावद्रत्नकोटिर्द्वादशमिता व्योम्नोऽपतत् तस्य तपोलब्ध्या । शर्मलाभोऽनेन धनेन तवास्त्विति कथयित्वा यावद्यतिर्याति, तावद्वेश्ययोक्तम्-किन्ते तपोभिर्मृदुता-जितपुष्कलदुष्करैः।भोगान् भुंक्ष्व मया प्राण-भर्तर्मर्तव्यमन्यथा ॥२॥ततो मुनिर्देव्युक्तं भोगफलं मत्वा तां वेश्यामङ्गीचक्रे।ततस्तत्र धर्मोपदेशेन प्रतिदिनं दश दश नटविटान् प्रबोध्य दीक्षां ग्राहयित्वा मया भोक्तव्यमित्यभिग्रहं नन्दिषेणो ललौ। मुक्तर्षिलिङ्गः स तया सह भोगान् भुञ्जानो दिनं प्रति दश दश जनान् प्रतिबोध्य दीक्षां ग्राहयामास । अन्यदा द्वादशवर्षान्ते भोजनवेलायां जातायामपि यदा दशमो नरो नामिलत् तदा द्वित्रिवारं रसवत्यां कृतायामकस्माद् हास्येन वेश्ययोक्तम्—स्वामिन्नुत्तिष्ठ भुक्ष्व । अद्य दशमो भवानेव भवतु । ततस्तस्या एव तद्वचोऽङ्गीकृत्य तां जल्पन्तीमपि तृणमिव त्यक्त्वा पुनर्गुरुपार्श्वे गत्वाऽऽलोचनां सम्यग् गृहीत्वा दीक्षां लात्वा तीव्रं तपस्तप्त्वा कर्मक्षयं च कृत्वा मुक्तिसुखं नन्दिषेणः प्राप ॥

॥ इति नन्दिषेणकथा समाप्ता ॥

बध्नाति तनुमान् नन्दि–षेणवत्कर्म सुन्दरम् ॥ १ ॥

वैयावृत्यं वितन्वानः साधूनां वरभावतः । तस्य सोमिला पत्न्यभूत् । तयोर्नन्दनो

तथाहि—मगधदेशभूषणे नन्दिग्रामे सोमिलो द्विजो वसति स्म । दौर्भाग्यकर्मोदयं मत्वा स्वजनै-
नन्दिषेणोऽभूत् । बाल्ये तस्य पितरौ मृतौ । आकेशनखपर्यन्तं तं कुरूपं नन्दिषेणं
रपि तत्यजे स मातुलगृहे स्थितः चारिपानीयानयनादिकर्म करोति स्म । अन्यदा दुःखितं भागिनेयं विनयपरं
मत्वा मातुलो जगौ । मा खेदं कुरु, मम सप्त कन्यकाः सन्ति । ताभ्य एकां कन्यां तुभ्यं दास्ये । ततो विशेष-
तरतस्य गृहकर्माणि सोत्साहं कुरुते स्म । मत्वा पितृचेष्टितं नन्दिषेणपरिणयनस्वरूपगर्भितं प्रथमा कन्या तातामे
जगौ यद्यहं नन्दिषेणाय त्वया दास्यते तदा मया मर्तव्यमेव । तच्छ्रुत्वा नन्दिषेणं व्याकुलं चिन्तापरं मत्वा मातु-
लोऽवग्–द्वितीयां कन्यां तुभ्यं दास्याम्यहं मा विषादं कुरु । द्वितीयाऽपि तथैव श्रुत्वा प्रथमपुत्रीवज्जगौ एवमन्याभिः
प्रतिषिद्धो नन्दिषेणो विषादमापन्नः । तं विषण्णं मत्वा मातुलोऽवग्–कस्याप्यन्यस्य पुत्रीं तुभ्यं दापयिष्यामि ।
ततोऽन्या या या कन्या तस्यार्थं मातुलेनानीता सा सा दौर्भाग्यकर्मोदयाच्चं नेहते दृष्ट्या मनसापि । ततो नन्दिषेणो
विषण्णो दध्यौ । अत्र किं स्थीयते मया यदीदृशं कर्म समायातं मरणमेव क्रियते मया । एवं ध्यात्वा नन्दिषेणो

तवातीव वर्योऽभिग्रहो येन त्वया एवंविधं कर्म क्रियते । ततो यावन्मन्दं मन्दं गच्छन्नभून्नन्दिषेणस्तावज्जगाद । वर्त्मनि कदाऽपि मम मरणं भविष्यति ततो दुर्गतिपातो भावी । आराधना अपि मम न भविष्यति । ततो नन्दिषेणस्तं साधुं तथाभूतं शालायामानीय दध्यौ । अयं साधुर्मया कथं नीरोगः करिष्यते इति स्वं निनिन्द । ततस्तं वैयावृत्त्ये मेरुनिश्चलं मत्वा देवता प्रत्यक्षीभूय सर्वं विष्ठादिकमपसंहृत्य पुष्पवृष्टिं तन्मस्तकोपरि कृत्वा प्राह त्वं धन्योऽसि । यादृशो वासवेन वर्णितस्ततोऽधिकोऽसि । ततस्तं मुनिं नत्वा क्षमयित्वा सुरः स्वर्गे गतः । स यतिर्द्वादशसहस्राब्दीं तपस्तप्त्वा कृतानशनोऽन्यदाऽभूत् । तदाऽनशनिनं वन्दितुं सान्तःपुरचक्री प्राप । तस्य तदन्तःपुरीसुकुमारकुन्तलस्पर्शं दृष्ट्वा निदानं चकार । स्त्रीवल्लभोऽहं भवेयमिति । प्रान्ते स्वं दौर्भाग्यं कर्म स्मृत्वा निदानमिदमकरोत् । भूयासमहं स्त्रीवल्लभोऽनेन तपसा । महाशुक्रेऽसौ मृत्वा देवोऽभूत् । इतः सूर्यपुरेऽधकवृष्णेः सुभद्रायां नवाऽभवन् पुत्रास्ते चामी--समुद्रविजयोऽक्षोभ्य-स्तिमितः सागरस्तथा । हिमवानचलः धरणः, पूरणः अभिचन्द्रः ॥ १ ॥ ततो देवलोकात् च्युत्वा नन्दिषेणजीवो दशमः पुत्रो वसुदेवोऽभूत् । तेन सौभाग्यकर्मणा द्वासप्ततिसहस्रमिताः कन्याः परिणीताः । तच्च विस्तरात् वसुदेवहिंडिनेमिचरित्रादवगन्तव्यम् । इति नन्दिषेणकथा समाप्ता ॥

सिंहगिरिकथा वज्रस्वामिकथाया ज्ञातव्या ॥ १२ ॥

दानादिकं वृषं कुर्वन्, शश्वत् भव्यजनः स्फुटम् । कृतपुण्य इवाप्नोति, परत्रेह सुखश्रियम् ॥ १ ॥
भूमिभामामहाभाल-विभूषणसहोदरम् । पुरं राजगृहं नाम्ना, राजते स्वःपुरीनिभम् ॥ २ ॥ राजा श्रेणिकनामाऽभूत् तत्राराति‌तमोऽर्यमा । पालयति स पृथिवीं, न्यायमार्गेण संततम् ॥ ३ ॥ धनेश्वराभिधः सार्थ-वाहो भूरिधनेश्वरः । सुभद्रेति प्रिया तस्याऽऽ-सीत्सच्छीलशालिनी ॥४॥ क्रमात् कृतपुण्य इति पुत्रोऽजनि तस्य श्रेष्ठिनः पूर्वपुण्योदयात् । क्रमाद्वर्धमानः सर्वकलाकुशलोऽजनि कृतपुण्यः । श्रीदश्रेष्ठिनः पुत्रीं धन्यां मातापितृभ्यां कृतपुण्यः परिणायितः । साधुपार्श्वे तिष्ठन् विषयेषु पराङ्मुखोऽभूत् कृतपुण्यः । ततो मातापितृभ्यां चिन्तितम् । एष कदाचित् प्रव्रज्यां गृहीष्यति तदाऽऽत्मनोः का गतिः । तेन गणिकापार्श्वे मुच्यते । तत्र नटविटादितादृग्संयोगात्तादृशो भविता । यतः—" अंबस्स य निंबस्स य, दुन्हं वि समागयाइ मूलाइं । संसग्गीइ विणट्ठो, अंबो निंबत्तणं पत्तो ॥ १ ॥" ततो धनेश्वरेण नटविटगणिकापार्श्वे मुक्तः कृतपुण्यः । ततस्तथा शिक्षितः कृतपुण्यो यथा क्रमाद्गणिकाऽऽसक्तः सन् मातापितरावपि न स्मरति स्म । क्रमाद्दिशेपतोऽनङ्गसेनागणिकापार्श्वे कामितः सन् कृतपुण्यः क्षणमपि न मुञ्चते । मातापितरौ सर्वं धनादि तस्य भोगार्थं प्रेषयतः

विषण्णो वैराग्यवासितः रत्नपुरं पुरं गतः। तत्रापि दम्पती भोगपरौ वीक्ष्य स्वं निनिन्द । अहमीदृगभाग्यवानभूवम् । ततो वने गतो नन्दिषेणो भृगुपातचिकीर्षुः कायोत्सर्गस्थमुनिना वारितः। तं प्रणम्य स्वकर्मस्वरूपं जगौ यतः— " रोगिणां सुहृदो वैद्याः प्रभूणां चाटुकारिणः। " मुनिर्ज्ञानात्तद्भावमुद्भाव्याभाषत—मुग्ध! वैरूप्यवैराग्यात् मा कुरुष्व मृतिं, मरणेन कोऽपि पश्चात्कृतकर्मणो न छुटति। यतः—" कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ १ ॥" तस्माद्धर्मेण श्रीवीतरागोदितेन कृतेन तत् प्राक्कृतं कर्म छिनत्ति जनः। तस्माद्यावज्जीवं शुद्धधर्मं कुरु। येन भवान्तरे सुखी भवसि त्वं, इत्यादिधर्मोपदेशात् प्रबुद्धो नन्दिषेणो गुरुपार्श्वे जग्राह व्रतम्। नन्दिषेणो विनयपूर्वं पठन् धर्म्मशास्त्रं गीतार्थोऽभूत्। ततोऽभिग्रहं च ललाविति। साधूनां लघुवृद्ध-ग्लानानां वैयावृत्यं कृत्वैव मया भोक्तव्यम्। अनिर्वेदेन तं साधुं साधुवैयावृत्त्यं कुर्वाणमवधिना विज्ञाय शक्र एकदा संसदि जगौ—यादृशो नन्दिषेणो वैयावृत्त्यविषये निश्चलोऽस्ति तादृशोऽन्यः कोऽपि नास्ति। देवैरपि न चाल्यते स्वाभिग्रहात्। ततोऽश्रद्दधानः कश्चित् सुर इन्द्रवचो निशम्य रत्नपुरोपान्तेऽभ्येत्यैकेन रूपेण ग्लानसाधुरभवत्। तं साधुमतिसारिणं मुक्त्वा द्वितीयः साधुरूपभृत् नन्दिषेणपार्श्वे यावच्छालामागात्तावन्नंदिषेणो विहृत्य शालामागत्ये-

र्यापथिकीं प्रतिक्रम्य भक्तपानप्रत्याख्यानं पारयित्वा भोक्तुमुपविशन्नभूत् । साधुः प्राघूर्णकोऽवग्-भो साधो ! त्वयाऽभिग्रहो गृहीतोऽस्ति । कथं साधुवैयावृत्त्यमकृत्वा भोक्तुमुपविश्यते । साधुं नन्दिषेणोऽवग्—क्वास्ति साधुर्ग्लानः । प्राघूर्णकोऽवक्—पुराद् बहिरस्ति । तेन पानीयं शुद्धं बहु गृहाण । तस्य साधोस्तृषा लग्नाऽस्ति । ततो नन्दिषेणः पानीयं प्रासुकं विहर्तुममत्रं लात्वा गतः श्राद्धगृहे । यत्र यत्र स साधुर्याति, तत्र तत्र देवोऽशुद्धं जलं करोति । अविषण्णो बहुषु गृहेषु भ्रमन् मुनिरकस्मात् लब्धिप्रभावेण सुरशक्तिं विजित्य जलं शुद्धं प्राप्य ततस्तेन प्राघूर्णकसाधुना समं बहिरुद्याने नन्दिषेणः साधुसमीपे ययौ । तं साधुं तादृशमतीसारिणं दृष्ट्वाऽनेन वैयावृत्त्येनाहं कृतकृत्यो भविष्यामि इति मत्वा मुनिं प्रक्षालयितुं प्रवृत्तः । यथा यथा नन्दिषेणस्तं प्रक्षालयति तथा तथा स साधुर्दुर्गन्धमतीसारं मुञ्चति । नन्दिषेणो दध्यौ अहो अयमेष साधुर्भाग्यवानपि ईदृग्रोगभागभूत् । ततः कर्मभ्यः कोऽपि राजा रङ्को वा यतिः शक्रो वा न छुटति । ततस्तं साधुं स्कन्धे कृत्वा पौषधशालायां नेतुं नन्दिषेणश्चचाल । पदे पदे हदन् दुर्गन्धं कर्कशं च जल्पन् नन्दिषेणशरीरं लिम्पति विष्टया दुर्गन्धया । तथापि नन्दिषेणो न मनाग् दुर्गंछां चकार । ततो यदा त्वरितं चलति नन्दिषेणस्तदासाधुर्जल्पति । एवंविधेन चलनेन मम प्राणा गमिष्यन्ति ।

तवातीव वर्योऽभिग्रहो येन त्वया एवंविधं कर्म क्रियते। ततो यावन्मन्दं मन्दं गच्छन्नभून्नन्दिषेणस्तावज्जगाद। वर्त्मनि कदाऽपि मम मरणं भविष्यति ततो दुर्गतिपातो भावी। आराधना अपि मम न भविष्यति। ततो नन्दिषेणस्तं साधुं तथाभूतं शालायामानीय दध्यौ। अयं साधुर्मया कथं नीरोगः करिष्यते इति स्वं निनिन्द। ततस्तं वैयावृत्त्ये मेरुनिश्चलं मत्वा देवता प्रत्यक्षीभूय सर्वं विष्टादिकमपसंहृत्य पुष्पवृष्टिं तन्मस्तकोपरि कृत्वा प्राह त्वं धन्योऽसि। यादृशो वासवेन वर्णितस्ततोऽधिकोऽसि। ततस्तं मुनिं नत्वा क्षमयित्वा सुरः स्वर्गे गतः। स यतिर्द्वादशसहस्राब्दीं तपस्तप्त्वा कृतानशनोऽन्यदाऽभूत्। तदाऽनशनिनं वन्दितुं सान्तःपुरचक्री प्राप। तस्य तदन्तःपुरीसुकुमारकुन्तलस्पर्शं दृष्ट्वा निदानं चकार। स्त्रीवल्लभोऽहं भवेयमिति। प्रान्ते स्वं दौर्भाग्यं कर्म स्मृत्वा निदानमिदमकरोत्। भूयासमहं स्त्रीवल्लभोऽनेन तपसा। महाशुक्रेऽसौ मृत्वा देवोऽभूत्। इतः सूर्यपुरेऽधकवृष्णेः सुभद्रायां नवाऽभवन् पुत्रास्ते चामी--समुद्रविजयोऽक्षोभ्य-स्तिमितः सागरस्तथा। हिमवानचलः धरणः, पूरणः अभिचन्द्रः॥ १ ॥ ततो देवलोकात् च्युत्वा नन्दिषेणजीवो दशमः पुत्रो वसुदेवोऽभूत्। तेन सौभाग्यकर्मणा द्वासप्ततिसहस्रमिताः कन्याः परिणीताः। तच्च विस्तरात् वसुदेवहिंडिनेमिचरित्रादवगन्तव्यम्। इति नन्दिषेणकथा समाप्ता॥

सिंहगिरिकथा वज्रस्वामिकथाया ज्ञातव्या ॥ १२ ॥

दानादिकं वृषं कुर्वन्, शश्वत् भव्यजनः स्फुटम् । कृतपुण्य इवाप्नोति, परत्रेह सुखश्रियम् ॥ १ ॥

दानादिकं वृषं कुर्वन्, शश्वत् भव्यजनः स्फुटम् । कृतपुण्य इवाप्नोति, परत्रेह सुखश्रियम् ॥ २ ॥ राजा श्रेणिकनामाऽभूत् तत्रारा-
भूमिभामामहाभाल–विभूषणसहोदरम् । पुरं राजगृहं नाम्ना, राजते स्वःपुरीनिभम् ॥ ३ ॥ धनेश्वराभिधः सार्थ–वाहो भूरिधनेश्वरः । सुभद्रेति प्रिया
तितमोऽर्यमा । पालयति स पृथिवीं, न्यायमार्गेण संततम् ॥ ३ ॥ धनेश्वराभिधः सार्थ–वाहो भूरिधनेश्वरः । सुभद्रेति प्रिया
तस्याऽऽ–सीत्सच्छीलशालिनी ॥४॥ क्रमात् कृतपुण्य इति पुत्रोऽजनि तस्य श्रेष्ठिनः पूर्वपुण्योदयात् । क्रमाद्वर्धमानः सर्व-
कलाकुशलोऽजनि कृतपुण्यः । श्रीदश्रेष्ठिनः पुत्रीं धन्यां मातापितृभ्यां कृतपुण्यः परिणायितः । साधुपार्श्वे तिष्ठन् विष-
येषु पराङ्मुखोऽभूत् कृतपुण्यः । ततो मातापितृभ्यां चिन्तितम् । एष कदाचित् प्रव्रज्यां गृहीष्यति तदाऽऽत्मनोः का गतिः ।
तेन गणिकापार्श्वे मुच्यते । तत्र नटविटादितादृग्संयोगात्तादृशो भविता । यतः–" अंबस्स य निंबस्स य, दुन्हं-
पि समागयाइ मूलाइं । संसग्गीइ विणट्ठो, अंबो निंबत्तणं पत्तो ॥ १ ॥" ततो धनेश्वरेण नटविटगणिकापार्श्वे मुक्तः
कृतपुण्यः । ततस्तथा शिक्षितः कृतपुण्यो यथा क्रमाद्गणिकाऽऽसक्तः सन् मातापितरावपि न स्मरति स्म । क्रमाद्दिशो-
पतोऽनङ्गसेनागणिकापार्श्वे कामितः सन् कृतपुण्यः क्षणमपि न मुञ्चते । मातापितरौ सर्वं धनादि तस्य भोगार्थं प्रेषयतः

स्म। तस्य तत्र तिष्ठतो द्वादशाब्दानि क्षणवत् जातानि। इतोऽकस्मादुत्पन्नतीव्रज्वरौ मातापितरौ स्वर्गं जग्मतुः। अन्येद्युः सा कुट्टिनी स्वां चेटीं धनानयनार्थं कृतपुण्यगृहे प्रेषयामास। चेटी तत्र गता तादृशं पतितप्रायं गृहं शून्यं विलोक्य कृतपुण्यप्रियान्तिके गत्वा जगौ—कल्याणि! तव कान्तेन, प्रेषिताऽस्मि त्वदन्तिके। विज्ञातुं कुशलोदन्तं, धनं चानेतुमञ्जसा ॥ १ ॥ तव कान्तेनास्मत्स्वामिनीपार्श्वस्थेन धनमानयितुमहमत्र प्रेषिताऽस्मि तेन धनमर्प्पय। तव कान्तः कुशली सन् स्वगृहकुशलादि पृच्छति स्म। सा धन्याऽतीव प्रसन्नाऽऽस्या जगौ-सखि! कान्तस्य तस्याऽऽज्ञा, मम सीमन्तलेखिनी। किमाचक्षे पुनः क्षेमं, दैवे प्रातीपिके सति ॥ १ ॥ त्वमत्र धनानयनकृते आगास्तद्वरं पुनस्तस्य कान्तस्याज्ञा मया मस्तके कृता। अद्याहमेतया कृतार्थोस्मि। किं क्रियते मदभाग्यात्तादृग् श्वश्रूश्वशुरौ स्वर्गं गतौ। श्वश्रूश्वशुराभ्यां धनं प्रेषं प्रेषं पुत्रस्नेहाद् गृहमीदृशं कृतम्। अधुना मत्पार्श्वे मत्पित्रार्पितमाभरणमेकं विद्यते। तद् गृहीत्वा गच्छ। तत्रानेन भषणेन मत्कान्तं प्रमोदय।तदाभरणमादाय दासी कृतपुण्यपार्श्वे आगता। अर्पितं तदाभरणं तस्मै प्रोक्तं च गृहस्वरूपम्। ततः कृतपुण्यः खिन्नः सन् तदाभरणं तस्यै वेश्यायै दत्तवान्। वेश्यायै च कृतपुण्यो गहस्वरूपं प्रोक्तवान्। ततो रहोवृत्त्या कुट्टिन्या प्रोक्तम्—असौ कृतपुण्य उपायेन निष्कासनीयः। ततस्तस्या कुट्टिन्या आदेशाद्यदा (दासी) तस्याभिमुखं धूलि-

प्रक्षेपादि करोति। तदाऽनङ्गसेना मातुरग्रे जल्पति। एष गुणवान् एतावन्ति वर्षाण्यत्र स्थितोऽभूत्। बहुधनमस्य भक्षितमावाभ्यां कथमधुनैवंविधा विडंबना क्रियते। कुट्टिनी जगौ-आत्मनः कुलाचार एवंविधो विद्यते। यावत्तस्य कामुकस्य गृहे धनं भवत्यर्पयति च तावन्मन्यते नान्यथा। एवंविधां वार्तां श्रुत्वा कृतपुण्यो दध्यौ। मनस्यन्यद्वचस्यन्यत्, क्रियायामन्यदेव हि। यासां साधारणस्त्रीणां, ताः कथं सुखहेतवे ॥१॥ कुष्ठिनोऽपि स्मरसमान्, पश्यन्तीं धनकांक्षया। तन्वन्तीं कृत्रिमं स्नेहं, निःस्नेहां गणिकां त्यजेत् ॥ २ ॥ मांसमिश्रं सुरामिश्र–मनेकविटचुम्बितम्। को वेश्यावदनं चुम्बे–दुच्छिष्टमिव भोजनम् ॥ ३ ॥ इत्यादि। ततः कुट्टिनीकृतां विडम्बनां सहित्वा कृतपुण्यः स्वगृहगमनाय चचाल। गृहसमीपेऽभ्येत्य पतितप्रायं गृहं दृष्ट्वा यावत् कृतपुण्यो द्वारमुपाययौ। तावत् पत्नी कान्तमागच्छन्तं वीक्ष्य हृष्टचित्ता जलपूर्णकरकं हस्ते गृहीत्वाऽऽचमनाय संमुखमाययौ। ततस्तया वितीर्णमाचमनं लात्वा गृहमध्येऽभ्येत्य प्रियामुक्तासनमुपविष्टः। ततः प्रियया भोजनसामग्री कृता। कृतपुण्यः कृतस्नानो देवगृहे जिनमर्चित्वा वर्यपुष्पैः स्तोत्रेण स्तुत्वा च बुभुजे। कृतपुण्यस्य कान्तस्य सर्वः स्वगृहवृत्तान्तः प्रियया प्रोक्तः। ततस्तेनेति चिन्तितम्। अहो अहमभाग्यशिरोमणिः यतो मातापितृभ्यां सुखं न दत्तं तेन पुत्रेण जातेन किम्। यतः–" किं जातैर्ब-

हुभिः पुत्रैः, शोकसन्तापकारकैः । वरमेकः कुलाऽऽलम्बी, यत्र विश्राम्यति कुलम् ॥ १ ॥ यैर्वृद्धिं नीयते धर्म्मो, बन्धुवर्गकुले यशः । पितुः पुत्रास्त एव स्यु–र्वैरिणः स्वैरिणः परे ॥ १ ॥ इक्षुक्षेत्रवंशजालीकदलीविषपादपाः । फले जाते विनश्यन्ति, दुष्पुत्रेण कुलं यथा ॥ २ ॥ " पितरौ यन्मयाऽगाधे, क्षिप्तौ दुःखमहार्णवे । धनं निधनमानीतं, पितृपर्यायसञ्चितम् ॥ ३ ॥ ततः प्राह पत्नी–शोको न कर्तव्यः, यद्भावि तद्भवति । यतः–" गते शोको न कर्तव्यो, भविष्यं नैव चिन्तयेत् । वर्तमानेन कालेन, वर्तन्ते हि विचक्षणाः ॥ १ ॥ कर्मणो हि प्रधानत्वं, किं कुर्वन्ति शुभा ग्रहाः । वशिष्टदत्तलग्नोऽपि, रामः प्रव्रजितो वने ॥ २ ॥" इत्यादि प्रियावचः श्रुत्वा स्वस्थः सन् शोकं त्यक्त्वा समाधिना कृतपुण्यो गृहेऽस्थात् । क्रमात्तया समं ऋतुसुखमनुभवतः आधानमभूत् पत्न्याः । अथ कदाचित् पत्न्याः पुरः कृतपुण्यः प्राह–मदन्यो नास्ति कोऽपि पापी । यतो मयि जाते मातापितरौ दुःखितौ भूत्वा मृतौ । मया धनं च निधनं नीतम् । विना धनं वाणिज्यमपि कर्तुं न शक्यते । यतः–" बीजं विना कृषिर्नैव, यथा चाम्बु विना कृषिः । तथा नीवीं विना लक्ष्मी-र्नार्जितुं शक्यते क्वचित् ॥ १ ॥ प्रियाऽऽचष्ट स्वामिन् खेदं मा कुरु । अनल्पोऽयमसौ कल्पः, स्वस्वाधीनं धनं हि वः । दीनाराणां सहस्रं च, गृह्यतामनुगृह्य माम् ॥ २ ॥ दीनारसहस्रमेकं

मे समरति । तेन त्वं व्यवसायं कुरु । ततः शुभेऽहनि बहुमूल्यं स्वल्पं क्रयाणकं लात्वा प्राचीं दिशं गन्तुकामः कृत-
पुण्यः स्फीतसार्थमध्ये रात्रौ पत्न्या तल्पे शायितः क्वचिद्देवकुले । ततः पत्नी पश्चात् स्वगृहे जगाम । इतस्तत्र पुरे
बहुधनवान् धनदेवव्यवहारी वसति स्म । तस्य पत्नी रूपवती । तयोर्धर्मं कुर्वतोर्जिनदत्ताभिधः पुत्रोऽभूत् ।
क्रमात् कान्ते मृते ( तया ) जिनदत्तो धर्मकर्मकुशलो महेभ्यपुत्रीश्चतस्रः परिणायितः अनेकप्रकारैर्भोगैस्ताभिर्विल-
सन्नकस्मान्मृतिं गतो रात्रौ जिनदत्तः । ततस्तया रूपवत्या स्थविरीभूतया सर्वा वधूराकार्य प्रोक्तम्—यदि युष्माकं
भर्ता मृत इति राजा श्रोष्यति तदात्मीयाः सर्वाः श्रियो गृहीष्यति अपुत्रत्वात् । तेन भवतीभिर्न रोदितव्यम् । प्रच्छन्नं
भूमिमध्ये क्षेप्यश्च यथा कोऽपि न जानाति । अहमपि न रोदिष्यामि (अन्यपतिं) चाराधयत तावद्यावत्पुत्रा भवन्तीनां
भवन्ति । ततस्ता वध्वस्तं पतिं भूमिगतं कृत्वा स्नानं कृत्वा देवकुलोपान्तस्थसार्थसमीपे गताः । कृतपुण्यं पश्यन्ति स्म ।
तं तथावस्थं शनैरुत्पाट्य स्वगृहे समानीय त्वं पते ! जय चिरमिति जल्पन्ति स्म ताः स्थविरावध्वः । तदा स्थविराऽवगु-
स्नुषाचतुष्टयस्यापि, पश्यतस्तत्र निस्त्रपा । तदीयं कण्ठमालम्ब्य, रुदत्येवमुवाच सा ॥ १ ॥ हा वत्स बहुवात्सल्य,
विहाय निजमातरम् । एतावन्ति दिनानि त्वं, क्व यातोऽसि क्व वा स्थितः । निरालम्बा शयालम्बा, तवाम्बाऽस्मि न संशयः ।

हुभिः पुत्रैः, शोकसन्तापकारकैः । वरमेकः कुलाऽऽलम्बी, यत्र विश्राम्यति कुलम् ॥ १ ॥ यैर्वृद्धिं नीयते धर्म्मो, बन्धुवर्गकुले यशः । पितुः पुत्रास्त एव स्यु-र्वैरिणः स्वैरिणः परे ॥ १ ॥ इक्षुक्षेत्रवंशजालीकदलीविषपादपाः । फले जाते विनश्यन्ति, दुष्पुत्रेण कुलं यथा ॥ २ ॥ " पितरौ यन्मयाऽगाधे, क्षिप्तौ दुःखमहार्णवे । धनं निधनमानीतं, पितृपर्यायसाञ्चितम् ॥ ३ ॥ ततः प्राह पत्नी--शोको न कर्तव्यः, यद्भावि तद्भवति । यतः—" गते शोको न कर्तव्यो, भविष्यं नैव चिन्तयेत् । वर्तमानेन कालेन, वर्तन्ते हि विचक्षणाः ॥ १ ॥ कर्मणो हि प्रधानत्वं, किं कुर्वन्ति शुभा ग्रहाः । वशिष्टदत्तलग्नोऽपि, रामः प्रव्रजितो वने ॥ २ ॥" इत्यादि प्रियावचः श्रुत्वा स्वस्थः सन् शोकं त्यक्त्वा समाधिना कृतपुण्यो गृहेऽस्थात् । क्रमात्तया समं ऋतुसुखमनुभवतः आधानमभूत् पत्न्याः । अथ कदाचित् पत्न्याः पुरः कृतपुण्यः प्राह--मदन्यो नास्ति कोऽपि पापी । यतो मयि जाते मातापितरौ दुःखितौ भूत्वा मृतौ । मया धनं च निधनं नीतम् । विना धनं वाणिज्यमपि कर्तुं न शक्यते । यतः—" बीजं विना कृषिर्नैव, यथा चाम्बु विना कृषिः । तथा नीवीं विना लक्ष्मी-र्नार्जितुं शक्यते क्वचित् ॥ १ ॥ प्रियाऽऽचष्ट स्वामिन् खेदं मा कुरु । अनल्पोऽयमसौ कल्पः, स्वस्वाधीनं धनं हि वः । दीनाराणां सहस्रं च, गृह्यतामनुगृह्य माम् ॥ २ ॥ दीनारसहस्रमेकं

मे समरति । तेन त्वं व्यवसायं कुरु । ततः शुभेऽहनि बहुमूल्यं स्वल्पं क्रयाणकं लात्वा प्राचीं दिशं गन्तुकामः कृत-
पुण्यः स्फीतसार्थमध्ये रात्रौ पत्न्या तल्पे शायितः क्वचिद्देवकुले । ततः पत्नी पश्चात् स्वगृहे जगाम । इतस्तत्र पुरे
बहुधनवान् धनदेवव्यवहारी वसति स्म । तस्य पत्नी रूपवती । तयोर्धर्मं कुर्वतोर्जिनदत्ताभिधः पुत्रोऽभूत् ।
क्रमात् कान्ते मृते ( तया ) जिनदत्तो धर्मकर्मकुशलो महेभ्यपुत्रीश्चतस्रः परिणायितः अनेकप्रकारैर्भोगैस्ताभिर्विल-
सन्नकस्मान्मृतिं गतो रात्रौ जिनदत्तः । ततस्तया रूपवत्या स्थविरीभूतया सर्वा वधूराकार्य प्रोक्तम्—यदि युष्माकं
भर्ता मृत इति राजा श्रोष्यति तदात्मीयाः सर्वाः श्रियो गृहीष्यति अपुत्रत्वात् । तेन भवतीभिर्न रोदितव्यम् । प्रच्छन्नं
भूमिमध्ये क्षेप्यश्च यथा कोऽपि न जानाति । अहमपि न रोदिष्यामि (अन्यपतिं) चाराधयत तावद्यावत्पुत्रा भवन्तीनां
भवन्ति । ततस्ता वध्वस्तं पतिं भूमिगतं कृत्वा स्नानं कृत्वा देवकुलोपान्तस्थसार्थसमीपे गताः । कृतपुण्यं पश्यन्ति स्म ।
तं तथावस्थं शनैरुत्पाट्य स्वगृहे समानीय त्वं पते ! जय चिरमिति जल्पन्ति स्म ताः स्थविरावध्वः । तदा स्थविराऽवग्-
स्नुषाचतुष्टयस्यापि, पश्यतस्तत्र निस्त्रपा । तदीयं कण्ठमालम्ब्य, रुदत्येवमुवाच सा ॥ १ ॥ हा वत्स बहुवात्सल्य,
विहाय निजमातरम् । एतावन्ति दिनानि त्वं, क यातोऽसि क वा स्थितः । निरालम्बा शयालम्बा, तवाम्बाऽस्मि न संशयः ।

त्वं पुत्र जातमात्रोऽपि, हतः केनापि पाप्मना ॥ ३ ॥ इत्युक्त्वा सा जरती प्राह–इदानीं तावकीनस्य, ज्येष्ठबन्धोर्विपत्तितः । तव संपत्तितश्चास्मि, शोकहर्षसमाकुला ॥ ४ ॥ बन्धुवध्वश्चतस्रोऽमूरमूश्च विपुलाः श्रियः । एता नद्य इवाम्भोधिमगाधं त्वामुपस्थिताः ॥ ५ ॥ अतः परं पुत्र त्वयाऽन्यत्र कुत्र न गन्तव्यं स्वेच्छयाऽत्र स्थेयम् । आभिर्वधूभिः समं भोगान् भुंक्ष्व । कृतपुण्यो दध्यौ । किं स्वप्नं लभ्यमानमस्ति । अथवाऽसौ एव मां स्थापयति तदा स्वर्गसौख्यमेव समुपस्थितम् । एवं ध्यात्वा कृतपुण्योऽवग्–मातर्मम सर्वं विस्मृतम् । अधुनाऽत्राऽऽगां शुभकर्मोदयात् । ततो व्यचिन्तयच्चेति सः । यतः–"श्रीयोगः सुदृशां योगः, स्वयंवरमिव द्वयम् । उपस्थितमतो व्योम–प्रसूनैः किं विकल्पनैः ॥१॥" मातर्मया त्वदीयाज्ञा, देवशेषेव सुन्दरा । पालनीया सदा यत्ना–दिहामुत्र सुखप्रदा ॥ १ ॥ क्रमाच्चतस्रो वध्वो गर्भं दधुः पुत्राश्चत्वारो बभूवुः तेषां जन्मोत्सवः कृतः । तस्य तत्र तस्थुषो द्वादशवत्सरी सुखनिमग्नस्य गता । ततोऽन्यदा वृद्धया प्रोक्तम्–भवतीनां चत्वारः पुत्रा बभूवुः । तेन राजाऽऽत्मनः श्रियं न गृहीष्यति । ततोऽसौ यत्र स्थानादानीतस्तत्र स्थाने मोच्यते । ताभिरुक्तं मातः कथमयमात्मनो लक्ष्म्यादिवर्द्धको मोच्यते । वृद्धयोक्तं ज्ञायते पुरुषस्वरूपम् । कदाचिदसावात्मनः श्रियं बलाद् गृहीष्यति तदा का गतिः । ततो बलात्तं मोचयितुं ताः साग्रहं ग्राहितास्तया । तत-

स्ताभिः शम्बलकृते मोदकचतुष्टयं तदर्थं कृतम् । तन्मध्ये रत्नचतुष्टयं क्षिप्तम् । ततो दासीपार्श्वादुत्पाट्य तं सुप्तं वस्त्रप्रान्तबद्धमोदकचतुष्टयं पूर्वस्थाने पुरमध्ये मुमोच वृद्धा । तदानीमेव पूर्वं विदेशे गत्वा द्वादशवर्षाणि भ्रान्त्वा तस्मिन्नेव स्थाने स एव सार्थवाहोऽवततार । श्रुतं कृतपुण्यप्रियया सार्थाऽगमनम् । तत्राऽगता पतिं सुप्तं दृष्ट्वा पार्श्वे स्थिता यावत्तावत् उज्जजागार पत्नीं ददर्श च हृष्टः । ततः प्रियायुक्तः कृतपुण्यः स्वगृहे समागात् । भक्त्या गौरवितः सदन्नपानदानतः पत्न्या भर्तुः पुरः पुत्रोत्पत्तिस्वरूपं प्रोक्तम् । पत्न्या प्रोक्तं—पते ! किमानीतं तेनोक्तं किमपि नार्जितं मया पूर्वकृतपापोदयात् । अपरं किमपि नोक्तं लज्जया । मोदकचतुष्टयं कान्ताऽऽनीतं तया भाजनमध्ये क्षिप्तम् । पुत्रोऽन्यदा लेखशालायां गत्वा प्रातराशकृते समागतः । मात्रा दत्तं मोदकं गृहीत्वा लेखशालायां गतः । तत्र मोदको भक्षितः, तन्मध्याद्विशिष्टः प्रस्तरो निर्गतः ! बालकस्तं प्रस्तरं दृष्ट्वा लेखशालिकाऽग्रे प्राह । ममायं विशिष्टो घुण्टकः पट्टिकाघुण्टनार्थं भविष्यति । तं घुण्टकं गृहीत्वा कान्दविकगृहे पट्टिकामज्जनार्थं गतः । पट्टिकां मज्जयतस्तस्य हस्तादकस्माद् घुण्टिको जलभृतभाजनान्तः पतितस्तदा जलं द्विधाऽभूत् । तज्जलं तथाभूतं दृष्ट्वा कान्दविको दध्यौ । अयं प्रस्तरो जलकान्तरत्नं बहुमूल्यं तेन किमपि सुखभक्षिकामस्मै वितीर्य गृह्यते मया यदि तदा वरम् । एवं ध्यात्वा कान्दविकस्तस्मै वर्यमोद-

कद्वयं दत्त्वा तं प्रस्तरं ललौ बालं वञ्चयित्वा । ततस्तन्मोदकद्वयं भक्षयित्वा हृष्टोऽपरघुण्टकेन पट्टिकां घुण्टयित्वा लेखशालां गतो बालः कृतपुण्यपुत्रः । कान्दविकेन स प्रस्तरो गुप्तीकृतः । क्रमादन्येद्युः श्रेणिकभूपतेः सेचनको हस्ती गङ्गानद्या मध्ये जलं पिबन् स्नानं कुर्वन् तन्तुजीवेन निरुद्धः निर्गन्तुं न शक्नोति । अनेके उपचाराः कृताः परं स हस्ती जलान्निर्गन्तुं न शक्नोति यदा । तदा राजा श्रेणिकोऽभयकुमारमन्त्रियुक् तत्रागात् । राज्ञाऽपि बहव उपचाराः कृतास्तथापि गजो बहिर्न निर्याति । ततः खिन्ने भूपतौ अभयकुमारो बुद्धिमानुवाच । तन्तुजीवेन हस्ती गृहीतोऽसौ यदि जलकान्तो मणिर्जलमध्ये गजपार्श्वे मोच्यते तदा जलं द्विधा भवति तन्तुजीवो गजं मुक्त्वा जलमध्ये गच्छति । ततो भूपेनोक्तं भाण्डागारादानीयतां जलकान्तो मणिः । अभयकुमारस्ततो भाण्डागारं विलोक्य प्राह—स्वामिन् भाण्डागारे जलकान्तमणिर्नास्ति, तेन पुरमध्ये पटहो वाद्यते । यः कश्चिज्जलकान्तमणिमानयिष्यति तस्मै राज्यार्द्धयुता स्वपुत्री दास्यते मया । ततो भूपादेशादनुगैः पटहो वाद्यमानः पुरमध्ये स्थाने स्थाने कान्दविकगृहोपान्ते गतः, तदा कान्दविकेन पटहः स्पृष्टः । ततो राजपार्श्वमानीते कान्दविके राजपुरुषै राजा मुमुदे । बहुलोकयुतो राजा नदीतीरे गतः ततः कान्दविको जलकान्तमणिमानीय राजपार्श्वे मुमोच यावत्तावज्जलं द्विधाचक्रे ।

तन्तुजीवो नष्टः गजो मुत्कलोऽभूत् । पटहभेरीमृदङ्गादिबहूनि वादित्राणि वाद्यन्ते । राजा हृष्टः । कान्दविकस्य राज्ञा सन्मानं कृतं । कान्दविको हृष्टोऽभूत् । वाद्यमानेषु बहुवादित्रेषु सेचनकगजारूढो राजा तुरङ्गमारूढाभयकुमारः कान्दविकयुक् नानाप्रकारं दानं याचकेभ्यो विश्राणयन् स्वगृहमाजगाम । कान्दविकः सन्मानितः सन् स्वमणिमादाय गृहे गतः । इतो राजा अभयकुमारमाकार्य रहस्यवग् । कान्दविकस्यात्मनः पुत्री राजपुत्रवरयोग्या कथं दास्यते मनोरमा-ह्वया । अभयोऽवग्-स्वामिन् खेदो नानेयः । यस्य रत्नमिदं भविष्यति, तं बुद्ध्या प्रकटीकरिष्यामि । ततः सर्वं युष्मन्मनोऽभिमतमेव भविष्यति । ईदृशं रत्नं जलकान्तरूपं राजगृहामात्यगृहे मुक्त्वा कान्दविकतुल्यनीचगृहे न भवति । यतः-"पीयूषं रजनीकरे वरतराभासश्च सूर्येऽबुधौ, रत्नानां निचयो मरुत्तरुगणो मेरौ ग्रहा अम्बरे । स्वर्गे स्वर्गिगजस्तथा सुरहयो गीर्वाणगौ मञ्जुला । चक्रं चक्रिनिकेतने भवति वै नान्यत्र तिष्ठेत् क्षितौ ॥१॥ रत्नानि रोहणक्ष्माभृद्वार्धिष्वेव भवन्ति हि । गजा विन्ध्याटवीष्वेव प्राप्यन्तेऽन्यत्र नैव हि ॥२॥ तथा वर्याणि वस्तूनि, रत्नादीनि च भूतले । भवन्ति मेदिनीपाल-महेभ्यामात्यसद्मसु ॥ ३ ॥" तेन कस्यापि व्यवहारिणो रत्नमिदं भविष्यति । यस्य भविष्यति च तस्मै राज्यार्धयुता पुत्री दास्यते । ततो राजा हृष्टः । राज्यार्द्धं पुत्रीयुतं कान्दविकाय दास्यते इति कथयित्वाऽभयकुमारेण

स्वजनाः कान्दविकमाकारयितुं प्रेषिताः । तत्र गत्वा ते जगुः । राजा त्वामाकारयति । राज्यार्धं पुत्रीयुतं दास्यति । कान्दविको हृष्टः स्वजनसहितः । ततः कान्दविको वर्यवस्त्राणि परिधाय राजगृहे समागात् । अभयकुमारेण सन्मानितः । पृष्टं च तव रत्नमिदं क्व चटितम । तेनोक्तं मम गृहे क्रमागतमस्ति । ततोऽभयकुमारेण पूर्वशिक्षितान् स्वसेवकानाकार्य प्रोक्तम् । अस्मै राज्यार्द्धं कन्यायुतं दीयतां ततस्ते राजपुरुषा मन्त्रिप्रेरिताः कम्बाभिः तं तथा ताडयन् । यथा क्षणमेकं निश्चेष्टकाष्ठीभूतः । क्षणेन स्वस्थीभूते कान्दविकेऽभयोऽवग् । सत्यं वद क्व लब्धं रत्नं यदि सत्यं न जल्पिष्यते त्वयाऽधुना तदा भूरिकम्बाभिस्ताडनान्मृत एव, मरणभयात् कान्दविकेनोक्तमामूलचूलतो रत्नप्राप्तिस्वरूपम् । "जगौ ततोऽभयः सत्यं, स एवास्येदमीदृशं कल्पद्रूणां सुवर्णाद्रौ, दृश्यते सम्भवपरम् ॥१॥" ततो राज्ञाऽभयकुमारवचनेन कृतपुण्याय राज्यार्द्धं मनोरमाकन्यायुतं विश्राणितम् । ततोऽभयकुमारो ग्रामैकसहितामेकां कान्दविककुलोत्पन्नां कन्यां भूपादेशाद्दापयामास कान्दविकाय । यतो राज्ञोक्तं निष्फलं न भवति । वर्यमारूढं कृतपुण्यं मनोरमाप्रियायुतं वादित्रवादनपुरस्सरं स्वगृहे प्रेषयामासाभयकुमारः । तदा लोका जगुः । यादृशी रत्या प्रीत्या वा कंदर्पस्य शच्येन्द्रस्य श्रिया कृष्णस्य गौर्या भवस्य शोभा भवति तथा कृतपुण्यस्य मनोरमया । यतः—ततोऽभयकुमारेण समं कृतपुण्यस्य

प्रीतिर्जाता । चन्द्रसमुद्रयोरिव, पद्मार्कयोरिव । एकदा रहसि अभयकुमाराग्रे कृतपुण्येन स्वसम्भवपुत्रचतुष्टयोत्पत्तिस्वरूपं प्रोक्तम् । मन्त्रीश नगरेऽत्रैव, मम पत्नीचतुष्टयं ॥ चतुःसुतयुतं चास्ति, परं वेद्मि न मन्दिरम् ॥ १ ॥ पुरेऽस्मिन् तद्गृहं चत्वारः पुत्रा जाताश्चात्र । अभयकुमार आचष्टाहो तव चातुर्यं वर्यं विद्यते । यत्त्वया यत्र द्वादश वर्षाणि स्थितं तदपि न ज्ञायते । तेन तव महच्चातुर्यम् । कृतपुण्योऽवग्—सुप्त एव तया वृद्धया स्वगृहे नीतः पश्चादपि सुप्त एव मुक्तो द्वादशवर्षाणि सप्तमभूमिधवलगृहे स्थापितोऽहम् । अभयकुमारेणोक्तम्—ये तव पुत्रा अभूवंस्तत्र, ते त्वामुपलक्षन्ति न वा । कृतपुण्येनोक्तम् । मम श्मश्रु हस्ते गृह्णन्ति ममाङ्के उपविश्य बहुशस्तात ताति जल्पन्तोऽभूवन् । अभयोऽवग् त्वं च ताः पत्नीरुपलक्षयसि न वा तेनोक्तमुपलक्षयाम्यहं ताः । अभयोऽवग्—ताः पत्नीः पुत्रयुताः अहं ते प्रकटीकरिष्यामि । अथाभयकुमारेण द्विद्वारो महान् प्रासादः कारितः । एकेन द्वारेण प्रविश्यते द्वितीयेन निर्गम्यते । कृतपुण्यतुल्यरूपां यक्षप्रतिमां तन्मध्येऽभयः स्थापयामास । ततः पटहमिति वादयामासाभयकुमारः या या स्त्री स्वीयसर्वापत्ययुता पञ्च पञ्चमोदकान्विता यक्षं नत्वा द्वितीयद्वारेण निर्गच्छति । तस्याः कुलस्य कुशलं भविष्यति, नो चेन्मरणं भविष्यति । अग्रेतनचतुर्दश्यामागन्तव्यम् ।

ततश्चतुर्दश्यामभयकुमारः कृतपुण्ययुतः प्रासादपार्श्वेऽभ्येत्योपविष्टः । सर्वा स्त्री स्वापत्ययुता मोदकस्थालयुता एकद्वारेण प्रासादमध्ये प्रविश्य मोदकान् ढौकयित्वा यक्षं प्रणम्य द्वितीयद्वारेण निर्याति । इतः सा वृद्धा चतुर्वधूचतुःपुत्रयुता यक्षं नन्तुमागात् । तदा कृतपुण्यो जगौ-एषा सा वृद्धा । यावद्वृद्धा मोदकस्थालं यक्षाग्रे मुक्त्वा प्रणमति वधूयुता तावत्ते चत्वारः पुत्रा यक्षपार्श्वे गताः तात तातेति जल्पन्तः, प्रमोदोत्फुल्ललोचनाः । यक्षाङ्कपालीपल्यङ्क-मध्युषुस्तनयास्तदा ॥ १ ॥ तदा कश्चिद्यक्षस्य श्मश्रुणि विलग्नः, कश्चित् हस्ते, कश्चिदुदरे कश्चिन्मस्तके । तदाऽभयेन तत्रैत्योक्तम् । अमी ते चत्वारः पुत्राः चतस्रो वध्वः । ततस्तौ तस्याः पृष्ठे स्वसेवकान् प्रेष्य तस्या गृहं जग्मतुः । तत उपलक्ष्य ताः कन्यास्ते पुत्राश्च सा लक्ष्मीस्तस्याभवन्, कृतपुण्यस्याभयकुमारबुद्ध्या । साऽनङ्गसेना वेश्याऽपि तमङ्गीचकार च । एवं कृतपुण्यस्य सप्त प्रिया बभुवुः । अन्येद्युर्जगद्वन्द्यः श्रीवीरस्वामी भव्यजीवान् प्रबोधयन् वैभार-गिरौ समवासार्षीत् । तदा श्रेणिकभूपतिरभयकुमारकृतपुण्यादिपरिवारयुक्तः श्रीवीरं वन्दितुं ययौ । अत्र श्रीवीरेण देशना दत्ता-धर्मोऽयं धनवल्लभेषु धनदः कामार्थिनां कामदः, सौभाग्यार्थिषु तत्परः किमपरं पुत्रार्थिनां पुत्रदः । राज्यार्थिष्वपि राज्यदः किमथवा नानाविकल्पैर्नृणां, तत् किं यन्न ददाति किं न तनुते स्वर्गापवर्गायते ॥ १ ॥ अत्र देशनान्ते

कृतपुण्यः कृताञ्जलिः पप्रच्छ । भगवन् ! केन कर्मणा पूर्वभवार्जितेनास्मिन् भवेऽन्तराऽन्तरा सम्पदो विपदोऽभूवन् मम ।
वीरः प्राह—पूर्वभवे श्रीपुरे त्वं वत्सपालकोऽभूः । परं दौर्गत्यानिर्विण्णः परमान्नं गृहे गृहे निष्पद्यमानं वीक्ष्य मातरं
प्रति जगौ—परमान्नं मे देहि । अम्बा रुन्दती जगौ—पुत्र ! गृहे किमपि नास्ति, कथं परमान्नं दीयते । अन्नं नास्ति जलं
नास्ति, नास्ति मुद्रा युगन्धरी । धान्यं च लवणं नास्ति, तन्नास्ति यद्धि भुज्यते ॥ १ ॥ ततस्तां रुदन्तीं बालं च
रुदन्तं वीक्ष्य प्रातिवेश्मक्यस्तन्दुलदुग्धशर्करादि ददुः तस्यै । तया परमान्नं निष्पादितम् । पुत्राय परमान्नं परिवेष्य
कार्यार्थं प्रातिवेश्मकगृहे ययौ । इतो मासक्षपणपारणके साधुद्वयं तत्र विहर्तुमागतम् । साधुद्वयं कृशशरीरं चारि-
त्रपात्रं दृष्ट्वा दध्यौ गोपालः—अहो मे सफलं जन्म, दिनोऽयं रुचिरोऽद्य मे । यामोऽयं सुन्दरो मेऽद्य, वेलेयं मेऽद्य
सुन्दरा ॥ १ ॥ यतोऽधुना समायातं, वर्यं साधुद्वयं स्फुटम् । प्रतिलाभ्य भविष्यामि, कृतार्थोऽन्नं तमोहरम् ॥ २ ॥
ततस्तदा हृष्टचेताः स्वस्थानादुत्थाय प्रणम्य, गोपालकोऽवग्—मम भाग्यमागतं युष्मत्पादानामत्रागमनात् । अयं
शुद्धग्रासाहारोऽङ्गीक्रियताम् । एकं भागं परमान्नस्य दत्त्वा पुनर्दध्यौ । एतन्मात्रेण परमान्नेनास्य किं भविष्यति ।
ततो द्वितीयं भागं एवं तृतीयं भागं च एतस्मै कृतपुण्यः ददौ । एवं त्रिवारं दत्तं परमान्नम् । ततो

गते यतिद्वये मात्रा पुनरपि परमान्नं परिवेषितम् । ततः कालक्रमाद्गोपालको मृत्वा त्वमभूः कृतपुण्यकः । एवं त्रिवारं विभज्य यतिभ्यां दानं दत्तं तेन त्रिधा तवान्तराऽन्तरा सुखमभूत् । आकर्ण्यैवं स्वं पूर्वभवं कृतपुण्यो जातवैराग्यो ज्येष्ठे पुत्रे गृहभारमारोप्य सप्तक्षेत्र्यां स्वं धनं उप्त्वा श्रीवीरपार्श्वे दीक्षामादाय च स्वर्गसुखभागभूत् । ततश्च्युतः शिवं गमिष्यति ।

॥ इति कृतपुण्यकथानकं दानविषये ॥ १४ ॥

---

उपसर्गान् कृतान् व्याघ्र-सिंहादिभिः शरीरवान् । सहमानः शिवं याति, सुकोसलमुनीन्द्रवत् ॥ १ ॥

पुरा अयोध्यायां इक्ष्वाकुवंशे कीर्तिधरो राजा न्यायाध्वना राज्यं कुरुते स्म । तस्य सहदेव्यभिधा पत्नी बभूव । क्रमात्तयोः पुत्रः सुकोशलनामाऽजनि । स च क्रमाद् धर्मकर्मशास्त्रं पपाठ । अन्येद्युः श्रीधर्म्मसूरयस्तत्राययुः । धर्मोपदेशं श्रोतुं तत्र नृपो ययौ । गुरुभिरिति धर्मोपदेशो ददे । तथाहि—" आर्यदेशकुलरूपबलायु-र्बुद्धिबन्धुरमवाप्य नरत्वम् । धर्म्मकर्म न करोति जडो यः, पोतमुज्झति पयोधिगतः सः ॥१॥ जरा जाव न पीडेई, वाही जाव न वड्ढई । जाविंदिया न हायंति, ताव धम्मं समायरे ॥ २ ॥ विषयगणः कापुरुषं, करोति वशवर्त्तिनं न सत्पुरुषम् । बध्नाति

मशकमेव हि, लूतातन्तु र्न मातङ्गम् ॥ ३ ॥ गात्रं संकुचितं गतिर्विगलिता दन्ताश्च नाशं गताः, दृष्टिर्भ्रश्यति रूपमेव ह्रसते वक्त्रं च लालायते ॥ वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते, हा कष्टं जरयाऽभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥४॥ संझरागजलबुब्बूवमे, जीविए जलबिन्दुचंचले । जुवणे नईवेगसन्निभे, पावजीव किमर्थं न बुज्झसे ॥ ५ ॥ " इत्यादि धर्मोपदेशं श्रुत्वा संवेगधारी कीर्तिधरो राजा शिशुमपि सुकोशलं राज्ये न्यस्य स्वयं दीक्षां जग्राह। प्रतिमाधरः कीर्तिधरो यतिर्गृहीतशास्त्रार्थो विजहार। मात्रा पुत्रस्नेहात् स्वर्णजटिता दन्तपङ्क्तिः कारिता। सुकोशलः क्रमाद्वर्द्धमानो यदा यदा पितरं स्मरति। तदा तदा माता कीर्तिधरस्य पत्युर्दोषान् गृह्णाति स्म। अथ कदाचित् कीर्तिधरो यतिरयोध्यामध्ये पष्ठपारणे भिक्षायै समागात् तदा सहदेवी तं पतिं दृष्ट्वा दध्यौ। यदि मदीयोऽयं पुत्रः पितरं द्रक्ष्यति तदा दीक्षां गृहीष्यत्येव। तेन पुराद् बहिरयं यतिर्निष्कास्यते। ततः सहदेवी तं पतिं सेवकपार्श्वात् पराभूय सुकोशलावेदितमेव पुरान्निष्काशयामास। कीर्तिधरं पतिं पुराद्बहिर्निष्काश्यमानं दृष्ट्वा धात्र्या सुकोशलाय प्रोक्तम् ततः सुकोशलः कीर्तिधरयतिपार्श्वे गत्वा तं च नत्वा प्राह—पुरमध्ये त्वं समागच्छ। कीर्तिधरोऽवग्—सांप्रतं पुरमध्ये नागमिष्यते मयोपसर्गसम्भवात्। ततः सुकोशलो मातृकृतं पितृपराभवं मत्वा राज्यं तृणवत् त्यक्त्वा पितुः पार्श्वे व्रतं ललौ।

ततः सुकोशलः पित्रा सह विजहार । तीव्रं तपो द्वावपि कुरुतः । सहदेवी पतिपुत्रवियोगादार्तध्यानेन मृत्वा व्याघ्री वनमध्येऽभवत् । कदाचित्तौ पितापुत्रौ मुनी विहरमाणौ व्याघ्र्यधिष्ठितायां भुवि गतौ । तदा व्याघ्रीं संमुखमागच्छन्तीं दृष्ट्वा कीर्तिधरोऽवग्—अन्यस्मिन् मार्गे गम्यते । ततः सुकोशलः साहसमवलम्ब्य तेनैव मार्गेण गच्छन् कृतानशनो व्याघ्रीविदार्यमाणो वर्यध्यानात् सर्वकर्मक्षयात् केवली जज्ञे । मुक्तिं तत्क्षणादगात् ॥ व्याघ्री सुकोशलदन्तपंक्तिं वीक्ष्योहापोहपरा जातजातिस्मृतिः पुत्रं ज्ञात्वा पश्चात्तापपरा स्वकर्म निन्दन्ती सहस्रारस्वर्गे गता । कीर्तिधरो मुनिरपि प्राप्तकेवलज्ञानो मुक्तिं ययौ । इति सुकोशलकथा समाप्ता ॥ १५ ॥

योऽष्टापदे चतुर्विंशतिं जिनान्नौति स तस्मिन्नेव भवे मुक्तिं याति । एवं श्रीवीरपार्श्वे श्रुत्वा गौतमस्वाम्यष्टापदे जिनान्नन्तुं गतः । देवांस्तत्र नत्वा यावद्बहिर्बलानके उपविष्टस्तावद्वैश्रमणः सुरस्तत्रागतो जिनान्नत्वा धर्मं शृण्वन् पुण्डरीकाध्ययनं श्रीगौतमेन कथ्यमानं श्रद्दधे । ततः स स्वर्गाच्च्युतो वज्रस्वाम्यजनि । तच्चेदमध्ययनम्—

यः पाति संयमं शुद्धं, मनोवचननिग्रहैः । स एव मुच्यते पापा–त्पुण्डरीकयतीशवत् ॥ १ ॥
यः प्राप्य संयमं मर्त्यो, विराधयति सन्ततम् । स एव लभते दुःखं, दुर्गतौ कण्डरीकवत् ॥ २ ॥

तथाहि महाविदेहे क्षेत्रे पुष्कलवतीविजये पुण्डरीकिणी पुरी स्वर्गखण्डमिवासीत् । तत्र महापद्मो राजा राज्यं
न्यायाध्वना चकार । तस्य पद्मावती प्रिया सच्छीलशालिन्यभूत् । पुण्डरीककण्डरीकौ सुतावभूतां तयोः । एकदा
साधवो नलिनवनोपवनं समाजग्मुः, तत्र वन्दितुं गुरून् महापद्मराजा ययौ । धर्मोपदेशो ददे गुरुभिः । "असारेऽस्मिन्
भवे नास्ति, सुखं व्याधिश्च विद्यते। जानन्तोऽपि जना एवं, न कुर्वन्ति वृषं मनाग् ॥ १ ॥ संसारंमि असारे नत्थि सुहं
वाहिवेयणापउरे । जाणंतो इह जीवो, न कुणइ जिणदेसियं धम्मं ॥ २ ॥ " इत्यादि धर्मोपदेशमाकर्ण्य महापद्मः
पुण्डरीकाय राज्यं वितीर्य संयमश्रियं जग्राह । पुण्डरीकः कण्डरीकयुतो राज्यं चकार । अन्येद्युः पुण्डरीकः कण्ड-
रीकं प्रति जगौ—भो वत्स मम चिरं भवविरागता जाताऽस्ति । तेन त्वं राज्यं गृहाण । अहं तु चारित्रं संसार-
दुःखौघतृणे लवित्रं गृहीष्यामि । कण्डरीकोऽभ्यधात् ज्येष्ठसहोदर ! त्वमेवं किं जल्पसि मामपारसंसाराऽम्भोधौ
पातयितुम् । य आत्मनोऽभीष्टो भवति तस्य तु सुखदं भवति तद्दीयते सद्भिः । राज्यं तु नरकासात—सन्ततिप्रति-
दायकम् । निगद्यते जिनाधीशै—र्वाञ्छद्भिर्हितमङ्गिनाम् ॥ १ ॥ ततः पुण्डरीकोऽपि जगौ—मम विषया न रोचन्ते ।
यतः—" वत्स मत्सरिणो ज्ञेयाः विषया विषमूर्तयः । तानीन्द्रियाणि संसारे, पातयन्ति जनांश्चिरम् ॥ १ ॥ " कण्डरी-

कोऽवग्—वृद्धो यो नन्दनो भवति स तु राज्यस्य धर्ता भवत्येव । तेन त्वया न किमपि प्रत्युत्तरो दातव्यः । ततः कण्डरीकः पुण्डरीकं पर्यवसाय्य दीक्षां ललौ । पुण्डरीकः प्रजां पालयन् मनो विना स्त्रियं भुङ्क्ते स्म । कण्डरिकस्तु नानाविधाभिग्रहादितपःपरः संयमं पालयामास । इतोऽन्येद्युः कण्डरीकः संयमश्रीसक्तः सन् कस्यचिन्नरेन्द्रस्य राज्यसम्पदं वीक्ष्य दध्यौ मया मुधा हारितं राज्यं यदर्थमेवंविधं कष्टं करिष्यमाणमस्ति तत्स्वर्गादिसुखमधुना दृश्यते केनापि न, राज्यं तु प्रत्यक्षसुखमस्ति, तेन मुधाऽहं कायक्लेशं करिष्ये । यतः—"तीव्रं तपो मनोमुख्य—पञ्चेन्द्रियादियन्त्रणम् । देहिनां जायतेऽत्यन्त—वेदनाहेतवे खलु ॥ १ ॥ एवं ध्यायन् सदा चित्ते, कण्डरीकोऽधमाशयः । एकेन्द्रियादिजीवानां, विराधनां तनोति सः ॥ २ ॥ एवं विचिन्त्य स्वपितृराज्यं भ्रातृपार्श्वाज्जिघृक्षुः कण्डरीकश्चचाल स्वपुरं प्रति । पुण्डरीकिणीपुर्युपान्तस्थोद्याने समेत्य स्वमुपकरणं वृक्षशाखायां बद्ध्वा शाड्वले स्थाने कण्डरीक उपविष्टः । ततः कस्यचिन्नरस्योद्यानपालकस्य मुखात्स्वागमनं कण्डरीको ज्ञापयामास पुण्डरीकाय । ततो राजा हृष्टः स्वभ्रातृपार्श्वे समेत्य ववन्दे तत्क्रमौ । वृक्षशाखायामुपकरणं बद्धमालोक्य पुण्डरीको दध्यौ । अहो ! एवंविधवैराग्यवासितचित्तस्य एवंविधा सचित्तविराधनारूपा चेष्टा भवति, तदा मोहस्य विलसितं सर्वम् । यतः—" क्षणं सक्तः

क्षणं मुक्तः, क्षणं क्रुद्धः क्षणं क्षमी । मोहाद्यैः क्रीडयेवाहं, कारितः कपिचापलम् ॥ १ ॥ विषयगणः कापुरुषं, करोति वशवर्त्तिनं न सत्पुरुषम् । बध्नाति मशकमेवहि, लूतातन्तुर्न मातङ्गम् ॥ २ ॥ तदानीं " कण्डरीको जगौ, मया संयमं पालयितुं न शक्यते, तेन मम राज्यमर्प्पय । राजा जगौ—प्रागपि मया व्रतं जिघृक्षुस्त्वं वारितोऽपि संयममलाः । अधुना यदि तव राज्यग्रहणेच्छाऽस्ति, तदाऽऽवयो राज्यसंयमयोर्व्यत्ययो भवतु । ततो राजा व्रतचिन्हानि ललौ, कण्डरीकस्तु राज्यचिन्हानि छत्रादीनि जग्राह । ततो निःसङ्गचित्तः सन् विजहार पुण्डरीकयतिः, कण्डरीकस्तु प्राप्तराज्यः बह्वन्नं भक्षयन्—सेवकैर्हसितः सन् दध्यौ, यैः सेवकैर्हसितमस्ति, तेषां शिक्षा दास्यते । कर्मयोगाद्रात्रौ तस्यामेव विशूचिका जाता कण्डरीकस्य । ततो यद्यदौषधं तस्य दीयते सेवकैस्तत्तन्न गुणाय भवति । ततो रुष्टः कडण्रीको दध्यौ, एतैः सेवकैः सचिवाद्यैर्मां हन्तुमुपायो मण्डितोऽस्ति । यदि नीरोगो भविष्यामि, तदा सर्वेषां घाणुकप्रक्षेपादिना प्राणान् गृहीष्यामि । एवं रौद्रध्यानपरः कण्डरीकस्तस्मिन्नेव दिनात्यये विपद्य सप्तमे नरके गतः । यतः—" आर्ते तिर्यग्गतिस्तथागतिरधो० ॥ १ ॥ " पुण्डरीकस्तु स्वयंगृहीतसंयमो जिनादिष्टसंयमं शुद्धं पालयितुकामो दध्यौ, गुरुपार्श्वे गत्वा गुरुहस्ते संयमं गृहीत्वा संयमं शुद्धं पालयिष्यामि । मार्गे गच्छन् पुण्डरीकः कस्यचिद्गृहे-

रूक्षान्नं प्राप्यैकान्ते च भुक्त्वा कस्मिंश्चिद्ग्रामे तृणसंस्तरे सुष्वाप। रात्रौ शीतेन बाधितोऽकस्मात्समुत्पन्नतीव्रवेदनो दध्यावेवं पुण्डरीकः, अहमभाग्यवान् श्रीगुरवोऽपि न वदिन्ताः प्राप्तोऽपि संयमो मुधा भविष्यति, यदि गुरूणां पार्श्वे गमिष्यते, तदा गुरूपदिष्टमार्गेण शुद्धः संयमः पालयिष्यते। ततः सर्वान् सूक्ष्मान् बादरांश्च जीवान् स्वयं क्षामयन् शुभध्यानपरः पुण्डरीको मृत्वा सर्वार्थसिद्धिविमानमाससाद। यतः—"प्रणिहन्ति क्षणार्द्धेन, साम्यमालम्ब्य कर्म तत्। यन्नहन्यान्नरस्तीव्र—तपसा जन्मकोटिभिः ॥१॥" ॥ इति शुभाशुभभावनायां पुण्डरीककण्डरीककथा समाप्ता ॥१६॥

---

अभिमानं त्यजन् जाति—कुलश्रीलाभसंभवम्। केशिगच्छेशवन्मुक्ति—सातभाग् जायतेऽङ्गवान् ॥१॥

तथाहि—आमलकल्पायां पुर्यां श्रीवीरं समवसृतं नत्वा देवः सूर्याभो व्यजिज्ञपत्, भगवन्! श्रीगौतमादि यतीनामहमद्य दिव्यं नाट्यविधिं दर्शयिष्ये, मामनुजानीहीति विज्ञप्तः स्वामी नैवादिदेश न च प्रत्यादिदेश। तत ऐशान्यां पीठस्थः देवः सव्यासव्यभुजद्वयात् देवानप्सरसश्च विकुर्व्याष्टसु दिक्षु नृत्यं मर्त्त्यैष्वसंभाव्यं दिव्यर्द्धिवर्द्धितं द्वात्रिंशद्विधं नाट्यं दर्शयित्वा प्रभुं प्रणम्य स्वर्गमुद्ययौ। ततः श्रीगौतमः प्रभुं प्रणम्य पप्रच्छ, भगवन्! कोऽयं

देवः कुतोऽस्यायं बोधिरभूत धर्मेण केन कर्मणास्येदृशी ऋद्धिः सम्पन्ना । अथ श्रीवीरः स्वामी प्राह एष देवो नरकपथप्रस्थितोऽपि गुरुप्रतिबोधात् स्वर्गपदवीं प्राप । तथाहि—श्वेताम्बीपुर्यां प्रदेशीति नाम्नाऽभवन्नूपः तस्य प्रिया सूर्यकान्ता सूर्यकान्ताह्वो नन्दनोऽजनि । तस्यालंध्यवचाश्चित्रनाममन्त्री कार्यात्कदाचन श्रावस्त्यां जितशत्रुनृपान्तिके ययौ तत्रागतं श्रीपार्श्वनाथगणधरं गणधरभारधारिणं चतुर्ज्ञानशालिनं केशिनं समायातं श्रुत्वा गुरुं वन्दितुं ययौ । गुरुणा धर्मोपदेशो दत्त इति । " धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं धर्मेणैव भवन्ति निर्मलधियो विद्यार्थसम्पत्तयः । कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते, धर्मः सम्यगुपासितो भवतु वः स्वर्गापवर्गप्रदः ॥१॥ " इत्यादि धर्मोपदेशं श्रुत्वा चित्रो मन्त्री प्राह—तथाहि—श्वेताम्ब्यां गन्तुमाचार्यः, केशी चित्रेण मन्त्रिणा । स्वस्वामिनः प्रबोधाय, विज्ञप्तो भक्तिपूर्वकम् ॥ १ ॥ आचार्यः प्राह—इहलोकैकधीः क्रूरः, परलोकपराङ्मुखः । साहसैकरसश्चण्डः, स कथं बोधमर्हति ॥ २ ॥ ततश्चित्र आचष्ट, सन्त्यन्ये धनिनो ये तपोभृतां सदा सत्कारसन्मानदानप्रणयपेशलाः, तेषां किमशक्यं, तेन तत्र पादावधारणेन मत्स्वामिनं संसारसमुद्रमज्जन्तं धर्मोपदेशबेडयोद्धर । वर्तमानेन योगेनेत्युक्त्वा मन्त्रिवचोऽनुमेने मुनिः । ततः श्रीसूरिः केशी विहरन् भुवि श्वेताम्ब्याः पुर्या बहिरुद्याने

समागतः । गुरुं बहिरुद्याने समागतं श्रुत्वा चित्रश्चित्ते चिन्तितवानिति । अयं चेन्नरकं गन्ता, प्रभुर्मय्यपि मन्त्रिणि। ततः स्वामिप्रसादाना-महं स्यामनृणः कथम् ॥ १ ॥ ततः केनाप्युपायेन, गुरुं येन नयाम्यहम् । प्रतिकर्ता रुजं वैद्यो, गुरुर्दुष्कर्मणां पुनः ॥ २ ॥ ततो वाहवाहनिकाछलेन मन्त्री भूपतिं बहिरुद्याने यत्र गुरवो धर्मोपदेशं ददानाः सन्ति, तत्रासन्नप्रदेशे नीतवान् । वाहान् खेलयित्वा राजा द्रुमच्छायायामुपाविशत् श्रमच्छिदे, गम्भीर-निर्घोषं शब्दं श्रुत्वा राजाऽवग्, भो चित्र ! कस्य एष शब्दः श्रूयते । न ज्ञायते सम्यक् कस्यायं शब्द इति मन्त्रि-णोक्तं, मन्त्रिणा प्रेरितो भूपस्तत्र गुरुसन्निधौ ययौ । उपविष्टोऽग्रे राजा । तदा गुरव एवं प्रोचुः ।
गिरेः शृङ्ग इवोत्तुङ्गे, नृभवेऽपि प्रमादिनः । उत्पद्य स्वास्थ्यं भो भव्याः !, पिंसवः किं भवान्नटे ॥ १ ॥ पापात्मानः कथं निद्रां, कुर्वन्ति निशि निर्भयाः । दीर्घीभूता हि सा तेषां, नरकाह्वानहेतवे ॥ २ ॥ आत्मकर्मान्यलोकादि, परोक्षत्वान्न चेन्मतम् । तत्पितामहपित्राद्या, अपि स्युस्ते न संमताः ॥ ३ ॥ वाचः परप्रबो-धाय, प्रोच्यन्तेऽतीन्द्रियश्च सः । तद्वक्तुमपि नो युक्तं, प्रत्यक्षैकप्रमाणिनाम् ॥ ४ ॥ धर्मिणां च विनात्मानमिच्छा-दिगुणसंश्रयम् । धर्मत्वादिह चैतन्यमन्यथा नोपपद्यते ॥ ५ ॥ इत्यादि धर्मसूक्तानि जीवस्थापकानि श्रुत्वा

नास्तिकमतवादी प्रदेशी राजा जगौ—नास्ति जीवोऽदृश्यत्वात । गुरुणोक्तं—यो वक्ति अहं सुखी अहं दुःखीति प्रत्ययो धर्म्मिणं विना न जायते, तेन धर्म्मी समस्त्येव, यो धर्मी स जीव एव । ततः—भूयोऽन्वयुक्तभूपोपि, मयै- कतस्करः प्रभो ! । क्षिप्त्वान्तःकुम्भि तद्द्वारं, दृढं नीरन्ध्रितं स्वयम् ॥ १ ॥ कालेन स मृतो दृष्टः, कृम्याकुलकले- वरः । तज्जीवनिर्गमोऽन्येपा—मागमो वाऽभवत्कथम् ॥ २ ॥ चूर्णपेषं च पिष्ट्वाऽपि, चौरे जीवो विलोकितः । प्रतिपत्तिकमप्यत्र, प्रत्यभ्यज्ञायि नो पुनः ॥ ३ ॥ चौरे कस्मिन् मया सद्यः, श्वासं रुध्द्वा विपादिते । प्राक्पश्चाच्च तुलाऽभेदः, सदसज्जीवभूरभूत ॥ ४ ॥ गुरुरूचेऽथ नीरन्ध्रं, कुम्भिकान्तर्यदा नरः । शङ्खं वादयते शब्दः स बहिः श्रूयते कथम् ॥ ५ ॥ अभिघात्याभिघातित्वे, तस्मिंश्चाव्यभिचारिणि । न मूर्तत्वं विना तस्माद्, द्रव्यस्कन्धात्मको ध्वनिः ॥ ६ ॥ सौक्ष्म्यान्मूर्तोऽपि तच्छब्दः कुम्भीमध्याद्विनिःसरन् । अमूर्तस्यास्य जीवस्य, सन्देहं न भिनत्ति किम् ॥ ७ ॥ पिष्टस्यारणिकाष्टस्य, चूर्णे वन्हिर्न वीक्षितः । स चास्त्येव यथा तत्र, जीवोऽप्येवं विचिन्त्यताम् ॥ ८ ॥ दृतौ च वायुना पूर्णे, नापूर्णेऽपिच भिद्यते । तुला तथैव जीवेऽपि, नृप ! किं न विदृश्यते ॥ ९ ॥ इत्थं निवर्तसूक्ष्माणां, मूर्तानां विविधान्यपि । अमुर्तस्य स्वभावेन, तद्वक्तव्यं किमात्मनः ॥ १० ॥ शक्तं

सूक्ष्मं चिदात्मान—मात्मानं कर्मवर्मितम् ॥ निश्चित्येति महाराज !, कुरु धर्ममनातुरः ॥ ११ ॥ धर्माज्जन्म० । १ ।
क्रमागतामपि क्ष्माप !, त्यज नास्तिकतां क्षणात् । किं दरिद्रतया श्रेयः, श्रियं संश्रय संमुखीम् ॥ १२ ॥
केऽपि सहस्रंभरयो, लक्षंभरयश्च केऽपि केऽपि नराः । नात्मम्भरयः केचित्, फलमेतत्सुकृतदुष्कृतयोः ॥ १३ ॥

इत्यादि धर्मोपदेशमाकर्ण्य प्रदेशी राजा सम्यक्त्वमूलानि द्वादश व्रतानि जग्राह। राजा दृढव्रतो धर्मं पालयन् गृहमेधिनां चिराद्वैराग्यवासितोऽभवत्। अन्यदा सूर्यकान्ता पुरुषान्तररागिणी पौषधपारणे विषं प्रदेशीराज्ञे ददौ। स राजा कृताराधनकः प्रान्ते स्मृतपञ्चनमस्कारो मृत्वा स्वर्गे प्रथमे सूर्याभविमाने सुरोऽभवत्। स एवायं देवः सूर्याभश्चतुःपल्योपमस्थितिरभूत्। अत्र चास्मद्भक्तितो मां यतीश्वरांश्च वन्दितुमागतो भावपूजां चकार। स देवस्ततश्च्युतो विदेहेषु मर्त्यभवं प्राप्य सर्वकर्ममुक्तो मुक्तिं गमिष्यति। इतः श्रीगौतमः प्रभुं प्रणम्यान्यत्र विजहार। इतः कस्मिंश्चिदुद्याने श्रीगौतमो यावत् समवासार्षीत्, तावदन्यत्रप्रदेशे केशी गणभृत् समवासार्षीत्। केशी गणभृत् गौतमं प्रति प्राह—भो गौतम! भवानीदृशो वेषादिर्दृश्यते कथं?। गौतमस्तदा चतुर्विंशतितमतीर्थङ्कराचारस्वरूपं जगौ। केश्यपि श्रीपार्श्वनाथाचारादिस्वरूपं जगौ। अत्रोत्तराध्ययनसम्बन्धी विवादो ज्ञातव्यः। शासनभेद-

शिष्यः श्रीपार्श्वनाथान्वयी केशी गणभृत् श्रीगौतमोक्तं यतिधर्मं प्रपेदे, श्वेतवासा अभूत् क्रमात् सिद्धिं गतः केशी ।
भीरुः श्रीपार्श्वनाथान्वयी केशी गणभृत् श्रीगौतमोक्तं यतिधर्मं प्रपेदे, श्वेतवासा अभूत् क्रमात् सिद्धिं गतः केशी । यो जैनशासनविभेदभियेन्द्रभूतिं,
उक्तञ्च—" नाभून्मुनीश इह नो भविता समूल,—मुन्मूलितस्मयतरुर्गुरुकेशितुल्यः । यो जैनशासनविभेदभियेन्द्रभूतिं,
ज्यायानपि व्रतलघुं गुरुमेव मेने ॥ १ ॥"

इति केशिगणधरकथा समाप्ता ॥ १७ ॥

---

**कोऽपि भव्यजनो वीक्ष्य, त्रिजगत् क्षणभङ्गुरम् । गृह्णाति संयमं सद्यः, करकण्डूमहीशवत् ॥ १ ॥**

चम्पापुर्यां श्रीवासुपूज्यचैत्यशोभितायां दधिवाहनो राजाऽभूत् । तस्य राज्ञो राज्ञी पद्मावती चेटकभूपपुत्री बभूव ।
सा पद्मावती सगर्भा दोहदमेवं बभार । धृतातपत्रा भूभर्त्रा, भूपनेपथ्यधारिणी । सिन्धुरस्कन्धमारूढा, किल कक्षे लला-
स्यहम् ॥१॥ एवंविधं दोहदं लज्जावशात् सा प्रकाशयितुं भूपाग्रे न शशाक । सा कृशाङ्गी भूपपृष्टाऽन्यदा स्वं दोहदं
प्रकाशयामास । ततो राज्ञा सा पत्नी धृतातपत्रा करिस्कन्धारूढा वने नीता । तदाऽकस्माद्गजः स्मृतविन्ध्याटवीश-
ल्लक्यादिभोगो मदोन्मत्तः सन् चचाल दूरदेशं प्रति । राजराज्ञ्यौ दध्यतुः, किं करिष्यते आवाभ्यामयं गजो न
तिष्ठति । राजा तु दुरासन्नान् महावृक्षान् वटादीन् वीक्ष्य राज्ञीं प्रति जगौ । वटपादपे त्वमवलम्बेथाः, अहमप्य-

वलम्बयिष्ये च। यथा गजोऽग्रतो गच्छति आवां तु गृहे ततो गमिष्यावः। ततः समागते वटपादपे राजा लब्धलक्षतया विलग्नः राज्ञी तु विहस्ता न लग्ना गजस्तु राज्ञीयुतो दूरतो गतः, अदृशीभूते गजे राजा वटादुत्तीर्य सशोकः प्रियावियोगात् दुःखितोऽभूत्। राज्ञी तेन गजेन दुष्टकर्मणेव निर्मानुषारण्यं नीता। यतः—"स्फुरन्त्युपायाः शान्त्यर्थमनुकूले विधातरि। प्रतिकूले पुनर्यान्ति, तेऽप्युपाया अपायताम् ॥ १ ॥ तृष्णान्धः स गजः सरसीं वीक्ष्य पयः पातुं स्थितः, पयः पिबति गजे शनै राज्ञी उत्ततार। ततः सा राज्ञी भयभ्रान्ता तद्वनं मुक्त्वाऽन्यत्र गता। क्रूरेभ्योऽपि महाक्रूरं, भीषणेभ्योऽपि भीषणम्। वनं च वीक्ष्य सा राज्ञी, चिन्तयामास चेतसि ॥ १ ॥ यतः—"विद्वान् मूर्खो भटो भीरुः, श्वपाकः पाकशासनः। राजा रङ्कश्च नात्येति, शासनं कोऽपि दुर्विधेः ॥ २ ॥ वीक्ष्यते यदथैकत्र, तदन्यत्राऽन्यथा क्षणात्। अहो दोलेव लोलेव, दुर्विधेर्विविधो विधिः ॥ ३ ॥ निर्माणकर्मणाख्यात—पङ्कपिण्डकरो विधिः। दण्डेन भ्रमयत्येषः, जगच्चक्रं कुलालवत् ॥ ४ ॥" क तत्पुरं क स मे प्रेयान् केदं वनं मम समागतं, चिन्तितं च किमुपालम्भेनानेन। विधेरग्रतः कोऽपि न छुटति, मयैव स्वयमिदमापत् स्वस्मिन् विहिता कस्य दोषो दीयते। ततो धैर्यवज्रमयं हृदयं कृत्वा पद्मावती चतुःशरणाराधनाद्युच्चारपूर्वं

सुकृतानामनुमोदनं कृत्वा सागारमनशनं जग्राह । एवंविधे श्वापदसंकटे पञ्चपरमेष्ठिनमस्कारं पुनः पुनः स्मरन्ती वर्त्मनि
पद्मावती तापसाश्रमं ययौ । तां स्त्रियमागतां वीक्ष्य तापसोऽवग्—का त्वं कस्य सुता कस्य च प्रियाऽसि, कुत-
स्तवावस्थेदृशी विद्यते । तवास्मिन्नाश्रमे तिष्ठन्त्याः समाधिर्भविष्यति । ततस्तया सर्वं स्वं वृत्तान्तं तस्याग्रे प्रोक्तम् ।
तेन तापसेन चेटकराजसुता वाग्भिरमृतकल्पाभिः सैवं जल्पिता । त्वमत्र तिष्ठ । ततस्तेन सा स्वोपाहृतैः फलैः प्राण-
यात्रामकार्यत । ततस्तया प्रोक्तमेष मार्गः कुत्र गमिष्यति ? तेनोक्तं दन्तपुरस्याध्वाऽस्ति । तत्र दन्तवक्त्रोऽस्ति भूपतिः । तत्र
मध्ये निर्भया त्वं चम्पां गच्छेः । ततः सा पद्मावती तापसं प्रणम्य दन्तपुरे गत्वा साध्वीनां पार्श्वे ययौ । वन्दित्वा
सा साध्वीर्यावदग्रे उपविष्टा, तावत् साध्व्योक्तं, श्राविके ! कुतस्त्वमागाः ? निवेदिते तया स्वोदन्ते प्रवर्तिनी प्रत्यु-
वाच । दुःखैकसारे संसारे, सुखाऽऽभासोऽत्र स कश्चित् । स्वप्ने राज्यमिव भ्रान्ति—रियं विजयतेतराम् ॥ १ ॥ दुर्घटं
घटयन्नेषः, सिद्धं विघटयन् हठात् । घटनोद्घटनव्यग्रो, नैव निर्विद्यते विधिः ॥२॥ जिनं जिनमतं किञ्च मुक्त्वा
जिनमतं श्रितान् । अवस्कर इवाप्यन्य—शेषसंसारविस्तरः ॥ ३ ॥ इत्यादि धर्मोपदेशमाकर्ण्य प्ररूढसंवेगा तदैव
व्रतमग्रहीत् पद्मावती । व्रतविघ्नभियाऽप्रोक्ते तया गर्भे निजे प्रवर्तिनी जगौ—महानुभागे ! त्वया पूर्वं किं गर्भस्वरूपं

नाख्यायि ? उड्डाहो भविष्यति । पद्मावत्योक्तं भगवति ! यद्यहं गर्भमकथयिष्यं तदा त्वं संयमं नादास्यः । तेन भयेन मया नोक्तो गर्भः । ततो महत्तर्या सा साध्वी प्रच्छन्नं स्थापिता । अन्येद्युः पद्मावती पुत्रमसूत । तदा प्रवर्तिन्योक्तं यद्ययं बालो रक्ष्यते तदा महानुड्डाहो भवति यदि कस्यापि हस्तेनार्प्यते तदा बहुसंसारवर्द्धकं पापं भवति, ततोऽयं यत्नतः शनैः पुराद् बहिर्मुच्यते । ततः पद्मावती नीरागचित्ता संसारमसारं मत्वा नामाङ्कितमुद्रारत्नयुतं बालकं श्मशाने मुमोच । तं बालं तथास्थितं दृष्ट्वा जनङ्गमो लात्वा रहो निजगृहमनयत् । अनपत्यायाः स्वपत्न्याः स बालकोऽर्पितो जनङ्गमेन । सा जनङ्गमा तं बालं पालयति स्म । एतत् सर्वं पद्मावत्या रहसि स्थितया ज्ञातं मंदाक्षी सा साध्वी स्वाश्रयं प्राप्ता । स बालो जनङ्गमगृहे ववृधे । रममाणः स बालेषु, राजते राजतेजसा । पतितोऽपि गणे ग्राव्णां, यो मणिर्मणिरेव सः ॥१॥ राजोपमानः स बालः क्रीडति स्म करकंडूया बालात् करेण कंडूयति स्वं शरीरमिति स बालः । ततोऽभवत्तस्य करकण्डूरिति नाम । सोऽपि षड्वर्षदेशीयः सार्वभौमाकृतिः पितुरादेशात् पातिस्म श्मशानदेशं धिग् विधिम् । अन्येद्युस्तत्रागतौ मुनी वंशजालीं वीक्ष्य मिथः प्रोचतुः, योऽस्य वंशस्य मूलाच्चतुरङ्गुलीस्त्यक्त्वा वंशस्य चतुरङ्गुलमात्रं पर्व आदत्ते, सोऽवश्यं राज्यं लभते । तदा साधुवचस्तादृशं मात-

द्विजातिर्यावद्दहः साधुप्रोक्तं करोति तावत् करकण्डूरागत्यावग्—रे द्विज !
ङ्गपालेन केनचिद् द्विजन्मना च श्रुतम्। द्विजातिर्यावद्दहः साधुप्रोक्तं करोति तावत् करकण्डूरागत्यावग्—रे द्विज ! त्वं कथं मम वंशं मत्पालितं गृहीष्यसि ?। कलिं कुर्वाणौ तौ राजकुले गतौ। ताभ्यां स्वं स्वं स्वरूपं प्रोक्तम्। कारणिकैर्हसद्भिरुक्तं—भो चाण्डालपुत्र! यदा तव राज्यं भवति, तदा त्वयाऽस्मै द्विजाय ग्राम एको दातव्यः। वंशखण्डोऽस्य चाण्डालपुत्रस्य भवतु। ततः स जातिस्वभावत्वात् चाण्डालपुत्रं हन्तुं द्विजातिश्चिन्तयति। द्विजातिस्वरूपं चावगत्य चाण्डालो जिजीविषुः सकुटुम्बोऽगमत् कांचनपुरम्। तत्रापुत्रे नृपे मृतेऽमात्यैरधिवासितदिव्यैः पुराद् बहिरभ्येत्य प्रदक्षिणीकृत्य करकण्डू राज्येऽभिसिषेचे। तदा जयजयेतिशब्दमुच्चैः पौराश्चक्रुः। तदानीं तूर्यमपूर्यत स्वयं, प्रधानैरुपनीते च परिधायान्यद्वाससी प्राग् शिक्षित इव तुरङ्गममारुरोह स बालकः। सोऽन्तर्नगरं यावत् प्रविशति नागरैः प्रीतिसागरैः सह, तावन्म्लेच्छोऽयमिति द्विजास्तं मेनिरे। ततस्तैर्द्विजैः रुद्धः क्रुद्धो दण्डं यदाऽऽददौ। तावद्देवताधिष्ठितत्वात्तदाऽतिदिद्यते। तदा द्विजा भीता जगुः। भोराजंस्त्वं! वर्णाश्रमाणा—माचार्यो देव! राजसे। त्वं महेन्द्रो महेशस्त्वं, त्वं विष्णुस्त्वं प्रजापतिः। साक्षात्तेजस्त्वयि क्षात्रं, पवित्रमतिजृम्भते ॥१॥ कर्मणा क्रुष्यते वर्णः कर्मणा स निकृष्यते। वर्णानां ब्राह्मणादीनां, जातिस्तन्नात्र कारणम् ॥२॥ यः कर्मप्रकृतौ लीनः, परब्रह्ममयः-पुमान्। स जात्या कम्बुकेनेव, किं परा

वर्त्यते क्वचित् ॥३॥ नरकेषु च तिर्यक्षु, मनुष्येषु सुरेषु यः । आत्माऽयं नावमन्तव्यः, स क्वचिद् दैवतं हि सः ॥४॥ अनेनैव निमित्तेन, त्रिकालज्ञानिनो जगुः । जीवस्य हिंसया पापं, जीवस्याऽहिंसयाऽनघम् ॥५॥ अन्धे तमसि मग्नाना-मस्माकं त्वं महागुरुः । तेजसैव तथाऽनेन, ज्ञानमुन्मीलितं हि तत् ॥ ६ ॥ नाराजकेषु राष्ट्रेषु, हव्यं दहति पावकः । न च धर्माः प्रवर्तन्ते, न च वर्षति माधवः ॥७॥ कुतो धनं कुतो दाराः, शरीरं च कुतो नृणाम् । सर्वदेवमयस्त्राता, यदि राजा न पालयेत् ॥ ८ ॥ सर्वावलोकने सूर्यः, पापानां निग्रहे यमः । कुबेरो भरणे राजा, प्रायश्चित्तेषु पावकः ॥९॥ तदेनस्तदविज्ञान—जनितं नो विशोधय । तीर्थं राजा प्रजानां हि, कल्मषक्षालनक्षमम् ॥ १० ॥ इत्यादिना ब्राह्मणैर्विज्ञप्तो भूपस्तीव्रमत्सरी उवाच । येषामहं संमतोऽस्मि ते सर्वे मान्याः अन्ये तु द्विजा वध्याः । तैर्द्विजैः सर्वैरुक्तं, त्वमस्माकमनुमतोऽसि । ततोऽवग् भूपः—एतर्हि तर्हि मातङ्गान् संस्कारैर्ब्रह्मसूरपि (कुरुध्वं) । ततो भीता द्विजा भूपं प्रति जगुः—यदाह देवस्तत्तथ्यं, संस्कारैरेव विप्रता । नहि ब्राह्मणजात्योऽपि, व्रात्यो ब्राह्मण्यमर्हति ॥ १ ॥ अद्विजस्याष्टवर्षस्य, जातस्यातः परं द्विजैः । तत्त्वेनाभूततद्भावात्, बटूकरणमिष्यते ॥२॥ यद्देवस्य रोचते तत्तु क्रियते एव, व्यवहारस्तु बलीयान् विद्यते लोकेषु । ततो विमृश्य राजोवाच द्विजान् प्रति । ततः ते जनङ्गमा द्विजा भवन्तु अस्माकं

वाटधानवासिनः । इत्युक्ते नृपेणाकाशात् पुष्पवृष्टिरपतत् । जय जय भूपेति दिव्यवागजनि अथ तैर्ब्राह्मणै राजादे-
शात् तेषां जनङ्गमानां संस्कारो विहितः । ततस्ते ब्राह्मण्यं लभन्तोच्चैर्देवमानवपूजिताः । उक्तञ्च—"दधिवाहनपुत्रेण, राज्ञा
तु करकण्डुना । वाटधानकवास्तव्याश्चाण्डाला ब्राह्मणाःकृताः ॥१॥" ततो महामहोत्सवपूर्वं पुरे प्रविश्य मन्त्र्यादिभिर्विहि-
तराज्याभिषेकः सप्रतापो राज्यं करोति करकण्डूः । इतः स वादी द्विजः करकंडूं प्राप्तराज्यं श्रुत्वा तत्र चाभ्येत्य ग्राममेकं
याचते स्म । ततो राज्ञोक्तं द्वारस्थेन द्विजं प्रति । गच्छ द्विज चम्पायां तत्र मन्निदेशतो ग्रामं तुभ्यं दास्यति । ततो
द्विजस्तत्र गत्वा चम्पेशं ग्रामं याचते स्म । करकण्डूनिदेशतो दधिवाहनो दध्यौ । अहो मूर्खः स करकण्डूराजा, य
एवं मां वदति । ततो राजा तं प्रति प्राह—कपोतपोन्नतिम्लेच्छपोतः कथमनात्मवान् । यो मया सैनिकः श्येनः
पक्षीन्द्रेण विरुध्यते ॥१॥ त्वं तु दूतत्वात् याचकत्वादवध्यो रणे तस्य प्राणग्रहणादहं तुभ्यं ग्रामं दास्यामि । ततस्तेन
द्विजेन तन्नृपोक्तं करकण्डूपार्श्वे गत्वा प्रोक्तम् । ततस्तत्कालमेव सन्नह्य करकण्डूश्चम्पां प्रत्यचलत् । ततस्तं करक-
ण्डूमायान्तं श्रुत्वा दधिवाहनो वप्रं सज्जीकृत्य युद्धायाचलत् । सङ्ग्रामभूमिर्युद्धाय सज्जीकृता । ततो मिथः द्वयो-
र्नृपयोर्महान्तं संग्रामं जीवसंहारं च मत्वा पद्मावती साध्वी पुत्रपत्योर्युद्धं जायमानं ज्ञात्वा तद्वारणाय करकण्डूपा-

श्वेऽभ्येत्यावग्–अहं तव माता अयं तव पिता दधिवाहनो राजा । मुद्रारत्नाक्षरसंवादतः पितरं दधिवाहनं मातरमार्यिकां पद्मावतीं करकण्डूर्मेने । हृष्टश्च करकण्डूरत्यन्तम् । ततः आर्यिकया प्रबोधयितुं भूपं पुरमध्ये गतं, दासीपार्श्वात् समागतं राज्ञे ज्ञापितं साध्व्या, ततो राजा तत्रागत्य प्रमोदार्चां पद्मावतीं यतिनीं प्रणणाम, पृष्टं च (राज्ञा) त्वया कथं संयमो गृहीतः ? स गर्भः कथमभूत् ? तयोक्तं येन तव वप्रो वेष्टितोऽस्ति स एव ते पुत्रः । ततो राजा प्रातः पादचारेण तत्र पुराद् बहिरायाद्यावत्तावत् पुत्रोऽपि पादचारी सम्मुखमेत्य पितुः पादौ प्रणणाम । ततः पुरमध्ये महामहोत्सवपूर्वं तं पुत्रं प्रवेश्य प्राप्तवैराग्यो राजा राज्यं दत्त्वा च दीक्षां दधिवाहनो ललौ । करकण्डूर्द्वयो राज्ययोर्भोगभूत् । करकण्डूः कलिङ्गेशो न्यायात् प्रजाः प्रशशास । तस्य राज्ञः क्रमाद् बहूनि गोकुलान्यासन् । तन्मध्ये एको बली शंडोऽभूत्, येन बहवः शंडा भग्नाः । स चाभीष्टोऽभूद्राज्ञः भृशम् । तमेवान्यदा मृत श्रुत्वा यावत्तत्र तं द्रष्टुं याति भूपस्तावन्मृत एव स दृष्टो राज्ञा । तं तथास्थं शंडं वीक्ष्य राजा श्लोकमेवं जगौ यतः–यस्य दृसा महोक्षाणो, दूरादाकर्ण्य गर्जितम् । गोष्ठाजिरेष्वभज्यन्त, घट्यते हि स वत्सकैः ॥ १ ॥ चेतनाचेतनं लोकं, सृष्ट्वा सृष्ट्वाऽतिघस्मरः । अहो महोदरः कालो, न तृप्यति हहा लिहन् ॥ २ ॥ उपायैर्मूर्खकेभ्योऽपि, रक्ष्यते वस्त्व-

दृश्यते यद्यदैवेह, तत्तदैव न दृश्यते । त्रिलोकीमल्लिकागोलैः,
नेकशः । न सर्वमूर्खकस्यास्य, प्रतीकारस्तु विद्यते ॥ ३ ॥ अभावादिरभावान्तोऽभावो भावः
कालः खेलति कौतुकी ॥ ४ ॥ अभूत्वाऽऽप्नोति यो भूतिं, भूत्वा वाऽभूतिमाप्नुयात् । नित्यं तूलोच्चया इव ॥ ६ ॥
कथं भवेत् ॥ ५ ॥ कुटुम्बदेहश्रीदारा, वर्यवस्त्वादयोऽखिलाः । अनित्या एव दृश्यन्ते,
इत्यादि ध्यायन् यावद्वैराग्यवासितो जातिस्मृत्या पूर्वभवं सस्मार यः करकण्डूरभूत् तावद्देवता रजोहरणादिलिङ्गमदा-
त्तस्मै । देवतादत्तलिङ्गोऽथ, तृणवत्त्यक्तवैभवः । भेजे प्रत्येकबुद्धत्वं, करकण्डुर्मुनीश्वरः । श्वेतं सुजातं सुविभक्तशृङ्गं,
गोष्ठाङ्गणे वीक्ष्य वृषं जरार्त्तम् । ऋद्धिं त्वऋद्धिं प्रसमीक्ष्य बोधात्, कलिङ्गराजाऽऽप चरित्रधर्मम् ॥ १ ॥

॥ इति करकण्डूकथा समाप्ता ॥ १८ ॥

---

हल्ल विहल्ल सुदंसण, साल महासाल सालिभद्दो अ ॥
भद्दो दसन्नभद्दो, पसन्न चंदो अ जसभद्दो ॥ २ ॥

कस्यापि कोऽपि हेतुः स्यात्, वैराग्ये भववस्तुषु । गजमृत्युः परित्यज्य (त्यागे) यथा हल्लविहल्लयोः ॥ १ ॥

दानपूर्वं नानाप्रकारदानं याचकेभ्यो ददानोऽर्हद्दासश्रेष्ठी पुत्रस्य सुदर्शन इति नामादात्। वर्द्धमानः क्रमात् पुत्रः सुदर्शनो गृहीतधर्मशास्त्रोऽभूत् यतः—"रूपयौवनसम्पन्ना, विशालकुलसम्भवाः। विद्याहीना न शोभन्ते, निर्गन्धा इव किंशुकाः ॥ १ ॥ पण्डितेषु गुणाः सर्वे, मूर्खे दोषास्तु केवलाः। तस्मान्मूर्खसहस्रेण, प्राज्ञ एको न लभ्यते ॥ २ ॥" ततः सुदर्शनः पित्रा मनोरमाऽभिधां महेभ्यपुत्रीं वरमहोत्सवपुरस्सरं परिणायितः। तया पत्न्या सह धर्मं कुर्वाणः सुदर्शनः सुदर्शनं पालयतिस्म। मूलं बोधिद्रुमस्यैतत्, द्वारं पुण्यपुरस्य च। पीठं निर्वाणहर्म्यस्य, निधानं सर्वसम्पदाम् ॥ १ ॥ गुणानामेव चाधारा, रत्नानामिव सागरः। पात्रं चारित्रवित्तस्य, सम्यक्त्वं श्लाघ्यते न कैः ॥ १ ॥ पुत्रं गृहभारधरणयोग्यं मत्वाऽर्हद्दासश्रेष्ठी गुरुसंनिधौ संयमं जग्राह। सोऽथ सुदर्शनो विशेषेण राजमान्यो बभूव। पितुराधिकोऽभूद्गुणैः सुदर्शनः। यतः—"कुम्भः परिमितमम्भः, पिबति पपौ कुम्भसम्भवोऽम्भोधिम्। अतिरिच्यते सुजन्मा, कश्चिज्जनकान्निजेन चरितेन ॥ १ ॥ तत्र चान्यो नृपार्च्यः पुरोधाः कपिलाह्वः सुदर्शनस्य मित्रमभूत्। अन्येद्युः कपिलः प्रोचे प्रेयस्या कपिलाख्यया, स्वामिन्! तिष्ठसि कुत्र त्वं? पुरोधाः प्रोवाच, सुदर्शनस्य मित्रस्योपान्ते तिष्ठामि, गोष्ठीक्रियते तत्र मया। तस्य किं नाम त्वया न ज्ञायते?। रूपेण कन्दर्पः, वाचा वाचस्पतिः,

बुद्ध्या बुधः, तेजसा सूर्यः, सौम्येन सोमः, कर्मच्छेदनकर्कशत्वेन मङ्गलः, धिषणया शुक्रः, कुकर्ममन्दत्वेन मन्दो जितोऽस्ति तेन सुदर्शनेन। किं च विशेषेण शीलगुणेनैकेन सर्वेषूत्कृष्टोऽस्ति सुदर्शनः। किन्तु विधात्रा सर्वगुणमयश्चक्रे सः। सा कपिला पत्युर्मुखात्तद्गुणानाकर्णयन्ती सुदर्शनश्रेष्ठिन्यनुरागिण्यभूत्। यतः—"स्मितेन भावेन मदेन लज्जया, पराङ्मुखैरर्द्धकटाक्षवीक्षितैः। वचोभिरीर्ष्याकलहेन लीलया, समन्तपाशं खलु बंधनं स्त्रियः ॥१॥" सदा सुदर्शनेन सङ्गमिच्छन्ती कपिलाऽन्येद्युर्भर्तरि कस्मिंश्चिद् ग्रामे गते कूटघटबुद्धिः सुदर्शनश्रेष्ठिगृहे गत्वा श्रेष्ठ्यग्रेऽवग्। भवतः सुहृत् ज्वरी जातोऽस्ति। तेन त्वामाकारयाति। अहं त्वामाकारयितुमागताऽस्मि। विलम्बो न क्रियते, वेलां क्षमते न। सुदर्शनोऽवग्—मया न ज्ञातं सम्यग्। ततः सर्वं कार्यं मुक्त्वा तत्कालमुत्थाय सुदर्शनो मित्रगृहमध्ये गतः। यथा यथा सुदर्शनो गृहमध्ये प्रविशति तथा तथा सा द्वाराणि दत्ते। ततो मध्येगेहं गत्वा कपिलाऽवग्—स्वामिन्नहं बहुकालात् त्वत्सङ्गं वाच्छन्ती अस्मि। इयं शय्या इदं मद्वपुस्तदायत्तं विद्यते। भोगान् स्वेच्छया भुंक्ष्व। ततो यदा सुदर्शनो न मन्यते तदा तस्य शरीरेण सङ्गं करोति सा बलात्। सुदर्शनस्तु न मनाग् विकारं गच्छति। सुदर्शनो जगौ त्वं केन वाहिता ? अहं तु नपुंसकोऽस्मि। त्वया कस्याप्यग्रे न वक्तव्यम्। ततस्तयोक्तं

अस्योपनयः। श्रेणिकेन भूपेन सुतप्रीत्या हल्लविहल्लयोः स्वसुतयोः सेचनकः पट्टहस्ती प्रसादीकृतः। कुणिको रुष्टः। श्रेणिकं सेवकपार्श्वात्ताडयति स्म। अन्येद्युः कुणिको यावद्भोक्तुमुपविष्टः, तावत् पुत्रेण स्थाले मूत्रितं तदा कूणिकेन वक्त्रं मोटयित्वा पुत्रो दूरीकृतः। चिल्लणाऽवग्—यदा त्वं जातस्तदा दुष्टस्वप्नोपलम्भादुत्करटिकायां त्याजितस्त्वत्पित्रा पश्चादानीतस्त्वं तदा तवैकाङ्गुली मार्जार्या खण्डिता। तत्रातीव वेदना जाता। यदोत्पन्नवेदना या त्वदङ्गुली तां त्वत्पिता मुखान्तः क्षिपतिस्म, तदा तव वेदना याति स्म। एवं सदा मोहवशात् त्वदङ्गुलीं क्वाथितां मुखे चिक्षेप। त्वं त्वधुना पितरमेवं कशाघातैस्ताडयसि ततोऽभ्युत्थाय त्वरितं कुठारं गृहीत्वा काष्टपञ्जरं भङ्क्त्वा-पितरं कर्षयिष्यामीति ध्यायन् यावन्निःससार तावत्तं पुत्रं तथाविधं समागच्छन्तं दृष्ट्वा श्रेणिको दध्यौ, मां मारयिष्यत्येषः। ततः तालुपुटविषभक्षणान्मृत्वा प्रथमपृथिव्यां गतः। ततः कुणिकपत्न्या पद्मावत्या स्वपुत्रस्योदयनस्य कृते सेचनको हस्ती याचितो हल्लविहल्लपार्श्वात्। ततस्तौ बिभ्यतौ प्रणश्य विशालायां मातामहस्य चेटकस्य शरणं गतौ। कूणिकनृपश्च सर्वाभिसारेण तां पुरीं रुरोध। चेटककूणिकयोः समरसंरम्भे जायमाने मनुष्याणां सहस्राणि परलोकं गच्छन्ति स्म। हल्लविहल्लौ सेचनकमारूढौ कूणिकसेनाया उपस्कन्दं कुरुतः स्म। दुर्द्धरत्वात्तौ बहून् भटान् हत्वा यातः स्म।

स्वं बलं ताभ्यां बहुहन्यमानं दृष्ट्वा कूणिकेन स्वसैन्यस्य परितः खादिराङ्गारपूर्णा खातिका रहः कारिता । तदुपकण्ठे प्राप्तः सेचनको हल्लविहल्लाभ्यां भृशं प्रेर्यमाणो विभङ्गज्ञानी तौ हल्लविहल्लौ निजस्कन्धादुत्तार्य स्वयं खातिकायां पतितो विपेदे प्रथमश्वभ्रे गतो हस्ती । तेनैव वैराग्येण व्रतोत्कण्ठितौ हल्लविहल्लौ जातौ । ततः शासनदेव्या उत्पाट्य श्रीवीरपार्श्वे मुक्तौ । ततः संयमं जगृहतुः । श्रीजिनोदिततपःपरौ हल्लविहल्लौ मृत्वा सर्वार्थसिद्धिविमाने जग्मतुः ।

॥ इति हल्लविहल्लकथा समाप्ता ॥

---

पालयन् दर्शनं शुद्धं, शीलं च मुक्तिसौख्यदम् । मुक्तिं गच्छति भव्याङ्गी, सुदर्शन इवादरात् ॥ १ ॥

तथाहि—जम्बूद्वीपदक्षिणादिग्विभूषणभरतखण्डे चम्पापुरी विद्यते तत्र रणसिंहभूपपुत्रो दधिवाहनराजा राज्यं न्यायाध्वना पालयामास । राधावेधसाधनेन राज्ञा अभया देवी परिणीता । तत्रार्हद्दासोऽतुलबलसमृद्धिः श्रेष्ठी वसति स्म । अर्हद्दासी पत्नी तस्यासीत् । द्वावपि श्रीजिनोक्तधर्मं कुरुतः । तस्या अर्हद्दास्या उदरे कोऽपि पुण्यवान् जीवोऽवततार । अर्हद्दासी सदा जिनपूजाशुद्धसम्यक्त्वपालनपराऽजनि । क्रमात् पुत्रमसूत । शुभेऽहनि स्वजनलोकसन्मान-

दानपूर्वं नानाप्रकारदानं याचकेभ्यो ददानोऽर्हद्दासश्रेष्ठी पुत्रस्य सुदर्शन इति नामादात् । वर्द्धमानः क्रमात् पुत्रः सुदर्शनो गृहीतधर्मशास्त्रोऽभूत् यतः—"रूपयौवनसम्पन्ना, विशालकुलसम्भवाः । विद्याहीना न शोभन्ते, निर्गन्धा इव किंशुकाः ॥ १ ॥ पण्डितेषु गुणाः सर्वे, मूर्खे दोषास्तु केवलाः । तस्मान्मूर्खसहस्रेण, प्राज्ञ एको न लभ्यते ॥ २ ॥" ततः सुदर्शनः पित्रा मनोरमाऽभिधां महेभ्यपुत्रीं वरमहोत्सवपुरस्सरं परिणायितः। तया पत्न्या सह धर्मं कुर्वाणः सुदर्शनः सुदर्शन पालयतिस्म । मूलं बोधिद्रुमस्यैतत्, द्वारं पुण्यपुरस्य च । पीठं निर्वाणहर्म्यस्य, निधानं सर्वसम्पदाम् ॥ १ ॥ गुणानामेव चाधारा, रत्नानामिव सागरः । पात्रं चारित्रवित्तस्य, सम्यक्त्वं श्लाघ्यते न कैः ॥ १ ॥ पुत्रं गृहभारधरणयोग्यं मत्वाऽर्हद्दासश्रेष्ठी गुरुसंनिधौ संयमं जग्राह । सोऽथ सुदर्शनो विशेषेण राजमान्यो बभूव । पितुरधिकोऽभूद्गुणैः सुदर्शनः । यतः—" कुम्भः परिमितमम्भः, पिबति पपौ कुम्भसम्भवोऽम्भोधिम् । अतिरिच्यते सुजन्मा, कश्चिज्जनकान्निजेन चरितेन ॥ १ ॥ तत्र चान्यो नृपार्च्यः पुरोधाः कपिलाह्वः सुदर्शनस्य मित्रमभूत् । अन्येद्युः कपिलः प्रोचे प्रेयस्या कपिलाख्यया, स्वामिन् ! तिष्ठसि कुत्र त्वं ? पुरोधाः प्रोवाच, सुदर्शनस्य मित्रस्योपान्ते तिष्ठामि, गोष्ठीक्रियते तत्र मया । तस्य किं नाम त्वया न ज्ञायते ? । रूपेण कन्दर्पः, वाचा वाचस्पतिः,

बुद्धया बुधः, तेजसा सूर्यः, सौम्येन सोमः, कर्मच्छेदनकर्कशत्वेन मङ्गलः, धिषणया शुक्रः, कुकर्ममन्दत्वेन मन्दो जितोऽस्ति तेन सुदर्शनेन। किं च विशेषेण शीलगुणेनैकेन सर्वेषूत्कृष्टोऽस्ति सुदर्शनः। किन्तु विधात्रा सर्वगुण-मयश्चक्रे सः। सा कपिला पत्युर्मुखात्तद्गुणानाकर्णयन्ती सुदर्शनश्रेष्ठिन्यनुरागिण्यभूत्। यतः—" स्मितेन भावेन मदेन लज्जया, पराङ्मुखैरर्द्धकटाक्षवीक्षितैः। वचोभिरीर्ष्याकलहेन लीलया, समन्तपाशं खलु बंधनं स्त्रियः ॥१॥" सदा सुदर्शनेन सङ्गमिच्छन्ती कपिलाऽन्येद्युर्भर्तरि कस्मिंश्चिद् ग्रामे गते कूटघटबुद्धिः सुदर्शनश्रेष्ठिगृहे गत्वा श्रेष्ठ्यग्रेऽवग्। भवतः सुहृत् ज्वरी जातोऽस्ति। तेन त्वामाकारयाति। अहं त्वामाकारयितुमागताऽस्मि। विलम्बो न क्रियते, वेलां क्षमते न। सुदर्शनोऽवग्—मया न ज्ञातं सम्यग्। ततः सर्वं कार्यं मुक्त्वा तत्कालमुत्थाय सुदर्शनो मित्र-गृहमध्ये गतः। यथा यथा सुदर्शनो गृहमध्ये प्रविशति तथा तथा सा द्वाराणि दत्ते। ततो मध्येगेहं गत्वा कपि-लाऽवग्—स्वामिन्नहं बहुकालात् त्वत्सङ्गं वाञ्छन्ती अस्मि। इयं शय्या इदं मद्वपुस्तदायत्तं विद्यते। भोगान् स्वेच्छया भुंक्ष्व। ततो यदा सुदर्शनो न मन्यते तदा तस्य शरीरेण सङ्गं करोति सा बलात्। सुदर्शनस्तु न मनाग् विकारं गच्छति। सुदर्शनो जगौ त्वं केन वाहिता ? अहं तु नपुंसकोऽस्मि। त्वया कस्याप्यग्रे न वक्तव्यम्। ततस्तयोक्तं

त्वयाऽपि कस्याग्रे मे दुश्चेष्टितं न वक्तव्यम् । ततस्तया मुक्तः श्रेष्ठी स्वगृहमागतोऽभिग्रहं ललौ । मया कस्यापि गृहे यथा तथा न गन्तव्यम् । ततः अन्येद्युर्वसन्तसमये सपौरः पृथ्वीपतिरुद्यानसम्पदं भोक्तुं महाश्चर्येण निर्ययौ । अभया महाराज्ञी साऽपि यानारूढा कपिलया सार्द्धं निर्ययौ । तदा मनोरमा षड्भिः पुत्रैर्निर्ययौ । सुदर्शनोऽप्यचालीत् । कपिलाऽपि मनोरमां पुत्रयुतां वीक्ष्याभयां प्रति प्राह । केयं स्त्री ? कस्यामी पुत्राः ? अभयाऽवग्—सुदर्शनश्रेष्ठिनः इयं पत्नी इमे पुत्राश्च, तच्छ्रुत्वा कपिलाऽवग्—पुरा मयैष परीक्षितो यदा तदा नपुंसकोऽस्मीत्यब्रवीत् । अभयोचे—त्वं वाहिताऽसि वञ्चिताऽसि । तदा कपिलाऽवग्—सखि ! अयमेवंविधोऽस्ति । यदि त्वमेनं रमयसि तदा ज्ञास्यते, त्वमेव चतुराऽसि । अभययोक्तमहमेनं वशीकरोमि तदाऽहं ज्ञेया । ततोऽन्यदा पण्डितया सख्या राज्ञीप्रोक्ता तव चेतसि का चिन्ताऽस्ति ? तदा अभयया प्रोक्तं स्वं स्वरूपम् । ततो सखी जगौ—मेरुशिखरं कदाचिच्चलति, तथापि सुदर्शनो न चलति शीलव्रतात् । असौ परनारीसहोदरः सुदर्शनः । अभयाऽवग्—एकदा तं सुदर्शनमत्रानय त्वम् । पण्डिताऽवग्—पर्वदिने छलेनात्रानयिष्ये । अन्यदा कौमुदीमहोत्सवे समागते राजा पटहवादनपूर्वं सान्तपुरः पौरलोकयुतो वने गतः । तदाऽभया शिरोर्तिमिषं कृत्वा गृहेऽस्थात् । सुदर्शनश्रेष्ठी चतुर्दशीपर्व मत्वा

शिबिकारूढां नृपं मुत्कलाप्य देवकुले कायोत्सर्गे तस्थौ । तदा पण्डिता यक्षप्रतिमां सप्रभावां वाद्यवादनपूर्वं शिबिकारूढां
कृत्वाऽऽनयति, एवं कृत्वा कृत्वा विश्वसितेषु सौविदल्लादिषु यक्षप्रतिमाछद्मनारथमारोप्य राजभवने राज्ञीपार्श्वे नीतः
सुदर्शनः श्रेष्ठी कायोत्सर्गस्थ एव । ततोऽभययोक्तं भो सुदर्शन ! मया सह भोगान् भुंक्ष्व । चाटूक्तिभिस्तया भूयो भूयो
जल्प्यमाने सुदर्शनो न वक्ति तदाऽभया प्राह—यदि त्वं मदीयं वचो न मन्यसे तदा तव प्राणानहं गृहीष्यामि ।
यदा स सुदर्शनः श्रेष्ठी तद्वचो नाङ्गीचकार । तदा तयोच्चैः स्वरं जल्पितमिति भो भो लोका ! धावत अयं दुष्टः
पापी मदीयं शीलं भङ्क्तुमागतोऽस्ति । ततो राजपुरुषा आगताः श्रेष्ठी राजपार्श्वे आनीतो राज्ञा वादितोऽपि पौषधभ-
ङ्गभयान्न वदति, तदा राजा रुष्टोऽवग्—अयं पापी शूलायां क्षिप्यताम् । ततो राजपुरुषैः पुरमध्ये भ्रामयित्वा शूलायां
क्षेप्तुं श्मशाने नीतः सुदर्शनः । इतो मनोरमा स्वस्य भर्तुः स्वरूपमवगत्य मम भर्ता तादृग् न भवतीति । मनोरमा
कायोत्सर्गे स्थिता । यदा मम भर्तुर्विघ्नो विलयं व्रजिष्यति, तदा मया कायोत्सर्गः पारयितव्यः । ततो यावद्रा-
जपुरुषास्तं शूलायां चिक्षिपुस्तावत् स्वर्णसिंहासनं कृतं शासनदेव्या । ततो राजा तत्र गतः । तं तथास्थं श्रेष्ठिनं
दृष्ट्वा राजा चमत्कृतः । शासनदेव्योक्तं, यदि अस्य श्रेष्ठिनः कोऽपि विरुद्धं चिन्तयिष्यति, तदा तस्य प्राणा मया

गृहीष्यन्ते । असौ श्रेष्ठी शीलवान् महोत्सवपुरस्सरं स्वगृहे गतः । ततो श्रेष्ठी वैराग्यवान् संयमं गृहीत्वा सर्वकर्मक्षयं कृत्वा प्राप्तकेवलज्ञानः सुदर्शनः शीलप्रभावात् मुक्तिमगात् मनोरमाऽपि क्रमात् संयमं गृहीत्वा क्षीणसर्वकर्मपुञ्जा मुक्तिं गता ।

इति सुदर्शनश्रेष्ठिकथा समाप्ता ॥ २० ॥

---

भावनां भावतोऽनित्या–दिकां भावयतां नृणाम् । ज्ञानं शालमहाशाल,–साधूनामिव जायते ॥ १ ॥

तथाहि–पृष्टचम्पा नाम पुरी स्वःपुरीसोदरा जिनप्रासादधोरणिबन्धुरा विद्यते । तत्र शालो राजा राज्यं पृथिवीं पालयामास न्यायात् । तस्य लघुभ्राता महाशालो युवराजपदवीं प्राप । इतः पूर्वं काम्पील्यपत्तने पिठरराज्ञे शालमहाशालपित्रा यशोमती पुत्री दत्ता । तयोः पुण्यं कुर्वतो गांगलिर्नामा पुत्रोऽभूत् । इतः श्रीवीरजिनो रविः पृथिवीं प्रबोधयन् गोविलासैः पृष्टचम्पापुर्यां उद्याने सुभूमिभागाभिधे समवासार्षीत् । देवैः रूप्यरत्नस्वर्णमयं प्राकारत्रयं योजनमितं समवसरणं चक्रे । श्रीवीरः सिंहासने धर्मदेशनां कर्तुमुपविष्टः । तदा शालमहाशालौ सहोदरौ धर्मं श्रोतुं तत्राजग्मतुः । परमेश्वरो योजनगामिन्या वाण्या सर्वजीवप्रबोधदायिन्या धर्मोपदेशं दातुं लग्नः । यतः–" देवा दैवीं नरा नारीं, शबराश्चापि शाबरीम् ।

तिर्यञ्चोऽपि तैरश्चीं, मेनिरे भगवद्गिरम् ॥१॥ ताराध्वतारातटिनीभुजङ्ग–तरङ्गगङ्गासिकताकणानाम् । सङ्ख्यां स कृत्वा
कुरुतां तु धर्मं, यो धर्ममीप्सुः कृतकृत्यगेहः ॥१॥ अवाप्य धर्मावसरं विवेकी, कुर्याद्विलंबं न हि विस्तराय । तातो
जिनरतक्षशिलाधिपेन, रात्रिं व्यतिक्रम्य पुनर्न नेमे ॥२॥ मज्जं विसयकसाया, निद्दा विगहाय पंचमी भणिया । एए पंच
पमाया, जीवं पाडंति संसारे ॥ ३ ॥ तणकट्ठे जह अग्गी, लवणसमुद्दो नईसहस्सेहिं । नय मो जीवो सक्को, तप्पेउं
कामभोगेहिं ॥४॥ जरा जाव न पीडेइ, वाही जाव न वड्ढइ । जाव इंदिया न हायंति, ताव धम्मं समायर ॥ ५ ॥
इत्यादि धर्मोपदेशं श्रुत्वा प्राप्तवैराग्यः शालो महाशालं प्रति जगौ । त्वं राज्यं गृहाण अहं दीक्षां गृहीष्यामि । मम-
राज्यसुखं तृणतुल्यं शोभते, राज्यान्तं नरकान्तमिति वचनात् । महाशालो जगौ, अहं तवैवंविधोऽभीष्टोऽस्मि, भ्रातर्मां
नरके क्षेप्तुमीहसे त्वं राज्यविश्राणनात् । मुक्तिसुखं त्वमीहसे भोक्तुं, मम नरकवेदनां दातुं वाञ्छसि ? । अहो ! एवं-
विधा प्रीतिस्तव । यतः—" नो वैद्या नच भेषजं न च पिता नो बान्धवा नो सुता, नोऽभीष्टा कुलदेवता न जननी स्नेहा-
नुबन्धान्विता । नार्थो नो स्वजनो न वा परिजनः शारीरकं नो बलं, नो शक्तास्त्रुटितुं सुराः सुरवराः सन्धातुमायुर्ध्रु-
वम् ॥१॥ एगदिवसंपि जीवो, पव्वज्जमुवागओ अनन्नमणो । जइवि न पावइ मुखं, अवस्स वेमाणिओ होइ ॥२॥ "

इत्यादि मिथो द्वौ सहोदरौ व्रतं जिघृक्षू काम्पील्यपुरात् स्वं जामेयं गांगलिं मातापितृयुतं तत्रानयामासतुः। ततो गांगलिं जामेयं महोत्सवपुरस्सरं स्वराज्ये शालभूपो भ्रातृयुग् न्यवीविशत्। ततो जिनालयेऽष्टाह्निकामहः कृत्वा सप्तक्षेत्र्यां स्वं धनं व्ययित्वा श्रीवीरपार्श्वे शालमहाशालौ संयमं ललतुः। ततो निरन्तरं शुद्धं संयमं पालयन्तौ तपःक्रियानुष्ठानपरौ श्रुतं भणन्तौ गुरुपार्श्वे बहुश्रुतावभूताम्। एकदा श्रीवीरेण श्रीगौतमस्वामी शालमहाशालयुतो राजगृहाच्चम्पापुर्यां गांगलिजामेयप्रतिबोधाय प्रेषितः। तत्रागतः श्रीगौतमः उद्यानवने समवासार्षीत्। तत्र श्रीगौतमं शालमहाशालौ च नन्तुं गांगलिः पितृमातृयुतो ययौ। तथाहि—"संझरागजलबूब्बूओवमे, जीविए य जलबिंदुचंचले। जुव्वणे य नईवेगसंनिभे, पाव जीव किमयं न बुज्झसि ॥१॥ सम्पदो जलतरङ्गविलोला, यौवनं त्रिचतुराणि दिनानि। शारदाभ्रपरिपेशलमायुः, किं धनैः कुरुत धर्ममनिन्द्यम् ॥ २ ॥" धर्मोपदेशमाकर्ण्य श्रीगौतमस्वामिपार्श्वात् प्राप्तवैराग्यो गांगली राजा स्वं पुत्रं राज्ये न्यस्य यशोमत्या मात्रा पिठरेण पित्रा सह संयमं जग्राह। ततः श्रीगौतमस्वामिनोक्तं,—युष्माभिर्दीक्षा गृहीता परं शुद्धा पालनीया, शुद्धं संयमं विना मुक्तिर्न भवति। एके सिंहतुल्या भूत्वा दीक्षां लात्वा फेरुवत् पालयन्ति, एके जनाः कातराः फेरव इव गृहीतव्रताः सिंहा इव पालयन्ति संयमम्, एके कातराः फेरव इव संयमं गृहीत्वा फेरव इव

पालयन्ति, एके सिंहा इव साहसिका व्रतं लात्वा सिंहा इव पालयंति शुद्धं संयमम्, तेन भवद्भिस्तथा चारित्रं यत्नया
पालनीयं यथा करतलगता मुक्तिश्रीर्भवतां भवति । यतः " एगादिवसंपि जीवो, पव्वज्जमुवागओ अनन्नमणो ।
जइवि न पावइ मुक्खं, अवस्स वेमाणिओ होइ ॥ १ ॥ ततस्ते गांगालिपिठरयशोमत्यः शालमहाशालौ च श्रीगौतमेन
समं चलन्त इति भावयामासुः ।—जातश्चैको मृतश्चैको, एको धर्मं करोति च । प्रायं स्वर्गसुखे जीवः,
श्वभ्रे गच्छति कः समम् ॥ १ ॥ मूढाः कुर्वन्ति ये मे मे, वपुः पुत्रगृहादिकम् । तेऽपि त्यक्त्वा नरोऽगाधे, मज्जान्ति
भवसागरे ॥ २ ॥ अन्यो जीवो भवेद्यत्र, देहात्तत्र गृहादिकम् । कथमेतन्मदीयं तु, मन्यते तत्त्ववित् बुधः
॥ ३ ॥ कुटुम्बधनधान्यादि, सर्वं दुःखसमुद्भवम् । देहं च मन्यते यः स्वं, कर्म बध्नाति स कुधीः ॥ ४ ॥
एको धर्ममुपार्जनं च विबुधः कृत्वा स्वयं गच्छति, स्वर्गं पापमुपार्ज्य घोरनरकं दुःखाकरं प्राणभृत् । एको दुःख-
ततिमसारमपि भो धृत्वा च मुक्त्यालयं, तस्मात्त्वं भज तावतो हि शरणं धर्मं त्यज स्वं गृहम् ॥ १ ॥ इत्यादि
भावनां भावयतां तेषां क्रमाद् केवलज्ञानं समुत्पन्नम् । श्रीवीरजिनान्तिके नन्तुं प्राप्ताः । [ श्रीगौतमे त्रिः प्रदक्षिणां
कुर्वति शालादिषु त्रिः प्रदक्षिणां कुर्वत्सु ] ( ते प्रदक्षिणयामासुः, प्रणनाम तु गौतमः ॥ तीर्थं नत्वाऽथ ते पञ्च, चेलुः

केवलिपर्षदि । तानूचे गौतमो हन्त, वन्दध्वं परमेश्वरम् ॥१॥ ) श्रीवीरो जगौ। भो गौतम ! केवल्याशातनां मा कुरु । गौतमोऽवक् का केवल्याशातना क्रियमाणाऽस्ति मया ? । श्रीवीरोऽवग् गौतम ! एषां शालमहाशालादीनां केवलज्ञानं जातमस्ति। ततस्तान् स्वहस्तदीक्षितान् लब्धकेवलज्ञानानुत्थाय भक्तिपूर्वं स्वं निन्दन् क्षमयामास । ततः श्रीगौतमो महावीरं जिनं प्रति प्राह भगवन् ! अहमभाग्यवान् यस्मै दीक्षां यच्छामि तस्य केवलज्ञानं जायते मम तु न। ततो भगवतोक्तं—मा खेदं कुरु तवापि केवलज्ञानं भविष्यति । यश्च श्रीअष्टापदे चतुर्विंशतिं जिनान् वन्दते तस्य तस्मिन्नेव भवे केवलज्ञानश्रीरुत्पद्यते। एतच्छ्रीवीरजिनोक्तं श्रुत्वा श्रीगौतमोऽष्टापदे गत्वा श्रीचतुर्विंशतिं जिनान्नत्वा पञ्चदशशतं त्र्युत्तरं तापसानां प्रतिबोध्य दीक्षां ग्राहयामास । तेषां साधूनां क्रमात् केवलज्ञानमुत्पन्नं परमान्नभोजनसमवसरणदर्शनप्रभुमूर्त्तिदर्शनात् । इतः शालमहाशालादयः आयुषः क्षये मुक्तिं भेजुः । इतिशालमहाशालकथा समाप्ता ॥२१॥

ददानो भावतो दानं, यतिभ्यः शुद्धमेकदा । लभतेऽनर्गलां लक्ष्मीं, शालिभद्र इवाङ्गवान् ॥ १ ॥
विषयेषु जनः स्पर्धां, कुरुते ज्ञस्तु मुक्तये। निर्द्वन्द्वा सा यथा जज्ञे, धन्यश्रीशालिभद्रयोः ॥ २ ॥ तथाहि—जम्बूद्वीपे दक्षिणभरतमध्ये राजगृहे पुरे श्रेणिको राजा न्यायाध्वना राज्यं चकार । तस्यामात्यो गोभद्रनामा श्रेष्ठ्यभूत् ।

तस्य पत्नी सच्छीला सुभद्राऽभूत् । अन्यदा शालिक्षेत्रं स्वप्ने वीक्ष्य क्रमात् पुत्रमसूत सुभद्रा, शालि-
क्षेत्रस्वप्नात् शालिभद्र इति नाम दत्तम् । अष्टवर्षदेशीयः शालिभद्रः पित्राऽशेषकलाः पाठितः । यतः प्रथमे
नार्जिता विद्या, द्वितीये नार्जितं धनम् । तृतीये नार्जितो धर्म्मश्चतुर्थे किं करिष्यति ॥ १ ॥ क्रमान्महे-
म्यपुत्रीर्द्वात्रिंशतं श्रेष्ठी पुत्रं यौवने पर्यणाययत् । देवविमानसमे गृहे ताभिः पत्नीभिः समं भोगान् भुञ्जान.
शालिभद्रो गतमपि कालं न जानाति, स्वर्गेऽप्सरोभिरिवेन्द्रः सुखं तिष्ठति तथाऽयम् । अन्यदा गोभद्रः श्रेष्ठी
उत्पन्नवैराग्यः श्रीवीरपार्श्वे दीक्षां गृहीत्वा विधिना संयमं प्रपाल्य गृहीतानशनो मृतो देवोऽभूत् । स सुरः शालि-
भद्रभाग्यैः सुतवात्सल्यतः पुत्रस्य भद्रायुक्तस्य नित्यं दिव्यं भूषणादिवस्तु ददातिस्म । " पंचसु जिणकल्लाणेसु, चेव
महरिसितवाणुभावाओ, जंमंतरनेहेण य, आगच्छंती सुरा इहयं ॥ १ ॥ चत्तारि पंच जोयण–सयाइ गंधो य मणुअलो-
अस्स । उड्ढं वच्चइ जेणं, न हु देवा तेण आवंति ॥ २ ॥" इतस्तत्र पुरे वणिजो रत्नकम्बलान् गृहीत्वा श्रेणिक-
पार्श्वे विक्रेतुमाययुः । राज्ञा मूल्ये पृष्टे तैर्लक्षद्रविणमूल्यमेकैकस्य रत्नकम्बलस्य प्रोक्तम् । राज्ञोक्तं एकेन लक्ष-
मूल्येन कम्बलेन बहुवस्तुरङ्गमा लभ्यन्ते, तेन मया न गृहीष्यन्ते । ततस्ते पुरमध्ये विक्रेतुं गताः । रत्नकम्बल-

स्वरूपमवगत्य चेल्लणा राज्ञी प्राह स्वामिन् ! एकं रत्नकम्बलं मह्यं देहि इति कदाग्रहं जग्राह राज्ञी । ततो राज्ञा त एव वणिज आकार्य रत्नकम्बलो लक्षद्रव्येण मार्गितः । तैरुक्तं भद्रायाः सर्वाणि रत्नकम्बलानि दत्तानि लक्षलक्षद्रविणमूल्येन । ततो राज्ञा पुमानेको रत्नकम्बलं लक्षद्रव्येण मार्गयितुं प्रेषितो, भद्रापार्श्वे गत्वा लक्षद्रविणमूल्येनैकं रत्नकम्बलं याचते स्म । भद्रा प्राह तं प्रति ते षोडश कम्बला द्विधा द्विधा कृत्वा शालिभद्रस्य द्वात्रिंशत्प्रियाभ्यो मयाऽर्पिताः । ताभिरंघ्रीन् प्रक्षाल्य लूषयित्वा च त्यक्तास्ते रत्नकम्बलाः । यदि राज्ञः कार्यं स्यात्तदा खंडितानि रत्नकम्बलानि गृहाण चिल्लणायै । गच्छ त्वया विज्ञप्यतामेवं प्रभुः । स पुमान् गत्वा भद्रोक्तं राज्ञोऽग्रे प्राह । तदा राज्ञी प्राह वणिजोऽपि वर्याः येषां पत्न्य एवंविधरत्नकम्बलभोगं कुर्वन्तिस्म । लक्ष्मीर्यदि भोगाय नायाति तदा तया किं प्रयोजनं, या नदीवेगगजकर्णध्वजादिवच्चञ्चलाऽस्ति । यतः—“ संज्झरागजलबूब्बूओवमे, जीविए य जलबिंदुचंचले । जुव्वणे य नईवेगसंनिभे, पाव ! जीव ! किमयं न बुज्झसि ॥ १ ॥ सम्पदो जलतरङ्गविलोला, योवनं त्रिचतुराणि दिनानि । शारदाभ्रपरिपेशलमायुः, किं धनैः कुरुत धर्ममनिन्द्यम् ॥२॥” ततः श्रेणिकस्तं शालिभद्रं द्रष्टुकामः स्वं जनमाकारयितुं प्रैषीत् । आहूते शालिभद्रे भद्रा स्वयमेत्य भूपपार्श्वे

व्यजिज्ञपत् । नायाति जातु मत्सूनुः, धरित्रीश ! बहिः कचित् । मद्गृहागमनाद्देहं, ममाद्य त्वं पवित्रय ॥१॥ श्रेणिकः
कौतुकी प्राह—भद्रे ! आयास्यामि भवत्या गृहे शालिभद्रं द्रष्टुम् । भद्राऽवक्—त्वं कियत्कालं तिष्ठेत्युक्त्वा गृहमागत्य
गोभद्रदेवपार्श्वात् विचित्रगजतुरङ्गकदलीप्रभृतिचित्ररचनां गृहे सर्वत्र कारयित्वा राजमार्गे तु विशिष्टतमापूर्वदिव्यप-
ट्टकूलादिविचित्ररचनां कारयित्वा हट्टशोभांच स्ववेश्मनृपवेश्म यावत् भूपमाकारयामास । ततो राजा स्वगृहान्निर्गत्य
राजवर्त्मनि हट्टशोभामपूर्वां स्थाने स्थाने कृतां स्थाने स्थाने शातकुम्भमयलोद्रनीलमणिमयमयूरमौक्तिकमयस्वस्ति-
काभरणदिव्यपट्टकूलविहितोल्लोचादिशोभां पश्यन् पदे पदे दिव्यसुरभिद्रव्यभूषिताशेषदिग्देश भद्रागृहमागात् ।
चतुर्थ्यां भुवि भूपं दिव्यसिंहासनेऽध्यास्य भद्रा सप्तम्यां भूमौ गत्वा शालिभद्रमभाषत । श्रेणिकोऽत्रागतोऽस्ति त्वां
वीक्षितुम् । शालिभद्रोऽवग्—मातः ! यत् क्रयाणकं समायातमस्ति तद् गृह्यतां, भद्राऽभ्यधात्त च स द्रव्यं क्रयाणकं
वा किन्तु मगधाधीशः श्रेणिकः सर्वप्रजापालकोऽस्ति सः । इति श्रुतिपथाऽपूर्वां मातृवाणीमाकर्ण्य दुःखितो मनसि
दध्यौ, धिग् ममेदं जन्म, यन्ममापीश्वरोऽस्ति परः । अतः परं परायत्तै—र्वृत्तिभोगैरलं मम । गहीष्ये चरणं चारु,
श्रीवीरचरणान्तिके ॥ १ ॥ इति ध्यायन् मातृवचनानुरोधतः शालिभद्रः सुकुमालतनुः भूपपार्श्वेऽभ्येत्य प्रणामं विन-

यादकार्षीत् । आलिङ्ग्य भूभुजाङ्केन शालिभद्रमुत्सङ्गेकृतः । अग्निस्पर्शान्नवनीतं यथा गलति, तथा राज्ञो स्वाङ्गस्पर्शाद्गलद्बिन्दुतनुं शालिभद्रं वीक्ष्य भूपोऽवादीत्, भो भद्रे ! कथमेष ते पुत्र एवं गलद्बिन्दुशरीरो दृश्यते । भद्राऽवग्-अस्य पिता गृहीतसंयमो मृत्वा देवलोके गतः, तत्रस्थः स्नेहान्मनोऽभीष्टं वस्तु पुत्राय मह्यं च पूरयति । तस्मादयं मनुष्योचितै र्गन्धवासस्रगादिभिर्दूयते पुत्रो मदीयोऽयं तन्मुच्यतामयं सुतः, ततो राज्ञा मुक्तः शालिभद्रः सप्तमभूमिभुवं गतो विमुक्तकर्मा जीव इव मुक्तिम् । ततो भद्रया दिव्यस्नानपानीयैः स्नानं कार्यमाणभूपाङ्गुलीयकं स्नानवाप्यां पपाताकस्मात् । ततः कृतस्नानो राजा इतस्ततो विलोकयन् विलक्षोऽभूद्यावत्तावद्भद्राऽऽदेशाद्दासी कूपमध्ये पतितां मुद्रिकां दर्शयामास । ततो राजा स्वमुद्रामन्या बह्वीर्मुद्रा विलोक्य दध्यौ । मम मुद्रायाः पूर्वं च स्नानवापीपतितमुद्रिकाया अङ्गाररत्नयोरिव सर्षपस्वर्णाचलयोरिवान्तरं विद्यते । राजा जगौ-केषामेतानि मुद्रिकादीनि दृश्यन्ते ? । दासी आचष्ट-शालिभद्रस्य तद्भार्याणां चाभरणानि दिनं दिनं प्रत्युत्तीर्यन्ते यानि तानि अत्र क्षिप्यन्ते, गोभद्रदेवार्पितानि नवानि भूषणादीनि परिधत्ते शालिभद्रादिपरिवारसर्वः । ततो विस्मितो भूपः सपरिवारो दिव्यभोजनेन भद्रया भोजितोविभूषणैर्विभूषितश्च दध्यौ-क्व मम सुखं क्वास्य सुखम् । ततः शालिभद्रं भोगसुखं स्मरन् भूपः स्वावासमाससाद ।

इतः श्रीधर्मघोषगुरुमागतं श्रुत्वा शालिभद्रस्तत्रागत्य विनयपूर्वं ननाम । ततो गुरुभिरिति धर्मोपदेशो ददे । "गेहं
जर्जरमाखुभिः कृतबिलं चेलं च यूकालयं, शय्या मत्कुणसंकुला वपुषि रुग् रूक्षासनं भोजनम् । वृत्तिर्भारव-
हादिका परुषवाक् जाता कुरूपा वधू-र्यस्येत्थं ननु सोऽपि नोज्झति गृहासङ्गं हहा मूढधीः ॥ १ ॥ अज्जं कल्लं परं-
परारं, पुरिसा चिंतंति अत्थसंपत्तिं । अंजलिगयंव तोयं, गलंति जियं न पिच्छंति ॥ २ ॥ ये जनाः संयमं शुद्धं,
पालयन्ति सदाऽऽदरात् । तेषां करतले स्वर्गा-पवर्गश्रीः प्रजायते॥ ३ ॥ इत्यादि श्रुत्वा शालिभद्रो जगौ-मातरमा-
पृच्छ्य संयमश्रियं गृहीष्यामि श्रीप्रभुपादपार्श्वे । ततः शालिभद्रो वैराग्यवासिताशयो गुरुं नत्वा गृहे ययौ ।
मातृपार्श्वे शालिभद्रः कृताञ्जलिर्जगौ-मया श्रीधर्मघोषसूरिपार्श्वे धर्मः श्रुतः तेनाऽहं तत्पार्श्वे संयमं गृहीष्यामि,
समादेशं देहि । भद्राऽवग्-त्वदीयं शरीरं सुकुमालमस्ति व्रतचर्या दुष्करा, तेन तव देहः कष्टं न सहिष्यते ॥ "शालिभद्रो
जगौ मातः, पुमांसः सुखमांसलाः । व्रतकष्टासहा नूनं, जायन्ते कातराः किल ॥१॥ गतसारेऽत्र संसारे, सुखभ्रान्तिः
शरीरिणाम् । लालापानमिवाङ्गुष्ठे, बालानां स्तन्यविभ्रमः ॥२॥" इत्यादि युक्त्या मातरं पर्य्यवसाय्य प्रतिदिनमेकैकां पत्नीं
प्रबोध्य त्यजन् सप्तक्षेत्र्यां स्वां श्रियं शालिभद्रो वपतिस्म । इतः शालिभद्रस्य कनिष्ठा भगिनी धन्यस्य पत्युः शिरः

स्नपयन्ती नेत्राश्रु मुमोच । स्कन्धोपरि नेत्रांभः पतितं मत्वा धन्योऽवग्—किं प्रिये रोदिषि ? । प्रिया प्राह—मम भ्राता शालिभद्रो व्रतार्थी दिनं प्रति एकां एकां पत्नीं मुञ्चन्नस्ति, तेन ममाश्रुपातोऽभूद् दृग्भ्याम् धन्योऽवग्—ते बन्धुर्हीनसत्त्वोऽस्ति । प्रियाऽऽचष्ट—यदि ते शक्तिरस्ति तदा किं त्वया न त्यज्यन्ते प्रियाः । इति मर्मवचः श्रुत्वा धन्योऽवग्—अतः परं त्वया न सङ्गमो मम कर्तव्यः । तादृशं दीक्षाग्रहणोत्सुकं मनो ज्ञात्वा ताः खिन्नाः पत्न्यः सर्वाः पतिं प्रति प्रोचुः—एषा पत्नी मुग्धैवं जजल्प । नाथ ! नर्मोक्तिभिः क्रियमाणाभिरेवं तव कर्तुं न युज्यते । ततः शालिभद्रभगिनी प्राह—स्वामिन् ! यन्मया मौग्ध्यात् प्रोक्तं तत् क्षम्यतां ममापराधस्त्वया, अतः परं मया मनागपि न करिष्यतेऽपराधः अस्मादृशामुपरि कृपा एव क्रियते, उत्तमानामेवं कर्तुं न युज्यते, यदि त्वया संयमो गृहीष्यते तर्हि त्वामेवानुपतिष्यामः, पतिः स्त्रीणामेव दुस्त्यजः । इति ता ब्रुवतीर्धन्यो धन्यंमन्योऽन्वमन्यत ॥ १ ॥ ततो धन्य उत्थाय शालिभद्रोपान्ते गत्वाऽवग्—भो शालिभद्र ! किमेवं कातरः सन्नेकैकां स्त्रियं त्यजसि, मया तु सर्वा अपि स्त्रियः समकालं त्यक्ताः प्रव्रज्याऽऽवाभ्यां गृहीष्यते । इतः श्रीवीरो वैभारगिरौ समवासार्षीत् । यावच्छालिभद्रः सर्वाः प्रियास्त्यक्ष्यति तावद् धन्यो दानं दत्त्वा सादरोऽपि श्रीवीरपादाब्जे संयमं जग्राह । धन्यं प्रव्र-

जितं श्रुत्वा शालिभद्रोऽपि श्रीवीरपर्यन्ते संयमं जग्राह । स्वामिनैव समं शश्वद्विहरन्तौ यतीश्वरौ । धन्यश्च शालि-
भद्रश्च, तौ संजातौ बहुश्रुतौ ॥ १ ॥ एकद्वित्रिचतुर्मासो–पवासादितपःपरौ, नत्वा वीरं पुरादेत्य, शुश्रुवतुः धर्म-
देशनाम ॥ २ ॥ तथाहि–माणुस्स खित्तजाई कुलरूवारुग्गमाउयं बुद्धी । सवणग्गहाण सद्धा, संजमो
लोगंमि दुल्लहा होइ ॥ १ ॥ अन्यदा मासक्षपणपारणे धन्यशालिभद्रौ भिक्षार्थं गच्छन्तौ वीरं नत्वा
जगदतुः–स्वामिन् ! अद्य कस्या हस्ते आवयोः पारणं भविष्यति । प्रभुः प्राह–मातुर्हस्तेन ते शालि–
भद्रार्य ! यतिनायक !। भविष्यति द्रुतं पार–णकं धन्ययुतस्य ते ॥ १ ॥ इच्छामीति गदन् शालि–भद्रो
धन्यसमन्वितः । भिक्षार्थं वीरमानम्य, चचाल नगरान्तरे ॥ २ ॥ भद्रागेहद्वारि क्षामताधारिविग्रहौ
धन्यशालिभद्रसाधू विहर्तुमदृष्टपूर्वाविवागतौ तथा भद्रयापि नोपलक्षितौ । श्रीवीरं शालिभद्रं धन्यमद्य वन्दिष्ये
इति ध्यानपरा भद्रा स्वं पुत्रमपि शालिभद्रमायान्तं नाबुद्ध ! ततो यती तौ क्षणमात्रं प्रतीक्ष्य तस्माद्गृहान्निर्ग-
यतुः । पुरीप्रतोल्यां तौ समायातौ । इतो दधिविक्रेत्री काऽपि वृद्धा स्त्री पुरीमध्ये समायान्ती उत्प्रस्नविणी जज्ञे
शालिभद्रनिभालनात् । हृष्टा प्रीतिपरा शालिभद्राय हृद्यं दधि यथेष्टं वृद्धा प्रादात् । ततोऽभ्येत्य श्रीवीरचरणा-

न्तिके ईर्यापथिकीं प्रतिक्रम्य रचिताञ्जलिः भद्रासूरित्यभाषत—स्वामिन् ! यत्त्वया मातृहस्ते पारणकं मम प्रोक्तं तन्नाजनि कथम् ? । भगवान् प्राह—यन्मयोक्तं तत्सत्यं, पुरा शालिग्रामे एका धन्याभिधा स्त्री विधवाभूत् । तस्याः संगमाह्वो नन्दनो भर्तरि मृते ग्रामीणवत्सरूपाणि चारयामास । कदाचिदुत्सवे जायमाने प्रत्योकः पायसं निष्पद्यमानं वीक्ष्य जननीपार्श्वे तमयाचत । माताऽवग्—मे दुःस्थायाः कुतः पायसं संपद्यते । ततो बालो भृशं कदाग्रहं मंडयित्वा पायसं मार्गयन् भृशं रुरोद । यतः—"चोरा य चुल्लका वि य, दुज्जणविप्पा य निच्चपाहुणया । नच्चिणिधुत्तनरिंदा, परस्स पीडं न याणंति ॥१॥ स्मारं स्मारं पतिं पूर्वसम्बन्धिनीं लक्ष्मीं च तारं तारं वृद्धा रुरोद । तां रोदनपरां वीक्ष्यासन्नगृहस्त्रीभिर्मिलित्वा दुःखकारणं पृष्टा वृद्धा स्वपुत्ररोदनसम्बन्धं जगौ । ततो दयया कयाचित्—स्त्रिया पय आनीतं, कयाचित्स्त्रिया तन्दुला आनीताः, कयाचित्स्त्रिया घृतं शर्करा च दत्ता, तस्यै कयाचित्स्त्रिया स्थालमपि संगमजेमनाय दत्तम् । ततो मात्रा पायसं निष्पाद्य खंडघृतयुक्तं पायसं स्थाले परिवेष्य पुत्राय वृद्धा केनचिद् हेतुना प्रातिवेश्मगृहे गता । इतस्तदैव सद्दैवतः कश्चिन्मुनिर्मासक्षमणपारणके संगमगृहे आगात् । संगमोऽपि तं यतिं चारित्रपात्रं तपःकृशतनुमालोक्य हृष्टो दध्यौ । अहो पात्रमहो वित्त—महो चित्तमिदं त्रयम् । दुर्लभं मन्दभाग्यानां, ममोद्भूतमहो अर्हम् ॥ १ ॥

इति प्रफुल्लचित्तः स्थालमुत्पाट्य हृष्टहृत् ददौ पायसं तस्मै संगमः । साधुरपि शुद्धमन्नं गृहीत्वा धन्यंमन्यो निजा-
श्रये गतः । भुक्तमनेन पायसं बुभुक्षयेति समायातया मात्रा पुनः परिवेषितं पायसं पुत्राय । तदा संगमो बुभुक्षयाऽऽ-
कण्ठं भुक्त्वा रजन्यामकस्मादजीर्णतया मृत्वा गोभद्रश्रेष्ठिपुत्रो भवानभूत् । तयापूर्वभवसम्बन्धिन्या मात्राद्य दत्तं
दधि तुभ्यम् । ततोऽसारं संसारं मत्वा कृतपारणकौ तौ धन्यशालिभद्रौ वीरमापृच्छ्य वैभारगिरौ गत्वा शुद्धे भूतले
कृतपादपोपगमानशनौ तस्थतुः । तदा समेत्य भद्रा तीर्थेशं नत्वाऽपृच्छत्—शालिभद्रधन्यौ कथं भिक्षार्थं नायातौ
मद्गृहेऽद्य । तद्वृत्ते प्रभुणोक्ते भद्रा दुःखिता वैभारगिरिं गत्वाऽवग्श्रेणिकश्च भद्रा तौ तथास्थितौ वीक्ष्य तथा
भद्रा रुरोद यथाऽन्यानपि बहून् रोदयामास, मया मन्दभाग्येन गृहागतौ न ज्ञातौ, एकवारं उत्तरं दत्तम् ।
श्रेणिकोऽवग्—भो शालिभद्र ! एकदा मात्रे स्वं मुखं दर्शय, मातृतः परं तीर्थं न विद्यते । ततो राजा भद्रां प्रति
प्राह—भद्रे ! त्वं धन्याऽसि, यस्याः पुत्र इदृगस्ति । इत्यादि कथयित्वा भूपेन प्रबोधिता भद्रा स्ववधूयुता
गृहमगात् । श्रेणिको निजं गृहं गतः । ततः शुद्धध्यानारूढौ शालिभद्रधन्यौ सर्वार्थसिद्धाख्ये विमाने जग्मतुः ।

भद्राऽपि क्रमात् प्राप्तवैराग्या श्रीवीरजिनपार्श्वे संयमं गृहीत्वा तपस्तप्त्वा च स्वर्गं गता । ततश्च्युत्वा मुक्तिं यास्यति ।

॥ इति शालिभद्रकथा समाप्ता ॥ २२ ॥

कुर्वाणो मानवो नित्यं, जिनेन्द्रशासनोन्नतिम् । भद्रबाहुगणाधीश, इवाप्नोति वृषं बहुम् ॥ १ ॥

तथाहि—दक्षिणदिशि प्रतिष्ठानपुरे भद्रबाहुवराहाह्वौ द्वौ द्विजौ सहोदरौ निर्धनौ वसतः स्म । तत्र श्रीयशोभद्रसूरयो विहरन्तः समाजग्मुः। तत्र भद्रबाहुवराहौ धर्मं श्रोतुं तत्रायातः । धर्मोपदेशोऽत्र भोगाभङ्गुरवृत्तयो० ॥ १ ॥ इत्यादि धर्मोपदेशं श्रुत्वा द्वौ सहोदरौ स्वगृहं गत्वा मन्त्रयेते स्म—गृहे तु श्रीस्तादृशी नास्ति मनुष्यजन्म सफलीभवति यया [ सा तु नास्ति ] तेन संयमो गृह्यते । इत्यादि विमृश्य द्वावपि बान्धवौ प्रवव्रजतुः । क्रमाद्भद्रबाहुश्चतुर्दशपूर्वी बभूव । षट्त्रिंशत्सूरिगुणवान् दशवैकालिक १ उत्तराध्ययन २ दशाश्रुतस्कन्ध ३ कल्प ४ व्यवहार ५ आवश्यक ६ सूर्यप्रज्ञप्ति ७ सूत्रकृत ८ आचाराङ्ग ९ ऋषिभाषितादि दश इति ग्रन्थानां निर्युक्तिकर्ता, भाद्रबाह्वीं संहितां व्यधाच्च । तदा आर्यसंभूतविजयोऽपि चतुर्दशपूर्वधरो वर्तते । श्रीयशोभद्रसूरयः स्वर्गं ययुः । भद्रबाहुसंभूतिविजयौ स्नेहलौ मिथो विहरतः स्म । वराहो विद्वानभूत् केवलं गर्वपर्वताधिरूढोऽभूत्, सूरिपदं याचते भद्रबाहुसहोदरपार्श्वात् । भद्रबाहुना

स इति भाषितः वत्स विद्वानसि, क्रियावानसि, तत्वज्ञोऽसि, परं सगर्वोऽसि, सगर्वस्य सूरिपदं न दद्मः । एतदुक्तं तस्य न रुचितं, गुरुवचनं वर्यमपि कस्यापि विषं भवति । अभव्यस्य सुकुमालमपि कर्णशूलं भवति । ततो व्रतं तत्याज वराहः, मिथ्यात्वं गतः, पुनर्द्विजवेषं जग्राह, वराहसंहितादि नवीनं शास्त्रं रचयामास । महाज्योतिषको बभूव । लोकेषु स्वां ख्यातिमिति प्रथयामास । अहं बाल्ये लग्नमभ्यस्यामिस्म । तद्विचारे च सदा तिष्ठामिस्म । एकदाऽहं तु प्रतिष्ठानपुराद्बहिर्लग्नं मंडयामिस्म । तल्लग्नमस्पृष्ट्वा स्वस्थानमागमं, सुप्तः सन् गृहे लग्नमस्पृष्टं स्मरामि स्म । ततो लग्नं मार्ष्टुं तत्रोपरि चालितः । यावत्तत्र यामि तावल्लग्नस्थाने पञ्चास्यमपश्यं, तथापि निर्भयीभूय लग्नभक्त्या सिंहस्याधो हस्तं क्षिप्त्वा, यावल्लग्नमपसारयामि तावत्सूर्यः प्रत्यक्षीभूयावग्—वत्स ! तव दृढया लग्नभक्त्या बाढं तुष्टोऽस्मि, वरं वृणीष्व । तदा मयोक्तं—यदि त्वं प्रसन्नोऽसि तदा मां त्वं स्वविमाने नय सर्वं ग्रहज्योतिश्चक्रं दर्शय । ततोऽहं रविणा स्वविमाने स्थापितः सर्वं ज्योतिश्चक्रं दर्शितं सूर्येण चारमानादि प्रोक्तं, ततः कृतकृत्योऽहं सूर्यमापृच्छ्य विश्वोपकाराय भूमौ समागाम् । ततो लोकोपकारायाहं भ्रमन्नस्मि । मम वराहमिहिर इति नाम दत्तं रविणा, लोके परां पूजां प्रापमहम् । ततः प्रतिष्ठानपुरे जितशत्रुभूपेन स्वपुरोहितः कृतः यतः—

गौरवा ० ॥ १ ॥ श्वेताम्बरान्निन्दति वराहमिहिरः सदा । एते श्वेताम्बराः काका इव कुत्सितं शब्दं कुर्वन्ति व्याख्यानछलात् । तच्छृण्वतां श्रावकाणां शिरःशूलमुत्पेदे । धिगस्माकं जीवितं, येनास्मासु सत्सु एवं गुरूणामवहीलनामेते कुर्वते, अहो महत्कष्टं अयं वराहमिहरः कलावान् नृपमान्योऽस्ति गुरून्निन्दति किं क्रियते । भवतु तथापि गुरून् विज्ञपयामः । ततः आकारिताः श्रीभद्रगुरवः । कारितस्तेषां प्रवेशमहोत्सवः, स्थापिता गुरव उपाश्रये । व्याख्याने अनेके महेभ्या राजपुत्राश्चायान्ति । भद्रबाहुमागतं श्रुत्वा वराहो बाढं जगौ, तथापि तेभ्यो नापकर्तुमशकदसौ, अत्रान्तरे भूपगृहे पुत्रो जातः । राजा वराहपार्श्वाज्जन्मपत्रिकां कारितवान् । शतवर्षायुरसौ बालो भविष्यति तेनोक्तमिति । दानानि दीयन्ते । लोका वर्धापनिकापूर्वं तत्रायान्ति राजगृहे । वराहमिहिरोऽतीव मानितो भूरिधनदानात् । गुरूणामवहीलनार्थं राज्ञोऽग्रे वराहेणोक्तं,—सर्वे जना अत्र युष्मद्गृहे समायाताः । एक आचार्यो भद्रबाहुरागतोऽस्ति सोऽत्र नायातः, तस्य देशत्यागरूपो दण्ड एव दीयते । ततो राज्ञा मन्त्रिपार्श्वाज्ज्ञापितं—त्वमत्र कथं नागाः । भद्रबाहुना ज्ञापितं—द्वितीयवारं क आगमिष्यति । राज्ञा ज्ञापितं—भो भद्रबाहो ! एवं त्वया कथमुच्यते । गुरुणोक्तं ज्ञापितं यदि सत्यमग्रे प्रोच्यते । तदा राज्ञोऽसमाधिरभूत् । राज्ञा ज्ञापितं तव न भयं

यज्ज्ञातं तत्त्वया वाच्यम् । ततो गुरुणा ज्ञापितं सप्तमदिने निशीथे बिलाडिकामुखान्मरणं पुत्रस्यास्य भावि, तस्मिन् मृते शोकविसर्जनायागमिष्यते मया । [ राज्ञा ज्ञापितं कथमेतद्भवद्भिर्ज्ञातम् । ] ततो राज्ञा सर्वत्र ग्राममध्यात् बिलाडिकाः पुराद्बहिः कर्षिताः । सप्तमे दिने निशीथे धात्री स्तन्यं पाययितुं द्वारशाखाग्रे उपविष्टा । इतोऽकस्माद्-गेला बालस्य मस्तकोपरि पतिता मृतश्च सः । ततो लोकैरुक्तं—वराहोऽयमज्ञानी गुरवो ज्ञानिन एव । राज्ञा धिक्कारः कृतो वराहस्य । ततः श्राद्धशतयुता गुरवः शोकापनोदाय राजपार्श्वे गताः । शोकापनोदसूक्तानि कथितानि । ततो राज्ञोक्तं—भवता बालस्य सप्तदिनायुः कथं ज्ञातं ? बिलाडिकाया मुखान्मरणं नाभूत् किं कारणं तत्र ? । गुरुणोक्तं अर्गलामुखे बिलाडिकारूपमस्ति । अस्माभिर्यदा पुत्रो भवतो जातः सा एव वेला सूक्ष्मबुद्ध्या गृहीता, तेन ज्ञातमायुः । ततो वराहः खिन्नो यावत्पुस्तकानि जले क्षेप्तुं लग्नः, तावद्वारितो भद्रबाहुना । शास्त्रेषु सर्वज्ञप्रणीतेषु सम्यग् प्रोक्तमस्ति, परं ज्ञातृत्वं दुर्लभं विद्यते । यतः "अमंत्र-मक्षरं नास्ति, नास्ति मूलमनौषधम् । अनाथा पृथिवी नास्ति, आम्नायाः खलु दुर्लभाः ॥ १ ॥" अत्र ज्ञातृत्वे कारणं अस्य वराहस्य विद्यागर्वो विद्यते, यतो गर्व एवाज्ञानं नान्यत् । यतः—" प्रभुप्रसादस्तारुण्यं,

त्रिभवोरूपमन्वयः । शौर्यं पाण्डित्यमित्येत–दमद्यं मद्यकारणम् ॥ १ ॥ ” अत्रान्तरे केनचिच्छ्राद्धेनोक्तं वराहाग्रे । युष्मादृशाः कृपणकाः कृमयोऽपि यस्यां, भान्ति स्म संतमसमप्यगमन्निशाऽसौ । सूर्यांशुदीप्रदशदिग् दिवसोऽधुनाऽयं, भात्यत्र नेन्दुरपि कीटसमः किमु त्वम् ॥ १ ॥ इति वदन्नेव नष्टः स श्राद्धः । ततो बाढं रुष्टस्तस्मिन् वराहो निन्दितो लोकैर्दुनोऽभूत् । एते गुरवो ज्ञानिन एव । एकदा राज्ञा पृष्टौ वराहमिहरश्रीभद्रबाहुगुरू । अत्राद्य किं भविष्यति । वराहेणोक्तं अद्य पाश्चात्यप्रहरे अमुकस्थाने अकस्मात् जलदे वर्षति मण्डलमध्ये द्विपञ्चाशत्पलमितो मत्स्यः पतिष्यति । गुरुणोक्तं एकपञ्चाशत् सार्द्धपलमितो मण्डलात्तस्माद्बहिः पूर्वदिशि च । ततः सन्ध्यायामकस्मात् मेघे वर्षति गुरूक्तप्रमाणो मत्स्यो गुरूक्तस्थाने पतितः । ततो गुरवो मानिता वराहोऽपमानितः । ततो जिनधर्मं प्रपेदे राजा । वराहोऽपमानं गमितो भागवतीं दीक्षां लात्वा अज्ञानकष्टानि कुर्वाणो गुरुषु द्वेषं वहन् मृतः । जैनधर्मद्वेषी व्यन्तरोऽभूत् । साधुषु न प्रबभूव द्वेषवानपि । तपो हि वज्रपञ्जरप्रायं मुनीनां, अतः श्राद्धानुपद्रोतुं लग्नो व्यन्तरः गहे गृहे रोगानुत्पादयामास । श्रावकैः स्वदुःखं रोगोत्पत्तिहेतुं गुरुणामग्रे विज्ञप्तं– भगवन् ! त्वयि जगत्पूज्ये सति कथं सङ्घपीडा विद्यते । गुरुभिरभाणि मा भैष्ट सोऽपि वराहो मृत्वा व्यन्तरी-

भूय पूर्ववैरात श्रीसङ्घं पीडयति स्म । [ततो गुरुभिरुक्तं–]मा दुःखं यूयं कुरुध्वं, सर्वं वयं भविष्यति । ततः श्रीमद्र-
बाहुगुरुभिरुपसर्गहरं स्तोत्रं षड्गाथामयं कृत्वा श्राद्धेभ्यो दत्तं पठनाय प्रोक्तं च तच्चेदं "उवसग्गहरपासं, पासं वंदामि
कम्मघणमुक्कं । विसहरविसनिनासं, मंगलकल्लाणआवासं ॥ १ ॥ विसहरफुलिंगमंतं, कंठे धारेइ जो सया मणुओ ।
तस्सगहरोगमारी, दुट्ठजरा जंति उवसामं ॥२॥ चिट्ठउ दूरे मंतो, तुज्झ पणामोवि बहुफलो होइ । नरतिरिएसुवि जीवा,
पावंति न दुक्खदोगच्चं ॥ ३ ॥ तुह सम्मत्ते लद्धे, चिंतामणिकप्पपायवब्भहिए । पावंति अविग्घेणं, जीवा अयरामरं
ठाणं ॥४॥ इय संथुओ महायस भत्तिभरनिब्भरेण हियएण ता देव दिज्जबोहिं भवे भवे पासजिणचंद ॥५॥" तमुपसर्गहरं
स्तोत्रं पठतां श्राद्धानां स, व्यन्तरो मनागपि प्रभवितुं न समर्थः । ततो रोगोपशान्तिर्जाता च । यत्र तत्रापि कार्ये स्तोत्रे
स्मर्यमाणे धरणेन्द्रेणागत्य गुरुपार्श्वात् प्रान्तगाथाऽपसारिता । तत् स्तोत्रमद्यापि स्मृतं विघ्नानि उपशामयति । स
श्रीभद्रबाहुगुरुश्चतुर्दशपूर्वधरः बहुकालं भव्यजीवान् प्रतिबोध्य स्वर्गं गतः । ततश्च्युतोऽवश्यं मुक्तिं यास्यत्येव ।

। इति श्रीभद्रबाहुकथा समाप्ता ॥ २५ ॥

अभिमानं विमुञ्चन्ति, ये जना ऋद्धिसंभवम् । त एव वृण्वते मुक्तिं, दशार्णभद्रभूपवत् ॥ १ ॥

तथाहि––अत्रैव भरते दशार्णपुरपत्तने दशार्णभद्रभूपो भुवं शशास । "पार्थिवानामलङ्कारः, प्रजानामेवपालनम् । किरीटकटकोष्णीषैर्भूष्यन्ते केवलं नटाः ॥ १ ॥" भूपस्त्रिकालं जिनपूजां चकार । यतः–"जिनस्य पूजनं हन्ति, प्रातः पापं निशाभवम् । आजन्म विहितं मध्ये, सप्तजन्मकृतं निशि ॥१॥" अन्यदा दशार्णपुरोपान्तस्थदशार्णगिरौ श्रीवीरः सार्वः समवससार । देवैः स्वर्णरत्नरजतवप्रमयं योजनमितं कपिशीर्षश्रेणीरोचिष्णु चतुःप्रतोलीचारु समवसरणं कृतं । तत्रोपविष्टः प्रभुश्चतुर्मुखश्चतुस्त्रिंशदतिशयशाली चतुष्षष्ठीन्द्रादिद्वादशपर्षदामग्रे धर्मोपदेशं दत्ते । तदोद्यानपालो भूपाग्रे श्रीवीरागमं ज्ञापयामास । राजा पारितोषिकं ददौ । तत उत्थाय सप्ताष्टपदानि संमुखं गत्वा प्रभुं स्तौति । यथा–जगद्वितीर्णकल्याण ! कल्याणकमलालय ! । जय त्वं जिन सर्वज्ञ ! सर्वज्ञततिसंयुत ! ॥ १ ॥
कलाकलामलज्ञानो–दय ! दयोदधे ! प्रभो ! । तार ! तारय मां धूत-मान मानभवाम्बुधे ! ॥ २ ॥
स्मारं स्मारं गुणग्रामं, कारं कारं तव स्तुतिम् । दर्शं दर्शं मुखं तेऽद्या--भूवं भूवंद्य ! निस्तमाः ॥ ३ ॥
स्तुत्वेति दध्यौ नृपः–प्रातर्विस्तरादहं प्रभुं वन्दिष्ये । यथा पुरा केनापि न वन्दितः भूपो लोकानां वीरागमनज्ञा-

पनाय पुरे पटहं दापयामास । पुरं पताकातोरणवन्दनमालादिरम्यं दन्दह्यमानागुरुकर्पूरव्यासनभोमण्डलं चाकारयत् । प्रातः सर्वशृङ्गारसारः सिन्धुरारूढो राजा सज्जीबभूव । तत्राष्टादशसहस्रं गजाः, चतुरशीतिलक्षाणि वाजिनः, २१ सहस्रं रथाः, ९१ कोटि पत्तयः, १६ सहस्र ध्वजाः, मेघाडम्बरछत्राणि पञ्चशतानि, ६९००० स्त्रीकर्यः, ५०० राज्यः सुखासनारूढाश्चेलुः । सामन्तसाचिवादयोऽपि सशृङ्गाराश्च । स्थाने स्थाने गीतनृत्यादीनि कार्यन्ते । लोका अपि स्वस्वर्द्धिमानशृङ्गाराश्चेलुः, राजापीदृग् परिवारशाली याचकेभ्यो रूप्यस्वर्णदुकुलादि दानं ददानः पुष्पप्रकरशोभिराजपथे गर्वाज्जगदपि तृणं मन्यमानः छत्रशाली प्रभुं नन्तुं चचाल । दशार्णाद्रिसमीपे ययौ । ततो यानानि संस्थाप्य तत्र पञ्चाभिगमपूर्वं प्रभुं प्रदक्षिणीकृत्य यथोचितस्थानमुपाविशत् राजा । तदा हृष्टो राजा दध्यौ—यथा सर्वद्धर्या प्रभुर्मया नेमे, तथा न केनापीन्द्रादिना चक्रिणा वा वन्दितो भावी । तदा दशार्णभद्रस्य गर्वं सौधर्मेन्द्रोऽवधेर्ज्ञात्वा दध्यौ अहो उत्तमोऽयं भूप एवं गर्वं धत्ते न तद्वरं, यतो लोके गर्वः श्रेष्ठो न । यतः—

" उत्सर्पयन् दोपशाखा, गुणमूलान्यधो नयन् । उन्मूलनीयो मानद्रु—स्तन्मार्दवसुहृत्प्लवैः ॥ १ ॥ औचित्याचरणं विलुम्पति पयोवाहं नभस्वानिव, प्रध्वंसं विनयं नयत्यहिरिव प्राणस्पृशां जीवितम् । कीर्तिकैरविणीं मतङ्गज इव—

प्रोन्मूलयत्यंजसा, मानो नीच इवोपकारनिवहं हन्ति त्रिवर्गं नृणाम् ॥ २ ॥ अस्याहो भक्तिरागोऽयं, विश्वपूज्यस्य पूजने । परमेतेन मानेन, दुष्यतेऽमुष्य हीयते ॥ ३ ॥ निखिलैर्निर्जरैरेव, शक्रैः सर्वर्द्धिभिर्जिनाः । युगपद्यदि पूज्यन्ते, तथापि स्युर्न पूजिताः ॥ ४ ॥ जिनानामनन्तगुणानां सर्वतः पूजा न केनापि कर्तुं शक्यते । ततः शक्रेण भूपगर्वोत्ताराय व्योम्नि दिव्यशक्त्या ६४ सहस्रं गजा विचक्रिरे । तत्रैकैकहस्तिनः ५१२ मुखानि । मुखे मुखेऽष्टौ दन्ताः । दन्ते दन्तेऽष्टौ वाप्यः । वाप्यां वाप्यामष्टकमलानि । कमले कमले एकैकैव कर्णिका । कर्णिकायामिन्द्रोपवेशाय सिंहासनं, तत्रेन्द्रोऽग्रमहिषीयुत उपविशति । कमले कमले लक्षपत्राणि । पत्रे पत्रे द्वात्रिंशद्देवदेवीरचितानि३२बद्धनाटकानीन्द्रैः सर्वैः कार्यन्ते । प्रथममेकगजे दन्तसङ्ख्या४०९६, एकगजे वाप्यः ३२७६८, एकगजे पद्मानि २६२१४४, कर्णिकाशक्रोपविशनप्रासादयोः सङ्ख्या २६२१४४, एकगजे पद्मदलानि २६२१-४४०००००, एकगजे द्वात्रिंशद्बद्धनाटकसङ्ख्या ८३८८६०८००००० । अतः परं सर्वगजसङ्ख्या ६४००० एकगजमुखानि ५१२ । ३ कोटि २७ लक्ष ६८ सहस्रं मुखसर्वसङ्ख्या । गजस्य एकमुखे ८ दन्ताः । २६ कोटि २१ लक्ष ४४ सहस्रं सर्वगजदन्तसङ्ख्या, दन्ते दन्ते वाप्यः ८ । २०९ कोटि ७१ लक्ष ५२ सहस्रं सर्वगजवापीसङ्ख्या ।

कमलसङ्ख्या । कमले कमले लक्ष-वाप्यां वाप्यां ८ कमलानि १६७७ कोटि ७२ लक्ष १६ सहस्रं सर्वगजकमलसङ्ख्या । कमले कमले लक्ष-वाप्यां वाप्यां ८ कमलानि १६७७ कोटि ७२ लक्षकोटि ७२ सहस्रकोटिः १६० कोटयः सर्वगजपत्रसङ्ख्या । पत्रे पत्रे बत्री-लक्षपत्राणि १६ शतलक्षकोटी ७७ लक्षकोटि ७२ सहस्रकोटिः १६० कोटयः सर्वगजपत्रसङ्ख्या । पत्रे पत्रे बत्री-सबद्धनाटकं ५३६८ कोटाकोटि ७० लक्षकोटि ९ सहस्रकोटि १२० कोटयः, एवं सर्वमीलने सर्वगजनाटकसङ्ख्या॥ १६ शतलक्षकोटि ७७ लक्षकोटि ७२ सहस्रकोटि १६० कोटयः कर्णिका। १६७७ लक्षकोटि ७२ सहस्रकोटी १६० कोटय जिनप्रासादाः । १६७७ कोटि ७२ लक्ष १६ सहस्रं इन्द्राः। एकैकस्य इन्द्रस्य पार्श्वे ८ अग्रमहिष्यः, १३ सहस्रकोटि ४२१ कोटि ७७ लक्ष २८ सहस्रं इन्द्राणीसर्वसङ्ख्या । सर्वगजरूपानां सङ्ख्या ५३६८७०९१२००००००० । तदे-तावद्रूपवान् सौधर्मशक्रो देवदुन्दुभिनादरम्यश्रीवीरगुणग्रामगर्भनाट्यानि विलोकयन्नभस उत्तीर्य प्रदक्षिणीकृत्य प्रभुं ववन्दे भूपः । तां सौधर्मेन्द्रर्द्धिं पश्यंश्चित्रलिखित इवासीत्, ततो यदा शक्रो गजादुत्तरीतुमैच्छत् तदा गजोऽग्रिमौ पादौ स्वप्रभुं सुखेनोत्तारयितुं पर्वतस्योपरि निम्नीचकार । तदा गजस्याग्रिमौ पादौ आर्द्रपङ्के इव भुवि निमग्नौ । तदेन्द्रो गजादुत्तीर्य प्रभुं ननाम । यत्र गजः पादौ निम्नीचक्रे, तस्य स्थानस्य गजाग्रपदकमिति तीर्थं लोकप्रसिद्धमजनि । नृपस्तादृग्विभासुरं शक्रं वीक्ष्य दध्यौ । अहोरूपमहोऋद्धि-रहो स्त्रैणं च शक्रस्य ।

अहो भक्तिरहो शक्ति-रस्यान्यत्सर्वमप्यहो ॥ १ ॥ मद्विभूतिः शक्रविभूत्यग्रेऽणूयते, अतो मुधैव गर्वः कृतः, जिनः सर्वप्रकारैर्न केनापि पूजितः स्यात् । शक्रस्यार्हति सर्वोत्कृष्टा भक्तिः, अतोऽलं राज्यश्रियाऽनया । यद्यहमधुना दीक्षां न भजे तदा मया सर्वथा हारितमेव । यद्यत्र व्रतं गृह्णामि तदेन्द्रो जित एव । एवं ध्यात्वा भूपस्तत्रैव धीमान् पञ्चभिर्मुष्टिभिर्लोचमकृत स्वयम् । तादृशगजाश्वयुवत्यादिराज्यं-मुक्त्वा प्रभुपार्श्वे संयमं ललौ । ततो मुनिं जातं वीक्ष्य शक्रो भक्त्या नमश्चक्रे प्राह च । दशार्णभद्र ! सत्साधो ! संयमश्रीविराजित ! । धन्यस्त्वं येन दुष्पुरा, प्रतिज्ञा पूरिता निजा ॥ १ ॥ पुनः पुनः प्रणूयेति, यतिं नत्वा जिनाधिपम् । संप्राप वासवः स्वर्गे, श्रद्धापूरितमानसः ॥ २ ॥ क्रमात्कर्मक्षयं कृत्वा दशार्णभद्रो मुक्तिं ययौ ॥ इति दशार्णभद्रराजर्षिकथा समाप्ता ॥ २६ ॥

---

शुभध्यानं वितन्वानः, क्षीणकर्मा जनः क्षणात् । लभते केवलज्ञानं, प्रसन्नचन्द्रसाधुवत् ॥ १ ॥

पोतनपुरे सोमचन्द्रराजा । तस्य धारिणीप्रिया प्रसन्नचन्द्रपुत्रश्च । एकदा राज्ञी राज्ञः शिरसि वेणीवालान् विवृण्वती पलितं दृष्ट्वा राज्ञो हस्तेऽमुचत् जगौ च पलितानि जातानि जरां ज्ञापयन्ति । राजा जगौ-हा मे पूर्वजा

वृद्धत्वेऽनागतेऽपि सुतं राज्ये न्यस्य व्रतं जगृहुः । मम तु वार्द्धक्ये समागतेऽपि न वैराग्यं जातमहमधम एव । यतः—"नाधमानां जरा स्वान्ते, मध्यानामेति मूर्द्धतः । स्वान्तान्मूर्द्धनि धन्याना—मारोहति सतां पुनः ॥ १ ॥ मनसि लज्जयाऽहं तया हन्त, विषीदे वार्द्धकं कियत् । अखंडकुलधर्माणां, मृत्युः सोऽपि महोत्सवः ॥ २ ॥ जरसाऽभिभूता, जायन्ते यौवनेऽपि विद्वांसः । मन्दधियः पुनरितरे, भवन्ति वृद्धत्वयोगेऽपि ॥ ३ ॥" इत्या-युक्त्वा शीर्णतृणमिव राज्यं त्यक्त्वा प्रसन्नचन्द्रं बालमपि तदा राजा स्वराज्येऽभ्यषिञ्चत् । वनाय सोमचन्द्रो यावच्चचाल । तावद्धारिण्यपि पत्नी वारिताऽपि तेन राज्ञा समं धात्र्या सार्द्धमचलत् । सोमचन्द्रो वने गत्वा तापसव्रतं जग्राह । तस्यैवंविधा व्रतश्रीरासीत् । यतः—"उटजः सौधमिङ्गुद्या—स्तैलैर्माणिक्यदीपकाः । श्रद्धैवान्तः-पुरं श्रेष्ठं, प्रीतिः पक्षिमृगाश्रया ॥ १ ॥ सर्वासनजयो योग्या, चमूः शमदमादयः । फुलदाः फलदाः सूदा, निग्राह्या-श्चान्तरारयः ॥ २ ॥ क्षणः परस्य पुंसो वा, ध्यानं षाड्गुण्यचिन्तनम् । सोमचन्द्रस्य राजर्षेः, प्रव्रज्या राज्य-वद्बभौ ॥ ३ ॥" धारिण्या तापसव्रतग्रहणात् प्राक् संपन्नगर्भया पुत्रो जनितः । प्रसवरोगेण धारिणी दिवं ययौ । वल्कलैः प्रावृतं बालं प्रति प्राह तापसः । वत्स ! तव शैशवेऽपि तव वल्कलचीरिताऽस्ति, तेन वल्कलचीरीति तव

नाम भवतु । राज्ञी दिवं गताप्यवधिज्ञानेन स्वं पुत्रं बालं मत्वा महिषीरूपं कृत्वा तत्रागत्य स्तन्यमपाययत् मोहेन । यतः—"रागी बध्नाति कर्माणि, वीतरागो विमुच्यते । जना! जिनोपदेशोऽयं, संक्षेपाद्बन्धमोक्षयोः ॥ १ ॥" धात्र्यपि तं बालकं पालयामास । धारिण्यपि स्तन्यपानं कारयामास । स मुनिः तं सुतं स्वाङ्के धत्तेस्म सदा । धान्यैरन्यैर्वन्यैः पोष्यमाणः शैशवोत्तरं भेजे । कुमारो लोकव्यवहारं कमपि मनाग् न वेत्ति । अन्येद्युः स्वं सोदरं वल्कलचीरिणं पितुरन्तिकस्थं श्रुत्वा कस्यचिन्मुखात् सहोदरेण तेन विना स्वं शून्यममंस्त प्रसन्नचन्द्रभूपः । ततः केनापि मनुष्येणाकारितो वनात्तस्मात् पितुः समीपं न मुमोच कुमारः । ततः प्रसन्नचन्द्रो दध्यौ—उपायं विना मम पार्श्वे नैष्यतीति मत्वा तां कूटरचनां वेश्यां मुक्त्वा-नान्यो वेत्ति । यतः—"मायोपनिषदां शास्त्रं, क्षेत्रं निकृतिवीरुधाम् । वशीकरणमस्त्येव, वेश्यैव मुग्धदेहिनाम् ॥ १ ॥" इत्यादि । ततो राजा पण्यस्त्रीपेटकं कपटकूटकुशलमाकार्याऽवग्—मद्भ्राता सर्वलोकव्यवहारबाह्यो वने विद्यते । स कथमपि नायाति अत्र, तथा कर्तव्यं, यथाऽत्रायाति । ताभिरुक्तमस्मदीया बुद्धिर्विलोक्यताम् । तथा करिष्यतेऽस्माभिर्यथा सुखेनात्र वल्कलचीरी भवद्भ्राता समेष्यति । ततस्ताः हृष्टाः सिंहकेसरमोदकादिवर्यखाद्ययुता ऋषिवेषधराः सिंहपोतवने ययुः । तं जन्मजटिलं क्षत्रियब्रह्मचारिण-

वीक्ष्य वेश्याः सन्मुखाः समागताः । ता वेश्या दृष्ट्वा तापसा अमी कुतोऽ-
गायान्तं विल्वामलकादिफलभारिणं वीक्ष्य वेश्याः सन्मुखाः समागताः । ता वेश्या दृष्ट्वा तापसा अमी कुतोऽ- भ्यागता इति ध्यायन् वल्कलचीरी तातामिवादये इति प्राह—के यूयं ? काश्रमो वः ? क यास्यथ ? । ताभिरुक्तं—वयं मुनयो वीतरागाः परंपुमर्थानुरक्ताः पोतनाश्रमतस्त्वां वीक्षितुमत्रागताः तव भक्तिं कर्तुं च । यतः—" सपर्ययाऽतिथीनां हि, तपोवृद्धिस्तपस्विनाम् । विहिता जायते स्वर्गा—पवर्गसुखदायिनी ॥ १ ॥ " मुनिः प्राह—वनादेतानि फलानि मयाऽऽनीतानि यूयं गृह्णीध्वं बहूनि पुनरानेष्याम्यहं तानि कृतार्थोऽहमद्य भवामि युष्मद्दानविश्राणनात् । ता वेश्याः प्रोचुः—त्वदानीतेषु ईदृशेषु फलेषु विरसेषु अस्माकमिच्छा न स्यात् । पोतनाश्रमजानां फलानां विषये वाञ्छा भवति नः । तेनोक्तं—पोतनाश्रमजानि फलानि कीदृशानि भवन्ति । ताभिः सितोपलानिष्पन्नमोदकादि- खाद्यानि वर्याणि दर्शितानि । तानि खाद्यान्यास्वाद्य वल्कलचीरी बिल्वादिफलेषूद्विग्नोऽभूत् । ततस्तासामङ्गस्पर्श- मासाद्य वल्कलचीरी जगौ—अहो भवतामङ्गे ईदृशं मार्दवं सुखदं कुतोऽजनि । युष्माकं हृदये च इदं वेदिकारम- णीयं कुतोऽभूत् । ता मुनिं प्रोचुः—ये पोतनाश्रमे वने ईदृशानि फलान्यास्वादयन्ति, तेषामीदृशं सुकुमालं सुखदं वेदि- काद्वयं जायते । ततस्तेन तस्मिन् (तयोः) वेदिकाद्वयस्थफलयोर्यावद्धस्तो दत्तस्तावत्तस्यात्यन्तसुखमभूत् । प्रोक्तं च तेन—

मम कथमीदृशानि फलानि च ईदृग्वेदिकाफलस्पर्शो भविष्यति । ततस्ताभिरुक्तं—अमु वनं त्यक्त्वा पोतनाश्रमे अस्मन्मैत्रीं कुरु यदि तदा सर्वं समीहितं भविष्यति एव । ततस्तासामङ्गस्पर्शे सितोपलाद्राक्षादिमाधुर्याधिकं ज्ञात्वा तस्य वनफलास्वादसुखं विस्मृतम् । ततस्तेनोक्तं—तिष्ठत यूयमत्र क्षणं, अहं यावत्तापसोपकरणानि संगोप्य छन्नं तत्रायामि । ततो यावत्तापसोपकरणादि संगोप्य यावद्वेश्यापार्श्वे वल्कलचीरी समायाति । इतः सोमचन्द्रं राजर्षिमागच्छन्तं दृष्ट्वा शापात् भीता दिशोदिशं नष्टाः । ततो वल्कलचीरी तत्पृष्ठौ एक एव ता द्रष्टुं चचाल । मृगशाव इव इतस्ततो वने भ्रमन् रथिकं पथिकं व्रजन्तं वर्त्मनि वीक्ष्याभिवादयामीति मुनिर्जगौ । रथ्याह क्व गन्ताऽसि ? मुनिराचष्ट—ताताहं पोतनतपोवने । रथी प्राह—अहमपि तत्र यास्यामि । ततस्तमेवानुव्रजन् तत्प्रियां वीक्ष्य ताताभिवादयामीति जगौ । ततस्तौ दम्पती दध्यतुः । अयं तापसाश्रमोत्पन्नः, स्त्रीपुंसयोरपि भेदं न वेत्ति । ततो वल्कलचीरी मार्गे गच्छन् रथ्यान् वृषान् प्रतोद्यमानान् वीक्ष्य मुनिर्जगौ । एते मृगाः किं वृथा दूयन्ते घातैः । ततो रथ्याह एतैर्वृषैरीदृशं कर्म कृतमस्ति, तेन कर्मविपाकेनेदृशी वेदना जायमानास्त्यधुना । रथी तस्यार्जवेन वशीकृतो मोदकान् तस्मै मुनये ददौ । तानपि आस्वाद्य मुनिर्दध्यौ—हुं ज्ञातं तानि फलान्येव सांप्रतं मद्भाग्येन संमुखान्यायातानि । रथी मार्गे एकं तस्करं

जित्वा तस्य वित्तं लात्वा क्रमात्पोतनाश्रममगात् । मुनिनोक्तं--क्वास्ति पोतनाश्रमः ? । रथी जगौ--अयं पोतनाश्रमः
अत्र सुखं तिष्ठ । ततो रथी स्वगृहं प्रत्यचलत् । ततः प्रत्यहं प्रतिगृहं गच्छन् मुनिः स्त्रीपुंसयोर्दर्शनेनाभिवादया-
मीति जल्पन् वेश्यापाटके गतः । तत्र कामपि वेश्यां वीक्ष्य ताताभिवादयामीति जगौ । ततो वेश्यया मुग्धस्वभा-
वोऽयं मुनिर्महत्पुण्यमिदं, अयं मुनिर्यदि मदीयाङ्गस्पर्शं करोति, तदाऽहं कृतार्था भविष्यामीति ध्यात्वा गृहमध्ये नीत्वा
स्वङ्गस्पर्शादिस्नानं चक्रे । वेश्या तु वहुपुण्यलाभोत्पादमात्मनि मानयन्ती तत्कृतनखक्षतादि सहते । ततो वेश्यया
सुकुमालशरीरोऽयं मुनिरिति कृत्वाऽऽत्मपुत्र्या समं पाणिपीडनं कारितम् । मुनिर्दध्यौ । ईदृशमातिथ्यं कुत्रापि न
दृष्टम् । तदा तस्या गृहे विवाहतूर्याणि वाद्यन्ते, वल्कलचीरी तु तस्याः करस्पर्शं परमसुखमयं मेने । इतः पूर्व-
नियुक्ताः पण्यस्त्रियोऽभ्येत्य तस्मिन्नेवाहनि प्रसन्नचन्द्रभूपाग्रे प्रोचुः--स कुमारोऽस्माभिर्लोभयित्वा दूरतो नीतो
यावत्तावत्सोमचन्द्रर्षिरागात् । ततो वयं शापभयान्नष्टाः । सोऽपि वल्कलचीर्यपि नष्टः । ततोऽस्माभिः स न
प्राप्तः । किं करिष्यतेऽग्रत इति ज्ञायते पोतनाश्रमफलानि दर्शितानि सन्ति तेनात्रागमिष्यते च । राजा
खिन्नो दध्यौ--मया वर्यं न कृतं तस्य तातस्य वियोगोऽभत्, ममापि न मीलितः, किं क्रियते हस्तो दग्धः पृथुकोऽपि

न प्राप्तः । ततो राजा शोकातुरोऽखिलं राजकार्यं विसृज्य सशल्यस्तस्थौ । इतः कश्चिद्वेश्यागृहे नवीनं विवाहं जायमानं श्रुत्वा राज्ञोऽग्रे प्राह । राजाऽपि ता एव पूर्वप्रेषिता वेश्याः प्रेष्य स्वभ्रातुरेव विवाहं जायमानं जज्ञौ । ततो राज्ञा वेश्या तत्राकारिता प्रोक्तं च रे मद्भ्रातुः कथं त्वया स्वपुत्री दत्ता । वेश्या जगौ—सदनं स्वयमासाद्य, कुमारमुनये मया । सुताऽद्य दयितामदायि, देव! दैवज्ञवार्तया ॥ १ ॥ तदर्थं मत्कृतः सर्वोऽपराधो नरेश्वर! क्षम्यतां क्रियेतां मय्युपरि प्रसन्नविलोचने । ततो राजा तत्र स्वं सहोदरं प्रियासखं दृष्ट्वा मन्त्रीश्वरान् प्रति जगौ किं करिष्यते तेन भ्रात्रा नीचकुलजा कन्याङ्गीकृता । मन्त्रिणो जगदुः—न दोषोऽत्र नीचकुलादपि भूपाः कन्यां वृण्वते । यतः—"विषादप्यमृतं ग्राह्य—ममेध्यादपि काञ्चनम् । अधमादुत्तमां विद्यां, स्त्रीरत्नं दुष्कुलादपि ॥१॥" ततः स्वपट्टहस्तिसमारूढं स्वसहोदरं सप्रियं कृत्वा महता महेन भूरिदानं ददानो राजा स्वसौधमानिनाय । तत आवासः तस्य स्थित्यै अर्पितः, श्रीर्बह्वी अर्पिता । सहोदरेण सममेव राजा भुङ्क्ते । यतः—" तत्र विज्ञजनादेषः, संप्रदायप्रदायकात् । राज्ञाऽमितैर्दिनैश्चक्रे, व्यवहारबृहस्पतिः ॥ १ ॥ लिपिसंख्यानयादक्षः, पदवाक्यप्रमोदितः । स कलाकुशलो जज्ञे, प्राज्ञो राज्ञोऽभियोगतः ॥ २ ॥ अन्यदा कस्मिन्नन्याये कृते बद्धं रथिनं कुमारो मोचयामास । भ्रुत्वो-

लक्ष्मीर्दृशोर्गौरी, रसनाग्रे सरस्वती । हृदयेऽथ दया तस्या—वसन् वल्कलचीरिणः ॥ १ ॥ अन्याभिर्बह्वीभिः कन्याभिः
समं राज्ञा स कुमारः पाणिपीडनं कारितः, युवराजपदवीं ग्राहितश्च । ततः स्वस्य भूपस्यावरजोऽत्यन्तप्रीतयेऽभूत् ।
इतश्च सोमचन्द्रर्षिः कुमारमदृष्ट्वा निजमात्मानमश्रुप्रवाहैरसिञ्चत् । राज्ञा प्रसन्नचन्द्रेण वल्कलचीरिसम्बन्धज्ञापनात्
सोमचन्द्रराजर्षिर्निःशोकश्चक्रे । ततः पारणकं चक्रे । प्रसन्नचन्द्रस्तेन भ्रात्रा समं गोष्ठीं कुर्वन् गतमपि कालं न वेद ।
अथ द्वादशवर्षान्ते भर्तुरेकदा अङ्कादुत्तीर्य पुत्रोऽगादङ्कं वल्कलचीरिणः । ततस्तं ललन्तं बालकं दृष्ट्वा वल्कलचीरी
स्वस्यैव शैशवं सस्मार—अहमधमोऽस्मि, यतो जाते मयि माता प्रथमं मृता, वार्द्धकत्वे मया यौवनं प्राप्तेन पिताऽपि
त्यक्तः । ततः पितुः पालनर्णात्कथं मोक्ष्येऽहं धिग् धिग् मम कृत्रिमस्नेहत्वं अहं निष्ठुरो मया प्राप्तसौख्येन कदाऽपि
पितुः सारा न कृता । ततोऽहमधमोऽस्मि । यतः—“ इक्षुक्षेत्रं वंशजाली, कदलीविषपादपाः । फले जाते विनश्यन्ति,
दुष्पुत्रेण कुलं यथा ॥ १ ॥ आस्तन्यपानाज्जननी पशूनां, आदारलम्भावधि चाधमानाम् । आगेहकर्मावधि मध्य-
माना—माजीविताच्चीर्थमिवोत्तमानाम् ॥ २ ॥ ” एवं ध्यात्वा चिरं वल्कलचीरी पितृमिलनोत्सुकः प्रसन्नचन्द्रपार्श्वे
जगौ—भ्रातरहमेकदाऽपि पितुः पादनत्यर्थं न गतः, अतः परं मया तातपादनतिं विना भोजनं न कर्तव्यं तेन ममा-

देशं देहि तत्र गमनाय। ततो नृपो वल्कलचीरियुतो मुनेः पावनं स वनं ययौ। वनमध्ये गच्छन् वल्कलचीरी भ्रातुरग्रे इदं जगौ एते बिल्वेङ्गुदीमुख्या बहवः पादपाः पुरा आरोपिताः फलान्येव ददते पथि गच्छतां, इत्यादि वार्तां कुर्वाणः प्रसन्नचन्द्रराजा तातपादाम्बुजं नत्वा मुमुदेतराम्। सोमचन्द्रमुनिस्तं गौरवयामासाङ्कारोपणात्। तदा सोमचन्द्रर्षेरानन्दाश्रुवारिभिस्तौ पुत्रौ स्वकृतं पातकमलं प्रक्षालयामासतुः। ततो वल्कलचीरी गोपितानि तापसोपकरणभाण्डादीनि प्रत्युपेक्षितुमभ्यागात् पर्णशालोटजान्तः। तापसभाण्डं तत्पूर्वमुक्तं रजोऽवगुण्ठितं स्वोत्तरीयाञ्चलेन प्रत्युपेक्षितवान् वल्कलचीरी यत्नपूर्वं, तत एवं दध्यौ--मया प्रागपि एवंविधानि यतिपात्राणि कर्हिचित् प्रत्युपेक्षितानि। इत्यूहापोहतः पूर्वभवसम्बन्धिभवं ददर्श जातिस्मरणतः--मया पूर्वं श्रीगुरुपार्श्वे चारित्रं जिनसम्बन्धि गृहीतं शुद्धं पालितं. परमल्पायुष्कत्वाद्देवलोकेऽगमं, पुनस्ततश्च्युत्वा कर्मयोगाद्राजपुत्रो भूत्वा जिनधर्मं न प्रापम्। इदं राज्यं गजकर्णचपलं जीवितव्यं च। अन्तरायैरियत्कालं वञ्चितोऽस्मि मुधाऽहं, आसन्नमपि श्रामण्यं न मयाऽबोधि तदा। असारोऽयं भवोऽगाधो, नानादुःखप्रदायकः। गजाश्वस्त्रीरमामुख्यं, वस्तु सर्वं विनश्वरम् ॥ १ ॥ इत्यादि असारसंसारस्वरूपं द्वादशभावनात्मकं ध्यायन् क्षणादेव क्षीणाशेषकर्मा वल्कलचीरी कुमारः

केवलज्ञानमाप । तदा देवैरभ्येत्य यतिलिङ्गं ददे । देवविहितकनककमले निविश्य सोमचन्द्रप्रसन्नचन्द्रयोरिति धर्मो-
पदेशं ददौ वल्कलचीरी । तथाहि—मोहभूतकुलाक्रान्ते, रागद्वेषविभीषिके । क्रोधाख्योत्तालवेताले, लोभविक्षो-
भराक्षसे ॥ १ ॥ प्रेतायतेन्द्रियग्रामे, कषायोद्धुषितानले । मिथ्यात्वाख्यमहागृध्रे, मायागोमायुयोषिति ॥ २ ॥ अभि-
मानमहाशूले, मनोभवपिशाचिनि । जरारुग्मृत्युजात्यादि—शाकिनीकुलसंकुले ॥ ३ ॥ संसारनामनि महा-
श्मशानेऽत्र महाभवे । कथं नियातीनिश्चिन्ता, रमन्ते हन्तजन्तवः ॥ ४ ॥ अस्माददूरे सर्वज्ञ—शासनं ब्रह्मपत्तनम् ।
निर्भयं यतिनिर्वाण—पुरशाखोपमं पुरम् ॥ ५ ॥ धर्मं जिनवरप्रोक्तं, कुर्वाणा मानवाः सदा । लभन्ते परमं सौख्यं,
सर्वकर्मक्षयात् क्षणात् ॥ ६ ॥ श्रुत्वेति धर्मसंबोधं, महोदययियासया । मुनिभूपावभूतां तौ, जैनशासनवासनौ ॥७॥
तदा श्रीवीरजिनः पोतनपुरे उद्याने नाम्ना मनोरमे समवासार्षीत् । तदा स वल्कलचीरी स्वयंबुद्धः केवली भ्रातृपितृ-
युतः श्रीवीरं नन्तुं ययौ । ततो जिनोऽवग्—भो केवलिन् ! त्वं केवल्यसि । त्वया मम शेषसाधूनामपि न प्रणामः कार्यः ।
ततः केवली केवलिसंसदि गतः । सोमचन्द्रर्षिः परमेश्वरेण स्थविरपार्श्वे क्रियां शिक्षितुं मुक्तः । तदा जिनेन धर्मदेशने-
ति कृता । आयुर्वायुचलं सुरेश्वरधनुर्लोलं बलं यौवनं, विद्युद्दण्डतुलं धनं गिरिनदीकल्लोलवच्चञ्चलम् । स्नेहं कुञ्जर-

लचपलं देहं च रोगाकुलं, ज्ञात्वा भव्यजनाः सदा कुरुत भो धर्मं महानिश्चलम् ॥१॥ इत्याकर्ण्य धर्मदेशनां
प्रबुद्धः प्रसन्नचन्द्रभूपोऽसारसंसारतां विभावयन् गृहेऽभ्येत्य बालमप्यङ्गजं राज्ये निवेश्य प्रभुपार्श्वे चारित्रं पोतनाधिपो
ललौ। विश्वाम्भोजाम्भोजिनीपतिना श्रीजिनेन सह पर्यटन् क्रमाद्दशपूर्वधारी जज्ञे। जिनमापृच्छ्यैकाकी पर्वतशृङ्गगुहादि-
विषमस्थानेषु कायोत्सर्गं कर्मक्षयनिमित्तं करोतिस्म । अन्यदा राजगृहासन्नवनमार्गे कायोत्सर्गे प्रसन्नचन्द्रर्षिः पर-
मात्मध्यानपरः एकाग्रचित्तस्तस्थौ । तदा श्रीवीरो वैभारगिरिपार्श्वे समवासार्षीत् । श्रेणिकराजा जिनं नन्तुं चचाल ।
तं तादृशं यतिं ध्यानलीनचित्तं वीक्ष्य श्रेणिकभूपो नत्वा तस्य प्रशंसां कुर्वन्नग्रतोऽचालीत् । समवसरणे गत्वा
जिनं त्रिःप्रदक्षिणीकृत्य यथास्थानमुपविष्टः । कृताञ्जलिः श्रेणिकः पप्रच्छ—मया मार्गे आगच्छता प्रसन्नच-
न्द्रराजर्षिर्ध्यानैकाग्रचित्तो वन्दितः । स यद्यधुना कालं करोति तदा क्व गच्छति ? । स्वामी प्राह—सप्तमीं नरकभुवं
याति राजा दध्यौ—एवंविधस्य साधोरीदृशी गतिः कथमादिष्टा परमेश्वरेण । मया स्वामिप्रोक्तं सम्यङ् नावगतं पुनः
पृच्छामीति ध्यात्वा पुनराचष्ट राजा—भगवन्नधुना म्रियते तदा स साधुः कां क्षितिं याति ? प्रभुः प्राह—[ षष्ठीं भुवमि-
त्यादि ] सर्वार्थसिद्धिविमानं यावत् पृष्टोत्तरदाने प्रभुभूपयोर्जायमाने तं भावमबुद्ध्वा श्रेणिको जगौ—भगवंस्त्वयैवं

सन्दिग्धं कथं जल्पितं ? यावत् प्रभुरुत्तरं ददाति तावत् तस्मिन् दिग्देशे दुन्दुभिः श्रुतो भूपेन । पुनः पृष्टं भगवन्नयं देवदुन्दुभिः कुत्र वाद्यमानोऽस्ति । प्रभुणोक्तं—प्रसन्नचन्द्रर्षेः केवलज्ञानमुत्पन्नं तेन तत्र देवैः केवलिमहोत्सवः क्रियमाणोऽस्ति । श्रेणिको जगौ—भगवन् ! भवता सन्दिग्धं कथं प्रोक्तम् ? प्रभुणोक्तं यदुक्तं मया तत्सत्यमेव । मनःपरिणामो विषमो विद्यते जीवानाम् । यदा त्वया स ऋषिर्नतस्तस्य शुभपरिणामोऽभूत्तदा । त्वदग्रतश्चलन्नादौ सुमुखेन त्वत्सेवकेन स ऋषिर्नतः प्रोक्तं च धन्योऽसौ, इद्दग्राज्यं मुक्त्वा व्रतं ललौ । एतच्छ्रुत्वा तस्य ऋषेस्तदा शुभपरिणामोऽभूत् । ततः पृष्टे त्वत्सेवको दुर्मुख आगच्छन् ऋषिं वीक्ष्य जगौ । अहोऽयं पाखण्डी व्रतं लात्वा स्थितोऽस्ति । अस्य महत्पातकं लगति । यतोऽनेन बालपुत्रं राज्ये निवेश्य व्रतं गृहीतमस्य किं पुण्यं भविष्यति । अधुना चम्पेशदधिवाहनादिभूपैः शत्रुभिरस्य पुरी वेष्टिताऽस्ति । क्षणमात्रेणास्य पुत्रं हत्वा राज्यं गृहीष्यते तैः । इत्थं दुर्मुखोक्तिभिर्ध्यानाच्चलितः । तैः सह मनसा युद्धं चकार । यदा त्वया तस्य गतिः पृष्टा तदोक्तं मया सप्तमनरकगतिस्तस्य । यदा द्वितीयवारं पृच्छा कृता त्वया तस्य युद्धं कुर्वतः सर्वायुधानां समाप्तिरभूत् । सर्वे वैरिणो हताः पुनरेकस्तिष्ठति । ततस्तं रिपुं हन्तुं शिरस्केनेच्छन् प्रसन्नच-

न्द्रर्षिः क्रोधव्याप्तः शीर्षे हस्तं चिक्षेप, ततो मस्तकं मुण्डितं ज्ञात्वा दध्यौ—मया किं युद्धं कृतं मुधा, अहं तु यतिः सर्वसङ्गत्याग्यस्मि । यतो यतीनां सर्वत्र पुत्रमित्रवैरिषु सममेव चित्तं विलोक्यते । यतः "शत्रौ मित्रे तृणे स्त्रैणे, स्वर्णेऽश्मनि मणौ मृदि। भवे मोक्षे भविष्यन्ति, साधवः समचेतसः ॥ १ ॥" एवं ध्यायन् सप्तम्यादिगतिं क्षिपन् सौधर्मादिस्वर्गगतिमर्जयन् सर्वार्थसिद्धिगतिं यावदागतस्तावत् द्वितीयवारं पृच्छा कृता । अधुना केवलज्ञानमपि जातं तस्यर्षेः । ततः प्रभुं प्रणम्य तत्र प्रसन्नचन्द्रकेवलिनं नत्वा गतो गृहे श्रेणिकः । ततश्चिरकालं भव्यजीवान् प्रबोध्यायुषः क्षये प्रसन्नचन्द्रराजर्षिर्मुक्तिं ययौ । इति प्रसन्नचन्द्रराजर्षिकथासमाप्ता ॥ २७ ॥

**भव्यजीवाँलसद्वाण्या, बोधयन् भविकोऽङ्गवान् । लभते स्वर्गसौख्यादि, श्रीयशोभद्रसूरिवत् ॥ १ ॥**

तथाहि—श्रीशय्यंभवसूरयश्चतुर्दशपूर्वधारिणो भव्यजीवान् प्रबोधयन्तो महीपीठे ग्रामे पुरे पुरे विहारं चक्रुः । पाटलीपुरपत्तने ययुः श्रीगुरवः तदा तत्र विप्रो यशोभद्रनामा श्रीगुरुपार्श्वे समागात् । तत्रेति धर्मं शुश्राव—भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भवः, तत्त्वस्येह कृते परिभ्रमत रे लोकाः श्रुतचेष्टितैः । आशापाशशतोपशान्ति-विशदं चेतः समाधीयतां, काप्यात्यान्तिकसौख्यधाम नियतं श्रद्धेयमस्मद्वचः ॥ १ ॥ संसारंमि असारे, नत्थि सुहं

॥ २ ॥ अथिरं जीयं रिद्धी, चंचला जुवणं च
वाहिवेयणापउरे । जाणंतो इह जीवो, न कुणइ जिणदेसियं धम्मं ॥ २ ॥ इत्यादि धर्मोपदेशं श्रुत्वा यशोभद्रो द्विजः
क्खणसरिसं, । पच्चक्खं पिक्खंतो, तहविह वंचिज्जए जीवो ॥ ३ ॥ क्रमाद्विद्याग्रहणं कुर्वाण-
श्रीशय्यंभवसूरिपार्श्वे संयमं जग्राह । श्रीगुरुपार्श्वे विनयं विशुद्धं कुर्वाणो विद्याग्रहणं करोति । वर्यविधिनाऽऽराधनां कृत्वा स्वर्गे
श्चतुर्दशपूर्वी पपाठ सूत्रार्थतः । क्रमात् श्रीशय्यंभवसूरयो यशोभद्रं सूरिपदे स्थापयित्वा महर्द्धिकौ द्विजौ वसतः । अनेके जना
जग्मुः । एकदा श्रीयशोभद्रसूरयो दक्षिणापथे प्रतिष्ठानपुरे ययुः । (तत्र)भद्रबाहुवराहौ चइउं दासत्तणं अभिलसइ को ।
धर्मं श्रोतुं गुरुपार्श्वे गच्छन्ति । गुरुभिरिति धर्मोपदेशो दत्तः—को चक्कवट्टिरिद्धिं, ता न चिरं तुह
वररयणाइं मुत्तुं, परिगिन्हइ उवलखंडाइं ॥१॥ नेरइयाणवि दुक्खं, झिज्झइ कालेण किं पुण नराणं । सुविणयसम्मं पिम्मं, जं
होही, दुक्खमिणं मा समुव्विय्सु ॥ २ ॥ जीअं जलबिन्दुसमं, संपत्तीओ तरंगलोलाओ । गब्भे अट्ठगुणं
जाणिसि तं करिज्जासु ॥३॥ सूईहि अग्गिवन्नाहि, भिज्जमाणस्स जंतुणो । जारिसयं जाण दुक्खं, जन्म कथं वृथा नीयते,
तओ ॥ ४ ॥ इत्यादि धर्मं श्रुत्वा भद्रबाहुवराहौ प्राप्तवैराग्यौ गृहे गत्वा मन्त्रयेतेस्म— यतः—“ सम्पदो
भोगसुखं सर्वमनित्यं विद्यते इदं शरीरं कर्पूरकस्तूरीप्रभृतीन्यपि दूषयत्येव पाथोदपयांस्यूषरभूरिव

जलतरङ्गविलोला, यौवनं त्रिचतुराणि दिनानि । शारदाभ्रमिव चञ्चलमायुः, किं धनैः कुरुत धर्मसनिन्द्यम् ॥ १ ॥ घनापायः कायः प्रकृत्तिचपला श्रीरपि चला, महारोगा भोगाः कुवलयदृशः सर्प्पसदृशः । गृहावासः पाशः प्रणयिषु सुखं स्थैर्यविमुखं, असारः संसारस्तदिह निपुणा जागृत जनाः ॥ २ ॥ " एवं विमृश्य द्वौ भ्रातरौ मातरमापृच्छ्य श्रीयशोभद्रपार्श्वे दीक्षां जगृहतुः । श्रीयशोभद्रसूरिभिस्तथा भाणितौ तौ यथा द्वादशाङ्गीं ज्ञातवंतावभूताम् । क्रमात् श्रीयशोभद्रसूरिभिर्भद्रबाहोः सूरिपदं विश्राणितम् । श्रीयशोभद्रसूरयः श्रीशत्रुञ्जयादिषु यात्रां चक्रुः । श्रीयशोभद्रसूरयः शुद्धं चारित्रमाराधयामासुः । आयुःक्षयावसरे सम्यग् [ गुरुपार्श्वे ] आराधनां चक्रुः । ततः क्रमादायुषः क्षये यशोभद्रसूरिपादाः गच्छभारं श्रीभद्रबाहौ मुक्त्वा स्वर्गं जग्मुः ॥ इति यशोभद्रकथा समाप्ता ॥ २८॥

**बाल्येऽपि केऽपि वैराग्याद् गृहीत्वा धर्ममादरात् । जम्बूकुमारवन्मुक्तिसातभाजो भवन्ति हि ॥ १ ॥**

तथाहि—मगधदेशे भूमिविभूषणे सुग्राम इति विश्रुतो भासतेतराम् । तत्र राष्ट्रकूटाभिधस्य कौटुम्बिकस्य रेवतीनाम्ना पत्न्यभूत् । एतयोः क्रमाद्भवदत्तभवदेवाह्वौ सुतावभूताम् । क्रमाद्वर्धमानौ धर्म्मकर्म्मपरौ जातौ च तौ । अन्यदा सुस्थितसूरिपार्श्वे वैराग्यवासितो भवदत्तो जगृहे व्रतम् । अनुसूरिपदद्वन्द्वं शास्त्राणि पठन् गीतार्थीभूयान्यदा

गुरोरादेशं प्राप्य सुग्रामग्रामे
भवदत्तयतिः कृताञ्जलिर्जगौ । सांसारिकवन्दापनेच्छाऽस्ति । प्रभो ! आदेशं देहि । ततो गुरुपार्श्वे गतो हसितो
गतो भवदत्तः । इतो नागिलायाः पाणिग्रहणं कुर्वाणेन भवदेवेन भवदत्तो नोपलक्षितः । मयाऽसौ दीक्षां ग्राहयि-
भवदत्तः साधुभिः—स्वां स्फूर्तिं स्फोरयित्वा भ्रातृप्रबोधार्थं गतः, तत्र त्वं चोपलक्षितोऽपि न । यावत्तावन्नागिलाया मण्डन-
तव्यो भ्रातेति प्रतिज्ञां कृत्वा पुनर्भवदत्तो भवदेवं वन्दापयितुं चलितो गतस्तत्र प्रेक्ष्योत्थाय भवदेवो ननाम
महोत्सवे जायमानेऽर्द्धमण्डिता नागिलाऽभूत् । तावत्तत्रागतो भवदत्तः । भ्रातरमागतं सार्द्धमाकार्य
भक्त्या । शुद्धान्नपानेन भ्रात्रा भवदत्तः प्रतिलाभितः । ततो भवदत्तो व्रजन् भवदेवं कियन्तीं भूमिं दत्तौ । अपर-
पथि प्राह—धन्योऽसि त्वं यस्य साधावीदृशी भक्तिरित्यादिवाग्भिस्तं प्रीणयित्वा तस्य हस्ते घृतभृतं पात्रं
सज्जनं सर्वं विसृज्य भवदत्तो भवदेवेन समं बाल्यक्रीडादिवार्तां कुर्वाणो गुरुपार्श्वे जगाम । गुरुं नत्वा भवदत्तः
प्राह—भगवन्नयं भ्राता मया भवत्पार्श्वमानीतोऽस्ति । दीक्षां जिघृक्षुरस्ति । तेन दीक्षां भवदेवं ग्राहय । ततो दाक्षिण्येन
भवदेवेन भ्रातुरुपरोधतो दीक्षा गृहीता । एकेन मुनिना भ्रात्रा च समं गुरुं नत्वाऽन्यत्र भवदत्तो गतः । भ्रातृवचसा
संयमं पालयन् नागिलां करिणीमिव हस्ती भवदेवः सस्मार । कालेन भवदत्तस्तपस्तीव्रं तप्त्वा स्वर्गं ययौ । भ्रातरि स्वर्गं

गतेऽन्येद्युः साधुश्रेणीं सुप्तां मुक्त्वा नागिलां स्मरन् निशि निरससार भवदेवः। यतः—"रागी बध्नाति कर्माणि, नारी-लक्ष्मीविमोहितः। नीरागो लभते सौख्यं, मानवोऽमलमानसः ॥ १ ॥ उल्लो सुक्को य दो छूढा, गोलया मट्टिया मया। दोवि आवडीआ कुट्टे, जो अल्लो सोवि लग्गइ ॥२॥" अथ चलन् भवदेवः सुग्रामसिमनि क्वचित् प्रासादे गत्वा स्थित.। तदा तत्रैकया वृद्धया सुश्राविकया साकमेका स्त्री समायाता। सैव नागिला नाम्नी। तत्रापृच्छत् भवदेवस्तस्याः पार्श्वे नागिला कथं तिष्ठतीति? प्रतितो नागिलया भवदेवं मत्वा प्रोक्तं—त्वं नागिलापतिरसि किं? भवदेवोऽवग्—अहं तस्याः पतिरस्मि, परं भ्रात्रा स्वसद्मतः छद्मना गुरुपार्श्वे दीक्षितोऽहं मनो विना। मया नागिलास्मरणेनैवं व्रतं पालितं द्वादशवर्षाणि। अथ सा विद्यते न वा। एवं भवदेवे जल्पत्यकस्माद्दैवयोगान्नागिलासख्याः पुत्रस्तत्रागतोऽभूत्। स प्राग् शिक्षितः साधौ शृण्वति प्रकटमेव मातुरग्रे प्राहेति। मातरहमासन्नग्रामे भोजनार्थं निमन्त्रितोऽस्मि, दक्षिणार्थं च गमिष्यामि, वेला तु न क्षमते, गेहमेहि त्वं, अहंपूर्वभुक्तं दुग्धमुच्छालयित्वा भाजने क्षिप्त्वा तत्र गत्वा भुंक्त्वा च दक्षिणां गृहीत्वा पश्चादागत्य पुनस्तद्दुग्धं पास्यामि। एतच्छ्रुत्वा भवदेवो हसन्नवादीत्—एवं कथं वमितमन्नं जुगुप्सितं बालकोऽयं भक्षयिष्यति?। ततोऽवग् नागिला—अहमेव तव प्रियाऽस्मि, त्वया पूर्वं वान्ताऽ-

धुना कथं भोक्तुं यतसे । कोऽज्ञो मृगेक्षणां त्यक्तां, वमिताशनसोदराम् । अङ्गीकुरुतेऽनन्तदुःखदुष्टादिहेतवे ॥ १ ॥
मूढाशय ! नवामूढामिवमामागतः स्मरन् । जराजर्जरितां पश्य, संसारस्य क सारता ॥२॥ यतः—"अतीवाशुद्धे वस्तूनां,
मलिनीकरणक्षमे । देहे जरापराधीने, मुधा मुह्यन्ति जन्तवः ॥ १ ॥ यकृच्छकृन्मलश्लेष्ममद्यास्थिपरिपूरिताम् । स्नायु-
स्यूतां बहीरम्यां, स्त्रियं चर्म्मप्रसेविकाम् ॥२॥" अत्राशुचिभावना । एवंविधां दीक्षां संसारार्णवपतज्जन्तूद्धरणयानपात्रसमां
मुक्त्वा कथं दुर्गतिदीपिकां नारीमङ्गीकरिष्यसि । मया तु यावज्जीवं शीलव्रतं गुरुपार्श्वे गृहीतमस्ति । यतः—"स्त्रीणां
शीलमेवाभरणम् ।" यतः—"शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं, शीलं ह्यप्रतिपाति चित्तदमनं शीलं सुग-
त्यावहम् । शीलं दुर्गतिनाशनं सुविपुलं शीलं यशः पावनं, शीलं निर्वृत्तिहेतुरेव परमं शीलं तु कल्पद्रुमः ॥ १ ॥"
ततो व्याघुट्याऽधुनैव गुरुपार्श्वे गत्वा शुद्धं चारित्रं मनसा पालय । इति प्रबोधितः प्रीतो, नागिलागेहिनीगिरा
साधुः साध्विति चारित्रं भवदेवः स्तुवन्नभूत् ॥ १ ॥ क्षमयित्वा स्वमपराधं भवदेवः सूरिपार्श्वे गत्वा स्वं दुश्चि-
न्तितं सम्यगालोच्य पुनश्चारित्रं प्रतिपाल्य चिरं सौधर्मे स्वर्गे सुरोऽभूत । महाविदेहक्षेत्रे पुष्कलावती विजये पुंडरी-
किण्यां पुरि वज्रदत्तस्य चक्रिणो यशोधरायाः पत्न्या उदरे भवदत्तजीवः स्वर्गच्युतोऽवततार । पुत्रो जातः सागर-

दत्तेति नामाऽजनि तस्य । क्रमाद्वर्धमानः पित्रा सहस्रशः कन्याः परिणायितः । ताभिः कन्याभिः समं भोगान् भुञ्जन् सागरदत्तो गतमपि कालं न जानाति । एकदा सागरदत्तः सप्तभूमिधवलगृहोपरिस्थो जलदं सर्वदिग्व्यापिनं गर्जितविद्युत्शालिनं दृष्ट्वा क्षणादुद्धतेन वातेनापसारितं प्रेक्ष्य समस्तभावेषु भङ्गुरीभावं व्यचारयत् । वज्रकायशरीराणामर्हतां यद्यनित्यता । कदलीसारतुल्येषु, का कथा शेषजन्तुषु ॥ १ ॥ इत्यादि । अहो अनित्यमिदं जगदिति चिन्तयन् प्रतिबुद्धः सागरदत्तः संयमं गुरुपार्श्वे जग्राह भावतः । इतः तत्रैव विजये वीतशोकायां पुर्यां पद्मरथभूपतेः वनमालायाः पत्न्या उदरे भवदेवजीवो दिवश्च्युत्वा शिवकुमारनामा पुत्रोऽभूत् । क्रमाद्वर्धमानः पित्रा कुमारीः सुकुमाराङ्गीः परिणायितः शिवकुमारः । अन्येद्युस्ताभिर्महेलाभिः सह सदनस्योपरि स्थितः शिवः कामसमृद्धस्य सार्थवाहस्य सद्मनि मुनिसागरदत्तमात्तभिक्षं व्यलोकयत् यदा तदाऽकस्मात् सुरैः कृतां पुष्पवृष्टिं तत्र मुनेरुपरि वीक्ष्य शिवकुमारो हृष्टोऽभवत् । अथ तस्य स्वस्थानगतस्य कृतपारणस्य मुनेः पार्श्वे धर्मं श्रोतुं शिवकुमारोऽगात् । तदा कथामध्ये शिवकुमारपूर्वभवकथां न्यवेदयन्मुनिः । ततः शिवकुमारो वैराग्यरङ्गपूर्णमना यतिं नत्वा गृहेऽभ्येत्य पितरौ व्रतं याचते स्म । पितृभ्यामुक्तं यदि त्वं दीक्षां गृहीष्यसि, तदाऽऽवयोर्मृतिरवश्यं भवि-

पिता माताषितृहत्यां कोऽपि न लाति । पुत्रः प्राह—यज्ञवद्भिरुक्तं तत्सत्यं परमनन्तेषु
पश्यत्येव । त्वं तु करुणापरोऽसि । मातापितृहत्यां कोऽपि न लाति । तेन मया त्वं सहस्रशो जनितोऽसि, त्वया त्वहं सहस्रशः ।
भवेषु मिथो जीवानामनन्ताः सम्बन्धा जाताः सन्ति । तेन मया त्वं सहस्रशो जनितोऽसि, त्वया त्वहं सहस्रशः । पिता वा तनयो भवेत् ॥ १ ॥ ", पिता
यतः—" मातापितृसहस्राणि, पुत्रदारशतानि च । मिथो जातानि च केषां, पिता वा तनयो भवेत् ॥ १ ॥ ", पिता
प्राह—तवैवं वक्तुं न युज्यते । त्वमेवाधारोऽसि आवयोः इत्यादिना पर्यवसायितः शिवकुमारः स्वीकृतभोजनग्रहपरं
षष्ठतपपररतस्थौ । गृहे दृढधर्मेण श्राद्धेन समं धर्मकर्मकुर्वन् द्वादशवर्षपर्यन्ते कृतानशनः स्वायुषः क्षये निर्व्यूढभाव-
चारित्रः शिवकुमारो ब्रह्मलोके विद्युन्माली देवोऽभूत् । इतः श्रीवीरे जिनेन्द्रे राजगृहे समवसृते वन्दितुं विद्युन्माली
सुरः समागात् । सर्वेषु देवेषु अतीवभासुरकान्तिं देवं विद्युन्मालिनमालोक्य विस्मितः श्रेणिकभूपः प्रभुं प्रणम्य
पप्रच्छ—अनेन देवेन किं तपः पूर्वभवे कृतं येनेदृग् रूपवानभूत् ? प्रभुणा पूर्वभवसम्बन्धिस्वरूपं प्रोक्तं, पुनः पृष्टं
श्रेणिकेन । दिवश्च्युतस्यास्य कागतिर्भविष्यति । प्रभुः प्राह—अतः सप्तमे दिनेऽत्रैव पुरे ऋषभदत्तपुत्रो जम्बूनामा
कुमारो भविष्यति, केवलज्ञानी भूत्वा मुक्तिं गमिष्यति । ततः परं कोऽपि केवली न भविष्यति । ततो विद्युन्मालिनः
सुरस्य चतस्रः कान्ताः प्रभुं प्रणम्य पप्रच्छुः—अस्माकं का गतिर्भविष्यति ? । प्रभुः प्राह—यूयमपि श्रेष्ठिनां पुत्र्यो

भूत्वाऽस्य च योषितो भविष्यथ। एतत् श्रीवीरजिनोक्तं श्रुत्वा तदा स देवो विद्युन्माली तत्प्रियाश्च प्रभोः पुरो नृत्यं व्यधुः। ततो विद्युन्माली सप्रियो हृष्टः प्रभुं नत्वा स्वर्गमगात्। इतोऽन्येद्युर्वैभारगिरौ समायातं सुधर्म्मस्वामिनं नन्तुं गताऽभूदृषभप्रिया। व्याख्यानान्ते जम्बूवृक्षविचारं कथ्यमानं गणभृता श्रुत्वा धारिणी पप्रच्छ—भगवन्! मम पुत्रो भविष्यति न वा? सुधर्मा जगौ—महासति साधूनां सावद्यमुपदेशं वक्तुं न युज्यते। तथापि महापुण्यलाभं वीक्ष्य निरवद्यं प्रोच्यते साधुभिः। तेनाष्टोत्तरशतमाचाम्लानि कुरु तेन ते जम्बूस्वप्नसूचितः पुत्रो भविष्यति इत्युक्तं श्रुत्वा धारिणी स्वगृहमागत्याचाम्लतपो गुरुप्रोक्तमकरोत्। ततो विद्युन्माली सुरः स्वर्गाच्च्युतो जम्बूस्वप्नसूचितो धारिणीकुक्षाववतीर्णः। क्रमाद्धारिणी पुत्रं प्रासूत। जम्बूस्वप्नावलोकनान्मातापितृभ्यां जम्बूकुमार इति नाम दत्तम्। इतः समुद्रस्य श्रेष्ठिनः पद्मावती पत्नी समुद्रश्रियं सुतामसूत १, समुद्रदत्तस्य श्रेष्ठिनः कमलमाला पत्नी पद्मश्रियं पुत्रीमसूत २, सागरदत्तश्रेष्ठिनः पत्नी विजयश्रीः पद्मसेनाह्वां सुतामसूत ३, कुबेरदत्तस्य जयश्रीः प्रिया कनकसेनाह्वां सुतामसूत ४, एताश्चतस्रोऽपि दिवश्च्युता विद्युन्मालिसुरवल्लभा अवतीर्णाः। कुबेरसेनस्य कमलावती नभसेनाह्वां पुत्रीं प्रासूत ५, श्रमणदत्तश्रेष्ठिपत्नी सुषेणा कनकश्रियं पुत्रीं प्रासूत ६, वसुषेणप्रिया वीरमती

कमलवती सुतां सुषुवे ७, वसुपालितगेहिनी जयसेना जयश्रियमसूत ८, अष्टावपि अमूः कन्याः जम्बूकुमारं परिणेतुमिच्छन्त्यस्तस्थुः, जम्बूकुमारस्य पिता ताः कन्याः पितृभिर्दीयमाना मेने । तदानीं श्रीसुधर्मस्वामी तत्र बहिरुद्याने समागात् । धर्मं श्रोतुं जम्बूकुमारोऽपि ययौ । सुधर्म्मस्वामी गणधर एवं धर्मोपदेशं ददौ । "भवेद्भवार्णवः पुंसां, सुतरः सुतरामसौ । न्यञ्चनोदञ्चनोग्राश्चे–न्न स्युः श्रीचयवीचयः ॥ १ ॥ मेघानामिव लोकाना–मायुर्गलति नीरवत् । चपलेव चला लक्ष्मीः, पाण्डुतैवेति विश्वसाम् ॥२॥ तत्रायुषा च लक्ष्म्या च, वपुषा चास्थिरात्मना । चिरं स्थिरतरं रत्न–त्रयं ग्राह्यं विवेकिना ॥ ३ ॥ तत्रोपाश्रयभैषज्य–पुस्तकान्नांशुकादिभिः । साहाय्यं ज्ञानिनां तन्वन्, ज्ञानमाराधयेद्गृही ॥४॥ संघवात्सल्यजैनेश–वेश्मयात्रार्चनादिभिः । प्रभोः प्रभावयंस्तीर्थं, सम्यग् सम्यक्त्वमर्जयेत् ॥५॥ भक्त्या चारित्रपात्रेषु, तथाऽऽवश्यककर्म्मभिः । तपोभिरपि चारित्रं, गृहमेधी समेधयेत् ॥ ६ ॥ काले पाठादिभिर्ज्ञान–मशङ्काद्यैश्च दर्शनम् । मूलोत्तरगुणैः शुद्धै–श्चारित्रं भजते यतिः ॥ ७ ॥ इति रत्नत्रयाल्लेभे, हतमोहतमो नरैः । चिराद्गृहस्थैः सद्योऽपि,
१० यतिभिः शाश्वतं पदम् ॥ ८ ॥ ये तु मोहग्रहग्रस्ताः, प्रमादस्य वशं गताः । अशरण्यैर्भवारण्ये, भ्रमितव्यं सदाऽपि तैः ॥ ९ ॥" इत्यादि धर्मोपदेशमाकर्ण्य जम्बूकुमारः संयमं जिघृक्षुरभूत् । ततो गुरुभिर्मातापित्रोरनुज्ञां विना

अदीयमाने संयमे स्वयं शीलव्रतं जिघृक्षुर्जम्बूः स्वगृहे आगच्छन् मार्गे वैरिभी राजगृहे वेष्टिते सति पुरप्रस्थै राजपुरुषैर्ढुकनिकायन्त्रैः प्रस्तरान् मोच्यमानान् वीक्ष्य स्वास्मिन् विघ्नमवगत्य पश्चाद्गुरुपार्श्वे गत्वा शीलव्रतं लात्वा स्वगृहे समागात्। ततो मातापितरौ प्रति प्राह भो मातापितरौ ! अनुज्ञां मह्यं ददतं, अहं दीक्षां गृहीष्यामि। मातापितरावूचतुः--एकस्त्वमेवावयोः पुत्रोऽसि। त्वां विनाऽऽवां निराधारौ कथं भविष्यावः। एकशो मनोरथोऽष्टवधूपरिणयनोत्सवेन पूरणीयस्त्वया। ततः पितृवचोऽनुरोधतोऽवग् जम्बूः। अहं पूज्ययोर्वचनानुरोधात् कन्या विवाहेनाङ्गीकारिष्यामि। यदि ताः प्रतिबोधयिष्येऽहं, तदा दीक्षा गृहीतव्या, नो चेद्गृहवासो भवतु मम। ततो ज्ञापितं जम्बूस्वामिनेदं कन्यापित्रादिपार्श्वे। अहं दीक्षां गृहीष्यामि। ततस्तैः श्रेष्ठिभिः स्वस्वपुत्रीणामग्रतः प्रोक्तं जम्बूकुमारो विवाहानन्तरं भवतीः प्रतिबोध्य दीक्षां गृहीष्यति। ततः कन्यास्ता जम्बूपार्श्वेऽभ्येत्य जगुः--अस्माभिस्त्वमेव वरितोऽसि। यदि अस्मिन् भवे त्वमस्माकं पतिर्भविष्यासि तदा भव्यं नो चेत् संयमो भवतु। यदि वयं त्वां कथाभिः संसारासक्तं कारिष्यामः तदा त्वमेवपतिरस्माकं नो चेत् त्वया सह संयमो गृहीतव्य एव। ततः स जम्बूर्लग्नदिने गजाधिरूढः शिरसि घृतातपवारणः प्रकीर्णप्रकरवीज्यमानोभयपार्श्वः ता अष्टावपि श्वसुरगृहेषु

परिणीय महोत्सवेन श्वसुरदत्तनवनवतिस्वर्णकोटियुतः स्वमन्दिरमाजगाम । ततो द्वितीयेऽहनि अष्टभिः प्रियाभिः सह जम्बूकुमाररताः प्रतिबोधयितुं सन्ध्यायां सप्तमभूमौ स्थितः इतश्च विन्ध्यगिरौ जयपूरे विन्ध्यभूपस्य ज्यायान् प्रभवः पुत्रोऽभूत् । लघिष्ठः सप्रभवः अन्येद्युः पित्रा लघवे पुत्राय राज्यं दत्तम् । ततः प्रभवो रुष्टः पल्यां गत्वा पञ्चशती-चौरस्वामीजातस्ततः पञ्चशतीचौरयुतश्चौरिकां करोतिस्म । अवस्वापिनीतालोद्घाटिन्यौ द्वे विद्ये प्रभवस्याभूताम् । जम्बूकुमारपरिणयनादिसम्बन्धमाकर्ण्य तत्समृद्धिलुण्टनाय निशि प्रभवो राजगृहपुरे ऋषभदत्तगृहं प्रविवेश । तालोद्घाटिन्या विद्यया तालकान्युद्घाटयन् स अवस्वापिन्या विद्यया जनानां निद्रां ददानः क्रमात् प्रभवः पञ्च-शतीचौरयुतः तद्गृहलुण्टनाय जम्बूकुमारपार्श्वे गतः । तदा जम्बूं कथाभिस्ताः कन्याः सदाभरणभारिणीः प्रबोधयन्तं प्रभवो वीक्ष्य अवस्वापिनीं निद्रां मुमोच । जम्बूकुमारं विना सर्वासां वधूनां निद्रा समायाता । ततः सर्वचौरयुतः आभरणानि गृह्णानश्चित्रलिखित इव स्तम्भितोऽभूत् प्रभवः । ततः खिन्नप्रभवोऽवग्—भो जम्बूकुमार ! त्वमात्मीयां स्तम्भिनीं विद्यां मह्यं देहि । मदीये तालोद्घाटिन्यवस्वापिन्यौ द्वे विद्ये गृहाण । जम्बूः प्राह—अहं विद्याभ्यां किं करोमि । अमूरष्टावपि कन्याः प्रतिबोध्य एतावतीलक्ष्मीमुक्त्वाऽहं प्रातर्दीक्षां गृही-

ष्यामि । प्रभवः प्राह—किमेवंविधभोगान् प्रासान् त्यक्ष्यसि ? । जम्बूः प्राह—मधुबिन्दुरिव भोगसुखं नृणां विद्यते, प्रभवः प्राह—भो जम्बुकुमार ! को मधुबिन्दुरुच्यते ? जम्बूरुवाच—कश्चिद् दरिद्रो भीमाभिधसार्थेशेन समं लक्ष्म्यर्थं विदेशं प्रत्यचलत् । मार्गे चौरैः लुण्टिते सार्थे स दरिद्रो नष्टोऽग्रे गच्छन् गजमापतन्तमालोक्य भयभ्रान्त इव ततो नश्यतिस्म । गजं पृष्ठावागच्छन्तमालोक्य कूपे झम्पामदात् । कूपमध्ये पतन् दरिद्रः कूपकण्ठस्थवटशाखां कूपमध्यगतामवलम्ब्यान्तरे तस्थौ । कूपतले प्रसारितमुखमजगरं चतुर्षु कोणेषु सर्पचतुष्टयं वटपादपं च श्वेतकृष्णमूषकाभ्यामुत्कीर्यमाणं स्वदेहं मधुमक्षिकालक्षविलक्षीकृतं च सिन्धुरेण वटवृक्षं चाल्यमानं [ हस्ति १ मूषक २ सर्पा ३ जगर ४ ] वीक्षणात् दुःखं जानाति । तावन्मधुबिन्दुं मुखे पतितमास्वाद्य सुखं मन्यते । यतः—"विषयगणः कापुरुषं, करोति वशवर्तिनं न सत्पुरुषम् । बध्नाति मशकमेव हि, लूतातन्तुर्न मातङ्गम् ॥ १ ॥ ददति तावदिमे विषयाः सुखं, स्फुरति यावदियं हृदि मूढता । मनसि तत्त्वविदां तु विचारके, क विषयाः क सुखं क परिग्रहः ॥ २ ॥" इतः कोऽपि विद्याधरो व्योम्नि व्रजन् तं तथाविधे कष्टे पतितमालोक्य करुणयाऽवग्—भो महानुभाग ! अस्मिन् मत्करे विलग्य बहिरागच्छ । ततः स दुःस्थोऽवग्—क्षणमेकं तिष्ठ, अयं मधुबिन्दुरतीवमधुरः पतन्नस्ति मुखे मदीये ।

चिरं प्रोच्यमानोऽपि मधुबिन्दुलोभेन बहुदुःखं सुखमयं मन्यमानो न निस्ससार । ततो विद्याधरः स्वस्थानके
गतः । दरिद्रस्ततोऽतीवदुःख्यभूत । इत्याद्युक्त्वा जम्बूः प्रभवं प्रति प्राह—हे प्रभव ! एवमहमस्मिन्नसारे संसारे
सुखे निमग्नोऽस्मि । अस्याः कथाया उपनयः—यो दरिद्रः पुमान् स संसारी जीवः, अयं भवो विकटाटवीतुल्यः,
यो गजः स मृत्युः, यः कूपः स मर्त्यजन्म, योऽजगरः स नरकः, अहयो ये ते कषायाः, यो वटपादपः तदायुः
यौ मूषकौ तौ सितासितपक्षौ, या मक्षिकास्ता व्याधयः, यन्मधु तद्वैषयिकं सुखं, यो विद्याधरः स गुरुः, य एवं-
विधाद्सारसंसारान्निस्सरति स मुक्तिगामी भवति । अन्यो नरकादिदुःखभागी भवति दुःस्थपुरुषवत् । ततः प्रभवोऽ-
वग्—सस्नेहां जननीं पितरं पत्नीर्बन्धुजनानमून् त्यक्त्वा कथं व्रतं जम्बूकुमार ! अङ्गीकरिष्यसि ? जम्बूकुमारोऽ-
वग्—संसारासारतायामेकं कथानकं शृणु तथाहि—मथुरायां कुबेरसेना गणिका केनचित्—पुरुषेण भोगान् भुञ्जाना
पुत्रपुत्रीरूपं युगलमसूत । एकादशदिनान्ते कुट्टिन्योक्तं—आत्मीये गृहे अपत्यानि न पाल्यन्ते । तेनैतत् पुत्रपुत्रीरूपं
युग्मं त्यज त्वमेवं कुट्टिन्योक्ते कुबेरदत्तः कुबेरदत्ता इति नामाङ्कितमुद्राद्वयं परिधाप्य दुग्धं पाययित्वा तौ पुत्री-
पुत्रौ पेटायां न्यस्य यमुनाजले प्रवाहयामास । अथ सा पेटा गच्छन्ती सूर्यपुरवास्तव्येभ्याभ्यां गृहीता । तत एकेनेभ्येन

पुत्री गृहीता द्वितीयेभ्येन पुत्रो गृहीतः । अङ्गुलीयकनामतः कुबेरदत्तकुबेरदत्ता इति नाम जातं तयोः । अथ ताभ्यामिभ्याभ्यां विमृश्य मिथस्तावेवपरिणायितौ । ततः परिणयनादनन्तरं देवगृहे मिथो वरकन्ये रममाणे पणीकृतमुद्रादर्शनात् कुबेरदत्तया पत्या सह मिथो भ्रातृभावः प्रतर्कितः । तया कुबेरदत्तस्यापि ज्ञापितो भ्रातृभावः । ताभ्यां पृथग् पृष्टौ जनीजनकौ प्रोचतुः । यमुनायां पेटामध्यस्थौ युवां लब्धौ । ततः कुबेरदत्ता विरक्ता व्रतं जग्राह । कुबेरदत्तस्तु भूरिक्रयाणकयुतो मथुरायां व्यवसायार्थं ययौ । कुबेरसेनायां पत्नीकृतायां कुबेरदत्तः पुत्रमजनयत् । कुबेरदत्ताऽपि गोपितमुद्रिका क्रमादन्येद्युर्जातावधिज्ञाना गुरुणीमापृच्छ्य कुबेरसेनाप्रतिबोधाय कुबेरसेनागृहाऽऽसन्नोपाश्रये तस्थौ । तयोर्मातृसहोदरयोः प्रतिबोधाय पालनकस्थं बालमित्याललाप कुबेरदत्ता-भ्राताऽसि इत्यादि विरुद्धं यतिनीवचो निशम्य कुबेरदत्तोऽभ्येत्य पप्रच्छ किं त्वयेदं विरुद्धं वचः प्रोच्यते ? ततस्तया सनामाङ्कितं मुद्रारत्नं दर्शितं प्रोक्तं च—तवेयं वेश्या माता अहं च भगिनी तेन मयाऽष्टादशनात्रकसम्बन्धोऽस्य सनोः प्रोचे । ततः स्वमात्मानं निन्दन् लज्जितः स्वचरित्रेण कुबेरदत्तो वित्तं सप्तक्षेत्र्यामुप्त्वा गुरुपार्श्वे व्रतं जग्राह । ततस्तीव्रं तपस्तप्त्वा कुबेरदत्त आयुरन्ते त्रैदिवं धाम जगाम । कुबेरसेनाऽपि स्वं दुश्चेष्टितं चिन्तयन्ती भववासविरक्ता स्वकुलोचितं धर्मं त्यक्त्वा श्रावकधर्मं प्रतिपाल्य स्वर्गं गता । जम्बूस्वामिप्रोक्तामित्थं कथां श्रुत्वा

पुनः प्राह प्रभवः—कुतोऽपुत्रस्य ते शुभागतिर्भविष्यति । यतः—" अपुत्रस्य गतिर्नास्ति, स्वर्गो नैव च नैव च । तस्मात्पुत्रमुखं दृष्ट्वा, स्वर्गं गच्छन्ति मानवाः ॥ १ ॥ " जम्बूकुमारः प्राह—" अनेकानि सहस्राणि, कुमारब्रह्मचारिणाम् । स्वर्गं गतानि राजेन्द्र !, अकृत्वा कुलसन्ततिम् ॥ १ ॥ " पुत्रे सत्यपि केचिद् दुर्गतिं गच्छन्ति । तथाहि—तमालिनी नाम पुरी स्वर्गीयपुरीसोदराऽस्ति । तत्र महेश्वरदत्तेभ्योऽभूत् । स्नानहोमपितृतर्पणादि कुरुते । दुश्चारिणी नागिलेत्यभिधा पत्नी तस्याऽऽसीत् । अन्येद्युः स श्रेष्ठी महिषं हत्वा जनकश्राद्धपर्वणि सपुत्रो मांसं भोक्तुमुपविष्टः । इतस्तत्रागतः साधुः श्रेष्ठिनं मांसं भक्षयन्तं वीक्ष्य पश्चाद्वलन्निदं श्लोकं पठन्निरससार । पुष्णाति स्वपितुर्मांसैः, शत्रुमुत्सङ्गसङ्गिनम् । विधत्ते च पितुः श्राद्ध-महो मोहस्य विस्मितम् ॥ १ ॥ महेश्वरो विस्मितः, उत्थाय मुनिपार्श्वेऽभ्येत्य प्राह—भो साधो ! त्वया किमसमंजसमुक्तम् ? ततस्तेन श्रेष्ठिना स्वसम्बन्धं पृष्टो मुनिरुवाच—नागिलाया उपपतिः शत्रुत्वाद्यः पुरा त्वयाऽघाति । स एव मृत्वा नागिलाया उदरे उत्पन्नः तवाग्रसुतो जातः । यस्तव पिता समुद्रदत्तो मृतः, स एव महिषोऽजनि । त्वया तु तस्यैव पितुः श्राद्धे आनीय हतः । तस्य मांसं भक्ष्यते त्वया । या शुनी मांसं भक्षयन्ती लकुटेन हता रौति सा तव माता अम्बाह्वा, अतस्तद्बोधाय मया श्लोकः

पतितः । श्रेष्ठी प्राह—यत् त्वया प्रोक्तं तत्र कः प्रत्ययः ? ततः मुनिः प्राह—अन्तर्गृहं शुनी नीता, जातजातिस्मृतिः सती । रत्नजातं यदेषा तन्नि—खातं दर्शयिष्यति ॥ १ ॥ इत्युदित्वा मुनौ याते तथा कृते श्रेष्ठिना शुन्या निधानं दर्शितम् । ततो महेश्वरदत्तः पिण्डदानमनर्थकं मत्वा साधूक्तं जैनधर्मं प्रपेदे । श्रुत्वैतत् कथानकं प्रबुद्धः प्रभवः पञ्चशतचौरयुतो वैराग्यवासितचित्तोऽजनि । ततस्तदानीं समुद्रश्रीः जम्बूकुमारं प्रति प्राह—नाथ ! पते ! कान्त ! वल्लभ ! बककार्षुक इव त्वमेवं भोगान् प्राप्तांस्त्यजन् पश्चात्तापभाजनं माभूः । तथाहि—पुरा सुसीमाह्वे ग्रामे बकनामा कृषीवलोऽभूत् । वर्षाकालेऽन्यदा कङ्गुकोद्रवचीणकबरट्टिकाचपलमुद्गादीनि धान्यानि क्षेत्रे उप्त्वा कार्यवशात् मालवके पुत्रीगृहे गतः कृषीवलः । तदा पुत्र्या गुडमण्डकादीनि भोजितः पिताऽवग्—एते गुडादयः कथं निष्पद्यन्ते ? ततः पुत्र्यादिस्वजनैः कूपखननादिगोधूमेक्ष्वारोपणादिवृत्तान्तः कथितः ततो गोधूमबीजमादाय पश्चात् स्वगृहे त्वरितमागत्य प्रागुप्तानि सस्यान्युत्पाटयितुं लग्नः कृषीवलः स्वजनैरुक्तमेवं कथं निष्पन्नं सस्यमुत्पाटयसि ? बकोऽवग्—यूयं मौनं कुरुथ ॥ अत्र क्षेत्रे गोधूमादयो निष्पत्स्यन्ते । तेषां मधुराहाराणां भोजनं करिष्यते । चपलादि खादं खादमुदराणि कथितानि [ चपलादिभिः पूर्वम् ] । ततः स्वजनैरुक्तं एवं

सरयं नोत्पाद्यते इत्यादि वार्यमाणो बकः सर्वाणि प्रागुप्तानि चणकादिधान्यानि उत्पाट्य कूपं खनितुं प्रवृत्तः ।
कूपेऽतीवाधः खनितेऽपि जलं मनाग निस्ससार । आनीतं बीजमपि भुक्त्वा चपलादिभ्यो भ्रष्टो बकनामा
यथा दुःखभ्यभूत । तथा त्वमपि इहामुत्र सुखभ्रष्टो दुःखी भविष्यसि । तेनाम संप्राप्तः स्त्रीविलासादिभोगो न
मुच्यते जम्बूकुमार आचष्ट, तां मत्येवं स्फुटाक्षरम् । मांसादिलोलकाकोल—केलिं न कलयाम्यहम् ॥ १ ॥
तथाहि—विन्ध्याद्रौ कोऽपि मत्तः कुञ्जरेश्वरो ग्रीष्मकाले तृषाक्रान्तो रेवानद्याः पयः पातुं गतः । अकस्मात्तस्यारतटे
स्खलितांघ्रिरिभोऽद्रिशृङ्ग इवापतत् । तदायुष्कसमाप्तितो मृतः कुञ्जरः । शृगाला अभ्येत्य तस्य मांसं खादं खादं
यान्ति । तस्येभस्य गुदाद्वारे शृगालैर्द्वारं पातितम् । तस्मिन् द्वारे प्रविश्य काका मांसमास्वादयन्तः सुखिनोऽभवन् ।
एकः काकः कुञ्जराङ्गमध्ये प्रविष्टो मांसं भक्षयन् स्थितो यावत् तावदातपेन क्रमात् गजकरंकं शुष्कं काको मध्येऽ-
स्थात् गजकरंकं शुष्कं इत्यब्दे वृष्टे नदीप्रवाहेण कुञ्जरकलेवरं महासमुद्रे नीतम् । जले तद्विकसितं यदा तदा
काको निस्ससार । सर्वत्राम्बु वीक्ष्य ततो भ्रामं भ्रामं तस्योपरि उपरि उपविशति वार्द्धिपारं न प्राप्नोति काकः । ततस्त-
स्मिन् हस्तिकलेवरे जलभृतेऽधस्ताद्गते काकोऽपि वारिधिपारमलभमानो मग्नो मृतश्च । "काकवत्करिणः काये, नारीदेहे-

ऽनुरागवान् । कथं प्रिये ! न मज्जामि, सोऽहं मोहाम्बुधाविव ॥ १ ॥" इति द्वितीया कथा जम्बूस्वाम्युक्ता ॥ २ ॥ अथ पद्मश्रीरभाषिष्ट—वानर इवोभयतो भ्रश्यसि । तथाहि—हस्तिनागपुरस्वामी अरिकेसरी राजा अनेकभूपालैः सहितोऽटव्यां जगाम । वनाद्वनं भ्रमन् राजा वर्षत्सु जलदेषु कचिन्निकुञ्जे स्थित्वाऽचलत् । कस्मिंश्चिज्जलाशयोपान्तस्थवने काञ्चिन्नारीं देवकुमारीसन्निभामालोक्य हृष्टो ललौ । तां स्त्रियं विशिष्टवस्त्राभरणभूषितां कृत्वा राजा सुमहोत्सवपूर्वं पुरमध्ये समागात् । पट्टराज्ञीं तां कन्यां चकार । भूपस्तया कन्यया सह भोगान् भुञ्जानो वासव इवेन्द्राण्याऽन्येद्युर्यावत्स्वगृहमध्यस्थचित्रशालायामुपाविशत्, तावत् कश्चित् पुमान् ग्रामे ग्रामे पुरे पुरे लोकान् रञ्जयन् वानरनर्तनकारकस्तत्रागात् । वानरस्तदा नारीं नृपोत्सङ्गसाङ्गिनीमालोक्य नर्तितुं नोत्सहते । तदा तेन पुंसा बहुशस्ताडितो वानरो नृपप्रियामुखाम्भोजदत्तदृग् भृशं रोदिति स्म । विलक्षे भिक्षुके तं वानरमनृत्यन्तं रुदन्तं च वीक्ष्य नृपपत्न्यवग्—अये वानर ! मया निषिद्धस्त्वं तदा लोभेन नामंस्थाः इदानीं मा रुदिहि । यतः—"गते शोको न कर्तव्यो, भविष्यं न च चिन्तयेत् । वर्तमानेन कालेन, वर्तयन्ति विचक्षणाः ॥ १ ॥ खेदं मुक्त्वाऽधुना सद्य, स्त्वं नृत्यं कुरु वानर ! । यादृशं क्रियते कर्म, तादृगाप्नोति मानवः ॥ २ ॥" इत्यादिना बोधितो वानरो नर्तनेनाद्भुतेन निर्व्याजं राजानं रञ्जयायास ।

कृतार्थीकृत्य तं वानरस्वामिनं धनेन राजा पट्टराज्ञीं पप्रच्छ कोऽयं वानरः कथं रुरोदायं च। राज्ञी जगौ–देव ! नंदनवने पद्महृदे वानरवानरीयुग्मं प्रीतिमन्दिरं पुरासीत्। अन्यदा तद्वानरवानरीयुग्मं ग्रीष्मर्तौ तापाक्रान्तं वृक्षशाखायाः जले झम्पां ददौ। जले पतितं सन्नरनारीयुग्ममभूत्। ततो वानरोऽवग्–प्रिये! मानुषत्वे क्लेशेन निर्वाहो भवति कृष्यादिभिः। पशुत्वे शीतातपादिना कष्टं भवति। तेन देवत्वमाप्यते तदा वरं तत्र मनश्चिन्तितो भोगो भवति। तेनैकशः पुनर्झम्पा दीयते जलमध्ये देवत्वं जायते आवयोः। स्त्रिया प्रोक्तं–आत्मनोरधुना मनुष्यत्वेन शृतं, अधिको लोभो न क्रियते। यतः–" लोभमूलानि पापानि, रसमूलाश्च व्याधयः। स्नेहमूलानि दुःखानि, त्रीणि त्यक्त्वा सुखी भव ॥ १ ॥ " ततः स्त्रिया वार्यमाणोऽपि मनुजो झम्पां ददौ। पुनरपि वानरोऽभूत्। ततः पुनः झम्पापाते कृतेऽपि तस्य वानरत्वं न गतम्। सा वानरी स्त्रीभूता त्वया लब्धा वने सा ज्ञातव्या। असौ वानरोऽस्य हस्ते चटितोऽभूत्। मामधुना दृष्ट्वा स्वकर्म निन्दन् रुरोद वानरः। मयाऽपि स एव वानर उपलक्षितः। ततः सा स्त्री चिरं कालं धर्म्मं प्रपाल्य सुखभागिन्यभूत्। वानरश्चिरं दुःख्यभूत्। एवं स्वामिंस्त्वमपि ईदृशकन्यादिभोगसुखं प्राप्य पुनर्मुक्तिकन्यासुखाकांक्षी वानरवद्दुःखी भविष्यसि। तेनैताः स्त्रियस्त्वया देवकन्यातुल्या न त्यज्यन्ते। इति पद्मश्रीकथा ३।

अथ जम्बूः प्राह—बहून् भोगान् भुञ्जानस्तृप्तो न भवत्यङ्गारकारक इव । तथाहि—चंद्रपुरे चन्द्रनामाऽङ्गारकारको ग्रीष्मसमये वारि समादायाटव्यामङ्गारान् कर्तुं ययौ । अङ्गारान् कुर्वतस्तस्य रात्रौ जलं त्रुटितं तृषाऽत्यन्तं लग्ना तालुशोषः समजनि । रात्रौ सुप्तस्तृषया बाधितो वापीकूपतडागनदीह्रदादिजलाशयस्थं पानीयं सर्वं पीत्वा क्वापि मरुस्थलीकूपेऽङ्गारकारकः समागात् । ततस्तृषयाऽत्यन्तपीडितो वटोपान्तस्थो वरत्राबद्धपूलकेन बिन्दुमात्रं तज्जलमाकृष्य जिह्वाग्रे लिहानो न तृप्तोऽङ्गारकारकः । एवं जीवाः सर्वे स्तन्यपानस्त्रीभोगवर्यवस्त्राभरणपरिधानादिसुखमनुभवन्तो न तृप्ताः स्युः, तथा नाहमतृप्तोऽस्मि सांसारिकसुखेषु ४॥ अथ पद्मसेनोवाच—हे नाथ मुक्त्यर्थी त्वमैहिकां प्राप्तां श्रियं विसृजन् गोमायुरिवात्यन्तमुभयभ्रष्टतां मा भज । तथाहि कस्यांश्चिदटव्यां शृगाल एकः पिशितखंडं प्राप, तमादाय सरित्तीरे गतः । तं मांसं भोक्तुकामो नदीवीच्या बहिः क्षिप्तं मीनं दृष्ट्वा लौल्याज्जिघृक्षुरभूत् मांसखंडमधो मुक्त्वा शृगालो यावन्मीनं गृहीतुमधावत् तावन्मीनः पयोमध्ये प्रविष्टः । मांसखंडं शकुनिको गृहीत्वाऽऽकाशे गतः । ततः शृगाल उभय भ्रष्टो भूत्वा पश्चात्तापं दधौ चित्ते । एवं त्वमिमां श्रियमुज्झन् पारत्रिकीमीहमान उभयभ्रष्टो जम्बुक इव भविष्यसि ।

अथ पद्मसेनां प्रति जम्बूः प्राह — नाहं विद्युन्मालिविद्याभृदिव रागग्रहिलो भविष्यामि । त्वयाऽपि रागग्रहिलया

न भवितव्यं विद्युन्मालिखग इव । तथाहि—वैताढ्याद्रौ उत्तरश्रेणिविभूषणे गगनवल्लभपुरे मेघरथविद्युन्मालिनामानौ
द्वौ सहोदरौ विद्याधरावभूताम् । तावन्येद्युर्मातङ्गीविद्यां साधयितुं वसन्तपुरे गतौ । सा मातङ्गीपाणिग्रहणं विना
न सिध्यति । मातङ्गयाः परिचर्यां कुर्वत्या एव विद्या सिध्यति । इति ज्ञात्वा चाण्डालवेषं कृत्वा चाण्डालपाटके
गतौ । चाण्डालानां सेवनं चक्रतुस्तौ । ततस्तैश्चाण्डालैः पृष्टं—युवां कुत आगतौ किमर्थम् ? आवां म्लेच्छराजपुत्रौ
साकेतपुरात् पित्रा निराकृतावत्रागतौ । ततस्ताभ्यां तथा प्रीणिताश्चाण्डालाः, यथा तैरात्मीये द्वे पुत्र्यौ काणद-
न्तुरे तौ परिणायितौ । ब्रह्मचर्यपरो मेघरथस्तस्याः पत्न्याः पार्श्वात् सर्वां परिचर्यां कारयन् मातङ्गीविद्यां वर्षेण
साधयामास । विद्युन्माली तु तया प्रियया वशीकृतो भोगासक्तोऽभूत् । तया गर्भो दध्रे । मेघरथेन पृष्टं—भो भ्रात-
रतव विद्या सिद्धा न वा । विद्युन्माली प्राह स्वं चेष्टितम् । मेघरथोऽवग्—मूढ ! त्वया किमात्मा म्लेच्छस्त्रीसङ्गेन
विगोपितः । विद्युन्माली जगौ—एकवारं सदाचार !, गुणाधार ! मनोरम !। अपराधो मदीयोऽयं, क्षम्यतां भवताऽधुना
॥ १ ॥ पुनर्भो भ्रातस्त्वया प्रीतिपरेण वर्षप्रान्तेऽहं वाच्यः । एवमस्त्विति । क्षम्यतामिदानीं पुनर्निर्जितमन्मथः सद्विद्यां
साधयिष्यामि । पुनर्वर्षान्ते मेघरथस्तत्रागात् भ्रातृप्रीत्या । पुनर्गर्भेण युतां चाण्डालीं वीक्ष्य मेघरथः पप्रच्छ—किमिद-

मस्याः स्त्रिया दृश्यते । ततो विद्युन्माली लज्जितोऽधोमुखोऽभूत्, पुनर्वर्षं मार्गितं विद्यासाधनाय वर्षत्रयान्ते पुनरायातो भ्राता तथैव मोहे मग्नं भ्रातरं ददर्श मेघरथः । ततो भ्रातरं म्लेछकुले मग्नं वीक्ष्य मेघरथः पश्चात् स्वगृहं गतः । मेघरथो निःस्पृहो निष्कामी भूत्वा सद्यो विद्यापारगतोऽभूत् । विद्युन्माली तु म्लेच्छकुले तिष्ठन् क्रमात्तया चाण्डाल्या किङ्करीकृतो निःशङ्कं नीचमनार्चं चादेशं करोति स्म । तादृशे दुर्गन्धे गृहे तिष्ठन् दुःख्यभूत् । पुनर्मृत्वा विद्युन्माली नरके दुःखभागभूत् । एवमहं विद्युन्मालिवत् संसारे मग्नो न भविष्यामि । तथा त्वमपि संसारसुखे रक्ता मा भव ॥ ६ ॥

कनकसेनाऽवग्–मदीयं वचो मानय । शंखधमक इव लोभवान् मा भव । तथाहि–पुरा शालिग्रामे कणकूटाभिधः कौटुम्बी वसति । कणकूटः कस्यचित् कौटुबिकस्य क्षेत्ररक्षकोऽभवत् । क्षेत्रस्थः स सदा शंखनादेन सस्यभक्षकान् जीवान् दूरं नाशयामास । एकदा शंखयुतो निशामुखे ग्रामस्य क्षेत्ररक्षायै ययौ । निशीथसमये कस्यचिद् ग्रामस्य गोधनं भूरि अपहृत्य चलमानास्तस्य क्षेत्रस्य समीपे चौरा आययुः । अत्रान्तरे तेन क्षेत्ररक्षकेण कम्बुः पूरितो हेलया । तदा ते चौराः शंखशब्दमाकर्ण्य पृष्ठागतवाहरक्षकशङ्कया गोधनं मुक्त्वा दूरतो भीता नेशुः । तत् चौरमुक्तं गोधनं ज्ञात्वा प्राप्तगोधनः प्रगे स्वसद्मान्तः सदा शंखं पूरयामास एकदा पुनस्तत्रागताश्चौरास्तथैव शंखमापूर्यमाणं श्रुत्वा

दध्युः । सदाऽयं शंखको न वाद्यते । ततः सम्यग् विलोकितं चौरैः, ज्ञातश्च स शंखवादकः । ततो वयमनेन वाहिताः पूर्वमितिवदन्तस्तत्रागत्य तं शंखवादकं बद्ध्वा दृढं मुष्टिभिस्ताडयामासुस्तथा, यथाऽचेतनीभूय पतितः शंखो भग्नः तद्धनं सर्वमपहृतम् । एवं त्वमपि प्रिय ! लोभेनाधिकां श्रियं वाञ्छन् शंखवादक इव दुःखीभवसीति १ ॥

अथ जम्बूस्तां प्रियां प्रति प्राह—कपिवदहं मुमूर्षुर्नास्मि । तथाहि—विन्ध्याभिधधराधरे अनेकश्वापदसंकुले कोऽपि वानरः प्रियाभिः सह क्रीडां कुर्वाणोऽनुवेलं विद्यते । कपिः कोऽपि बलिष्ठमन्यस्तत्प्रियाभिः सह भयोज्झितो रमते । क्रमाद्वानरी तमुपपातिमङ्गीकृत्य रमते । स्वपतिं तृणमपि न मन्यते वानरी । पार्श्वस्था वानर्योऽवोचन्—अयं वृद्धो वानरोऽभूत् तत्त्यक्तुं योग्योऽयमेवं विमृश्य सर्वा अपि वानर्यो युववानरं श्रिताः । यतः—"वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसाः, पुष्पं पर्युषितं त्यजन्ति मधुपा दग्धं वनान्तं मृगाः । निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं सेवकाः, सर्वः स्वार्थवशाज्जनोऽभिरमते नो कस्य को वल्लभः ॥ १ ॥" वृद्धो वानरो यूना समं युद्धं कुरुते । ततो यूना वानरेण स्त्रीदृष्टिपुष्टेन वृद्धो वानरो भग्नः । ततो नश्यत्कपिस्तृषाक्रान्तो जलार्थी शिलाजतुनि जलभ्रान्त्या मुखमक्षिपत् यावत्तावद्वानरवानर्यौ पृष्ठावागतौ वानरो मुखं कण्टुमग्रेतनौ पादौ प्रथमं क्षिप्त्वा पश्चात् पश्चातनावपि पादौ चिक्षेप वानरः । ततः कीलितसर्वाङ्गः

कपिर्मृत्युमाप । स वानरोऽक्षिप्तपदः पूर्वं वदनं चेदाकृषेत् तदा मरणं नाभविष्यत्तस्य । ततो भवादृशां नारीणां वाञ्छया संसारसुखशिलाजतुनि न मज्जामि ८ ॥ अथ नभसेनाऽऽचष्ट—अधिकेन लोभेन त्वं बुद्धिस्त्री इव हास्यतामनर्थं च प्राप्स्यसि । तथाहि—नन्दिग्रामे सिद्धिबुद्धिनाम्न्यौ वृद्धस्त्रियौ वसतः स्म । एकस्तत्र भोलिको नाम यक्षो मनोऽभीष्टप्रदाता बहिस्तिष्ठतिस्म । सिद्धिः सदा सत्पुष्पपूजादिभिर्यक्षं तथाऽऽराध यथा दीनारं द्वयं प्रतिदिनं तस्यै अदात् । ततः सिद्धिः सा काष्टपात्राणि मुक्त्वा हेमपात्रे भुङ्क्ते, महासौधं तया क्रमात् कारितम् । यक्षप्रसादात्तां सिद्धिं लक्ष्मीवतीं वीक्ष्य प्रीत्या रहसि बुद्धिः पप्रच्छ । कुलक्रमागतं स्वामी, दारिद्र्यं तावदावयोः । कुतो विभवपाथोधिः, जलदेवीव वर्तसे ॥ १ ॥ सा सिद्धिराचष्ट—भोलिको यक्ष आराधितः सन् प्रतिदिनं दीनारद्वयं दत्ते मह्यम् । एतदाकर्ण्य बुद्धिरपि भक्तिभरात्तं यक्षमारराध । ततो यक्षोऽवग्—भो बुद्धे ! किं तव विलोक्यते । बुद्धिराह—सिद्धिर्यल्लभते तव पार्श्वात्तद्द्विगुणं मह्यं देहि । ततो बुद्ध्यै चतुरो दीनारान् दत्ते । बुद्धियाचितं ज्ञात्वा सिद्धिरपि ततो द्विगुणं मार्गयामास दीनारान् । ततो बुद्धिरपि द्विगुणं याचतेस्म । ततः सिद्ध्या चिन्तितमिदम् । असौ द्विगुणं सदा याचते मम स्पर्धया । ततस्तथा कुर्वे यथा स्पर्धाकृतं फलं लभतेऽसौ बुद्धिः । ततः सिद्ध्या

यक्षाग्रे रहसि प्रोक्तं—मदीयमेवं नेत्रं त्वं लाहि । ततो यक्षेणैकं नेत्रं तस्या गृहीतम् । ततो बुद्धिरपि यक्षपार्श्वे याचते स्म
सिद्धेय त्वया यद्दास्यि तद्द्विगुणं मह्यं देहि । ततो यक्षवरात् बुद्धिरन्धीभूता । नोऽकारणरुषां सङ्ख्या, सङ्ख्याताः
कारणाः क्रुधः । कारणेऽपि न कुप्यन्ति, ये ते जगति पञ्चषाः ॥१॥ तं नत्थि घरं तं नत्थि, राउलं देउलं पि तं नत्थि जत्थ
अकारणकुविया दो तिन्नि खला न दीसंति ॥२॥ ईर्ष्यया लभते जन्तु—रन्धत्वं परवश्यताम् । इहैवामुत्र नरकादि, पुनर्दुःखस-
मुत्तरम् ॥३॥ एवं पते! त्वमपि अधिकाधिकामृद्धिं वाञ्छन् अनर्थं पातिष्यसि ॥८॥ अथ जम्बूः प्राह-हे कान्ते! नाहमन्यथागामी
जात्यश्व इव भविष्यामि, तथाहि-देवानां प्रिये एनां कथां शृणु—वसन्तपुरे जितशत्रुनृपो न्यायी धर्म्मवान् राज्यं कुरुते स्म ।
अन्यदा राजाऽवग्—कोऽस्ति मे राज्ये यो वाजिपरीक्षां सम्यग् जानाति । ततोऽश्वविद्याविशारदाः बहुषु घोटकेषु एकं
जात्यश्वमानीय जगुः । यस्य राज्येऽयं वाहो वर्तते तस्य राज्यं सर्वथा वर्धते । भूपाः नमन्ति तं परैर्न जीयते स राजा ।
राजा तं घोटकं पृथग् कृत्वा दध्यौ । जिनदासस्यायं घोटको वर्द्धनायार्प्यते तदा वरम् । स तु निर्लोभी दया-
वानस्ति । ततो राज्ञा जिनदासायार्पितः सोऽश्वः । ततस्तं वाजिनं नृपदत्तं पालनाय प्राप्य वर्यां भूमिं चतुःशालिकां
च कारयित्वा तत्र जिनदत्तो मुमोच । वर्यान्नपानादिदानेन जिनदासस्तं वर्द्धयामास । यथा यथा घोटको वर्द्धतेस्म, तथा

तथा राजा घोटकेभादिसम्पदा वर्द्धते स्म । श्रेष्ठी प्रातस्तं वाजिनं स्वयमारुह्य सरसि पयः पाययित्वा प्रत्यावृत्तः सन् श्रीवृषभदेवप्रासादे प्रदक्षिणात्रयं कृत्वा नत्वा प्रभुं श्रीनाभेयं गृहमुपैति । एवं स घोटको जलाशयं जिनगृहं जिनदासगृहं मुक्त्वाऽन्यत्र कुत्रापि न याति । तेभ्योऽन्यं मार्गं न जानात्यश्वः । इतः प्रत्यर्थिभूपेन तं राज्यवर्द्धनकारकं घोटकं ज्ञात्वा स्वसभायां प्रोक्तम्—कोऽस्त्यत्र यस्तं घोटकमत्रानयति । तस्मै ग्रामपञ्चकं दास्याम्यहम् । ततः एकः सेवको राजप्रसादमासाद्य कपटश्रावकीभूय वसन्तपुरे गतः । चैत्यदेववन्दनमिषेण जिनान् पुरमध्ये वन्दते गुरूंश्च । जिनदासेन तं वर्यं श्रावकं मत्वा स्वगृहे भोजितः । रात्रौ ततो जिनदासेन धर्मगोष्ठीं कुर्वता स्वपार्श्वे स्थापितः । अन्यदा कस्मैचित् कार्याय जिनदासो गतः । स कपटश्राद्धो हृष्टस्तं हयमारुह्य स्वपुरं प्रति चचाल । स घोटकः पयःस्थानकं देवगृहं जिनदासगृहं च मुक्त्वाऽन्यत्र कुत्र न याति। सरसि चैत्ये गृहे पुनः पुनर्गच्छन् । ततः कपटश्राद्धः खिन्नः सन् प्रातर्घोटकं मुत्कलं मुमोच । नष्टः स श्राद्धः स्वस्थानके गतः घोटकवृत्तान्तं राजाग्रे प्रोक्तवान् । घोटको मार्गत्रयं मुक्त्वाऽन्यत् स्थानमजानानः स्वस्थाने गतः । प्रातः घोटकं स्वयमागतं वीक्ष्य सेवकैर्घोटकापहरणवृत्तान्तं ज्ञात्वा च जिनदासाग्रे प्रोक्तः । ततोऽश्वो विशेषतो राज्ञा श्रेष्ठिना च सन्मानितः सुखयभूत् । एवमहमपि ज्ञानदर्शन-

चारित्ररूपान्मार्गादन्यत्र मार्गे सर्वथाऽनभिज्ञोऽस्मि । अथ कनकश्रीराह—हेमपुरात् पुरा द्वौ बान्धवौ देशान्तरं प्रति चेलतुः । मार्गे गच्छन्तौ तौ क्वापि स्थाने पञ्चशिखरं वल्मीकं ददृशतुः । तस्य वल्मीकस्य एकस्मिन् शृङ्गे खनिते पयो निस्ससार । तत्पयः पीत्वा तौ मुदितौ बभूवतुः । अथ ज्यायसा लघुरभिदधे—द्वितीयं शृङ्गं विलोक्यते । ततस्तस्मिन् शृङ्गे विलोकिते द्रव्यं तृतीये रूप्यं चतुर्थे स्वर्णं निर्गतं, पञ्चमे शृङ्गे खन्यमाने ज्यायसा भ्रात्रोक्तं, अतिलोभो न क्रियते । यतः—"मूलं मोहविषद्रुमस्य सुकृताम्भोराशिकुम्भोद्भवः, क्रोधाग्नेररणिः प्रतापतरणिप्रच्छादने तोयदः । क्रीडासद्म कलेर्विवेकशशिनः स्वर्भानुरापन्नदी—सिन्धुः कीर्तिलताकलापकलभो लोभः पराभूयताम् ॥ १ ॥ महीयसापि लाभेन, लोभो न परिभूयते । मात्रा समधिकः कुत्र, मात्राहीनेन जीयते ॥ २ ॥" एकं शृङ्गं तिष्ठतु । ततः स भ्रात्रा वारितोऽपि लघुभ्राता लोभार्थी पञ्चमं शृङ्गं खनति यावत्तावत् ज्यायान् भ्राता पश्चाद् व्यावृत्योपविष्टः पञ्चमे शृङ्गे खनिते दृग्विषाहिना निर्गतेन स भस्मीकृतः चिरकालं दुःखी जातः । तथाऽतिलोभात् त्वमपि मुक्तिसुखं वाञ्छन् कृषिकलघुभ्रातृतुल्यतां मा गच्छ ॥ ११॥ जम्बूकुमारोऽवग्—प्रिये शुकनिकरोपमो न भविष्यामि । तथाहि—कस्मिंश्चिद्ग्रामे लोकैः क्षेत्ररक्षार्थं नलिकयन्त्राणि मण्डितानि । अन्यदा तत्रोपविष्टः शुकनिकरः । भ्रमता च

नलिकायन्त्रेणाधः कृतः। तत्र दृढं स्वचरणग्रहं पतनभयात् कुर्वन् आत्मानमबद्धमपि बद्धं मन्यमानो नचोत्पतति। अहं बोधाऽसिना छिन्नमोहपाशः स्वेच्छयोत्पत्य गच्छामि तत्पक्षितुल्यो नास्मि ॥ १२ ॥ अथवाऽन्येयं कथा च वाच्या—विन्ध्याद्रौ सरोवरं पयःपूर्णमभूत्। तस्मिन् जलाशये काश्चित् कमठः स्थितः पुत्रपौत्रादियुग्। कदाचित् शेवालपटलापसरणात् पूर्णेन्दुमाकाशे विलोक्य रात्रौ मुमुदे। ततश्चिन्तितं तेन—कुटुम्बस्य दर्शयिष्यामि। ततः कच्छपः पयोमूले गतः स्वकुटुम्बपार्श्वे। कर्मो यावत् स्वकुटुम्बं तत्रानिनाय तावत्तच्छिद्रं गतम्। ततो भ्रामं भ्रामं चलच्चक्षुर्विलोकयन् पूर्णेन्दुं नापश्यत्। तद्वदिमं जिनधर्मं संयमप्राप्तिस्वरूपं गुरुसामग्रीं च प्राप्य न त्यक्ष्यामि॥१२॥

जयश्रीर्जगौ—नागश्रीरिव मां किं विप्रतारयासि। तथाहि पद्मपुरे केलिप्रियो राजा राज्यं करोतिस्म। दिनं प्रति नवां नवां कथां वारकेण लोकमुखात् शृणोति। अथ कस्यचिद् द्विजस्य वारक आगतः। तस्य मौर्ख्यं विद्यते। ततो द्विजोऽचिन्तयत्—किं कथ्यते मया क्षोणिपतेरग्रे यदि नव्या कथा न कथयिष्यते तदा दुष्टो भूपो मां कारागृहे क्षेप्स्यति पितरं चिन्तापतितं कालमुखमालोक्य दौहित्र्या कुमार्योक्तं—त्वं चिन्तां मा कुरु। अहं कथां कथयिष्ये। ततः सा कन्या राजपार्श्वे गत्वाऽवग्—राजन्नद्याहं कथां कथयिष्यामि स्वसोदरार्थम्। राजाऽवग्—

तर्हि कथय त्वमेव । ततः कन्याऽवग् अत्रैव पुरे नागशर्मा माहणोऽस्ति, तस्य सोमश्रीः पत्नी, नागश्रीर्नन्दिनी । सा कस्मैचिद् द्विजवराय दत्ता पितृभ्याम् । विवाहसामग्र्यर्थं गतौ मातापितरौ ग्राममध्ये । एकाकिनी कन्या गृहे ऽभूद्यावत्तावत् स चट्टद्विजस्तत्रागात् । उपलक्ष्य भाविनं पतिं तया भोजितः पतिः । सतूलिके पल्यङ्के शायितस्तया ध्यातं—मही तु विस्तीर्णा विद्यते । परिणयनं विनाऽस्य हस्तेनापि सङ्गो न कार्य इति ध्यात्वा पर्यङ्कस्याधः सुप्ता कन्या निर्विकारा । अकस्मात् कन्याया उपरि पतिः पतितः सुप्तो द्विजः । ततो लज्जाक्षोभात्तस्य प्राणा गताः । ततस्तया ध्यातं—अहं पापिनी मयाऽयं हतः । किं करिष्ये लोको ज्ञास्यति । ततस्स्वं पतिं द्विजं खण्डशः कृत्वा खातं भूमौ कृत्वा गर्तायां क्षिप्त उपरि धूलिं दत्वा कर्दमेन गोमययुक्तेन लिम्पयित्वा गर्ता पुष्पैर्गन्धैर्धूपैश्च धूपयित्वा यावत् स्थिता कन्या तावत् पितरावात्तविवाहसामग्रीकावागतौ । इत्युक्त्वा कन्या तूष्णीं तस्थौ राजा जगौ—अग्रतः कथय किं जातम् । कन्याह—अतीतः कालोऽहं यास्यामि राजावग्—तामहं कथं द्रक्ष्यामि । सा जगादाऽहमेव सा स्त्री । संसारनटिकानटने नटी । राजाऽवग्—कुमारि ! त्वया यदुक्तं तत्सत्यम् । साऽवग्—याः कथास्त्वं पुराऽश्रौषीर्लोकपार्श्वे ता यदि तथ्यास्तथेयमपि तथ्या । सैवमुक्त्वा स्वस्थानं गता ।

यथा तया नागश्रिया भूपो विप्लावितः । तथा त्वमपि किं कथाभिर्विप्लावयसि माम् ॥ १३ ॥ जम्बूः प्राह–ललिताङ्गवदहं न भोगसुखे तथाऽऽसक्तोऽस्मि । तथाहि–कन्दर्प्पकोशपुरे शतायुधो राजा राज्यं करोति । तस्य लीलावती प्रिया । सा कदाचित् सर्वाभरणभूषिता गवाक्षोपरि उपविष्टा ललिताङ्गाख्यं नरं तुरगारूढं मनोभवावतारं गच्छन्तमालोक्य लीलावती पञ्चबाणबाणैस्ताडिता । तदा च ललिताङ्गस्तां वीक्ष्य पञ्चेषुबाणैस्ताडितः । भूपपत्नी दुर्लभा भवतीति ध्यात्वा ललिताङ्गकुमारः स्वगृहे गतः । राजपत्नी कामशरपीडिता भूतार्ता इवाऽभवत् । दास्या स्वामिन्या मनोऽभिप्रायो ज्ञातः, कथितं चानेष्यते सोऽत्र मया । सा दासी समुद्रप्रियेभ्यनन्दनं ललिताङ्गं ज्ञात्वा तत्र रहोऽभ्येत्योवाच । मत्स्वामिनी त्वामिच्छति भोगाय । सोऽवग्–पुराऽपि मम तस्या इच्छा विद्यते । यदाऽवसरो भवति तदा प्रोक्तव्यमहमागमिष्यामि । दासी स्वामिन्यग्रे प्राह–राजा तु स्तोकं गृहद्वारान्निःसरति । ततश्चैकदाऽवसरं प्राप्य यावद्दासी तं ललिताङ्गं कृतस्फारशृङ्गारमानयामास स्वामिनीपार्श्वे तावद्राजापि तत्रागतः । ततस्तया बिभ्यत्या दासीपार्श्वात् संचाराभिधे खाले क्षिप्तः प्रोक्तं च त्वया न जल्पनीयम् । राजाऽऽगतोऽस्ति, यदि ज्ञास्यति भूपस्त्वामत्रागतं तदा शूलमिरोपणात् हनिष्यति । ततः स ललिताङ्गकुमारो बिभ्यत् संलीनाङ्गोऽस्थात् । ततस्तत्रस्थस्य तस्यानुकम्पया राज्ञी भोजनं दत्ते ।

स ललिताङ्गस्तत्रैव भुङ्क्ते हदति च । दौर्गन्ध्येन तत्रत्यं दुःखमनुभवन् गृहसुखं स्मरन् महादुःखी जातो ललिताङ्गः ।
अथ प्रावृषि कूपोर्द्ध्वगामिनिर्मलवारिभिः प्रवाह्य प्रणालिकया बहिः कर्षितो ललिताङ्गो वप्रखालप्रान्ते पतितो धात्र्या
दृष्टः । तादृग्संमूर्छितो गृहे आनीतः । सज्जीकृतोऽङ्गप्रक्षालनादिना । कुत्रास्थास्त्वमियन्तं कालमितिस्वजनैः पृष्टो
न जाने इति लज्जयाऽवग्–स्वस्थीभूतो ललिताङ्गः । यदि कथंचिन्निःसृतो ललिताङ्गस्तया पुनराकारितः कदाचि-
त्तत्र याति, अहं तु तादृशानशुचिप्रायान् भोगसुखादिकान् स्त्रीसंगत्या न वाञ्छामि मनागपि । यदि तादृशे स्त्रीभोग-
सुखे पतिष्यामि तदा मम नरकपात एव भवति । उपनयोऽत्र कूपसदृशात् गर्भवासान्निर्गतो भूयो विषयसुखास्वा-
दासक्तस्तत्र याति । अहं ललिताङ्ग इव पुनस्तान् भोगान् न समीहे १४ । अथ कन्याऽवग्–मासाहसशकुनाभः
मा त्वं साहसिको भव । तथाहि–एकस्मिन् गिरिगह्वरे सुप्तः सिंहः । तस्य सिंहस्य व्यात्ते मुखे प्रविश्य कोऽपि
पक्षी मासाहसनामा दन्तान्तरलग्नानि मांसखंडानि चञ्चूपुटेनादत्ते मा साहसं कार्षीरिति गाढस्वरमुच्चरति
च । अत्रान्तरे केनचित् पुरुषेण प्रोक्तं–भो पक्षिन् त्वं मुखेन मासाहसमिति ब्रूषे । व्याघ्रास्यादाकृष्य मांसं
भक्षयसि च । ततस्त्वं मुग्ध एव दृश्यसे यतः स्ववचनानुरूपं न कुरुषे, एवं त्वं साक्षात् सुखं हित्वा मासाहसपक्षिव

स्वयं त्वयाङ्गीकरणे साहसं मा कुरु । यथा स सिंहो जागरितः सन् तं हन्त्येवँ । तथा संयमोऽपि हरिसदृशोऽङ्गीकृतः कदाचिद्धनिष्यति त्वाम् ॥ १५ ॥ जम्बूः प्राह—अहं कुसङ्गतिं मुक्त्वा सोमशर्म्मपुरोहित इव सत्सङ्गतिं करिष्यामि। तथाहि—क्षितिप्रतिष्ठिते पुरे जितशत्रुराजा राज्यं करोतिस्म । तस्य सोमशर्म्मेति पुरोहितोऽभूत् । नित्यमित्राभिधो मित्रः १, द्वितीयः पर्वमित्रोऽभत् २, तृतीयः—प्रणाममित्रोऽभूत् पुरोहितस्य । तेन एकः सहपांशुक्रीडितो वयस्यः प्रतिपत्त्या स्वसमानो व्यधायि, द्वितीयः पर्वमित्रः २, तृतीयस्तु प्रणाममित्रः । अथ कदाचित्तस्य पुरोहितस्य राजा रुष्टोऽभूत् । ततः पुरोहितः सहजमित्रस्य सदने गत्वाऽवग्—मयि भूपो रुष्टोऽस्ति किं करिष्यते । सहजमित्रेणोक्तं—भूपोरुष्टोऽस्ति यदि भवत उपरि तदा प्रथममत्र त्वां द्रष्टुं राजपुरुषाः समेष्यन्ति । तेनात्र स्थातुं तव न युक्तं गच्छाऽन्यत्र । ततः पुरोहितः पर्वमित्रगृहे गत्वा तथैवाह । तेनाऽप्युक्तं यदि त्वामत्र स्थितं राजा ज्ञास्यति, तदा मां त्वां च सकुटुम्बं घाणके क्षेप्स्यति । ततोऽन्यत्र प्रच्छन्नीभूय तिष्ठ । ततस्तृतीयस्य प्रणाममित्रस्य गृहे गत्वा तथैवोवाच । मित्रद्वयेन नाहं रक्षितः । प्रणाममित्रोऽवग्—न भेतव्यं त्वया, आवामेकीभूय स्थास्यावः राजा किं करिष्यति ?। राज्यांतरे गमिष्यावः । ततस्तावन्यस्मिन् राज्ये गतौ । तत्र पुरोहितः प्रणाममित्रसांनिध्यान्मानितः सुख्यभूत् ।

दृष्टान्तोपनयश्चैवं । कर्म्मपरिणामतुल्यो भूपः, जीवः पुरोहिततुल्यः, सहजमित्राभो देहः, सर्वे बान्धवाः पर्वमित्रतुल्याः, प्रणाममित्रतुल्यो धर्म्मः । यतो जन्मान्तरे जीवेन सह धर्मो गच्छति । जीवस्य यः परत्रापि, श्रियं यच्छति वाञ्छिताम् । ज्ञातिदेहौ विहायाहं, धर्ममाराद्धुमुद्यतः ॥ १ ॥ अतः कारणादहं संयमश्रीरूपं धर्म्मं मुक्तिसुखदातारमङ्गीकरिष्यामि । ततो जम्बूकुमारस्य संवेगामृतसोदरैर्वचोभिः सर्वचौरयुतस्य प्रभवस्य चाष्टानां कन्यानां वैराग्येण मनोवाञ्छितं जातम् । अष्टावपि कन्या ऊचुः—प्रमुखे सुखदैः स्वामिन् !, परिणामेऽतिदुःखदैः । इयत्कालं हहा कष्टं, विषयैर्वञ्चिता वयम् ॥ १ ॥ आपदां प्रथितः पन्थाः, इन्द्रियाणामसंयमः । तज्जयः सम्पदां मार्गो, येनेष्टं तेन गम्यताम् ॥ २ ॥ यस्य हस्तौ च पादौ च, जिह्वा च सुनियन्त्रिता । इन्द्रियाणि सुगुप्तानि, रुष्टो राजा करोति किम् ॥३॥ तत्तद्विवाहसंबंधा-दन्धे तमसि मज्जनात् । उद्धृताः स्मस्त्वया यद्वा, श्रेयसे सङ्गतं सताम् ॥४॥ सदैव नेतर्नेताऽसि, त्वमस्मान् शिवपत्तनम् ॥ ५ ॥ प्रभवोऽपि आश्रितरतस्त्वया एषः, श्रितोऽस्माभिरपि त्वयम् । सदैव नेतर्नेताऽसि, त्वमस्मान् शिवपत्तनम् ॥ ५ ॥ प्रभवोऽपि दध्यौ—धिगस्माकं ये वयं परधनहरणायोद्यताः स्मः । मया चौर्यद्यूतादिसेवाभिर्बहुपापमर्जितं तेन न ज्ञायते का गतिर्भविता यतः—" चौर्यपापद्रुमस्येह, वधबन्धादिकं फलम् । जायते परलोके तु, चिरं नरकवेदना ॥ १ ॥ " असौ

तु जम्बुरेवंविधः सुकुमाराङ्गः एवंविधां श्रियं कन्यायुतां त्यक्ष्यति । ततो योऽसौ मार्गमङ्गीकरिष्यति, स एव मया-श्रयितव्यः। एवं विमृश्य जम्बूपार्श्वे प्रभवोऽवग्—। उवाच प्रभवोऽप्युच्चै-र्महासत्त्व ! भवद्गुणैः । कृष्टस्त्वामनुयास्यामि, स्वकानापृच्छ्य निश्चितम् ॥ १ ॥ ततो वैराग्यवासिताशयाः प्रभवादयः तत्क्षणात् शासनदेव्या बन्धनान्मुक्ताः प्रोचुः जम्बूकुमारं प्रति । वयं स्वकुटुम्बं मुत्कलयित्वा प्रभाते दीक्षां ग्रहीतुं भवता सार्द्धमागमिष्यामः । जम्बूः प्राह—भो प्रभव ! जीवानां मनांसि चञ्चलानि सन्ति । यतः—“ क्षणं सक्तः क्षणं मुक्तः, क्षणं क्रुद्धः क्षणं क्षमी । मोहाद्यैः क्रीडयेवाहं, कारितः कपिचापलम् ॥ १ ॥ एकाग्रमनसा ध्याता, देवा अश्ममया अपि । अचिरेणैव तुष्यन्ति, किं पुनश्चेतनो जनः ॥ २ ॥ ” तेन प्रमादो न करणीयः । “ मज्जं विसयकसाया, निद्दा विकहा० ॥ ” जल्पितं पालनीयं त्वया, भवदीयं वचः प्रमाणमित्युक्त्वा प्रभवश्चौरयुतः स्वस्थानं गतः । ततो जम्बूकुमारं सदारं दीक्षां जिघृक्षुं ज्ञात्वा श्वसुराः पितरौ च तमेवानुयियासवोऽभूवन् । अथ जम्बूकुमारोऽपि विधिवज्जिनपूजां कृत्वा सप्तक्षेत्र्यां स्वधनं व्ययित्वा तुरङ्गारूढस्ताभिः प्रियाभिः समं विशिष्टाभरणभूषिताङ्गः स्वमातापितृयुतः श्रीसुधर्म्म-स्वामिपार्श्वे ययौ दीक्षां ग्रहीतुम् । इतः प्रभवः स्वकुटुम्बं मुत्कलाप्य पञ्चशतीचौरयुतो दीक्षां ग्रहीतुं तत्रागात् त्रिःप्रदक्षि-

णीकृत्य पञ्चमगणधरं श्रीसुधर्म्मस्वामिनं प्रणम्य जम्बूर्व्यजिज्ञपत्—संसारसागरोत्तार !, कर्णधार ! मुनीश्वर !। मां सकु-
टुम्बं चारित्र—यानपात्रेण तारय ॥१॥ ततः स्वपाणिपद्मेन, गणधारिधुरन्धरः। स्वजनैरन्वितं जम्बू—कुमारं तमदीक्षयत् ॥२॥
दीक्षां पञ्चशतसप्तविंशतिश्राद्धानां दत्त्वा सुधर्म्मस्वामीति धर्मोपदेशं ददौ । तथाहि—एके जीवाः संयमं सिंहतुल्या
भूत्वा गृह्णन्ति शृगाला इव पालयन्ति, एके जीवाः शृगाला इव भूत्वा संयमं गृह्णन्ति शृगाला इव पालयन्ति,
एके पुनः जीवाः शृगालाइव संयमं गृह्णन्ति सिंहा इव पालयन्ति, एके पुनः जीवाः सिंहाइव शूरवृत्त्या संयमं
गृह्णन्ति सिंहा इव पालयन्ति । तेन भवद्भिश्चतुर्थभङ्गस्थैः संयमो निरतिचारः पालनीयस्तथा यथा करतलगता-
मुक्तिरपि भवति । प्रमादो न करणीयः, प्रमादेन संसारे भ्रमणं भवति गृहीतसंयमानामपि । यतः—"चउद्दसपुव्वी
आहारगावि मणनाणी वीयरागा य । होंति पमायपरवसा, तयणंतरमेव चउगइआ ॥ १ ॥" ततो जम्बूर्विशेषतस्तपः
परोऽभूत् । तत्रैव तस्य मुनीशस्य स्तुतिः क्रियते यतिभिः। "नवणवई कंचणकोडीउ, जेणुज्झिया अट्ठ य बालियाओ।
सो जंबूस्वामी पढमो मुणीणं, अपच्छिमो नंदउ केवलीणं॥ १ ॥" जम्बूस्वामिप्रभृतिभिः शिष्यैः कलितः कलभैरिव-
यूथनाथः श्रीसुधर्म्मस्वामी विहरन् चम्पानगर्यां वहिरुद्याने समवासार्षीत् । तदा तदीयपादारविन्दं नन्तुं धर्म्मं श्रोतुं

च बहवो जनाः समाययुः। लोकं गच्छन्तं दृष्ट्वा श्रीसुधर्म्मस्वामिनं वन्दितुं तदा श्रेणिकभूपपुत्रः कोणिकोऽपि तत्रागात् । त्रिः प्रदक्षिणीकृत्य श्रीसङ्घो धर्म्मं श्रोतुमुपविष्टः कोणिकयुग् । धर्मोपदेशमाहेति गुरुः—माणूसखित्त-जाई, कुलरूवारुगामाउअं बुद्धी । सवणं गहणं सद्धा, संजमो लोगंमि दुलहाइं ॥ १ ॥ कौशेयं कृमिजं सुवर्णमुपलाद् दूर्वा च गोलोमतः, पङ्कात्तामरसं शशाङ्कमुदधेरिन्दीवरं गोमयात् ॥ २ ॥ इत्यादिदेशनान्ते कोणिकः श्राद्ध-धर्ममङ्गीकृत्य जम्बूमुनिप्रभृतिशिष्यवर्गमद्भुतमालोक्य पप्रच्छ । श्रीसुधर्मगुरो ! कोऽयं, द्वीपेष्विव सुरद्विपः । सुधांशुरिव धिष्णेषु, त्रिदिवाद्रिरिवाद्रिषु ॥ १ ॥ शालिधान्यमिवान्नेषु, कल्पद्रुम इव द्रुषु । अम्भोधिष्विव दुग्धाब्धि--श्चम्पकं कुसुमेष्विव ॥ २ ॥ हिरण्यमिव लोहेषु, रसेष्विव सुधारसः । अद्भुतस्तव शिष्येषु, सविशेषः प्रदीप्यते ॥३॥ त्रिभिर्विशेषकम् । ततः सुधर्मस्वामी गणभृत् जम्बूस्वामिनः प्राग्भवतपःसम्बन्धमशेषतः प्राह—पूर्वभवार्जितेन तपसा ईदृशी संपदस्य ऋषेर्जाताऽस्ति। एतदाकर्ण्य राजा हृष्टश्चम्पापुरीं ययौ। लोका अपि प्राप्तजिन-धर्मा गुरुं प्रणम्य स्वगृहं ययुः। सुधर्म्मस्वामी जम्बूप्रभृतिसाधुसमन्वितो विहरन् श्रीमहावीरं नन्तुमगात् । सुधर्म्म-स्वामिपार्श्वे पठन् जम्बूयतिरेकादशाङ्गीं चतुर्दशपूर्वीं च सूत्रार्थाभ्यां पपाठ। श्रीवीरनिर्वाणात् सुधर्म्मस्वामी दशमे

वर्षे जम्बूस्वामिने सूरिपदं ददौ । विंशतितमे च वर्षे गच्छभारं धुरन्धरजम्बूस्वामिने वितीर्य मुक्तिपुरीं सुधर्म्मस्वामी ययौ । ततःश्रीजम्बूगणधरः प्राप्तकेवलज्ञानोऽनेकभव्याङ्गिनः प्रबोध्य प्रभवस्य सूरेर्गच्छभारं वितीर्य सूरिपददान-पुरस्सरं श्रीवीरनिर्वाणात् वर्षचतुःषष्ठ्यां गतायां क्षीणाशेषकर्मा मुक्तिनगरीं ययौ । मनःपराऽवधी श्रेण्यौ, पुलाका-हारकौ शिवम् । कल्पत्रिसंयमा ज्ञानं, नासन् जम्बूमुनेरनु ॥ १ ॥ यतः—मणपरमोहि पुलाए, आहारगखवगउवसमे कप्पे । संजमतियकेवलिसिज्झणा य, जंबूंमि वुच्छिन्ना ॥ २ ॥ घनागमैकप्रभवानि यस्य, माधुर्यधुर्याणि वचःफलानि । निषेव्य भव्या भवतापमौज्झन्, मुदे स जम्बूतरुरद्वितीयः ॥३॥ इति जम्बूस्वामिप्रभवस्वामिदीक्षाकथा समाप्ता ॥ २८ ॥

**भवभीरुर्विमुञ्चेत, नाङ्गीकृतमभिग्रहम् । प्रतिकूलनिपातेऽपि, वंकचूलकुमारवत् ॥ १ ॥**

तथाहि—विराटदेशे पृथ्वीभालविभूषणे पेढालपुरमस्ति । श्रीचूलराज्ञः पृथ्वीं पालयतः पुष्पचलाभिधपुत्रोऽभूत् । पुष्पचूला पुत्री च । सम्प्राप्तयौवनः क्रमाद् द्यूतव्यसनी बभूव । चौर्यं कुर्वाणः पुष्पचूलो वक्रगमनेन लोकान् दन्दयतिस्म । ततो लोकैर्वंकचूल इति नाम दत्तं तस्य । ततोऽन्यायीति कृत्वा पित्रा निष्काशितः । यतः—" वैरवैश्वा-नरव्याधिवादव्यसनलक्षणाः । महानर्थाय जायन्ते, वकाराः पञ्च वर्द्धिताः ॥ १ ॥ द्यूतं सर्वापदां धाम, द्यूतं दीव्यन्ति

दुर्द्धियः । द्यूतेन कुलमालिन्यं, द्यूताय श्लाघ्यतेऽधमः ॥२॥ राज्यच्युतिं वल्लभया वियोगं, द्यूतान्नलः प्राप गतोरुभोगम् । प्रचण्डतामण्डितबाहुदण्डा-स्ते पाण्डवाः प्रापुररण्यवासम् ॥ ३ ॥ भार्याभगिनीभ्यां सह भिल्लीहल्लीसकसमलंकृतां कामपि पल्लीं वंकचलो ययौ । तत्र पल्लीपतौ मृते तत्र वंकचूलोऽभूत् पल्लीपतिः । वंकचूलो बहुचौरपरिवृतो ग्रामे ग्रामे पुरे पुरे स्तैन्यार्थं याति । ज्ञानतुङ्गाचार्या विहरन्तोऽन्यदा वर्षाकाले वर्षति मेघे तत्रागताः । पल्लीपतिः प्राह—यदि यूयं कस्यापि धर्मोपदेशं न दत्त तदाऽत्र तिष्ठत । गुरुभिरुक्तमत्र कस्यापि धर्मोपदेशो न दास्यते स्वाध्यायाध्ययनतीव्रतपश्चरणकरणोद्यताः श्रीज्ञानतुङ्गसूरयो वंकचूलदत्ते गृहे स्थिताः । चतुर्मासीं स्वाध्यायाध्यापनादिना नीत्वा पारणकदिने गुरवश्चलितुकामा वंकचूलं प्रति जगुः—चतुर्मासी गता चलिष्यामो वयम्, श्रीगुरूणां पृष्ठौ तदा संप्रेषयितुं वंकचूलः कियत्परिवारपरिवृत्तश्चचाल । वंकचूलग्रामसीमामतिक्रम्य गुरुभिरुक्तं—भो वंकचूल ! इयं कस्य सीता ? । वंकचूलोऽवग् इयं मदीया भूमिर्न । ततो गुरवो जगुः—महानुभाग ! वयं निष्प्रत्यूहं स्वाध्यायाध्ययनादिपरास्तव ग्रामे स्थिताः । अद्य यावत् कस्यापि उपदेशो न दत्तः । अधुना किमपि अभिग्रहं गृहाण । अभिग्रहेण जीवाः सुखिनो भवन्ति । यतः—" नियमोऽखिललक्ष्मीणां, नियन्त्रणमशृङ्खलम् । दुरितप्रेतभूतानां, रक्षामंत्रो निरक्षरः ॥ १ ॥" वंकचूलो

जगौ–भगवन् दीयताम् । ततो गुरवो जगुः–अज्ञातफलं १ काकमांसं च न भक्षणीये २, अनुरक्ताऽपि नृपपत्नी परिहार्या ३, प्रहारदानकाले च सप्तपदानि पश्चादपसर्तव्यं ४ इति नियमचतुष्टयं गृहाण । ततो वंकचूलेन गुरुप्रोक्तं नियमचतुष्टयं गृहीतं प्रणम्य पश्चादागाद्वंकचूलः । स वंकचूलः कदाचित् कस्मिन् ग्रामे अवस्कन्दं दत्त्वा व्याघुटितो मार्गे भ्रष्टोऽभूत् । अटव्यामटतस्तस्य लङ्घनत्रयं जातम् । ततो मनोहराणि फलानि दृष्ट्वा सेवकै श्चौरैः प्रोक्तं–फलानि सन्त्यत्र तानि भक्ष्यन्ते । वंकचूलस्तानि फलानि वीक्ष्य पप्रच्छ–किं नामैषां फलानां तैरुक्तं नाम न ज्ञायते, वंकचूलेनोक्तं ममाज्ञातफलभक्षणे नियमोऽस्ति, ततस्तैरुक्तमस्माकं नियमो नास्ति वयं भक्षयिष्यामः । वंकचूलोऽहम् अज्ञातफलानि नास्वाद्यन्ते । ततो वार्यमाणा अपि ते चौराः सश्रीकानि तानि फलानि बुभुजिरे । ततः सद्यस्तेषु चौरेषु विपन्नेषु दध्यावेतानि विषफलानि, येषां भक्षणे मम गुरुभिर्नियमो दत्तोऽस्ति । ततः एकाक्येव निशि स्वपल्लीं प्रविश्य निशीथकाले स्वगृहे गतो वंकचूलः । वंकचूलो दध्यौ योऽयं नियमो यदि मम नाभविष्यत्तदा ममापि मरणमभविष्यत् । यतः–" सर्वाः सम्पत्तयस्तस्य, जायन्ते जन्मिनः खलु । यो गृहीतं व्रतं नैव, मुञ्चते शुद्धमानसः ॥१॥" एकदा कस्मिंश्चिद् ग्रामे गते वंकचूले वंकचूलस्य वैरिनर्तकैर्नाटकमारब्धम् । ततो वंकचूल-

माकारयितुं तत्रागता नर्तकी गृहे। ततो वंकचूलभगिन्या ध्यातं—यदि वंकचूलं ग्रामान्तरे गतं ज्ञास्यन्ति, ततो न सम्यक् इत्यादि विमृश्य भ्रातृवेषं परिधाय तत्र गत्वोपविष्टा। नृत्यं विलोक्य दानं दत्त्वा स्वगृहे समेत्य भ्रातृपत्नीयुता पुष्पचूला पुरुषवेषेण युता सुष्वाप। इतो वंकचूलो गृहमागतः। स्वां प्रियामन्यपुरुषयुतां पल्यङ्के सुप्तां वीक्ष्य क्रोधारुणलोचनः तयोर्द्वयोर्वधाय कृपाणमाकृष्य नियमस्मरणाच्च सप्तपदान्यपसृत्य यावत् प्रहारं दत्ते, तावत् संचलितखड्गप्रहार-प्रतिशब्देन जागरिता संभ्रान्ता पुष्पचूला जीवतु भ्राता मम वंकचूल इत्यादि उच्चरन्ती उत्तस्थौ। ततः प्रणामपूर्वं वंकचूलेन पुरुषवेषकारणं भगिनी पृष्टा रिपुनटानां समागमादि जगौ। ततो वंकचूलो हृष्टो गुरुदत्तं नियमं प्रश-शंसेति—अहो ते गुरवो ज्ञानिनः। एकदा वंकचूलो वणिग्गृहे पितापुत्रयोर्लेखके कलहं वेश्यागृहे वेश्यां कुष्ठिनमपि कामयन्तीं वीक्ष्य कस्यापि भूपतेरन्तःपुरे भित्तिं विदार्यान्तः प्रविष्टो निशि राज्या हस्तो लग्नः। ततो राज्ञी तं कुमारं प्राह—मया सह भोगान् भुंक्ष्व बहूनि रत्नानि दास्यामि तुभ्यम्। वंकचूलो गुरुदत्तं नियमं स्मरन् प्राह—त्वं मम माता। ततस्तया विरक्तया अयमुपपतिरिति पूत्कृते राजपुरुषैर्निबध्य प्रातर्भूपपार्श्वे नीतः। राज्ञा पृष्टः स वंकचूलो यथानुभूतं रात्रिवृत्तान्तं जगौ। ततो राज्ञा कुड्यन्तस्थितेन रात्रिवृत्तान्तवेदिना तद्गुणरञ्जितेन स सामन्तीकृतः।

राज्ञ्याः स्वरूपं जानन्नपि न प्रकटीचक्रे । स्वगृहस्वरूपं कस्याप्यग्रे न कथ्यते । यतः—"स्वचिन्तितं कृतं छन्नं, गृहदुश्चरितं पुनः । वञ्चनं चापमानं च, मतिमान्न प्रकाशयेत् ॥ १ ॥ राजोपदेशेन वंकचूलश्चौर्यं मुक्त्वा सन्मार्गगामी बभूव । भूपादेशादन्येद्युः कमपि दुर्दान्तं वैरिणं जित्वा प्रहारविधुरो वंकचूलः स्वपुरमागात् चिकित्सा क्रियते वैद्यैस्तस्य । तस्मात् प्रहारघाताद्व्यथयाऽन्येऽपि रोगा जाताः । उपचारे बहुक्रियमाणेऽपि तस्य गुणो नाभूत् प्रत्युत दिनं दिनं प्रति क्षीयते शरीरं पथ्यं च न रोचते । ततस्तस्य रोगस्फेटनार्थं राज्ञा पटहोद्घोषणा कारिता । योऽमुं जीवयति तस्मै यथेष्टं राज्यादि ददामि । तदा केनाप्यत्रागत्य वैद्येन ( काक ) मांसौषधं प्रोक्तम् । काकमांसं वैद्यैः कथ्यमानं वंकचूलः श्रुत्वा ऊचिवान्—अभक्ष्यं काकमांसं ततो नाहं भक्षयामि । ततो राज्ञा जिनदासाख्यश्राद्धं धर्मकर्मसिमित्रमाकारयितुं वंकचूलप्रबोधाय जनः प्रेषितः । यतः जीवस्य मित्रोक्तं दुर्लङ्घ्यं भवति । जिनदासो वंकचूलपार्श्वे समागात् पप्रच्छ । बन्धो! वंकचूल ! तव देहे समाधिरस्ति ? । वंकचूलो जगौ—स्वागतं भवतो धर्मबन्धो ! समस्ति । देहे ममेदृशं जातम् । यतः—"रोगायत्तमिदं देहं, कर्मायत्तं च जीवितम् । आराधना तवायत्ता, कुरु मित्र ! यथोचितम् ॥ १ ॥ अथोचे जिनदासोऽपि, तदाशयदिदृक्षया । काकमांसौषधं भुंक्ष्व,

स्वामी—देवकि ! किं ताम्यसि, तव प्राग्कृतं कर्मात्र फलितम् । त्वया सपत्न्याः सप्त रत्नानि हृतानि प्राग्भवे । तस्या रुदन्त्याः पुनरप्येकं रत्नं प्रपञ्चेन समर्पितम् । ततः प्रभुं प्रणम्य प्राक्तनं कर्म निन्दन्ती देवकी स्वगृहे गत्वा कृष्णास्याऽस्थात् । मातरं दुःखितां वीक्ष्य कृष्णोऽवग्—मातः ! किं तव दुःखमस्ति । देवक्यवग्—पुत्र ! निष्फलं मम जीवितम् । त्वज्ज्येष्ठान् सुलसा बाल्ये, यशोदा त्वामपालयत् । अपूर्यत न मे बाल—लालनस्य मनोरथः ॥ १ ॥ वत्स ! तस्मादहं पुत्रमीहे वाञ्छितपूर्तये । बाललालनहर्षो हि, देवानामपि दुर्लभः ॥ १ ॥ विष्णुराचष्ट—मातः ! खेदो न कार्यस्त्वया । देवं वासवध्वजिनीपतिमाराध्य तव मनोरथः पूरयिष्यते मया । कृष्णेनाराधितो देवो हरिणेगमेषी प्रकटीभूयावग्—देवक्याः पुत्रो भविष्यत्यष्टमः, परं प्राप्ततारुण्यः प्रव्रजिष्यति । ततः कियत्यपि काले गते कोऽपि महर्द्धिदेवः स्वर्गाच्च्युत्वा सुस्वप्नसूचितो देवक्याः कुक्षाववतीर्णः । क्रमाद्देवकी पुत्रमसूत । पुत्रजन्मोत्सवं कारयित्वा वसुदेवो गजसुकुमालेतिनामादात् । ततो निरन्तरं देवकी स्तन्यपानदानोत्सङ्गारोपणादिना वर्धयामास । मातुर्भ्रातुश्च नेत्राणि प्रमोदयन् क्रमाज्जल्पन् मनोहरं प्रमोदं ददानो गजसुकुमालो व्यवर्धत । प्राप्तयौवनो गजसुकुमारो द्रुममहीपतेः प्रभावत्याख्यां कन्यां परिणिन्ये पितुराज्ञया । अथ सोमशर्मद्विजस्य पुत्रीं सोमाह्वामनिच्छन्नपि गजसुकुमालो

श्रीसमुद्रविजयराजा बाहिरुद्याने समवासार्षीत् । तदा श्रीसमुद्रविजयराजा
माताभ्रातृभ्या परिणायितः । अथ तस्मिन्नेव दिने श्रीनेमिनाथो बाहिरुद्याने समवासार्षीत् । भगवांस्तत्रेति धर्मोपदेशं ददातिस्म । “ निर्दन्तः
कृष्णश्च सपरिवारो धर्मोपदेशमाकर्णयितुं श्रीनेमिनाथपार्श्वे ययौ । भोज्यं निर्लवणं सुतो गत-
करटी हयो गतजवश्चन्द्रं विना शर्वरी, निर्गन्धं कुसुमं सरो गतजलं छायाविहीनस्तरुः । इत्यादि धर्मोपदेशं श्रुत्वा गजसुकु-
गुणश्चारित्रहीनो यति–र्निर्देवं भुवनं न राजति तथा धर्म्मं विना पौरुषम् ॥ १ ॥ इत्यादि धर्मोपदेशं श्रुत्वा गजसुकु-
मालो वैराग्यवासितस्वान्तः पितरावापृच्छ्य भार्यायुग् दीक्षां जग्राह । यतः—“ जह चयइ चक्कवट्टी, पवित्थरं
तत्तियं मुहुत्तेण । न चयइ तहा अहन्नो, दुबुद्धी खप्परं दमओ ॥ १ ॥” ततः प्राप्तसंयमो गजसुकुमालो वैराग्य-
वासितो नित्यं षष्ठाष्टमदशमादितपः कुर्वाणो नगराद्बहिः कायोत्सर्गे स्थितो ध्यानपरः परमात्मलीनोऽभूत् । अन्येद्युः
प्रभुमापृच्छ्य श्मशाने सायं प्रतिमया गजसुकुमालं दृष्ट्वा सोमशर्मणा द्विजेन ध्यातं—अयं पापी मदीयां पुत्रीं परिणीय
तत्कालमेवं चकार । ततः स द्विजाधमः क्रुद्धो गजसुकुमालमूर्द्धनि शकटीं मुक्त्वा [घटीकंठं च मुक्त्वा] तदुपरि चितातो
उत्कलदङ्गारकानानीय मुमोच । तैरङ्गारैर्गजसुकुमालस्य कर्मेन्धनानि सर्वाणि तथा दग्धानि, यथा क्षणमात्रात्केवल-
ज्ञानमुत्पन्नं मुक्तिरप्यभूत् । अथ कृष्णः प्रभुं नन्तुं गतो गजसुकुमालमसमीक्ष्य क मे भ्राताऽस्ति इति प्रभुं पप्रच्छ ।

देहपाटवहेतवे ॥ २ ॥ साक्षेपं वंकचूलोऽथ, स्माह साहसिकाग्रणीः । कण्ठोपकण्ठविश्रान्त--जीवितोऽथ सतां वरः ॥३॥ देहश्चलाचलो रोगैः, समीरैरिव वारिदः । कः कृती तत्कृते कुर्यान्निजाभिग्रहखण्डनम् ॥ ४ ॥ प्रशंसापूर्वकं प्राह, शृणु मित्र ! यथोचितम् । एकत्वं सर्वथा जन्तोः, सर्वे भावा न निश्चलाः ॥ ५ ॥ तस्माद्देहे कुटुम्बे च, यौवने विभवे भवे । जीविते च प्रतिबन्धमकृत्ये मा कृथा वृथा ॥ ६ ॥ प्रतिपद्य चतुःशरणं, परमेष्ठिपरायणः । उत्तमार्थविधिं कृत्वाऽच्युते चूलो गतः सुधीः ॥ ७ ॥" ॥ इति वंकचूलकथा समाप्ता ॥ २९ ॥

उपसर्गान् सहमानो, जनः प्राणान्तकारकान् । लभते निर्वृतिं गज-सुकुमालयतीशवत् ॥ १ ॥

तथाहि--गजसुकुमालकथां सुलसानागश्रेष्ठिकृष्णभ्रातृकथां विना न कथितुं शक्यते । तेनादौ तेषां सम्बधः प्रोच्यते । भद्दिलपुरे नागश्रेष्ठी बभूव, तस्य प्रिया सुलसा । वसुदेवपार्श्वात् कंसेन याचितानां सप्तानामपत्यानां मध्यात् षट् पुत्रा देवेन केनचित् नागपत्नीनिन्दुसुलसानाम्नीगृहे मुक्ताः । सुलसया वर्द्धिताः क्रमेण तान् देवकीसुतान् षडपि द्वात्रिंशतं कन्याः परिणायिताः प्रत्येकम् । षडपि श्रीनेमिपार्श्वे प्रबुद्धा दीक्षां जगृहुः । सर्वे चरमशरीरिणो द्वादशाङ्गीभाजोऽभूवन् । स्वामिना सह द्वारिकां गताः ते षडपि यतयः षष्ठपारणेऽन्यदा युगलिनो भूत्वा त्रिधा द्वारका-

पुरीमध्ये विहर्तुं जग्मुः । प्रथमं साधुयुगलं श्रीकृष्णगृहे भिक्षायै गतं, तदा देवक्या वन्दित्वा मोदकैर्लाभितम् । तस्मिन् गते द्वितीयं साधुयुगलमागतं तदैव देवक्या प्रतिलाभितं मोदकदानात् । ततस्तृतीये साधुयुगले तादृशेन रूपेण समागते देवकी विस्मिता मोदकैस्तत् प्रतिलाभ्य प्राह-मुहुर्मुहुः किं युवां विहर्तुमत्रायातौ दिङ्मोहो जातोऽस्ति, अथवा पुरमध्ये भिक्षाऽलभ्यमानाऽस्ति, अथवा किं मम विभ्रमोऽभूत् । तत्साधुयुगलं प्राह— महासति ! न तत्र दिङ्मोहोऽस्ति, वयं षडपि बान्धवाः सदृशाकाराः । भद्दिलपुरवास्तव्यनागसुलसाश्राविकापुत्राः स्मः । श्रीनेमिपार्श्वे दीक्षा गृहीताऽस्माभिः । द्वौ साधू पृथक् पृथक् तव गृहे विहर्तुमायाताः स्मः । ततो देवकी दध्यौ—षडपि साधवोऽमी कृष्णस्य तुल्या दृश्यन्ते । तिलमात्रेणापि एतेषां कृष्णस्य चान्तरं न दृश्यते अतिमुक्तमुनीन्द्रेण, जीवदष्टसुताः पुनः पुराख्याताः स्म तत्किं नु, ममैवामी षडङ्गजाः ॥ १ ॥ इति संशयापन्ना देवकी द्वितीयेऽह्नि श्रीनेमिपार्श्वे स्वसंशयापनोदाय गता । यावद्देवकी प्रभुं प्रणम्य यावज्जल्पति तावत् । भावज्ञोऽथ प्रभुः स्माह-षडमी सूनवस्तव, जीवन्तः शत्रुसेनाद्या वर्द्धिताः सुलसया ॥ १ ॥ तत उत्प्रस्रवस्तनी देवकी साधून् षडपि वन्दते स्म । ततो देवकी प्राह स्वामिन् ! मयैकोऽपि नन्दनो न लालितस्तेनातीव दुःखं विद्यते मे । जगौ-

स्वामी—देवकि ! किं ताम्यसि, तव प्राग्कृतं कर्मात्र फलितम् । त्वया सपत्न्याः सप्त रत्नानि हृतानि प्राग्भवे । तस्या रुदन्त्याः पुनरप्येकं रत्नं प्रपञ्चेन समर्पितम् । ततः प्रभुं प्रणम्य प्राक्तनं कर्म निन्दन्ती देवकी स्वगृहे गत्वा कृष्णास्याऽस्थात् । मातरं दुःखितां वीक्ष्य कृष्णोऽवग्—मातः ! किं तव दुःखमस्ति । देवक्यवग्—पुत्र ! निष्फलं मम जीवितम् । त्वज्ज्येष्ठान् सुलसा बाल्ये, यशोदा त्वामपालयत् । अपूर्यत न मे बाल—लालनस्य मनोरथः ॥ १ ॥ वत्स! तस्मादहं पुत्रमीहे वाञ्छितपूर्तये । बाललालनहर्षो हि, देवानामपि दुर्लभः ॥ १॥ विष्णुराचष्ट—मातः ! खेदो न कार्यस्त्वया । देवं वासवध्वजिनीपतिमाराध्य तव मनोरथः पूरयिष्यते मया । कृष्णेनाराधितो देवो हरिणेगमेषी प्रकटीभूयावग्—देवक्याः पुत्रो भविष्यत्यष्टमः, परं प्राप्ततारुण्यः प्रव्रजिष्यति । ततः कियत्यपि काले गते कोऽपि महर्द्धिदेवः स्वर्गाच्च्युत्वा सुस्वप्नसूचितो देवक्याः कुक्षाववतीर्णः । क्रमाद्देवकी पुत्रमसूत । पुत्रजन्मोत्सवं कारयित्वा वसुदेवो गजसुकुमालेतिनामादात् । ततो निरन्तरं देवकी स्तन्यपानदानोत्सङ्गारोपणादिना वर्धयामास । मातुर्भ्रातुश्च नेत्राणि प्रमोदयन् क्रमाज्जल्पन् मनोहरं प्रमोदं ददानो गजसुकुमालो व्यवर्धत । प्राप्तयौवनो गजसुकुमारो द्रुमम-हीपतेः प्रभावत्याख्यां कन्यां परिणिन्ये पितुराज्ञया । अथ सोमशर्माद्विजस्य पुत्रीं सोमाह्वामनिच्छन्नपि गजसुकुमालो

मातापितृभ्यां परिणायितः । अथ तस्मिन्नेव दिने श्रीनेमिनाथो बहिरुद्याने समवासार्षीत् । तदा श्रीसमुद्रविजयराजा कृष्णश्च सपरिवारो धर्मोपदेशमाकर्णयितुं श्रीनेमिनाथपार्श्वे ययौ । भगवांस्तत्रेति धर्मोपदेशं ददातिस्म । " निर्दन्तः करटी हयो गतजवश्चन्द्रं विना शर्वरी, निर्गन्धं कुसुमं सरो गतजलं छायाविहीनस्तरुः । भोज्यं निर्लवणं सुतो गतगुणश्चारित्रहीनो यति-र्निर्देवं भुवनं न राजति तथा धर्मं विना पौरुषम् ॥ १ ॥ इत्यादि धर्मोपदेशं श्रुत्वा गजसुकुमालो वैराग्यवासितस्वान्तः पितरावापृच्छय भार्यायुग् दीक्षां जग्राह । यतः—" जह चयइ चक्कवट्टी, पवित्थरं तत्तियं मुहुत्तेण । न चयइ तहा अहन्नो, दुबुद्धी खप्परं दमओ ॥ १ ॥" ततः प्राप्तसंयमो गजसुकुमालो वैराग्यवासितो नित्यं षष्ठाष्टमदशमादितपः कुर्वाणो नगराद्बहिः कायोत्सर्गे स्थितो ध्यानपरः परमात्मलीनोऽभूत् । अन्येद्युः प्रभुमापृच्छय श्मशाने सायं प्रतिमया गजसुकुमालं दृष्ट्वा सोमशर्मणा द्विजेन ध्यातं—अयं पापी मदीयां पुत्रीं परिणीय तत्कालमेवं चकार । ततः स द्विजाधमः क्रुद्धो गजसुकुमालमूर्द्धनि शकटीं मुक्त्वा [घटीकंठं च मुक्त्वा] तदुपरि चितातो ज्वलदङ्गारकानानीय मुमोच । तैरङ्गारैर्गजसुकुमालस्य कर्मेन्धनानि सर्वाणि तथा दग्धानि, यथा क्षणमात्रात्केवलज्ञानमुत्पन्नं मुक्तिरप्यभूत् । अथ कृष्णः प्रभुं नन्तुं गतो गजसुकुमालमसमीक्ष्य क्व मे भ्राताऽस्ति इति प्रभुं पप्रच्छ ।

प्रभुणोक्तं—द्विजान्निर्वाणमभूत्तस्य। हरिस्तत्प्रभुवचः श्रुत्वा मूर्छामाप। पुनः पप्रच्छ कृष्णः—कथं केवलज्ञानं जातम्?। प्रभुराह—द्विजसाहाय्यात्, द्विजेन मस्तके अङ्गारभृता शकटी मुक्ता, तेन कर्म्मक्षयोऽभूत्। यदि स द्विजोऽधुना साहाय्यं नाकरिष्यत् तस्य कर्मक्षयविषये तदा बहुकालेन कष्टात् कर्मक्षयोऽभविष्यत्। यथा अद्य त्वया मार्गे आगच्छता विप्र एकामेकामिष्टिकां वहन् देवकुलिकार्थे दृष्टः। ततस्त्वया एकेष्टिका तत्र नीता। ततः सर्वेण परिवारेणापि नीता बह्वी ततस्तस्य द्विजस्य प्रासादो निष्पन्नः। क्षणमात्रेण तस्य द्विजस्य इष्टिकावहनकार्यं समाप्तं तव साहाय्यात्। तथा गजसुकुमालस्यापि तस्य द्विजस्य साहाय्यात् सर्वकर्म्मक्षयोऽभूत्। तस्योपरि त्वया कोपो नानेयः। कृष्णेन प्रोक्तं—किं नाम स द्विजः?। प्रभुणोक्तं—अद्य त्वां प्रतोल्यां प्रविशन्तं वीक्ष्याकस्माद्यस्योदरस्फोटनान्मृत्युर्भावी स एव ज्ञेयः। ततो मुकुन्देनाग्निसंस्कारः कृतः। प्रभुणा शोक उत्तारितः। ततो विष्णुः प्रभुं नत्वा निस्ससार। स द्विजो वनादागच्छन् कृष्णमागच्छन्तं वीक्ष्य हृदयस्फोटनान्मृतः। तमकस्माद्विप्रं मृतं दृष्ट्वा विप्र उपलक्षितः। क्रमयोर्दोरिकां बन्धयित्वा पुरीमध्ये भ्रामितो द्विजः। पटहो वादितश्च कृष्णेन। यो यतीनां हन्ता भविष्यति स एवं विगोप्यो मया। ततो देवक्या अनित्यतादिदर्शनैः प्रभुणा शोक उत्तारितः। ॥ इति क्षमायां गजसुकुमालकथा समाप्ता ॥ ३० ॥

व्याघ्रादिमर्त्यविहिता–नुपसर्गान् बहून् दृढान् । प्राप्नोति चिन्तितं स्थान–मवन्तीसुकुमालवत् ॥ १ ॥

तथाहि–अन्येद्युः श्रीसुहस्तिसूरयो भूवलयं प्रबोधयन्तो देवाधिदेववन्दनार्थमवन्तीं ययुः । तत्र भद्रः श्रेष्ठी
वसतिस्म । तस्य भद्रा प्रिया । तयोर्धर्मकर्मकुर्वाणयोरन्येद्युः सत्स्वप्नसूचितो नन्दनोऽभूत् । जन्मोत्सवः पित्रा
कारितः । क्रमात्तस्यावन्तीसुकुमालेति नाम पित्रा दत्तम् । मातापितृभ्यां धर्मकर्मशास्त्रं पाठितः पुत्रः । पुनरवसरे
द्वात्रिंशन्महेभ्यानां पुत्रीर्द्वात्रिंशद् देवकुमारीसोदरा अवन्तीसुकुमालः परिणायितः पित्रा । अन्येद्युस्तत्र भद्रमनु-
ज्ञाप्य भद्रदत्तोपाश्रये श्रीसुहस्तिसूरयः स्थिताः । तत्र प्रदोषे तेऽन्येद्यु–राचार्या मधुरया गिरा, गुणयन्तिस्म
नलिनी–गुल्माध्ययनमादरात् ॥ १॥ ललन् भद्रात्मजोऽवन्ती–सुकुमालो निजालये । द्वात्रिंशत्कामिनीजानि–रुन्निद्र-
स्तत्तदाऽशृणोत् ॥ २ ॥ अवन्तीसुकुमालोऽध्ययनं तद्गुरुभिर्गुण्यमानं श्रुत्वा दध्यौ–किमिदं गुरुभिरुच्यमानं मया
दृष्टमस्ति नलिनीगुल्मविमानमिति पुनः पुनरूहापोहपरोऽवन्तीसुकुमालो जातिस्मृतिवानभूत् । अहं प्राग्भवे
नलिनीगुल्मविमाने देवोऽभूवम् । नलिनीगुल्मविमानसुखात्रत्यशर्मणोर्मेरुसर्षपयोरिवान्तरं विद्यते । तेन यदि तत्सुखं
प्राप्यते तदा वरम् । यतः–" देवाणि देवलोए, जं च सुखं तं नरो सुभाणिओवि । न भणइ वाससएणवि,

जरस वि जीहासयं हुज्जा ॥ १ ॥ " एवं विमृश्य गुरुपार्श्वे गत्वा गुरून् भक्त्या नत्वाऽवन्तीसुकुमालो जगौ भगवन्तो ! यूयं किं नलिनीगुल्मविमानादत्राधुना समायाताः । येन श्रीपूज्यैः तत्रत्यस्वरूपं कथ्यमानमास्ति । गुरुभिरुक्तं—वयं तत्राधुना न गताः स्मः । किंतु श्रीसिद्धान्तोक्तमधुना श्रीनलिनीगुल्मविमानस्वरूपं गण्यमानमस्ति । तस्मिन् नलिनीगुल्मविमाने सन्ति ये देवास्तेऽतीव सुखिनः सन्ति । अवन्तीसुकुमालः प्राह—अहं तु ततो विमानादायुषः क्षयादत्रोत्पन्नोऽस्मि । तस्य विमानस्य सुखस्मरणादहमत्र स्थातुं न शक्तोऽस्मि । अधुना एता वध्वो राक्षसीतुल्याः शोभन्ते ताभ्यो देवनारीभ्यः । तेनात्र क्षणं स्थातुं न शक्यते । तथा कुरु यथा मह्यं दीक्षां दत्त्वा जन्म कृतार्थं करोमि । एता वध्वो व्याघ्र्य इव मम भान्ति । तेन संयमं मह्यं ददत यूयम् । गुरुभिरुक्तं—मातापितृबन्धूनामनुमतिं विना दीक्षां दातुं न शक्यतेऽस्माभिः । ततस्त्वरितं तत्र विमाने गन्तुकामेनावन्तीसुकुमालेन स्वयं संयमं गृहीत्वा गुरून्नत्वा श्मशानवने गत्वा कायोत्सर्गे स्थितम् । तदा पश्चाद्भवसम्बन्धिनी प्रिया शिवाभूता तत्रागता । अवन्तीसुकुमालं कायोत्सर्गे दृष्ट्वाऽतीव कोपाविष्टा तं तथा खंडशश्चकार शिवा, तदा शुभध्यानादवन्तीसुकुमारो मृत्वा तदानीं नलिनीगुल्मविमाने गतः । प्रातः मातापितरौ

प्रियाश्चावन्तीसुकुमालस्य मृत्युस्वरूपमवगत्य दुःखिता अभूवन् । ततो गुरुभिरतिशयज्ञानिभिस्तत्राभ्येत्योक्तं–असौ अवन्तीसुकुमालो नलिनीगुल्मविमाने ययौ । अत्रत्यं सुखमस्य न रोचते । ततो यथा तेन दीक्षा गृहीता, यथा अवन्तीसुकुमालो नलिनीगुल्मविमाने गतः । तथा गुरुभिरुक्तं–यत्रावन्तीसुकुमालः कर्म्म क्षिप्त्वा स्वर्गं गतः । तत्स्थाने कर्म्म क्षिप्त्वा नलिनीगुल्मविमाने गतः । तथा गुरुभिरुक्तं–यत्रावन्तीसुकुमालः कर्म्म क्षिप्त्वा स्वर्गं गतः । तत्स्थाने महाकालनाम्ना प्रासादं महान्तं मातापितरौ कारयामासतुः । श्रीपार्श्वनाथप्रतिमां स्थापयामासतुश्च । ततः सर्वाः प्रियास्ता वैराग्याद् दीक्षां ललुः ॥ इति अवन्तीसुकुमालकथासम्बन्धः समाप्तः ॥ ३१ ॥

पात्रे ददाति यो वित्तं, नित्यं शक्त्या सुभक्तितः । सौख्यानां भाजनं स स्या–द्यथा धन्योऽभवत् पुरा ॥१॥
पश्चात्तापं प्रकुर्वन्ति, दत्त्वा दानं मुनौ च ये । दुःखानां भाजनं ते स्यु–र्यथा धन्याग्रजाः क्षितौ ॥ २ ॥

तथाहि–प्रतिष्ठानाख्ये पुरे अभ्रङ्कषजिनचैत्यालङ्कृते जितशत्रुराजा राज्यं करोतिस्म न्यायाध्वना । य(इ)तः पूर्वं लज्जमानमेकं कुटुंबकं निःश्रीकं तत्र पुरे आजीविकाकृते समागमत् । तत्रैको बालको दाता, विनयी करुणापरः । वत्सरूपाणि लोकानां, चारयामास वृत्तितः ॥ १ ॥ कस्मिंश्चिदुत्सवे उद्याने लोकान् परमान्नादिप्रवराहारभक्षणपरान् वीक्ष्य वत्सरूपाणि तत्र मुक्त्वा गृहेऽभ्येत्य च मातुरग्रे दारकः प्राह–मातरद्य लोकाः परमान्नं भक्षयन्तः

सन्ति । तेन ममापि तद्देहि । मात्रोक्तं—पुत्र ! द्रव्यं विना कथं मया परमान्नादि तुभ्यं दास्यते । स पुत्रः प्राह—मातः ! यथा तथाऽऽनीय तन्मह्यं देहि । यतः—" चोरा य चौल्लका विय, गंधी विज्जा य भट्टपाहुणया । वेसाधुत्तनरिंदा, परस्स पीडं न याणंति ॥ १ ॥ " ततस्तेन पुत्रेण रुदताऽत्यर्थं माता मार्गिता तदप्राप्नुवती रुरोद । तां रुदन्तीं वीक्ष्य प्रातिवेश्मक्यस्तद्दुःखदुःखिता अप्राक्षुर्दुःखकारणम् । तया च पुत्रमनोरथः प्रोक्तः । ताभिरार्द्रचित्ताभिः प्रातिवेश्मिकाभिः पृथक् पृथक् क्षीरादिकं दत्तम् । मात्रा संस्कृत्य परमान्नं खंडादियुतं पुत्रस्थाले परिवेश्य कार्येण केनचिदन्यत्र गतम् । इतः सुकृतैराकृष्टस्तस्य गृहाङ्गणे मासक्षपणपारणे विहृत्यर्थमागान्मुनिः । दृष्ट्वा तं मुनिमनभ्रवृष्टिमिव रोमाञ्चकञ्चुकितबाल उत्थाय पाणिभ्यां पायसस्थालं गृहीत्वा प्रणम्य चावग्—भगवन् ! इदं परमान्नं प्रासुकं विद्यते । कृपां कृत्वा ममोपरि गृहाण, येनाहं कृतार्थो भवामि । तच्छुद्धमाहारं मत्वा मुनिः पात्रमधारयत् । धन्यंमन्योऽर्भकः सोऽपि परमान्नं तस्मै ददौ । तस्मात् पात्रदानतः स मनुष्यायुर्बबन्ध । ततो माता समागात्, रिक्तं स्थालं वीक्ष्य पुनः पुत्राय परमान्नं पर्यवेषयत् माता । बहु परमान्नं भक्षितं तेन । ततः स एव बालो बहिर्गतो वत्सरूपाणि गवेषयन् महर्षिं प्रणम्य तस्याग्रे उपाविक्षत् । " दुष्प्रापं प्राप्य

मानुष्यं, कार्यं तत् किञ्चिदुत्तमैः । येनाशु लभ्यते मुक्ति–सातं संसारिणा स्फुटम् ॥ १ ॥ संसारंमि असारे, नत्थि
सुहं वाहिवेयणापउरे । जाणंतो इह जीवो, न कुणइ जिणदेसियं धम्मं ॥ २ ॥ ” इत्यादि तत्पार्श्वे धर्मोपदेशं
श्रुत्वा हृष्टो बालस्तस्यामेव रात्रावकस्माद्विशूचिकया मृतः सन् गोपालः तत्रैव पुरे धनसागरस्य श्रेष्ठिनः शीलवती
प्रियाया गर्भे पुत्रत्रयोपरि वर्यस्वप्नसचितोऽवततार । ततः क्रमात् सा पुत्रं प्रासूत प्रशस्तेऽहनि उच्चैः स्थितेषु ग्रहेषु, तेषां
पुत्राणां नामानि क्रमान्मातापितृभ्यां दत्तानि । धनदत्तः १ धनदेवः २ धनचन्द्रः ३ धन्यः ४ । आद्यत्रयाणां
पुत्राणां क्रमात् प्रिया अभूवन् । धनश्री १ धनदेवी २ धनचन्द्रा ३ । धन्यजन्मनि तन्नाले इलातले निधीयमाने
निधानं निःसृतं तेन धन्योऽयं नाम कृतं तस्य । धन्ये वर्द्धमाने क्रमात् श्रेष्ठिगृहे दिने दिने लक्ष्मीर्विवृधे । समये
कलाचार्यपार्श्वे सकला धर्मकर्मकला ग्राहितो धन्यो मातापितृभ्याम् । धन्यस्यातीव गौरवे क्रियमाणे त्रयोऽपि सोदरा
ज्येष्ठाः पित्रोरग्रे प्रोचुः–एकोदरभवस्यास्य क्रियते किमादरोऽधिकोऽस्मभ्यम् । ततः पितरावूचतुः–गुणैरेष पूज्यः, यतः–
“ गुणा एव हि पूज्यन्ते, नतु ज्ञातेयडम्बरः । वानेयं गृह्यते पुष्प–मङ्गजस्त्यज्यते मलः ॥ १ ॥ ” भूयो बभाषिरे
ते भ्रातरः पितरं प्रति–परीक्षा क्रियतामिति । द्वात्रिंशद्रूपकांस्तेभ्यः पृथक् पृथग् दत्त्वा उक्तास्ते । पणायित्वा नौ

लाभं दर्शयिष्यथ यूयम् । प्रवृत्ता व्यवहर्तुं ते तु । धन्यस्तु बलाढ्यं मेढकं लात्वा राजपुत्रमेढकेन सममयोधयत् । दीनाराणां सहस्रं पणीकृत, यस्य मेढको हारयति सोऽन्यस्मै दीनाराणां सहस्रमर्पयति । तथा धन्यराजपुत्रमेढकयोर्युध्यमानयोर्धन्यमेढकेन जितम् । ततो दीनारसहस्र तत्र धन्येनार्जितम् । धन्यो दीनारसहस्रं लात्वा गृहमाययौ । अपरे सोदराः स्वल्पलाभाः समाययुः । धन्ये प्रशंसिते मातापितृभ्यां पुनस्ते द्वितीयेऽहनि प्रोचुः—एकशोऽद्यानेनार्जितं धनं तेनास्य वर्णनं क्रियते । अस्माभिस्तु बहुशो धनं पुरा यदर्जितं तद्विस्मृतं किं क्रियते । पुनः परीक्षा क्रियताम् । ततः पितृभ्यामर्पिताः षष्ठिः कल्याणसाषकारतेभ्यः पृथक् पृथक् [ दत्ताः ] । सर्वादरेण व्यवसायं कृत्वा अप्राप्तलाभास्त्रयोऽपि गृहमाययुः । धन्यस्तु धीमान् धर्म्मधुर्य आपणमध्ये गत्वा पणायोपाविशत् । इतस्तत्र महाधनः श्रेष्ठी कृपणशेखरो भरिभिरारम्भैर्धनमर्जयामास । दत्ते किमपि नो धर्मे परिवारस्यापि जीर्णवस्त्रान्नदानं विश्राणयति, स्वयं जीर्णं वस्त्रं परिधत्ते, धान्यं बर्जरीसंसक्तमन्नं भुङ्क्ते । घृतस्थाने तैलमेव स्तोकं भुङ्क्ते । वार्षिकादिषु पर्वसु मनागपि धनं न व्ययति स्म । ताम्बूलस्य स्थाने गुंदिकादिपत्राणि भक्षयतिस्म । अन्यं पुरुषं धनं व्ययन्तं वीक्ष्य शिरोर्त्तिर्भवत्यस्य । लक्ष्मीर्लक्ष्मीरिति कुर्वन् क्षणमपि विश्रामं न गृह्णाति । खनित्वाऽन्यदा गृहस्यान्तर्गर्ते

खट्वामन्तः शुषिरां कृत्वा रत्नोच्चयेन मध्ये पूरयामास। तां खट्वां गर्तोपरि स्थापयित्वा रात्रौ
द्रव्येण पूर्णाचक्रे श्रेष्ठी। खट्वामन्तः शुषिरां कृत्वा रत्नोच्चयेन मध्ये पूरयामास । जराजीर्णाङ्गो मृत्युकोटिं गच्छन्
द्रव्यरक्षार्थं स्वपिति मूर्छया श्रेष्ठी। न वेत्ति मूढचित्तोऽसौ यद्दानेन लक्ष्मीर्भवति । जराजीर्णाङ्गो मृत्युकोटिं गच्छन्
सन् श्रेष्ठी सुतैः खट्वाया अधः उत्तारयितुमारेभे यावत् तावच्छ्रेष्ठी जगौ। मां मा उत्तारयत यूयं खट्वाया अधः। अस्या-
मेव सुमस्य समाधिररिति । पुत्रैः प्रोक्तं—तात ! यदीच्छा कस्याश्रिता भवतो भवति सा निवेद्यताम्। ततः स श्रेष्ठी मोहात्
धनस्य स्वरूपं नाचीकथत्। प्राह च श्रेष्ठी—अपरेण पुण्येन सृतं, मया सार्द्धमेषा खट्वा ज्वालनीया, लोभेनैवं श्रेष्ठी जगौ।
यतः—"तृष्णाखानिरगाधेयं, दुष्पूरा केन पूर्यते। या महद्भिरपि क्षिप्तैः, पूरणैरेव खन्यते ॥ १ ॥ अधः क्षिपन्ति
कृपणा, वित्तं तत्र यियासवः। सन्तस्तु गुरुचैत्यादौ, तदुच्चैः फलकांक्षिणः ॥ २ ॥" पुत्रैर्हृष्टैरुक्तं—तातैवं करि-
ष्यतेऽस्माभिर्भवदुक्तम् । ततः श्रेष्ठी विपन्नः। खट्वायुतो रत्नव्यतिकराऽविज्ञैः पुत्रैः श्मशानभूमौ नीतः। श्मशा-
नपालकैः खट्वायां याचितायां श्रेष्ठिसुतैः सह कलिरजनि। ततः कलिभीतैः श्रेष्ठिपुत्रैः खट्वा चाण्डालेभ्योऽर्पिता।
सा खट्वा श्मशानेशेन विक्रेतुं चतुष्पथे स्थापिता। तां खट्वां सगर्भां सलक्षणां ज्ञात्वा जग्राह धन्यः। यतः—
"तृणवल्ल्यादिभिश्छन्नं, भूम्यां दूरगतं निधिम्। अपश्यन्तोऽपि चक्षुर्भ्यां, बुद्ध्या पश्यन्ति धीधनाः ॥ १ ॥" ततस्तां

खट्वां गृहे नीत्वा रत्नानि बहिः कर्षयित्वा जनकायार्प्पयामास धन्यः। ततः श्रेष्ठिना धन्यः सम्मानितः। ततो धन्यस्य कीर्तिः प्रससार। ततस्तद्भ्रातॄणां तदा तीव्रमत्सरोऽभूत्। ततस्ते सहोदरा ईर्ष्यालवस्तं हन्तुमिच्छन्ति सदा। तद्भर्तृचेष्टितं ज्ञात्वा भ्रातृजाया देवराय न्यवेदयन् प्रीत्या, अथ सोऽवक्–नापराद्धं मया किञ्चिदमीषां तदमी कथं द्रुह्यन्ति। ता अप्यूचुः–वत्सेदक्षाः खलाः खलु। यतः–"नाकारणे रुषां सङ्ख्याः, सङ्ख्याताः कारणाः क्रुधः। कारणेऽपि न कुप्यन्ति, ये ते जगति पञ्चषाः॥ १ ॥" ततो धन्योऽध्यासीत्–मयाऽत्र न स्थेयं विघ्नोत्पत्तेः मां दृष्ट्वा भ्रातॄणां दुःखं भवति। यतः–"परपीडां न कुर्वन्ति, महान्तो हि कदाचन। तेन नात्राधुना स्थेयं, मया क्षणमपि स्फुटम् ॥१॥" ध्यात्वेति निशि छन्नं धन्य एकाकी असहायः स्वपुरान्निरससार। धन्यः ततो ग्रामपुराकरादिसंकुलां विपुलां बभ्राम। वर्याकारः पुमानिति ध्यात्वा क्षेत्रेशेन भोजनार्थं न्यमन्त्रयत। आसिनो जेमितुं यावद्धन्यः तावत् कुटुम्बिप्रिया भक्षाहर्त्री समागात्। क्षेत्रेशेनोक्तं–अमुमतिथिं भोजय, कोऽप्ययं धन्यः पुमान् अस्ति। यतः–"अपूजितोऽतिथिर्यस्य, गृहाद्याति विनिश्चितम्। गच्छन्ति विमुखास्तस्य, पितरः सह दैवतैः॥ १ ॥" परमान्नं तया तस्मै परिवेषितं तदाऽकस्मात् कौटुम्बिकस्य हलं खेटयतो हलं कलशकण्ठेऽलगत्। ततः स्वर्णपूर्णं कुम्भं

निर्गतं दृष्ट्वा कौटुम्बिकोऽवग्—भो अतिथे ! गृहाण त्वममुं निधिम् । त्वद्भाग्यान्निर्गतोऽयं
निधिः, यथेच्छं भुंक्ष्व । तत उदारप्रकृतित्वात्तं निधिं तस्मै दत्त्वा ततोऽचलत् कृतप्रणामो धन्यः ।
ततश्चलन् राजगृहपुरबाह्योद्याने गत्वा धन्यो निषेदिवान् । पूर्वं शुष्कं वनं देवानुभावतो धन्यपुण्यप्रभावात्तदा
पुष्पितं फलितं चाभवत् । धन्यस्य प्रभावात् स्वं वनं फलितं पुष्पितं दृष्ट्वा हृष्टोऽभून्मालिकः । नीत्वा तं गृहे मालिकः-
सत्कारं चकार भोजनदानात् । राज्ञोऽथ श्रेणिकस्याभूत् सोमश्रीनाम्ना पुत्रिका । स्वसा च शालिभद्रस्य सुभद्रेति कनी-
यसी बभूव । तथा कुसुमपालस्य पुष्पवत्याह्वसुताऽभूत् । ताश्चैकदिवसजातत्वात् सर्वा मिथः सख्योऽभूवन् । ता
मिथोऽब्रुवन्निति कन्याः यदि अस्माकमेकः पतिर्भवति तदा वियोगो न स्यात् । अन्यदा पुष्पवत्यूचे सखी-
पुरः धन्योऽयं गुणवान् दृश्यते, तेनैवायं नो भर्ता भवति तदा वरम् । ततः सोमश्रीः पितुरग्रेऽवग्—धन्यो मे भर्ता
भवतु । ततो हृष्टेन राज्ञा सोमश्रीर्धन्याय दत्ता । ततो भद्रया मालिकेन च स्वपुत्र्यौ तस्मै दत्ते । ततो राज्ञा
धन्याय भूरिशो ग्रामा दत्ताः । धन्यो भोगान् भुङ्क्ते प्राक्कृतपुण्ययोगात् । अन्यदा धन्यो गवाक्षस्थः प्रियाभिस्ताभिः
समं रममाणो मातापितरौ चातिदुःखितौ राजमार्गे गच्छन्तौ ददर्श । द्वाःस्थेनानाय्य संस्थाप्य तौ पितरौ सहस्रा-

भरणैर्भूषयित्वा सप्रियो धन्यः प्रणणाम भक्त्या, पुनर्नत्वाऽपृच्छत् धन्यः । क्व गतं तत्सर्वं धनम् ? । तौ पितरावूचतुः- त्वद्गमनादनु धनमपि गतम् । क्रमात्त्वमत्रस्थो भूपादिविश्राणितपुत्रीकः श्रुतोऽस्माभिः । तेनात्रागमाम वयम् । पुनरपि धन्योऽभ्यधात्—मातर्मे भ्रातरः क्व गताः । साऽवोचत्—ते त्रयोऽपि लज्जमाना बहिः स्थिताः सन्ति । धन्यस्तु तान् भ्रातॄन् तत्रानाय्य सन्मानदानपूर्वं पृथग् ग्रामान् ददौ तेभ्यः । यतः—"सन्तः स्वभावतः सर्व—शत्रुमित्रादिषु स्फुटम् । करुणावासितस्वान्ताः, भवन्ति प्रतिवासरम् ॥१॥" ततः सर्वं कुटुम्बं सन्मानदानतः धन्यः प्रीणयतिस्म । मातापितरौ धन्यं धन्यमिति जल्पतः । यदा ते सोदरा धन्ये मत्सरं कुर्वन्ति धन्यश्लाघामसहमानास्ते गृहवित्तं विभज्य पृथक् स्थातुं जल्पन्ति । ततः श्रेष्ठी दध्यौ । निर्भाग्यशेखरा एते नन्दना ध्यात्वेति तान् प्रति श्रेष्ठी जगौ—धन्ये मत्सरो न क्रियतेऽस्यैव भाग्यं वर्तते । ते प्रोचुः पुनः पुनर्यत्तात ! त्वया धन्यश्लाघा क्रियते नैतद्युक्तम् । यदा पूर्वमस्मत्पनो गृहान्निर्गतः तदात्मीयगृहाद्रत्नानि बहूनि लात्वा गतः । तेनात्र तैरत्नैर्महर्द्धिको जातो राज्ञा सन्मानितश्च । तातपादाः प्रकुर्वन्ति श्लाघां धन्यस्य । अद्य पृथग् भवनं विना अस्माभिर्न भोक्ष्यते । इति भ्रातृवचः श्रुत्वा धन्यः पुनः स्वकुटुम्बं सुप्तं मुक्त्वा रात्रावेव शनैर्निर्गतो दूरदेशं यातुम् । नानादेशान् भ्रान्त्वा

परीक्षां नरय कोऽपि न कौशाम्ब्यां ययौ धन्यः । तत्र शतानीको राज्यं करोतिस्म । तस्य कोशे एकरत्नममूल्यमस्ति । परीक्षां नरय कोऽपि न
वेत्ति । ततः पुरे तत्र राज्ञा पटहो वाहितः । यो रत्नस्यास्य परीक्षां करोति तस्य तुष्टो राजा हस्तिनां शतमेकं
वाजिनां शतपञ्चकं सौभाग्यमञ्जरीपुत्रीं ग्रामपञ्चशतीयुतां दास्यति । ततो धन्यरतं पटहं तदा स्पृष्ट्वा राजसभायां
ययौ । ततस्तेन धन्येन तस्य रत्नस्य परीक्षा कृता, यथा सर्वा सभा चमत्कृता । राजा पुत्रीं तस्मै दत्वा ग्रामादि
पूर्वोक्तं ददौ महोत्सवपुरस्सरम् । ततः साधुरसौ इति तस्य धन्यस्य लोके ख्यातिरभूत् । द्रव्यार्जनकृते नराः तेन
धन्येन प्रेषिताः देशेषु भूरिषु । अन्येद्युः धन्येन ख्यात्यर्थं लोकाचारस्वभावतः पुराद्बहिः सरः खानयितुमारब्धम् ।
इतः श्रेष्ठीगृहे धन्ये निर्गते धनं सर्वं गतं यतः ततः श्रेष्ठी दुःख्यभूत् धनं विना । यतः—"सहोदयव्यथाः पञ्च,
दारिद्र्यस्यानुजीविनः । ऋणं दौर्भाग्यमालस्यं, बुभुक्षात्यन्तसन्ततिः ॥ १ ॥ तैलं नास्ति० ॥२॥" ततोऽथ दध्यौ श्रेष्ठी—
पुनर्नैव गौरवं लभते नरः पूर्वं धन्यप्रभावेण विख्यातोऽत्र पुरेऽभूवम् । सांप्रतं लघुवाणिज्यं कथं कुर्वे विमृश्येति कुटुम्बेन
सार्द्धं विचारं कृत्वा श्रेष्ठी सकुटुम्बो द्रव्यार्जनहेतवे विदेशं प्रति चिचलिपुरभूत् । श्रेष्ठी धन्यजायाद्वयं जनकगृहे
प्रेषयामास । ततः श्रेष्ठी सुभद्रां प्रति प्राह—याहि वत्से स्वपितृगहे । सुभद्रा प्राह—तात ! युक्तमुक्तं त्वयाऽधुना

एकाग्रचित्तवृत्त्या तु विज्ञप्तिं मे शृणु त्वं विज्ञप्तिं मेऽवधारय ॥ यतः—"सुखे च विभवोल्लासे, स्त्रीभिः सेव्यं पितुर्गृहम् । श्वसुरस्य गृहं दुःखे, सुखे मोच्यं न सर्वदा ॥१॥ दुःस्त्री पितृगृहं याति, दृष्ट्वा दुःखं प्रियालये, पितुर्गृहसुखं मुक्त्वा, दुःखे तिष्ठन्ति सुस्त्रियः ॥ २ ॥ सुखे दुःखे तथा दौःस्थ्ये, विदेशगमनेऽपि वा । देहच्छायेव तन्नूनं, स्थास्यामि श्वसुरालये ॥ ३ ॥" तस्मादहं सुखे दुःखे वा श्वसुरालये एव स्थास्यामि नान्यत्र । हृष्टः श्रेष्ठी धनसारः वधूवचः श्रवणात् । सपरिवारो गृहद्वारे मुद्रां विधाय निर्ययौ निशि । ग्रामाद् ग्रामं पुरात् पुरं देशाद्देशं भ्रमन् धनसारः कर्मकरकर्म कुर्वन् कौशाम्बीं पुरीं ययौ । श्रेष्ठी नरं कंचित् तत्र दृष्ट्वाऽपृच्छत् । भो भद्र कथ्यतां निर्द्रव्यो योऽत्र नरः समेति स कथं निर्वाहं करोति । नरः प्राह—हे श्रेष्ठिन् ! सधना व्यवसायेन निर्वाहं कुर्वन्ति । निर्धनाः कर्मकराः परगृहे कर्म कृत्वा निर्वहन्ति । ये च निर्धना अत्रायान्ति, ते धन्यराजस्य सरसः खन्यमानस्य खननद्रव्येण निर्वाहं कुर्वन्ति । नराणां तत्र सरसि दीनारद्वयं दीयते, स्त्रीणामेकं प्रवाहेण दीयते । कष्टाहेषु ते भोजनं कुर्वन्ति सरःखनकाः । तच्छ्रुत्वा धनसारः सकुटुम्बस्तत्र सरसि गत्वा खननकर्मकरैः सार्द्धं खननकर्म करोति । तत्र खननद्रव्येण च निर्वाहं करोति । अन्येद्युर्धन्यः शिरोधृतश्वेतछत्रोऽश्वारूढः पदातिश्रेणिवेष्टितः सरोवरविलोकनार्थं

गतः । तदा जीव नन्द जयेत्यादि विरुदावल्यः बन्दिभिः प्रोच्यन्ते । तदा जय जयेति भाषिणः कर्मकराः सर्वे निजं निजं कर्म त्यक्त्वा धन्यं प्रणमन्ति स्म । तेषां मध्ये स्वकुटुम्बकं वीक्ष्य धन्यो दध्यौ किमेतद्दैवेन कृतम् । माता चेयं पिता चायं, ममैते सोदरास्त्रयः । भ्रातृजायाः पुनरिमाः, सुभद्रा प्राण वल्लभा ॥ १ ॥ गोभद्रो जनको यस्या, भद्रा यस्या जनन्यहो । शालिभद्रानुजा सेयं, शीर्षे वहति मृत्तिकां ॥ २ ॥ विचिन्त्येति धन्यः प्राह—यूयं कुतः समागताः ? । ततः ते कर्मकराः स्थाननामादि संगोप्य मृषाउत्तरं ददुः इति धन्यो दध्यौ—एते मां नोपलक्षयन्ति । यतोऽहमीदृशीं राज्यावस्थां प्राप । ममैते स्वजना दुःखावस्थायां पतिताः सन्ति । यतः—"केऽपि सहस्रंभरयो, लक्षम्भरयश्च केऽपि नराः । नात्मम्भरयः केऽपि, फलमेतत्सुकृतदुष्कृतयोः ॥ १ ॥" ततः स्वसेवकानाकार्य धन्यः प्राह—एतेषां भोजने घृतं देयं, एतेऽतीव दुःस्था दृश्यन्ते । दयास्थानं च वैदेशिका विद्यन्ते । ततस्तैरुक्तं—स्वामिन् ! सर्वेषां घृतं स्याच्चदा वरम् । राज्ञोक्तमेवं भवतु । ततः कर्मकराः सर्वे हृष्टा घृतं भक्षयन्तो जल्पन्ति स्म मिथः—एतेषां प्रभावतोऽस्माकमपि भोजने घृतमभूत् । द्वितीयेऽपि दिने तत्रागतो धन्य आहूय श्रेष्ठिनं प्रति मधुरया गिरा प्रोचे—श्रेष्ठिंस्तव कुटुम्बमतीव दुर्बलं दृश्यते । श्रेष्ठी जगौ—तक्राभावात्सर्वस्य कुटुम्बस्य रात्र्यन्धताऽजनि किं क्रियते, पूर्वकृतकर्मणैवंविधाऽवस्था

व्यश्राणि। ततो धन्योऽवग्–अस्मद्गृहे बह्व्यो गावो महिष्यश्च दुह्यन्ते, तेन तक्रग्रहणाय त्वयैका वधूर्वारकेण प्रेष्या। ततः श्रेष्ठी जगौ–महान् प्रसादस्ते, अतिप्रणामं चकार। ततो धन्यो दैवगतिं निन्दन् बहुजनपरिवृतः स्वगृहं ययौ। ततः प्रियाग्रे प्राह धन्यः–भो प्रिये! एकः श्रेष्ठी करुणास्पदं बहिः सरः खनितुं समागतोऽस्ति। तस्य पुत्रचतुष्टयं विद्यते। तेषां पत्न्यः क्रमादेताश्चतस्रः सन्ति। तासां मध्याद्यदा एकाऽपि वधूरायाति तदा तस्यै महाकुम्भस्तक्रपूर्णः समर्प्पणीयस्त्वया। यदा लघ्वी स्नुषा समेति तदा तस्यै कुम्भकादि धान्यं शाल्यादि देयं त्वया। तेऽतीव दुर्बलाः सन्ति। तेभ्यो दानं ददत्यास्तवापि पुण्यं भविष्यति। दीनेभ्यो दानं दत्तं बहुपुण्याय भवति। यतः–"अभयं सुपत्तदाणं, अणुकंपा उचियकित्तिदाणं च। दोहिवि मुक्खो भणिओ, तिन्निवि भोगाइअं दिंति ॥ १ ॥" पतिनिर्देशात् सा तस्यै शाटिकां ददौ। स्नुषां शाटिकासहितां बहुतक्रमानयन्तीं वीक्ष्य श्रेष्ठ्याह––एषा भाग्यवती स्नुषा। तच्छ्रुत्वा श्रेष्ठिनं प्रति तिस्रो वध्वः प्रोचुः समत्सराः। त्वया व्याख्यातोऽग्रेऽस्माकं देवरो विदेशं गतः। अधुनैवं व्याख्यायमानाऽसावपि गमिष्यति। दिवा च मृत्तिकावहनं कुरुते। रात्रौ च भूमौ स्वपिति। एतावती एषा भाग्यशालिनी विद्यते। अन्यदा धन्यस्तां सुभद्रां समागतां वीक्ष्य पप्रच्छ का त्वं कथमिहागता? लज्जयाऽधोमुखी साऽवग्–अहं

शालिभद्रस्वसा गोभद्रश्रेष्ठिपुत्री । त्वन्नामाभिधानेन पुरुषेण परिणीताऽहम् । स च गृहकलहे जायमाने विदेशं गतः । धन्योऽवग्—भद्रे तव पतिर्विदेशं गतः सन् त्वां विना मृत एव सम्भाव्यते । ततः पतिव्रतं त्यक्त्वा मया सह भोगान् भुंक्ष्व । साऽपि तद्वचः श्रुत्वा वज्राहतेव हृदि कर्णौ पिधाय तं प्रत्युपशङ्कासारमाह— " गतियुगलकमेवोन्मत्तपुष्पोत्करस्य, त्रिनयनतनुपूजा वाऽथवा भूमिपातः । विमलकुलभवानामङ्गनानां शरीरं, पति-करजरजो वा सेवते सप्तजिह्वः ॥१॥ " हे धन्य साधुरसाधुरस्त्वं दृश्यसे मयाऽधुना । यन्मां वाञ्छसि परस्त्रियम् । परस्त्री-भोगादिह लोके परलोके च दुःखं लभते जनः । यतः—" विक्रमाक्रान्तविश्वोऽपि, परस्त्रीषु रिरंसया । कृत्वा कुलक्षयं प्राप, नरकं दशकन्धरः ॥ १ ॥ " धन्योऽवक् कुप्य मा भद्रे !, कारणं च निशम्यताम् । परस्त्रीलम्पटो नाऽहं, नाह-मन्यरमाहरः ॥ २ ॥ इदं वचनं त्वां परीक्षितुं मया जल्पितम् । साऽवग्—यदि मम त्वं पतिरसि तदा किमप्यभि-ज्ञानं कथय । सोऽवग्—राजगृहेशस्य धन्यो जामाता बभूव । तत्र प्रियात्रयं मुक्त्वा गात्रमात्रोऽत्र चागमम् । मया तुभ्यमेका मुद्रिका रत्नमयी दत्ता । इत्युक्ते तेन सा प्रियं मत्वा धन्यंमन्या त्रपापरा अधो विलोकयामास । ततो जीर्णवस्त्रपरित्यागाद्दिव्यवस्त्राभरणभूषितां प्रियां कृत्वा धन्यश्चक्रे स्वगृहस्वामिनीं ताम् । इतः तामनागतां लब्ध्वा

वधूं वीक्ष्य वृद्धो वृद्धवधूं प्रत्यवक्—क्व गता सुभद्रा विलोक्यतां बह्वी वेला जाता । वृद्धा वधूः प्राह—तक्रदोहिनीं गृहीत्वा गृहीत्वा धनसाधुगृहे गता दासीव तस्य गृहे तिष्ठति । स परिवृढो वर्यमाहारादि तस्यै दापयामास । तेनातिलोभात् स्थिता तत्र संभाव्यते । ततस्तत्र गत्वा वृद्धा वधूस्तां दिव्याभरणभूषितां वीक्ष्य पश्चात्त्वरितं समेत्य श्वसुराग्रे प्राह—मयोक्तं—एषा तत्र यान्ती कदाचिद्विरूपं करिष्यति । अद्य तत्र गता सती तस्य धन्यसाधोः प्रियाऽजनि। स्त्रीणां चरित्रं को जानाति । यतः—"अश्वप्लुतं माधवगर्जितं च, स्त्रीणां चरित्रं भवितव्यता च । अवर्षणं चापि सुवर्षणं च, देवा न जानन्ति कुतो मनुष्याः ॥ १ ॥ प्राप्तुं पारमपारस्य, पारावारस्य पार्यते । स्त्रीणां प्रकृतिवक्राणां, दुश्चरित्रस्य नो पुनः ॥ २ ॥" तच्छ्रुत्वा श्रेष्ठी वज्राहत इव क्षणं भूत्वा व्यचिन्तयत् । अनया स्नुषया किं कृतं, हा धिक्, कुलद्वयेऽपि कलङ्कः कृतः । ततः श्रेष्ठी तं वृत्तान्तं, स्नुषाहरणकृतं व्यवहारिणां पुरः प्राह । व्यवहारिणः प्रोचुः—धन्यसाधोरस्य न कदाचित् कुमार्गे प्रवृत्तिर्दृष्टा । धन्योऽसौ गीयते परनारीसहोदरः । अधुना तु यद्विपरीतं कृतं तत्र हेतुरस्माभिः सम्यङ् न ज्ञायते । एष गूढमना विद्यते । तथापि तस्याग्रे भवत्स्नुषाछोटनविषये कथयिष्यते । तास्मिन् श्रेष्ठिनि स्वस्थाने गते इभ्या धन्यसाधोरन्ते गत्वा प्रोचुः । धन्यस्त्वं राजजामाता, धन्यस्त्वं साधुशेखरः । तवेदं युज्यते

नैतत्, परस्त्रीहरणं शुभम् ॥ १ ॥ तेषामिति वचः श्रुत्वा वार्तामपरां कर्तुं धन्यो लग्नः । ततो धन्यस्यानीदृशमभि-
प्रायं मत्वा ते इभ्याः स्वं स्वं गृहं ययुः, मिथो निमन्त्रयन्तिस्मेति । एषः पूर्वं वर्यो ज्ञातोऽधुना तु प्रकृतिरस्य परा-
घृताऽमृत् । यतः " बहुश्री राजसन्मानं, महाकुलजनिः पुनः । एतानि पुरुषं सद्यो, नयन्ति विकृतिं सदा ॥१॥ "
ततः श्रेष्ठी धनावहो धन्यसाधोः पुरो गत्वा जगाद—अन्यायं कुरुतेस्म योऽत्र तस्य दण्डं कुरु त्वम् । तदन्यायं
परित्यज्य मम स्नुषां मुञ्च । ततो धन्योऽवग्—भो भटा एष वधूं मार्गयति, तेनाऽयं गर्भागारे क्षिप्यताम् । ततस्तै-
र्भटैरुत्पाट्य धनावहो गर्भागारे क्षिप्तः । ततस्तत्र गत्वा धन्यः कृताञ्जलिः पितरं प्रणम्य प्राह—क्षन्तव्यो मेऽपराध-
स्त्वया । मया बालकवच्चापल्यं कृतम् । अहं तु तव पुत्र एव । तत् श्रुत्वा श्रेष्ठी हृष्टः । ततो धन्योऽवक्—त्वयोच्चैर्न
वक्तव्यमधुना । तत्रस्थः पिता गौरवितः । श्रेष्ठिनः पत्न्यादिकं विस्मृतं तदा । ततो मातापि तत्रैत्य प्राह—भो
धन्यसाधो त्वया कथं मम स्नुषा पतिश्च रक्षितः । ताभ्यां कोऽन्यायः कृतः । ततो गर्भागारे तां मातरं स्थापयित्वा
मध्ये गत्वा प्रणम्य पूर्ववत् धन्यो मातरं क्षमयामास । एवं भ्रातरोऽपि रावां कर्तुं समागताः स्थापिताः । ततो
भ्रातृजायाः पूत्कारं कुर्वत्यो धन्यद्वारे समेत्य प्रोचुः—असौ राजा अन्यायं कुरुते, अस्मदीयाः पतयोऽपि धृताः अनेन

धन्यसाधुनाऽधुना कस्याग्रे पूत्कारः करिष्यते । ततस्ताः प्रहरमेकं द्वारे स्थित्वा स्वकुटीरे गताः । प्रातस्ताः स्त्रियः शतानीकभूपसभायां रावां कर्तुं ययुः । चिरं जीव चिरं नन्देति जल्पन्त्यः प्रोचुश्च ताः—वयं कर्मकरत्वेन भवतो नगरे समागताः स्मः । भवतः पुरेऽधुना धन्येन साधुना प्रथमं देवरप्रिया पश्चात् श्वशुरः ततः श्वश्रूस्ततोऽस्मदीयाः पतयश्च हृताः कारागारे क्षिप्ताश्च । त्वमेव राजा प्रजापालोऽसि । हृतं कुटुम्बमस्माकं वयं कथं स्थास्यामः । उत्तरमपि स धन्यो न दत्ते । तासामिति वचः श्रुत्वा राजा धन्यपार्श्वे स्वसेवकं प्रेष्य निवेदयामास । एतासां स्त्रीणां कुटुम्बं मुञ्च । अन्यायो न क्रियते । धन्योऽवक्—भो राजसेवक ! अहं नान्यायं करोमि । कदाचित् यद्यहमन्यायं करोमि तदा किं सिद्ध्यते राज्ञा । ततः स राजसेवको राजपार्श्वे गत्वाऽवग्—धन्यो जल्पति—अहमेवंविधमन्यायं करोमि चेत्तदा किं करोति राजा । ततः क्रुद्धो राजा शतानीकस्तं जामातरं हन्तुं सकलसैनिकान् प्रैषीत् । सकोपं भूपं मत्वा धन्यस्तदा तत्क्षणात् संनह्य शकटेषु स्नुषादियुतं सर्वं वस्तु क्षिप्त्वा स्थितो यावत् तावद्राजसेवका युद्धं कर्तुं समागताः । मिथो युद्धे जायमाने शतानीकसेवकैर्भग्नं नष्टं च । ततो भग्नं स्वबलमाकर्ण्य शतानीको रणाय समागात् । अत्रान्तरे महामात्यैरभ्येत्य प्रोक्तं—स्वामिन्नयं तव जामाता,

तेन समं युद्धं कर्तुं न युज्यते । यदा धन्योऽत्रायातस्तदा त्वयैव बहुपरिच्छदः कृतः । वली जातोऽधुना, कुत्रापि विषमकार्ये क्षिप्त्वा हन्यते । अयं दुर्नयं कदापि न करोति । अधुना न ज्ञायते । कस्माद्धेतोरेवं करोति, किंचित् कारणं विद्यतेऽत्र । पृच्छ्यन्तामेताः स्त्रियः । इत्यादि विमृश्य ताः पृष्टा अमात्यैः । भवन्तीनां कोऽस्ति बान्धवो देवरो वा ? । ताः प्रोचुः—अस्माकं धन्याभिधो देवरः पुरान्निसृत्य कुत्रचिद् गतः । अधुना न ज्ञायते जीवन्नस्ति मृतो वा । सचिवैः प्रोक्तं—तस्याङ्गलक्षणं यूयं वित्थ ? येन प्रकटीक्रियते सः । ताः प्रोचुः—अस्माकं देवरस्य पादौ पद्माङ्कितौ हस्तौ च ऊर्ध्वरेखाङ्कितौ । तैरमात्यैरूचे—तर्हि धन्यस्य चिन्हवीक्षणहेतवे पादौ प्रक्षाल्येताम् । ततस्ताः स्त्रियोऽमात्यैर्धन्यपार्श्वे प्रेषिताः । परीक्षार्थं भ्रातृजायात्रयमागतं वीक्ष्य धन्योऽब्रवीदिति—यूयं किमर्थमिहागताः, युष्माकं किं प्रयोजनमस्ति । ताः प्रोचुः—देवरोऽसि त्वं नः । धन्योऽवक्—किं भवन्तीनां भ्रमोऽभूत् । अथवा किं यूयमाकाशे सुप्ताः, स धन्यः श्रूयते राजगृहेशस्य सुतापतिः । लक्षणं विद्यते क्रमयोरस्माकं देवरस्य, तेनैकदा पादौ प्रक्षालयितुं त्वं देहि । ऊचे धन्यः परस्त्रीणां स्पर्शात् पातकं भवेत् । नाहं परस्त्रिया सार्द्धं वच्मि । स्पर्शो तु का कथा । तेनेत्युक्ते ता मौनेन स्थिताः खेदं दधत्यः सचिवैरुक्तं—खेदं मा कुरुध्वं यूयं स्थिरं तिष्ठन्तु । भो

धन्य ! त्वं मा स्वभ्रातृजायाः खेदं नय । पापं तव लगदस्ति इत्यादि सचिवैरुक्तो धन्यो मायां मुक्त्वा भ्रातृजायात्रयं निजनिकेतने प्रैषीत् । ततः संरम्भं मुक्त्वा सर्वं कुटुम्बं प्रकटीकृत्य भक्तिपूर्वं धन्यः प्रणनाम । जेमणकं च चक्रे । ततो धन्यो नृपपार्श्वे नन्तुं गतो यावत्तावद्राजाऽर्द्धासनं दत्वा तस्मै जगौ—भो धन्य ! त्वं धन्योऽसि । त्वया कथमेता भ्रातृजायाः खेदिताः सुचिरं ? धन्योऽवग्—भोभूप श्रूयतां बन्धुप्रिया बन्धूनां मिथो भेदं कुर्वन्ति । यतः—"बन्धूनां स्नेहबद्धानां, विना नारीं नहि च्युतिः । तालकस्य द्विधाभावं, करोति कुञ्चिका क्षणात् ॥१॥" नारीणां वचनैर्देव !, बान्धवाः स्युः पृथक् पृथक् । इति हेतोर्मया भ्रातृ–जायाः संप्रति खेदिताः ॥ २ ॥ इत्यादि प्रीतिसंलापैः प्रीणयामास भूपं धन्यः ततः क्षोणीशं प्रणम्य धन्यः स्वगृहे गतः । ततो विनयेन पित्रादीन् प्रणम्य पूर्वं संजातं स्वगृहवृत्तान्तमापृच्छद्धन्यः । ततः श्रेष्ठी जगौ—यदा त्वं निर्गतस्तदा राज्ञा सर्वस्वं जगृहे । येषु देशेषु यद् द्रव्यं व्यवसायार्थसभूत् तत्तत्तदा विनष्टम् । दारिद्रे समागते गृहे मुद्रां दत्वा आजीविकाकृते वयमत्र समागताः । ततो राज्ञा शतानीकेन समं महाप्रीतिर्धन्यस्याजनि । सुभाषितादिभिर्मिथो राजधन्यौ कालं क्षणमिव नयतः । ततः पिता सर्वेषां पुत्राणां पुरः प्राह—भवद्भिर्दृष्टं धन्यस्य भाग्यम् । ततः सर्वे सोदरा धन्येन मानिताः । ततः पत्नीद्वययुतो धन्यो माता-

चतस्रो महेभ्यानां
पित्रादिभिः सह राजगृहपुरं ययौ । श्रेणिकेन तदा महोत्सवपुरस्सरं पुरमध्ये निवेशितो धन्यः । चतस्रो महेभ्यानां कन्यकास्तदा धन्यः पर्यणैपीत् । प्रियाष्टकं तदा धन्यस्य जज्ञे । तदा धनदस्य धन्यस्य च धनेनान्तरं न ज्ञायते । इतस्ते भ्रातरो धन्यदत्तग्रामाः सुखेन तिष्ठन्तिस्म । क्रमात् तत्र दुष्काले पतिते सर्वे लोका विदेशं ययुः । तेऽपि धन्यसोदराः क्षीणधना त्यक्तगर्वा अभूवन् । अनिष्पन्नेपु ग्रामेषु निर्द्धनास्ते स्पर्द्धां धन्येन दधाना लोकैर्हक्किता मालवं ययुः । आजीविकाकृते वृषान् बहुभारभरितान् कृत्वा ग्रामाद्ग्रामं गच्छन्तस्ते धनावहपुत्राः खेदं लभन्ते स्म । निर्भाग्या लाभमिच्छन्तस्ते गोधूमैर्वृषान् भृत्वा वाणिज्यार्थं राजगृहे समाययुः । तेषु चतुष्पथस्थितेषु क्रयविक्रयादिकुर्वत्सु तुरगारूढो धन्यो नृपमन्दिरात् समाययौ । धन्यस्य श्रियं तथाविधां बान्धवानां तादृशीं च वीक्ष्य जनोऽवदत्—हा दैवनिर्मितं कीदृग् बान्धवेष्वप्यन्तरं दृश्यते । यतः—"एकोदरसमुत्पन्नाः, एकनक्षत्रजातकाः । न भवन्ति समाः शीलाः, यथा बदरीकण्टकाः ॥१॥" धन्यो लोकवचः श्रुत्वा करुणापरोऽश्वादुत्तीर्य पादयोर्न्यपतत् । अत्यर्थं लज्जितास्ते मौनं दधुस्तदा । ततस्तान् गृहीत्वा स्वगृहं ययौ धन्यः । ततस्तान् वर्यविष्टरे निवेश्य धन्यः प्राह—युष्माकमियं लक्ष्मीर्मद्गृहसम्बन्धिनी स्वेच्छया विलसन्तु भवंतः । यतः—" विपुलापि न सा लक्ष्मी—र्भुज्यते या न बन्धुभिः । काकोऽपि वर्ण्यते सद्भि—र्भव्यः

स्वज्ञातिपोषणात् ॥१॥" तेऽप्यूचुर्भ्रातरः—तव गृहे वयं न स्थास्यामः धन्योऽवक्—तर्हि विभज्य तुर्यभागं धनस्य मह्यं ददतु भवन्तः। ततश्चतुर्णां भ्रातॄणां प्रत्येकं हेम्नः कोटयश्चतुर्दश जाताः। तैर्भ्रातृभिर्धन्यदत्तं धनं गृहीतम्। यतः—"दीयमानं न गृह्णन्ति, ये ते जगति पञ्चषाः। स्वकीयं परकीयं वा, धनमिच्छन्ति जन्तवः ॥१॥" ततो हेमयुता यावत्ते चलितास्तावद्वित्ताधिष्ठायकया देव्या द्वारे ते स्तम्भिताः। व्यावृत्तास्ते विलक्षाः सन्तो गर्वं मुक्त्वा धन्यपार्श्वेऽभ्येत्योचुः। त्वदीयं भाग्यमस्माभिर्दृष्टं भाग्यविवर्जितैः। मुधा अस्माभिस्त्वयि मत्सरः कृतः। अद्य प्रभृति नास्माभिर्मनाक् त्वयि मत्सरः कर्तव्यः। ततो धन्योऽवग्—भवन्तः समाधिना भुञ्जन्तु देवपूजादिपुण्यं कुर्वन्तः। ततस्ते तथा देवपूजादिकं कर्म कुर्वाणाः समाधिभाजोऽभूवन्। अन्येद्युस्तत्रागताश्चतुर्ज्ञानधारिणो धर्मघोषसूरयः तेषां पार्श्वे धर्मं श्रोतुं धन्यः सकुटुम्बोऽगमत्। स चतुर्ज्ञानी धर्मोपदेशं ददौ। तथाहि—जन्तूनामवनं जिनेशमहनं भक्त्यागमाकर्णनं, साधूनां नमनं मदापनयनं सम्यग्गुरोर्माननम्। मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनं, चेतःशोधनमिन्द्रियाश्वदमनं यत्तच्छिवोपायनम् ॥१॥' देशनान्ते धन्येन पृष्टं—भगवन्! केन कर्मणा भ्रातरोऽमी ममाग्रजाः व्यवसाये सत्यपि निर्धनाः। एतेषां गृहे धनं कथं न तिष्ठति? सूरीन्द्रः प्राह—एतैर्भूरितरं दानं न दत्तं

पूर्वभवे पुनर्न श्रद्दधे। तथाहि—लक्ष्मीपुरे एते त्रयोऽपि सोदराः सस्नेहा दारिद्रभाजोऽभूवन्। त्रयोऽपि नित्यं काष्ठानि कष्टेन वनादानीय विक्रीय कुटुम्बं पोषयन्तिस्म। अन्येद्युरते सशम्बलाः काष्ठानयनार्थं वने ययुः। मध्यान्हे ते यावद्भोक्तुमुपविशन्ति, तावन्मुनीन्द्रः शान्तात्मा मासक्षपणपारणार्थं तत्रागतः। तं तादृशं यतिमागतं दृष्ट्वा ते प्रोत्थाय प्रमुदिता बहुशम्बलमहमहमिकया विश्राणयन्तिस्म साधवे तस्मै। तेऽथ तस्मिन् साधौ गते पश्चात्तापमिति चक्रिरे। अत्रायातो मुधाऽस्माकं शम्बलं लात्वा गतः। न दायादो न गोत्रजः। अथवा साधोरस्य किं दूषणम्। वयमेव मूढा यतोऽविमृश्यैव दत्तं शम्बलम्। पश्चात्तापपरास्ते स्वसदनं ययुः। दानस्यानुभावेन तस्मिन् दिने किञ्चिदन्नं सुपात्राय दत्वा पश्चात्तापं चक्रुः। तेन पुण्येनाल्पर्द्धिव्यन्तरत्वं प्राप्य तस्माच्च्युतास्त्रयोऽपि भ्रातरो भवदीया अभूवन्। तादृग्दानप्रभावेणामीषां लक्ष्मीर्दर्शनप्रदाऽभूत्। योऽन्योऽपि साधुभ्यो दानं दत्वा पश्चात्तापं करोति स दानफलं न प्राप्नोति। उक्तं च—"दत्वा दानं ये मुनीन्द्रेषु पूर्वं, पश्चात्तापं कुर्वते पुण्यहीनाः। भाग्याल्लब्ध्वा यानपात्रं प्रधानं, झम्पापातं तन्वते ते समुद्रे ॥ १ ॥ दानस्य पुण्यं बहुभाग्यशाली, संप्रापयत्येव बहुस्थिरत्वम्। न भाग्यहीनाः खलु येन कुक्षौ, न पायसं तिष्ठति कुर्कुरस्य ॥ २ ॥ पश्चात्तापो न तत्कार्यो, दत्ते दाने मनीषिभिः। किन्तु पुण्य-

द्रुमो भाव-जलेन परिसिच्यते ॥ ३ ॥" अथ सुभद्रा शालिभद्रभगिन्यपि प्राह-भगवन्! मया केन कर्मणा मृद् वोढा । गुरवः प्रोचुः-स्वीयं भवं शृणु । यदा धन्यः पूर्वभवे वत्सपालकोऽभूत्, तदा यूयं चतस्रः प्रातिवेशिमक्यो जाताः । गोपेन मार्गिते भक्ष्ये तदा प्रथमया दुग्धं ददे, द्वितीयया तन्दुलाश्च ददिरे, खंडा तृतीयया ददे, आज्यं वर्यं चतुर्थ्या ददे । ताभिरप्यर्जितं पुण्यं दानेन । तदा सुभद्रे! यत्त्वया मृद्वहने कर्म्म बद्धं तच्छृणु । तथाहि-कलहं कुर्वाणा दासी क्वाचिद्गोमयं वहन्ती त्वया हक्कितेति-रे दासि भारसेवोद्वहसि । एवंविधया गिरा सा दासी दूनाऽजनि । येन त्वया दानं करुणया गोपालाय दुःस्थाय व्यतारि, तेन शालिभद्रस्वसा त्वमभूः । येन त्वया तस्या दास्या मृत्तिकां वहेति शापो व्यतारि पूर्वभवे, ततोऽस्मिन् भवे त्वया मृत्तिका व्यूढा । इत्येवं संशयं भित्त्वा धन्यः सपरिवारो धर्ममङ्गीकृत्य स्वगृहं ययौ । ततो दिने दिनेऽधिकामधिकां लक्ष्मीं प्राप्नुवन् राजमान्योऽभूत् । अष्टाभिः प्रियाभिः समं दोगन्दुकदेव इव भोगान् भुञ्जानः सुखी बभूव धन्यः । धन्यो यथा दीक्षां ललौ, यथा तपःप्रभृति पुण्यं कृत्वा अनुत्तरविमाने गतः । तत्सर्वं शालिभद्रकथानकाज्ज्ञेयम् । इति दानपुण्योपरि धन्यकथानकं समाप्तम् ॥ ३२ ॥

**अनित्यत्वादिकां शुद्धां, भावनां स्मरतो हृदि । इलातीतनयस्येव, पुंसः स्यात् केवली मुनिः ॥ १ ॥**

इभ्यनामा श्रेष्ठी तत्राजनि । नराधिपशतसेव्यो न्यायी जितशत्रुनामा राजाऽभूत्
तथाहि—इलावर्द्धने पुरे इलाभूषणे
दुःखमभूत् तत इलादेव्याः
तस्य धारिणीति भार्या शीलादिगुणधारिणी बभूव । तयोर्भुञ्जानयोः सौख्यमपत्याभाव इति
श्रीजिनाधिष्ठायिकायाः पुत्रार्थमाराधनं कृतं ताभ्यां प्रोक्तं च यद्यावयोः पुत्रो भविष्यति, तदा त्वन्नामाङ्कितं नाम तस्य करि-
ष्यते । तयोः सूनुः क्रमाज्जज्ञे तस्य जन्मोत्सवकरणपूर्वं इलातीपुत्र इति नाम कृतं ताभ्याम् । स ततो धात्रीभिर्लाल्य-
मानः क्रमादष्टवार्षिकोऽभूत् । ततः पितृभ्यां पाठाय लेखाचार्यसंनिधौ मुक्तः । विषमाण्यपि शास्त्राणि इलातीपुत्रः पपाठ
सूत्रार्थाभ्याम् । यौवनं प्राप्तः स तरुणीजने न मनाग् मनो दत्ते किन्तु साधुजनस्येव सम्यक् शास्त्रविचारणे । यतः—
“सन्तोषास्त्रिषु कर्तव्यः, स्वदारे भोजने धने । त्रिषु चैव न कर्तव्यो, दाने चाध्ययने तपे ॥१॥ पण्डितेषु गुणाः सर्वे,
मूर्खे दोषास्तु केवलाः । तस्मान्मूर्खसहस्रेण, प्राज्ञ एको न लभ्यते ॥२॥” ततस्त्रिवर्गशून्योऽयं माभवदिति ध्यात्वा
जडधीः पिता दुर्ललिताख्यां गोष्ठ्यां तं पुत्रं मुमोच । अत्रान्तरे वसन्तसमये समायाते नानाप्रकाराशोकचम्पकचूत-
जम्बूप्रभृतिवृक्षफलपुष्पादिशालिनि वने इलातीपुत्रो जगाम । लंखिकाख्यस्य नटस्य कन्यका नृत्यन्ती तेन ददृशे ।
तत इलातीपुत्रस्तामङ्गीकर्तुकामः पुनः पुनर्ध्यायन् निश्चेष्टः कीलित इवाजनि । इङ्गिताकारकुशलास्तत्सेवकास्तं

वीक्ष्य वयस्या इलातीपुत्रं प्रति जगुः—तव पिता त्वां विना अधृतिं करिष्यतीति । स्वगृहे गम्यते । तैरिलातीपुत्रः स्वगृहे नीतः । तत्र शयने सुप्तः क्षणमपि समाधिं न लभते । तं तथाऽवस्थं पुत्रं वीक्ष्य पिताऽवग्—भो वत्स ! तव किं मन ईदृशं दृश्यते । तव केनापराधः कृतः । त्वत्तुल्योऽपरः कोऽपि विचारवान्नास्ति । ततः पुत्रे मौनं श्रिते वयस्याः प्रोचुः । अस्य लंखकनटस्य कन्यायां परिणेतुं मनोऽस्ति । ततः पिताऽवग्—भो पुत्र ! त्वं कुलीनोऽकुलीनामिमां किं परिणेतुमीहसे । इति पितृवचः श्रुत्वा इलातीपुत्रो बभाषे । तात ! जानाम्यहं सर्वं सन्मार्गप्रवर्तनादि परं किं क्रियते, मनो मदीयमस्यामेव मग्नमस्ति । तस्यां लंखकन्यायां रक्तं पुत्रवचो मत्वा श्रेष्ठी दध्यौ—मयैवैतत् कृतमविचारितं पुत्रस्य कुसङ्गतिकरणात् । अथ वारितुं न शक्यते । मया निषिद्धः सन् कदाचिन् म्रियेत तदा मम का गतिः । इतो व्याघ्र इतस्तटीति न्यायः । यदि तामसौ न परिणेष्यति तदा मृत एव इत्यादि ध्यात्वा श्रेष्ठी-लंखकं प्रति जगौ—मम सनवे स्वसुतां त्वं देहि । ततो लंखकोऽभाषिष्ट स्पष्टं—त्वत्सूनोर्यदि वाञ्छा स्यात्ततोऽस्माकं मिलत्वसौ । ततः श्रेष्ठी खिन्नोऽपि प्राह सुताग्रे-वत्स ! भवत्वियं ते लंखपुत्री । पित्रोदितं श्रुत्वा दध्याविति इलातीसुतः । तातेन मत्कृते विरुद्धमपि वाञ्छितं प्रतिपन्नम्, अहं तु तां विना न क्षमो जीवितं धर्तुं, विचिन्त्यैवं गुरुजनोपदेश-

मवगणय्य मुत्कलाप्य मिलितुं लंखकपाटकेऽगादिलातीपुत्रः । तदा लंखकोऽवग्–यदि त्वमस्मदीयां नृत्यकलां शिक्षिष्यसे । तदा तुभ्यमियं कन्या दास्यते । ततः शिक्षितुं स लग्नः कामार्थी । "यतः कामाशुगैः स्वान्त–कुम्भे जर्जरिते सति । स्तोकमप्युपदेशाम्भः, क्षिप्तं सन्तिष्ठते कथम् ॥ १ ॥ प्राणानपि विमुञ्चन्ते, स्त्रीशस्त्रीदीर्ण-वक्षसः । मर्त्यारतृष्णाविगानस्य, त्यागे तु किमदुष्करम् ॥ २ ॥" प्रज्ञाप्रकर्षवशान्नृत्यकलासु कोविदोऽभदिलाती-पुत्रः । ततो लंखकोऽवक–स्वविज्ञानं प्रकाशय त्वं द्रव्यमर्जय । ततो महामहोत्सवेन कन्येयं तुभ्यं दास्यते । ततो वेनातटपुरे लंखकादियुतः इलातीपुत्रो गत्वा महीपालं भूपं व्यजिज्ञपत्–स्वामिन् ! अद्य वयं नाटकं दर्शयिष्यामः । नाटकं दर्शय त्वमित्युक्ते भूपेन इलातीपुत्रः प्रेक्षणं नानाभिनयबन्धुरं तथा चक्रे यथा लोकाः सर्वेऽत्यन्तं चमत्कृताः । तदानीं राजा लंखकसुतां वीक्ष्य मोहितो हर्तुकामोऽभूत् । ततो राजा जगौ–भो इलातीपुत्र ! वंशोपरि सुतरस्तन्तून् बद्ध्वा तेषु विलग्नो नृत्यं कुरु । ततस्तथा नृत्ये कृते तेन राजाऽवग्–निराधारो भव । निराधारे व्योम्नि स्थिते तस्मिन् राजा दध्यौ–असौ तु न मृतः कथं लंखकपुत्री मम भविष्यति । एवं द्वित्रिवारं स भूपेन नृत्यं कारितः । चतुर्थे वारके वंशोपरि स्थितो राजानं लंखकसुतासक्तमनसं ज्ञात्वा इलातीपुत्रो दध्यौ–अहो विषयवैषम्यं, रक्तोऽयं

राजा नीचकुलोत्पन्नायां नट्यामप्यभूत्। मां मारयितुं पुनः पुनः नृत्यं कारयति। स्वःस्त्रीतुल्येऽन्तःपुरे सत्यपि अस्यां स्त्रियां मनः कुरुते राजा। ततो धिग् मामिमं भूपं च। यतः—"स्वाधीनेऽपि कलत्रे, नीचः परदारलम्पटो भवति। सम्पूर्णेऽपि तटाके, काकः कुम्भोदकं पिबति ॥ १ ॥" मया यन्मातापित्रोर्वचनमुल्लङ्घ्य एवंविधमकार्यं कृतम्। मया निर्मलमपि कुलं कलङ्कितं—इत्यादिवैराग्यवासिताशय इलातीपुत्रः कस्यचिन्महेभ्यस्य गृहे शान्तचित्तान् मुनीन् भिक्षायै प्रविष्टान् दृष्ट्वा दध्यौ—धनपतेरेता वधू रूपाजितरम्भा दृष्ट्वा एते साधवो मनागपि न संमुखं विलोकयन्तिस्म। एते वन्दनीया एव। यतः—"ते कह न वंदणिज्जा, रूवं दट्ठूण परकलत्ताणं। धाराहयव्व वसहा, वच्चंति महीपलोअंता ॥ १ ॥ अलसा होइ अकज्जे, पाणिवहे पंगुला सया होइ। परतत्तीसुयबहिरा, जच्चंधा परकलत्तेसु ॥ २ ॥ अहं त्वस्यां नीचकुलोत्पन्नायां नार्यां मनोऽकार्षम्। एवं ध्यायतः स्वकर्मभेदतः इलातीपुत्रस्य वंशोपरिस्थितस्य केवलज्ञानमुत्पन्नम्। ततो देवतादत्तालिङ्गो दिव्यस्वर्णाम्बुजस्थितो भूपाग्रे धर्मोपदेशमेवं दत्तवान्। भो भव्या इह संसारे, मानुष्यमतिदुर्लभम्। लब्ध्वा पाथोनिधौ मग्नं, चिन्तारत्नमिवामलम् ॥ १ ॥ इत्यादि धर्मोपदेशमाकर्ण्य राज्ञा पृष्टं—भवतोऽस्यां स्त्रियां कथं रागोऽभवत्। ततः केवली जगौ—पूर्वं वसन्तपुरपत्तने भूपपुरोहितो मदननामा

द्विजोऽभूत्, मोहनी वल्लभा प्राणेभ्योऽप्यतिवल्लभाऽऽसीत् । अन्येद्युः धर्मोपदेशं श्रुत्वा सुगुरोः पार्श्वे व्रतं ललतुः । निबिडेन निगडेनेव, रागेण तयोर्वद्धयोरतत्रापि प्रीतिः सर्वथाऽन्योऽन्यं नात्रुटत् । मोहनी मूढात्माऽन्यदा जातिमदं मनाग् चक्रे । तत्कर्म अनालोच्य मोहनी गुरोरग्रे क्रमाद्दिवि गता । द्विजोऽपि मृतः स्वर्गे गतः । ततो दिवश्च्युत्वाऽऽयुःक्षये इलावर्द्धनपुरे श्रेष्ठिपुत्रोऽभूदेवः सोऽहमिलातीपुत्रः। मोहन्यपि स्वर्गाच्च्युत्वा जातिमदकरणाल्लंखपुत्र्यभूत्। तत्र पूर्वभवसम्बन्धिना मोहेनास्मिन् भवे मम तस्यामभूत् स्नेहः । तच्छ्रुत्वा वैराग्यवासिता राजराज्ञीनटात्मजादयो धर्मं प्रपेदिरे । ततः शुक्लध्यानात् प्राप्य केवलज्ञानं मुक्तिं ययुः । इति इलातीपुत्रकथा समाप्ता ॥ ३३ ॥

कृतपापोऽपि संसारान्, मुच्यते भूरिकर्मभिः । चिलातीपुत्रवत् स्वर्गा–दिसुखैर्व्रियते पुनः ॥ १ ॥

तथाहि—क्षितिप्रतिष्ठितपुरे ज्ञमन्यो यज्ञदेवाह्वो द्विजो जिनमतनिन्दां दीर्घसंसारदायिनीं करोतिस्म । स्वं पण्डितमन्यो द्विजोऽन्यदा वादाय केनचित् क्षुल्लकेनाहुतः । ततस्तेन द्विजेनोक्तं यो मां जयति तस्याहं शिष्यो भवामि । ततः क्षुल्लकेन निग्रहस्थानं नीतः क्षणाद्दीक्षां ग्राहितो द्विजः । अथान्यदा शासनदेवी द्विजं प्रति प्राह—यथा तरणिं विना चक्षुष्मानपि न पश्यति, तथा जीवो ज्ञानवानपि शुद्धं चारित्रं विना मुक्तिं न पश्यति, यतिवत् ।

ततो द्विजः शुद्धं चारित्रं पालयति । द्विजप्रिया श्रीमती तस्य वश्यतां कर्तुं तपःपारणके कार्मणं ददौ प्रियाय । तेन कार्मणेन क्लिश्यमानतनुर्द्विजो मृत्वा स्वर्गं गतः । ततः सा ब्राह्मण्यपि तद्दुःखदुःखिता व्रतं लात्वा स्वर्गं गता । पतिविषये कृतं कार्मणं नालोचितं तया । ततः स्वर्गाच्च्युत्वा यज्ञदेवो राजगृहपुरे धनसार्थवाहस्य चिलात्या दास्या उदरेऽवततार । क्रमात् पुत्रो जातः, तस्याभिधानं चिलातीपुत्र इति मातुर्नामानुसारेणाभूत् । यज्ञदेवप्रिया स्वर्गाच्च्युत्वा धनपत्न्यां भद्राह्वायां पुत्री सुंसुमाऽभूत् । पञ्च पुत्राश्च पूर्वं सन्ति तस्य । धनेन सुंसुमाख्याया दुहितू रक्षार्थं चिलातीपुत्रो मुक्तः । यदा यदा सुंसुमा रोदिति तदा तदा तस्या योनौ अङ्गुलीक्षेपं करोति । ततः सा न रोदिति, अतीव सुखं मन्यते । तं चिलातीपुत्रं तथा कुर्वाणं ज्ञात्वा राजदण्डभीत्या तं स्वगेहान्निरकाशयत् । यतः—"शिष्याणां हि गुरुः शास्ता, शास्ता राजा दुरात्मनाम् । अथ प्रच्छन्नपापानां, शास्ता वैवस्वतो यमः ॥ १ ॥" चिलातीपुत्रः सिंहगुहाभिधां भिल्लपल्लीं ययौ मल्लीमालामिवमधुव्रतः । मृते चौरपतौ चिलातीपुत्रः स्वस्वामी चौरैः कृतः । "विदेशान्तरितस्यापि, भाग्यं जागर्ति तद्वतः । अभ्रैरितरोहितस्यापि, भानोर्भासस्तमोपहाः ॥१॥ विषमास्त्रपीडितश्चिलातीपुत्रः सुंसुमां स्मरति । सुंसुमा च तम् । एकदा चिलातीसुनुराह—भो चोरा गम्यते राजगृहे पुरे, तत्र धनश्रेष्ठिगृहे बह्वी श्रीरस्ति एका

सुंसुमाह्वा सुता समस्ति च। यद्धनं चटति तद्भवतां सुंसुमा मम भवतु इति व्यवस्थया ते चौरा रात्रौ तत्र जग्मुः। चौरेषु गृहमध्ये प्रविष्टेषु श्रेष्ठी व्याकुलः पञ्चपुत्रयुक् कचिन्नीलीय रहसि स्थितो भीतः। यतः—"पंथसमा नत्थि जरा, खुहा समा वेयणा नत्थि। मरणसमं नत्थि भयं, दारिद्दसमो वयरिओ नत्थि ॥१॥" इतस्ते चौरा वित्तमादाय चिलातीपुत्रश्च सुंसुमां लात्वा चेलुः। ततः कलकलं कृत्वा पुरारक्षसहितः श्रेष्ठी पञ्चपुत्रयुक् चौरपृष्ठौ चचाल। ततस्ते चौराः पृष्ठौ पुरारक्षान्नि-ष्काशितासिनायातान् वीक्ष्य भयविह्वला बभूवुः। ते सर्वे चौरास्त्यक्तलोप्त्रा दिशोदिशं नेशुः। पुरारक्षा आत्तवित्ताः पश्चाच्चेलुः। ततश्चिलातीपुत्रः स्कन्धे तां कन्यां वहमानस्त्वरितं चचाल। पञ्चपुत्रयुतं श्रेष्ठिनं धनं निष्काशितासि-मागच्छन्तं वीक्ष्य कन्याशिरः छित्त्वा कबन्धं तत्रैव मुक्त्वा करात्तकन्यामस्तकोऽग्रतश्चिलातीपुत्रश्चचाल। इतो धनश्रेष्ठी धनं गतं वीक्ष्य पुत्रीकबन्धं वीक्ष्य क्षणं बहु विलप्य पश्चाद्वलित्वा स्वपुरमाजगाम। ततो धनः श्रेष्ठी श्रीवीरपार्श्वे धर्मं श्रोतुं गतः पुत्रयुतः। श्रीवीरेणेति धर्मोपदेशो ददे। "न श्रीर्मे विपुलाऽजनि नच मता जाता न वा सूनवो, जातं वा न गुणास्पदं न च मुदं धत्ते कुटुम्बं मम। द्विष्टो भूपतिर्मे खलाश्च कुदृशो देहं रुगार्तं सुतो, वाह्यो भूरि ऋणं गृणन्ति गृहिणां चेतसि चिन्ता इमाः ॥ १ ॥ इह संसारपाथोधौ, मानुष्यं प्राप्य

दुर्लभम् । आत्महितं हि कर्तव्यं सर्वारम्भेण धीमता ॥ २ ॥ प्राग्जन्मजाते सुकृते सति प्रभो, विवेकिभिस्तत्पुनरर्ज्यते नवम् । नीवीधनादस्य पुनः कुतोऽर्जनं, वाप क वा प्रौषितबीजभोजिनः ॥ ३ ॥ इह लोइयंमि कज्जे, सव्वारंभेण जह जणो तणइ । ता जइ लक्खंसेणवि, परलोए ता सुही होइ ॥ ४ ॥” यतः—“ प्रबुध्यस्व प्रबुध्यस्व, द्विधा सपदि मानव ! । गृहे ज्वलति चौरा हि, सर्वस्वं लुण्टयन्त्यमी ॥ ५ ॥ जरा जाव न पडिइ, वाही जाव न वड्ढई ॥ जाविंदिया न हायंति, ताव धम्मं समायरे ॥ ६ ॥” इत्यादिश्रीजिनस्यास्यादाकर्ण्य धर्मदेशनाम् । पञ्चभिः श्रेष्ठितनयैः, श्राद्धधर्मः समाश्रितः ॥ ७ ॥ धनः संप्राप्तवैराग्यः, श्रीवीरजिनसंनिधौ । जग्राह संयमं स्वर्गापवर्गसुखदायकम् ॥ ८ ॥ तीव्रं तपस्तप्त्वा चिरं धनः श्रेष्ठी स्वर्गमगात् । इतश्चिलातीपुत्रस्तु कराचस्त्रीमस्तको रुधिरक्लिन्नशरीरोऽग्रतो वर्त्मनि त्वरितं व्रजन् मुनिमेकं शान्तं कायोत्सर्गस्थं ददर्श । चौरोऽवग्—भो मुनिपुङ्गव ! त्वरितं धर्मं कथय, नो चेदनेनासिना स्त्रीमस्तकवच्छिरः छेत्स्यामि । ततस्तं योग्यं सत्पात्रं चौरं मत्वा मुनिरुपशमविवेकसंवरेति पदत्रयमुच्चरन् व्योममार्गे उत्पपात । स चौरश्चिलातीपुत्रो दध्यौ—अनेनाकाशगामिनी विद्या किं प्रोक्ता? अथवा मन्त्राक्षराण्युक्तानि, अथवा धर्माक्षराणि, इति ध्यायन् मुनिपदस्थाने उवसमविवेकसंवरेति ध्यायंस्तस्थौ

उपशमशब्दस्य कोऽर्थ इति ध्यायन् पुनर्जज्ञौ, उपशमः क्रोधाद्युपशान्तिः, एवं ध्यात्वोपशम आश्रितस्तेन चौरेण ।
विवेकस्य कोऽर्थः? इति ध्यायता विवेकार्थस्तेन ज्ञात इति कृत्याकृत्ययोर्विवेकः क्रियते । ततः कृत्यस्याङ्गीकारो-
ऽकृत्यस्य, त्याग इति विवेकः । ततो विवेक आश्रितस्तेन । संवरः पञ्चेन्द्रियाणां क्रियते, पञ्चेन्द्रियाणां प्रसरस्य
निरोधः, इति संवरस्तेनाश्रितः । इति त्रिपदीं ध्यायन् सार्द्धदिनद्वयं कायोत्सर्गे चौरः स्थितः । रुधिरगन्धेन समा-
गताभिः शूचिमुखीभिः कीटिकाभिः सर्वं शरीरं तस्य चालनीवत् कृतम् । तेन तथा कीटिकाविहितवेदनाऽधि-
सहिता, यथा सार्द्धदिनद्वयान्ते चिलातीपुत्रेण स्वर्गपदवी प्राप्ता । उक्तं च "जो तिहिं जएहिं सम्मं, समभि-
गओ संजमं समारूढो । उवसमविवेगसंवर–चिलाइपुत्तं नमंसामि ॥ १ ॥ अहिसरीया पाएहिं, सोणियगंधेण जस्स
कीडीओ । खायंति उत्तमंगं, तं दुक्करकारयं वंदे ॥ २ ॥ धीरो चिलाइपुत्तो, मूइंगलिआहि चालिणिव्व कओ । जो
तहवि खज्जमाणो, पडिवन्नो उत्तमं अट्ठं ॥ ३ ॥ अड्ढाइज्जेहिं राइंदिएहिं, पत्तं चिलाइपुत्तेण । देविंदामरभवणं,
अच्छरगणसंकुलं रम्मं ॥ ४ ॥ ॥ इति चिलातीपुत्रकथा समाप्ता ॥ ३४ ॥

तीव्रेण तपसा कर्म, कृतं दुष्टमपि स्फुटम् । युगबाहोरिवोपैति, क्षयं शीघ्रं शरीरिणः ॥ १ ॥

तथाहि—पाटलीपुरं नगरं शोभते स्म । तत्र विक्रमभूपो राज्यं कुरुतेस्म । मदनरेखा तस्य पत्नी बभूव । मतिसागरनामा मन्त्रीशो बभूव । अन्यदा राजा सचिन्तां पत्नीं वीक्ष्य दुःखहेतुं जिज्ञासुः पप्रच्छ । भो पत्नि ! तव कस्य वस्तुनो विषये चिन्ता विद्यते । इति भर्तृवचः श्रुत्वा प्रिया प्राह—नाधुना वर्तते किञ्चि—दन्यदुःखस्य कारणम् । लालितायास्त्वया पत्या, विहाय निरपत्यताम् ॥ १ ॥ तस्याः प्रियाया वाचं श्रुत्वा त्रिसन्ध्यं पूजापूर्वं पुत्रार्थं नृपः कुलदेवतामाराधयामास । क्रमात् पत्न्या गर्भोऽभूत् । क्रमात् प्राप्तसमये सा पुत्रमसूत । महोत्सवं कृत्वा युगबाहुरिति नाम ददौ राजा तस्मै । क्रमाद् वर्धमानो लेखशालायां पठितुं मुक्तो युगबाहुः पित्रा । यतः—“धनहीनो न हीनस्तु, धनं वा कस्य निश्चलम् । विद्याहीनस्तु यः कश्चित्, स हीनः सर्ववस्तुषु ॥ १ ॥ विद्या यशस्करी पुंसां, विद्या श्रेयस्करी मता । सम्यगाराधिता विद्या, देवता कामदायिनी ॥२॥” अन्यदा लेखशालायां कश्चिद्वैदेशिकोऽतिथिः समायातः सोऽभाषिष्ट । ब्रूत लोकोत्तरस्फूर्तिः, कथं भूयात्पुमानिति ? जगदुर्जगतीशेन, गौडेनाभिहिता बुधाः ॥१॥ शास्त्रे शस्त्रे च जागर्ति, यस्य कीर्तिरनुत्तरा । भाषितः पुरुषः सैषः बुधैर्लोकोत्तरं परम् । उपाध्यायोऽपि प्राह—यस्य शस्त्रकलायां शास्त्रकलायां च बुद्धिः प्रसरति स उत्तमो ज्ञेयः । उपाध्यायस्यैवं वाचं श्रुत्वा नृपाङ्गजो बहिर्वने गतो मुनिपार्श्वे पप्रच्छ—

लोकोत्तरा कलावाप्तिः कथं जायते पुंसाम् । ते मुनयो जगुः—भो विक्रमबाहुनन्दन ! शुभकर्मानुकूल्यात् सर्वं शुभं विद्यादि जायते । अशुभकर्मणा दुःखमूर्खादि भवति । पुनः मुनयः प्रोचुः—पञ्चम्यादितपोयोगै—र्देवताराधनेन च । ज्ञानव्यक्तिर्भवेन्नृणां, मुक्तिसौख्यप्रदायिनी ॥१॥ तपसा च दृढं कर्म्म, कृतं प्राणभुजा भृशम् । क्षयं गच्छति मार्तण्डा—दिवान्धकारसञ्चयः ॥ २ ॥ श्रुत्वा मुनिवचः स युगबाहुः षण्मासीं यावत्तपश्चकार । अथाकस्मान्मेघः समागात् । अम्भोदपटलैर्व्योम्नि, छादितः सितदीधितिः । मुखेन्दुः पान्थनारीणां, सकज्जलजलाश्रुभिः ॥ १ ॥ वारिभिः सरोह्रदादिभृतम् । एवंविधे वर्षति मेघे कश्चिद्राजानं प्रति प्राह—गङ्गाप्रवाहः प्लावयन् नगरं प्रसरति, स ततो भूपो यावदुत्तिष्ठति गङ्गाप्रवाहं पश्चाद्वालयितुं तावत् पुत्रः प्राह—ममादेशं देहि तात ! अहं यास्यामि । राजाऽवग्—हेपुत्र ! स्वर्णपुत्रमादाय तत्र गच्छ । पूजामस्य कृत्वा जलमध्ये प्रक्षिपेः । यथा जलोपसर्गः शान्तिं याति । तातं प्रणम्य तत्र गत्वा यावत्तातोक्तं चक्रे पुत्रः, तावद्राजपुत्रः कस्याश्चिन्नार्याः करुणध्वनिं शुश्राव । यावद्भूपभूस्तां कर्षितुं दध्यौ तावत् कापि स्त्री रुदन्ती जलचरान् भ्रमन्ती प्रकटीभूता जलमध्ये, प्राह च स्त्री—कोऽप्यस्ति भूपो भूपपुत्रोवा । यो मां ब्रुडन्ती प्रवाहाद्रक्षति । प्राह पुनः स्त्री—रत्नगर्भाऽपि वन्ध्याऽसि, कुतो देवि ! वसुन्धरे ! । यन्न जातस्त्वया कोऽपि,

मत्प्राणत्राणकारणम् ॥ १ ॥ श्रुत्वेति वचो भूपभूः सर्वं परिवारमवगणय्यैतां स्त्रियं कर्षितुं जलान्तः प्रविष्टः । वीक्षितः सैनिकैः कन्या–मुद्दिधीर्षुर्महीमिव । स्फुरद्रत्नतलां सोऽयं, नारायण इवाबभौ ॥ १ ॥ प्लवमानः कुमारो यावत्तस्याः पार्श्वे ययौ, तावत्सा दूरं दूरतरं यातिस्म । क्रमात्तस्याः पृष्ठौ गच्छन् कुमारः सैनिकस्य दृष्टिगोचरादहश्यतां भेजे । ततः सर्वे कुमारानुगा राजपुत्रमपश्यन्तो दुःखिनोऽभूवन् । इतस्तं कुमारमपहृतं दृष्ट्वा सूर्योऽस्तं गतः । यतः–" अस्तोक-शोकभृल्लोक–चक्रं चक्रन्द चक्रवत् । तत्र मित्रे स्फुरद्वृत्ता–देशे देशान्तरं गते ॥ १ ॥ " तदा लोका एवं जगुः–दिदृक्षुरिव तं भानुः, कुमारं मारविग्रहम् ॥ पाथोनाथपथेनाथ, पातालमुपजग्मिवान् ॥ २ ॥ अथ ते सैनिकाः पुर-मध्येऽभ्येत्य कुमारस्वरूपं भूपस्याग्रे प्रोचुः । दम्भोलिनेव भूपाल–स्ताडितो हृदयेऽपतत् । तद्वार्तादुःखसंघट्ट–जन्मना शोकशङ्कुना ॥१॥ चन्दनछटादिप्रक्षेपाद्राजा स्वस्थीकृतः प्राह पुत्रगुणस्वरूपमिति–क सा भक्तिः क सा शक्तिः, क सा क्षान्तिः क सा मतिः । एकैकशोऽपि दृश्यन्ते, हा हन्त नहि ते गुणाः ॥ १ ॥ त्वं तातवत्सलो वत्स !, जन्मतोऽपि प्रभृत्यभूः । मां जराजर्जरितं हित्वा, तत्संप्रति कुतो गतः ॥ २ ॥ ततोऽमात्या भूपं प्रति प्रोचुस्तदेति । स्वकर्मफलभोगेन, संसाराब्धौ शरीरिणः । बुद्बुदा इव यान्त्येके, समायान्त्यपरे पुनः

॥ १ ॥ यदेवेष्टवियोगादि, विरक्तेः कारणं सताम् । मोहान्धानां तदेवाहो, क्रोधशोककरं परम् ॥ २ ॥ न चक्रिणा न शक्रेण, कृतविक्रमसंक्रमम् । विश्वैकवीरमाख्यान्ति, दैवमेवंविधं बुधाः ॥ ३ ॥ वरसैन्येन दैत्येन, सेवितैः परिदैवितैः । असौ प्रकृतिदुर्दान्तः, कृतान्तः केन गृह्यते ॥ ४ ॥ इदं मन्त्रिवचः श्रुत्वा कृपाणमाकृष्य भूपः प्राह–कृतं तवानेन वक्तव्येन, दृष्टिपथाद् दूरं व्रज । ततो योजिताञ्जलिः सचिवेश्वरः प्राह–स्वामिन् ! मया मौढ्यादिदमुक्तं तथाऽपि किंचिदुच्यते । तदेवं दैवं यत्कुर्यात्, कर्म कुर्याच्छुभाशुभम् । शोभैव सृष्टिसंहार–कारिकारणवर्णना ॥ १ ॥ जरा नित्यं पृष्ठे धावति । पुत्रः समेष्यति दोदूया न क्रियते । इतोऽकस्मात् प्रातर्मङ्गलध्वनिः मंसलः श्रुतः । कश्चिन्नरस्तत्र तत्क्षणात् भूपाग्रेऽभ्येत्य प्राह–आन्ध्यहेतुतमःस्तोम–च्छेदभासुरभास्वतः । दिष्ट्या त्वं वर्द्धसे देव !, युगबाहोरिहागमात् ॥ १ ॥ पारितोषिकं दानं तस्मै वितीर्य भूपो विस्मेरनेत्रो यावदुत्तिष्ठतिस्म । तावच्छोककोकानां, शोकमुन्मूलयन्नयम् । स्वच्छरोचिरलङ्कार–भासुराकारविग्रहः ॥ १ ॥ स्वयमीक्षणराजीव,–जीवातुः प्रातरागतः । भास्वानिवोदयकला–दुर्निरीक्ष्यो नृपाङ्गजः ॥ २ ॥ युग्मम् । नन्दनं प्रणमन्तं परिष्वज्य भूपो जगादेति–पुत्र ! त्वं कुत्र गतोऽभूः ? कथमत्रागाः ? । ततो मन्मथाकारः कुमारः प्राह–ताताहं गङ्गाप्रवाहं वालयितुं गतः । तत्रैकां स्त्रीं रुदन्तीं कर्षितुं प्रविष्टः

तदा मूर्छामापम् । अग्रे गच्छन् मूर्छामुषितचैतन्य–स्तामथानुव्रजंस्तदा । कोऽहं किमर्थं कुत्रास्मी–त्येवं न प्रतिपन्न-
वान् ॥१॥ क्षणेन सचेतनीभूयाहं स्वं सैकते स्थितमपश्यम् । न तत्पुरं न सा गङ्गा, न सा कन्या न सा रसा । आक-
स्मिकमिदं जज्ञे, किं विचारपथातिगम् ॥ १ ॥ किमिन्द्रजालं किं वा स्वप्नं किं वा चैतन्यविप्लवः, विचिन्त्येति क्षणं समु-
त्थाय परिभ्रमन् कल्पद्रुमाणां काननमेकमपश्यम् । तमारामं विलोकयन्नहमेकं चित्रकारकं प्रासादमुच्चैः सप्तभूममपश्यम् ।
यावदहं तस्य षष्ठ्यां भुवि गतस्तावदपूर्वं गीतध्वनिमश्रौषम् । ततोऽग्रतो गत्वा द्वारदेशे विलम्बितोऽहं कयाचिद्वे-
त्रधारिण्यागत्य भाषितः । अहं श्रीशारदादेव्या, त्वदाकारणहेतवे । शब्दविद्या प्रतीहारी, प्रेषिता तत्पुरो भव ॥ १ ॥
ततस्तया तत्र नीतः । शारदादेवीमपश्यम् । चारुनारीप्रचारेण, नतेनाप्सरसां पुरः । प्रेक्षाकौतूहलेनोच्चैः, क्षण-
माक्षिप्तचक्षुषीम् ॥ २ ॥ तर्कसाहित्यविद्याभ्यां, वामदक्षिणपार्श्वयोः । वालव्यजनपाणिभ्यां, वीज्यमानां मुहुर्मुहु-
॥ ३ ॥ अथाहं तस्यै देव्यै नमोऽकार्षम् । ततोऽहं वाग्देव्या स्वपादपीठे निवेशितः । हारहूरामधुरया वाण्या
भाषितश्चेति । मा वत्स! विस्मयायत्तं, कार्षीश्चित्तं नृपाङ्गज ! । ततो विनयं कुर्वाणं राजपुत्रं दृष्ट्वा वाग्देवी जगौ–
गङ्गाकन्यया मया तव सम्यगाराधनाभाजः स्तवनपूजनैः सत्त्वपरीक्षणं कृतम् । किंच स्वां प्रतीहारीं प्रेष्य त्वामिहानी

तोऽसि स्वक्रीडावनं दर्शयितुम् । त्वं तु सत्त्ववान् ज्ञातोऽसि । तव तपसाऽहं हृष्टाऽस्मि, प्राच्यैः पूर्वकृतकर्मभिस्त्व-
दीयैस्तुष्टास्म्यहं तुभ्यम् । प्राच्यकृतकर्मसम्बन्धः श्रूयताम् । यथाहि—पुरा पुष्पपुरे निर्धनः कोऽपि जनस्तिष्ठतिस्म,
महोत्सवेऽन्येद्युर्नागरान् कौमुदीमहोत्सवकरणपरान् वीक्ष्याचिन्तयत् । मन्दभाग्योऽतिनिर्लज्जः, पात्रं निन्दाति कर्म-
णाम् । मया(म)—समः समस्तेऽपि, नास्त्यन्यः कोऽपि भूतले ॥ १ ॥ एवं विधेऽप्युत्सवे जायमाने मया न लब्धं
मनागपि भैक्ष्यं, प्राणास्तु न मां मुञ्चन्ति । इह मया यद् भैक्ष्यं न लब्धं तत्पूर्वकर्मविलसितम् । समानेऽपि मनु-
ष्यत्वे, विशेषोऽयमभूच्च यत् । तदत्राहमहो मन्ये, पुण्यापुण्ये निबन्धनम् ॥ १ ॥ तन्मया यत् क्वचित् किंचि-न्न
कृतं सुकृतं पुरा । दु:खपात्रं तदत्राह—मभवं विभवं विना ॥ २ ॥ ततोऽहं क्वचिद्भैरवे गत्वाऽहं देहत्यागं करि-
ष्यामि । यथा दुःखभाजनं भवान्तरे न भवामि । पर्यालोच्येति भैरवे भृगुपातं कर्तुं गतः । अभीष्टदेवतायाश्च,
नमस्कारं चकार सः । झम्पापातं चिकीर्षुश्च, दिशो व्यालोकयन्नयम् । शमं मूर्तमिवाशोक-तले मुनिमुदैक्षत ॥ १ ॥
दृष्ट्वा च तं पञ्चाङ्गप्रणिपातेन प्रणनाम । ध्यानान्तेऽथ मुनीन्द्रोऽपि, ज्ञानत्रयमयः स्वयम् । ज्ञात्वोपकारमूचे तं, सुधामधु-
रागिरा ॥१॥ भो वत्स! कुतस्त्वं समागाः उवाच सोऽपि निर्धनः—मम दारिद्र्यमद्यापि न गतं, युष्मद्दर्शनेन चाधुनाऽहं

कृतकृत्योऽस्मि । अथोवाच मुनीन्द्रः—कुतस्त्वमिति मूढोऽसि वत्साविदिततत्त्ववित् । तथाहि—सुलभा जीवलोकेऽस्मिन्, धृतिः श्रीः सुखसम्पदः । चिन्तारत्नमिवात्यन्तं, दुर्लभं जन्म मानुषम् ॥१॥ असारो देहो विनश्यति ततस्तपः कर्तव्यम् । तत्र कर्मविनाशाय, प्रायः कार्यस्तपोऽग्निना । संशोध्यनिर्म्मलः स्वात्मा, बुद्धिमद्भिर्विधीयते ॥ १ ॥ महात्मन् पूर्वदुष्कर्म, निर्मूलनसमीहया । युज्यते तपसाऽऽराद्धुं, ततस्ते ज्ञानपञ्चमी ॥ २ ॥ तावज्जाड्यज्वरोद्गारै—र्जीर्यन्ते हन्त जन्तवः । यावन्नाविर्भवत्युच्चैस्तपस्तपनवैभवम् ॥१॥ येषां तपःकुठारोऽयं, कठोरः स्फुरति स्फुटम् । मूलादुच्छेदमायान्ति, तेषां दुष्कर्मवीरुधः ॥२॥ भावेनाराधितो येन, तपोधर्मोऽतिनिर्मलः तेनैवाराधितौ दान-शीलधर्मावपि ध्रुवम् ॥३॥ सम्पन्नानन्यसामान्यतपःसन्दोहदोहदः । वितनोति फलस्फीतिं, मनोरथमहीरुहः ॥४॥ तत्त्वत्क्षीणान्तरायस्य, पञ्चमीतपसाऽमुना । मनोरथतरुः सर्व—वांछितार्थं फलिष्यति ॥५॥ इत्युक्तो मुनिना तपोधर्मो निःपुण्येन तेन पुरुषेण गृहीतः । ततः स्वगृहे समागात् । ततः पञ्चम्यादितपः कुर्वाणः स्वजन्मकृतार्थतां चकार सः । ततः आयुः सम्पूर्णीकृत्य स दरिद्री पुरुषः पञ्चम्यादितपः—प्रभावान्नृपतेः सुतो युगबाहुरिति नामाभूः । एवं पश्चाद्भवसम्बन्धः प्रोक्तो मदीयो देव्या । पुनस्तुष्टया देव्योक्तम् । शस्त्रेशास्त्रे च कौशलं लोकोत्तरं भवतु तव । प्रतिपक्षप्रतिक्षेप—क्षममेकं परं पुनः । काममन्त्रं ददौ देवी, कलाकौशलदा-

थिनम् ॥१॥ एवं देवपार्श्वे यावत् पूर्वं भवं श्रुत्वा शस्त्रशास्त्रादिकलाकौशल्यादिविद्या गृहीता मया, तावदहमात्मानं नदीपुलिनगामिनमपश्यम् । ततोऽहं प्रमोदमेदुरस्वान्तस्त्वां नन्तुं त्वरितमत्रागमम् । एतत्पुत्रोक्तं श्रुत्वा पुत्राय यौवराज्यपदवीं ददौ । कुमारोऽपि श्रियं प्राप्य, सहकार इवाद्भुताम् । गमयामासिवान्काम–मर्थिसार्थं कृतार्थताम् ॥ १ ॥ ततः प्रभृति युगबाहुः मातापित्रोर्भक्तिं कुर्वाणो जिनधर्मकरणतत्परस्तपः करोति पञ्चम्यादिपर्वसु । अर्द्धरात्रावन्यदा स्वावासपर्यन्ते करुणध्वनिं शुश्राव युगबाहुः । जिज्ञासुः प्रभवं तस्य, कुमारः करुणामयः । कृपाणपाणिर्निर्गत्य, गतवान् ध्वनिसंमुखम् ॥ २ ॥ ततोऽन्तर्वणं गतो युगबाहुरेकां स्त्रियं रुदन्तीं म्लानीभवन्मुखाम्भोजां लावण्यपुण्यखानिमपश्यत् । तदा नरेण केनचित् संभोगार्थं प्रार्थ्यमानां रुदन्तीं वीक्ष्य कुमारो वृक्षान्तरे छन्नं तस्थौ । तदा स पुमांस्तां स्त्रियं प्रत्येवमवदत् । मयि प्रपन्नदारयेऽपि, दास्यते यदि नोत्तरं । तदसिर्दृश्यतामेष, स्मर्यतामिष्टदेवताम् ॥ १ ॥ ऊचे कन्या तदा मूढ ! स्मरामि कमिवापरम् । युगबाहुः कुमारोऽस्ति, हृदि मेऽद्वैतदैवतम् ॥ २ ॥ यद्यत्र मन्दभाग्याया, नैव दैवेन दर्शितः । भवान्तरेऽपि मे भूयात्, प्राणनाथस्तथापि सः ॥ ३ ॥ हृष्टः स्वनामश्रवणात् कुमारो दध्यौ—इयं मम नाम कथं वेत्ति । कुमारः खड्गमाकृष्य, ततः क्रोधादधावत । स्त्रीघातपातकिन् । क्रूर ! क रे यासीति तर्जयन् ॥ १ ॥

अथासौ पुरुषः प्राह, भद्र ! द्रुतमितःसर । रजकस्यायुषि क्षीणे, खरवन्म्रियसे कथम् ॥१॥ कुमारोऽवग्—प्राणैः सत्वरगत्वरैरेभिः स्वार्थः परार्थश्च पुम्भिः कर्तव्य एव । किं चाऽतिक्रूरमेतत्ते, निर्मातुं कर्म नोचितम् । लोकद्वयविरुद्धं हि, विदधाति सुधीः कुतः ॥ १ ॥ नरोऽवग—दुष्ट ! किं ममाप्युपदेशं ददासि ? । इत्युक्त्वा स नरो युगबाहुं हन्तुमुत्तस्थौ । खड्गाखड्गि युद्धं चिरं द्वाभ्यां कृतम् । अथ कुमारमजय्यसारविक्रमं हन्तुं दन्दशूकास्त्रं साक्षेपमक्षिपन्नरः । ततः कुमारः शारदादत्तं मन्त्रं नागपाशनाशाय सस्मार । तयोरस्त्रमस्त्रेण निवारयतोर्मिथश्चिरं युद्धमभूत् । क्रमात्कुमारेण स्तम्भनीविद्यया स नरः स्तम्भीकृतः । तदा कुमाररूपमालोक्य सा कन्या विस्मयोत्ताना मनसैवं व्यचिन्तयत् । स एव यदि राजेन्द्र—नन्दनोऽयमिहागमत् । उपचक्रे ममैतेन, नष्टो विद्याधराधमः ॥ १ ॥ ततः स नरस्तेन बन्धनान्मुक्तः सन् कुमारस्य पादयोः पपात । तदा कोऽप्याविर्बभव विद्याधरो विमानादुत्तीर्य भासुरोदारनेपथ्यधरः । स विद्याधरः कुमारस्य पुरो भूत्वा जगौ—भो युगबाहो ! त्वं सुस्थितः सन् शृणु मे वचः । तथाहि—भरतक्षेत्रसीमान्त—वैताढ्योत्तरदिग्गतम् । अस्त्यपास्तामरपुरं, पुरं गगनवल्लभम् ॥ १ ॥ तत्र मणिचूडनामा खग आसीत् । तस्य प्रिया मदनावली । तयोः पुत्री जलदेवतया दत्ताऽनङ्गसुन्दरी जज्ञे । क्रमाद्यौवनं प्राप्ता । चतु:-

पष्टिकलाकुशलाऽनङ्गसुन्दरी जाता । साऽनङ्गसुन्दरीति प्रतिज्ञां चक्रे । यः कश्चित् मत्कृतस्य प्रश्नचतुष्टयस्य प्रत्युत्तरं
दापयति स एव भावी मम भर्ता खेचरो भूचरो वा । ततस्तयाऽनङ्गसुन्दर्या कृतां प्रतिज्ञां श्रुत्वाऽनेके विद्याधरा
नृपास्तत्राययुः । गर्वतः सर्वतोऽभ्येत्य, प्रश्नोत्तरबहिर्मुखाः । वृथाभवन्नपुण्याना–मिव लक्ष्मीमनोरथाः ॥ १ ॥ तत्रार्तेन
भूभर्त्रा, पृष्टो नैमित्तिकोत्तमः । युगबाहुं शशंसास्या, भाविनं भूचरं वरम् ॥ २ ॥ ततः प्रभृति सा तत्र, लक्ष्मीरिव
मुग्द्विपि । बद्धभावाऽभवत्कामं, गुणैः श्रुतिपथागतैः ॥ ३ ॥ पूर्वेद्युः प्रातरेवास्य, सभासीनस्य भूभुजः । अगात्प-
वनवेगाख्यः, खगः शङ्खपुरेश्वरः ॥ ४ ॥ पुत्रीमुद्वोढुकामोऽकृतप्रश्ननिर्णयो विलक्षो जहारैनामनङ्गसुन्दरीम् । ततो-
ऽनेके खेचराः स्वस्वस्थाने ययुः । अस्यास्तु मातुलः सोऽह–मिहायातोऽस्मि दैवतः । अयं पवनवेगाख्यो, जामेयो-
ऽस्ति ममाप्यसौ ॥ १ ॥ इतोऽकस्माच्चत्र मणिचूडोऽपि सपरिवारः समागात् । मणिचूडो जगौ–भो महाबाहो ! युग-
बाहो ! ममेयं सुता मम जीवितमस्ति । पूर्वं नैमित्तिकेन मया पृष्टेन त्वमस्याः पतिः कथितोऽसि । सांप्रतं तु
ज्ञापितोऽसि विद्याधरेशैः । तत्त्वां प्रतिप्रदानेऽस्याः, का नाम प्रभुता मम । किन्तु प्रतिज्ञानिर्वाहोऽ–प्यस्यास्त्वय्येव
तिष्ठति ॥१॥ निष्कारणोपकर्तारः, क नाम स्युर्भवादृशाः । दृष्टः किं विष्टपोज्जीवी, यदिवा न दिवाकरः ॥ २ ॥ एवं

तस्मिन् खगे वदति ज्ञात्वा स्वपुत्रस्थितिवृत्तान्तं विक्रमबाहुः समागात् । सङ्गमस्तत्र चान्योऽन्य–मुभयोरपि भूभुजोः। प्रशस्यः समभूद्गङ्गा–कालिन्दीस्रोतसोरिव ॥ १ ॥ ततः पवनवेगोऽपि युगबाहुं प्रणम्याह–मया स्त्रीहरणात्पापं कृतं तत् क्षमस्व। ततो युगबाहुस्तं स्वसेवकं चक्रे। मणिचूडः सर्वान् खगान् स्वपुरेऽनैषीत् । ततः पुरीपरिसरे रम्ये संसूत्र्य मण्डपं कारयामास मञ्चोन्मञ्चान् । ततः सर्वेषु भूचरेषु खेचरेषु मञ्चोन्मञ्चेषु उपविष्टेषु विक्रमबाहुमणिचूडभूपावुपविष्टौ । युगबाहुरपि तत्रोपविष्टः । ततोऽनङ्गसुन्दरी याप्ययानारूढा सारालङ्कारवस्त्रभूषितगात्रा तत्रागत्य पितुश्चरणौ प्रणम्य निषसाद पितुरग्रतः । ततो राजाऽवग्–इयं मम पुत्री प्रश्नचतुष्टयं स्वकृतं जल्पिष्यति । तस्य यः प्रत्युत्तरं दास्यति स परिणेष्यति मत्पुत्रीम्। ततस्तयोक्तं कः सकलः १, कः सद्बुद्धिः २, कः शुभगः ३, को विश्वजयी ४, एतस्य प्रश्नचतुष्टयस्य प्रत्युत्तरो न केनाऽप्यपुरि। ततो युगबाहुस्वर्णपाञ्चालिकापार्श्वादेवं पूरयामास। कः सकलः? सुकृतरुचिः १, कः सद्बुद्धिः? विधेयकरुणापरः २, कः शुभगः? शुभवादी ३, को विश्वजयी? जितक्रोधः ४ ॥१॥ एवं समस्यायां पूरितायां जयजयारावे जायमाने कुमारी युगबाहुकण्ठे वरमालां चिक्षेप । शुभे मुहूर्ते विशेषतो राजा तयोः पाणिग्रहणं कारयामास । ततो मणिचूडो विक्रमबाहुप्रभृतीन् भूपान् सद्वस्त्रभूषणादिना मानयामास । ततो विक्रमबाहुः पुत्रयुतः स्वपुरमाययौ ।

नृपः पवनवेगोऽपि स्वपुरं ययौ । क्रमादन्येद्युर्मन्त्रीश्वरानापृच्छय जिनेन्द्रस्य पूजां कारयित्वा बन्दीजनमोक्षणं च कृत्वा स्वपुत्रं युगबाहुं स्वपदेऽभिषिच्य संयमश्रीगुरूपान्ते संयमं जग्राह । युगबाहुनृपस्तु पितृदत्तविषयाऽनेकान् वैरिविरान् वशीचकार । मणिचूडविद्याधरेणापि दीक्षां जिघृक्षुणा युगबाहुर्विद्याधरनायकश्चक्रे । अन्येद्युरनङ्गसुन्दरी शुभेऽहनि सत्स्वप्नसूचितं पुत्रमसूत । जन्मोत्सवं कृत्वा सूनो रत्नबाहुरिति नाम ददौ राजा । वर्द्धमानः क्रमाद्धर्म-कर्मशास्त्राणि पाठितः पित्रा । अन्येद्युः श्रीविक्रमबाहुमुनिर्विहरमाणः प्राप्ताचार्यपदस्तत्राययौ । ततः श्रीयुगबाहुर्धर्मं श्रोतुं गतस्तत्र । गुरुरित्याह–धर्मो विशिष्टः पितृमातृपत्नी–सुहृत्सुतस्वामिसहोदरेभ्यः । सनातनोऽयं सह याति मृत्यौ, दुःखापहोऽमी पुनरीदृशा न ॥ १ ॥ धर्मो सदा मङ्गलमङ्गभाजां, धर्मो जनन्युद्दलिताखिलार्तिः । धर्मः पिता पूरितचिन्तितार्थो, धर्मः सुहृद्वर्तितनित्यहर्षः ॥ २ ॥ विद्युद्विलासस्थितिजीवितव्यं, सन्ध्येव लक्ष्मीः क्षणदृष्ट-नष्टा । तरङ्गभङ्गप्रतिमं प्रभुत्वं, धर्मस्ततः शाश्वत एव सेव्यः ॥ ३ ॥ इत्यादि धर्मोपदेशं श्रुत्वा युगबाहुः स्वपुत्रं रत्नबाहुं स्वपदेऽभिषिच्य श्रीविक्रमबाहुगुरुपार्श्वे दीक्षां ललौ । तदा गुरुभिरुक्तं–चारित्रं शुद्धं पालनीयं, यतश्चारित्रात् स्वर्गापवर्गादिसुखं भवति । यतः–एके सिंहीभूय चारित्रं गृह्णन्ति शृगालीभूय पालयन्ति १, एके शृगालीभूय

चारित्रं गृह्णन्ति सिंहीभूय पालयन्ति २, एके शृगालीभूय चारित्रं गृह्णन्ति शृगालीभूय पालयन्ति ३, एके सिंहीभूय चारित्रं गृह्णन्ति सिंहीभूय पालयन्ति ४, त्वया चारित्रं चतुर्थभङ्गे पालनीयम् । श्रुत्वेति गुरुवचो युगबाहुः षष्ठाष्टमपक्षक्षपणमासक्षपणादितपः कुर्वाणो युगबाहुः कर्मविच्छेदं चकार । युगबाहुना तपः कुर्वता सर्वकर्मक्षयात् केवलज्ञानं प्रपेदे । ततोऽनेकभव्यजीवान् चिरं प्रबोध्य युगबाहुर्मुक्तिं गतः । ॥ इति युगबाहुकथा समाप्ता ॥ ३५ ॥

अज्जगिरि अज्जरक्खिअ, अज्जसुहत्थी उदायणो मणगो । कालयसूरी संबो, पज्जुन्नो मूलदेवो य ॥५॥

लभन्ते भवीनः सौख्यं, कुर्वाणा धर्म्ममार्हतम् । आर्यमहागिरिसुह–स्तिनाविवावनीतले ॥ १ ॥

तथाहि—स्थूलभद्रमुनीन्द्रस्य शिष्यौ आर्यमहागिरिसुहस्तिनावभूताम् । चरणाविव धर्मस्य, ज्ञानस्य नयने इव । तावभूषयतां साङ्ग–दशपूर्वधरौ धराम् ॥ १ ॥ आर्यमहागिरिरनेकशः शिष्यान् वाचनादानैर्निष्पादयामास । निजं-गच्छभारं सुहस्तिनि न्यस्य । एकोऽभून्मनसा कामं, जिनकल्पार्हवृत्तिधीः । व्यवच्छेदाज्जिनकल्पस्य, गच्छस्थोऽपि तदर्हकृत् । महागिरिर्महीपीठे, विजहार महातपाः ॥ १ ॥ तौ सूरी पाटलीपुरमध्येऽन्येद्युर्ययतुः । तत्र वसुभूतिर्महेभ्यो बोधितोऽस्ति श्रीसुहस्तिभिः जीवाजीवादितत्त्वज्ञोऽभूत् । क्रमाद्वसुभूतिः सुश्रावको निजस्वजनान् बोधयितुं

प्रवृत्तः । तेन ते बोधयितुं न शेकिरे । प्रतिबोधयितुं बन्धुवर्गं मोहग्रहग्रस्तं तद्वानिव वसुभूतिः स्वयं स्वगुरुं तत्र निन्ये । तत्र व्याख्या भवतापापहारिणी श्रीसुहस्तिना समारब्धा । तत्र भिक्षार्थमार्यमहागिरिरायया । तत्क्षणमेवोत्थाय श्रीसुहस्तिसूरिर्भक्तिपूर्वं श्रीआर्यमहागिरिं ववन्दे। श्रेष्ठी जगाद——भगवन् सुहस्तिसूरे ! तव सर्वगुरोरपि किमेष गुरुः ?। श्रीसुहस्ती प्राह——गुरवोऽमी मम तपश्चरन्तोऽत्र त्यागार्हं भक्तं पानं च गृह्णते कर्मरोगच्छिदे एवंविधं तपः कुर्वते-स्मामी । एवं विनयं तस्य सूरेर्वीक्ष्य धर्मोपदेशमाकर्ण्य च तत्कुटुम्बं प्रबुद्धम् । ततः सुहस्ती तान् बन्धून् प्रतिबोध्य स्वाश्रयं ययौ। इतो वसुभूतिरभाषिष्ट, स्वजनान् प्रति–ईदृग् मुनीन्द्रो मोक्षमार्गदायी यदाऽऽत्मीयगृहे समायाति, तदाऽस्मै मुनीशाय त्यज्यमानं भक्तं पानं च देयम् । तद्दानं बहुफलं मुक्तिदायिनं भविष्यति । अथ तत्रैव भिक्षार्थं प्राप्तोऽन्यदा श्रीमहागिरिस्तत्रागात् । यदा ते श्राद्धास्त्यज्यमानभक्तपानप्रतिलाभनायोद्यता अभूवन् । तदा ज्ञानाद-शुद्धमाहारं ज्ञात्वा महामुनिरुपाश्रये गत्वा सुहस्तिसूरिं प्रति जगाद–त्वदुपदेशात्ते श्राद्धा अशुद्धां भिक्षां मह्यं दातुमसज्जयन् । नेदं पुनः करिष्याम्यशुद्धमाहारमित्युक्त्वा आर्यसुहस्ती क्षमयामास विनीतात्मा । जीवन्तस्वामि-प्रतिमारथयात्रां निरीक्षितुं आर्यमहागिरिसुहस्तिसूरी गच्छतः स्मावन्तीम् । तदा तत्र नृपः संप्रतिर्जितानेकवैरिचक्र

आसीत् । उत्सवादथ श्रीजीवन्तस्वामिनो निर्ययौ रथः । संसारसागरोत्तारकारणं नीयमानः स रथोऽन्वीयमानः सुहस्तिसूरिणा श्रीसङ्घेन च पुर्यां स्थाने स्थाने पर्यटतिस्म । इतो रथो भ्राम्यमाणो राजद्वारमागात् । तदा राजा संप्रतिर्गवाक्षस्थः श्रीसुहस्तिनं सूरिं गच्छन्तमवलोक्य दध्याविति—किमेष यतीशः शान्तात्मा पुण्यमूर्तिर्मया पूर्वस्मिन् भवे वा कुत्रचिद् दृष्टोऽसौ, येनास्मिन् दृष्टेऽतीव मोदो जायमानोऽस्ति । "यस्मिन् दृष्टे भवेन्मोदो, द्वेषश्च प्रलयं व्रजेत् । स विज्ञेयो मनुष्येण, बान्धवः पूर्वजन्मनः ॥ १ ॥" इत्येवं पुनर्विमृशन् प्राप्तमूर्च्छो नृदेवः पपातावनीतले । तदा मन्त्रिभिरनेकैर्वातप्रक्षेपादिभिरुपचारैः सचेतनीकृतः । सचेतनो भूत्वा जातिस्मृतिं प्राप । उत्थाय तत्क्षणान्नृदेवो गुरुं त्रिःप्रदक्षिणीकृत्य श्रीसुहस्तिनं पूर्वभवसम्बंधिनं स्वगुरुं जानन् भूतलमिलन्मौलिर्ननामोच्चैः । ततो हस्तौ योजयित्वा राजा सानंद उवाच—भगवन् ! केन फलेन जिनधर्मः फलति । आख्यद्गुरुस्तरोस्तस्य, सुपक्वममृतं फलम् । अपक्वफलभेदास्तु, कल्पाश्चानुत्तराश्च ते ॥ १ ॥ पुनः पृथ्वीशः पप्रछ—अव्यक्तस्य सामायिकस्य किं फलं भवति ? । गुरुराह—सामायिकस्य कर्तुर्यत्पुण्यं भवति, तस्य सङ्ख्यां कर्तुं शक्यते न । "सामाईअंमि कए, समणो इव सावओ हवइ जम्हा । एएण कारणेणं, बहुसो सामाइअं कुज्जा ॥ १ ॥" ततोऽव्यक्तसामायिकाद्राज्यं

प्राप्यते ततो राज्यफलम्। एतत् श्रुत्वा राजा जगौ—भगवन्! अहं त्वयोपलक्ष्यो न वा। उपयोगेन विज्ञाय गुरुर्गिरमाह—ज्ञानोपयोगात् विहरन्तो वयं श्रीमहागिरिसूरिभिः समं सगच्छाः कौशाम्ब्यामागच्छाम। साधुबाहुल्यात् वसतेः संकीर्णत्वात् पृथक् स्थितौ आवां तदाऽतिदुर्भिक्षे प्रवर्तमाने श्राद्धा महर्द्धिका अस्मभ्यं बहु अन्नं विहारयन्तिस्म। कस्यापि श्रेष्ठिनो गृहे साधवोऽस्मदीया भिक्षायै ययुः। तदा एको रङ्कस्तेषां पृष्ठिस्थो धान्यं बहु विहार्यमाणं वीक्ष्य वर्त्मनि जगौ—अहं दीनो बुभुक्षितोऽस्मि, म्रियेऽहं तेन भोज्यं किंचिद्दीयताम्। साधवोऽस्मदीया जगुः—गुरवो जानन्ति वयं तु तदधीनाः, स्वयं दातुं किमपि नेश्वराः। ततो रङ्को गुरुपार्श्वे गत्वा भोजनमयाचत। तदा गुरुभिरतिशयज्ञानवद्भिरतस्याग्रेतनं भवं दृष्ट्वा प्रोक्तं—व्रतं चेद्भजसे तदा लभसे भक्तमस्मत्पार्श्वात्। अचिन्तयदयं रङ्कः—चिरं कष्टं सहाम्यहम्। तद्वरं व्रतजं कष्टं, यथेष्टं यत्र भुज्यते॥ १॥ रङ्कः प्राह—मम संयमं ददत यूयम्। ततो गुरुभिः संयमश्रीस्तस्मै विश्राणिता। अल्पमायुर्मत्वा स्वन्नपानदानेन भोजयित्वा भाववृद्धये साध्वीपार्श्वे साधुयुतो रङ्कसाधुः प्रेषितः। साध्वीभिरुत्थाय महेभ्यप्रियापुत्रीयुताभिर्वन्दितो यतिः। तदा ध्यातं तेन—अहो धर्मस्य साम्राज्यं, मया यत् कदाचिद् दृष्टं नान्नं तद्भुक्तं, एवंविधाः साध्व्यादयो मामद्य दीक्षितं वन्दन्ते। वर्द्धमानभावो रङ्कः पश्चात्

शालायां समागतोऽकस्माद्बलिष्ठाहाराजीर्णत्वात् ग्लानीभूतो रात्रौ तस्यां गुरुभिर्निर्यामितो मृतः । स रङ्कसाधुरव्यक्तसामायिको विपद्य राजंस्त्वं मृणालभूपकुणालप्रियाङ्गजोऽभूः, वयं ते रङ्कस्य दीक्षादातारः स्मः । पुनः भूपोऽवग्—भगवन्नेष राज्यसम्भवो भवत्प्रसादः । भगवन् ! यदि तदा युष्माकं दर्शनं नाभवन्मम, तदा मम कीदृग् संयमः । पूर्वजन्मनि यूयं गुरवो जाताः । अस्मिन्नपि भवे भवन्तो गुरवो भवन्तु । श्रीसुहस्तिसूरिराह—राजन्नाजन्मस्वर्गापवर्गसुखदं प्रवरं जिनधर्म्मं भज । येन धर्म्मेण संसारान्निस्तारो भवति । ततो राजा बहुपरिवारयुक् श्रीगुरुपार्श्वे धर्म्मं श्रोतुं गतः । ततो गुरुराह—" त्रिवर्गसंसाधनमन्तरेण, पशोरिवायुर्विफलं नरस्य । तत्रापि धर्मं प्रवरं वदन्ति, न तं विना यद्भवतोऽर्थकामौ ॥ १ ॥ ते धत्तूरतरुं वपन्ति भवने प्रोन्मूल्य कल्पद्रुमं, चिन्तारत्नमपास्य काचशकलं स्वीकुर्वते ते जडाः । विक्रीय द्विरदं गिरीन्द्रसदृशं क्रीणन्ति ते रासभं, ये लब्धं परित्यज्य धर्म्मसधमा धावन्ति भोगाशयाः ॥ २ ॥" संप्रतिर्जैनधर्म्मं जग्राह । देवो गुरुर्धर्म्म एव मे भवतु । ततः संप्रतिभूपतिर्जिनधर्मवासितसप्तधातुश्राद्धपुङ्गवोऽभूत् । यतः—" आसन्ने परमपए, पावेयव्वंमि सयलकल्लाणे । जीवो जिणिंदभणियं, पडिवज्जइ भावओ धम्मं ॥ १ ॥ " सन्ध्यात्रये जिनार्चां करोतिस्म राजा । साधर्मिकवात्सल्यं प्रतिदिनं व्यधाच्च । सप्तक्षेत्र्यां धनं व्ययन् मनागपि

अवाप्य धर्मावसरं विवेकी, कुर्याद्विलम्बं नहि विस्तराय । ताते जिनस्तक्षशिला-
वेलां निष्फलां न निर्गमयामास । अवाप्य धर्मावसरं विवेकी, कुर्याद्विलम्बं नहि विस्तराय । ततो जिनस्तक्षशिला-
धिपेन, रात्रिं व्यतिक्रम्य पुनर्न नेमे ॥१॥ अदरिद्रनिदानानि दानानि याचकेभ्यो दीनेभ्यो दत्तेस्म भूपः ततो दिग्यात्रां
कुर्वाणः संप्रतिभूपस्त्रिखण्डं भरतं साधयामास । क्रमात् संप्रतिभूपतेस्त्रिखण्डाधिपतेरष्टौ सहस्रं राजानः सेवां कुर्वते,
पञ्चाशत्सहस्रामिता मतङ्गजा आसन्, एककोटिमितास्तुरङ्गमा जाताः, कोटिसप्तमिताः सेवकाः, रथानां कोटयो नवा-
भवन्, अनेके देवाः सर्वत्र सानिध्यं कुर्वते । सुवर्णरूप्यटंककादिकोशस्य प्रमाणं तस्य भूपतेर्न ज्ञायते विबुधैरपि । श्रीसुह-
स्तिसूरिगुरूक्तं धर्म्मं सदा कुर्वन् बहु पुन्यमर्जयामास । श्रीसङ्घेन सह वर्षे वर्षे चैत्ययात्रोत्सवः संप्रतिभूपेन तन्यते । धुर्या-
भूतरथ रथः, श्राद्धैरन्तस्य तीर्थकृतः । स्वयमात्मेव संसारा-चैत्यद्वारादकृष्यत ॥१॥ पुरि तस्यां श्रीसुहस्तिगुरवोऽपि नानादेशेषु
विहृत्य तत्रागच्छन्तिस्म । तदा श्रीजिनचैत्येभ्यो, वालयित्वा विलोचनम् । चमत्कृतैः ससम्यक्त्वै-र्दृश्यमानो वैमानिकैः ॥१॥
चञ्चच्चतुर्विधाऽऽतोद्य वाद्योरुप्रेक्षणीयकः । आनन्दनिद्रानिर्मग्न जनः स्वप्नायितोत्सवः ॥२॥ सरासैः श्राविकालोकै र्भ्रमद्भि-
र्मङ्गलायितैः । धर्मार्णवमहावर्तैरिव मार्जितपातकः ॥ ३ ॥ पूज्यमानजिनो भक्तैः, प्रत्यट्टाट्टालकालयम् । काश्मीरनी-
रपूरेण, दीयमानछटोऽग्रतः ॥ ४ ॥ चतुर्विधमहासङ्घचतुरङ्गचमूवृतः । रथस्तीर्थपतेर्मोह–द्रोहिण्या यात्रयाऽचलत् ॥ ५ ॥

पञ्चभिः कुलकम् । त्रिखण्डक्ष्मातलोद्धार-धुर्यैः संप्रतिभूपतेः । भाग्यैः स कृष्यमाणोऽपि, राजद्वारं शनैर्ययौ ॥ १ ॥ कर्माण्युच्छेत्तुमिवाष्टौ अष्टप्रकाराभिः पूजाभिः संप्रतिभूपो जिनप्रातिमामपूजयत् । तदैवाहूय स संप्रतिः आवैताढ्यं सामन्तान् तानित्यवोचत्—अपि चेन्मयि यदि भवन्तो भक्ताः स्युस्तदा श्रमणानामुपासका भवन्तु । इति संप्रतिराजादेशात्ते भूपाः स्वस्वदेशे जैनधर्म्मं श्रमणोपासकपरास्तेनिरे । आर्यदेशस्थान् भूपान् जिनधर्म्मकारकान् कृत्वा शुद्धधीः संप्रतिभूपतिरिति दध्यौ निशीथे । अनार्यदेशेषु मया कथं जैनधर्म्मः कारयिष्यते लोकपार्श्वात् । साधून् विना धर्मोपदेशं को ददाति । तेन प्रथमं श्रमणोपासकाः प्रेष्यन्ते । ते तत्र धर्मोपदेशं दत्वा श्रावकान् कुर्वते । ततः संप्रतिभूपेन बहवः श्रावका यतिवेषधारकाः कृत्वा चालिताः तत्रोपरि प्रोक्तं—तत्र भवद्भिर्द्विचत्वारिंशद्दोषवर्जितमाहारं गृहीत्वा साधुभिरिव भवद्भिः स्वाध्यायादि सर्वं कर्तव्यं नो चेदत्र वः सर्वो ग्रासो गृहीष्यते मया । एवं मदुक्तं चेद्यदि करिष्यते तदा द्विगुणो ग्रासो दास्यते मया। ततः संप्रतिभूपतिनिर्देशात्ते श्रमणोपासका गृहीतसाधुवेषा निर्वाहमात्रगृहीतधना अनार्यदेशेषु ययुः । तत्रत्या लोकाः श्रीसम्प्रतिभूपगुरून् मत्वा धर्मोपदेशमिति शृण्वन्ति। तथाहि-धर्माज्जन्मकुले शरीरपटुता सौभाग्यमायुर्बलं, धर्मेणैव भवन्ति निर्मलयशोविद्यार्थसंम्पत्तयः। कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते,

धर्मः सम्यगुपासितो भवति हि स्वर्गापवर्गप्रदः ॥१॥ अहिंसासत्यमस्तेयं, त्यागो मैथुनवर्जनम् । एतेपु पञ्चसूक्तेषु, सर्वे धर्माः प्रतिष्ठिताः ॥ २ ॥ प्राज्यानि राज्यानि सुभोजनानि, सौभाग्यमारोग्यसुयोग्यवार्ता । रामा रमा रम्ययशोविलासाः, स्वर्गापवर्गौ प्रभवन्ति धर्मात् ॥ ३ ॥ दारिद्र्यमुद्रा परकर्म्मकृत्वा, दुष्टस्वभावासुखसङ्गतानि । एकत्वरङ्कत्वकदन्नभोज्य-कुरूपमुख्यानि भवन्त्यधर्मात् ॥ ४ ॥ नित्यं शुद्धान्नपानदानेन प्रतिलाभयन्ति ते तत्रत्या लोकाः क्रमाच्चैर्यतिभिस्तादृशैस्ते वहवो जना जिनधर्मं ग्राहिताः जिनभवनादिषु स्वां श्रियं व्ययन्तिस्म । तैः साधुभिस्ते अनार्यदेशवास्तव्यजनाः श्रावकीकृताः सन्तो जल्पन्तिस्म । भवतां को गुरुरस्ति । तैरुक्तमस्माकं गुरुः श्रीसुहस्तिसूरिः । क्रमात्संप्रतिना साधुविहारमनार्यदेशेषु जायमानं श्रुत्वा हृष्टम् । ततोऽनेके साधवस्तेषु तेषु अनार्यदेशेषु गुरुभिर्विहारिताः । अग्रेतना ये साधवस्तत्र गतास्तेऽपि गृहीतं संयमं न मुमुचुः । यतः—"अद्यापि नोज्झति हरः किल कालकूटं, कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे । वारांनिधिर्वहति दुर्वहवाडवाग्नि—मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १ ॥" अन्येद्युः श्रीगुरुभिरुक्तं—भो संप्रतिभूप ! विशेषतो दानमनर्गलं दीयते । दानं विना भोगो न भवति । चतुर्धा धर्मः श्रीजिनैरुक्तः । तत्र दानधर्मो मुख्यतया श्रीवीतरागैरपि प्रोक्तः । यतो दानं विना अपरे धर्माः कर्तुं न शक्यन्ते । यतः "निखि-

लेष्वपि धर्मेषु, दानधर्मो विशिष्यते। दानधर्मं विना यस्मान्मुक्तिर्नैवाप्यते क्वचित् ॥ १ ॥" इत्यादि०। ततो ग्रामे ग्रामे पुरे पुरे सत्रागारानकारयन्नृपः। अन्येद्युर्गुरुपार्श्वे धर्मोपदेशं श्रोतुं गतः। तदा श्रीगुरुभिः प्रोक्तम्। जिणभवणबिंबपुत्थयसंघसरूवेसु सत्तखित्तेसु। ववीयं धणंपि जायइ शिवफलाइमहो अणंतगुणं ॥ १ ॥ क्ष्माभृद्रंकतयोर्मनीषिजडयोर्नीरोगरोगार्तयोः, श्रीमद्दुर्गतयोर्बलाबलवतोः सद्रूपनीरूपयो.। सौभाग्यासुभगत्वसङ्गमजुषोस्तुल्ये पितृत्वे पुन-र्यत्तत्कर्मनिबन्धनं तदपि नो जीवं विना युक्तिमत् ॥ २ ॥ प्रासादान् श्रीजिनेन्द्राणां, कारयन् भव्यमानवः। लभते सपदि श्रेयः सुखं श्रीहरिषेणवत् ॥ ३ ॥ पुरा श्रीहरिषेणचक्रवर्ती श्रीगुरूक्तधर्ममाकर्ण्य षट्खण्डामखण्डां महीमभ्रंलिहजिनागारैर्भूषयामास। ततः स चक्रवर्ती सर्वकर्मक्षयं कृत्वा मुक्तिं ययौ। इति श्रुत्वा संप्रतिचक्री त्रिखंडां महीं जिनमन्दिरैरमण्डयत्। सत्रागारेषु दीयमाने यदवशिष्टं भुक्तं भक्तघृतादिकं भवति तत् सत्रागाराधिकारिणो गृह्णन्ति स्म। नृपोऽन्यदा सत्रागाररक्षकान् प्रति जगौ। यद्यदवशिष्टमन्नं भवति। तत्तत् व्रतिभ्यो देयं शुद्धत्वात् साधवोऽकृताकारितमाहारं गृह्णन्ति। भवद्भ्यो विभवं भूरि, गृहनिर्वाहहेतवे। दास्यामि कामितं यद्वः, पूरयिष्यामि तच्च भोः ॥ १ ॥ राजाज्ञया साधुभ्योऽन्नं प्रासुकं ददिरे सत्रागाररक्षकास्ते। ततस्तैः दीयमानमन्नं प्रचुरं विशिष्ट-

सेहे स्वयं सुहस्ती तु, सदोषं तद्विदन्नपि । सूनोरिव स्वशिष्यस्य, को
मशुद्धमपि शुद्धबुद्ध्या गृह्णन्तिस्म साधवः । सेहे स्वयं सुहस्ती तु, सदोषं तद्विदन्नपि । सूनोरिव स्वशिष्यस्य, को
न रागेण लिप्यते ॥ १ ॥ अन्येद्युः श्रीआर्यमहागिरिः श्रीसुहस्तिसूरिं तथाविधाहारं गृह्णन्तं श्रुत्वा तत्रोवाच । किं
राजपिण्डं सदोषं जानन्नपि त्वं गृह्णासि । गृह्णानान् साधूनप्यनुजानासि । सत्रागारे तु साधूनामाहारं गृहीतुं न कल्पते ।
यतः—" आहाकम्मुदेसिय पूईयकम्मे य मीसजाए य ठवणा पाहुडिआए० १ । सुहस्त्यूचे—प्रभो भक्तिभासुरा अमी
ददते दानम् । अस्माभिरीदृग्दानविश्राणनविषये किमप्युक्तं नास्ति । स्वभावेन परार्थमत्र निष्पाद्यमानमस्ति तेनात्र
को दोषः । नणु मुणिणा जं न कयं, न कारियं नाणुमोइअं तंसि, गिहिणा कडमाईयउ, तिगरणसुद्धस्स को दोसो ॥१॥
न कारितं कृतमनुमतमस्माभिरतोऽत्र दाने को दोषः महागिरिगुरुः स्माह । सच्चं तहवि मुणंतो गिन्हंतो वुद्दए
पसंगं से । निद्धंधसो य गिद्धो, न सुयइ सजीयंपि बहु पच्छा ॥ १ ॥ महागिरिगुरुः स्माह, शान्तं पापं किमात्थ भोः ।
अनेन वचसा श्वभ्र—पातो भवति देहिनाम् ॥ २ ॥ पृथग् जनानां साधूनां, सामाचार्येव सङ्गतिः । सामाचारी
विभेदेन, दुर्गतिर्जायते खलु ॥ ३ ॥ भयेन डिम्भवद्वेप—मानो मानयितुं गुरून् । पादावादाय शिरसा, जगावार्य-
सुहस्त्यथ ॥ १ ॥ हहा महापराधोऽयं, मयैको विदधे विभो ! । क्षन्तव्यं भवताऽद्यैक—वारं कुर्वे इदं न तु ॥ २ ॥

श्रीमहागिरिसूरिराह—भवतः को दोषो दीयते । दुःषमाकालविलसितमिदं यतः इति संबोध्य श्रीसुहस्तिसूरिं श्रीमहागिरिसूरिः श्रीजीवन्तस्वामिनं जिनं नन्तुमवन्त्यां ययौ । तत्र जिनं नत्वा यत्र दशार्णभद्रशक्रौ श्रीवीरं समवसरणस्थं नन्तुं स्वस्वर्द्धिसमेतौ समेतौ यत्र च गजेन्द्रोऽङ्घ्रिं न्यधत्त । तस्मिन् तीर्थे जिनं नन्तुं ययौ । तत्रानशनं गृहीत्वा श्रीमहागिरिसूरिर्देवलोकं गतः । ततश्च्युत्वा मुक्तिं यास्यति । श्रीसुहस्तिसूरिभिरप्यनेकान् भव्यशरीरिणः प्रबोध्य त्रिदिवं भेजे । क्रमान्मुक्तिं यास्यति । इति श्रीआर्यमहागिरिश्रीसुहस्तिसूरिकथा समाप्ता ॥ ३६ ॥

स्वकुटुम्बं भवाम्भोधौ, पतन्तं वाणीबेडया । उत्तार्य भविकैरार्य, रक्षितेनेव वेगतः ॥ १ ॥

आर्यरक्षितसरिदीक्षादिसम्बन्धः श्रीवज्रस्वामिचरित्रे पुरा प्रोक्तोऽस्ति स वाच्यः । एकदा श्रीआर्यरक्षितसूरिः स्वकुटुम्बं प्रतिबोधाय चचाल । तत्र गतो गुरुः स्वकुटुम्बप्रबोधार्थम् । ततः श्रीआर्यरक्षितेन स्वकुटुम्बं प्रतिबोधितम् । रुद्रसोमा माता भगिनी च बहुपरिवारयुता संयमं जग्राह । पुनः सोमदेवो जनको दीक्षां पालयितुमशक्तः श्रीआर्यरक्षितादिकुटुम्बस्यानुरागेण तैः समं ग्रामे ग्रामे पुरे पुरे वने वने गच्छति । न पुनः सोमदेवो लज्जया रजोहरणादि गृह्णाति । यदा श्रीआर्यरक्षितश्यतिर्दीक्षार्थं पितुः कथयति । तदा सोमदेवोऽवग् । अत्र मम सज्जनाः सन्ति ।

श्रीआर्यमहागिरि श्रीआर्यसुहस्तिसूरीश्वरयोः चरित्रम् ।

तेन स्वजनमध्येऽहं लज्जामि । यदि ममाम्बरयुगं कुण्डिकां छत्रिकोपानहौ यज्ञोपवीतं अनुजानीत यूयं तदाऽहं दीक्षां गृहीष्यामि । गुरुभिरुक्तं—एवं भवतु । ततो विप्रवेषयुतः प्रव्रज्यां जग्राह सोमदेवः । ततो गुरुणाऽनुज्ञातो धौतिकाम्बरादि सर्वं सोमदेवो दधाति स्म । अन्यदा गुरवश्चैत्ये देवान्नन्तुं गताः । तत्र पूर्वशिक्षिताः शिशवः सोमदेवं विना सर्वान् साधून् ववन्दिरे । तदा एकेन शिशुनोक्तं—एष साधुः कथं न वन्द्यते । तदाऽपरैरुक्तं—वयं साधूनेव वन्दामहे । एष साधुर्न गृहस्थवेषधारणात् । ततः सोमदेव ऋजुस्वभावः साधुस्तान् प्रति प्राह—यूयमेतान् साधून् वन्दध्वं मां न नमत । ततः किं नाहं साधुः । तैरुक्तं भवान् कथं साधुर्भवतु । वस्त्रयुगं गृहस्थतुल्यं वर्तते । ततस्तेन सोमदेवेनैकं वस्त्रं स्थापितम् । एवं कुण्डिकोपानहछत्रयज्ञोपवीतानि त्याजितः सोमदेवः कटिपट्टकमेकं न मुञ्चति बहुशो बालकपार्श्वाज्जाल्पितोऽपि सोमदेवः । इतस्तत्र साधुस्तीव्रतपस्कारी भक्तप्रत्याख्यानं चकार । तदाऽनेके जनाः श्राद्धास्तस्य साधोरनशनमहोत्सवं चक्रुः तदा साधुभिश्चाराधना तस्य साधोः सम्यक् कारिता । जिनेन्द्रध्यानपरो मृत्वा साधुः स्वर्गं जगाम । ताहे तस्सनिमित्तंकडिपट्टवोसिरणट्ठाए आयरिआ भणंति—य एतं मृतं साधुं वहते तस्यानंतं पुण्यं मुक्तिगमनयोग्यं भवति । तथा पृथक् पृथक् सर्वे साधवो जल्पन्ति । अहमेनं साधुं वहामि । तदा

सोमदेवोऽपि जगाद चाहमपि साधुमेनं वहामि । तदा गुरुभिः प्रोक्तं—मृतं साधुं वहतां साधूनां देवा विघ्नं कुर्वन्ति । यदि न क्षुभ्यति साधुस्तत्र तदा तस्य देवा अपि प्रसन्ना भवन्ति । तदा सोमदेवो जगौ—अहमेनं साधुं वहामि । समानन्तं पुण्यं भवति । गुरवो जगुः । अत्र विघ्नं बालकादिकृतं बहु समुत्पद्यते तव साधुं वहतः । सोमदेवोऽवग् । मया सर्व उपसर्गः सहिष्यते । तदा सोमदेवः साहसीभूय साधुमुत्पाटयितुं लग्नो यदा तदा श्रीगुरुभिः शिक्षिता बालकास्तत्राभ्येत्याकस्मात्तस्य साधोः सोमदेवस्य धौतिकं कर्षयामासुः । तदा गुरुभिः प्रोक्तं—भो साधव एकं वस्त्रमानयत आनयत । तदा सोमदेवो जगौ—जं दट्ठव्वं तं तु दट्ठमेव । एवं जल्पन्तं सोमदेवं चोलपट्टं परिधापयामासुः । ततः सोमदेव. सत्यसाधुरभूत् । तस्य साधोरग्निसंस्कारे कृते गुरवो यदा देवगृहे देवान्नन्तुं आगताः तदा सर्वान् साधून् सोमदेवं च श्राद्धा वन्दन्तेस्म । सोमदेवो लज्जमानो भिक्षार्थं श्राद्धगृहे न गच्छाति । एकदा श्रीगुरुभिरासन्ने ग्रामे गच्छाद्भिः प्रोक्तं—शुद्धमन्नमानीय भक्षितव्यं सोमदेवो भिक्षां विना तिष्ठतु । श्रीगुरुषु ग्रामं गतेषु साधुभिर्गुरूक्तं कृतम् । एवं द्वितीये दिने गते तृतीये दिने गुरुरागात् । सोमदेवेन तद् भक्तस्वरूपं प्रोचे । ततो गुरुः प्राह भो—शिष्या अस्मत्पितुः कथं भक्तं नानीतम् । ततः पूर्वशिक्षिता जगुः । किमयं स्वयं विहर्तुं न याति । ततो गुरुभिरुक्तं—सोमदेवाग्रे यूयम-

त्रासन्नगृहे गत्वाऽऽहारमानयत । गुरुणोक्तो लज्जन् कस्यापि महेभ्यस्य गृहछंडिके प्रविष्टः । श्रेष्ठिनोक्तं—यते! छंडिके न प्रविश्यते । साधुः प्राह—लक्ष्मीः छंडिकेऽपि प्रविष्टा वरा । श्रेष्ठी हृष्टः द्वात्रिंशन् मोदकान् ददौ । हृष्टो यतिर्गुरू-पान्तेऽदर्शयत् । गुरुणोक्तं साधुभ्यो मोदकान् ददत । सोऽवग्—एषां प्रस्तरा दीयन्ते यैरेवमहं विगोपितः । गुरुभिरूचे—यूयं राजव्यापारे स्थिताः पूर्वं सेवकेभ्यो दत्वैव भोक्तारः । अधुनाऽपि तथा कुर्वन्तु । ततः साधुभ्यो मोदकान् द्वात्रिंशद् दत्वा पुनर्लाभोदयकर्मयोगात् परमान्नं विहृत्यागात् पारणं चक्रे । ततो लज्जां मुक्त्वा सदा विहृत्यायाति सोमदेवो भिक्षामानीय पारणं चकार । श्रीआर्यरक्षितसूरयो भव्यजीवान् प्रबोधयामासुः । अन्येद्युः श्रीआर्यरक्षितसूरयः पाटलीपुरपत्तने ययुः । तत्र चन्द्रनरेश्वरो धर्मं श्रोतुमाययौ । तत्र श्रीगुरुभिरिति धर्मोपदेशो ददे । " निर्दन्तः करटी हयो गतजवश्चन्द्रं विना शर्वरी, निर्गन्धं कुसुमं सरो गतजलं छायाविहीनस्तरुः । रूपं निर्लवणं सुतो गतगुणश्चारित्रहीनो यति-र्निर्देवं भुवनं न राजति यथा धर्मं विना पौरुषम् ॥ १ ॥ " इत्यादि धर्मोपदेशमाकर्ण्य राजा जिनधर्मं प्रपेदे । श्रीआर्यरक्षितसूरिप्रभृतिसूरयः क्रमादवसरे स्वर्गलोकं ययुः । श्रीआर्यरक्षितस्य दीक्षाग्रहणसम्बन्धो वज्रस्वामिवृत्तेर्ज्ञेयः ।

इतिश्रीआर्यरक्षितसूरिसम्बन्धः ॥ ३७ ॥

अनर्घ्यं वस्तु भुक्त्वापि, न मुञ्चेत् धृतिमात्मनः । राजर्षिपदमादायो-दायनः शिवमासदत् ॥ १ ॥

तथाहि—एकदा श्रीवीरजिनो राजगृहे समवासार्षीत् । तत्राभयकुमारो धर्म्मं श्रोतुं समागात् । परमं मुनिं वीक्ष्याप्राक्षीत्—भगवन् ! कोऽयं यतिः ? । प्रभुणोक्तम्—अन्तिमो राजर्षिरयमुदायननृपः । अभयोऽवग्—अनेन कथं व्रतं गृहीतं कथं मुक्तिं गमिष्यति । प्रभुणोक्तं—श्रूयताम् । सिन्धुदेशालङ्करणे वीतभये पत्तने उदयनो राजा राज्यं करोतिस्म । तस्य चेटकराजपुत्री प्रभावतीनाम्नी पत्नी बभूव । इतस्तत्र वास्तव्यः कुमारनन्दी सुवर्णकारो विषयलोलुपोऽन्यदा देवताद्वयदर्शनात् प्राह—के भवत्यौ स्तः ताभ्यां प्रोचे—पञ्चशैलद्वीपवासिन्यौ हासाप्रहासाह्वे देव्यौ स्तः । यदि तव भोगेच्छाऽस्ति तदा तत्रागत्यावयोः पतिर्भव इत्युक्त्वा ते गते । सोऽपि स्वर्णकारस्तयोर्देव्योः पतिर्भवामीति वाञ्छन् केनापि नरेण समं तरीमारुह्य नीरधौ चचाल । वर्त्मनि स्वर्णकारः प्राह—कथं हासाप्रहासयोर्योगो भवति । तेन सांयात्रिकेणोक्तम्—अग्रे दृश्यमानगिरेरुपकण्ठे तरुर्महानस्ति । तस्याधो यानपात्रे गच्छति यः साहसी तस्य तरोः शाखां हस्ताभ्यां गृह्णाति, तत्र वृक्षे स्थितश्च निशि विश्रान्तानां भारण्डपक्षिणां चरणे विलगति च । स तत्र गतो मृत्वा तयोः पतिर्भवति । इति तस्य नागिलस्य (सांयात्रिकस्य) वचः श्रुत्वा स स्वर्णकारस्तथाकृत्वा तयोः पतिर्व्यन्तरोऽभूत् ।

नागिलोऽपि भग्ने याने ( मित्रे मृते ) प्रव्रज्य तपस्तप्त्वा द्वादशमे स्वर्गे सुरोऽभूत् । अथाच्युतदेवो नन्दीश्वरे यात्रायां गच्छन् तं व्यन्तरं गले बद्धमृदङ्गमुपलक्ष्य प्राह–किं जातमिदं तव । व्यन्तरेण तेनोक्तं–दुःखे पतितोऽस्मि निस्तारय मामस्मात्कष्टात् । ततो देवेनोक्तं–यदि त्वं श्रीदेवाधिदेवप्रतिमां नवीनां कृत्वा गोशीर्षचन्दनादिना प्रपूज्य क्वापि तां प्रपूज्यमानां कारय । ततस्तवास्मात्कर्मणो निस्तारो भवति । तदा स व्यन्तरस्तथा कृत्वा तामेव प्रतिमां केनचित् सांयात्रिकोपान्तेन वीतभये पत्तने प्रापितवान् । तां प्रतिमां च प्रभावत्यै अर्पयामास स सांयात्रिकः । बहुकालं तां प्रतिमां प्रभावती प्रपूज्यासन्नमृत्युं ज्ञात्वा श्रीदेवाधिदेवप्रतिमां दास्याः कुब्जिकायाः पूजायै अर्पयामास । सा ततो विशेषात् प्रभुं पूजयामास । राज्ञी समुत्पन्नवैराग्या श्रीवीरपार्श्वे संयममादाय क्रमेण सौधर्मे देवत्वेनोत्पन्ना । देवाधिदेवस्य पूजां कुर्वत्यास्तस्याः कोऽपि गन्धाराख्यः श्राद्धो देवान् सर्वत्र वन्दमानस्तत्रागात् । कियन्तं कालं स गन्धारस्तत्र स्थितः । अन्यदा तस्य देहे रोगः समुत्पन्नः । तया दास्या शुश्रूषितस्तदा । ततस्तेन श्राद्धेन तस्यै दास्यै गुटिका बह्व्योऽर्पिताः । ततः कुब्जिका एकगुटिकाभक्षणेन देवाङ्गनातुल्यदेहाऽभूत् । ततः सा वर्यं वरमङ्गीकर्तुं ध्यायति । ततः केनचिदवन्त्याः प्रद्योतनो भूपः प्रोक्तस्तव योग्योऽस्ति । ततो द्वितीयागुटिका भक्षिता । तस्या अधिष्ठायकदेवेन तस्या दास्या

मनोगतभावं रूपं च चण्डप्रद्योतनाग्रे निवेदितम् । ततः प्रद्योतनोऽनिलगिरिकुञ्जरारूढो रहोवृत्त्या तत्रागत्य दासीं देवाधिदेवप्रतिमायुतां लात्वा स्वस्थाने ययौ । उदयनो निजभमदगलनादिना दासीप्रतिमाहरणस्य स्वरूपं ज्ञात्वा चुक्रोध । ततः संनह्य महासेनायुतः उदायनः प्रद्योतनाधिष्ठितामवन्तीं ययौ । तत्र दासी प्रतिमायुता मार्गिता । स यदा नार्पयति । तदा महायुद्धे जायमाने उदयनः प्रद्योतनं बबन्ध रणे । दासी नष्टा प्रतिमा तु ततः स्थानान्न चलिता यदा तदा उदयनपत्नी प्रभावतीदेवः स्वर्गादागत्य प्राह—भो उदयन ! त्वन्मरणादनु वीतभये पत्तने धूलिकोटिः पतिष्यति। तेन न तत्र नेतव्या, अत्रैव तिष्ठतु । तथा कृतं तेन उदयनेन । मम दासीपतिरेष इति अक्षराणि प्रद्योतनमस्तके दापयित्वा स्वपुरं प्रति चलितः, ततो मार्गे पर्युषणापर्व समागतं तत्र राजा स्थितः, प्रभोः पूजा कृता राज्ञा तस्मिन् हि दिने क्षपणं कृत्वा सूपकारायादिष्टम् । प्रद्योतनमापृच्छ्य यत्तस्य रोचते तद्भोजनं तस्य देयम् । ततः सूपकारः प्रद्योतनपार्श्वे गत्वाऽवग्–भवतोऽद्य का रसवती रोचते । तदा प्रद्योतनेन चिन्तितमद्य यावन्न किमपि पृष्टं राज्ञा सह भोजनं ममाऽप्यभूत् । नूनं विषं दास्यत्यसौ मम । एवं ध्यात्वा प्रद्योतनः प्राह—पुरा एवं कदाऽपि न पृष्टमधुना एवं कथं पृच्छ्यते ? ततस्तेन राज्ञोक्तं सर्वं पर्युषणावृत्तान्तं सूपकारेणोक्तम् । ततः सोऽपि

मायां विधाय प्राह—अहमपि श्राद्धः पर्युपणापर्व विस्मरितं दुःखात् । ततो ममाप्युपवासो भवतु । ततः प्रद्योतनप्रोक्तं राज्ञोऽग्रे तेन निवेदितम् । ततः राज्ञा साधर्मिकोऽयं ममेति कृत्वा क्षामणकं विना प्रतिक्रमणकं न शुध्यति । इति ध्यात्वा च प्रद्योतनो वन्धनाच्छोटितः । मस्तके तस्य स्वर्णमयं पट्टबन्धं कारयित्वा क्षामणकं च कृत्वा उदायनः प्रद्योतनं पश्चात् प्रेपयामास । ततः प्रद्योतनो राजा जैनधर्मं शुद्धमाराध । उदायनः स्वपुरं प्राप्तः । उदायनः परमार्हतोऽन्यदा श्रीवीरजिनपार्श्वे धर्ममिति शुश्राव । मज्जं विसयकसाया, निद्दा विगहा य पञ्चमी भणिया । एए पञ्च पमाया, जीवं पाडंति संसारे ॥ १ ॥ आर्यदेशकुलरूपबलायु–र्बुद्धिबन्धुरमवाप्य नरत्वम् । धर्मकर्म न करोति जडो यः, पोतमुज्झति पयोधिगतः सः ॥ २ ॥ इत्यादि धर्मोपदेशं श्रुत्वा प्राप्तवैराग्यः स्वभागिनेयं स्वराज्ये निवेश्य श्रीवीरपादान्ते दीक्षां जग्राह । ततो नानातपः कुर्वाणः क्रमाद्भूपो वीतभये समागात् । भागिनेयेन राज्ञा स्वराज्यापहरणशङ्कितेन हि पारणेपु विपं दापितं प्रपंचेन । शासनदेवतायाः सानिध्यात्समुत्तीर्णविपः प्रान्ते महाध्यानपरः सर्वकर्मक्षयं कृत्वा मुक्तिं यास्यति । उदायनोऽयं चरमराजर्षिः । ततोऽभयकुमारः समुत्थाय तं चरमराजर्षिभूपं भूयसीभक्त्या प्रणनाम । ततः क्रमादायुःसमाप्तौ उदायनो मुक्तिं गतः । प्रभावतीजीवोऽपि मुक्तिं गमिष्यति ।

इति उदायनप्रभावतीकथासमाप्ता ॥ ३८ ॥

मनोगतभावं रूपं च चण्डप्रद्योतनाग्रे निवेदितम् । ततः प्रद्योतनोऽनिलगिरिकुञ्जरारूढो रहोवृत्त्या तत्रागत्य दासीं देवाधिदेवप्रतिमायुतां लात्वा स्वस्थाने ययौ । उदयनो निजेभमदगलनादिना दासीप्रतिमाहरणस्य स्वरूपं ज्ञात्वा चुक्रोध । ततः संनह्य महासेनायुतः उदायनः प्रद्योतनाधिष्ठितामवन्तीं ययौ । तत्र दासी प्रतिमायुता मार्गिता । स यदा नार्पयति । तदा महायुद्धे जायमाने उदयनः प्रद्योतनं बबन्ध रणे । दासी नष्टा प्रतिमा तु ततः स्थानान्न चलिता यदा तदा उदयनपत्नी प्रभावतीदेवः स्वर्गादागत्य प्राह—भो उदयन ! त्वन्मरणादनु वीतभये पत्तने धूलि-कोटिः पतिष्यति। तेन न तत्र नेतव्या, अत्रैव तिष्ठतु । तथा कृतं तेन उदयनेन । मम दासीपतिरेष इति अक्षराणि प्रद्योतनमस्तके दापयित्वा स्वपुरं प्रति चलितः, ततो मार्गे पर्युषणापर्व समागतं तत्र राजा स्थितः, प्रभोः पूजा कृता राज्ञा तस्मिन् हि दिने क्षपणं कृत्वा सूपकारायादिष्टम् । प्रद्योतनमापृच्छ्य यत्तस्य रोचते तद्भोजनं तस्य देयम् । ततः सूपकारः प्रद्योतनपार्श्वे गत्वाऽवग्—भवतोऽद्य का रसवती रोचते । तदा प्रद्योतनेन चिन्तितमद्य यावन्न किमपि पृष्टं राज्ञा सह भोजनं ममाऽप्यभूत् । नूनं विषं दास्यत्यसौ मम । एवं ध्यात्वा प्रद्योतनः प्राह—पुरा एवं कदाऽपि न पृष्टमधुना एवं कथं पृच्छ्यते ? ततस्तेन राज्ञोक्तं सर्वं पर्युषणावृत्तान्तं सूपकारेणोक्तम् । ततः सोऽपि

मायां विधाय प्राह–अहमपि श्राद्धः पर्युषणापर्व विस्मरितं दुःखात् । ततो ममाप्युपवासो भवतु । ततः प्रद्योतनप्रोक्तं राज्ञोऽग्रे तेन निवेदितम् । ततः राज्ञा साधर्मिकोऽयं ममेति कृत्वा क्षामणकं विना प्रतिक्रमणकं न शुध्यति । इति ध्यात्वा च प्रद्योतनो बन्धनाच्छोटितः । मस्तके तस्य स्वर्णमयं पट्टबन्धं कारयित्वा क्षामणकं च कृत्वा उदायनः प्रद्योतनं पश्चात् प्रेषयामास । ततः प्रद्योतनो राजा जैनधर्मं शुद्धमाराध । उदायनः स्वपुरं प्राप्तः । उदायनः परमार्हतोऽन्यदा श्रीवीरजिनपार्श्वे धर्ममिति शुश्राव । मज्जं विसयकसाया, निद्दा विगहा य पञ्चमी भणिया । एए पञ्च पमाया, जीवं पाडंति संसारे ॥ १ ॥ आर्यदेशकुलरूपबलायु–र्बुद्धिबन्धुरमवाप्य नरत्वम् । धर्मकर्म न करोति जडो यः, पोतमुज्झति पयोधिगतः सः ॥ २ ॥ इत्यादि धर्मोपदेशं श्रुत्वा प्राप्तवैराग्यः स्वभागिनेयं स्वराज्ये निवेश्य श्रीवीरपादान्ते दीक्षां जग्राह । ततो नानातपः कुर्वाणः क्रमान्नृपो वीतभये समागात् । भागिनेयेन राज्ञा स्वराज्यापहरणशङ्कितेन हि पारणेषु विषं दापितं प्रपंचेन । शासनदेवतायाः सानिध्यात्समुत्तीर्णविषः प्रान्ते महाध्यानपरः सर्वकर्मक्षयं कृत्वा मुक्तिं यास्यति । उदायनोऽयं चरमराजर्षिः । ततोऽभयकुमारः समुत्थाय तं चरमराजर्षिभूपं भूयसीभक्त्या प्रणनाम । ततः क्रमादायुःसमाप्तौ उदायनो मुक्तिं गतः । प्रभावतीजीवोऽपि मुक्तिं गमिष्यति ।

इति उदायनप्रभावतीकथासमाप्ता ॥ ३८ ॥

किञ्चित् सिद्धान्तभणनाराधनादर्थवीक्षणात् । लभते सुखदं स्थानं, मनकक्षुल्लवत्स्फुटम् ॥ १ ॥

तथाहि--शय्यंभवभट्टो यज्ञं कारयति । तदा श्रीप्रभवस्वामिना स्वगच्छमध्ये तादृशं पट्टस्थापनार्हमदृष्ट्वा यज्ञकर्मकृच्छय्यंभव उपयोगेन ज्ञातः । साधुद्वयं प्रेष्य अहोकष्टमहोकष्टमिति ज्ञापिते स प्रष्टुं लग्नः । ताभ्यामुक्तं-अस्मद्गुरवो विदन्ति । गुरुभिरूचे-यूपान्तरस्तत्त्वमस्ति । तत्र श्रीशान्तिनाथप्रतिमां प्रादुष्कृतां वीक्ष्य गुरुपार्श्वे दीक्षां-जग्राह तदा । पूर्वं तस्य पत्नी साधानाऽभूत् । ततस्तया पुत्रोऽसावि । तस्य मनक इति नाम ददौ माता । मनकः क्रमाद्वर्धमानो मात्रा लेखशालायां मुक्तः । यतः-" प्रथमे नार्जिता विद्या, द्वितीये नार्जितं धनम् । तृतीये नार्जितो धर्मः, चतुर्थे किं करिष्यति ॥ १ ॥ " अन्येद्युरपितृकमिति लेखशालकैर्हसितो मनकस्ततो दोदूयांकुर्वाणो मातृपार्श्वे गत्वा जगौ-मामपितृकमिति लेखशालकाः कथं हसन्तिस्म, मम पितुः किं नाम कुत्र गतोऽस्ति इति मातरमपृच्छन्मनकः । माता तमुवाच-तव पित्रा जैनदीक्षा गृहीता । अधुना शय्यंभवसूरिर्जिनतत्त्वज्ञो भव्यजीवान् प्रबोधयन्नास्ति पाटलीपुरे । ततो मनको मातरमापृच्छ्य पितृमिलनार्थं चलितः । पाटलीपुरसमीपे मनको गतः । इतः श्रीशय्यंभवसूरिं तनुगमनिकायामागतं वीक्ष्य मनकस्तं पप्रच्छ-शय्यंभवः सूरिः क्वास्ति,

श्रीनुदायन-राजर्षि-चरित्रम्। श्रीमनक-क्षुल्लमुनि-चरित्रम्।

कीदृग्रूपोऽस्ति ? । ततो गुरुभिः प्रकारेणोक्तम्—अहमेवाऽस्मि, त्वया सम्बन्धः कस्याप्यग्रे न प्रोक्तव्यः । ततो गुरुणा सार्धं शालायां गतो मनकः । ततो मनको गुरुपार्श्वे दीक्षां जग्राह । श्रीशय्यंभवसूरिभिर्मनकस्याल्पमायुर्ज्ञात्वा सिद्धान्तमध्यात् श्रीदशवैकालिकं कर्षयित्वा मनकस्य पठनाय ददे । मनकेन षड्मासे दशवैकालिकं पठितम् । लघुरपि वैराग्यवासिताशयोऽभूत् गुरूपदेशात् । क्रमादायुषोऽन्त्यवेलायां मनकस्याराधना गुरुभिः कारिता । शुभध्यानपरायणो मनको मृत्वा स्वर्गं जगाम । ततोऽग्निदाहं तस्य मनकस्य दत्वा श्रीसङ्घो गुरुपार्श्वे धर्मोपदेशं श्रोतुमाजगाम । गुरुभिरुपदेशं ददद्भिरश्रुपातः कृतः । उपदेशानन्तरं श्रीसङ्घेनाश्रुपातस्वरूपं पृष्टम् । ततो गुरुभिरुक्तं—मनको मम पुत्रः । ततः श्रीयशोभद्रसूरिप्रभृतिसाधुभिरुक्तं—किं न ज्ञापितमदः श्रीपूज्यपादैः ? गुरवः प्रोचुः—यद्यहं स्वपुत्रसम्बन्धमकथयिष्यं तदाऽसौ मनकश्चारित्रं नाराधयिष्यत् । वैयावृत्त्यं विना न कर्मक्षयो भवति । ततः श्रीशय्यंभवसूरिः श्रीदशवैकालिकं पश्चाद्यावत्सिद्धान्तमध्ये क्षिपति तावच्छ्रीसंघः श्रीयशोभद्रसूरयोऽपि जगुः—भगवन्नयं श्रीदशवैकालिकग्रन्थः पृथक् सिद्धान्तात्तिष्ठतु साधूनामुपकाराय । अयं ग्रन्थः सिद्धान्तस्यसारभूतोऽस्ति । ततः शय्यंभवसूरिभिस्तथा दशवैकालिकग्रन्थः स्थापितः । साधवोऽधुना पठन्ति च । उक्तं च—

सिज्जंभवं गणहरं जिणपडिमादंसणेण पडिबुद्धं । मणगपियरं दसविकालयस्स, निज्जूहगं वंदे ॥ १ ॥ मणगं पडुच्च सिज्जंभवेण, निज्जूहिया दसज्झयणा । वेयालिआ य ठविया, तम्हा दसकालियं नाम ॥ २ ॥ छहि मासेहि अहीअं, अज्झयणमिणं तु अज्जमणगेणं । छम्मासा परिआओ, अह कालगओ, समाहीए ॥३॥ आणंदअंसुपायं, कासी सिज्जंभवा तहिं थेरा । जसभद्दस्स य पुच्छा, कहणा य विआलणा संघे ॥ ४ ॥ इति श्रीमनककथा समाप्ता ॥ ३९ ॥

**दत्तेन भूभुजा याग-फलं पृष्टोऽन्यदा हठात्। कालिकाचार्य आचष्ट, नरकस्य गतिं स्फुटम् ॥ १ ॥**

तथाहि-तुरमण्यां पुरि कालिको भूदेवो बभूव । तस्य भद्राह्वा सहोदरी जाता । तस्य स्वस्रीयो दत्त इति नामाऽभूत् । कालिकः क्रमात् गुरूपान्ते धर्मोपदेशमाकर्ण्य वैराग्यात् संयमश्रियं जग्राह । तं शास्तारं विना दत्तोऽत्यन्त-निर्गलोऽभूत् । क्रमात्सप्तव्यसनासक्तो बभूव । क्रमाद्दुर्दैवयोगाज्जितशत्रुभूपस्य दत्तः सेवकोऽभूत् । अज्ञेन भूपेन जितशत्रुणा स दत्तः प्रधानपदवीं प्रापितः । क्रमात्सर्वान् सेवकान् वशीकृत्य तं भूपं निर्वास्य दत्तः स्वयं राजाऽभूत् । दुर्वृत्तप्लवगव्याल-व्याघ्रमार्जारवाह्निवत् । नोपकारैः परिग्राह्यः, स भूपो विबुधैरपि ॥१॥ ततस्तस्य राज्ञो बुधाः प्रजाश्च विश्वासं न कुर्वते विश्वस्तघातत्वात् । यतः-"ये कुलाचारतो भ्रष्टाः, परलोकादभीरवः । तेषां कुर्वीत विश्वासं, न कथं-

स्थितः । राजचक्रं
चन मानवाः ॥१॥ " आत्तराज्यं दत्तं पापिनं प्रकृतिर्न विश्वसितिस्म । जितशत्रुरन्यत्र प्रच्छन्नं स्थितः । राजचक्रं
समाक्रम्य, दत्तुगूढोऽतिमूढधिः । अविनीतः प्रकृत्याऽभूत्, दत्तो द्वेषस्य भाजनम् ॥ १ ॥ स दत्तो राजा यागं कार-
यन् भूरिजीवान् निरन्तरं हन्ति । यथा यथा यागे हन्यमानानां पशूनां रुधिरप्रवाहः प्रससार तथा तथा स दत्तो-
राजा जहर्ष । अन्यदा श्रीसूरिपदप्राप्तः कालिकाचार्यस्तत्रागात् । तमागतं तत्र सूरिं श्रुत्वा दत्तस्तत्राययौ । तेन
राज्ञाऽन्यदा यज्ञफलं पृष्टो गुरुरुवाच—धर्मात्—त्रिविष्टपप्राप्तिरधर्मान्नरकप्राप्तिर्ध्रुवम् । ततो भूयोऽपि तेन राज्ञा यज्ञफलं
पृष्टो गुरुर्नरकमादिदेश । तव श्वभ्रगतिर्भविष्यति । यतः—" अस्थि वसति रुद्रश्च, मांसे वसति जनार्दनः ।
शुक्रे वसति ब्रह्मा च, तस्मान्मांसं न भक्षयेत् ॥ १ ॥ तिलसर्षपमात्रं तु, मांसं यो भक्षयेन्नरः । स निवर्तते नरकं
यावच्चन्द्रदिवाकरौ ॥२॥ " भो राजन्! सप्तदिनमध्ये यदि तवानने विष्टालेशः पतिष्यति तदा त्वया ज्ञातव्यं नरकगतिः
स्वस्य । तदानीं रुष्टो राजाऽवग् भो मातुल ! तव का गतिर्भविष्यति । गुरुराचष्ट—अहं व्रतं प्रपाल्य स्वर्गं यास्यामि ।
तदानीं दत्तेन स्वसेवकपार्श्वादसिना हन्यमानोऽपि श्रीकालिकाचार्यो जगौ—यागो नरकाय भवति । उक्तं च—" दत्तेण
पुच्छिओ जो, जन्नफलं कालओ तुरमणीए । समयाहियाहिएणं, सम्मं बुइयं भयंतेणं ॥ १ ॥ " दत्तेन ध्यातं यद्यहं

सप्तदिनेभ्यः पुरतो जीविष्यामि तदा कालिकाचार्यममुं हनिष्यामि । ततस्तस्य सूरेरन्तिके स्वसेवकान् मुक्त्वा स दुष्टमतिर्दत्तः सौधमध्ये सप्तदिनानि स्थातुं स्थितः । इतो जितशत्रुभूपभक्तैर्जनैर्जितशत्रुभूपो राज्यदानार्थं प्रकटीचक्रे प्रच्छन्नं । इतो रक्ष्यमाणेषु राजमार्गेषु अशुचिषु वस्तुषु अपसार्यमाणेषु सप्तमे दिने दत्तो राजा हृष्टस्तुरगारूढोऽष्टमदिनभ्रान्त्या ध्रियमाणातपत्रो राजमार्गे निस्ससार । इतो मालिकः पुष्पपूर्णकरण्डकयुतो राजमार्गे समागात् । भेर्यादिनिनादैः श्रुतमात्रैरकस्मात्तस्यात्यन्तं मलोत्सर्गचिन्ताऽभून्मालिकस्य । लोकबाहुल्यादन्यत्र गन्तुमशक्नुवन् लब्धलक्षतया त्वरितं मलोत्सर्गं तत्रैव कृत्वा तस्योपरि पुष्पपुञ्जं मुक्त्वा मालिकोऽग्रतो गतः। तदा राज्ञो दत्तस्य तस्मिन् मार्गे गच्छतस्तुरङ्गमखुरोत्खातो विट्लेशो वदनेऽविशत् । स राजा दत्तस्तेन प्रत्ययेन पश्चाधावद् गृहाभिमुखं समायाति, तावन्मंत्रिनियुक्तैः सेवकैर्दत्तो हतः, स दत्तो मृत्वा सप्तमनरकं गतः । स जितशत्रुभूपः स्वराज्ये उपविष्टः । ततस्तं कालिकाचार्यं भूपो निषेवतेस्म, जिनधर्म्मं चाङ्गीचकार ॥ इति कालिकाचार्यकथा ॥

श्रीपुरे प्रजापालभूपस्य राज्ञी पुत्रं प्रासूत । तस्याभिधानं कालिककुमार इत्यभूत् । पुत्री तु भानुश्रीरासीत् । कालिककुमारः श्रीगुरुपार्श्वे धर्मं श्रुत्वा दीक्षां ललौ । स च बहुश्रुतोऽभूत् गुरुभिः सूरिपदं दत्तम् । इतो राज्ञा

भानुश्रीर्भृगुकच्छे जितारिभूपस्य दत्ता । तस्याः सुतौ बलमित्रभानुमित्रौ । तयोर्भागिनेयो बलभानुरभूत् । एकदा तत्र गुरवः कालिकसूरय आगताः । तत्र धर्मोपदेशं श्रुत्वा बलभानुर्दीक्षां जग्राह । तदा गुरुसत्कैः क्षुल्लकैर्गङ्गाधरः पुरोहितो वादे जितः । एकदा गुरवो विहारं कृत्वा तत्रागताः, बलमित्रभानुमित्रयोराग्रहात् गुरवस्तत्र चतुर्मासीं स्थिताः । ततो गङ्गाधरपुरोहितस्तान् गुरून् कर्षितुमिच्छन् पूर्ववैरात् भूपाग्रे छन्नं जगौ—देव !

इमे जइ पुज्जा, भमंति जहिं तत्थ गच्छिरंमि जणे । गुरुपयअक्कमगकया, होइ अवन्ना दुरिअहेऊ ॥ १ ॥

उक्तञ्च "यत्र देवर्षिपूजादेः क्रियतेऽतिक्रमः क्वचित् । तच्चेत्सहते राजा, घोरं तत्र भयं भवेत् ॥ १ ॥"

राजाऽवक्—किं क्रियते गुरवः सुस्थिताः, तेषां चलनविषये वक्तुं न युक्तम् । पुरोहितोऽवग्—गृहे गृहे नवीना वर्या रसवती कार्यते । यदा साधवो विहर्तुमायान्ति तदोच्यते—श्रीपूज्यपादकृते रसवती कृताऽस्ति । ततोऽनेषणां ज्ञात्वा गुरवः स्वयमन्यत्र गमिष्यन्ति । भूपेन तथा कारिते गुरवः प्रतिष्ठानपुरे चातुर्मासकमध्ये गताः प्रवेशमहोत्सवोऽभूत् । तत्र शालिवाहनो भूपः पृथिवीं पालयतिस्म । पर्यूषणापर्व समीपं समायातं, तत्र भूपोऽवग्—भगवन् ! पर्युषणापर्व कस्मिन् दिने करिष्यते गुरवो जगुः—भाद्रसुदिपञ्चम्यास् । तदा भूपोऽवक् पञ्चम्यामत्रेन्द्रमहोत्सवो भवति तेन

पर्युषणापर्व एकस्मिन् दिने कथं करिष्यते। भाद्रसुदिपञ्चम्या अर्वाक् पश्चाद्वा भवति तदाऽहं पर्युषणापर्वणि तपोनियम-जिनालयोत्सवादि करोमि। तदा गुरवो जगुः—भाद्रसुदिपञ्चम्याः पुरतः प्रहरेऽपि न क्रियते अर्वाक् तु भवति। उक्तं च—"तेणं कालेणं तेणं समएणं समणे भगवं महावीरे वासाणं सवीसइमासे विइक्कंते वासावासं पज्जोसवंति।" उक्तं च—"आसाढपुन्निमाए, संवच्छरियसामग्गि होइ पज्जोसवणा। तत्तो सावणपंचमि—माइसु असिवाइकारणओ" ॥ १ ॥ इत्यादि। "इत्थ य पणगं पणगं, करणीयं जाव वीसई मासो। सुद्धदसमिइ ठिआण य, आसाढी पुन्निमोसरणं ॥२॥" इत्यादि। यदि चतुर्थ्यां क्रियते तदा घटते। ततो राजा प्रतिपद्दिने उत्तरपारणकं चकार श्राद्धा अपि तथा चक्रुः। ततः सर्वाचार्यसंमतं पर्युषणापर्व श्रीकालिकसूरिभिः कृतम्। ततः सर्वैः सूरिभिस्तथा सर्वत्र पर्युषणापर्व चक्रे यतः—"अवलंबिऊण कज्जं, जं किंचिवि आयरंति गीयत्था। थोवावराहबहुगुणं, सव्वेसिं तं पमाणं ति ॥१॥ आयरणा वि हु आणा, अविरुद्धा होइ चेव आणत्ति। इयरा तित्थयरासायण त्ति, तल्लक्खणं चेवं ॥ २ ॥ असढेण समाइन्नं, जं कत्थइ केणई असावज्जं। न निवारिअमन्नेहिं, बहुमणुमयमेयमायरिअं ॥३॥ कदाचिदवन्त्यां कालिकसूरयः स्थिताः। तत्र प्रमादपरान् साधून् दृष्ट्वा जगुः—भो साधवो मनाग् नैव, प्रमादः क्रियते व्रते।

प्रमादः पातयत्येव, यतिं संसारसागरे ॥ १ ॥ उक्तं च—"चउदसपुव्वी आहारगा य, मणनाणिवीयरागा
य । हुंति पमायपरवसा, तयणंतरमेव चउगइआ ॥ २ ॥ न तं चोरा विलुंपंति, न तं अग्गी विणासए ।
न तं जूएण हारिज्जा, जं धम्मंमि पमत्तओ ॥ ३ ॥" एवं नोदिता गुरुभिः साधवो न प्रमादं तत्यजुः । ततो गुरवो
दध्युः—अमी साधवः प्रमादिनस्त्याज्या एव । यतः—"छंदेण गओ छंदेण, आगओ चिट्ठउट्ठिअ छंदेण । छंदेण
वट्टमाणो, सीसो छंदेण मोत्तव्वो ॥ १ ॥ एवं ध्यात्वा साधून् प्रमादं त्याजयितुं शय्यातरस्य श्राद्धस्य शिक्षां
दत्वा गुरवो रात्रौ छन्नं निर्गत्य सुवर्णभूमौ स्वशिष्यसागरचन्द्रसमीपे ययुः । तदा वृद्धं साधुमागच्छन्तं दृष्ट्वाऽभ्युत्थाय
सागरचन्द्रसूरिः प्राह—अस्मिन् विजने भवद्भिः स्थीयताम् । ततो गुरवस्तत्र स्थिताः । सागरचन्द्रेण नोपलक्ष्यंते ।
व्याख्यानं कृत्वा सागरचन्द्रसूरिः प्राह—मयाऽद्य व्याख्यानं कीदृक् कृतम् । गुरवो जगुः—विशिष्टम् । ततः सागरचन्द्रः
स्वव्याख्यानकलया हृष्टः । ततो द्वाभ्यां सूरिभ्यां धर्मस्थापनोत्थापनाभ्यां विवादः कृतः । सागरः प्राह—नैवास्ति
धर्मः परलोकशर्मकृत्, न तावदास्ते परलोक एव सः । साक्षादभावात् परलोकिनस्ततः, पुण्यस्य पापस्य भुनक्तु
कः फलम् ॥ १ ॥ कालिकसूरिराह—अहं सुखी दुःख्यभूवमित्युदित्वरः, संप्रत्ययः कस्यचनापि जातुचित् । नायं

समुन्मीलति भूतसंचया-धिकं विनात्मानमबाधयान्वितम् ॥ १ ॥ आत्माऽस्य संवेदनतः प्रत्यायते स्वाङ्गे परान् प्रत्यनुमानतोऽमुतः । तथा च सर्वत्र हि बुद्धिपूर्वको-त्थायाः कृपाया उव(प)लम्भतः खलु ॥२॥ इतो यतयः पश्चाद्रात्रावुत्थिता यावद्गुरून् शब्दयन्ति, तावत्कोऽप्युत्तरं-न वदति । ततः शून्यचित्ताः शय्यातरं श्रावकं पृच्छन्तिस्म । गुरवः कुत्र सन्ति ? स प्राह-अहं किं जाने, यूयमेव आत्मनो गुरूणां स्थितिं न जानीथ ? ततो नोदिताः शय्यातरेणेति साधवः । गुरवो युष्मान् त्यक्त्वा गताः । इयं नः गुरूणां स्थितिरुक्ता। ततस्ते साधवः प्रमादं त्यक्त्वा गुरूक्तविधिना चारित्रं पालयन्तिस्म । गुरुभिर्वालुकाभिर्भरणिकं भृत्वा पुना रिक्तीकृत्य पुनर्भृत्वा अर्द्धभरणिकं वालुकानां दर्शयित्वा प्रोक्तम्-गौतमस्वामिपार्श्वात् पतन्ती विद्या वर्तते वालुकान्यूनदर्शनात् ॥ एकदा श्रीकालिकसूरिः प्रतिष्ठानपुरे चतुर्मासीं स्थिताः सन्ति । तदा प्रथमस्वर्गस्वामीन्द्रो महाविदेहक्षेत्रे श्रीसीमन्धरं नन्तुं गतः, तत्र श्रीसीमन्धरोऽकथयत् भरतक्षेत्रे शत्रुञ्जयतीर्थं सर्वतीर्थेभ्य उत्कृष्टं समस्ति श्रीकालिकसूरिर्यादृशं निगोदस्वरूपं कथयति तादृशोऽन्यः कोऽपि तत्र नास्ति । तत इन्द्रो वृद्धविप्ररूपं कृत्वा सार्द्धे प्रहरसमये गुरुपार्श्वे समागात् । गुरुं प्रणम्य विप्रको जगौ-अहं वृद्धोऽभूवं ममायुः कियदस्ति । अहमनशनं जिघृक्षुरस्मि । ततो गुरुभिर्विलोक्य

ज्ञानेनोक्तम्—तव सागरद्वयमितमायुरस्ति । तत इन्द्रेण स्वरूपं प्रकटीकृतम् । निगोदविचारो यादृशः श्रीसीमन्धरस्वामिना प्रोक्तः तादृशो गुरुणाप्युक्तः । तत इन्द्रोऽवक्—त्वं शत्रुञ्जयतीर्थं भरते प्रोक्तं श्रीसीमन्धरस्वामिना नम । तत इन्द्रोऽवग्—यावत् साधव आयान्ति तावत् स्थास्याम्यहम् । गुरवो जगुः—तव रूपं दृष्ट्वा साधवो निदानं करिष्यन्ति वाह्यारघट्ट विक्रेष्यन्ते । तत इन्द्रः शाला(या) [पाषाणीं] चतुरशीतिस्तम्भाया द्वारं परावृत्त्य गतः । साधवो विहृत्यागता द्वारमन्यत्र दृष्ट्वा जगुः—भगवन् द्वारमेवं कथमभूत् । ततो गुरुभिरिन्द्रागमनादिस्वरूपं प्रोक्तम् । साधवो जगुः—यदीन्द्रोऽस्थास्यत्तदा वयं तं दृष्ट्वा पुण्यं विशेषतोऽकार्ष्म ॥ इति श्रीकालिकसूरिकथा ॥

प्रभावनां वितन्वानो, जिनेन्द्रशासने सदा । लभतेऽत्र परत्रापि, सुखं कालिकसूरिवत् ॥ १ ॥

तथाहि-मगधदेशे धरावासपुरे वज्रसिंहभूपस्य सुरसुन्दरी प्रियाभूत् । पुत्रः कालिककुमारोऽभूत् । पुत्री सरस्वती च । एकदा कालिककुमारो राजपुरुषयुतः क्रीडायै वने गतः । तत्र गुणधरसूरिं वन्दतेस्म तत्रोपदेशः श्रुतः—माणुस्स खित्तजाई, कुलरूवारुग्गमाउअं बुद्धी । सवणग्गहणं सद्धा, संजमो लोगंमि दुलहाइं ॥ १ ॥ इत्यादि धर्म्मं श्रुत्वा प्रबुद्धो मातापितरौ पर्यवसाप्य सरस्वत्या भगिन्या युतो गुरुपार्श्वे

कुमारो व्रतं ललौ । गुरुपार्श्वे कालिककुमारः पठन् साहित्यतर्कलक्षणछन्दोऽलङ्कारनाटकाद्यागमशास्त्रकुशलोऽभूत् । श्रीगुणधरसूरिभिर्योग्यं मत्वा कालिकसाधोः सूरिपदं ददे। विहारं भूमण्डले कुर्वन् भव्यजीवान् प्रबोधयतिस्म । अन्यदा श्रीकालिकसूरिरुज्जयिन्यां बहिरुद्याने समवासार्षीत् । तदा सरस्वती साध्वी प्राप्तप्रवर्तिनीपदा पुरमध्ये यियासुर्गुरून् प्रणम्य पुरद्वारे समागात् । तदा तत्रत्यो गर्दभिल्लो राजा पुराद् बहिर्निस्सरन् सरस्वतीं साध्वीं विलपन्तीं रूपशालिनीं वीक्ष्य रागातुरः स्वान्तःपुरे बलात् क्षेपयामास । गुरुणा गर्दभिल्लभूपस्य कृतं ज्ञातं, ततो गुरुणा श्रीसङ्घः प्रेषितः साध्वीवालनार्थं राजपार्श्वे गत्वा प्राह—महासतीयं मुच्यतां तपोधनाः तपस्विन्यो राज्ञो यस्य भूमौ तपः कुर्वन्ति, तस्य पुण्यविभागो राज्ञः समेति। तेन स्वामिन्नियं मुच्यताम् । त्वं प्रजापालोऽसि, तपस्विनां तु भूप एवाधारोऽस्ति यतः—" नरेश्वरभुजच्छायामाश्रित्याश्रयिणः सुखम् । निर्भयाः सर्वकार्याणि, धर्मादीनि वितन्वते ॥ १ ॥ " एवं श्रीसङ्घेनोक्तो भूपः प्राह—नाहमिमां मुञ्चे उपदेशः स्वगृहे दीयते भूपस्याग्रे न दीयते एवंविधः । ततः श्रीगुरुभिर्भूपपार्श्वे गत्वोक्तम्—इयं तपस्विनी मम भगिन्यस्ति तेन मुच्यतां त्वं प्रजापालोऽसि त्वमाधारस्तपस्विनां ततो गुरूक्ते यदा राजा न मुञ्चति सरस्वतीं तदा गुरवः स्वस्थानेऽभ्येत्य श्रीसङ्घमाकार्य प्राह—अयं दुष्टो राजा सरस्वतीं जहार, अस्य

शिक्षा दीयते । यदि सति सामर्थ्ये जिनमतप्रातिकूलं यो न हन्ति तस्य पाराञ्चितं पापं लगति । यतः—" देवगुरुसंघकज्जे, चुन्निज्जा चक्कवट्टिसेन्नंपि । कुवीओ मुणी महप्पा, पुलायलद्धीइ संपन्नो ॥ १ ॥" इत्याद्युक्त्वा स्ववेषं साधूनां समर्प्य श्रीसङ्घं मुत्कलाप्य शककूले गतः । तत्र स्वकलां दर्शयित्वा राज्ञो मिलितः, सुभाषितैर्भूपं रञ्जयामास कालिकसूरिणा रञ्जितो राजा जगौ—भवतो यत्कार्यं विद्यते तन्निगद्यताम् । गुरुः प्राह—अवसरे कथयिष्यते। एकदा शकभूपतेः सभायामुपविष्टस्य साधनसिंहभूपेन कच्चोलकं क्षुरीयुतं प्रेषितं समागतं, तदा राजा कृष्णमुखोऽभूत् । तत्कच्चोलकं मस्तके कृत्वा साधनसिंहस्य सेवकस्य सन्मानं कृत्वोत्तारकं ददौ । ततो रहसि कालिकाचार्यः शकं पप्रच्छ कच्चोलकागमनवृत्तान्तं, ततो राज्ञोक्तम् । अस्माकं षण्णवतिभूपानामेको मुख्यभूपः साधनसिंहोऽस्ति बली, स च यदास्माकं राज्ययोग्याङ्गजो भवति, तदा स भूपः कच्चोलकं क्षुरीयुतं प्रेषयति, तदा शीर्षं क्षुर्या छित्त्वा प्रेष्यते । ततः सूरिराह—एवं को मूर्खो निजं शिरो दत्ते, जीवद्भिः सुखं लभ्यते । ततो राजाऽवग्—किं क्रियतेऽस्माभिः । ततः सूरिराह—यदि मम कथितं क्रियते, तदा वो जीवितं भवति चिरम् । ततो—भूपोऽवक् कथयास्माकं जीवनोपायं त्वं तु विज्ञोऽसि । ततः सूरिराह—उज्जयिनी पुरी वर्याऽस्ति, तत्र षण्णवतिर्ग्रामाः सन्ति, तेन तत्र यूयं

सर्वे भूपाः मया सार्द्धं आगच्छन्तु। भवतां उज्जयिन्या राज्यं दास्यते मया। आकारयतु भवान् भूपान् सर्वान् । ततो-विचारं कृत्वा षण्णवतिर्भूपाः स्वतुरङ्गमपत्तिकुटुम्बयुताश्चेलुः । वर्त्मनि तेषां वर्षाकालः समायात् । ततो टंकपर्वतपार्श्वे सुराष्ट्रमध्यस्थे ते भूपास्तस्थुः । शम्बलक्षीणा भूपा जगुः—भो कालिकावधूत ! शम्बलं विना कथमुज्जयिन्यां गम्यते तत्रत्यं राज्यं च गृहीष्यते । सूरिः प्राह—स्थिरं स्थीयतां सर्वं वयं भविष्यति तदा सरस्वत्या आचाम्लतपस्करणस्वरूपं शासनदेव्या प्रोक्तम्। ततः [ गुरुणा ] चूर्णेन इष्टिकानिवाहं स्वर्णीकृत्य सर्वेषां भूपानां विभज्य ददौ सूरिः । ततः सर्वे भूपाः सुस्थिता बभवुः । ततः सूरिणा शिबिरं चालितं गुर्जरात्रमध्ये भूत्वोज्जयिनीपार्श्वे ययौ । तदा गर्दभिल्लो भपः संमुखमागत्य युद्धं कुर्वाणं वैरिबलं महत दृष्ट्वा वप्रमध्ये प्रविवेश । सर्वे भूपाः सूरेरादेशेन वप्रं वेष्टयित्वा स्थिताः । राज्ञा ध्यातमिदं सैन्यं महत् तेन किं क्रियते । अत्रान्तरे सूरिणा ज्ञापितं सरस्वतीं मुञ्च नो चेद्‌तो मरणं भावि । ततः सूरिमागतं श्रुत्वा वैरिबलं महद्दृष्ट्वा गर्दभिल्लो विद्यां साधयितुमुपविष्टः । तदा सूरिभिर्गर्दभिल्लीविद्यां साधयंतं गर्दभिल्लं भूपं ज्ञात्वा प्रोक्तम्—असौ भूपोऽग्रेतन्यामष्टम्यां गर्दभिल्लीं साधयिष्यति । सा च यदा वप्रोपरि चटित्वा शब्दं करोति, तदा यः शब्दं श्रोष्यति स मरिष्यति। अतः कारणात अष्टोत्तरशतं शब्दवेधिनो मया सह

निष्ठन्तु, शिविरं गव्यूतद्वये स्थाप्यते तदा, यदाऽहं वाणं मुञ्चामि तदा १०७ बाणवेधिभिर्बाणा मोचनीयाः । गर्द-
भीविद्यायाः शब्दं कुर्वाणाया मुखं बाणैर्भरिष्यते । ततो रुषा राजानं पादाभ्यां हत्वा मुखे नीति कृत्वा गमिष्यति ।
राजा मरिष्यति राज्यं गृहीष्यते । एवं स सूरिः शब्दवेध्यादिनरान् मीलयित्वा गर्दभिल्लं जिगाय । शकसाहाय्यात्
उज्जयिन्या राज्यं वृद्धशकाय सूरिर्ददौ सर्वम् । ततः सूरिः सरस्वतीं सुशीलां अन्तःपुरादानिनाय । सर्वेषां भूपानां
पृथग पृथग देशान् विभज्य ददौ सूरिः । यस्य राज्ञः पार्श्वे स्थितः तस्योज्जयिनीराज्यं ददौ सूरिः अथवा स्वभागि-
नेयस्य ददौ । ततो गुरुपार्श्वे गत्वा श्रीकालिकाचार्यः प्रायश्चित्तं गृहीत्वा पुनर्वेषं गृहीत्वा चिरं भव्यजीवान् प्रबोध्य
स्वर्गसुखं प्राप । सरस्वत्यपि चारित्रं प्रपाल्य स्वर्गं गता । इति कालिकसूरिकथा समाप्ता ॥ ४० ॥

स्वस्थानस्थोऽपि सद्भावात्, शाम्बः श्रीकृष्णनन्दनः । श्रीनेमिवन्दनात् प्राप, फलं मुक्तिसुखप्रदम् ॥१॥

तथाहि—द्वारिकायां पुरि कृष्णस्त्रिखण्डाधिपो राजा राज्यं करोतिस्म न्यायाध्वना । तस्य रुक्मिण्यादयो बह्व्यः
पत्न्योऽभूवन् । अन्येद्युः रुक्मिणी स्वप्ने बलक्षवृषभशालिनि विमाने स्वं निषन्नं दृष्ट्वा मुरारये कथयामास, कृष्णोऽ-
वग्–तव पुत्रो भविष्यति । रुक्मिणीकृष्णजल्पितं श्रुत्वा कलिकारिका काऽपि स्त्री सत्यभामाया अग्रे जजल्प । साऽपि

सत्यभामा रुषारुणा कृष्णस्याग्रे गत्वा जगाद—मया हस्तिमल्लोऽद्य स्वप्ने दृष्टः। ततो नारायणस्तस्या जल्पितमिङ्गिताकारैः कूटं मत्वा जजल्प—भो पत्नि! त्वया किं खिद्यते परसम्पदं भाविनीं श्रुत्वा। सत्यभामाऽवग्—मदीयं जल्पितं न कूटं भविष्यति। ततस्तयोर्मिथस्तदा सत्यभामारुक्मिण्योर्विवादे जायमाने सत्यभामा सा जगौ—यस्याः पुत्रः प्रथमं परिणेष्यति, तस्यै अन्यया स्वमस्तकस्थां वेणीं छित्त्वाऽर्पणीया, तत्र साक्षिणः कृताः। दैवादुभे अपि राज्ञ्यौ गर्भं दधतुः, क्रमाद्रुक्मिण्या जनिते पुत्रे प्रद्योतनत्वात् प्रद्युम्न इति नाम दत्तं, सत्यभामया द्वितीये दिने पुत्रे प्रसूते भानुरिति नामाऽभूत्। इतो धूमकेतुरसुरो रुक्मिण्या गृहेऽभ्येत्य छन्नमर्भं गृहीत्वा प्रतिवैताढ्यमभ्यगात्। तत्र ढंकशिलायामुपरि मुक्त्वा देवस्तिरोदधे। इतस्तत्रागतः कालसंवरः खेचरस्तं बालकं गृहीत्वा स्वपुरं ययौ। कनकमालानाम्न्यै स्वपत्न्यै विश्राणितः पालनीयः पुत्रस्थाने स्थापितश्च तया। प्रोक्तं च खगेन पत्न्यग्रे—मया पुत्रो जनित इति सर्वत्र प्रघोषो वक्तव्यः। ततस्तया तथा कृते प्रकृष्टदीप्तिमच्छरीरत्वात् प्रद्युम्न इति नाम दत्तं तस्य सुनोः। ततः क्रमात् स्तन्यपानादिना स प्रद्युम्नः पुत्रो ववृधे। इतो नारदः कृष्णं पुत्रवियोगदुःखितं मत्वा श्रीसीमन्धरस्वामिपार्श्वे गतः, श्रीसीमन्धरस्वामिपार्श्वे पृष्टं प्रद्युम्नस्वरूपं, श्रीसीमन्धरस्वामिनः सकाशात् प्रद्युम्नस्थितिस्वरूपं धूमकेतु-

नापहरणादिकं सर्वं नारदो जज्ञौ । ततो नारदो नारायणपार्श्वेऽभ्येत्य प्रद्युम्नस्वरूपं कथयामास। रुक्मिण्या अग्रे गत्वा पुत्रस्वरूपं प्रोक्त्वा(च्य) नारदोऽवग्-प्राग्भवे रुक्मिण्या मयूर्यण्डानि घुसृणेन लिप्तानि कृत्वा मुक्तानि षोडशप्रहरान् यावत्, मयूरी अण्डकानि स्वकीयान्यजानती दुःखिनी जाता । षोडशप्रहरप्रान्ते दयया तेन रुक्मिणीजीवेनाण्डानि प्रक्षालितानि । ततो निजाण्डान्युपलक्ष्य मयूरी मुमुदेतराम् । तेन कर्मणा रुक्मिण्याः षोडशवर्षप्रान्ते पुत्रो मिलिष्यति, एतत् श्रीसीमन्धरस्वामिना समाग्रे प्रोक्तम्, ततो हृष्टाऽभूद्रुक्मिणी । इतः सर्वशास्त्रकुशलः प्रद्युम्नो युवतिचित्ते मुदं दत्ते स्म । उद्यौवनं तं कुमारं दृष्ट्वा कनकमाला स्मरातुरा कामयामास । ततः कनकमाला रहो जगौ-भो महाभाग कुमार ! मया सह भोगान् भुंक्ष्व । मद्देहोत्पन्नस्मरतापं स्वदेहालिङ्गनामृतेन निर्वापय । इति तस्या वचः श्रुत्वा प्रद्युम्नो दृनोऽवग्-भो मातः ! किमिदमसदृशं वचस्त्वया चिंतितं चेत्त्वया तज्जल्पितं कथमहं तु तव पुत्रोऽस्मि । साऽऽह नाऽहं तव माता मम कान्तेन क्वचित्त्वं प्राप्तः मया त्वं वृक्ष इव वर्द्धितोऽसि, तेनाहं त्वत्तो भोग फलानि गृहीतुकामाऽस्मि तव दोषो न भविष्यति । सद्भिः प्रत्युपकारः कर्तव्यः । गौरीप्रज्ञप्त्यौ द्वे विद्ये विजयक्षमे त्वं गृहाण । प्रद्युम्नो दध्यौ प्रथमं विद्ये गृह्णामि अहं त्वकर्तव्यं न करिष्यामीति ध्यात्वा प्रद्युम्नोऽवग्-विद्ये प्रयच्छ मह्यं मातः ! अवसरे त्वच्चिन्तितं करिष्यते मया ।

ततस्तया दत्ते ते द्वे विद्ये गृहीत्वा प्रद्युम्नो विधिना साधयामास । ततो विद्याभृत्प्रियाऽऽचष्ट—भोगान् मया सहाधुना प्रद्युम्न ! भुंक्ष्व स्ववाचां पालय । यतः—" अलसायंतेण वि सज्जणेण, जे अक्खरा समुल्लविआ । ते पत्थरटंकुक्कीरिअव्व, न हु अन्नहा हुंति ॥ १ ॥ " यतः—" अक्खाणसणी कमाण मोहणी, तह वयाण बंभवयं । गुत्तीण य मणगुत्ती, चउरो दुःखेण जिप्पंति ॥१॥ " ततः प्रद्युम्नो जगाद—त्वं मम माताऽसि मात्रा समं यस्य पतिसम्बन्धो भवति तस्य नूनमधो गतिः स्यात् । भो मातस्त्वमेवं किं वक्षि । यतः " वरमग्गिमि पवेसो० ॥१॥ " इति जल्पन् प्रद्युम्नः पुराद् बहिरगात् । तदा नखैः स्वदेहं निकृत्य दीर्घं कनकमाला कलकलं कृत्वाऽभ्यधात्—भो भो लोका ! धावत धावत । अयं दुष्टः प्रद्युम्नो भोगसुखार्थी मां विदार्यैवं गतः किमिदं किमिदमिति जल्पन्तः कनकमालापुत्रास्तत्राययुः । ज्ञात्वा प्रद्युम्नचेष्टितं मातुः पार्श्वे ते पुत्रा रोषारुणा योधाः प्रद्युम्नं हन्तुं लग्नाः प्रद्युम्नो विद्याबलेन तान् जघान । हतान् सुतान् ज्ञात्वा संवरः पिता युद्धार्थं निर्ययौ । तमपि युध्यमानं संवरं विद्यया स्तब्धवान् सः । ततः संवरोजगौ—भो महानुभाग ! त्वं पुत्रोऽसि मम किमेवं कदर्थयसि ? मां मुत्कलं मुञ्च यत्त्वं जल्पसि तत्करोम्यहम् । ततस्तत्क्षणात् संवरो मुत्कलः कृतः । ततः प्रद्युम्नः पितुः पार्श्वे गत्वा प्रणामं कृत्वा च जगौ—इयं तव पत्नी वर्या न

मया तु वक्तुं न शक्यते । इतोऽकस्मान्नारदेनाभ्युपेत्य प्रद्युम्नः पूजितः, ततो नारदेन प्रोक्तं तव मातापितरौ द्वारिकायां कृष्णरुक्मिण्यौ विद्येते इति श्रीसीमन्धरस्वामिना प्रोक्तं नारदोऽवग्—सत्यभामाया भानुकः पुत्रो यदि स प्रथमं परिणेष्यति तदा त्वन्मात्रा पणीकृता स्वीयावेणी दास्यते । केशदानविप्लवेन त्वद्वियोगशुचा च सत्यपि त्वय्येवंविधे-पुत्रे रुक्मिणी मरिष्यति । ततो नारदयुक् प्रद्युम्नः प्रज्ञप्तिविद्यानिर्मितविमानमारुह्य द्वारिकापुरीबाह्योद्याने समाययौ । सविमानं नारदं बाह्योद्याने मुक्त्वा स्वल्पवेषभृत् प्रद्युम्नः प्रज्ञप्तिविद्यया भानुपरिणयनार्थमागतां कन्यामपश्यत् । विद्याबलाद्विवाह्यां कन्यामपहृत्य नारदोपान्ते प्रद्युम्नो मुमोच । कृष्णोद्यानं विद्याभिश्च्युतपुष्पफलं व्यधात्, ततो जलाशयानशोषयच्च प्रद्युम्नः । तृणपुञ्जं विवाहयोग्यं च सर्वमदृश्यं कृत्वा बहिर्वाहमवाहयत् प्रद्युम्नः । ततस्तं हयं गृहयालुर्भानुः खेलयितुमारुरोह । तदा विद्याबलाद्भानुर्घोटकात् प्रद्युम्नेन पातितः तदा जहसुर्लोकाः । अथ प्रद्युम्नो द्विजीभूय वेदशास्त्रादि पठन् कस्यचित् श्रेष्ठिनो हट्टस्थां कुब्जिकां दासीं मुष्टिघातात् सरलां चक्रे । ततस्तया दास्या प्रद्युम्नो भामागृहे नीतः । प्रोक्तं च दास्या—स्वामिनि ! अहमनेन विद्याबलात्सरला चक्रे । ततो भामया आसनदानपूर्वं प्रोक्तम् । भो द्विज ! रुक्मिणीतो मामधिकरूपां कुरु । सोऽप्यभाषत—त्वं मुण्डितं शिरः

कृत्वा जीर्णवासः परिधाय बुडबुडेतिविद्यां कुलदेव्यग्रेजपन्ती जल्प मामधिकरूपां कुरु कुरु स्वाहा। ततो भामा विद्यां साधयितुं मस्तकं भद्रीकृत्य तस्थावेकान्ते। विद्याबलात्तदा भामाचेटीभिः परिवेषितं सर्व्वमन्नं पानं विवाहयोग्यं निष्ठापयामास प्रद्युम्नः। ततः स बालमुनिः रुक्मिणीगृहे यावद्ययौ, तावद्रुक्मिणी मुदिता वर्यविष्टरग्रहणार्थमन्यत्र गता च। इतः स मुनिः कृष्णसिंहासने उपविष्टः। रुक्मिणी पश्चाद्यावदागता, तावत् कृष्णसिंहासनारूढं दृष्ट्वा जगादेति——कृष्णं वा कृष्णजातं वा, विना सिंहासनेऽत्र हि। अन्यं पुमांसमासीनं, सहन्ते न हि देवताः॥ १॥ सोऽप्याह–तपो मेऽतुलं विद्यते, षोडशवर्षप्रान्ते पारणायाहमिहागाम्। तेन त्वं मां पारणं कारय नोचेद्भामागृहे यास्यामि। रुक्मिणी प्राह--मया किमपि विरूपं नोक्तं मम बाढं पुत्रवियोगोऽस्ति। प्रद्युम्नः प्राह ममापि मातुर्वियोगोऽस्ति किं दुःखं क्रियते। त्वं वद तव पुत्रः क्व गतोऽस्ति। ततस्तया रुक्मिण्या स्वपणसम्बन्धः प्रोक्तः। मया च पुत्रप्राप्त्यर्थं देवी समाराधिता जगौ–तव पुत्रः षोडशवर्षप्रान्ते समेष्यति सोऽद्यापि नागतः। ततोऽधुना त्वं ज्ञानी समायातोऽसि शास्त्रादि विलोक्य पुत्रागमनस्वरूपं कथय सोऽपि मुनिः प्राह–रिक्तहस्तो जनो देवं, गुरुं वा पितरं नृपम्। न पश्यति लसत्साताभिलाषी मेदिनीतले॥ १॥ रुक्मिणी प्राह–तुभ्यं पेया दास्यते। ततस्तया तस्मै

आनन्दश्रावकप्रतिबोधः कृतः । तत्र प्रथमं सुरकृतसमवसरणमध्यसिंहासनस्थितो भगवान् महावीरस्वामी सामान्येन धर्मदेशनां कृत्वा पश्चात् सम्यक्त्वस्य स्वरूपं, तदुपर्यारामशोभाकथानकं चोक्तवान्, तच्छ्रवणाज्जातश्रद्ध आनन्दः सम्यक्त्वं प्रपन्नवान्, अत्र सम्यक्त्वस्याज्ञापकास्तदतिचाराश्च दर्शिताः । अनेनैव क्रमेण रात्रिभोजनविरमणसहिता द्वादशश्रावकव्रती तत्तत्स्वरूपकथानकाज्ञापकातिचारसहिता सविस्तरेण भगवतोपदिष्टा, आनन्देन चाङ्गीकृता । पश्चात्तद्भार्ययाऽप्यागत्याङ्गीकृता । ततः श्राद्धैकादशप्रतिमा अप्यानन्देन प्रतिपन्ना इत्यादि वर्णितम् । द्वितीयतृतीयोल्लासयोश्च कामदेवचूलनीपित्रोश्चरिते कथिते । तत्रावान्तरकथैकैकैव । इदं सर्वमनुक्रमणिकातो ज्ञेयम् । द्वितीयविभागे शेषश्रावकसप्तकस्याधिकारो वर्णितः ।

मूलग्रन्थे तच्छायाकरणे च शुद्धिविषये कृतेऽपि प्रयत्ने बुद्धिमान्द्यात् स्मृतिदोषात् दृष्टिदोषात् मुद्रणयंत्रदोषाद्वा कुतोऽपि कारणात् यत्र कुत्रापि स्खलना दृश्यते तत्र सर्वत्र मतिमता गुणग्राहिणा विदुषा सम्यग्विशोध्या, ज्ञापनीयाश्च वयं, येन पुनस्तद्विषये प्रयतामहे द्वितीयविभागप्रस्तावनायां वा दर्शयामहे, इतिशम् ।

सं. १९८४—श्री जैनधर्मप्रसारक सभा.

भावनगर.

# अनुक्रमणिका.

इति-श्रीशुभशीलगणिविरचिता

# श्रीभरतेश्वर-बाहुबलिवृत्तिः ॥

( प्रथमविभागः पत्रांकः १-१८६ )

इति श्रेष्ठि-देवचन्द्र लालभाई,-जैन-पुस्तकोद्धारे ग्रन्थाङ्कः ७७

श्रेष्ठि देवचन्द्र लालभाई-जैनपुस्तकोद्धारे-ग्रन्थाङ्कः ८७.

श्रीमत्तपागच्छाधिराज-श्रीमुनिसुन्दरसूरिशिष्य-पण्डितवर्य-श्रीशुभशीलगणिविरचिता

# श्रीभरतेश्वर-बाहुबलिवृत्तिः ।

( द्वितीयविभागः पत्राङ्कः १८७-३६८ )

संशोधकः—प्रथमविभागस्य सम्पूर्णतया, द्वितीय विभागस्य तु २३४ पत्राङ्कपर्यन्तस्य स्वर्गारोही पूज्यपाद-श्रीमद्विजयदानसूरीश्वरः ततः परं तेषां प्रशिष्यः मुनि श्री धर्मविजयः ।

मुद्रणकारिका—श्रेष्ठि-देवचन्द्र-लालभाई-जैनपुस्तकोद्धारसंस्था ।

प्रसिद्धिकारकः—जीवनचन्द साकरचन्दः जह्वेरी अस्याः कार्यवाहकः ।

वीरसंवत् २४६२. विक्रमसंवत् १९९३. खीस्ताब्द १९३७.

प्रथमंसंस्करणम् ] पण्यम् रू. २. [ प्रतयः १०००

इदं पुस्तकं मुम्बापुर्यां जीवनचन्द साकरचन्द जह्वेरी इत्यनेन "निर्णयसागर-मुद्रणापट्टे"
कोलभाटवीथ्यां २६-२८ तमे गृहे रामचन्द्र येसू शेडगेद्वारा मुद्रापितम् ।



Printed by Rāmachandra Yesu Shedge, at the "Nirnaya-sāgar" Press, 26-28, Kolbhāt Street, Bombay.
Published for Sheth Devchand Lālbhāi Jain Pustakoddhār Fund, at the Sheth Devchand Lālbhāi Jain Dharmashālā (Śri Ratnasāgar Jain Bording House), Badekhāṇ Chaklā, Gopipurā, Surat, by Jivanchand Sākerchand Javeri.

Sheth Devchand Lālbhāī Jain Pustakoddhār Fund Series: No. 87.

# S'RĪ BHARATES'VARA-BĀHUBALI-VṚTTI

## Part II

BY

## S'RĪ S'UBHAS'ILA GAṆI

COMPOSED IN

Vikrama Era 1509

Edited up to pp. 234 by the late Jainācārya S'rī Vijayadāna Sūri and pp. 235-368 by Muni S'rī Dharmavijaya.

Vikrama Samvat 1993 ] Price Rs. 2-0-0. [ A. D. 1937.

# S'RĪ BHARATES'VARA-BĀHUBALI-VṚTTI

Part I, pp. 1–186 published in A. D. 1932

and

Part II, pp. 187–368 published in A. D. 1937.

# श्रीमच्छुभशीलगणिविरचिता श्रीभरतेश्वरबाहुबलिवृत्तिः

## प्रथमविभागस्य कथानुक्रमः । प्रथमः साध्वधिकारः ॥

# द्वितीयविभागस्य—कथानुक्रमः। प्रथमः साध्वधिकारः॥



इति प्रथमः साध्वधिकार. समाप्तः।

## द्वितीयः साध्वीनामधिकारः॥

ॐ ह्रीँ णमो आयरियाणं । ॐ ह्रीँ णमो लोए सव्वसाहूण ।

सकलागमरहस्यवेदीशासनधुरंधर, परमगीतार्थ, ज्योतिर्विदाभरण पूज्यपादाचार्य

## श्रीमद् विजयदानसूरीश्वरजीमहाराजनुं

### टुंकुं जीवनचरित्र

आ महा पुरुषनो जन्म झींझुंवाडामां वि. सं. १९२४ना कार्तिक शुक्ल चतुर्दशीए थयो हतो. तेमना पितानुं नाम जुठाभाइ, अने मातानुं नाम नवलबाइ हतुं. मातापिताए एमनुं नाम दीपचंद राख्युं हतुं. दीपचंदे पोताना जीवनथी पोताना नामने देदीप्यमान कर्युं छे. दीपचंद कुळदीपक पण नीवड्या, अने शासनदीपक पण नीवड्या. दीपचंदनुं जीवन अनेक रीतिए यशस्वी बन्युं. भण्या, एसिस्टंट मास्तर थया अने पोलीस पटेल पण बन्या, परन्तु सत्ताना गुमाननी चूडमां ए सपडाया नहि. प्रसंगवश धर्म तरफ प्रेराया. पोतानुं धर्महीन जीवन अकारुं लाग्युं. पूर्वनी आराधनाथी के उत्तम भवितव्यता होवाथी, दीपचंदना हृदयमां धर्मने जाणवानी अने आचरवानी प्रबळ इच्छा जन्मी. क्रमशः तेओ साधु थया.

ए काळमां पूज्यपाद, सद्धर्मोद्धारक, न्यायाम्भोनिधि आचार्यदेव श्रीमद् विजयानंदसूरीश्वरजी महाराजानुं एकछत्र साम्राज्य प्रवर्त्ती रह्युं हतुं. ए महापुरुषना शिष्यरत्न पूज्यपाद उपाध्याय श्रीमद् वीरविजयजी महाराजानी पासे दीपचंदे वि. सं. १९४६ मां बावीश वर्षनी, यौवनना आंगणामां पगरण माडी चूकेली वये दीक्षा लीधी. यौवन दीपचंदने विलासना अंधकारमां घसडी शक्युं नहि. पण विरागे यौवनने त्यागमा घसड्युं.

दीपचंदनो उत्कर्ष प्रतिदिन वधतो गयो. तेमनुं नाम मुनि श्रीदानविजयजी राखवामां आवेलुं. सतत् अभ्यास अने प्रखर संयम पालनथी श्रीदानविजयजी विद्वान् वन्या, तपस्वी वन्या, अने मुनिराजोमां विशिष्ट स्थान भोगववा लाग्या. ज्योतिषना विषयमां तेमनो निर्णय जैनसमाज माटे निःशंकपणे स्वीकार्य मनावा लाग्यो. श्रीजिनागमो अने वीजा दार्शनीकादि शास्त्रोना गहन अभ्यासथी तेओश्री श्रीजैनदर्शनना परम रहस्यज्ञाता वन्या अने तेओश्रीना वचनोनी पण एक सरखी रीतिए उंडी असर थवा लागी. विधिविधान जेवा सूक्ष्म विषयोमा पण तेओश्री एटला निष्णात हता के तेमनी सलाह मल्या पछीथी शंकाने स्थान रहेतुं नहि.

आ महापुरुषना दिलमां शासनरक्षानी तमन्ना ठांसी ठांसीने भरायेली होय एम लागतुं हतुं. आथी आवा विद्वान्, चारित्रपात्र अने शासनने समर्पित महापुरुषने पूज्यपाद सद्धर्मसंरक्षक निःस्पृहशिरोमणी आचार्यदेव श्रीमद् विजयकमळसूरीश्वरजी महाराजाए श्रीआचार्यपद उपर वि. सं. १९८१ मां आरूढ कर्या. पू० श्रीविजयकमळसूरीश्वरजी महाराजने पू० श्रीविजयानंदसूरीश्वरजी महाराजानी पाटे सर्व मुनिवरोए स्थापित कर्या हता, अने तेओश्रीए पोतानी पाटे आ महापुरुषनी स्थापना करी. आ महापुरुषने गणी, अने पंन्यासपदवी वि. सं. १९६२ मां खंभातमां विभूपित करवामां आव्या हता.

पूज्यपाद आचार्यवर्य्य श्रीविजयदानसूरीश्वरजी महाराजाए पोतानी आत्मसाधनामां मन-वचन-कायाने समर्पी दीधा हता. अति वृद्धवये अने अति क्षीण देहे पण ते महापुरुष महान् तपस्वी हता. छातीनो सतत दुखावो होवा छतांय उग्रविहारी हता. शासनना परम आधारभूत हता. तेओश्री वि.सं१९९२ना महा सुद २ ना दिवसे पाटडी मुकामे काळधर्म पाम्या. जीवनभरना संयमना प्रभावे एमने समाधि-मरण प्राप्त थयुं. तेओश्री पोतानी पाछळ एक सुविशाळ मुनिमंडळ मूकी गयाछे, जेमां पूज्यपाद सिद्धांतमहोदधि आचार्य म० श्रीविजयप्रेम-सूरीश्वरजी महाराज अने तेमना पट्टप्रभावक पूज्यपाद व्याख्यानवाचस्पति आचार्य म० श्रीविजयरामचंद्रसूरीश्वर महाराज वगेरे मुख्यछे.

आ महापुरुषे पोताना जीवनमां शासनसेवाना अने भव्य जनो पर उपकार करवाना अनेक कार्यो कर्या छे अने तेमनुं जीवन आत्महित इच्छनार माटे एक प्रेरणानुं उत्तम साधन छे.

सं. १९९२ धनतेरसी, बुधवार.
मुंबई ता. ११ नवेंबर १९३६

साधु चरण किङ्कर
जीवनचंद साकरचंद जहेरी.
मानार्थ मेनेजींग ट्रस्टी.



# श्रेष्ठी देवचन्द लालभाई जव्हेरी.

| | |
|---|---|
| जन्म १९०९ वैक्रमाब्दे | निर्याणम् १९६२ वैक्रमाब्दे |
| कार्तिकशुक्लैकादश्याम् | पौपकृष्णतृतीयायाम् |
| (देवदीपावली—सोमवासरे) | (मकरसङ्क्रान्तिमन्दवासरे) |
| सूर्यपूरे. | मुम्बय्याम्. |

**The Late Sheth Devchand Lalbhai Javeri.**

Born 22nd Nov. 1852 A. D. Surat, Died 13th January 1906 A. D. Bombay.

1-37 -Copies 3000

N. S P

नमः प्रणतसुरनाथाय तीर्थनाथाय श्रीमते शङ्खेश्वरपार्श्वनाथाय ।

# अथाऽऽरभ्यत उपक्रमोऽयं श्रीभरतेश्वरवृत्तेः ।

ॐ ऐं नमः ।

अयि श्रद्धाभरभावितमनसः महामनसः! विदितमेवैतद् विश्वेषां पारमेश्वरप्रवचनपानपीनात्मनां विदुषां, यदुत प्रवर्तन्ते चत्वारोऽनुयोगाः सार्वे समये, तत्र च द्रव्य–गणित–चरणकरण–कथानुयोगेष्वेषु चतुर्षु कथानुयोगस्याऽपि स्थानं महत्तमम्, सन्दब्धा-श्चानेके प्रबन्धाः स्वधिया सुरगुरुसंस्पर्द्धिभिः भव्योपकृतिबद्धकक्षैः पूज्यप्रवेकैरस्मिन्ननुयोगे बालधियाममन्दानन्दाप्त्यै ।

एतेन सार्वसमयाऽऽैतिह्यवृत्तान्वेषणबद्धाग्रहैः प्रलपिताः 'कथानुयोगघटिताः प्रबन्धा दुर्घटा असम्भवदैतिह्यवृत्ताः कल्पिताश्चे'ति दोषाः प्रत्युषाः, यतो नास्त्यनाद्यनन्तेऽस्मिन् पारावारे संसारे किञ्चिदपि दुर्घटम्, अपि च परोपकृत्येकनिबद्धमनसां तेषां महात्मनां वचस्सु को नाम धीदरिद्रः कल्पनोपजीवित्वं स्वीकुर्यात्?, नास्ति प्रयोजनं किमपि सार्वसमयवेदिनां तेषां यद् विहाय भवभीलुकतां प्रवर्तेरन् ते स्वकीयकल्पनासृष्टौ, अपि च स्वोत्प्रेक्षाहृतश्रद्धाभरा अमी नव्ययुगीनाः तत्तत्कालीनैतिह्यसामग्रीं प्रति निरपेक्षाः सन्तः "अन्धस्पृष्टगज-न्यायेन" स्वाभीष्टमेव पुष्णाना मोमुहन्ते मिथः, न श्रद्दधते च मुनिगणनाथघटितप्रबन्धेष्वैतिह्यत्वं, श्रद्दधते च शिरोधूननेन पाश्चात्यविद्वत्क-ल्पितेषु प्रामाण्यनिलयं दुष्षमाकालकवलितविवेकनेत्राणां तेषाद्धथयाऽनया ।

अथ प्रस्तूयते प्रस्तुतं तावत्—पापठ्यते यः प्रत्यहं श्रद्धाभावितचेतोभिर्भावुकैः स्वाध्यायतया प्रत्यूषावश्यकक्रियाकाले सोऽयं श्रीजिनशासननभोनभोमणिसदृशां सुदृशां भरतेशाद्यपुरुषमौलिमणीनां पुण्याभिधेयैर्ग्रथितो भूषितश्च "भरहेसरबाहुबली"ति स्वाध्यायः। भावुककर्मेन्धनपावके पावकेऽस्मिन् स्वाध्याये जोघुष्यमाणा निजचरितचित्रितजगज्जनास्ते महात्मानः कदा क्व कीदृशं भूवलयं जनपदं वा स्वजनुषाऽलञ्चक्रुरित्यैतिह्यवृत्तप्रकटनपरोऽयमुपदीक्रियमाणः सुललितगद्यपद्यनिबद्धो "भरतेश्वरबाहुबलिवृत्तिग्रन्थः" स्वाभिधेयं स्वयमेव स्पष्टीकरोतीत्यत्र नास्ति कथनावकाशः।

किञ्च विषयश्चास्य कथानुयोगसत्कः। न शङ्कालेशोऽपि "पुरुषविश्वासे वचनविश्वासः" इति सार्वसमयसिद्धोक्तौ, जायतेऽतः सहजा जातुचिदारेकेयम्, यदुत 'क इमे कृतेरस्या मूलप्रणेतारः, के चेमे वृत्तिकारा' इति, तत्र तावदस्य मूलप्रणेतारस्तु पूज्यप्रवेकाः क इत्यत्रोत्तरदाने नास्त्यस्मत्सामर्थ्यम्, तदुपलम्भकसामग्रीविरहात्, ज्ञापयिष्यन्ति वृत्तज्ञास्तद्वृत्तम्, "न चाऽप्रसिद्धकर्तृकोऽसौ प्रकृतप्रबन्धोऽप्रामाण्यमीयादिति वाच्यम्, नाऽप्रामाण्यं साम्प्रतकालीनकर्त्रप्रसिद्धिनिबन्धनं किन्तु स्वोत्प्रेक्षाप्रयुक्तं तत्, न च तत् सम्भवत्यस्मिन् प्रबन्धे, प्रामाणिकशेखरैरादृतत्वात्। वृत्तिकाराश्चाऽस्य प्रतीता एव वन्द्यपादाः श्रीमन्तः **शुभशीलगणिनः**। विनेयाश्चेमे जिनशासनकैरववनेन्दूनां सहस्रावधानसाधकश्री**मुनिसुन्दर**सूरिवराणाम्, एतेषां सत्तासमयः स्पष्ट एव, स्वयमेव ते प्रणिजगदुः स्वकीयस्याऽस्य ग्रन्थस्य प्रशस्तौ तद्वृत्तम्, यथाहि—"श्रीमन्मुनीश**मुनिसुन्दरसूरि**राज—शिष्यो मुनीश**शुभशील** इति प्रमुख्यः। एतां कथां वितनुते स नवाम्बरेषुं—चन्द्रप्रमाणसमये किल विक्रमार्कात्॥" प्रतीयतेऽतः स्पष्टतया श्रीमतां वृत्तिकृतां सत्तासमयः पञ्चदशशताब्द्या अन्त्यकालः प्रारम्भकालश्च षोडशशताब्द्या विक्रमार्कात्। स्वजन्मना चालञ्चक्रुरिमं भूवलयं तत्समय इमे वृत्तिकृतः।

विहाय कृतिमिमां ग्रथिताः के के प्रबन्धा एभिर्महात्मभिरिति ज्ञातुं नास्ति सम्पूर्णा सामग्री, तद्वैकल्यमेव दुनोत्यस्मचेतांसि, तथापि यथाज्ञातं प्रतन्यते किञ्चित्—

(१) †विक्रमनृपोदन्तप्रथनपरं 'विक्रमचरित्रम्,' रचनाकालश्च विन्दुनिधिवेदेन्दुमितो वत्सरः ।

(२) 'प्रभावककथा', कृतावस्यां ग्रथितश्चैभिः सार्वशासनप्रभावनाकृतामैतिह्यवृत्तम्, ग्रथनकालश्च वार्द्धिगगनभूतक्षोणिमितः संवत्सरः ।

(३) 'स्वोपज्ञटीकोपेतः श्रीशत्रुञ्जयकल्पः', रचनवेला च नागधरेषुचन्द्रप्रमितो वत्सरः ।

(४) 'शालिवाहननृपचरित'ञ्च, कृतः प्रबन्धोऽयं गगनाब्धिपञ्चभूमिते वत्सरे । ग्रन्थाश्चैतेऽधुना क्व सन्ति, मुद्रिता न वेति विशेषपूर्वं न जानीमो वयम् ।

(५) 'पुण्यधननृपकथा', प्रान्ते चास्याः संसूचितं तैः स्वनाम—यथा "शुभभव्यशीतलतादिमवर्णजनाम भवति यस्य वर्तः, षड्नवमनुकाल इयं, पुण्यधननृपकथा कृता तेन" । श्रूयन्ते चान्येऽपि ग्रन्था एतेषां पूज्यचरणानां *पञ्चास्तिप्रबोधसन्बन्धः, दानादिकथा ११५० श्लोकमितो ग्रन्थोऽयं, पुण्यसारकथा ग्रन्थोऽयं १३११ पद्यप्रमितः, शीलवतीकथा ९८८ पद्यमितोऽयं प्रबन्धः, स्नात्रपञ्चाशिकाकथा, भक्तामरमहात्म्यः, १७०० पद्यमितोऽयं प्रबन्धः, अनुमीयते तावदेतेन वृत्तिकृतां कथासाहित्यसर्जने परिश्रमोऽतीव, अपि च व्याकरणविषयस्पृशौ 'उणादिनाममाला—पञ्चवर्गसङ्ग्रह'श्चेति द्वौ प्रबन्धौ श्रूयते, भविष्यन्त्यन्येऽपि विविधविषयस्पृशः प्रबन्धा अमीषाम् ।

श्रीमतां जनुः क कदेति वृत्तभिक्षुकेभ्यो नास्ति तदुत्तरदानसामर्थ्यम्, वृत्तिकृतां चैषां गच्छश्चान्द्रः, सतीर्थ्याश्चामीषां श्रीरत्नशेखरसूरिवराद्याः, तथाचाहुस्त एव—

† "जैन साहित्यनो संक्षिप्त इतिहास" इत्यत उद्धृतम्, * 'जैनग्रन्थावली' इत्यत. समुद्धृतम् ।

"श्रीयुक्तरत्नशेखरगुरुः उदयनन्दिसूरिवराः लक्ष्मीसागरसूरीशाः सोमदेवाख्यसूरयः" ।

प्रथिताश्चैभी रत्नशेखरसूरिवरैः श्राद्धप्रतिक्रमणसूत्रवृत्तिराचारप्रदीपश्चेत्यादिप्रबन्धाः, प्रस्तुतग्रन्थकृतस्तु श्रीमुनिसुन्दरसूरिताशानां कतमे विनेयाः कदा च दीक्षां जगृहुस्तेषां सविधे इति न प्रतीयते स्पष्टम्। अथ द्विधा विभक्तश्चायं प्रबन्धः साधुसाध्व्यधिकाराभ्याम्, यतिवेदद्विप्र-मितपृष्ठात्मकस्तावत्साध्वधिकारः, तदनु समाप्तिपर्यन्तो द्वितीयोऽधिकारः । प्रबन्धोऽयं मृदुधियामत्युपकृत्, नास्ति शब्दकाठिन्यं पद्यपाण्डित्यं वाऽस्मिन् ग्रन्थे। प्रबन्धेऽस्मिन् भाषाऽपि स्पष्टा सरला ललिता च, दृब्धश्चाबालबुधरुचिप्रदया सरण्या ग्रन्थोऽयं ग्रन्थकृता। विभक्ता चाऽस्य ग्रन्थस्य रचना गद्यपद्याभ्यां द्विधा। मञ्जुला शोभनशब्दघटिता पद्यरचना, सालङ्कारा च गद्यरचना रञ्जयत्येव विदुषां चेतांसि। कचित् कुत्रचित् अलङ्कारवद्धया गद्यरचनया लोकोक्तिरपि सूत्रिता ग्रन्थकृता, यथा अभयचरिते—"सुनन्दाऽवक्—सत्यं वचस्तव, अभ्रस्याधारे चन्द्रसूर्यौ, अभ्रस्याधारे जलधरपूरः, अभ्रस्याधारे ताराः सर्वाः स्युः, अभ्रस्याधारे लोकाः सर्वे।" एवं क्वचित् उपमया घटिता गद्यवाणी, यथा सुदर्शनकथानके—"रूपेण कन्दर्पः, वाचा वाचस्पतिः, बुद्ध्या बुधः, तेजसा सूर्यः, सौम्येन सोमः, कर्मच्छेदनक-र्कशत्वेन मङ्गलः, धिषणया शुक्रः, कुकर्ममन्दत्वेन मन्दः"। अपि च प्रबन्धेऽस्मिन् स्थाने स्थाने प्रासङ्गिकमौपदेशिकं लौकिकं केवलनैतिकं च विवेच्यं विवेक्तुं न व्यसार्षुस्ते वन्द्यचरणा वृत्तिकृतः, यथा भरतकथायां धनसार्थप्रस्थानसमये ज्योतिःशास्त्रसत्कं रहः संसूचितं तैः—"आदित्यहस्तो गुरुणा च पुष्यो, बुधानुराधा शनिरोहिणी च। सोमेन सौम्यं भृगुरेवती च, भौमाश्विनी चामृतसिद्धियोगाः ॥" न च केवलैषा लोकोक्तिः, सार्वसमयेऽप्यस्य विधीयमानत्वात्, सूत्रितश्च परोपकृदग्रण्यैर्वन्द्यचरणैश्चतुर्दशशतप्रकरणसौधसूत्रणसूत्रधारैः श्रीमद्

हरिभद्रसूरिवरैः पञ्चवस्तुकादिग्रन्थश्रेण्यां—"सोभणदिणंमि विहिणे" त्यादिभिः मुहूर्त्तस्य विधानम् । एतेन "नास्ति प्रव्रज्यादिग्रहणसमये मुहूर्तोऽपेक्षा, अपेक्ष्यते केवल उत्साहः" इति ब्रुवाणा मन्वानाश्चाप्यपास्ताः, उत्साहश्चात्मपरिणामविशेषः, सोऽयं परिणामविशेषोऽपेक्षते द्रव्यक्षेत्रकालविशेषान् नियमतः, अत एव विधीयमाने प्रव्रज्योपस्थापनादिशुभानुष्ठानेऽवश्यं शोभनकालो निरीक्ष्यः, यथोक्तम् 'विचाररत्नाकरे' राद्धान्तवेदिभिः श्रीकीर्तिविजयोपाध्यायैः—"शोभनेषु तिथिकरणनक्षत्रमुहूर्तेषु द्रव्यक्षेत्रभावेषु" इत्यलं, किं बहूक्तेन, सार्वसमयप्रणालिकेयम् । सुसूत्रितं प्रबन्धेऽस्मिन्नेवं बहुषु स्थानेषु प्रासङ्गिकं तैर्वन्द्यपादैः । अत एवोपकृदयं ग्रन्थः, किं बहुना, स्वयमेव बोभोत्स्यते तद्वाचनप्रवृत्तैः कृतिभिः । ये तु मूढमतयः केवलं भाषया ग्रथनसरण्या च ग्रन्थकृतां पाटवमनुमातुं प्रवर्तन्ते, हन्त! तेषां कियद्धीमान्धम् यत् गद्यपद्यविविधालङ्कारैश्चित्रितविबुधवृन्दा अपि वन्द्यचरणास्ते पूर्वकालीनमुनिनाथाः प्रवर्तेरन् जातुचिन्मन्दधियामुपकाराय नितान्तं सरलया गद्य—पद्यरचनया, नातः काऽपि शङ्का तेषां पाण्डित्ये । अपि च धियां खनिभिरेभिः महात्मभिः ग्रथितानां प्रबन्धानां समालोचनकर्मणि चञ्चुपातो नास्माकं भाव्यः, तदेव परमं सौभाग्यं यत्तैर्दब्धप्रबन्धानां व्यतीते महति कालेऽपि यन्निरीक्षणम् । "कथाकोष" इत्यपराभिधेयोऽसौ वृत्तिग्रन्थो यद्यपि हीरालाल हंसराजद्वारा प्रसिद्धिमितस्तथापि नानया रीत्या, तेन तु वृत्तिग्रथिता कथा पृथक् पृथक् कृत्वा स्वगत्या संशोध्य मुद्रापिता, अत एककर्तृकैकाभिधेययोः अप्यनयोर्मिथः बहुषु स्थानेषु शब्दवैसादृश्यं दृश्यते, दृश्यते च सूक्ष्मेक्षिकया निरीक्ष्यमाणे नैकस्थलेषु पाठपरावर्तनं । इदानीं प्रसिद्ध्यमानोऽयं भागो मुनिर्गजक्षोणीमितपृष्ठतः समाप्तिपर्यन्तः । पूर्वभागस्त्वस्य पुरा श्रेष्ठि श्रीदेवचन्द लालभाइ जैन पु० उ० फण्टकार्यकृच्छ्रीजीवनचन्द्र जव्हेरीद्वारा प्रसिद्धिं नीतो, व्यतीतेषु चतुर्ष्वब्देषु अवशिष्टोऽयं द्वितीयो

भागः तेनैव श्रेष्ठि दे० ला० भाण्डागारैकव्यवस्थापक श्रीजीवनचन्द्र साकरचन्द्र द्वारा प्रसिद्धिमश्नुत इति विदितमेव । कियद्दीर्घदिष्टात् मुद्यमाणोऽप्ययं ग्रन्थः कारणवशत इदानीं सम्पूर्णतामेति, साधूक्तं महामनोभिः 'श्रेयांसि बहुविघ्नानी'ति ।

संशोधयितारश्चाऽस्य वृत्तिग्रन्थस्य मुख्यतया दुश्चरतपश्चरणमञ्जुलचरिताः सहृदयजनाग्रेयाः सार्वज्ञराद्धान्तवेदिनः तपागच्छाधिपतयः श्रीमद्विजयदानसूरीशितारः । कृपारसावसिक्तमनसां तेषां निःसीमकृपयाऽवशिष्टोयं ग्रन्थः यावत्समाप्तिमेति तावद् हा हन्त !!! एते वन्द्यचरणाः प्रपाल्य चिरतरं निरतिचारं श्रामण्यम् विमुच्य महच्छिष्यप्रशिष्यपरिवृतं मुनिगणं, पाटडीग्रामे समाधिमृत्युना दिवं प्रापुः केराङ्कनिधिभूमिते वैक्रमे वत्सरे माघशुक्लद्वितीयादिने । तदनु शोधितोऽयं कियद्भागस्तेषामेव प्रशिष्यैः श्रीधर्मविजयैर्महात्मभिः । इत्येवं परिश्रमेण महता शोधिते सम्यग्निर्द्धारिते प्रसिद्धिमिते चास्मिन् ग्रन्थे याः काश्चन मुद्रणदोषजाः प्रमादजा वा त्रुटयस्ताः संशोध्या निसर्गतोऽनुग्रहपरचेतोभिः सहृदयैः ।

प्रान्ते संस्मरणीयमहर्निशं "शोध्या सुबुद्धिमद्भिर्विबुधैः कूटापसारणत" इति ग्रन्थकृत्सूचितं शिक्षावचः, यतनीयञ्च निपीयैनं पुण्यप्राग्भारभरं कथाकोषरसममन्दानन्दनिकेतनाय महानन्दाय भवभीलुकैर्धीधनैरित्याशास्ते—

सिद्धान्तमहोदधि आचार्यदेव श्रीमद् विजयप्रेमसूरीश्वरसाम्राज्यवर्ति—प्रवचनकृद्विजयरामचन्द्रसूरीशविनेयाणु—कनकविजयो मुनिः,

वह्निरसाब्धिनयन—प्रमिते वीरवत्सरे, दृब्धो यथामति चायं मोहमय्यामुपक्रमः ।

गोडीजी जैन उपाश्रय, पायधुनी, मुंबई, श्रीपार्श्वनाथजन्मकल्याणकदिन, मार्गशीर्षकृष्णा दशमी, विक्रमसंवत १९९३ ।

विद्वद्वृन्दमनोज्ञकाव्यततिरियं सूयते सर्वदा, भूपालप्रतिबोधको गुरुमति-सिद्धान्तपारङ्गमी ।
स्याद्वादाङ्गनविचक्षण. शुभगुणैर्विख्यातकीर्ति. सुधीः, आनन्दाब्धिमुनीश्वर गणपतिं वन्दे महाज्ञानीनम् ॥

शान्तीशं शान्तिकर्तारं, श्रीशान्तिजयशान्तीशम् !

जय पार्श्व, जय नेम !

हरतु दुरितानि देवी जगत्यम्बिका !

# श्रीमत् शुभशीलगणिविरचित श्रीभरतेश्वर–बाहुबलिवृत्तिः

## किञ्चिद्वक्तव्य

बन्धनहरमङ्गलम्

"आपादकण्ठमुरुशृङ्खलवेष्टिताङ्गा, गाढं बृहन्निगडकोटिनिघृष्टजङ्घाः;
"त्वन्नाममन्त्रमनिशं मनुजाः स्मरन्तः, सद्यः स्वयं विगतबन्धभया भवन्ति!"

शेठ देवचन्द लालभाई जैन पुस्तकोद्धार फंडमांथी "ग्रन्थांक ८७" तरीके आ श्रीशुभशीलगणिकृत श्रीभरतेश्वर-

बाहुबलिवृत्तिनो बीजो भाग बहार पाडवामां आवे छे. **श्रीशुभशील**गणिजी विक्रमनी १६ मी सदीना प्रारम्भमां विद्यमान हता तेम आ अने तेओश्रीना अन्य ग्रन्थो उपरथी जाणी शकाय छे.

प्रतिक्रमणनी अंदर हंमेशां कहेवामां आवे छे ते **श्रीभरहेसर**बाहुबलि नामनी महासता अने महासतीओनी सज्झाय उपरथी आ **भरतेश्वर**बाहुबलिकथाकोश साधुसाध्वीना बे जूदा अधिकारोथी विभूषित करी रचवामां आव्यो छे. **भरहेसर**बाहुबलि-वृत्तिमां गुंथवामां आवेली गद्यपद्यात्मक कथाओ, जो के सामान्य वाचको माटे सुलालित्ययुक्त सरल, रसदायक, स्पष्ट अने बोधक होवाथी घणी उत्तम छे, पण शास्त्रनी अपेक्षाए हकीकतोमां पाठभेदो घणा छे. कथाकारे, पृथक पृथक विषयदृष्टान्तोमां प्रासङ्गीक लोकोक्तिओ पण घणां सारा प्रमाणमां अर्पी छे. कथाकारना ते समयमां विशेष प्रचलित हशे तेवा घणा श्लोकोमां तो पदोना थोडा थोडा पाठो लखीने अधूरा मूकी दीधा छे, जे अन्यस्थानेथी प्राप्त न थवाथी अधूराज राख्या छे. मूळ सज्झायना कर्ता अने कर्यानो संवत् समय जाणवामां आव्यो नथी. पण, **लींबडीना शेठ आणंदजी कल्याणजीना** भंडारमां वि. सं. १५१५ नी लखायेली सज्झायनी प्रत मोजूद होवाथी, तेमज, **श्रीशुभशील**गणिजी विक्रमनी १५ मी सदीना अन्त अने १६ मी सदीना प्रारम्भमां थयेला होवाथी, ए सज्झाय ओछामां ओछी विक्रमनी १३ मी शताब्दीमां रचाई होवी जोईये तेवुं अनुमान थाय छे.

**भरहेसर**बाहुबलीसज्झाय प्रतिक्रमणमां कहेवानी प्रथा घणी पाछलथी दाखल थयेली, छतां, **पञ्चवस्तु**नी अंदर, "**स्वा**ध्याय पछी **स्वा**ध्यायथी थाकेला मुनिओए, **सुदर्शन** शेठ आदि महापुरुषोनी कथाओ करवी" एम सूचवेलुं छे तेने अनुसरतुं छे. **श्रीशुभ**शीलजी पूर्वेनी, आ सज्झाय उपर कोई अन्य वृत्ति होवानुं जाणमां नथी, तेमज होवानो सम्भव पण नथी.

श्रीशुभशीलजीना नामे, श्री जैन श्वेताम्बर ( मूर्तिपूजक ) कोन्फरंसनी छापेली "जैन ग्रन्थावलीमां" कर्ता तरीके नीचेना ग्रन्थो नोंधायेलां छे. १

**पञ्चाशत्प्रबोधसम्बन्ध, भोजप्रबन्ध, शालिवाहनचरित्र, दानादिकथा, पुण्यसारकथा, भरतेश्वरबाहुबलिवृत्ति** ( कथाकोष ), **शीलवतीकथा** ( संस्कृत ), **स्नात्रपञ्चाशिका, भक्तामरमहात्म्य, शत्रुञ्जयकल्पवृत्तिः** ( कल्पकथा ), **उणादिनाममाला, पञ्चवर्गसङ्ग्रहनाममाला.** आ सिवाय **ऋषिमण्डलवृत्ति, प्रभावककथा, विक्रमचरित्र,** अने **पुण्यधननृपकथा;** पण रचेलां छे.

ग्रन्थनुं संशोधनकर्म आचार्यमहाराज श्रीमद्विजय**दानसूरीश्वरजी** करता हता. प्रथम विभाग छपाई पूर्ण थया बाद, द्वितीय विभागना पत्राङ्क २३४ सूधीनुं शोधन कर्युं हतुं, अने आगल कार्य चाले त्यांतो तेओश्री **पाटडी** मुकामे अति अल्प समयना हृदयना दुःखावाने लीधे कालधर्म पाम्या. अधुरूं रहेलुं शोधनकार्य तेओश्रीना प्रशिष्य **श्रीधर्मविजयजी** महाराजे **मुंबईमां** पूर्ण करी आप्युं.

ग्रन्थयोग्य उपक्रम **श्रीदानसूरीश्वरजीना** अन्य प्रशिष्य **श्रीकनकविजयजीये** लखी आपवा द्वा पाडी ते, तथा **श्रीदानसूरीश्वरजीनुं** टुंकुं जीवनचरित्र, अने कथाओना वांचकोने तेमज दूर विलायतना प्रदेशना अने अन्य अभ्यासीओने "मूल सज्झाय" जोडे कथाओ मेलववानी सुगमता रहे ते खातर "मूल सज्झाय" पण, आ विभागमां प्रसिद्ध कर्या छे. सज्झायमां नामो उपर अङ्क मूक्याछे खरा, पण केटलीक कथाओ भेगी होवाथी कथाओ जोडे तेनां अङ्को मलतां आवशे नहि.

**सुरत, गोपीपुरा** ता० २८ सपटेम्बर १९३६
स. १९९२ द्वितीय भाद्रपद शुक्ल १२ सोमवार

**जीवनचंद साकरचंद जहेरी.**
पोता अने अन्य मानार्थ संचालको माटे

श्रीमच्छुभशीलगणिविरचिता

# श्रीभरतेश्वर–बाहुबलिवृत्तिः

अङ्कः

७७ प्रथमविभागः पत्राङ्कः १–१८६ विक्रमसंवत् १९८८

८७ द्वितीयविभागः पत्राङ्कः १८७–३६८ वि० सं० १९९२–९३



# भरहेसर-बाहुबलि (मूल)सज्झाय

भरहेसर बाहुबली, अभयकुमारो य ढंढणकुमारो; सिरिओ अणियाउत्तो, अईमुत्तो नागदत्तो अ ॥ १ ॥
मेअज्जथूलिभद्दो, वयररिसीनंदीसेण सीहगिरी; कयवन्नो अ सुकोसल, पुंडरिओ केसि करकंडु ॥ २ ॥
हल्ल-विहल्ल सुदंसण, सालमहासाल सालिभद्दो अ; भद्दो दसण्णभद्दो, पसन्नचंदो अ जसभद्दो ॥ ३ ॥
जंबूपहु वंकचूलो, गयसुकुमालो अवंतिसुकुमालो; धन्नो ईलाईपुत्तो, चिलाईपुत्तो अ बाहुमुणी ॥ ४ ॥
अज्जगिरि अज्जरक्खिअ, अज्जसुहत्थी उदायगो मणगो; कालयसूरि संबो, पज्जुन्नो मूलदेवो अ ॥ ५ ॥
पभवो विण्हुकुमारो, अद्दकुमारो दढप्पहारी अ; सिज्जंस कूरगडु अ, सिज्जंभव मेहकुमारो अ ॥ ६ ॥
एमाई महासत्ता, दिंतु सुहं गुणगणेहिं संजुत्ता; जेसिं नामग्गहणे, पावपबंधा विलयं जंति ॥ ७ ॥

सुलसा चंदणबाला, मणोरमा मयणरेहा दमयंती; नमयासुंदरी सीया, नंदा भद्दा सुभद्दाय ॥ ८ ॥
राईमई रिसिदत्ता, पउमावई अंजणा सिरीदेवी; जिट्ठ सुजिट्ठ मिगावई, पभावई चिल्लणादेवी ॥ ९ ॥
बंभी सुंदरी रुप्पिणी, रेवई कुंती सिवा जयंती य; देवई दोवई धारणी, कलावई पुप्फचूला य ॥ १० ॥
पउमावई य गोरी, गंधारी लक्खमणा सुसीमा य; जंबूवई सच्चभामा, रुप्पिणी कह्णट्ठ–महिसीओ ॥ ११ ॥
जक्खा य जक्खदिन्ना, भूआ तह चेव भूअदिन्ना य; सेणा वेणा रेणा, भयणीओ थूलिभद्दस्स ॥ १२ ॥
इच्चाई महासईओ, जयंति अकलंकसीलकलिआओ; अज्ज वि वज्जई जासिं, जस–पडहो तिहुअणे सयले ॥ १३ ॥

(शार्दूलविक्रीडितम्)

“यस्याशेषतमः प्रबोधितजग-
ज्जन्तुगणो यो भरः,
हित्वाऽनेकजनप्रमोदशयनो
बालोष्णरोचिर्यथा ।
तेजस्विप्रवरः समग्रविबुध-
ध्याताच्यपादाम्बुजो,
विश्वं विश्वमिदं स पातु दुरिता-
च्छ्रीदानसूरीश्वरः ॥१॥”




सकलागमरहस्यवेदी
आचार्यवर्य्य–
**श्रीमद् विजयदानसूरीश्वरः**

जन्म–
वि स १९२४, झींझुवाडा (काठियावाड)

दीक्षा–
वि स १९४६, गोघा (काठियावाड)

गणी-पन्यासपद–
वि. स १९६२, खंभात (गूजरात)

आचार्यपद–
वि स १९८१, छाणी (गूजरात)

स्वर्गवास–
वि स. १९९२, पाटडी (काठियावाड)

पेया दत्ता । तां पेयां पीत्वा कृष्णस्य सम्बन्धिनमेकं मोदकं मुनिर्याचते स्म । रुक्मिणी प्राह—कृष्णस्यैते मोदकाः, अन्यस्य न दीयन्ते । स मुनिर्जगौ—मोदकमेकं मह्यं देहि । तपस्विनां किं दुर्जरं भवति ?, ततः सा रुक्मिणी सशङ्का एकैकं मोदकं दत्ते। स च मोदकान् खादं खादं मोदकान् पुनः पुनर्याचते स्म। एवं मोदकान् भक्षयन्तं पुनः पुनर्वीक्ष्य रुक्मिणी जगौ—मुने! त्वमतीव बलवानसि, यदेतैर्मोदकैर्न घ्रातः। इतः सत्यभामाया मन्त्रं जपन्त्या अग्रेऽभ्येत्य नराः प्रोचुः—विपिनं केनचिन्नरेण देवेन दानवेन वा शुष्कं कृतं, जलं च सर्वं पीतं, तृणादि सर्वं भक्षितं च, भानुकुमारोऽश्वात् पातितः, तेनाधुना हसन्ति लोकाः, कन्या चापहृता, ततोऽपि विपण्णा सामर्षा सत्यभामा केशानयनहेतवे दासीः पटलिकाहस्ताः प्राहिणोद्रुक्मिण्या गृहे। तासां दासीनामेव केशैर्मायालाधुः पटलिकाः पूरयामास । दास्यो न जानन्ति स्वमस्तकभद्रीकरणम्, ता एव तादृशीर्मुण्डितमस्तकाः पश्चात् प्रेषयामास प्रद्युम्नः। तास्तादृशीर्दासीः समायाता दृष्ट्वा खिन्ना सती भामा प्रतिभुवं कृष्णं प्रति प्राह—रुक्मिण्याः पार्श्वात् मस्तककेशान् दापय। कृष्णोऽवग्—त्वमेवं मुण्डाऽसि कथं ?, सत्यभामा जगौ—हास्येन कृतम्। ततः कृष्णेन प्रेपितो रामः केशानयनार्थं रुक्मिणीगृहे, प्रद्युम्नं विहितकृष्णरूपं प्रेक्ष्य लज्जितो रामः,

पश्चात् सभायां समेत्य कृष्णं तत्रोपविष्टं च दृष्ट्वा जगाद—रूपद्वयकरणात्त्वयाऽहं कथं प्रेषितः वधूरपि ह्रेपिता च। कृष्णोऽवग् शपथपूर्वं—नाहमद्य रुक्मिण्या गृहेऽगाम्। एतत् श्रुत्वा सत्यभामाऽपि जगौ कृष्णाग्रे—तवैव सर्वत्र माया विद्यते। ततो विलक्षे जाते रुक्मिण्यां च पुत्रानागमनतो दुःखं कुर्वत्यां नारदोऽभ्येत्य पृथक् पृथग् द्वयोरग्रे जगादेति। येनात्र विहितं कृष्ण—रूपं मुनिरूपमेव च। स एव भवतोः पुत्रः, प्रद्युम्नोऽनल्पलब्धिमान्॥ १॥ इतोऽभ्येत्य द्रुतं माता—पित्रोश्चरणयोर्मूलम् (योः पदौ)। नत्वा प्रद्युम्न आचष्टे, युवयोरहमङ्गजः॥२॥ ततः कृताञ्जलिः प्रद्युम्नः प्राह—अहं यावत् किमपि चमत्कारं मातापित्रोः स्वजनानां च पुरतो न दर्शयिष्यामि तावद्युवाभ्यां न कस्याप्यग्रे मत्स्वरूपं वक्तव्यम्। माता तदा सस्नेहं पुत्रमालिङ्ग्य पुत्रं प्रति प्राह—अहं त्वदागमं कस्याप्यग्रे न कथयिष्यामि, कृष्णोऽप्येवं प्राह तदा, ततो रुक्मिणीं रथारूढां कृत्वा प्रद्युम्नोऽचलत्, ततः प्रद्युम्नः शङ्खं पूरयन् सर्वान् यादवादिजनान् क्षोभयामास, जजल्प चेति—हरामि रुक्मिणीमेष, कृष्णो रक्षतु चेद् बलम्। अहमेव समर्थोऽस्मि, भंक्तुं वैरिबलं समम्॥ १॥ शोषयामि पयोराशिं, पिबामि ज्वलनं मुखे। धरामि भुजगं हस्ते, चालयामि कुलाचलान्॥ २॥ हस्ताग्रे पृथिवीं कुर्वे, दोर्भ्यां तरामि सागरम्। एकोऽहं सकलं कृष्ण—

सैन्यं सर्वं समेतु हि ॥ ३ ॥ इति ब्रुवन् पुराद् बहिः प्रद्युम्नो निस्ससार । तदा कृष्णेन ध्यातं—अयं कोऽपि मायावी मां विप्रतार्य मम पत्नीमपहृत्य याति । यतः—"मायासीलह माणुसह, किम पत्तीजण जाइ । नीलकंठ महुरं लवइ, सविसभुअंगम खाइ ॥ १ ॥ एष मायावी मया हन्तव्यः । कोऽयं मुमूर्षुर्दुर्बुद्धिरिति जल्पन् जनार्दनः । ससैन्योऽप्यन्वधाविष्ट, शार्ङ्गमास्फालयन् मुहुः ॥ २ ॥ प्रद्युम्नश्च हरेः सैन्यं, भंक्त्वा विद्याबलाद्धरिम् । सद्यो निरायुधं चक्रे, निर्दन्तमिव दन्तिनम् ॥ ३ ॥ यावद्विष्णुर्विषण्णोऽभूत्तावदेत्य स नारदोऽवग्—तव पुत्रोऽयं कृष्ण ! मा संशयं कुरु, सिंहादुत्पन्नस्य सिंहबलं भवति । ततो माधवो युद्धं मुक्त्वा तं पुत्रमालिलिङ्ग । ततः प्रद्युम्नो मातापित्रोरग्रे भूत्वा कृताञ्जलिः स्तुत्वा पादयोः पपात जगौ च—ममायमपराधः क्षन्तव्यः, मया कौतुकायेदं दर्शितम् । ततः कृष्णः स्वपुत्रं पट्टहस्त्यारूढं कृत्वा पौरजनगीयमानधवलैः स्वगृहमाययौ । तावदीदृक् कृष्णगृहमासीत्—चञ्चच्चारणदीयमानकनकं सन्नद्धगीतध्वनि, स्फूर्जद्दायकलुट्यमानकरटि प्रारब्ध-नृत्योत्सवम् । पूर्णं मङ्गलतूर्यदुन्दुभिरवैरुत्तालवैतालिकश्लाघालङ्घितपूर्वपार्थिवमदं क्ष्माभर्तुरासीद्गृहम् ॥ १ ॥ तदाऽभ्येत्य दुर्योधनो जगौ—भो कृष्ण! मम पुत्री त्वत्स्नुषा केनाऽप्यपहृता, न ज्ञायते तस्याः शुद्धिः, ततो दुःखं

दधानः कृष्णोऽवग्—किं क्रियते तस्याः शुद्धिरपि न ज्ञायते, वालनं कथं भवति?। पितरं खेदं दधानं वीक्ष्य प्रज्ञप्त्या विद्यया तामहमत्रानेष्यामि, खेदो न कर्तव्यस्त्वया । तां कन्यामत्रानयेति कृष्णेनोक्तम् । ततः प्रद्युम्नस्तां कन्यकां सद्यस्तत्रानिनाय । ततः कृष्णदुर्योधनाभ्यां प्रोक्तं—भो प्रद्युम्न! त्वमिमां कन्यां पाणिग्रहणादङ्गीकुरु। प्रद्युम्नोऽवग्—एवं कथं जल्प्यते, एषा कन्या तु मम स्नुषा विद्यते, तस्मात् तव पुत्राय दीयताम्। ततो भानवे महोत्सवपुरस्सरं कन्या विश्राणिता। तदा तादृशं साहसिकं प्रद्युम्नं वीक्ष्यानेकाः खगभूपाः स्वाः स्वाः कन्याः प्रद्युम्नाय ददुः। ततोऽन्येद्युर्जीर्णमञ्चस्थां सत्यभामां दृष्ट्वा माधवः पप्रच्छ—भो पत्नि! किं तव दुःखं विद्यते?। सत्यभामा जगौ—प्रद्युम्नतुल्यं सूनुमहमिच्छामि । कृष्णोऽवग्—मा खेदं कुरु, तवेच्छां पूरयिष्यामि । ततः कृष्णेन चतुर्थेन तपसा समाराधितो हरिणैगमेषी प्रकटीभूयावग्—किं विलोक्यते तव ?। कृष्णोऽवग्—प्रद्युम्नकुमारतुल्यं पुत्रं प्रदेहि। ततो हरि( प्रद्युम्न )तुल्यः पुत्रो भविष्यतीत्युक्त्वा हारं दत्त्वा देवस्तिरोदधे । हारप्राप्तिप्रभृतिस्वरूपं मत्वा प्रद्युम्नो जाम्बुवतीं मातरं सत्यभामातुल्यां विधाय विद्यया हरिगृहे प्रैषीत् । हरिः सत्यभामामागतां मत्वा हारं वितीर्य च तया सह भोगान् बुभुजे। तदा दैवाद्दिवश्च्युतः कश्चित् सुरस्तस्याः कुक्षौ सुस्वप्नसूचितोऽवततार। ततो जाम्बु-

वती दृष्ट्वा स्वगृहं ययौ। इतः कृष्णपार्श्वे भोगार्थं सत्यभामाऽऽगता। कृष्णो दध्यौ—अहो अस्याः स्त्रिया भोगेच्छाया अतृप्तिर्दृश्यते, पुनरपि भोगाय समागात्। यादृश्यः स्त्रियः शास्त्रमध्ये वर्ण्यन्ते तादृश्य एव दृश्यन्तेऽधुनाऽनया स्त्रिया दृष्टया, यतः—"आहारो द्विगुणः स्त्रीणां, निद्रा तासां चतुर्गुणा। षड्गुणो व्यवसायश्च, कामश्चाष्टगुणः स्मृतः॥ १॥" एवं ध्यात्वा हरिस्तां रेमे यदा तदा प्रद्युम्नो भम्भामताडयत्। प्रद्युम्नताडितां भेरीं विदन् क्षुब्धो रमापतिराह—भो सत्यभामे प्रिये! तव सूनुर्भविष्यति। सत्यभामा जगौ—स्वामिन्! त्वद्वचः सत्यं निश्चलं भवतु। प्रातर्जाम्बुवतीकण्ठे हारं दृष्ट्वा कृष्णो दध्यौ—रात्रौ प्रद्युम्नेन विद्याबलात् प्रथमं मम पार्श्वे प्रेषिता। क्रमाज्जाम्बुवती वर्यस्वप्नसूचितं पुत्रं शाम्बाख्यमसूत। सत्यभामा भीरुकं नाम्ना पुत्रमसूत। अथोपायात् रुक्मिसुतां वैदर्भीं नाम्ना प्रद्युम्न उपयेमे। हेमाङ्गदभूपपुत्रीं सुहरिण्यां शाम्बश्चोपयेमे। सत्यभामा जगौ जाम्बुवतीं—त्वत्पुत्रो मत्पुत्रं भीषयामास नित्यम्। जाम्बुवत्यवग्—मम पुत्रोऽतीव शान्तो दान्तोऽस्ति। ततः सत्यभामया कृष्णस्याग्रे प्रोक्तं—मत्पुत्रं शाम्बो भीषयति सदा। ततोऽन्येद्युः कृष्णेन जाम्बुवत्याः पुरः प्रोक्तं—त्वत्पुत्रः शाम्बोऽन्यायी श्रूयते। जाम्बुवत्यवग्—मत्पुत्रो नयी विद्यते। कृष्णो जगौ—विलोक्यताम्। ततः कृष्ण आभीररूपं

कृत्वा जाम्बुवती आभीरिकारूपं कृत्वा दधिविक्रयच्छलेन चलतः स्वस्थानात् पुरद्वारे, शाम्बस्तावालोक्याभीरीं प्रति प्राह—अत्रागच्छ गृह्णामि ते गोरसमित्युक्त्वा तामाकृष्य शून्यवेश्मान्तः शाम्बो गतो यदा तदाऽकस्माज्जाम्बुवतीकृष्णौ स्वरूपं प्रकटीचक्रतुः। ततो लज्जितः शाम्बोऽनेशत्। ततः कृष्णो जगौ—जाम्बुवति! त्वया पुत्रस्वरूपं दृष्टं ?, दुर्नयवानेष ते सुतः। सा प्राह—मत्पुत्रो भद्र एवास्ति, एषा बालक्रीडा। कृष्णो जगौ—यतः सिंही स्वसुतं भद्रं सौम्यं च मन्यते यत्तत्सत्यम्। अथ द्वितीयेऽहनि शाम्बो कीलकभृत्करश्चतुष्पथे गच्छन् कृष्णे लोके च शृण्वति साश्चर्यं प्रोवाच—यो मदीयं कल्येतनं वृत्तं प्रकटीकरिष्यति तस्य वक्त्रे कीलकं क्षिपाम्यहम्। तदा स्वैराचारी निर्लज्जोऽसि त्वमिति हक्कितो हरिणा त्याजितः स्वपुरं स शाम्बः प्रद्युम्नात् प्रज्ञप्तिं विद्यां प्राप्य निर्ययौ। ततोऽर्दयन् भीरुकं नित्यं प्रद्युम्नो भामयोच्यत—शाम्बवत् किं न निर्यासि त्वं शठमते! इतः पुरात् ?। प्रद्युम्नो जगौ—मातः! क्व गच्छामि, तयोक्तं—श्मशाने याहि, प्रद्युम्नो जगौ—मातः! कदा मया समागन्तव्यम् ?। भामा जगौ—यदाऽहं हस्ते गृहीत्वा शाम्बं पुरमध्ये समेष्या (प्रवेशया)मि तदा त्वयाऽऽगन्तव्यम्। मातस्त्वदादेशः प्रमाणमित्युक्त्वा प्रद्युम्नशाम्बौ तत्र मिलितौ। इतो भामा हृष्टा स्वपुत्रयोग्यमेकोनशतं राजकन्याः स्वस्य

भीरुकस्य पुत्रस्य परिणयनहेतवेऽमेलयत् । एका कन्या न मिलति, ततोऽभूत् खिन्ना सत्यभामा । प्रज्ञप्त्या विद्यया तद्विज्ञाय प्रद्युम्नो जितशत्रुनामा भूपोऽभूत् । शाम्बः कन्यारूपो बभूव । प्रज्ञप्तिविद्याबलात् सार्थं विकुर्व्य जितशत्रुस्तस्थौ । इतो भामा स्वपुत्रार्थं तां कन्यां जितशत्रुं याचते स्म । जितशत्रुर्जगौ—यदि मत्पुत्रीं भामा करे धृत्वा पुरमध्ये नयति विवाहकाले तु मत्पुत्र्याः करं भीरुककरोपरि च कारयति तदाऽहं मत्पुत्रीं भीरवे दास्यामि । तदङ्गीकृत्य सत्यभामा तत्रागता, तां कन्यां हस्ते गृहीत्वा जितशत्रुराजयुता महोत्सवपुरस्सरं पुरमध्ये निनाय । तदा लोका जितशत्रुं शाम्बं वीक्षन्ते जल्पन्ति च—अहो आत्मपुत्रविवाहसमये एषा सत्यभामा शाम्बं प्रद्युम्नं मानयित्वा समानयति स्म । भामौकसि गतः शाम्बो, भीरोर्वामेतरं करम् । स्वहस्तेनोपरिस्थेना—दाय वामेन वामधीः ॥ १ ॥ कन्यानां नवनवतेः, पाणीन् दक्षिणपाणिना । धृत्वा च युगपद्वह्निं, परितो विधिनाऽभ्रमत् ॥ २ ॥ वृत्तोद्वाहः शाम्बः कन्यारूपः समस्ताभिः समं वासगृहं ययौ । तेन शाम्बेन प्रकटीकृतस्वरूपेण भीरुस्तत्रागच्छन् भ्रुकुट्या भीषितो नष्टः । गत्वा त्वरितं भीरुर्मातुरग्रे प्राह—कन्यास्थाने शाम्बोऽस्ति । ततोऽश्रद्दधती सत्यभामा स्वयं तत्रागत्य शाम्बमैक्षिष्ट । शाम्बोऽपि समुत्थाय मातरं प्रणनाम ।

सकोपा सत्यभामा प्राह–रे धृष्ट! त्वं केनात्रानीतोऽसि। सोऽप्याह—त्वयाऽहमत्रानीतः कन्योद्वाहं च कारितः। अत्रार्थे सर्वे जनाः साक्षिणः सन्ति पृच्छ्यताम्। तया ते जनाः सर्वे पृष्टास्तथैव जगुः। ततो नवनवतेः कन्यानां शाम्बः पतिर्जज्ञे। ततः सत्यभामा जगौ—मायी बन्धुः पिता मायी, मायिनी यस्य च प्रसूः। मायी सोऽच्छलयत् कन्या–रूपो मां सहजो रिपुः ॥ १ ॥ इत्युक्त्वा बहुरोषात् सा, भामा निःश्वस्य भामिनी। स्वगृहे दुःखिता मञ्चं, जीर्णमाशिश्रियत्ततः ॥ २॥ युग्मम्। वसुदेवं नमस्कर्तुं गतोऽन्यदा शाम्बो जगौ–त्वया बह्व्यः स्त्रियो बहुकालात् परिणीताः। मया तु क्षणमात्रतः कन्याशतं परिणीतम्। वसुदेवो जगौ–त्वं कूपमण्डूकोऽसि मूर्खोऽसि। तत उत्थाय शाम्बो वसुदेवं क्षमयामास। ततः सर्वाः कन्याः शाम्बस्याभूवन्। प्रद्युम्नेनाप्यात्मरूपं प्रकटीकृतम्। ततः शाम्बप्रद्युम्नौ विशेषतोऽखिला यादवा उत्कृष्टौ मेनिरे। शाम्बः सर्वपत्नीयुतः स्वां मातरं पितरं च ननाम। प्रद्युम्नश्च स्वां मातरं ननाम।

एकदा कृष्णस्य केनचित् पुरुषेण जात्यतुरंगमः प्राभृतीकृतः। तदा शाम्बपालकौ द्वौ कुमारौ कृष्णपार्श्वेऽभ्येत्य प्रोचतुः–अयं तुरङ्गमो मह्यं दीयताम्। ततः कृष्णेन द्वयोरग्रे प्रोक्तं–यः कल्ये श्रीनेमिनाथं प्रथमं

नमस्यति तस्मै घोटको मया दास्यते । ततः पालकः घोटकं प्राप्तुकामः रात्रौ पश्चात्प्रहरे समुत्थाय कलकलं कृत्वा स्वकीयान् भृत्यान् जागरयित्वा सूर्योदयवेलायां प्रभुं नेमिं प्रणम्य प्राह—अहं प्रथममद्यात्रागत्य त्वां नतोऽस्मि इति पितुः पुरस्त्वया वक्तव्यं—प्रथममत्र पालको नन्तुमगात् । एवमुक्त्वा पश्चादागत्य तातपार्श्वे घोटकं पालको याचते स्म । कृष्णेनोक्तं—चल तत्र श्रीनेमिनाथान्तिके पृष्ट्वा प्रभुमर्पयिष्यते । इतो मध्यरात्र्यतिक्रमे शनैः समुत्थाय शाम्बः पापभीरुः स्वस्थानकस्थ एव प्रभुं प्रणनाम । प्रातः समवसरणे कृष्णशाम्बपालकाः प्रभुपार्श्वे गताः । प्रभुं प्रणम्य कृष्णोऽवग्—अद्य प्रभो ! त्वं प्रथमं केन वन्दितः ? । प्रभुः प्राह—द्रव्यवन्दनेनाहं प्रथमं पालकेन वन्दितः, भाववन्दनेन तु शाम्बेन वन्दितः । वन्दनफलमपि शाम्बेन प्राप्तम्,—यतः—"ध्यात्वा हृदि त्वां फलमाप शाम्बः, साक्षान्निरीक्ष्यापि न पालकश्च । तेनान्तरङ्गं विधिमामनन्ति, मनीषिणो बाह्यविधेर्बलिष्ठम् ॥ १ ॥" ततः कृष्णेन शाम्बाय घोटको व्यश्राणि । तौ शाम्बप्रद्युम्नौ क्रमादुत्पन्नवैराग्यौ प्रभुपार्श्वे दीक्षां ललतुः । प्रभूपदिष्टसंयममार्गेण तपः कुर्वाणौ शाम्बप्रद्युम्नौ सर्वकर्मक्षयं कृत्वा क्रमादायुषः क्षये श्रीगिरिनारशृङ्गे मुक्तिपुरीं जग्मतुः ॥ इति शाम्बप्रद्युम्नकथा भावविषये ॥ ४१ ॥

मनःशुद्धया ददद्दानं, शुद्धं जनः सुसाधवे । मूलदेव इवाप्नोति, राज्यादिसुखसम्पदम् ॥ १ ॥

तथाहि—गौडदेशेषु विख्यातं पाडलीपुरं नाम्ना पत्तनं विभासते। तत्र राजपुत्रो धियां निधानं कलाकलापकुशलो मूलदेवनामा बभूव। कीदृशोऽस्ति सः ?। धूर्तविद्यैकधवः, कृपणानां च बान्धवः कूटचेष्टाकुशलः, अजनि च, चौरे चौरः साधौ साधुः, वक्रे वक्र ऋजौ ऋजुः । ग्राम्ये ग्राम्यश्छेके छेको, विटे विटो भटे भटः ॥ १ ॥ द्यूतकारे द्यूतकारो, वार्तिके वार्तिकश्च सः । तत्कालं स्फटिकाश्मेव, जग्राह पररूपताम् ॥ २ ॥ चित्रैः कौतूहलैस्तत्र, लोकं विस्मापयन्नसौ। विद्याधर इव स्वैरं, चचार चतुराग्रणीः॥ ३ ॥ अन्यदा द्यूतव्यसनासक्तो मूलदेवः पित्राऽपमानितः एकाकी स्वपुरान्निर्गत्योज्जयिन्यां जगाम। गुटिकायाः प्रयोगेण, स भूत्वा कुब्जवामनः। पौरान् विस्मापयामास, कलाभिश्चारुभिर्भृशम् ॥ १ ॥ इतस्तत्रैव पुरे रूपलावण्यकलाविज्ञानगुणकुशला देवदत्ताह्वा गणिकाऽजनि । गुणकलावती या या विद्यते तत्र सा गणिका प्रकृष्टा । छेकायास्तस्याः प्रतिमातुल्या काऽपि नाभूत् । अन्येद्युर्मूलदेवस्तस्या गणिकायाः क्षोभार्थं तद्गृहान्तिके प्रभाते तुम्बरुरिव मधुरगीतेन गातुमारेभे । तं मधुरध्वनिमाकर्ण्य देवदत्ताऽपि दध्यौ—कस्यैष मधुरो ध्वनिरिति विस्मयात्तं ज्ञातुं दासीं प्रेषयामास ।

गृहाद् बहिर्दासी तं दृष्ट्वा पश्चादेत्य जगौ—गन्धर्वः कोऽपि कर्णाप्यं गीतं गायति स्म । मूर्त्यैव वामनः पूर्णैर्गुणैः पुनरवामनः । ततो देवदत्ता कुब्जां दासीं माधवी नाम्ना प्रजिघाय तं मूलदेवमाह्वातुम् । यतः प्रायो वेश्याः कलाप्रियाः सन्ति । सा दासी तत्र गत्वा जगाद—मम स्वामिनी देवदत्ता गणिका त्वामाह्वयामास गौरवात् । मूलदेवो जगौ—नाहं तत्रागमिष्यामि । कुट्टिनीविटवेश्यानां वश्यत्वे स्ववशः पुमान् कोऽपि न विशेत् । एवं प्रोच्य कुब्जां व्याघुट्टन्तीं विनोदेन मुष्टिघातात् तां दासीमृजुं मूलदेवश्चक्रे । ऋजुभूता सा चेटिका पश्चात् स्वामिनीपार्श्वे समागात् । तां तादृशीं दृष्ट्वाऽप्राक्षीद्वेश्या—भो दासि! कथमीदृक् ते वपुर्जातम्? । दास्योक्तं—तेन गीतकुशलेन पुंसा मुष्टिघातादीदृश्यहं चक्रे। ततो देवदत्ता चमत्कृताऽभूत्। देवदत्ता ततोऽवादीत्—ईदृक्षमुपकारिणं पुरुषं तमेकशोऽत्रानय। ततो दासी तत्र गत्वा चाटुभिर्वचोभिः प्रीणयित्वा स्ववेश्माभिमुखं ( चालितवती ) धूर्त्तराजो भुजिष्ययाऽचालि, तया दास्या निर्दिश्यमानाध्वा वेश्यागृहं प्राप । सा तमुपवेशयदासने, हृदयसंवादिसंलापसुभगा मिथस्तयोर्गोष्ठी तुल्या बभूव वैदग्ध्यशालिनोः । यतः—"मृगा मृगैः सङ्गमनुव्रजन्ति, गावश्च गोभिस्तुरगास्तुरङ्गैः। मूर्खाश्च मूर्खैः सुधियः सुधीभिः, समानशीलव्यसनेषु योगः॥ १ ॥" अथागात्तत्र कोऽप्येको

वीणाकरः, प्रवीणबुद्धिर्वीणामवीवदत् । तेनातिकौतुकात् वल्लकीं वादयन्तं वीक्ष्य व्यक्तग्रासश्रुतिस्वरां धूनयन्ती शिरो देवदत्ताऽपि प्रशशंस तं, तदा मूलदेवः स्मित्वाऽवग्—जानामि उज्जयिनीजनोऽत्यन्तनिपुणो गुणागुणविवेचने हंस इव दुग्धपयसोः, साशंसा वेश्याऽवग्—किमत्रास्ति क्षूणं?, यतः छेकश्छेकप्रशंसायामुपहासं हि शङ्कते । सोऽप्यवग्—किं (न) क्षूणमस्ति वीणावादने?। वेश्याऽवक्—यदि किमपि भवति तद्वक्तव्यं त्वया । तदा मूलदेवोऽवग्—सगर्भाऽसौ तन्त्री वंशश्च शल्यवानस्ति। वेश्ययोक्तं—त्वया कथं ज्ञातमिदम्?। ततो मूलदेवो वल्लकीं करे कृत्वा वंशादश्मानमाकृष्य तन्त्र्याः केशं चादर्शयत्।समारचय्य तां वीणां, सोऽथ स्वयमवादयत् । श्रोतृकर्णेषु पीयूषच्छटामिव परिक्षिपन् ॥ १ ॥ देवदत्ताऽब्रवीच्चैवं, सामान्यो न कलानिधिः। नररूपं प्रपेदाना, साक्षादिव सरस्वती ॥ २ ॥ ततो वीणाकरस्तस्य चरणयोर्निपत्योवाच—स्वामिन् ! शिक्षे भवत्पार्श्वे, वीणावाद्यं प्रसीद मे । मूलदेवो जगादैवं, सम्यग् जानामि न ह्यहम् ॥ किन्तु जानामि नान्ये हि, सम्यग् जानन्ति वल्लकीम् ॥ १ ॥ ततो देवदत्ताऽवग्—ते कलावन्तः क्व सन्ति?। मूलदेवो जगाद—पूर्वस्यां दिशि पाटलीपुत्रपत्तनमस्ति । तस्मिन् पुरे विक्रमसेनाह्वः कलाचार्यो महागुणोऽस्ति । तस्य मूलदेवोऽहं सेवकः । अत्रान्तरे विश्वभूतिर्नाट्याचार्यस्तत्रागात्,

साक्षाद्भरत इत्यस्मै मूलदेवाय कथितो देवदत्तया । मूलदेवोऽप्येवमूचे—सत्यमेवायमीदृशो युष्मादृशीभिर्गी-हिताभिः कलाभिः लक्ष्यतेऽयं कलावान् । विचारे उपक्रान्ते विश्वभूतिस्तं खर्वमित्यज्ञासीत् । यतो बाह्यार्था हि तादृशा एव स्युः । मूलदेवेन ध्यातं—विद्वन्मन्योऽयमस्य तत् ताम्रस्वर्णालङ्करणस्येवान्तरं दर्शयाम्यहम् । स्वच्छन्दं भारते शास्त्रे तस्य विश्वभूतेः प्रगल्भमानस्य धूर्तराट् पूर्वापरविरोधं दर्शयामास । ततो विश्वभूतिः कोपादसम्बद्धं भाषते । मूलदेवः प्राह—प्राज्ञैः पृष्टा ह्युपाध्यायाश्छादयन्त्यज्ञतां रुषा । त्वमेवं नाटयेर्नाट्या-चार्य! नारीषु नान्यतः॥ १ ॥ इति हसितो मूलदेवेन विश्वभूतिस्तूष्णीकोऽभूत् । स्मेराक्षी देवदत्ताऽपि, पश्यन्ती वामनं मुदा । उपाध्यायस्य वैलक्ष्यमपनेतुमवोचत ॥ १ ॥ इदानीमुत्सुका यूयमुपाध्यायाः क्षणान्तरे । परिभाव्या-भिधातव्यं, प्रश्ने विज्ञानशालिनाम् ॥ २ ॥ देवदत्ते! वयं यामो, नाट्यस्यावसरोऽधुना । सज्जस्व त्वमित्युक्त्वा, विश्वभूतिस्ततो ययौ ॥ ३ ॥ अन्यत्र । ततो देवदत्ता जगौ—स्नानहेतवे आवयोः कश्चिदङ्गमर्दको विलोक्यते । अजल्पद् धूर्तराजोऽपि, व्याहार्षीर्माऽङ्गमर्दकम् । सुभ्रु! यद्यनुजानासि, तदभ्यङ्गं करोमि ते ॥ १ ॥ वेश्ययोक्तं—त्वमपि किमेतां कलां वेत्सि ? । मूलदेवो जगौ—अहं न वेद्मि तां कलां, किन्तु तज्जानतामन्तिके स्थितोऽस्मि,

त्वमप्यभ्यङ्गं दातुं जानासि? । देवदत्तादेशात् पक्वतैलादि समानीयाभ्यङ्गं कर्तुमारेभे स मायावामनो, मृदु-मध्यदृढस्थानौचित्यात् पाणिं प्रचारयन् अङ्गे तस्या मूलदेवः सुखमद्वैतमादधे । अतीववर्योऽभ्यङ्गकलां दृष्ट्वा मूलदेवस्य पादयोः पतित्वाऽब्रवीद्देवदत्ता—गुणैरपि त्वमाख्यातः, कोऽप्युत्कृष्टः पुमानिति । मयूरव्यंसकात्मानं, किं गोपयसि मायया?॥ १ ॥ प्रसीद दर्शयात्मानं, किं मोहयसि मां मुहुः? । भक्तानामुपरोधेन, साक्षात्स्युर्देवता अपि ॥ २ ॥ आकृष्य गुलिकां मुखात्तद्रूपं परिवर्त्य सः । प्रतिपेदे निजं रूपं, शैलूष इव तत्क्षणात् ॥३॥ अनङ्ग-तुल्यरूपं लावण्यैकसागरमुद्वीक्ष्य विस्मिता देवदत्ता प्राह—प्रसीद साधो! मेऽधुना, तस्यार्पयित्वा स्नानीयं वस्त्रं, प्रीता देवदत्ता सानुरागा स्वपाणिना अङ्गाभ्यङ्गं रचयामास । खलिप्रक्षालनापूर्वं, पिष्टातकसुगन्धिभिः । कवोष्णवारिधाराभि-स्तनू द्वावपि सस्नतुः ॥ १ ॥ देवदूष्यं देवदत्तोपनीतं पर्यधत्त सः । सुगन्धाज्यानि भोज्यानि, बुभुजाते समं च तौ ॥ २ ॥ रहः कलारहस्यानि, वयस्यीभूतयोस्तयोः । मिथः कथयतोरेकः, क्षणः सुखमयो ययौ ॥ ३ ॥ ततः सा व्याजहार—त्वया लोकोत्तरैर्गुणैर्मम हृदयं (तथा) हृतं यथा क्षणमपि त्वां विना स्थातुं न शक्नोमि । मूलदेवोऽवग्—अस्मादृशेषु निर्धनेषु (विदेशीयेषु) । युष्मादृशामनुबन्धो न युज्यते । देवदत्ताऽपि (प्र)

जगौ—को विदेशो भवादृशां ? । सर्वः स्वदेशो गुणिनां, नृणां केसरिणामिव॥१॥—सर्वथा त्वया मद्वचः प्रतिपत्तव्यम् । ततो मूलदेवेनोक्तं—एवमस्तु भवद्वचः । ततस्तयोः क्रीडतोः स्नेहाद्विनोदैर्विविधैः समागत्य राजद्वाःस्थोऽब्रवीदिति—आगच्छ भो वेश्ये ! प्रेक्षाक्षणोऽधुना त्वां समाकारयति राजा । छन्नवेषं मूलदेवं, सा नीत्वा राजवेश्मनि । राजाग्रे नृत्यमारेभे, रम्भेव करणोज्ज्वलम् ॥ १ ॥ तदा मूलदेवोऽपि निपुणः पटहमवादयत् । तदा राजा तस्या नृत्येन करणशालिना रञ्जितो जगौ—मार्गय वाञ्छितं, तयोक्तं—अयं प्रसादः कोशे तिष्ठतु । ततः सा मूलदेवयुता ननर्त्त । ततो राजा तुष्टः स्वाङ्गलग्नं विभूषणं तस्यै ददौ । तदा पाटलीपुत्रपुरस्वामिनो राजद्वारपालको विमलसिंहाख्यस्तत्रागतो जगौ—अयं कलाप्रकर्षो मूलदेवस्य धीमतो विद्यतेऽथवाऽमुष्या वेश्याया, नतु तृतीयस्य कस्यचित्, तेनादौ मूलदेवाय दीयतां पश्चाद्वेश्यायै च। अत्रान्तरे धूर्त्तराजो, वीणां स्वयमवीवदत् । हरन् मनांसि विश्वेषां, विश्वावसुरिवापरः॥ १ ॥ ततो विमलसिंहेन, बभाषे देव ! खल्वयम् । मूलदेवश्छन्नरूपो, नापरस्येदृशी कला ॥ २ ॥ विज्ञानातिशयस्यास्य, प्रयोक्ता नापरः क्वचित् । मूलदेवं विना देव !, सर्वथाऽसौ स एव तत् ॥ ३ ॥ राजा जगाद—यद्येवं, तदहो स्वं प्रदर्शय । दर्शने मूलदेवस्य, रतस्येवाऽस्मि कौतुकी ॥ ४ ॥

मुखादाकृष्य गुलिकां, मूलदेवश्च तत्क्षणात् । व्यक्तोऽभूत् कान्तिमान् मेघनिर्मुक्त इव चन्द्रमाः ॥ ५ ॥ साधु ज्ञातोऽसि विज्ञानिन्!, मया त्वमिति प्रोच्य च । विमलसिंहेन तदा, धूर्तसिंहश्च सस्वजे ॥ ६ ॥ अपतन् मूलदेवोऽपि, नृदेवस्य पदाब्जयोः । राजाऽपि तं प्रसादेन, सगौरवमपूजयत् ॥ ७ ॥ एवं च देवदत्ताऽपि तस्मिन्नत्यनुरागिणी बभूव । अतिष्ठन् मूलदेवोऽपि, न विना द्यूतदेवनम् । भवितव्यं हि केनापि, देवतेव न वार्यते ॥ १ ॥ देवदत्ताऽवग्—भो मूलदेव! त्यज द्यूतव्यसनं दुःखकारणम् । यतः—"द्यूतं सर्वाऽऽपदां धाम, द्यूतं दीव्यन्ति दुर्धियः । द्यूतेन कुलमालिन्यं, द्यूताय श्लाघतेऽधमः ॥ १ ॥ द्यूताद्राज्यविनाशनं नलनृपः प्राप्तोऽथवा पाण्डवा, मद्यात् कृष्णनृपश्च राघवपिता पापर्धितो दूषितः । मांसात् श्रेणिकभूपतिश्च कटरे चौर्याद्विनष्टा न के?, वेश्यातः कृतपुण्यको गतधनोऽन्यस्त्रीरतो रावणः ॥ २ ॥ एवमुक्तोऽपि वेश्यया मूलदेवो न व्यसनं तत्याज । इतस्तस्यामेव पुर्यां अचलो धनवान् सार्थवाहोऽजनि । स पूर्वं मूलदेवात् तस्यां देवदत्तायामासक्तोऽभूत् । तया सह भोगान् स बुभुजे । स सार्थवाहो मूलदेवे ईर्ष्यां वहन् तं मूलदेवं हन्तुमन्विष्यति छिद्राणि । देवदत्तां प्रति जननी प्राह—भो पुत्रि ! मूलदेवं निर्धनं द्यूतव्यसनतत्परं त्यज । आत्मना धनिनो विलोक्यन्ते,

प्रत्यहं विविधद्रव्यमचलो दत्ते स्म। देवदत्ता जगौ—मातर्नाहं धनानुरागिणी । किन्तु त्वंसद्गुणगणा—नुरागिण्यस्मि संततम् ॥ १ ॥ 'अमुष्य द्यूतकारस्य, गुणास्तिष्ठन्ति कीदृशाः?।' इति कोपाज्जनन्योक्ता, देवदत्तेत्यभाषत ॥२॥ धीरो वदान्यो विद्याविद्, गुणरागी स्वयं गुणी । विशेषज्ञः शरण्योऽयं, नामुं त्यजामि तत्खलु॥ ३ ॥ ततः कुट्टिनी रुष्टा तां पुत्रीमुच्चाटयितुं प्रचक्रमे। साऽदत्त प्रार्थिते माल्ये निर्माल्यं सरके पयः । इक्षुखण्डे वंशखण्डं, श्रीखण्डे नीपखण्डकम् ॥ ४ ॥ ततः सकोपं देवदत्ता कुट्टिनीं प्रति रुष्टाऽवग्—रे मातर् ! मया मार्ग्यतेऽन्यत् त्वयाऽन्य-दर्प्यते किं ग्रथिल्यभूस्त्वम्?, नाहं, किन्तु त्वम् । लतेव कण्टकतरुं, किमालम्ब्य व्यवस्थिता?। सर्वथा मूलदेवं तत्, त्यजापात्रमिमं पतिम् ॥ १ ॥ अवादीद्देवदत्तैवं, मातः! किमिति मुह्यसि?। पुमान् पात्रमपात्रं वा, किं मुच्येता-परीक्षितः ॥ २ ॥ तेन द्वयोर्मूलदेवाचलयोः परीक्षा क्रियताम् । ततो देवदत्ताकुट्टिनीभ्यां प्रेषिता दासी अचलपार्श्वे गत्वाऽवग्—देवदत्ताया अद्येक्षोर्भक्षणे वाञ्छा विद्यते । ततोऽचलः सार्थवाह इक्षुभिः समूलैः शकटं भृत्वा प्रेषयामास । दृष्ट्वा कुट्टिन्युवाचैवं—ममात्र स्वामिनो हले ! । अचिन्तनीयमौदार्यं, पश्य चिन्ता-मणेरिव ॥ १ ॥ देवदत्ताऽवग्—किमावां करेणुके स्वः यतस्तेन समूला इक्षवः प्रेषिताः । ततो मूलदेवपार्श्वे

इक्षोरानयनार्थं दासी प्रेषिता । तया स्वस्वामिन्यर्थं इक्षौ मार्गिते पञ्चषान् इक्षून् मूलदेवो नीतवान् । कठोरत्वेन मूलपर्वादीनपसार्य द्व्यङ्गुलगण्डिकाश्चक्रे मूलदेवः पीयूषस्येव कुण्डिकाः । चातुर्जातेन संस्कृत्य, कर्पूरेणाधिवास्य च । प्राहिणोन्मूलदेवोऽथ, क्षिप्त्वा रजतभाजने ॥ १ ॥ देवदत्ता कुट्टिनीं प्रति जगौ—धूर्त्तेशाचलयोः पश्य, स्वर्णरीर्योरिवान्तरम् । मेरुसर्पपयोर्हंसीकाक्योरिव निरन्तरम् ॥ १ ॥ कुट्टिन्यचिन्तयदहो, महामोहान्धमानसा । मृगीव मृगतृष्णाम्भो, धूर्त्तमेषाऽनुधावति ॥ २ ॥ स कोऽप्युपायो मया करिष्यते येनासौ निस्सरति । तत एकदा कुट्टिनी अचलं प्रति जगौ—त्वयाऽसौ धूर्तो देवदत्ताया वल्लभस्तथा क्रियते यथाऽत्र नायाति । ततः कुट्टिन्या शिक्षितो ग्रामगमनच्छलमुक्त्वाऽचलो निस्ससार । तदा निःशङ्कया तया देवदत्तया मूलदेवो भोगार्थमानीतः, तस्यास्तं विना मनो न रमते । इतोऽकस्मात् कुट्टिन्या अचलस्तत्रानीतः । तदा देवदत्तया पल्यङ्कस्याधो मूलदेवः स्थापितः । अचलः पल्यङ्के उपविष्टो जगौ—प्रिये! अद्य मया स्वप्नं लब्धं, यदि त्वमस्मिन् पल्यङ्के उपविष्टः स्नानं करिष्यसि तदा तव प्रियाया देवदत्ताया जीवितं भविष्यति, नो चेन्मरणं भविष्यति । देवदत्ताऽब्रवीदार्य! किमेतदुचितं तव?। अदूष्या देवदूष्येयं, तूलिका यद्विनश्यति ॥ १ ॥

अचलोऽप्यवदद्भद्रे !, कार्पण्यं किमिदं तव? । शरीरमपि यच्छन्ति, पत्यर्थे त्वादृशः स्त्रियः ॥ २ ॥ किन्त्वन्यास्तूलिका न स्युः, पतिर्यस्याः किलाचलः । लवणेन स किं सीदे—यस्य रत्नाकरः सखा? ॥ ३ ॥ अचलवचनानुरक्तया कुट्टिन्या बलादेवदत्तापार्श्वात् पर्यङ्कोपरिस्थोऽचलः स्नापितः, यथा पल्यङ्काधःस्थो मूलदेवः खल्याघशुचिखण्टितोऽभूत् । इत्यादि बहुशोऽपमानितोऽचलेन स्वहस्तेन धृत्वा मूलदेवो गृहाद् बहिः कर्षितः । ततो मूलदेवो निजकर्मदूपणं मत्वा गत्वा पुरीसमीपस्थे सरसि सस्नौ । ततो विषादवान् मूलदेवो बेन्नातटं प्रति चचाल । द्वादशयोजनायामायामटव्यां क्रमाद्गतो मूलदेवः । पारावारमिवापारां, तितीर्षुस्तां महाटवीम् । सहायं चिन्तयामास, तरण्डमिव धूर्तराट् ॥१॥ इतोऽकस्माच्छम्बलयुतो द्विज एकः कार्प्पटिकवेषभृत्तत्रागात् । तं विप्रं समागतं दृष्ट्वा मूलदेवो मुमुदेतराम् । जगाद मूलदेवस्तं, ममारण्यमुपेयुषः । आत्मच्छायाद्वितीयस्य, दिष्ट्या मिलितवानसि ॥ १ ॥ स्वच्छन्दं वार्तयिष्याव—स्तदावां द्विजसत्तम! । मार्गखेदापहरणी, विद्या वार्ता हिता पथि ॥ २ ॥ दूरं कियति गन्तव्यं, स्थाने जिगमिषा क ते । कथ्यतां भो महाभाग !, मार्गमैत्रीं वशीकुरु ॥ ३ ॥ विप्रोऽप्याख्यत्—अस्यारण्यस्य पारं गमिष्यामि । त्वं तु क यास्यसि ? । मूलदेवोऽवग्—बेन्नातटे पुरेऽहं यास्यामि । ततो द्वावपि

चलितौ । चलद्भ्यां द्वाभ्यां क्रमात् सर एकं प्राप्तम् । मूलदेवः पाणिपादं प्रक्षाल्य वृक्षच्छायायामुपविष्टः, स्थगिकायाः सक्तूनाकृष्य वारिणा चालोड्य विप्रो भोक्तुमुपाविशत् । मूलदेवो दध्यौ—अतिक्षुधातुरोऽयं प्रथमं स्वयं भुक्त्वा पश्चान्मह्यमपि दास्यति । विप्रो भुक्तोत्थितः सन् सक्तून् न ददौ, तदा मूलदेवो दध्यौ——इयं कृपणजातिर्धिग्जातिश्च लोकैरुच्यते यत् तत् सत्यमेव । यदि मम किमपि भवति तदाऽहं दीनदानं विना न भोक्ष्ये । अटवीं तां परित्यज्य, धूर्त्तराजं द्विजोऽवदत् । स्वस्ति तुभ्यं महाभाग !, यास्याम्यहमितोऽधुना ॥ १ ॥ तमूचे मूलदेवोऽपि, त्वत्साहाय्यादियं मया । द्वादशयोजनायामा, क्रोशवल्लङ्घिताऽटवी ॥ २ ॥ बेन्नातटे गमिष्यामि, मूलदेवाभिधोऽस्म्यहम् । तत्र मे कथयेः कार्यं, कथ्यतां किं च नाम ते ? ॥ ३ ॥ लोकैर्निर्घृणशर्मेति, विहितापरनामकः । विप्रोऽहं सद्धडो नामेत्युक्त्वा टक्कस्ततो ययौ ॥ ४ ॥ गच्छता मूलदेवेन ततो बेन्नातटं प्रति पथि कस्मिंश्चिद् ग्रामे कस्यचिद्गृहे भिक्षार्थं प्रविष्टम् । तत्र मूलदेवो भ्रमन् कुल्माषानासादयामास । ग्रामाद् बहिः समेत्य यावद्भोक्तुमुपविशति तावत् कोऽपि मुनिर्मासक्षपणपारणे पुण्यवान् समागात् । तं दृष्ट्वा मुदितः सोऽभूदहो मे सुकृतोदयः । यन्मयाऽऽत्तमिदं पात्रं, यानपात्रं महोदधौ ॥ १ ॥ साधोः कुल्माषदानेन,

रत्नत्रिनयशालिनः । उन्मीलेदचिरादद्य, सद्विवेकतरोः फलम् ॥ २ ॥ कुल्माषान् साधवे दत्त्वा, मूलदेवः पपाठ च । धन्यास्ते खलु येषां स्युः, कुल्माषाः साधुपारणे ॥ ३ ॥ तस्य भावनया हृष्टा, बभाषे व्योम्नि देवता । अर्धश्लोकेन याचस्व, भद्र! किं ते प्रदीयताम्?॥ ४ ॥ प्रार्थयामास सद्यस्तां, मूलदेवोऽपि देवताम्। गणिका देवदत्तेभ-सहस्रं राज्यमस्तु मे ॥ ५ ॥ एवमस्त्विति देव्यूचे, मूलदेवोऽपि तं मुनिम् । वन्दित्वाऽथ ग्राममध्ये, भिक्षित्वा बुभुजे स्वयम् ॥ ६ ॥ मार्गं क्रामन् क्रमेणासौ, प्राप वेन्नातटं पुरम् । सुष्वाप पान्थशालायां, निद्रासुखमवाप च ॥ ७ ॥ यामिन्याः पश्चिमे यामे, स सुप्तः स्वप्नमैक्षत । यत्पूर्णमण्डलश्चन्द्रः, प्रविवेश मुखं मम ॥ ८ ॥ तमेव स्वप्नमद्राक्षीत्, कोऽपि कार्पटिकस्तदा । अन्यकार्प्पटिकानां च, प्रबुद्धस्तमचीकथत् ॥ ९ ॥ तेषु कार्प्पटिकेष्वेकः, स्वप्नमेवं व्यचारयत् । अचिरेण लप्स्यसे त्वं, सखण्डं घृतमण्डकम् ॥ १० ॥ हृष्टः कार्प्पटिकः सोऽभूदेवं भूयादिति ब्रुवन् । जायेत बदरेणापि, शृगालस्य महोत्सवः ॥ ११ ॥ स्वप्नं नाचीकथत्तेषामज्ञानां धूर्तराड् निजम् । मूर्खा हि दर्शिते रत्ने, दृषत्खण्डं प्रचक्षते ॥ १२ ॥ मण्डकं कार्पटिप्रोक्तं, गृहाच्छादनपर्वणि । तदा कार्प्पटिकः प्राप, तादृग्विचारभावतः ॥ १३ ॥ यतः—"प्रायेण फलति स्वप्नो, विचारस्या-

नुसारतः । भावना भाव्यते यादृक्, तादृगासाद्यते फलम् ॥ १४ ॥" धूर्तोऽपि प्रातरारामे, गत्वा पुष्पोच्चयादिना । अप्रीणान्मालिकं लोकं, पूर्णकर्माऽपि तादृशम् ॥ १५ ॥ गृहीत्वा मालिकात्तस्मात्, सुपुष्पाणि फलानि च । शुचिर्भूत्वा ययौ वेश्म, स्वप्नशास्त्रविनिश्चितः ॥ १६ ॥ मूलदेवस्ततो नत्वा, दत्त्वा पुष्पफलानि च । उपाध्यायाय प्रज्ञाय, शशंस स्वप्नमात्मनः ॥ १७ ॥ मुदितः सोऽवदद्विद्वानेतत्स्वप्नफलं तव । मुहूर्ते कथयिष्याम्यधुनाऽस्माकं भवातिथिः ॥ १८ ॥ मूलदेवं स्नपयित्वा, भोजयित्वा च गौरवात् । परिणाययितुं कन्यामुपाध्याय उपानयत् ॥ १९ ॥ बभाषे मूलदेवोऽपि, ततोऽज्ञातकुलस्य मे । कन्यां प्रदास्यसि कथं ?, विचारयसि किं नहि ? ॥ २० ॥ उपाध्यायो जगौ–त्वन्मूर्त्या मया कुलं तव ज्ञातम् । ततः सर्वथा कन्येयं मम परिणीयताम् । ततो मूलदेवस्तां कन्यामुपानयत् । कार्यसिद्धेर्भविष्यन्त्याः, प्रादुर्भूतमिवाननम् । मध्ये दिनानां सप्तानां, त्वं राजेह भविष्यसि ॥ १ ॥ इति तस्य स्वप्नस्य फलमुपाध्यायो न्यवेदयत् । उपाध्यायोक्तं सत्यस्वप्नस्वरूपं मन्वानो हृष्टो मूलदेवोऽचिराद् बहिर्गत्वा पञ्चमेऽहनि चम्पकतरुतले सुखं सुष्वाप । तत्र पुरेऽकस्मादपुत्रको राजा मृतः । मन्त्रोक्षिताः पुरीभाश्वच्छत्रभृङ्गारचामरा भ्रेमुः, प्रापुर्न राज्यार्हं नरम् । यतस्तादृशा नरा राज्यार्हा

दुष्प्रापा भवन्ति । ततः पर्यटन् कुम्भी पुराद् बहिर्गत्वा चम्पकद्रुमतले नरं भूपलक्षणलक्षितमपश्यत् । हयेन हेषितं चक्रे, गजेनोर्जितगर्जितम् । भृङ्गारेण च तस्यार्घश्चामराभ्यां च वीजनम् ॥ १ ॥ पुण्डरीकं स्वर्णदण्डमण्डितं तस्य चोपरि । शरदभ्रमिवादभ्रं, तडिद्दण्डमिव [ण्डं] व्यजृम्भत ॥ २ ॥ तमधिरोहयामास, स्वस्कन्धे जयकुञ्जरः । स्वामिनि मुदितैर्लोकैश्चक्रे जयजयारवः ॥ ३ ॥ ततो वाद्यमानेषु तूर्येषु मूलदेवो राज्येऽभिषिक्तोऽमर्त्यमुनिदानप्रभावतः । यतः—"दानं मानवदानवेन्द्रपदवीविस्तारणे प्रत्यलं, दानं वासवसुन्दरीसरभसक्रीडाकलाकौशलम् । दानं मोक्षकपाटपाटनविधौ स्फूर्जत्सुरेन्द्रायुधं, दानं विष्टपजन्तुजातनिवहप्रासादसिंहध्वजः ॥ १ ॥" अथोचे देवता व्योम्नि, देवतानां प्रसादतः । अयं विक्रमराजतुल्यो, राजा जज्ञे कलानिधिः ॥ २ ॥ द्वितीयं नाम तस्य विक्रमराजेत्यभूत् । ये चाऽरयोऽस्याज्ञां न गृहीष्यन्ति तानहं निग्रहीष्यामि महीभृत इवाशनिः । देवतागिरा सर्वे सामन्तामात्यप्रकृतिवैरिणो वश्या बभूवुस्तस्य । ततः स राजा विषयसुखान्यनुभवन् उज्जयिनीशेन समं प्रीतिं चक्रे पूर्वम् । इतस्तदानीं देवदत्तापि मूलदेवविडम्बनां कुट्टिनीकृतां प्रेक्ष्याऽचलं प्रति प्राह—अतः परं मया त्वया सह भोगो न करिष्यते । यदि त्वया किमपि वक्ष्यते तदाऽहमात्मघातं करिष्ये । त्वया तु मूलदेवो

मम वल्लभो विगोपितस्तद्वरं न। इत्युक्त्वाऽचलं निष्काश्य देवदत्ता भूपपार्श्वे ययौ। राज्ञोक्तं—किं ते विलोक्यते?। वेश्ययोक्तं—स एव मूलदेवो मे वरो भवतु । मयाऽस्मिन् भवेऽतःपरं मूलदेवं मुक्त्वाऽन्यो देवकुमारतुल्योऽपि वरो न वरणीयः। तेनातः परं मम गृहे अपरः पुमान् माऽऽगच्छतु । एवमस्त्विति राजा प्राह । को हेतुरत्र?, ततः शशंसाचलकृतविडम्बनां देवदत्ता मूलदेवस्य । ततो जितशत्रुनृपोऽचलकृतमूलदेवविडम्बनां ज्ञात्वाऽचलमाकार्य साक्षेपमिदमब्रवीत्—मत्पुरीमण्डनावेतौ, रत्नभूतावरे त्वया । मूर्खेण धनमत्तेन, ग्रावणीव निघर्षितौ ॥ १ ॥ अमुष्य मूलदेवस्य यस्त्वयाऽपराधः कृतः तस्य दण्डे प्राणापहारोऽस्तु तव। ततस्तमचलं घ्नन्तं राजानं देवदत्ता निवारयामास । ततो राजाऽवग्—तं मूलदेवमत्रानय त्वं, नो चेत्त्वां हनिष्यामि । ततोऽचलः सार्थवाहो नृपं नत्वा मूलदेवमन्वेष्टुं प्रचक्रमे । नष्टरत्नमिव मूलदेवमपश्यन् भीतो भूपादचलो भाण्डं लात्वा शीघ्रं पारसकूलमण्डलं ययौ। इतो मूलदेवो दध्यौ—देवदत्तया तया विना प्राज्यराज्यश्रिया सृतं लवणेन विना यथा रसवती । ततो मूलदेवो देवदत्ताया जितशत्रोश्च भूपतेः पार्श्वे प्राभृतं चतुरदूतयुतं प्रेषयामास । गत्वोज्जयिन्यां स चतुरो दूतो जितशत्रुं व्यजिज्ञपदिति—देवतादत्तराज्यश्रीर्मूलदेवस्त्वां वदत्यदः—यथा मे देवदत्तायां, प्रेम जानीथ तत्तथा । यदि तस्या

अहं रोच्यमानोऽस्मि, तदियं देवदत्ताऽत्र प्रेष्यतामिदं प्राभृतमङ्गीक्रियताम् । तत्तादृशमपूर्वप्राभृतं दृष्ट्वा राजा हृष्टोऽवदत्–तेनेदं कियदर्थितम्? । ततश्चाकार्य देवदत्तामुज्जयिनीनाथो जगौ–दिष्ट्या जाताऽसित्वं भद्रे !, शीघ्रं पूर्णमनोरथा । राजा जज्ञे मूलदेवो, देवतायाः प्रसादतः ॥ १ ॥ त्वामानेतुं च स प्रैपीत्प्रधानपुरुषं निजम् । ततस्त्वं तत्र गच्छाविलम्बम् । ततो जितशत्रुणा प्रेषिता देवदत्ता वेन्नातटं गता । राजा विक्रमराजोऽपि मूलदेवापरनामको महोत्सवपुरस्सरं स्ववेश्मानैषीद्देवदत्ताम् । ततः स राजा श्रीधर्मघोषसूरिपार्श्वे धर्मं श्रुत्वा सम्यक्त्वमूलं द्वादशव्रतीं ललौ । जिनार्चामर्चतस्तस्य, सम्यक् पालयतः प्रजाः । दीव्यतो देवदत्तां च, त्रिवर्गोऽभूदबाधितः ॥ १ ॥ इतः पारसकूलाद् बह्वीं श्रियमर्जयित्वा तत्र पुरेऽचलः सार्थवाहः समाययौ । लक्ष्मीमहत्वपिशुनैर्महामौक्तिकविद्रुमैः । भृत्वा विशालं स्थालं च, महीनाथमुपास्थितः ॥ १ ॥ अचलोऽयमितिक्षिप्रमुपलक्षितवान्नृपः । दृष्ट्वा प्राग्जन्मसम्बन्ध(द्ध)मपि प्राज्ञाः सरन्ति हि ॥२॥ राजानं मूलदेवं तु, तदाऽज्ञासीत् स नाचलः । आत्तवेषं हि नटवत्, स्थूलप्रज्ञा न जानते ॥ ३ ॥ राजाऽवग्–कुतस्त्वमिहागाः ?, सार्थवाहो जगौ–पारसकूलात् । अचलेनाहूतो राजा भाण्डालोकनहेतवे । ततो राजा पञ्चकुलोपेतोऽचलोत्तारके ययौ । सोऽप्यचलो

मञ्जिष्ठादिक्रयाणकमदर्शयत्। भाण्डं दृष्ट्वा राजा जगौ—त्वमेव कथय कियदस्ति क्रयाणकम् ?, अस्मद्राज्ये यः शुल्कचौर्यं करोति तस्य शिरश्छेदः क्रियते। अचलोऽवग्—मया कुत्राऽपि कस्याप्यग्रे कूटं न जल्प्यते, देवस्याग्रे किमुच्यते?। ततो राजा जल्पनशरीरमुखादिदर्शनादचलं सम्यगुपलक्ष्य जगौ—अस्य श्रेष्ठिनः सत्यभाषिणः क्रियतामर्द्धदानं सम्यग्भाण्डं च वीक्ष्यताम्। ततः पञ्चकुलेन वीक्षताऽ(माणेना)सारभाण्डमध्यस्थं सारभाण्डं निष्कासितम्। ततः पञ्चकुलेनांघ्रिप्रहारो दत्तोऽचलस्य शरीरे। ततः क्रौञ्चबन्धं बद्ध्वा ते राजसेवका अचलं जर्जरशरीरं भूपपार्श्वे आनिन्युः। ततो राजा जगौ—भो अचल! किं त्वं मां प्रत्यभिजानासि न वा?। अचलो जगौ—भानुमिव जगदुद्योतकरं भवन्तं को न वेत्ति ?। तं तादृशं दृष्ट्वा देवदत्ताऽपि जगौ—अहो कर्मणो गतिरेषा। देवदत्तामसावचलो दृष्ट्वा ह्रीतः सन् कष्टां दशां ययौ। स्वापभ्राजना हि मृत्योरधिका नृणां भवति। सा देवदत्ता जगौ—मूलदेवोऽयं यस्त्वया तदा च हीलितः। अधुना यदि त्वां सर्वद्रव्यापहारं कृत्वा मारयति तदा त्वया किं करिष्यते?। असौ तु त्वत्तुल्यो नास्ति सौजन्यधर्मत्वात् सर्वजनोपकारी। यतः—"यथा चित्तं तथा वाचो, यथा वाचस्तथा क्रिया। धन्यास्ते त्रितये येषां, विसंवादो न विद्यते ॥१॥ वदनं प्रसादसदनं, हृदयं सदयं सुधामुचो

वाचः । करणं परोपकरणं, येषां केषां न ते वन्द्याः? ॥ २॥" त्वं तु दुर्जनप्रायः । यस्त्वयाऽस्य कृतं तेन त्वं वधयोग्योऽसि । यतः—"खलानां कण्टकानां च, द्विविधैव प्रतिक्रिया । उपानद् मुखभङ्गो वा, दूरतो वा विसर्जनम् ॥ १ ॥ वृश्चिकानां भुजङ्गानां, दुर्जनानां च वेधसा । विभज्य नियतं न्यस्तं, विषं पुच्छे मुखे हृदि ॥२॥" ततोऽचलोऽवग्—अहं तव दासोऽस्मि । मया योऽपराधः कृतः स क्षम्यतां प्रसद्य । ततो बन्धनान्मुक्तोऽचलो मूलदेवस्य पादयोः पतित्वा प्राह—अहं सर्वथा वधयोग्योऽस्मि । अग्रे जितशत्रुभूपेन त्वदपराधकारी अहं स्वपुरान्निष्काशितः । मूलदेवो जगौ—मया क्षान्तम् । ततः सन्मानं कृत्वाऽचलो मूलदेवेन विसर्जितः उज्जयिनीं प्रति चचाल । पुरप्रवेशोऽवन्तीनाथेन मूलदेवेन ज्ञापितत्वादचलस्य दत्तः ॥ अन्येद्युः प्रजा बह्व्यो मूलदेवमजीज्ञपन्—जाग्रत्यपि प्रजात्रातुं, त्वयि देव! दिवानिशम् । अमुष्यत ते नगरं, परितः परिमोषिभिः ॥ १ ॥ कोला इव विभो चौराः, पुरेऽस्मिन् मन्दिराणि नः । प्रतिक्षणं खनन्त्युच्चै र्नारक्षारक्षितुं क्षमाः ॥ २ ॥ अदृश्यमानाः केनापि, कृतसिद्धाञ्जना इव । भ्राम्यन्ति चौराः सर्वत्र, स्वैरं स्वेषु गृहेष्विव ॥ ३ ॥ अचिरान्निग्रहीष्यामि, तस्करानयशस्करान् । मूलदेवोऽभिधायैवं, वणिजो विससर्ज हि ॥ ४ ॥ ततो राजा हृदि दध्यौ—यो राजा प्रजां

तस्करादिभिः पीड्यमानां वीक्ष्योपेक्षते तस्य राज्ञः पापं लगति । यतः—दुष्टस्य दण्डः स्वजनस्य पूजा, न्यायेन कोशस्य सदा सुवृद्धिः । अपक्षपातो रिपुराष्ट्ररक्षा, पञ्चैव यज्ञाः कथिता नृपाणाम् ॥ १ ॥ दुर्बलानामनाथानां, बालवृद्धतपस्विनाम् । अन्यायैः परिभूतानां, सर्वेषां पार्थिवो गुरुः ॥ २ ॥ प्रजानां धर्म्मषड्भागो, राज्ञो भवति रक्षितुः । अधर्म्मस्यापि षड्भागो, जायते यो न रक्षति ॥ ३ ॥ एवं विमृश्य राजा स्तेननिग्रहार्थं नगराध्यक्षमादिशत् । पुराध्यक्षो जगौ तत्र, स्वामिन्नेकोऽस्ति तस्करः । असौ न शक्यते धर्तुं, दृष्टनष्टपिशाचवत् ॥ १ ॥ तथाप्यहं सर्वबलेन तं विलोक्य तं निग्रहीष्यामि । ततः पुररक्षकेण बहु विलोकितो यदा स्तेनो न लब्धः, तदा राजा जातामर्षो महौजा नीलाम्बरवस्त्रप्रावरणो नीलाम्बर इव स्तेनं निग्रहीतुं निशि स्वगृहान्निस्ससार । त्रिकचतुष्कस्थानेषु भ्रामं भ्रामं राजा दस्युं कमपि नापश्यदहेः पदमिवाम्भसि । ततः खिन्नः सन् राजा खण्डदेवकुले ययौ । कदाचिच्चौरोऽत्र समेति इति ध्यात्वा सुष्वाप राजा । इतो निशाचर इव निशाचरदारुणस्तस्कराग्रेसरो मण्डिकाह्वस्तत्रैत्य पुरुषं सुप्तं दृष्ट्वा प्राह—कोऽत्र सुप्तोऽस्ति ?, ततो राजा तस्य चेष्टया चौरं सम्यग् जिज्ञासुः प्राह—अहं कार्पटिकोऽस्मि । स्तेनोऽवक्—एहि भो मया सार्द्धं त्वां लक्ष्मीवन्तं करोमि । राजा प्राह—एवं

भवतु, ततः स स्तेनो राजानं सेवकं कृत्वा कस्यचित् श्रेष्ठिनो गृहे खात्रं खनित्रेण पातयित्वा सारद्रव्यं लात्वा राज्ञो मस्तके न्यस्य च चचाल । राजा दध्यौ—यावन्मयाऽस्य गृहादि सर्वं द्रव्यं पुरसत्कं न वालयिष्यते तावन् मया स्वात्मा न प्रकटीकरिष्यते । स्वार्थी स्तेनस्यापि सर्वं चकार । उक्तं च—"ममर्द गर्दभस्यापि, पादौ कार्याज्जनार्दनः । तमुन्मूलयितुं मूलान्, मूलदेव उवाह तत् ॥ १ ॥ धूर्त्ता हि कारणोपात्तमार्दवाः कार्यसाधकाः । विनयं कुर्वते पुंसां, बलाबलवतामपि ॥ २ ॥ जीर्णोद्यानं गत्वा स्तेनो गुप्तगुहामुद्घाट्य मध्यं विवेश । तत्र तद्वस्तु समुत्तार्य स्वां स्वसारं प्रति प्राह—अस्यातिथेः पादौ प्रक्षालय । कूपोपकण्ठे तमतिथिमुपवेश्य स्तेनोऽन्यत्र गतः । तत्पादौ प्रक्षालयन्ती सा कन्या रूपसुन्दरी तस्य पादौ सल्लक्षणौ वीक्ष्य सानुकम्पा तद्रूपमोहिता जगौ—पादप्रक्षालनव्याजात्, कूपेऽस्मिन्नपरे नराः । अपात्यन्त महाभाग !, तस्कराणां कुतः कृपा ? ॥१॥ क्षेप्स्यामि नात्र कूपे त्वां, त्वत्प्रभाववशीकृता । महतामनुभावो हि, वशीकरणमद्भुतम् ॥ २ ॥ ततो मदुपरोधेन, सुन्दरापसर द्रुतम् । द्वयोरप्यन्यथा नाथ ! कुशलं न भविष्यति ॥३॥ विमृश्य ततो राजा जगाम । गते नृपे तया व्याहारि—स्वक्षणरक्षार्थं भो भ्रातरागच्छागच्छातिथिर्नंष्ट्वा गतोऽधुना । ततो रुष्टः स्तेन आकृष्टासिर्दधावे अतिथिं हन्तुम् । तदाऽ-

तिथिर्भूपः स्तम्भस्य पृष्ठे स्थितः । चौरः स्तम्भं खड्गेनाहत्य पश्चाद्वले । तदा राजा तं स्तेनमुपलक्ष्य सम्यक् छन्नं निःसृत्य स्वगृहं ययौ । राजा प्रातः प्रभातकृत्यं कृत्वा राजपाटिकाछलात् स्तेनं द्रष्टुं चचाल । वस्त्रापणद्वारे वस्त्राणि गृह्णानं स्तेनमुपलक्ष्य स्वगृहे समागात् । राजा स्वसेवकान् प्रति प्राह—अमुकामुकचिह्नियुतं नरं हट्टस्थितमत्रानयत यूयम् । तस्य भक्तिः करिष्यते । ततस्तै राजपुरुषैः सन्मानदानाद्भूपपार्श्वे चौर आनीतः । राजानं ननाम चौरः । तं स्तेनं सन्मानदानेन सन्मानयामास । राजा प्राह—कुत्र त्वं वससि ? किं ते नामास्ति ?, स प्राह—अहमत्रासन्ने ग्रामे श्रीपुरे वसामि । मम देवदत्तेतिनाम, मम स्वसा कमला समस्ति । ततो भूप आचष्टे—स्वस्वसा दीयतां मह्यं तव बह्वी श्रीर्मया दास्यते । स्तेनो जगौ—त्वं परिणय मदीयां स्वसारमहमत्रानेष्यामि । ततो राजा प्राह—अत्रानीयताम् । ततस्तेन स्तेनेनानीतां कन्यां राजा उपायंस्त । ततो राजा तं तस्करं महामात्यपदे स्थापयामास । को वेत्ति भूभुजां भावं मध्यं पत्युरिवाम्भसाम् ?। तस्माद्भूषणवस्त्रादि तद्भगिन्या च भूपतिर्नित्यमानाययत् । अहो धूर्ता धूर्तैरधृष्यन्त । प्रपञ्चेन राजा तस्याः पत्न्याः पार्श्वाद् बहुद्रव्यमानिनाय । भूपपत्नी भ्रातृगृहे याति तदा तत्रत्यं धनं प्रपञ्चेनानिनाय । एकदा भूपोऽप्राक्षीत्—। भो प्रिये ! किमप्यद्य धनं

तव भ्रातृगृहे समस्ति न वा ?"–तयोक्तं,–किमपि नास्ति मम भ्रातृगृहे । ततो राज्ञा स स्तेनो निग्रहीतः । तस्य गुहा स्वायत्तीकृता । अन्यदा भूपो गुरुपार्श्वे गतो धर्ममित्यश्रृणोत्–सम्पदो जलतरङ्गविलोला, यौवनं त्रिचतुराणि दिनानि । शारदाभ्रमिव चञ्चलमायुः, किं धनैः कुरुत धर्ममनिन्द्यम्? ॥ १ ॥ चेतोहरा युवतयः स्वजनोऽनुकूलः, सद्बान्धवाः प्रणयगर्भगिरश्च भृत्याः । वल्गन्ति दन्तिनिवहास्तरलास्तुरङ्गाः, संमीलने नयनयोर्नहि किञ्चिदस्ति ॥ २ ॥ पूज्यपूजा दया दानं, तीर्थयात्रा जपस्तपः । श्रुतं परोपकारश्च, मर्त्यजन्मफलाष्टकम् ॥ ३ ॥ इत्यादि धर्मोपदेशमाकर्ण्य मूलदेवो राजा श्रीशत्रुञ्जयश्रीगिरनाराऽर्बुदाचलादौ देवान्नन्तुं चचाल । तत्र सर्वत्र यात्रां कृत्वा विस्तरतः पश्चादागाद्राजा । ततो मूलदेवेन बहुधनव्ययात् सप्तक्षेत्र्याराधिता । ततः स्वपुत्रं रणसिंहं राज्ये निवेश्य स्वयं गुरुपार्श्वे दीक्षां गृहीत्वा तपःकरणपरो मूलदेवः स्वर्गं गतः । ततश्च्युतो मुक्तिं गमिष्यति । एवं ये मनुजाः शुद्धं, ददते साधवेऽशनम् । ते लभन्ते द्युलोकादि" सौख्यानि हेलया स्फुटम् ॥ १ ॥

इति मूलदेवकथासमाप्ता ॥ ४२ ॥

**पभवो विण्हुकुमारो, अद्दकुमारो दढप्पहारी अ । सिज्जंस कूरगडूअ, सिज्जंभवमेहकुमारो अ ॥६॥**

प्रभवकथा जम्बूस्वामिकथातो ज्ञातव्या ॥

**प्रभावनां जिनाधीश मते कुर्वन् जनोऽनिशम् । विष्णुकुमारवन्मुक्तिं, स तामाप्नोति हेलया ॥१॥**

तथाहि—श्रीसुव्रतस्वामिनि विजयमाने जम्बूद्वीपे गजपुरे इक्ष्वाकुवंशे पद्मोत्तरनृपतेर्ज्वालादेवी प्रियाऽभूत् । तस्याः प्रथमो विष्णुकुमारः पुत्रोऽभूत् । तस्याः कुक्षौ द्वितीयश्चतुर्दशस्वप्नसूचितो जीवोऽवततार । क्रमात्तया सुतोऽसावि । तस्य च महापद्म इति नाम दत्तं पितृभ्याम् । द्वावपि विंशतिधनुर्मानदेहौ त्रिंशद्वर्षसहस्रायुष्कौ बभूवतुः । महापद्मः पित्रा राज्येऽभिषिक्तः । इतश्चावन्त्यां श्रीधर्मो राजा प्रकृत्या श्रीजिनधर्मद्वेष्यभूत् । तदमात्योऽपि मिथ्यादृष्टिर्नमुचिनामा बभूव । श्रीमुनिसुव्रतशिष्यं सुव्रताचार्यं तत्र समवसृतं जेतुं कृतप्रतिज्ञो नमुचिस्तत्रागात् । सुव्रताचार्यक्षुल्लकेन नमुचिः सभायां जितः । ततः क्रोधाविष्टो नमुचिः क्षुल्लकवधार्थं निशि उपाश्रये समागतः । खड्गमुत्पाट्य यावदुपस्थितो नमुचिस्तावत् शासनदेव्या स्तम्भितः । प्रातस्तथा स्थितो लोकैर्दृष्टो नमुचिः खिन्नोऽभूत् । देवीं क्षमयित्वा क्षुल्लकं क्षमयामास नमुचिरतःपरं नापराधं करिष्येऽहं तव । ततः शासनदेव्या पौरवचनान्मोचितः सः, ततः खिन्नः सन् क्षुल्लककृतपराभवं स्मरन् हस्तिनागपुरे गतो वासं चक्रिवांश्च,

महापद्मेन स्वामात्यश्चक्रे। अन्येद्युर्दुर्दान्तः सामन्तसिंहो वैरी महापद्मदेशं भनक्ति स्म। स दुर्दान्तो यदा केनापि जेतुं न शक्यते तदा नमुचिर्वीटकग्रहणपूर्वं तं वैरिणं जेतुं चचाल। क्षणेन नमुचिना सामन्तसिंहः स्ववशीकृतो हननात्। पश्चादागते नमुचौ तं तादृशं वैरिणं जितं मत्वा राजाऽवग्—वरं वृणीष्व। ततो नमुचिरवग्—समये मार्गयिष्यते, अधुना कोशे स्थाप्यताम्। अथ जनन्या ज्वालया जिनरथः कारितो यात्रायै। तत्सपत्न्या लक्ष्म्या ब्रह्मरथः कारितो यात्रायै। ततस्ते द्वे मिथ एवं जल्पतः स—मदीयो रथोऽग्रे चलिष्यति। इति विवादे जायमाने तन्निर्णयं कर्तुमक्षमो राजा निषेधं चकार तयोर्द्वयोः। महापद्मो देशान्तरं भ्रमित्वा कियता कालेन स्वपुरमागात्। राजा महापद्मे पुत्रे राज्यभारं न्यस्य श्रीसुव्रतजिनपार्श्वे (प्रवव्राज) पद्मोत्तरविष्णुकुमारौ संयमं भेजतुः। ततो महापद्मेन भूपेन जिनवररथयात्राकरणादिना विस्तरेण महता मातुर्मनोरथः पूरितः। दिग्यात्रां कुर्वता महापद्मेन षट्खण्डं साधितम्। ततश्चक्रिमहोत्सवो द्वादश वर्षाणि तस्य कृतः। इतो विष्णुकुमारस्य मुनेर्दुस्तरतपःप्रभावादुत्पन्नाः पराःशता लब्धयः। कदाचित् सुव्रताचार्यो हस्तिनागपुरे वर्षाचतुर्मासीं तस्थुः। तदा नमुचिना च क्रतुः प्रारब्धः। प्रोक्तं—सप्त दिनानि यावन्ममराज्यं भवतु। चक्रिणादेशे दत्ते सति नमुचिः स्वयं राज्यकार्यं चक्रे।

राजा तु स्वयं धर्मध्याने स्थितः । तत्र यज्ञे जायमाने तद्दर्शनार्थं समागतेषु निःशेषदर्शनेषु सुव्रताचार्यमनागतं वीक्ष्य तानाचार्यान्नमुचिर्जगौ—भवद्भिः सर्वैः साधुभिर्मम राज्ये न स्थातव्यम् । ततो गुरवः साधूनाकार्योचुः—असौ नमुचिस्तु दुष्टो विद्यते ?, किं करिष्यते, कोऽस्ति यस्तस्य शिक्षां दत्ते । साधवः प्रोचुः—विष्णुकुमारः षष्टिवर्षसहस्राणि यावत् तपः कुर्वाणोऽस्ति । तेन तपसा बह्व्यो लब्धयो जाताः सन्ति तस्य । साम्प्रतं स मेरुगिरौ कृतकायोत्सर्गो विद्यते । स तु महापद्मस्य ज्यायान् भ्राताऽस्ति । तद्वचसैव शाम्यति । ततो गुरुराह—कः साधुस्तमिहानेतुं समर्थोऽस्ति ?, ततः एकः साधुर्जगौ—भगवन् ! अहं लब्ध्या तत्र गन्तुं प्रभुरस्मि । गुरुभिरूचे—स एव त्वामत्र पुनरानेष्यति । गुरुकार्यं विद्यते, तद्वत्स ! साधो ! गच्छ सङ्घकार्ये, शिवाः सन्तुः ते पन्थानः । ततो गुरून् प्रणम्य स साधुश्चलितः । मेरौ गतः, मिलितो विष्णुकुमारस्य । गुरुप्रोक्तं सर्वं तस्याग्रे साधुना प्रोचे,—महत्कार्यं विद्यते, तत्रागमनं विना सर्वेषां साधूनां हननं भविष्यति । ततः प्रतिपन्नं च तेन विष्णुकुमारसाधुना । अथ सङ्घापायनिवारणाय श्रीगुरुपार्श्वे विष्णुकुमारः समागतः । गुरुभिः प्रोक्तम्—असौ दुष्टो नमुचिः शिक्षयितव्यः। ततो विष्णुकुमारो नमुचिपार्श्वे गत्वाऽवग्—त्वं राजाऽसि। प्रजापालकस्त्वं, सर्वं तपोवनं राज्ञा रक्षणीयम्।

ततः साधूनां स्थातुं स्थानं देहि । तेनोक्तं—ददामि भवतः स्थातुं स्थानम्, ततो विष्णुकुमारेणोक्तम्—कियन्ति पदानि देहि । ततस्त्रीणि पदानि दत्तानि तस्मै । ततः क्रोधाध्मातमानसः कृतलक्षयोजनप्रमाणतनुर्विष्णुकुमारः एकं पादं पूर्वसमुद्रे द्वितीयं पादं पश्चिमसमुद्रे मुक्त्वा प्राह—तृतीयं पादं कुत्र मुञ्चामि ? इत्युक्त्वा पृथ्वीं कम्पयित्वा पादं नमुचिमस्तकोपरि तथा मुमोच यथा परलोकं गतो नमुचिः। ततो जय जय जिनधर्म इत्युद्घोषमाणैर्देवैरु-पत्य नाटकादिकरणतो विष्णुकुमारस्य क्रोध उपशामितः । ततो गुरुपार्श्वेऽभ्येत्य विष्णुकुमार आलोचनां ललौ । लोकैः पतितानि गृहाणि सज्जीकृतानि धवलितानि । ततःप्रभृति लोकैरुक्तं बलिरूपं गोमयेन क्रियते गृहाणि सज्जीक्रियन्ते संप्रत्यपि दीपालिकायाम् । ततो महापद्मचक्री गुरून् ववन्दे अनेकान् जिनप्रासादांश्चक्रे । विष्णु-कुमारोऽपि देवैः सेव्यमानः क्रमात् प्राप्तकेवलज्ञानो मुक्तिपुरीं ययौ । उक्तं च—मुनेः प्रशान्तादपि कोपवह्नि-रुत्पद्यते क्रूरपराभवेन । शीतापथा चन्दनतोऽतिघृष्टाद्धानूपलाद्वह्निरिवांशुयोगात् ॥ १ ॥ विष्णोर्महर्षेस्त्रिपदी समस्ता, जगत्रयीं यां युगपज्जगाहे । परः शताः सन्तु परे कवीन्द्राः, सम्पूर्यते सर्वविदाऽपि किं सा ॥ २ ॥ गंदिन्यामुदिता सेयं, नवा विष्णुपदत्रयी । पश्यन्नपि हि यां प्राणैर्नमुचिर्मुमुचेऽचिरात् ॥ ३ ॥ श्रीविष्णुर्जिष्णुरसौ

करेण कुलिशाङ्कितेन जनितभयः । धर्मध्वंसनमसुरं यः संहृतवान्नमुचिमचिरात् ॥ ४ ॥ इति इति श्रीविष्णुकुमारचरित्रं समाप्तम् ॥ ४२ ॥

**श्रीवीतरागबिम्बस्य, वीक्षणाद्देहिनामिह । बोधिलाभो भवेदार्द्र, कुमारस्येव तत्क्षणात् ॥ १ ॥**

तथाहि—अस्मिन्नेव पयोनिधिमध्ये आर्द्रकनामाऽनार्यदेशोऽस्ति । बहुधनधान्यलक्ष्मीप्रभृतिवर्यवस्तुशाली । तत्रार्द्रक इतिनाम्ना नृपो न्यायाध्वना पृथ्वीं शशास । आर्द्रका राज्ञी सच्छीलशालिनी तस्य बभूव । यतः—"प्रीतिर्जन्मनि वासतोऽप्युपकृतेः सम्बन्धतो लिप्सया । विन्ध्ये हस्तिवदम्बुजे मधुपवत् चन्द्रे पयोराशिवत् ॥ अब्दे चातकवद्धवेदसुमतां सर्वत्र नैमित्तिकी । या निकारणबन्धुरा शिखिवदंभोदे क्वचित्सा पुनः ॥ १ ॥" अन्यदा श्रेणिको भूपतिः प्रीतिप्राभृतं वर्यं निजमन्त्रिपार्श्वात् आर्द्रकद्वीपे आर्द्रकनृपपार्श्वे प्रेषयामास । तं प्रीतिलेखं प्राभृतकयुक्तं लात्वा राजा आर्द्रकः श्रेणिकं प्रति मनसा वचसा प्रणनाम पप्रच्छ च—मद्बन्धोः मगधेशितुः कुशलमस्ति । ततः श्रेणिकमन्त्रिणा कुशलोदन्तस्वरूपे प्रोक्ते आर्द्रकुमारः कृताञ्जलिः प्राह—तात! तव को मगधाधिपो राजा सुहृद् विद्यते? । राजाऽवग्—मगधाधिपेन श्रेणिकेन समं मम प्रीतिरस्ति । पुरापि आत्मीयकुलनृपतिभिस्तत्रत्यभूपैः समं

क्रमागता प्रीतिरस्ति । तेनाधुनाऽपि प्रीतिर्विद्यते । तातवचः श्रुत्वा कुमारः स्वावासे तं मन्त्रिणमाकार्य रहोवृत्त्या जगौ—तस्य राज्ञः श्रेणिकस्य सुतः कोऽस्ति ? । मन्त्रिनायको जगौ—धियां पात्रं पञ्चशतमन्त्र्यधिपोऽभयकुमारो मन्त्रीश्वरोऽस्ति, दक्षदाक्षिण्यनैपुण्यकलाकुशलः । कुमारोऽवग्—तेन कुमारेण सममहं मैत्रीं चिकीर्षुरस्मि । यदि त्वं पश्चाद्गच्छेस्तदा मामापृच्छ्यैव व्रजेः । अहं किमपि प्राभृतं तस्मै कुमाराय प्रेषयामि । ओमित्युक्त्वा मन्त्रीश्वरो स्वस्थानके ययौ । श्रेणिकमन्त्रिणः आर्द्रकराजा सदन्नपानदानादिना भक्तिं चकार । अन्येद्युर्मणिमुक्ताफलादिसारवस्तूनि श्रेणिकभूपयोग्यानि स्वमन्त्रिणोऽर्पयामास राजा, प्राह च—गच्छ राजगृहपुरं, तत्र मन्मित्रस्य श्रेणिकस्य प्राभृतीकुरु एतानि मन्मण्यादीनि वस्तूनि । ततो वर्ये दिने यदा स आर्द्रकमन्त्री राजगृहपुरं प्रति चिचलिषुरभूत् तदा श्रेणिकमन्त्र्यपि आर्द्रकुमारपार्श्वे गत्वा स्वचलनस्वरूपं प्रोक्तवान् । ततः कोटिमूल्यानि मणिमुक्ताफलपट्टकूलादिवर्यवस्तूनि तस्य मन्त्रिणो हस्ते दत्त्वा कुमारः प्राह—एतत्सर्वमभयकुमारस्यार्पणीयं त्वया प्रोक्तव्यश्च मत्प्रणामः, तस्य तद्वर्यं वस्तु लात्वा राज्ञा सन्मानितः श्रेणिकमन्त्री आर्द्रकभूपमन्त्रियुतो राजगृहं प्रति शुभे मुहूर्ते समुद्रमध्ये यानारूढश्चचाल । क्रमादार्द्रकभूपप्रेषितो मन्त्री श्रेणिकमन्त्रियुग् राजगृहे गत्वा सर्वं भूपार्पितं प्राभृतं श्रेणिकाय ददौ ।

भरते. ९५

श्रेणिकस्तत् प्राभृतं प्राप्य हृष्टः सन् तं मन्त्रिणं सन्मानयामास । श्रेणिकमन्त्री आर्द्रकुमारप्रेषितं प्राभृतमभयकुमाराय वितीर्णवान् । तत्तादृशं प्राभृतं प्राप्य हृष्टोऽभयकुमारो दध्याविति कर्मजया बुद्ध्या—नूनमेष आर्द्रकुमारोऽनार्यदेशेषु उत्पन्नोऽस्ति विराधितव्रतत्वेन, आसन्नभव्यो मुक्तिगामी । ततः केनापि प्रपञ्चरचनादिना तथा करोमि यथाऽयं परमार्हतो भवति । तस्यार्द्रकुमारस्य तीर्थङ्करबिम्बदर्शनात् उत्पत्स्यते जातिस्मरणम्, तेनार्हत्प्रतिमां तत्र प्रेषयिष्यामि । ततः आदिनाथस्य प्रतिमां पेटामध्यस्थां कृत्वा तन्मध्ये धूपदहनघटिकादीनि वस्तूनि जिनपूजायोग्यानि मुक्त्वा च तत्र तालकं दत्त्वाऽभयकुमार एकश्लोकं प्रतिवाचकं मुमोचेति—चित्तं तुम्ह विलग्गं, तुह गुणसवणेण सवणपरितोसो । जीहा नामग्गहणे, एक्का दिट्ठी तडप्फडइ ॥ १ ॥ मञ्जूषा रहसि आर्द्रकुमारायार्पणीया त्वया । ततः श्रेणिकेनापि आर्द्रकभूपतये प्राभृतं वर्यमर्पितम् । श्रेणिकभूपतिवितीर्णं प्राभृतमभयकुमारार्पितमञ्जूषायुतं समादाय मन्त्रीश्वरश्चचाल । कियताऽनेहसा स्वपुरं समेत्य प्रथमं मन्त्री भूपस्य प्राभृतं भूपाय ददौ । भूपोऽपि हृष्टस्तत् प्राभृतं जग्राह । ततो मन्त्री कुमारपार्श्वे गत्वा रहसि तां पेटां ददौ तस्मै । ततस्तां पेटां कुञ्चिकयोद्घाट्य रहसि यावदार्द्रकुमारो विलोकयामास तावन्मध्यस्थं बिम्बमपूर्वमालोक्य

चिन्तयामास—किमेदमपूर्ववस्तु ममभित्रेणप्रेपितम् ? । अद्य यावन्मया न कुत्रापि दृष्टं, किमिदमाभरणमिति ध्यात्वा यावदङ्गे दधाति तावच्छोभा नायाति। कण्ठे मूर्ध्नि हृदये न्यस्तं कुमारेण तथा शोभा न भवति देहस्य। ततोऽग्रे सिंहासनारूढं सालङ्कारं श्रीयुगादिजिनबिम्बं कृत्वा सन्मुखं स्थित्वाऽऽर्द्रकुमारो दध्यौ—किमिदं रूपमीदृशं मया पूर्वं दृष्टमित्यादि भूयो भूयो भावयन् आर्द्रकुमारो मूर्च्छामवाप्य जातिस्मृतिं प्राप । ततो लब्धजातिस्मरणः पूर्वजन्मालोक्य पूर्वभवकथामिति ध्यातवान् । इतस्तृतीये पूर्वभवे वसन्तपुरे मगधदेशभूपाकरे सामयिकाभिधः कौटुम्ब्यहमभूवम् । भार्या बन्धुमती बभूव मम । अन्यदा श्रीसुस्थितसूरिपार्श्वे भार्यासहितोधर्मंश्रोतुमगमं, तदा गुरुभिर्धर्मोपदेशोददे । तथाहि—त्रैकाल्यं जिनपूजनं प्रतिदिनं सङ्घस्य सन्माननं, स्वाध्यायो गुरुसेवनं च विधिना दानं तथाऽऽवश्यकम् । शक्त्या च व्रतपालनं वरतपो ज्ञानस्य पाठस्तथा, सैप श्रावकपुङ्गवस्य कथितो धर्मो जिनेन्द्रागमे ॥ १ ॥ इत्यादि, भार्यायुतोऽहं श्राद्धद्वादशव्रतीमग्रहीषम् । क्रमात् कदाचिन्मया प्रियासहितेन द्वादशव्रती पालिता । एकदा मौढ्यात् सा खण्डिता प्रमादादेव । ततः क्रमादङ्गीकृतानशना मृता बन्धुमती । ततो मया ध्यातं—किं जीवितेन तया पत्न्या विना मम ? ।

कृतानशनोऽहं मृत्वा दिवि देवोऽभूवम्। ततश्च्युत्वाऽहमुत्पन्नोऽनार्यदेशे राजपुत्रो धर्मविवर्जितः । मया धर्मः खण्डितस्तेनानार्यदेशेऽहमुत्पन्नः, अधुना योऽभयकुमारो जिनबिम्बप्रेषणेन प्रतिबोधयति स मम परमबान्धवो गुरुश्च। तेन पितरमनुज्ञाप्य तत्रार्यदेशे गत्वाऽभयकुमारस्य मन्त्रिणो मिलिष्यामि। स मम गुरुरस्ति । एवं मनोरथं कुर्वन् श्रीयुगादिजिनार्चापरोऽभयपार्श्वे गन्तुकामश्च तातसंनिधौ जगाद—श्रेणिकपुत्रस्याभयकुमारस्य मिलनार्थं गन्तुकामोऽस्मि । आर्द्रकदेशेशोऽवग्—तत्र त्वया न गन्तव्यं, विदेशो विषमो विद्यते । वत्स ! स्वस्थानस्थितस्य पुंसः शोभा भवति । ततः पित्रा निषिद्ध आर्द्रकुमार उत्कण्ठितोऽस्थात् वारिबद्ध इव द्विपः । यतः—“आसने शयने याने, भोजने च क्रियासु च । अभयालङ्कृतामाशां, प्रति दत्तमना अभूत् ॥ १ ॥” ततः कीदृग् मगधदेशोऽस्ति? कीदृक् श्रेणिकराजाऽस्ति ? कीदृग् अभयकुमारोऽस्ति ? इत्यादि नित्यं पृच्छन् पथिकान् कुमारस्तस्थौ। कुमारं चलचित्तं मत्वा स्वपार्श्वस्थान् सेवकान् प्रति जगौ नृपः—भवद्भिः पञ्चशतमितैः कुमारस्य सेवा कार्या। कुमारो राजगृहपुरे अभयकुमारान्तिके यियासुरस्ति, तेन यत्नतस्तत्र गच्छन् विलोक्यः, इयं वार्ता तस्य न ज्ञाप्या । ओमित्युक्ते तैः सेवायै समायाताय कुमाराय राजा जगौ—पुत्र ! तवैते मत्सेवकाः सेवां कुर्वन्तु । यद्यद्वस्तु तव विलोक्यते

तत्सर्वं वस्तु कोशाद्गृहीतव्यम् । ततः पितृप्रदत्तैः सेवकैः परिवृतः कुमारः स्वस्थानके समागतः । यदा यदा क्रीडार्थं बहिर्गच्छति तदा तदा ते सर्वे सेवका देहं छाया इव तमार्द्रकुमारं न मुञ्चन्ति । तत आर्द्रकुमारो बन्द्यां धृतमिवात्मानं मन्यमानो दध्यौ—किं क्रियते स्वर्णनिगडानीवैते सेवका मम पदबन्धका जाताः, किं करिष्यते ? कथमभयकुमारो मिलिष्यति ?। ततः प्रत्यहं वाहाल्यां पुराद्बहिस्तुरङ्गमान् खेलयन् दूरं दूरतरं दूरतमं गत्वा पुनर्व्याघुट्य पश्चादायातिसकुमारोऽभयकुमारोपान्ते गन्तुं, सर्वेऽपि सेवका विश्वस्ता जाताः, किमपि मनसि नानयन्ति । कुमारस्तु तेषामुदरपूरणं यथेष्टं सदन्नपानदानादिभिः करोति स्म । अश्वारूढाः सर्वे सेवकाः कुमारस्य पार्श्वे तिष्ठन्तिस्म । ततश्चार्द्रकसूनुर्निजैः प्रत्यायितैः पुम्भिर्याने सज्जीकृते तां प्रथमजिनप्रतिमां स्वपार्श्वे छन्नं रक्षतिस्म । ततोऽन्यदा कियज्जात्यरत्नसमूहमादाय आदिजिनप्रतिमासहितो घोटकं खेलयन् यानपार्श्वे गत्वा तमारुह्य कुमारः समुद्राध्वनि चचाल । यानादुत्तीर्य कुमारो यावल्लक्ष्मीपुरे समागात्तावत्तत्र श्रीपुण्यनन्दनसूरयः समाययुः । ततस्तत्र धर्मं श्रोतुमार्द्रकुमारो ययौ । श्रीगुरुभिर्देशना कृता । तथाहि—नृपत्वचक्रित्वहरित्ववैभवं, धर्मः प्रदत्ते नृभवं नवं नवम् । जल्पैरनल्पैः किमु कल्पयत्ययं, स्वल्पैरहोभिः परमार्हतः श्रियम् ? ॥१॥

विधेहि तद्धर्मविधानधन्यतां, पिधेहि धीमन् ! विषयानुषङ्गिताम् । संधेहि संतोषसुहृत्त्वमुत्तमं, निधेहि लक्ष्मीं परलोकलिप्सया ॥ २ ॥ लज्जातो भयतो वितर्कविधितो मात्सर्यतः स्नेहतो, लोभादेव हठाभिमानविषयाच्छृङ्गार-कीर्त्यादितः । दुःखात् कौतुकविस्मयव्यवहृतेर्भावात्कुलाचारतो, वैराग्याच्च भजन्ति धर्ममलं तेषाममेयं फलम् ॥ ३ ॥ संझरागजलबब्बुओवमे, जीविए जलबिन्दुचञ्चले । जोवणे नइवेगसंनिहे, पाव ! जीव किमयं न बुज्झसि ? ॥ ४ ॥ इयं मायारात्रिर्बहलतिमिरा मोहललितैः, कृतज्ञानालोकास्तदिह निपुणं जाग्रत जनाः! । अलक्ष्यः संहर्तुं ननु तनुभृतां जीवितधनान्ययं कालश्चौरो भ्रमति भुवनान्तः प्रतिगृहम् ॥ ५ ॥ धर्मात् शम्बलतो नृदेवखचरव्यालेन्द्रसौख्यंभवे, दत्रामुत्रच चन्द्रनिर्मलयशःपूजादिकं प्रत्यहम् । पापेनैव च दुःख-दुर्गतिभवं श्वभ्रादिकं दुःसहं, निन्दाकीर्तिगणं तदेव कुरुतो भ्रातर्यदिष्टं तव ॥ ६ ॥ इत्यादि धर्मोपदेशमाकर्ण्य वैराग्यवासिताशयोऽभूदार्द्रकुमारः । ततः स्वयं सप्तक्षेत्र्यां धनमुप्त्वा यावद्यतिलिङ्गमुपादत्ते स्मार्द्रकुमारः सर्वविरति-सामायिकदण्डकोच्चारपूर्वं तावदाकाशस्थितया च देवतयोचे—यद्यपि त्वं महासत्त्ववानसि साम्प्रतं दीक्षां ग्रहीष्यसि त्वं च तन्न युक्तं तव । यतस्ते भोगफलं कर्म बहु विद्यते, तेन भोगफलं भुंक्त्वा कियत्कालं पश्चाद्दीक्षामाद-

र्दीर्घाः । कृतकर्म भोगं विना न छुटति जीवः । यतः—"कत्थइ जीवो बलिओ, कत्थइ कम्माइं हुंति बलियाइं । जीवस्स य कम्मस्स य, पुव्वनिबद्धाइं वयराइं ॥ १ ॥ कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ २ ॥" देवतयैवं वारितोऽपि प्रत्येकबुद्धो यतिरभूदार्द्रकुमारः । ततः पालयन्निरतिचारचारित्रं वसन्तपुरपत्तनमार्द्रकुमारऋषिः (आगतः) क्रमात् बाह्यदेवकुले प्रतिमया तस्थौ रात्रौ यतिः । इतः पश्चाद्भवपत्नी बन्धुमतीदेवः स्वर्गाच्च्युत्वा वसन्तपुरे धनदत्तश्रेष्ठितनया श्रीमतीनाम्नी पुत्री बभूव । जन्मोत्सवः कृतः । क्रमाद् धर्मकर्मसर्वकलाकुशलाऽजनि च । अन्यदा समानवयस्तुल्याभिरिभ्यपुत्रीभिः परिवृता रन्तुं पतिरमणक्रीडया देवकुले ययौ । तदा सर्वाः कन्याः बालक्रीडया जगुः—एते सर्वे स्तम्भा वरतुल्या विद्यन्ते । वयं सर्वाः कन्याः । यस्या यादृशो वरो रोचते चित्ते तया स्वमनरुचितोऽङ्गीकरणीयः । ततस्ताः सर्वाः स्वस्वस्तम्भं वरबुद्ध्याऽङ्गीचक्रुः । श्रीमती स्तम्भमलभमाना तमार्द्रकुमारं यतिमङ्गीकृत्येत्युवाच—मया भट्टारको वृतः । तदाऽकस्मादाकाशे साधु साधु वृतमिति जल्पन्ती देवता रत्नवृष्टिं गर्जितादिपुरस्सरं चकार भाग्यात् । यतः—"सुराज्यं सम्पदो भोगाः, कुले जन्म सुरूपता । पाण्डित्यमायुरारोग्यं, धर्मस्यैतत्फलं विदुः ॥ १ ॥" ततस्तस्य यतेः पदयो-

र्लगित्वा श्रीमती यते ! त्वमेवास्मिन् भवे मम पतिरिति जल्पन्ती बभूव। अनुकूलोऽयमुपसर्गो मद्व्रतभङ्गाय भविष्यति इति ध्यात्वाऽनगारशिरोमणिरन्यत्र विजहार। तां देवताकृतरत्नवृष्टिमादित्सू राजा तया देव्या निषिद्धः। ततो राज्ञा तद्धनं तस्या वरणे वरस्यैव भविष्यतीति प्रोक्तम्। ततः श्रीमतीपितुरेव तद्धनं राज्ञाऽर्पितम्। ततः सर्वे लोकाः स्वस्वस्थानं ययुः। राजाऽपि स्वस्थानं गतः। अथ तां कन्यां मार्गयितुं बहवो वराः समायान्ति, तथापि श्रीमती जल्पति स्म–यो मया पूर्वं वरोऽङ्गीकृतः स एव मे पतिर्भवतु, नो चेदग्निरेव शरणम्। कन्या त्वेकवारमेव परिणीयते, न द्वितीयवारम्। यतः–"सकृज्जल्पन्ति राजानः, सकृज्जल्पन्ति साधवः। सकृत् कन्याः प्रदीयन्ते, त्रीण्येतानि सकृत् सकृत् ॥ १ ॥" ततः श्रेष्ठी प्राह–पुत्रि ! स महर्षिः कथं प्राप्यः यो नैकत्र तिष्ठति क्षणमपि ?। अलिरिव स्थाने स्थाने भ्रमति स यतिः कथमत्रायास्यति ?, आगतो वा कथमुपलक्ष्यते ? कथं च तस्य नाम ज्ञायते ? अभिज्ञानं तु किमपि नास्ति। भिक्षवस्तु बहवो यान्त्यागच्छन्ति च, तेन न ज्ञायते स वरः सम्यग्। ततः कदाग्रहो न क्रियते। यतः—वज्रलेपस्य मूर्खस्य, नारीणां मर्कटस्य च। एको ग्रहस्तु मीनानां, नीलमद्यपयोरिव ॥ १ ॥ श्रीमती जगौ–यदाऽहं तस्य यतेः पादयोर्लग्ना तदा मया विद्युदुद्योतेन ऊर्ध्वरेखा

कन्याऽगजाकृतिचिह्नयुता दृष्टा । तेन तादृशं चिह्नमपरस्य कस्यापि न भविष्यति । पिताऽवग्—किं करिष्यते ?। कन्याऽवग्—अहं तथा करिष्ये यथा स मे पतिर्मिलिष्यति । ततः पित्रा प्रोक्तं—कुरु स्वहितम् । ततश्चतसृभ्यो दिग्भ्य आगतान् यतीन् प्रतिलाभयन्ती शुद्धान्नपानादिनाऽभिग्रहं ललौ श्रीमतीति—ऋषीणां पादतलवन्दनं विना मया नान्नपानादि ग्राह्यम् । ततश्चतसृभ्यो दिग्भ्य आगतानां यतीनां शुद्धान्नपानादि दत्त्वाऽङ्घ्रितलानि वन्दते भक्त्या । तस्या एवं कुर्वन्त्या द्वादशाब्दानि ययुः । दिङ्मूढो दैव्या मोहितः स मुनिस्तत्रागात् । ततस्तं मुनिमुपलक्ष्य प्रतिलाभयन्ती श्रीमती पादतलं तस्य वन्दमाना जगौ—तदा देवकुले त्वं वृतोऽसि मया । त्वमेव वरो मम । तदा मां विप्रतार्य त्वं गतः। अधुना कथं मद्धस्तचटितो यास्यसि ?। यदि मामवगणय्य यास्यसि तदा मया तुभ्यमात्महत्या देया, स्त्रीहत्यापातकं श्वभ्राय भवति । राजादिषु सर्वेषु लोकेषु मिलितेषु श्रीमती तं यतिं हस्ते गृहीत्वाऽस्थात्। राजा जगौ—यदि त्वमिमां वरिष्यसि तदेयं जीविष्यति, नो चेत्तवात्महत्यां दास्यति । तत आर्द्रकुमारो यतिर्दैवतावाणीं सस्मार । न देवतोक्तं भोगफलमागतमन्यथाकर्तुं शक्यम् । किं क्रियते देवतावचोऽन्यथा न भवति । आगतं कर्म केनाप्युल्लंघितुं न शक्यते । यतः—"आरोहतु गिरिशिखरं, समुद्रमुल्लंघ्य यातु

पातालम् । विधिलिखिताक्षरमालं, फलति कपालं न भूपालः ॥ १ ॥" ततस्तां कन्यां राजाद्युपरोधात् परिणीतवान् आर्द्रकुमारो यतिः । ततस्तया सह भोगान् भुञ्जानस्यार्द्रकुमारस्य सुत उत्पेदे । जन्मोत्सवः कृतः । वर्द्धमानः क्रमात् क्षीरकण्ठत्वमुत्ससर्ज पुत्रः । तत आर्द्रकुमारः प्राह पत्नीं प्रति–तव पुत्रोऽभूत्सहायः, अहमतो दीक्षां ग्रहीष्यामि । एवं श्रुत्वा पत्युर्वचः श्रीमती पुत्रं प्रति तं ज्ञापयितुं सतूलपूर्णं तर्कुमादाय कर्तितुमुपविष्टा । इतो बालको लेखालयादागतो मातरं कर्तन्तीं वीक्ष्य जगौ–मातः! किमिदमनीदृशं कर्म त्वयाऽऽरब्धं कर्मकरजनोचितम्? । श्रीमती जगौ–तव पिता दीक्षां ग्रहीष्यति, ततस्तेन मुक्ताया मम तर्कुरेव शरणम् । पुत्रोऽवग्–मातस्त्वया दुःखं न कार्यमहं तथा करिष्ये यथा दीक्षां न ग्रहीष्यति मत्पिता । ततोऽन्यदा पितरं सुप्तं वीक्ष्य तर्कुसूत्रेण पितृपदौ वेष्टयन् जगौ श्रीमतीनन्दनः–कथमीदृशैस्तन्तुभिस्त्वं बद्धो गमिष्यसि व्रताय? तात! । मातुरग्रे जगौ चार्द्रकसूनुः–मया बद्धोऽस्ति पिता तथा यथा गन्तुं न शक्नोति व्रताय । तदाऽऽर्द्रकुमारो दध्यौ–यद्येवंविधो मोहो ममोपर्यस्ति पुत्रस्यास्य तदा मयि दीक्षार्थं गतेऽस्य पत्न्याश्च का गतिः? । दध्यौ चार्द्रकुमारः–यावन्तस्तन्तवो तेन पादयोः परितो वेष्टिता भविष्यन्ति तावन्ति वर्षाणि मया गृहस्थवासे स्थेयम् । तत

उत्थायार्द्रकुमारस्तंतून् गणयामास । द्वादश तन्तवो जाताः । ततः प्रियाग्रे प्रोक्तम्—अहं दीक्षां ग्रहीतुं यियासुरभूवं कल्ये परं पुत्रेण तन्तवो द्वादश वेष्टिताः पादयोर्मम परितस्तेन मया द्वादश वर्षाणि स्थितम् (त्वा) ततः परं निश्चयाद्दीक्षा ग्राह्या मया। ततः सूनुप्रतिबन्धेन द्वादश वर्षाणि स्थित्वाऽन्येद्यू रात्रौ दध्याविति आर्द्रकुमारः । भवकूपाद्विनिर्गन्तुं, व्रतमालम्ब्य रज्जुवत् । मया प्राप्तं च मुक्तं च, मग्नस्तत्रास्म्यहं पुनः ॥ १ ॥ मनसैव व्रतं भग्नं, प्राग्जन्मनि तथाप्यहम् । अनार्यत्वं प्रपन्नोऽस्मि, का गतिः स्यादतः परम्? ॥ २ ॥ भवत्विदानीमप्यात्मपरिव्रज्यातपोऽग्निना । साक्षात् प्रक्षालयिष्यामि, मलिनीभूतहेमवत्॥ ३ ॥ ध्यात्वेति प्रगे पत्नीपुरतो जगाद आर्द्रकुमारः—दीक्षां लास्याम्यहम्। पत्नी जगौ—त्वां विनाऽहं कथं भविष्यामि ?, पुत्रश्च कथं भविष्यति?। आर्द्रकुमारोऽवग्—पत्नि ! कथमेवं त्वयोच्यते ?, कोऽपि कस्यापि नास्ति । आत्मीयात्मीयकर्मणा जीवाः संयुज्यन्ते वियुज्यन्ते च, यतः—"जातश्चैको मृतश्चैक, एको धर्मं करोति च। पापं स्वर्गसुखे जीवः, श्वभ्रे गच्छति कः समम्? ॥१॥ मूढाः कुर्वन्ति ये मे मे, वपुःपुत्रगृहादिकम् । तेऽपि त्यक्त्वा च रोगार्ता, मज्जन्ति भवसागरे ॥ २ ॥ अन्यो जीवो भवेद्यत्र, देहात्तत्र गृहादिकम् । कथं मे मे तनुर्गेहं, कलत्रं कुरुतेऽङ्गवान् ? ॥ ३ ॥ कुटुम्बधनधान्यादि,

सर्वं दुःखसमुद्भवम् । देहं च मन्यते यः स्वं, कर्म बध्नाति सः कुधीः ॥४॥ एको धर्ममुपार्जनं (र्जितं) च विबुधः कृत्वा स्वयं गच्छति, स्वर्गं पापमुपार्ज्य घोरनरकं दुःखाकरं प्राणभृत्। एको दुःखततिं (चयं) ह्यसारमपि सो (वशो) धृत्वा च मुक्त्यालयं, तस्मात् त्वं भज भावतो हि शरणं धर्मं त्यज स्वं गृहम् ॥ ५ ॥ इत्यादिवचनैः पत्नीं पुत्रं च पर्यवसाय्य स्वयं यतिलिङ्गमुपादाय निर्ममो निरहङ्कारः स्वगृहान्निर्ययौ, वने गतः । तत आर्द्रकुमारयतिः राजगृहं प्रति गच्छन् अन्तराले चौर्यवृत्तितत्परं स्वसामन्तशतपञ्चकमुपलक्ष्य यावत् स्थितः तावत्तैः स्वस्वामीत्युपलक्ष्य भूयस्या भक्त्या वन्दित ऋषिः । यतिर्जगाद तान् प्रति–युष्माकं किमियमीदृशी पापकारिणी दुर्गतिदात्री दृश्यते वृत्तिः ?। यतः–"चौर्यपापद्रुमस्येह, वधबन्धादिकं फलम्। जायते परलोके तु, फलं नरकवेदनाः ॥ १ ॥"इत्यादि । ते सेवका जगुः–यदा स्वामी त्वमस्मान् वञ्चयित्वा गतः तदाऽस्माभिस्त्वं सर्वत्र विलोकितोऽपि न दृष्टः, तदाऽस्माभिश्चिन्तितं–आर्द्रकुमारस्तु गतः, स्वामिनः कथं मुखं दर्शयिष्यते ?। एवं विचिन्त्य यानमारुह्यात्रागत्य त्वां विलोकमानास्त्वां चानुपलभ्य चौर्यवृत्तिमादृतवन्तो वयं, ततः प्रभृति चौर्यवृत्तिं कुर्वाणाः सः । मुनिरप्यभ्यधात्–भो भद्राः ! कष्टे पतिते सत्यपि न कार्या सद्भिश्चौर्यवृत्तिः । मानुषं

जन्म दुर्लभं प्राप्य जनैस्तत्कार्यं येन शुभगतिर्भवति। यतः—"जन्तूनामवनं जिनेशमहनं भक्त्याऽऽगमाकर्णनं, साधूनां नमनं मदापनयनं सम्यग् गुरोर्माननम्। मायाया हननं विशुद्धिकरणं लोभद्रुमोन्मूलनं, चेतःशोधनमिन्द्रियार्थदमनं यत्तच्छिवोपायनम् ॥ १ ॥ केनापि पुण्ययोगेन, मानुष्यकमवाप्यते। प्राप्तस्य च तस्य फलं, धर्मः स्वर्गापवर्गदः॥ २॥ दया जीवेषु सत्योक्तिरस्तेयं ब्रह्मचारिता। आकिञ्चन्यं च धर्मोऽयं, जिनैरेव निवेदितः ॥ ३ ॥ ततः स्वामिभक्ता यदि भवन्तस्तदा मन्मार्गमाश्रयध्वमतीव सुखं भविष्यति च। ते सर्वे प्रोचुः—त्वमस्मत्स्वामी वर्तसे, यदादिश्यते भवता तदस्माभिः करिष्यते। ऋषिः प्राह—मत्तुल्या भवन्तु भवन्तः, ततस्तैर्दीक्षा गृहीता। ततस्तैर्यतिभिः सममार्द्रकुमारः श्रीमहावीरं वन्दितुं गच्छन् राजगृहोपान्तस्थोद्याने ययौ। तत्र तापसा हस्तिनं महान्तं हत्वा तन्मांसं भक्षयन्तस्तिष्ठन्ति स्म। तान् तादृशं कर्म कुर्वतो वीक्ष्यार्द्रकुमारः प्राह—भो महानुभागाः! जीवहिंसा न क्रियते, जीवहिंसयाऽधोगतिर्भवति। अस्थि वसति रुद्रश्च, मांसे वसति जनार्दनः। शुक्रे च वसति ब्रह्मा, तस्मान्मांसं न भक्षयेत् ॥ १ ॥ तिलसर्षपमात्रं तु, मांसं यो भक्षयेन्नरः। स निवर्तते नरकं, यावच्चन्द्रदिवाकरौ ॥ २॥ ते प्रोचुस्तापसाः—वयमेकं महान्तं जीवं हत्वा जीवामः भवन्तश्च बहून् तेन भवतां महत् पापं

लगति । एकेन्द्रियस्य धान्यस्य, जायते पञ्चभिः कणैः । पञ्चेन्द्रियत्वं न तृप्तिर्भूरिपञ्चेंद्रियो वधः ॥ १ ॥ ततस्ते तापसा दयाभासा एकं महान्तं करिणं तरुणा सह बबन्धुः । भारश्रृंखलाबद्धो हस्ती तमार्द्रकुमारमालोक्य श्रृंखलां जीर्णरज्जुमिव त्रोटयित्वा आर्द्रकुमारं वन्दितुं चलितः । तदा सर्वे तापसा हाहा अयं यतिर्हतो हत इति वदन्तो धाविताः । स हस्ती तु आर्द्रकुमारं ननाम । आर्द्रकुमारो जगौ—भो गजेन्द्र ! तव यदि धर्मरुचिर्भवति तदा धर्म्ममङ्गीकुरु । ततः पुनः प्रणनाम । ऋषिणोक्तं—यदि तवानशनेच्छा विद्यते तदा गृहाण । तेन हस्तिनाऽनशनं गृहीतम् । ततस्ते तापसाः प्रतिबुद्धाः जीवदयासूत्रं धर्ममङ्गीकृतवन्तः, श्रेणिको राजाऽपि तापस प्रतिबोधगजश्रृंखलात्रोटनानशनग्रहणं च श्रुत्वाऽभयकुमारान्वितस्तत्रागतः । भक्त्या तमृषिं सपरिवारं राजा पुत्रपौत्रयुतो वन्दते स्म । ऋषिणा कल्याणकारिण्या धर्मलाभाशिषा स राजा प्रीणितः । ततो धर्मोपदेशमाकर्ण्य राजा पप्रच्छ—महदाश्चर्यमिदं, यद्भवदर्शनाद्धस्तिना भारशृंखला लोहमयी त्रोटिता तन्महदाश्चर्यं विद्यते मम । मुनिरूचे—इदं शृंखलात्रोटनं सुकरं, यत्तु आमतन्तुलतापाशत्रोटनं मया कृतं तत्सर्वेषां जन्तूनां दुष्करम् । राज्ञा पृष्टं—क आमतन्तुलतापाशत्रोटनसम्बन्धः कथ्यते भवता ?, तत आर्द्रकुमारेणात्मीयपुत्रवेष्टिततन्तुत्रोटनसम्बन्धः

कथितः। ततो राजादयः सर्वे लोकाश्चमत्कृताः। आर्द्रकुमारयतिराह–अयमभयकुमारो मम परमबान्धवः। यतोऽहं तत्रानार्यदेशे श्रीयुगादिजिनबिम्बप्रतिमाप्रेषणात्प्रतिबोधितः। संसारकर्दमपतितोऽहमुद्धृतः। एतदाकर्ण्याभयकुमारः श्रेणिकं प्रति जगौ–अधुनाऽहं दीक्षां ग्रहीष्यामि आदेशं देहि। मन्मित्रेण यत्कृतं तत्कर्तुं ममापि युक्तम्। श्रेणिकोऽवग्–पुत्र! त्वयैवमधुना न वक्तव्यं, यदि त्वं बलाद्दीक्षां ग्रहीष्यसि तदा मम हृदयस्फोटो भविष्यत्येव, पितृहत्या लगिष्यति तव। ततोऽभयकुमारः पितृवचसा गृहवासेऽपि शुद्धं श्राद्धधर्मं पालयति। तत आर्द्रकुमारयतिर्बहुयतिश्रेणिकाभयकुमारयुक्तः समवसरणस्थं श्रीवीरजिनं त्रिः प्रदक्षिणीकृत्य वन्दते स्म भूयस्या भक्त्या। ततो वीरो जगौ–शुद्धं चारित्रं त्वयाऽऽराधनीयम्। यतः–शुद्धचारित्रं विना संसारान्मुक्तिर्न भवति। यतोऽनन्तशो दीक्षा गृहीता जनैः, पुनः शुद्धां स्तोका एव पालयन्ति स्म। यतः–"संसारसागरमिणं परिभमंतेहिं सव्वजीवेहिं। गहियाणि य मुक्काणि य अणंतसो दव्वलिंगाइं ॥ १॥" धर्म एव परमबान्धवः, यतो धर्मादेव स्वर्गापवर्गादिर्भवति। यतः–धर्माज्जन्मकुले शरीरपटुता० ॥ ततः श्रेणिकादयः सर्वे श्रीवीरमन्यान् मुनींश्च प्रणम्य यथास्थानं गताः। ततस्तीव्रतपोऽग्निना सर्वकर्मेन्धनानि स दहन् क्रमात्केवलज्ञानमवाप्यायुषः क्षया-

न्मुक्तिपुरीं जगामार्द्रकुमारयतिः। इति श्रीजिनदर्शनोत्तमसङ्गतिविषये श्रीआर्द्रकुमारयतिकथा समाप्ता ॥ ४४ ॥

## क्षमया विहितानेकदुष्कृतोऽपि जनः क्षणात्। दृढप्रहारीव कल्याणपदवीं भजते स्फुटम् ॥ १ ॥

तथाहि—क्वापि पुरे जीर्णदत्तनामा द्विजो वसति स्म। तस्य पुत्रो दुर्नयदुर्द्धरो यज्ञदत्तोऽभूत्। क्रमात् पितरि मातृयुते मृते आखेटादिकर्मकुशलो नगरान्निःसृत्य चौरपल्लिकां गतः। तत्र पल्लीनाथस्य भीमस्य मीलितः स द्विजः। पल्लीनाथेनापुत्रकेण स द्विजः पुत्रपदे स्थापितः। दृढप्रहारं सर्वजन्तुषु दत्ते स तेन तस्य दृढप्रहारीतिनामाभूत्। यतः—"यादृशं क्रियते कर्म, नाम तादृक् प्रजायते। यादृशं रोप्यते बीजं, फलं तादृक् समुद्भवेत् ॥ १ ॥" क्रमात् पल्लीनाथेन स्वान्त्यकाले स्वपदे स्थापितो दृढप्रहारी बहुभिल्लपरिवृतोऽनिशं स्तैन्यधाट्यादि कर्म कुर्वाणोऽन्यदा ग्रामलुण्टनाय कुशस्थलग्रामे गतः। इतस्तत्र देवशर्मा द्विजः क्वचित् षष्टितन्दुलान् दुग्धं च प्राप्य गृहे भार्यायाः अर्पयित्वा मध्याह्ने स्नातुं ययौ। देवशर्मगृहे धाटी समागता। चौरैस्तस्य गृहे लुट्यमाने तस्यापत्यैः पितुरग्रे प्रोक्तं गत्वा। स द्विजो रुषा राक्षसाविष्ट इव लकुटकमुत्पाट्य तान् हन्तुमागात्। द्विजस्तत्रागतो हक्कयन् चौरं हन्तुमधावत्। द्विजस्य धावतस्तस्य नालिकेरमिव [तस्य] मौलिं दृढप्रहारी चिच्छेद। तदा

गौः शृङ्गमुत्पाट्य दधाव तं हन्तुम् । ततो दृढप्रहारिणा सा गौरपि हता, द्विधाकृता देहेन । ततो भार्या हाहाकारं कुर्वाणा दधावे तं प्रति । तदा तेन सा सगर्भा द्विजभार्या हता । तदा तस्याः स्त्रिया गर्भान्मृतं गर्भं द्विजं द्विजप्रियां गावं च मृतान् वीक्ष्य तदपत्यान् हाहाकारं कुर्वाणान् दृढप्रहारी वीक्ष्य दध्यौ—हा रुदतामेतेषां द्विजापत्यानां मातृपितृमुक्तानां का गतिर्भविष्यति ?। अहमेव दुःखापादने निमित्तमभूवम् । इदृग्दुष्कर्मभारेण, पापपङ्के सुदुस्तरे । ममाधो मज्जतः कः स्यादुपायः ? कोऽवलम्बनम् ? ॥ १॥ एवं ध्यायन् दृढप्रहारी वने साधून् शान्तमानसान् धर्मध्यानलीनान् सर्वजीवरक्षाकरानालुलोके । एते साधवः क्षमावन्तः पूज्याः । यतः—वंदिज्जमाणा न समुक्कसंति, हीलिज्जमाणा न समुज्जलंति । दंतेण चित्तेण चरंति धीरा, मुणी समुग्घाइअरागदोसा ॥ १ ॥ तो समणो जइ समणो, भावेण य जइ न होइ पावमणो । सयणे य जणे य समो, समो अ माणावमाणेसु ॥ २ ॥ नत्थि अ सि कोइ वेसो, पिओ व सव्वेसु चेव जीवेसु । एएण होइ समणो, एसो अन्नोऽवि पज्जाओ ॥ ३ ॥ तान् नत्वा जगौ दृढप्रहारी—मया पुरुषस्त्रीगोबालकादीनां हत्या कृता कथं छुटिष्यते नरकान्तपापात् ? । एकेनापि जीवेन हतेन नरके पातो भवति नृणां, बहूनां जीवानामहं हन्ताऽभूवं तेन कथं संसारान्मुक्तिर्भ-

६

विष्यति ?। मह्यं संयमं ददस्व यूयम्। ततो गुरुणा संसाराद्विरक्तं दृढप्रहारिणं मत्वा दीक्षा ददे तस्मै। तस्य तपः कुर्वतोऽयमभिग्रहोऽभूत्—यत्र दिने ममाघं स्मरिष्यते तावन्मया न भोक्तव्यम्। यतः—"अदः पापं स्मरिष्यामि, यत्र भोक्ष्येऽह्नि तत्र न। क्षमामहं करिष्यामि, निहन्तृष्वपि वैरिषु ॥१॥" इत्यभिग्रहं गृहीत्वा कुशस्थलग्रामे पूर्वं बहुवारान् अवस्कन्दीकृते दृढप्रहारी ययौ। उद्यानाद्भिक्षार्थं पुरे नगरे व्रजन् अयं स्त्रीपुरुषबालकगोघातक इति-कृत्वा लोकैर्दृढप्रहारी सदा हन्यते दृढम्। ततो यदा यदा ग्राममध्ये विहर्तुं याति तदा तदा लकुटपाषाणादिभिर्लोकै-र्दृढप्रहारी ताड्यते भृशम्, तत एवं दृढप्रहारी ध्यायति—रे जीव! त्वयाऽनेके जीवा एवं निष्कृपं हताः सन्ति अस्मिन् भवे, अन्येषां लोकानां निष्कृपं धनमपहृतमस्ति, त्वया कूटानि बहूनि जल्पितानि, अन्येषां जनानां स्त्रियोऽप-हृताः सन्ति। स्त्रीभ्यो बालकानां वियोगो विहितोऽस्ति। गोवत्सरूपाणां वियोगोऽनेकशः कृतोऽस्ति। अभक्ष्यभक्षणं कृतमस्ति। परेषु ईर्ष्या कृताऽस्ति। बहुभिः समं त्वयाकलहः कृतः कारितोऽस्ति, तेनाधुना सर्वप्रकारेणैषां लोकानां मारणाद्यपराधः क्षन्तव्यः। क्रोधो न कर्तव्यः। क्रोधेन सर्वं पुण्यमर्जितमपि याति। यतः—"कोहो पीइं पणासेइ, माणो विणयनासणो। मायामित्ताणि नासेइ, लोभो सव्वविणासणो ॥ १ ॥ उवसमेण हणे कोहं, माणं मद्दवया

ज्जिणे । मायं चऽज्जवभावेण, लोभं संतोसओ जिणे ॥ २ ॥" एते लोकास्तवकर्मरिपूणां हनने सखायो भवन्तः सन्ति तेन एते तव परमबान्धवाः । बान्धवा इह लोके सुखं ददते एते मुक्तिसुखं तव दास्यन्ति । एतेषु लोकेषु रोषो न कार्यस्त्वया, कर्मणामुपरि कार्यः । यत उत्तमैर्हन्तरि पुरुषे क्रोधो न क्रियते, किन्तु कर्मविषये क्रियते कर्मोन्मूलनाय । यतः—पत्थरेणाहओ कीवो, पत्थरं डक्कुमिच्छइ । मिगारीओ सरं पप्प, सरुप्पत्तिं विमग्गई ॥ १ ॥ लोकः प्रहारको नायं, मयि किन्तूपकारकः । गृह्णाति मम पापानि, ददाति सुकृतं निजम् ॥ २ ॥ दृहा सत्कृपयैवामी, घातैरपि निषेध्य माम् । स्थाने ममामी नरकगुप्तौ वेक्ष्यन्ति बान्धवाः ॥ ३ ॥ इत्यादि-भावना भावयतो दृढप्रहारियतेः क्षणे क्षणे प्रवर्द्धमानशुभाध्यवसायस्य क्रमाच्चतुर्दशगुणस्थानारूढस्य केवल-ज्ञानमुत्पन्नम् । यतः—"प्रणिहन्ति क्षणार्द्धेन, साम्यमालम्ब्य कर्म तत् । यन्न हन्यान्नरस्तीव्रतपसा जन्मको-टिभिः ॥ १ ॥" तत्कालमेवायुषः क्षयान्मुक्तिपुरीं दृढप्रहारी ययौ । इति दृढप्रहारीकथा समाप्ता ॥ ४५ ॥

**वर्यभावात्सुपात्रेभ्योऽनवद्यं दानमङ्गवान् । ददानो लभते मुक्तिं, श्रीश्रेयांसकुमारवत् ॥ १ ॥**

तथाहि—गजपुरे श्रीबाहुबलिपुत्रसोमयशाभूपो राज्यं करोति स्म । तस्य पुत्रः श्रेयांसकुमारो युवराजो

विद्यते । एकदा श्रेयांसकुमारः स्वप्ने मेरुपर्वतं मलिनीभूतं सुधाभिरुज्ज्वलं व्यधामहमित्यद्राक्षीत् । तस्यामेव रात्रौ कोऽपि महाभटः शत्रुभिराक्रान्तः श्रेयांसकुमारसांनिध्याज्जयीबभूवेति स्वप्नं सोमयशाभूपोऽपश्यत् । तस्यामेव निशि पुनः श्रेष्ठिना स्वप्नो दृष्टः—सूर्यमण्डलात् किरणानि पतन्ति श्रेयांसकुमारेण यत्नतः स्थाने स्थापितानि । प्रातर्महानुदयः श्रेयांसस्य भविष्यति इति यावद् ध्यायन्ति ते तावत् प्रभुः श्रीऋषभो वार्षिकतपोऽन्ते भिक्षार्थं पुरीमध्ये समागात् । कोऽपि कन्यां लात्वा समायाति । कोऽपि स्वर्णं कोऽपि रूप्यं कोऽपि घोटकं कोऽपि गजं सन्मुखं प्राभृतकरणार्थमानयति । प्रभुं तत्सर्वं निषेधयन्तं वीक्ष्य गवाक्षस्थितः श्रेयांसकुमारः पुनःपुनरूहापोहेन किमेवंरूपो मया दृष्टः पुरा इति ध्यायन् जातिस्मृतिं प्राप पश्चाद्भवमपश्यच्च । ततो गवाक्षादुत्तीर्य प्रभुं प्रणम्य यावच्छ्रेयांसकुमारः कृताञ्जलिराहारार्थं वदति तावदकस्मादिक्षुरसपूर्णं घटशतं केनापि कौटुम्बिकेन श्रेयांसकुमाराय प्राभृतीचक्रे । ततः श्रेयांसकुमारो निर्दोषमिक्षुरसं मत्वा प्राह—भगवन् ! इक्षुरसं गृहाण, मां निस्तारय शुद्धाहारादानात् । ततो यावत् परमेश्वर इक्षुरसं ग्रहीतुं हस्तद्वयं मेलयति । तावद्दक्षिणकरो न स्थानाच्चलति । ततः स्वामी प्राह—भो दक्षिणकर ! कथं भिक्षां न लासि ? । स हस्तोऽवग्—अहं दातृहस्तस्याधो

श्रीश्रेयांसकुमारवृत्तम् ।

भवामि कथम् ?, ततो दक्षिणपाणिः सगद्गदं श्रेयांसस्याग्रे प्राह—श्रेयांस ! श्रूयतां देव !, सेवकोऽहं यथाविधि । प्रतिष्ठामीदृशीं प्राप्तः, प्रभुपादप्रसादतः ॥ १ ॥ इन्द्रचन्द्रनरेन्द्राणां, प्रत्यक्षं पश्यतामिह । अङ्गुष्ठेन सुधापानं, कारितः शैशवे मया ॥ २ ॥ वंशस्थापनसमये, शक्रहस्तान्मयेक्षवः । स्वीकृताश्छत्रचक्रादिलक्षणानामहं खनिः ॥ ३ ॥ महता महेन पाणिग्रहणं कन्ययोः कृतम् । मयैव स्थापितो राज्ये, भरतो भारताह्वये ॥ ४ ॥ केदारतीर्थव्यापारभाग्यमुद्रादिधारकः । पूजाभोजनसज्जापदानानां कारकोऽन्वहम् ॥ ५ ॥ वर्षावधिमहादानसंतोषितजगत्त्रयः । सोऽहं स्वल्पाशनस्याधो, भवामि न कदाचन ॥ ६ ॥ ततोऽहं दानं ग्रहीतुं परस्य हस्तस्याधो न भवामि । ततो वामो हस्तः प्राह—रे निर्लज्ज ! मुधाऽऽत्मानं व्याख्यासि प्रसभं किमु ? ॥ परेण परिविख्यातो, निर्गुणोऽपि गुणीभवेत् । शक्रोऽपि लघुतां याति, स्वयंप्रख्यापितैर्गुणैः ॥ १ ॥ अतो निजगुणग्रामं, विज्ञास्तन्वन्ति नो यतः । कर्प्पूररत्नमण्याद्या, ज्ञायन्ते स्वप्रभावतः ॥२॥ एवं मिथो द्वयोर्हस्तयोर्विवादं कुर्वतोः श्रेयांसः प्राह—कुलीनाः कुलजा दक्षा, नोपेक्षन्ते प्रभुं जनाः । स्वकुटुम्बविरोधे हि, निजा एव निजा ध्रुवम् ॥ ३ ॥ संजाते केवले तीर्थस्थापनायां महोदये । भवतोः समयो भावी, जगत्त्रितयहर्षदः ॥ ४ ॥ एवं श्रेयांसेन प्रति-

बोधितौ प्रभुणा च एकीभूय प्रभुरिक्षुरसेन पारणां कारितः । तदा देवैः सार्द्धद्वादशकोटीवृष्टिः कृता । तदा श्रेयांसेन मुक्तियोग्यं कर्मार्जितम् । तथा च–सुपात्रमेकं हि युगादिदेवः, श्रेयांसनामा सुकृती द्वितीयः । राद्धा तृतीयेति तयोस्तृतीया, निर्द्वन्द्वरूपा प्रथिता जनेषु ॥ १ ॥ रिसहेससमं पत्तं, निरवज्जं इखुरससमं दाणं । सेयंस समो भावो, हविज्ज जइ मग्गियं दिज्जा ॥ २ ॥ इति श्रीश्रेयांसकथा समाप्ता ॥ ४६ ॥

**कुर्वाणो मनुजो नित्यं, क्षमां वैरिषु देहिषु । निःश्रेयसश्रियं कूरघटवल्लभते श्रियम् ॥ १ ॥**

तथाहि—क्वापि गच्छे श्रीधर्मघोषसूरयोऽभूवन् । तेषां साधवो विनीता बहवोऽभवन् ! अन्येद्युः श्रीगुरवः पृथिवीं प्रतिबोधयन्तो लक्ष्मीपुरे ययुः । तत्रानेके भव्यजीवा धर्मोपदेशं श्रोतुमाययुः । गुरुभिर्धर्मोपदेश इति ददे । पूया जिणिंदेसु रई वएसु, जत्तो य सामाइयपोसहेसु । दाणं सुपत्ते सवणं सुसुत्ते, सुसाहुसेवा सुरलोअमग्गो ॥ १ ॥ कर्तव्या देवपूजा शुभगुरुवचनं नित्यमाकर्णनीयं, दानं देयं सुपात्रे प्रतिदिनममलं पालनीयं च शीलम् । तप्यं शुद्धं स्वशक्त्या तप इह महती भावना भावनीया, श्राद्धानामेष धर्मो जिनपतिगदितः पूतनिर्वाणमार्गः ॥२॥ इत्यादिधर्मोपदेशं शृण्वन् धनदश्रेष्ठिनः पुत्रो लघुरपि कूरघटाह्वो गुरुपार्श्वे संयमं जग्राह ।

स कूरघटः स्वभावेन क्षमावानस्ति। यतः—"कोकिलानां स्वरो रूपं, नारीरूपं पतिव्रता। विद्या रूपं कुरूपाणां, क्षमा रूपं तपस्विनाम् ॥ १ ॥" ततः श्रीगुरवो बहुपरिवारपरिवृताः श्रीपुरे जग्मुः। तत्र चतुर्मासीं स्थिता गुरवः। तेषां गुरूणां साधवः केचित्त्रिमासक्षपणं कुर्वन्ति, केचिद् द्विमासक्षपणं, केचिच्चतुर्मासक्षपणं, केचित्स्वाध्यायाध्ययनं कुर्वन्ति, केचिद्वैयावृत्यं, केचित् क्षमामेव। तेषां सर्वेषां साधूनां मध्ये कूरघटो विशेषतः क्षमावानस्ति। स कूरघटः क्षुल्लको बुभुक्षालुर्बहुवारं भिक्षायै गच्छति श्राद्धगृहे। ततो लोकैरुक्तम्-अयं सत्यः कूरघटः क्षुल्लकः। स च साधूनां वैयावृत्यं करोति अभिग्रहपूर्वं-साधूनां वैयावृत्यं कृत्वा प्रथमालिकामानीय सुकाल एव पारणं कर्तुमुपविष्टो यावत् तावत् एकेन मासोपवासिना कफव्याधिमता साधुना क्रुद्धेनोक्तं-भो अधम ! स्वाभिग्रहभञ्जक ? मया नार्थितं श्लेष्मप्रक्षेपार्थं भस्मयुतं भाजनं त्वया नानीतं, स्वोदरपूरणायोपविष्टः, अहं क्षमावानिति कथं त्वं स्वमात्मानं ख्यापयसि ?, अधुना तव भोजनस्थाने एव श्लेष्मं व्युत्सृजामि, क्षुल्लकोऽवग्—अहं मुग्धोऽभूवं, मम विस्मृतं, किं करोमि साम्प्रतं, ममाभाग्यम्। तदा स कफी साधुः क्रुद्धः संस्तस्याश्नतो भाजने कफं मुमोच। ततः क्षुल्लक उपशमधर्मैकदृढचित्तः प्रमुदितमानसः स्वमात्मानं निन्दन् प्राह—मदीयं भाग्यं महद्वर्तते

यदनेन चारित्रपात्रेण साधुना मदीये भोजनभाजने कफः क्षिप्तः । ततः पयसोऽंतः सिताखण्डमिव कफं निःशूकं क्षुल्लकोऽभ्यवहरन् दध्यौ—एते साधवो महातपःपराश्चारित्रपात्रम् । अहं त्वभाग्यवानन्नकीटकजीव इव क्षणमपि अन्नं विना स्थातुं न शक्नोमि । एवमात्मानं पुनः पुनर्निन्दन् साधुगुणगणान् गृह्णानो बहुकालार्जितं कर्मराशिं तृणपुञ्जमिव क्षमालवित्रेण छित्त्वा क्षीणकर्मा क्षुल्लकः केवलज्ञानं प्राप । तदा जिनशासनदेव्याऽभ्येत्य देवैश्च केवलमहोत्सवः कृतो वन्दनापूर्वम् ॥ इति क्षमायां कूरघटकथा समाप्ता ॥ ४७ ॥

**जिनेन्द्रप्रतिमालोकनतः केऽपि जनाः स्फुटम् । लभन्ते स्वर्गसौख्यानि, श्रीशय्यंभवसूरिवत् ॥ १ ॥**

तथाहि—अन्येद्युः श्रीप्रभवसूरिः गच्छमध्ये स्वपट्टधारकः को भविष्यतीति ध्यायन्निमामागमगाथां सस्मार-"वूढो गणहरसद्दो गोयममाईहिँ धीरपुरिसेहिं । जो तं ठवइ अपत्ते, जाणंतो सो महापावो ॥ १ ॥" इति श्रुतदत्तोपयोगः स्वगच्छे निजपदयोग्यं शिष्यं श्रावकमध्ये चापश्यन् राजगृहे श्रीशय्यंभवं भट्टं यागं कारयन्तं स्वपट्टयोग्यमालोक्य तत्रागमत् । ततः साधुयुगं शिक्षयित्वा च तस्य गृहे सूरिः प्रेषयामास । तत्साधुयुगं तस्य गृहे गत्वा शय्यंभवभट्टे शृण्वति सति 'अहो कष्टमहो कष्टं तत्त्वं न ज्ञायते पुन'रिति वदत् पश्चाद्वलितं

यावत्तावच्छान्तदान्तयुगं वीक्ष्य ससम्भ्रमादुत्थाय शय्यंभवभट्टः तस्य पार्श्वे गत्वाऽवक्-किं तत्त्वं भवद्भ्यामुक्तम्?। ताभ्यामुक्तम्-अस्मदीया गुरवो वने सन्ति ते कथयिष्यन्ति। ततः स शय्यंभवभट्टस्ताभ्यां साधुभ्यां सह वने गुरुपार्श्वे गत्वाऽवक्-किं तत्त्वं?, गुरुभिरुक्तम्-यस्त्वया यागो मण्डितोऽस्ति तस्य मध्ये कीलकोऽस्ति, तस्याधो यः स्यात् तत्तत्वम्। ततः पश्चाद्गत्त्वा द्विजाः पृष्टाः-किमत्र यज्ञे तत्त्वं?, तैरुक्तं-याग एव तत्त्वम्। ततो यदा ते द्विजाः सम्यक् न कथयन्ति तदा खड्गमुत्पाट्योक्तम्-यदि भवद्भिः सत्यं तत्त्वं न कथयिष्यते तदाऽसौ खड्गो भवतां शीर्षं छेत्स्यति। ततस्ते द्विजा बिभ्यतः श्रीशान्तिनाथप्रतिमां यागमध्यस्थस्य कीलकस्याधः स्थितां दर्शयामासुः। तां प्रतिमां वीक्ष्य चमत्कृतो गुरुपार्श्वे गत्वा धर्मतत्त्वं पप्रच्छ शय्यंभवः, ततः श्रीगुरुभिः साधुश्राद्धधर्मौ व्याख्यातौ। मिथ्यात्वकुदेवकुगुरुकुधर्मादिस्वरूपं प्रोक्तम्। ततः सर्वं धनं सप्तक्षेत्र्यां वपित्वा सगर्भां प्रियां मुक्त्वा श्रीप्रभवसूरिपार्श्वे दीक्षां जग्राह। ततो लब्धसर्वशास्त्रः शय्यंभवभट्टः स्वपट्टे श्रीप्रभवसूरिभिरभिषिक्तः। इति श्रीशय्यंभवसूरिसम्बन्धः ॥ ४८ ॥

व्या. ४९ जीवमेकमपि स्पष्टं, यो रक्षति शरीरवान्। स लभेत्स्वर्गमोक्षादि, सुखं मेघकुमारवत् ॥ १ ॥

तथाहि—राजगृहपुरे श्रेणिकभूपस्य धारिणी पत्नी बभूव। धारिण्याः पुत्रो मेघकुमाराह्वोऽभूत्। स क्रमात् प्राप्तयौवनो भूपपुत्रीरष्टौ श्रेणिकेन परिणायितः। अन्येद्युः पुराद् बहिः समवसृतं श्रीमहावीरं नन्तुं गतो मेघकुमारो धर्म्मं श्रुत्वा प्राप्तवैराग्योऽष्टौ प्रियास्त्यक्त्वा संयमं जग्राह। ग्रहणासेवनाशिक्षायै श्रीवीरेण स्थविरायार्पितो मेघकुमारः। अपरस्मिन् ग्रामे गत्वा स स्थविरः स्थितः। रात्रौ द्वारि मेघकुमारः शायितः। प्रविशद्भिर्निर्गच्छद्भिः साधुभिर्मेघकुमारः पद्भ्यां तथा घट्टितो यथा खिन्न एवं दध्यौ—पुरा अमी साधवो मयि सादरा अभूवन्, अधुना तु लेष्टुवन्मां संघट्टयन्ति। पूर्वं मे क्व सुखावासः?। दुःखावासो मयाऽयं कथं सहिष्यते?। प्रभाते प्रभुमापृच्छ्य गृहवासं पुनर्ग्रहीष्यामि। ततो रवावुदिते स स्थविरो मेघकुमारयुतः प्रभुं नन्तुं ययौ। प्रभुणा मेघकुमारमनोभावं ज्ञात्वोक्तम्—को चक्कवट्टिरिद्धिं, चइउं दासत्तणं समभिलसइ। को व रयणाइ मुत्तुं, परिगिण्हइ उवलखंडाइं॥ १॥ णेरइआणवि दुक्खं, झिज्झइ कालेण किं पुण नराणं!। ता न चिरं तुह होहि, दुक्खमिणं मा समुव्वियसु॥ २॥ जीयं जलबिन्दुसमं, संपत्तीओ तरङ्गलोलाओ। सुविणयसमं च पिम्मं, जं जाणसु तं करिज्जासु॥ ३॥ वरमग्गिंमि पवेसो, वरं विसुद्धेण कम्मुणा मरणं। मा गहियव्वयभंगो, मा जीअं खलिअसी-

त्तस ॥ ४ ॥ सूईहिं अग्गिवन्नाहिं, भिज्जमाणस्स जंतुणो । जारिसं जायए दुक्खं, गब्भे अट्ठगुणं तओ ॥ ५ ॥

वत्स मेघ ! रात्रौ त्वमतीव साधुभिः पीडितोऽसि । परमात्मीयौ पूर्वभवौ शृणु । पश्चाद्यथा रोचते तुभ्यं तथा कुरु । अतस्तृतीयभवे वैताढ्यपर्वतभुवि षड्रदः सहस्रहस्तिनीपरिवृतो हस्ती सुमेरुप्रभाभिधः सितवर्णः त्वमभूः। दवाद्भीतोऽन्यदा करिणीर्विहाय तृषाक्रान्तो भ्रमन्नितस्ततः सरो दृष्ट्वा पयः पातुं प्रविष्टः तदाऽप्राप्तनीरः पङ्के मग्नः । प्रत्यर्थिदन्तिभिरतीव कदर्थितस्तथा यथा वेदनया सप्तमदिने मृत्वा विंशत्युत्तरशतमायुः पालयित्वा विन्ध्यभूमावुत्पन्नो हस्ती । तत्रापि चतुर्दन्तो रक्तो दन्ती मेरुप्रभाभिधः सप्तशतहस्तिनीपरिवारपरिवृतोऽभूस्त्वम्। दवं वीक्ष्यान्यदा प्राप्तजातिस्मृतिः पूर्वभवं स्मृत्वा वर्षात्यये वल्लीवृक्षतृणादिपुञ्जमुन्मूल्य च सर्वं दूरे क्षिप्त्वा स्वपरिवारपरिवृतो योजनमात्रं स्थण्डिलमकार्षीः । अन्येद्युर्दवं जाज्वल्यमानं दृष्ट्वा भीतः स्वं पौरुषं विमुच्य करिण्यादिपरिवारं च स्वकृते स्थण्डिलेऽविशस्त्वम् । तत्र स्थण्डिलं बहुभिः श्वापदैर्निश्छिद्रं पूर्णम् । एकदा त्वया कण्डूयनेच्छया एकः पाद उर्द्ध्वं कृतः । कण्डूयित्वा पुनः पादं मुञ्चन् पदस्थाने शशकं स्थितं दृष्ट्वा कृपया पादस्तथैव रक्षितः। दिनद्वयान्ते दवानले उपशमिते शशेऽन्यत्र गते यावत्त्वया पादो मुक्तः तावद्गिरिकूटवत् पतितः ।

जीवदयाध्यानान्मृतो हस्ती। स त्वं मेघकुमारनामा भूपपुत्रोऽभूः। तदा त्वया दया कृता। इदानीं किं ध्यायसि ?। ततः प्राप्तजातिस्मृतिर्मेघकुमारः प्रभुं क्षमयित्वा स्वं निन्दन् प्राह—भगवन् ! मया जगद्वन्द्यानां साधूनामुपरि द्वेषश्चिन्तितः। धिगस्तु मम, अतः परं नेत्रे मुक्त्वा शरीरचिन्ता न कार्या मया। एवं स्थिरीकृतो मेघकुमारश्चिरं दीक्षां पालयित्वा विजये त्रिदशोऽजनि। ततश्च्युत्वा महाविदेहे मुक्तिं गमिष्यति। इति श्रीमेघकुमारकथा समाप्ता॥४९॥

**मातापित्रादिषु स्नेहं, कुरुते यो न कर्हिचित्। स एव लभते स्कन्दकुमार इव ताविषम् ॥ १ ॥**

तथाहि—श्रावस्त्यां पुरि कनककेतनो राजा राज्यं करोति न्यायाध्वना। तस्य मलयसुन्दरी पत्नी। स्कन्दकनामा पुत्रोऽभूत्। पुत्री सुनन्दाह्वाऽभूत्। वर्द्धमाना पुत्री पित्रा सा काञ्चीपुरि पुरुषसिंहाय भूभुजे ददे। सौन्दर्यौदार्यविनयादिगुणेन लोकान् रञ्जयन् राज्ञोऽतीव वल्लभोऽभूत् स्कन्दकः। अन्यदा पुण्योद्याने वने श्रीविजयसेनस्य सूरेः समवसृतस्य पार्श्वे स्कन्दको धर्म्मं श्रोतुमगात्। अत्र धर्मोपदेशः। धर्मं श्रुत्वा सवैराग्यः स्पृहयालुः शिवश्रियमङ्गीकर्तुकामः स्कन्दककुमारः पितरं मातरमापृच्छ्य संयमश्रियमङ्गीचक्रे। स्नेहेन व्रतादनु स्कन्दककुमारस्य मस्तकस्योपरि सितातपत्रं पिता धारयति। स्कन्दककुमारेण निषिद्धेऽपि पितरि पिताऽवग्—

यदि मम छत्रं त्वं स्वमस्तकस्योपरि धारयितुं न ददासि तदाऽहं यावज्जीवमन्नं त्यक्ष्यामि । सदा राजा यत्र यत्र कुमारो गच्छति तत्र तत्र पुत्रस्य शीर्षस्योपरि छत्रं धारयति । एवंविधे पित्रा छत्रे धार्यमाणेऽपि स्कन्दकर्षिर्नीरागः सन् मनागपि न स्वोत्कर्षं मनसि चिन्तयति, क्रमेणाधीतसिद्धान्तः स्वगुरूणामनुज्ञया जिनकल्पविहारं प्रपद्य विजहार धरातले । क्रमाद्विहरणमाणः स्कन्दककुमारर्षिः काञ्चीपुरीं ययौ । रथ्यायां विहरन्नसौ यतिरन्येद्युर्गवाक्षस्थया सुनन्दया सहोदर्या दृष्टः, ध्यातं चेति—बन्धुर्बन्धुसधर्मा वा, सातपत्रः क ईक्ष्यते? । इत्यस्याः संशयानाया, मुदा हृदयमस्फुरत् ॥ १ ॥ दृशा तमेव यतिं पश्यन्ती स्निग्धयाऽश्रुविमिश्रया भर्त्रा दृष्टा । कान्तेन चिन्तितम्—इयं मत्पत्नी अस्मिन् यतौ सरागां दृष्टिं ददाना विद्यते, तेन किमप्यनयोः सम्बन्धोऽस्ति, अथवाऽसौ यतिः पाखंडिवेषधारी भ्रमति । ततो राज्ञा दुरात्मना रात्रौ कायोत्सर्गस्थितो यतिर्बहिरुद्यानेऽघाति । अन्तःपुरस्थया सुनन्दया शकुनिमुखादकस्माद्रक्ताक्ता मुखवस्त्रिका मुनिसम्बन्धिनी पतन्ती दृष्टा । तां मुखवस्त्रिकां रक्ताक्तां भूमौ पतितां वीक्ष्य राज्ञी दध्यौ—स एव मुनिर्मद्भ्रातृतुल्यो मद्भ्राता वा केन हतः, इति स्मरन्ती पुनः पुनस्तारस्वरं राज्ञी रुरोद । दासी प्राह—स्वामिनि! स त्वद्भ्राता, न अपरः कोऽपि यतिर्भविष्यति ।

ततो जनं प्रेष्य स्वपितृपार्श्वे स्वभ्रातुर्जिनकल्पविहारतां जज्ञौ सुनन्दा । ततः स्वभ्रातरं मृतं मत्वा सुनन्दाऽतीव दुःखिता रोदनमेव कुरुते । ततो राज्ञा ज्ञातं स्वशालकस्यर्षेर्हननम् । राजाऽपि दुःखितोऽभूत् । हा मया मुधा यतिघातः कृतः, अविमृश्य कार्यं कृतम् । राज्यग्रेऽभ्येत्य प्राह राजा—मया मुधा भवत्या भ्राता हतः । ममातः परमनेन पापेन कृत्वा श्वभ्रपातो भविष्यति । ततो राजा वैराग्यात् स्वराज्ये पुत्रं स्थापयित्वा संयमं जग्राह । सुनन्दा चिरं भ्रातृदुःखदुःखिता रोदं रोदं बहुनारीजनान् रोदयामास । राज्या स्वभ्रातुः स्वर्गगतिमाकर्ण्य भ्रातुरुत्सवः कृतः । ततोऽद्यापि लोचनं गृह्णति तस्मिन् देशे स्त्रीभिर्भ्रातुर्महोत्सवः क्रियते । वैराग्यात् राज्यपि संयमं जग्राह । राज्ञा यतीभूयान्यदा ज्ञानी पृष्टो—मया स्कन्दकर्षिर्हतो यः स क गतः! । (ज्ञानिनोक्तं—) स्कन्दकर्षिश्चतुर्थे स्वर्गे ययौ । ततश्च्युतो मुक्तिं यास्यति । इति श्रीस्कन्दककुमारकथा ॥ ५० ॥

**केचिन्नयन्ति साधूनां, सद्धर्मवचनैः स्फुटम् । क्षणान्मुक्तिं बहून् जीवान् , स्कन्दकाचार्यवत् किल ॥ १ ॥**

तथाहि—भरतभूमिविभूषणा श्रावस्तीनाम्नी पुरी विख्याताऽस्ति । तत्र जितशत्रुनामा नृपो राज्यं चकार । तस्य धारिणी प्रिया सच्छीलगुणमणिखनी, तयोः क्रमतः स्कन्दकः पुत्रः पुरन्दरयशाः पुत्री बभूवतुः । पुरन्दर-

यशाः प्राप्तयौवना दण्डकारण्यदेशपतेः कुम्भकारस्य पित्रा दत्ता । स्कन्दकपुत्रो धर्मकर्मशास्त्राणि पाठितः । अन्यदा पालको मन्त्री दण्डकभूपतेः श्रावस्त्यामाययौ आत्मकार्यार्थं, जितशत्रुमहीपतेः समीपे प्रतीहारनिवेदितः समाययौ । तदा राजा तत्त्वज्ञो धर्मवार्तां कुर्वन् समं मन्त्रिभिरभूत् । पालकेनोक्तं—धर्म एव नास्ति, पापमेव नास्ति, जगन्मध्ये किमपि नास्ति । स्कन्दककुमारोऽवग्—त्वमसि न वा ? यद्यसि तदा कथमेवं प्रोच्यते ? । इत्यादियुक्तिभिर्निरुत्तरीकृतः स्कन्दकेन पालको हसितोऽशेषसभाजनैश्च । ततः पालको विलक्षः स्वपुरं ययौ । इतः श्रावस्त्यां पुरि सुव्रतः स्वामी विहरन् भुवि समवासार्षीत् । राजा स्कन्दकेन समं धर्मं श्रोतुं ययौ । ततः परमेश्वरः प्राह—"संसारंमि असारे, नत्थि सुहं वाहिवेयणापउरे । जाणंतो इव जीवो, न कुणइ जिणदेसियं धम्मं ॥ १ ॥ मंझब्भरागजलवुब्बुओवमे, जीविए य जलविंदुचंचले । जुव्वणेनइवेगसंनिभे, पावजीव ! किमयं न बुज्झसि ? ॥२॥" श्रुत्वेति भगवद्वाणीं स्कन्दको राजपुत्रैः पञ्चशतमित्रैर्व्रतं समाददे । ततो जिनेश्वरोऽन्यत्र विजहार । क्रमात् स्कन्दकयतिर्गणधरपदं प्राप । "वूढो गणहरसद्दो, गोअममाईहिं धीरपुरुसेहिं । जो तं ठवइ अपत्ते, जाणंतो सो महापावो ॥ १ ॥" ततः स्कन्दकसूरिस्तैर्यतिभिः समं देदीप्यमानसूर्यश्चन्द्रस्ताराभिरिव विजहार । अन्येद्युः

पुरन्दरयशःस्वसुर्वंदापनार्थं चिचलिषुं स्कन्दकाचार्यं प्रति पृष्टः श्रीसुव्रतस्वामी जगौ—वत्स ! तव प्राणान्तकारी उपसर्गो भविष्यति सपरिवारस्य । त्वां विना सर्वे शिष्या आराधका भविष्यन्ति । स्कन्दकोऽवग्—भगवन् ! यद्यमी साधवः सर्वे आराधका भवन्ति तदा किं न वयं भवति ?। श्रुत्वैतत् (ततः) स्कन्दकाचार्यः तस्मिन् पुरे ययौ उद्यानवनेऽवततार च, पालकस्तु तं स्कन्दकमागतं वीक्ष्य ईर्ष्यालुस्तं सपरिवारं हन्तुमनाः प्रच्छन्नं तस्मिन्नुद्यानवने आयुधानि भूम्यन्तः स्थापयामास । इतो राजा सपरिवारो गुरुं नन्तुं समागात् । धर्मदेशना गुरुभिः कृता । धर्ममङ्गीकृत्य राजा पुरमध्ये जगाम । इतोऽन्येद्युः प्रच्छन्नं पालको भूपोपान्तेऽभ्येत्यावग्—मया किमप्यदृश्यमकथ्यं श्रुतं यद्वक्तुमपि न शक्यते । राज्ञोक्तं—किमशक्यमिदं ?, पालकोऽवग्—अनेन स्कन्दकेन समं साधवः समायाताः सन्ति ये ते सर्वे योद्धारः सन्ति, अयं तु महायोद्धा । त्वां हन्तुमनेनाचार्येण शस्त्राणि भूरिशो भूमौ क्षिप्तानि सन्ति । साधुवेषेण दम्भो मण्डितोऽस्ति । विश्वासो न कर्तव्यः । यत्ते द्रष्टुमिच्छाऽस्ति तदा अमुकोद्यानभूमिर्विलोकनीया । ततो राजा छन्नं शस्त्राणि भूम्यन्तः स्थितानि वीक्ष्य रुष्टोऽवक्—साधु ज्ञातं त्वया, यथा रोचते तव चित्ते तथा कुरु । पालकस्तान् यतीन् दण्डकारण्यमध्ये नीत्वा छन्नं महाघाणकान्ते प्रक्षिप्यावग्—

यदहं त्वया सभायां निराकृतस्तत्फलं विलोकयाधुना। तत एकः क्षुल्लकः घाणके क्षेसुमानीतस्तदाऽऽचार्येण पर्यन्ताराधना तथा कारिता यथा पील्यमानस्य तस्य यतेः केवलज्ञानमुत्पन्नम्, एवं चतुःशतेषु नवनवत्यधिकेषु यतिषु पील्यमानेषु प्राप्तकेवलज्ञानेषु मुक्तिं गतेषु स्कन्दकाचार्योऽवक्—प्रथमं मां घाणके प्रक्षिप पश्चादयं क्षुल्लकः क्षेप्यः। यतो ममास्मिन् महामोहोऽस्ति। ततो हठात्तेन पालकेन स एव यतिः घाणके प्रक्षिप्तः। आचार्येण तथा निर्यामितो यथा मुक्तिं ययौ क्षणात्। ततश्चाचार्यः समुत्पन्नकोपो घाणके क्षिप्यमान एवंविधं निदानमकरोत्—अहं राज्ञोऽस्य सर्वप्रकारेण वधकरो भूयासम्। ततस्तेन हतो मृत्वा च स्कन्दकाचार्यो वह्निकुमारेषूत्पन्नः। तदा स्कन्दाकाचार्यरजोहरणं शकुनिका नीत्वाऽऽकाशे चचाल। अकस्मात् तस्या आस्यात् रजोहरणं पुरन्दरयशसः सौधाग्रे पपात। पुरन्दरयशास्तु स्वभ्रातृरजोहरणं रुधिराकीर्णं वीक्ष्य हृदयं ताडयन्ती भृशं रोदयन्ती परान् जनानपि पतिं प्रत्यवग्—हा पते! किं कृतं? रजोहरणं मद्बन्धोर्विद्यते। केनापि पापिना मे बन्धुर्हतो भावी। तव संकेतं विना कोऽपि तं हन्तुं न शक्नोति। एवं रुदन्तीं पुरन्दरयशसं वीक्ष्यान्येऽपि लोका रुरुदुः। पुरन्दरयशा आत्मानं निहन्तुं पुनः पुनः स्वं शिरो भूमौ स्फोटयामास। अत्रान्तरे स्कन्दकाग्निकुमारदेवोऽवधिना स्वशिष्यान्

मुक्तिगतान् वीक्ष्य पालककृतमुपसर्गं मत्वा स्वां भगिनीमन्यत्र निनाय। ततस्तं देशं सर्वं पुरं च पालकदण्डकभूपतियुतं विकुर्व्य संवर्तकमारुतं संजहार अग्निकुमारस्तत्पुरं तद्देशयुतं सर्वमग्निसाच्चकार। ततः प्रभृति तस्य देशस्य दण्डकारण्यमिति नामाभूत्। स्वां भगिनीं पुरन्दरयशसं श्रीमुनिसुव्रतपादान्ते निनाय। जिनेश्वरेणोक्तं—भो पुरन्दरयशः! शोको न क्रियते, आत्मनः कोऽपि नास्ति। वैराग्यकथा कथिता। ततः सा पुरन्दरयशा व्रतं जग्राह। तपस्तप्त्वा स्वर्गभागभूत् मुक्तिं यास्यति च। स्कन्दकाग्निकुमारस्तु जिनवचो निशम्य शान्तमना बभूव। इति स्कन्दसूरिकथा समाप्ता ॥ ५१ ॥

**नीचवंशोद्भवो मर्त्यः, कुर्वाणो धर्ममार्हतम्। लभते शिवसौख्यानि, हरिकेशबलो यथा ॥ १ ॥**

तथाहि—मथुरायां शङ्खभूपो राज्यं त्यक्त्वा निर्विण्णः कामभोगेभ्यो व्रतं जग्राह। ततः क्रमाद्गीतार्थः सन् गजपुरे प्राप्तः। तत्र भिक्षार्थं गोचरचर्यायै निर्गतो मार्गमजानन् गवाक्षोपरिस्थं सोमदेवपुरोहितं पप्रच्छ—केन मार्गेण गम्यते?। दुष्टेन पुरोधसा कौतुकादग्निपथो दर्शितः। साधुः सरलस्वभावस्तेनैव मार्गेण चचाल। तपःप्रभावाच्छीतीभूतेन स मुनीश्वरो ययौ। यतः—"अथेर्यासमिते मार्गे, तपोमहिमतो हिमम्। अतिक्रम्य मुनौ याते,

सोमदेवो व्यचिन्तयत् ॥ १ ॥" प्रतिकूलमार्गे गच्छन्तं साधुं दृष्ट्वा सोमदेवो दध्यौ—असौ साधुः सरलाशयः शुद्धोऽस्ति, मां धिक् क्रूरं जातिमदकारकम् । अमी साधवः सत्या ब्राह्मणाः । अयं साधुर्दृश्यो नमस्यः स्तुत्यो वरिवस्य इति ध्यात्वा तस्य संनिधौ धर्मोपदेशमाकर्ण्य सोमदेवो व्रतं जग्राह । ग्रहणासेवनारूपा—शिक्षाद्वितय-पारगः । संयमं पालयामास, मनाग् जातिमदोन्मनाः ॥ १ ॥ सम्यगाराधनापूर्वं, भावनापावनाशयः । काले मृत्वाऽभवद्देवो, देवलोके महाद्युतिः ॥ २ ॥ क्रमात् स्वर्गाच्च्युत्वा नीचगोत्रकर्मोदयात् गङ्गातटे ग्रन्थिभिल्लस्य बलकोट्टापरनाम्नस्य हरिकेशबलाह्वः पुत्रोऽभूत् । बलकोट्टः पिता गौरी नाम्नी माता च हृष्टौ । हरिकेशः कलि-कृत्सर्वजनोद्वेगकारी बभूव । स चान्यदा बन्धुभिः समं क्रीडन् कलहपरो वृद्धैर्दूरीकृतः दूरे स्थितः, एका चाकल-टिका निर्गता, सा निर्विषेयमित्युक्त्वा मुक्ता लोकैः, कृष्णसर्पस्तु हतस्तं व्यतिकरं ज्ञात्वा दध्यौ हरि-केशः—नियगुणदोसेहिंतो, संपइ वसणाणिहुंति पुरिसाणं । तो उज्झिऊण दोसे, इण्हिंपि गुणे पगासेमि ॥ १ ॥ पराभूतिर्यथादोषैरसतां निर्विशेषणा । गुणैरेवं पराभूतिर्विशिष्टा सुकृतात्मनाम् ॥ २ ॥ वानेयं पुष्पमादेयं, मलत्याजोऽङ्गजोऽपि यत् । गुणाःसम्पत्तये तस्माद्दोषा एव विपत्तये ॥ ३ ॥ भावयन्निति साधुभ्यो धर्मं श्रुत्वा

हरिकेशबलो दीक्षां जग्राह । स तपस्तपन् कृशतनुः साधुक्रियातत्परो हरिकेशबलो वाराणसीं ययौ । तत्र तिन्दुकोद्याने स तिष्ठन्नुग्रं तपः करोति स्म । तपसा कर्षितं तं निर्ग्रन्थं तिन्दुकयक्षः सेवते दिवानिशम् । अन्यदा मित्रेण यक्षेणाभ्येत्य प्रोक्तं–किमधुना मित्र ! न दृश्यसे अस्य मुनेः सेवा क्रियते स्म मया । ममारामे सन्त्येते तपोधनाः । ततस्तेनेत्युक्ते निश्चिकीर्यक्षेण सह सख्या ग्रन्थितिन्दुकयक्षस्तत्रागात् । विकथासंसक्तांस्ता-पसान् दृष्ट्वा द्वावपि तौ भक्तावभूतां हरिकेशबले मुनौ । अन्यदा तत्र वने कौशलराज्ञो वाराणसीशितुः पुत्री भद्राह्वा क्रीडां कर्तुमगात् । यक्षायतने यक्षमर्चितुं च तं कुरूपं कुत्सितवस्त्रपरिधानं मुनिं वीक्ष्य राजपुत्री भद्रा निष्ठीवननक्रमोटननेत्रकूणितादिकुर्वती यक्षायतनाद्बहिर्जुगुप्सामिति चकार, मलमूत्रपर्वतोऽयमदर्शनीयोऽयम् । यक्षेण कुपितेन महर्षिकुत्सयाधिष्ठिता भद्रा वैकल्यादसमंजसं ब्रूते । ततस्तां ग्रथिलीभूतां राजा स्वगृहे नीत्वा वैद्यैर्मंत्रतन्त्रादिभिश्चिकित्सांकारयामास । या या मन्त्रादिकाः क्रियाः कार्यन्ते तास्ता निष्फला अभूवनूषरक्षेत्रारोपितबीजानीव । वैद्या निर्विद्यास्त्राश्च, समन्त्रा मन्त्रिकास्तथा । यदाऽभूवंस्तदा पात्रेऽवतीर्योवाच गुह्यकः ॥ १ ॥ महात्माऽयं तपोराशिर्ययाऽतिमत्तचित्तया । स साधुर्गर्हितोऽत्यन्तं, साऽधुना मुच्यते कथम् ॥ २ ॥ यदीयमेनमेव यतिं

परिणयति तदाऽहं मुञ्चाम्येनां, नो चेज्जीवन्तीं न मुञ्चामि। ततो राज्ञा विचारितम्—यद्यनेनापि परिणीता जीवती तदा वरम्। ततो राज्ञा वने गत्वा तस्मै मलाविलशरीराय दत्ता पुत्री। राजा पश्चाद्गतः। रात्रौ विविधैः प्रकारैस्ता विडम्ब्य यक्षेणोक्तं—गच्छ स्वेच्छं, यत्त्वया मुनिरवहीलितस्तत्फलं मया प्रापिता त्वम्, अतः परं यदि मुनेरवहीलनां कुरुषे तदा मृतिं गमिष्यसि। ऋषिपार्श्वे तां कन्यां पादौ घट्टयन्तीं स्वशिरसा स्वं निन्दन्तीं वीक्ष्य यक्षविमुक्तोऽसमञ्जसं मत्वाऽवग्—भो कन्ये! अत्र किमागताऽसि मत्पार्श्वे?, अहं तु यतिः, मया सर्वं स्त्रीसङ्गादि तृणवत् त्यक्तं, वयं तु सिद्धिवधूसम्बन्धकाङ्क्षिणः; न भवत्तुल्यां दुर्गन्धाऽमेध्यभस्त्रिकां वाञ्छामः। कन्या जगौ—मया त्वं वरितोऽसि। अहं त्वया बलादङ्गीकृता। अधुना किमुच्यते त्वया कूटं?, त्वं तूत्तमः करुणासागरः। एवं यदि त्वया करिष्यते तदा मम का गतिर्भविष्यति?। यतिर्जगौ—त्वं केनापि वाहिता, अथवा वातूला जाता। स्त्रिया सह भोगः पश्चात्तिष्ठतु, वार्तामपि स्त्रिया त(त्व)या सहाहं न कुर्वे। यस्या दोषाः सहस्रशो विद्यन्ते। यतः—"आवर्तः संशयानामविनयभवनं पत्तनं साहसानां, दोषाणां संनिधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम्॥ अग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं, स्त्रीयन्त्रं केन लोके विषममृतमयं धर्मनाशाय सृष्टम्?॥ १॥

अनृतं साहसं माया, मूर्खत्वमतिलोभता। निःस्नेहो निर्दयत्वं च, स्त्रीणां दोषाः स्वभावजाः ॥ २ ॥ एवंविधां स्त्रियं कोऽङ्गीकुरुते ?। ततः सा विलक्षा मन्दाक्षी प्राप्ता पितृमन्दिरे सर्वं वृत्तान्तं पितुः पुरः प्राह। ततो राज्ञा सर्वसामन्तमन्त्रिपुरोहितादीनां पुरः प्रोक्तं–इयं पुत्री साधुसेवापरेण केनापि यक्षेणैवं विडम्बिता मायया। स साधुस्त्वेनां मनसाऽपि नेच्छति, तेन कस्मै दास्यते। सामन्ताद्यैरुक्तम्–इयं तु ऋषिपत्नी जाता, तेन कस्मैचिद्विप्राय दीयते। ततो रुद्रदेवाय द्विजाय दत्ता सा धनदानपुरस्सरं नृपेण। रुद्रदेवोऽपि तया राजकन्यया स्वर्गं करस्थितं मेने। रुद्रदेवारब्धयज्ञेऽन्यदा स साधुः स्त्रीसङ्गार्जितपापापसारणसमर्थगृहीतप्रायश्चित्तो हरिकेशबलो मासक्षपणपारणे शुद्धाहारगवेषणपरः समागात्। यज्ञमध्ये तं प्रविशन्तं वीक्ष्य द्विजाः स्वजातिमदोद्धता जगुः–रे दुराचारिन्! रे पापिन्! रे मुनिचाण्डाल! अस्माकं यज्ञाऽमत्राणि विट्टालयितुं किं प्रविष्टः ?, तदा कलकलव्याकुलः सर्वद्विजलोकोऽभवत्। तदा तत्रागतया ऋषिपत्न्योक्तं–भो द्विजाः! येनाहं पितृदत्तापि निःसङ्गत्वान्मुक्ता, न तु भुक्ता, स साधुर्भविष्यति तदा सर्वान् द्विजान् हनिष्यति। यूयं सर्वेऽपि द्विजास्तस्य पादयोः पतित्वा क्षामयन्तु, नो चेन्मरणं वो भविष्यति। ततस्तेन ऋषिपत्नीवचसा घृतसिक्तवह्निवत् क्रोधेन ज्वलन्तो

जगुः–रे रण्डे ! दूरं याहि । अस्माकं यागोऽनेन विट्टालितः, तेनामुं हनिष्यामो वयं, त्वं दूरे तिष्ठ, नो चेत्त्वां हनिष्याम इत्युक्त्वा द्विजास्तं हन्तुं लग्नाः, तदा यतिदेहमधिष्ठाय यक्षः प्राह–भो मह्यं भिक्षां ददध्वं, नो चेन्मृता एव । भवद्भिर्दुराचारैर्यज्ञच्छलात्स्वोदरपूरणाय जीवा हन्यन्ते । हिंसानृतस्तेयपरिग्रहनिवृत्तधीः ब्रह्मचारिसमस्तस्मान् मम धर्माय दीयताम् । द्विजा जगुः–एतत्सर्वमन्नं जातिमतामुत्तमानां द्विजानामेव कृते उपस्कृतमस्ति, न शूद्राय दातुम् । तेन चात्र वृथान्नगृहणेच्छाऽस्ति–मुनिराह न युष्माकं, हिंसाद्याश्रवसेविनाम् । अब्रह्मचारिणां सूत्रकण्ठानां ब्राह्मणस्थितिः ॥ १ ॥ यतः–अग्नौ हुतं भवेद्भस्म, न भस्मापि द्विजेहुतम् । न्यायेनानेन वः सर्वं, स्याद्भस्मनिहुतं हुतम् ॥ २ ॥ जन्मतो नान्तरं किञ्चित्, ब्राह्मणस्यान्त्यजस्य च । कर्मणा ब्राह्मणत्वं चेत्, जितं तर्हि तपोधनैः ॥ ३ ॥ कर्मभिर्दिवि सम्पत्तिः, कर्मभिर्नरके विपत् । जात्याद्याः कोपयुज्यन्ते ?, सद्गतौ ते हि पङ्गवः ॥ ४ ॥ सत्कर्मनिरतः शूद्रस्त्रैलोकस्यैति पूज्यताम् । असत्कर्मा द्विजन्मापि, निन्द्यानामेति निन्द्यताम् ॥ ५ ॥ मृतेषु तर्पणं श्राद्धं, यन्मूढैरुपकल्प्यते । उच्छिद्य भस्मतां नीते, तत्तरौ सेचनोपमम् ॥ ६ ॥ भस्मीभूतस्य भूतस्य, तृप्तिः श्राद्धाद्यथा भवेत् । कलत्रा(शा)त् पुत्रजन्मापि, तद्वदेव न तस्य किम् ! ॥७॥ तदेवं

सर्वमप्येतत्, द्विजानां तुषखण्डनम् । आकाशचर्वणप्रायमव्रतं चानुगच्छति ॥ ८ ॥ मेध्यमेवेत्थं ब्राह्मण्यं, यज्ञं स्नानं च बालिशाः । धिग् वो मूर्खान् मुधा वेदभारोद्वहनरासभान् ॥ ९ ॥ तन्निशम्याथ साक्रोशमुद्गीर्णलगुडादयः । तं हन्तुं हन्त धावन्तो, गुह्यकेन हता द्विजाः ॥ १० ॥ वमन्तः शोणितं वक्त्रैर्निश्चेष्टाः पतिताः क्षितौ । भट्टाश्चक्रुस्तदाक्रन्दं, कोलाहलपुरस्सरम् ॥ ११ ॥ अथ प्रसादयामासु–र्विलक्षास्ते द्विजातयः । क्षम्यतामपराधोऽयं, साधोऽवहीलनात्मकः ॥ १२ ॥ यतिः प्रोवाच चित्तेन, मनसा वचसाऽपि च । प्रद्वेषो नास्ति मे कश्चित्, किन्तु यक्षेण ते हताः ॥ १३ ॥ परं भवतां यागस्त्याज्य एव, नरकहेतुत्वात् । यतः–"अस्थि वसति रुद्रश्च, मांसे वसति जनार्दनः । शुक्रे वसति ब्रह्मा च, तस्मान्मांसं न भक्षयेत् ॥ १ ॥ तिलसर्षपमात्रं तु, यो मांसं भक्षयेन्नरः । स निवर्तेत नरकं, यावच्चन्द्रदिवाकरौ ॥ २ ॥ व्रतिनो ब्राह्मणा ज्ञेयाः, क्षत्रियाः शस्त्रपाणयः । कृषिकर्मकरा वैश्याः, शूद्राः प्रेषणकारकाः ॥ ३ ॥ त्यक्त्वा कुटुम्बवासन्तु, निर्ममो निष्परिग्रहः । युक्तश्चरति निःसङ्गः, पञ्चब्राह्मणलक्षणैः ॥ ४ ॥ अस्तंगते दिवानाथे, आपो रुधिरमुच्यते । अन्नं मांससमं प्रोक्तं, मार्कण्डेन महर्षिणा ॥ ५ ॥ अधीत्य चतुरो वेदान्, साङ्गोपाङ्गान् सलक्षणान् । शूद्रात् प्रतिग्रहं कृत्वा, खरो

भवति ब्राह्मणः ॥ ६ ॥ खरो द्वादश जन्मानि, षष्टिजन्मानि शूकरः । श्वानः सप्ततिजन्मानि, इत्येवं मनुरब्रवीत् ॥ ७ ॥ मुण्डनाच्छ्रमणो नैव, संस्काराद् ब्राह्मणो न च । मुनिर्नारण्यवासेन, वल्कलेन न तापसः ॥ ८ ॥ ये त्यक्त्वा धनधान्यादिपुत्रपौत्रपरिग्रहम् । चरन्ति पथि निष्पापे, ते प्रोक्ता ब्राह्मणा जनाः ॥ ९ ॥" व्योमस्थयक्षोऽदृश्यः सन् प्राह—भो द्विजा ! यदि स्वात्मनो हितं वाञ्छथ तदा अनेनोक्तं धर्ममार्गं प्रपद्यध्वं यूयं, नो चेत् सर्वान् हनिष्यामि । ततः सर्वे द्विजा उत्थाय तस्यर्षेः पादयोः पतित्वा जल्पन्ति स्म—अद्यप्रभृति वयं तव सेवकाः स्मः । रुद्रदेवप्रभृतिभिर्विप्रैस्तं गुरुं कृत्वा क्षमयित्वा च प्रोक्तम्—को धर्मो मुक्तिदः ? । (मुनिराह—यज्ञः) रुद्रदेवोऽवग्—यज्ञस्वरूपं कथय । ततो मुनिराचष्ट—जीवो वेदी तपोज्योतिर्योगाः स्रुगरणिर्वपुः । कर्माणि समिधो होमः, शान्त्यै संयमसाधनः ॥१॥ हृदः क्षान्त्यादिभिर्धर्मो, ब्रह्मतीर्थमनाविलम् । मलो रागादिकं स्नानं, लेश्याशुद्धिरिवात्मनः ॥ २ ॥ होमेनानेन ये शान्ताः, स्नानेनानेन निर्मलाः । भवन्ति योग्यास्ते सिद्धिवधूसम्बन्धसम्पदः ॥ ३ ॥ ततस्तैर्विप्रैः शुद्धाहारेण स मुनिः प्रतिलम्भितः । ततो यक्षः प्रादुर्भूय जगौ—अयं यतिर्वन्दितः प्रतिलाभितो मुक्तये भवति ! अद्यप्रभृति भवद्भिर्यागः करिष्यते तदा हता एव, यत्युक्तं धर्मं गृह्णीत । ततस्ते जैनं

धर्मं प्रतिपेदिरे, सा ऋषिपत्न्यपि । हरिकेशबलो मुनिर्बहुवर्षाणि तपस्तप्त्वा केवलज्ञानं प्राप्य भव्यजीवान् प्रबोध्य मुक्तिं गतः । इति हरिकेशबलकथा समाप्ता ॥ ५२ ॥

**जो दाणं भत्तीए वियरइ, सो पावइ विउलरिद्धीओ । धणदेवो धणमित्तो, सहोअरा इत्थ दिट्ठंता ॥**

सिंहलद्वीपे सिंहलेश्वरो राजा, सिंहला राज्ञी, सिंहलसिंहः सुतः, वर्द्धमानः क्रमाच्छास्त्रं धर्मकर्मरूपं द्विधा पाठितः ॥ यतः—"जायंमि जीवलोए, दो चेव नरेण सिक्खिअव्वाइं । कम्मेण जेण जीवइ, जेण मुओ सग्गइं जाइ ॥ १ ॥" सोऽन्यदा वसन्तसमये वने क्रीडार्थं जगाम । तावता तत्र वनगजेन मार्यमाणायाः कस्याश्चित् कन्याया हाहारवं शुश्राव । न हु ताय ! रक्खसि तुमं, जणणि ! तुमंपि हु करेसि मा करुणं । कुलदेवयाओं तुम्हवि, इह समए कत्थइ गयाउ ॥ १ ॥ इत्यादि विलापवर्णनं श्रुत्वा सिंहलसिंहकुमारेण चिन्तितम्—किं ताणं जम्मेणवि जणणीए सव्वदुक्खजणगेण । परउवयारगुणो वि हु, न जाण हिअंमि विप्फुरइ ॥ १ ॥ ततः स धावितो, धृष्टो हस्ती—रे रे दुष्टमातङ्ग ! किं कुर्वाणोऽसि स्त्रीघातकपातकं ?, यदि पौरुषं समस्ति तदाऽऽगच्छ त्वम् । वचनानुसारेण धावितः, कुमारो विण्टलिकां कृत्वा सम्मुखं धावितः । कुमारेण विण्टलिका

मुक्ता । हस्ती तस्या उपरि दन्तप्रहारं ददाति । अस्मिन् समये कन्या नष्टा हस्तिपार्श्वात् । विस्तृता कुमारकीर्तिः । एतद्व्यतिकरं श्रुत्वा राजाऽपि हृष्टः । यतः—"गुणाः कुर्वन्ति दूतत्वं, दूरेऽपि वसतां सताम् । केतकीगन्धमाघ्राय, स्वयं गच्छन्ति षट्पदाः ॥ १ ॥" ततः सा कन्या धनवतीनाम्नी कुमारगुणानुरागिणी जज्ञे । तत्पिताऽपि धनश्रेष्ठी कुमारस्य तां ददाति । कृतं पाणिग्रहणम् । इतश्च यदा कुमारः पुरमध्ये क्रीडायै याति तदा पौरनारीवर्गः समग्रः स्वस्वकर्माणि त्यक्त्वा कुमाररूपं निरीक्ष्य हृतहृदयः पृष्ठलग्नो भ्रमति । पौरैर्लोकैः राजा विज्ञप्तः । राज्ञाऽपि कुमारो नगरान्तर्भ्रमन्निषिद्धः । देशान्तरं गन्तुकामो धनवतीं गृहीत्वा रात्रौ पुरान्निर्गत्य मार्गेण गच्छन् समुद्रतटं प्राप्तः । आरूढो यानपात्रं धनवतीयुतः कुमारः । प्रतिकूलवातेन भग्नं यानपात्रम् । धनवती फलकं लब्ध्वा वार्द्धितीरे गच्छन्ती प्राप्ता कुसुमपुरम् । तत्र प्रियमेलकतीर्थे सा दुस्तपं तपस्तपन्ती यावद्भर्ता न मिलिष्यति तावन्मौनव्रतं पालनीयमित्यभिग्रहं जग्राह । इतश्च—कुमारः प्राप्तफलकखण्डकः समुद्रमुत्तीर्य रत्नपुरं प्राप्तः । तत्र रत्नप्रभराज्ञो रत्नसुन्दरीकुक्षिसमुद्भवा रत्नवती कुमारी सर्पेण दष्टा, मान्त्रिकैस्त्यक्ता, कुमारेण पटहस्पर्शनात् पूर्वं सा सज्जीकृता परिणीता च । कुमारो धनवतीवियोगेन भूमौ शेते, ब्रह्मव्रतं च पालयति ।

एकदा तया पृष्टः सपत्नीर्ष्याभयेन समयोचितमुत्तरं ददौ—देवि ! ममैवं प्रतिज्ञा । देसावलोअणत्थं, निग्गच्छं-तस्स मह इय पइन्ना । बंभं भूमीसयणं, जा नियजणए न पिच्छामि ॥ १ ॥ रत्नवत्या प्रोक्तं—नाथ ! त्व धन्योऽसि । यतो भक्तिः पित्रोरुपरि । राज्ञाऽपि कुमारः पृष्टः स्वनृपस्वदेशकुलादि कथयति । ततो राजा रत्नवतीयुतं कुमारं बहुवस्त्रादिभिः सत्कृत्य सिंहलद्वीपं प्रति विससर्ज । सज्जीकृतं यानपात्रम्, आरूढः सप्रियःकुमारः । राज्ञा च रुद्राभिधः स्वमन्त्री संप्रेषणार्थं प्रेषितः । दृष्टा तेन मन्त्रिणाऽन्यदा कन्या । तस्यां लुब्धः । स कुमारो जलधौ पातितः । ततो रत्नवती विलापान् करोति स्म । मन्त्री भणति—भद्रेऽहं सदाऽपि तव दासः, भव मम भार्या । तया चिन्तितं—नूनमेष दुरात्मा मम शीलभ्रंशं करिष्यति । तत् किमप्युत्तरं दत्त्वा शीलं रक्षामीति विचिन्त्य साऽवदत्—भो मंत्रिंस्तीरे गत्वा एतन्मृतकार्यकरणादनु त्वद्वचः करिष्ये । जलधौ गच्छत् प्रतिकूलवातैर्भग्नं प्रवहणं, लब्धफलका रत्नवती कुसुमपुरे प्रियमेलकतीर्थं प्राप्ता । साऽपि तथैव तपस्तपति । मन्त्र्यपि प्राप्तफलकः कुसुमपुराधिपस्य राज्ञो मन्त्री जातः । कुमारोऽपि जलधौ पतन् केनाप्युत्पाट्य तापसाश्रमे मुक्तः । कुलपतिरपि कुमारशरीरे राजलक्षणानि दृष्ट्वा स्वपुत्रीं रूपवतीं ददाति । जातं पाणिग्रहणं । हस्तमोचने दत्ता एका कन्था

प्रतिदिनं टण्कशतदात्री, एका च खट्वा आकाशगामिनी। कुलपतिं नत्वा चटितः सप्रियः कुमारः खट्वायां धनवतीं मनसि कृत्य। चालिता खट्वा। सा आकाशगामिनी आकाशमार्गेण कुसुमपुरोद्याने गता। रूपवत्यास्तृषा लग्ना। कुमारः प्रियां कन्थां खट्वां च मुक्त्वा पानीयार्थं निकटावटे गतः। तत्र कूपे कुमार ! अस्मादन्धकूपात् कर्षय इति मनुष्यभाषया ब्रुवाणः सर्प्पो दृष्टः। स च कुमारेणोत्तरीयं मुक्त्वा कर्षितः। सर्प्पेण च कुमारो दष्टः हस्ते, कुब्जरूपश्च बभूव। कुमारेणोक्तं—भो सर्प ? भव्यः प्रत्युपकारः कृतस्त्वया। सर्प्पः प्राह—भो कुमार! एष एव प्रत्युपकारं करिष्यति। सङ्कटे स्मरणीयोऽहमित्युक्त्वा तिरोदधे सर्प्पः। कुमारः किमिति विस्मितमानसः पानीयं लात्वा भणति—प्रिये पानीयं पिब। सा कुब्जरूपं दृष्ट्वा न मत्पुरुष इति तत्संमुखं विलोकयत्यपि न। तत उत्थाय सर्वत्र गवेषयति स्वं प्रियम्। काप्यदृष्ट्वा प्रियमेलकतीर्थे गता तथैव तपस्तपति। तिस्रोऽपि मीलित-नयना मौनव्रतधारिण्यस्तिष्ठन्ति, विकृतिपरिवर्जितं धार्मिकजनोपनीतमाहारं भुञ्जते। राजाऽपि कुतूहलेन तत्रागच्छति। पटहं वादयति—य एता वादयति तस्य स्वसुतां कुसुमवतीं ददामि। ततः कुब्जरूपधारी कुमारः पटहं स्पृशति। ततः कोरकपत्राणि वेष्टकेनाच्छाद्य तत्रागच्छति। राजसंमुखं वस्त्रमुत्सार्य कोरकपत्राणि वाच-

यति, कथयति । यो द्विजातो भवति स एवैतान्यक्षराणि न पश्यति । अहो भव्यानि । अक्षराणि प्रशंसति । कुब्जको वाचयित्वा व्याख्यानयति । यथा सिंहलद्वीपे सिंहलसिंहो धनवतीयुतो जलधौ प्रवहणे भग्ने पपात । अग्रतः कल्ये कथयिष्यते । पुस्तकं वेष्टयति । धनवती स्वचरित्रं श्रुत्वाऽग्रतः किं जातमिति पप्रच्छ । फलकेन समुद्र-मुत्तीर्य रत्नपुरे रत्नवतीं परिणीय समुद्रे मन्त्रिणा क्षिप्त इत्युक्त्वा पुनरुत्तिष्ठति । ततो रत्नवती पप्रच्छाग्रतः किं जातमिति । अतिनिर्बन्धे पुनः कथयति—केनापि तापसाश्रमे नीतः, तत्र रूपवती परिणीता । कन्थाखट्वायु-तोऽत्रागतः। पानीयार्थं कूपे गतः । सर्पेण दष्टः । इत्युक्त्वोत्तिष्ठति । रूपवती पुनः पप्रच्छ, स न कथयति, पुस्तकं वेष्टयित्वा राज्ञः पार्श्वे कुसुमवतीं याचते । राजापि प्रतिज्ञाबद्धत्वाद्ददाति । हस्तमोचने किंचित् वामनेन याचिते स्वाभिप्रेते द्रव्ये शालकः प्राह—फुत्कुर्वन्तं सर्प्पं लाहि । स आह—सर्प्प एव समागच्छतु । ततः कुतोऽप्यागत्य सर्पेण दष्टः कुमारः, सिंहलसिंहः पतितो भूमौ । ताश्चिन्तयन्ति—यद्येषो मरिष्यति तदा प्रियतमस्य शुद्धिं कः कथयिष्यति ?। ततस्ता हृदयं क्षुरिकया यावद्विदारयन्ति तावता कुमारो दिव्यरूपधारी स्वरूपावस्थः संजातः । नागः प्रत्यक्षीभूय कुमारस्य पूर्वभवं ब्रूते—धनपुरे धनञ्जयश्रेष्ठी धनवती भार्या धनदेवधनदत्तौ सुतौ । ग्रीष्मे

शर्करायुतं दुग्धं मुनीनां धनदेवो विहारयति । सोऽहं मृत्वा देवो जातः । धनदत्तोऽन्यदा इक्षुरसं घृतभृतं घटं मुनिभ्यो दत्ते स, वारत्रयं भावखण्डना, स मृत्वा कुमार! त्वं जातः । दानप्रभावाद्भार्याप्राप्तिः । खण्डनत्रयेण वियोगः । जलधिपतितो मयैवोत्पाट्य तापसाश्रमे त्वं मुक्तः, मयैव त्वं वामनीकृतः । यतस्तव शत्रुर्मन्त्री सोऽत्र वर्तते । ततो मयैव त्वं कुरूपश्चक्रे इत्युक्त्वा देवो जगाम । ततः चतस्रोऽपि धनवत्याद्यास्तं जज्ञुः । कुमारस्य जातिस्मरणं जातं । मन्त्री देशान्निष्कासितः । भार्यायुतो गगनमार्गेण स खट्वामारुह्य सिंहलद्वीपं प्राप्तः । पित्रा राज्यप्रदानं कृतम् । कन्थाप्रभावेण विश्वमदरिद्रमिव व्यधात् । क्रमात् सिंहलसिंहो दीक्षां लात्वा षष्ठदेवलोकं गतः । इति दाने धनदेवधनमित्रकथा समाप्ता ॥ ५३ ॥

**ददानः शुद्धवस्त्राणि, भक्तितो धर्मचारिणाम् । जायते मानवः सच्छ्रीपात्रमुत्तमवृत्तवान् ॥ १ ॥**

तथाहि—वाराणस्यां पुरि श्रीमन्मकरध्वजभूपतेः । राज्ञी लक्ष्मीवती नाम्ना, बभूव गुणशालिनी ॥ १ ॥
तयोरुत्तमचरित्रः पुत्रोऽभूत्, यथार्थनामाऽजनि । शैशवेऽपि दयालुः सत्यवादी न्यायमार्गकुशलः । उत्तमचरित्रो धर्म्मकर्म्मशास्त्रविदुरः। तृणमात्रमपि वस्तु अन्यदीयं न कदापि गृह्णाति स । परस्त्रीविरतः सन्तोषी देवगुरुभक्तः

परोपकारी द्वासप्ततिकलाकुशलोऽत्यद्भुतसौभाग्यश्च । यतः—"बावत्तरिकलाकुसला, पंडियपुरुसा अपंडिया चेव । सव्वकलाणं पवरं, जे धम्मकलं न याणंति ॥ १ ॥" सोऽन्यदोत्तमचरित्रः स्वभाग्यपरीक्षाकृते देशान्तरं प्रति चचाल रजनौ । क्रमेण नानापुरग्रामादि विलोकयन्नुत्तमचरित्रश्चित्रकूटाह्वं शैलं प्राप । तत्र मेदपाटमालवकसपादलक्षमरुमण्डलमहाराष्ट्रकर्णाटप्रभृतिजनपदप्रजाः पालयन् महासेनभूपः परमार्हतो राज्यं करोति । स राजा पाशमिव गेहवासं पश्यन् निष्पुत्रकतया राज्यधुरन्धरं कमपि नरं विलोकयन् वैराग्यवासितोऽभूत् । स चान्यदा वाह्याल्यां परिजनानुवृत्त्या जगाम । सर्वाश्वलक्षणलक्षिततनुं कृष्णच्छविमेकं किशोरकं वाहयामास सः । परं तस्याश्वस्य त्वरितगतिर्न । ततो भूभुजा मन्त्रिणः पृष्टाः । केचिदपि गतिमान्द्यकारणं न विदन्ति । तदा तत्रागतस्तं तुरङ्गमं दृष्ट्वोमचत्तरित्रः प्राह—अनेनाश्वेन महिषीदुग्धं पीतं तेनास्य वेगो न वर्योऽस्ति । तस्य दुग्धपानं वातोत्पादक । तदाकर्ण्य भूभुजोक्तं—वत्स ! कथमिदं वेत्सि ? । उत्तमचरित्रोऽवग्—अश्वपरीक्षां जानाम्यहमशेषाम्, भूपो जगाद—वत्स ! यत्त्वयोक्तं तत्सत्यं, परं किं क्रियते ?। किशोरस्यास्य माता मृता, ततोऽयं महिषीदुग्धं पाय्यते । उत्तमोऽवक्—चलनेनेदं मया ज्ञायते । यतः—"आचारः कुलमाख्याति, देशमाख्याति भाषि-

तम् । सम्भ्रमः स्नेहमाख्याति, वपुराख्याति भोजनम् ॥ १ ॥" हे वत्स ! कस्त्वं ?, तेनोक्तं, 'न यदा तदा' राज्ञा ध्यातं–राजपुत्रोऽयं नूनं विद्यते । ततो भूपो जगाद–अनुगृहाण मां, गृहाण राज्यमेतत् । अहं संसारादसाराद्विरक्तोऽस्मि । पारमेश्वरीं दीक्षां ग्रहीष्यामि । कुमारोऽवक्–तात ! यत्त्वयोक्तं तद्वरं, परमहं केनापि कार्यविशेषेणाग्रतो गच्छन्नस्मि, वलमानः पुनः पश्चात्त्वदुक्तं करिष्यामि । एवं भूपं पर्यवसाय्य रात्रावग्रतः प्रतस्थे उत्तमचरित्रः, क्रमाद् भ्रमन् भृगुकच्छं प्राप । स तस्य पुरस्य शोभां विलोकते । श्रीमुनिसुव्रतस्वामिनं भूरिभक्त्या ननाम, स्तौति स्मेति–मूर्तिस्ते जगतां महार्तिशमिनी मूर्तिर्जनानन्दनी, मूर्तिर्वाञ्छितदानकल्पलतिका मूर्तिः सुधास्यन्दिनी । संसाराम्बुनिधिं तरीतुमनसां मूर्तिर्दृढा नौरियं, मूर्तिर्नेत्रपथं गता जिनपतेः किं किं न कर्तुं क्षमा ? ॥१॥ त्वमेव विश्वबन्धोऽन्धुरसि त्वं कृपाकारकः । इतश्च कुबेरदत्तः सांयात्रिको भूरियानपात्रयुतः अष्टादशयोजनशतदूरस्थं मुग्धद्वीपं प्रति गन्तुकामश्चिचलिपुरभूत् । कुमारोऽपि कौतुकी कुबेरदत्तेन समं यानपात्रमारूढः। ततः कियत्सु दिवसेषु गतेषु जलमध्ये यानपात्रे चलत्सु यानेषु जलं त्रुटितम् । ततः कचिच्छून्यद्वीपे जलार्थं यानं धृतम् । ततः सर्वे लोकास्त्वरितमुत्तीर्य जलसङ्ग्रहमकार्षुः । इतश्च भ्रमरकेतुनामा राक्षसो महामांसाशी पट्सह-

स्वराक्षसयुतस्तत्रागात्। धृताः सर्वेऽपि लोकास्तेन, केऽपि कक्षायां क्षिप्ताः केऽपि हस्ते गृहीताः केऽपि पद्भ्यामधः कृताः। केऽपि नष्टाः केऽपि यानमारुह्य स्थिताः। इतः कुमारः परोपकारी सत्त्ववान् वीराधिवीरस्तान् लोकान् व्याकुलान् तथाविधान् वीक्ष्य तेन राक्षसेन समं मुष्टामुष्टि खड्गाखड्गि शराशरि युद्ध्वा सर्वान् पोतलोकान् मोचयामास। सर्वेऽपि ते लोकाः पोतमारूढाः। कुमारस्त्वेकाकी तैः सह युद्धं कुर्वाणो भूयसीं भुवमतिक्रान्तः। जितश्च कुमारेण भ्रमरकेतुः, पलाय्य गतः। ततः स्वस्थः कुमारो यावता सिन्धुतटमायाति तावता सर्वेऽपि पोताश्चलिताः। कुमारो दध्यौ—अहो सांयात्रिकलोकानामकृतज्ञता महती। यतो राक्षसपार्श्वान्मोचिता अपि मया मामेकाकिनं मुक्त्वा गता। अहो संसारस्य स्वरूपमीदृगेव विद्यते—कोऽपि कस्यापि नास्ति। यतः—"एगोऽहं नत्थि मे कोई, नाहमन्नस्स कस्सई। एवमदीणमनसो, अप्पाणमणुसासए ॥ १ ॥" को दोषो नृणां तेषां भयाकुलानां?, ममैव जन्मान्तरकृतं किमपि दुष्कर्म समायातम्। ततः कस्य दोषो दीयते ?। यतः—"पत्थरेणाहओ कीवो, पत्थरं डक्कुमिच्छई। मिगारी उ सरं पप्प, सरुप्पत्तिं विमग्गई ॥ १ ॥" ततश्च विमृश्य भग्नपोतवणिक्चिह्नं ध्वजं समुद्रतटे बद्ध्वा वनफलादिभिः प्राणयात्रां कुर्वाणः कुमारस्तस्थौ। अन्यदा तद्द्वीपाधिष्ठायिन्या देव्या चारुरूपवान् कुमारो

दृष्टः । ततः सञ्जातरागया तया नवनवहावभावादिविलासैः (प्र)क्षोभितः कुमारो, न क्षुब्धः मेरुरिव कल्पान्तवातैः। ततो हृष्टया तया देव्या सुवर्णरत्नकोटयो द्वादश पृथक् पृथक् तस्योपान्ते मुक्त्वा देवी तस्य स्तुतिं कृत्वा स्वस्थानं गता । इतश्च समुद्रदत्तः पोतवणिग् ५०० यानपात्राणि गृहीत्वाऽपरद्वीपं व्रजन् ध्वजचिह्नं दृष्ट्वा कुमारोपान्ते समागमत् । कुमारं १२ सुवर्णकोटि १२ रत्नकोटियुतं दृष्ट्वा पोतवणिक् निजे यानपात्रे तं कुमारमारोहयत् । अथ वार्द्धिमध्ये प्राप्तेषु यानपात्रेषु जलस्वल्पतया जनानां गलतालुशोषे जायमाने हा धिग् जलचरेभ्योऽपि हीनसत्त्वानस्मान् । हा जलमध्यगता अपि वयं पिपासया म्रियामहे । जलचरा हि जलाभावे म्रियन्ते । इति दीनं विलपत्सु लोकेषु निर्यामकः शास्त्रं विलोक्य प्राह—भो वेलाम्भसि वलमानेऽत्र जलकान्तमयो जलैरस्पृष्टः पर्वत एकोऽत्र प्रकटीभविष्यति । तत्र चैकः सुस्वादुजलः कूपोऽस्त्यगाध इति निर्यामकपरम्परया मया श्रुतम् । तदत्र यानपात्राणि स्थापयित्वा पानीयं गृह्यते । परमिदं भ्रमरकेतुराक्षसस्थानं, स च महामांसाशी पद्मसहस्रकोणपयुतो विद्यते । तटोत्तीर्णा जनास्त्वया भक्षणीया नच यानपात्रस्था इति समुद्रदेवेन कृपया शपथं कारितो, निजेच्छया स राक्षसोऽत्र तिष्ठति स्म । एवं निर्यामकवचनश्रवणानन्तरं वलिते वेलापयसि तत्रा-

ब्धिमध्ये जलकान्ताश्ममयपर्वतः प्रकटीभूतो, दृष्टश्च तन्मध्ये महाकूपो लोकैः। राक्षसदंष्ट्रादर्शनान्मरणभीता पिपासया पीडिता अपि जना जलग्रहणार्थं नोत्तरन्ति पोतेभ्यः। इतः करुणापरीतचित्तः कुमार आकर्णाकृष्टकार्मुको बद्धतूणीरः प्राह—उत्तरत उत्तरत भो भो जना! जलार्थं, मा भैष्ट मा भैष्ट। मयि रक्षके सति राक्षसा वः किं करिष्यन्ति, वासवादपि भवद्भिर्भयं नानेयम्। एवमुक्त्वा पोतादुत्तीर्य कुमारो राक्षसपार्श्वे तस्थौ। ततः सञ्जातनिर्भया लोकाः पोतेभ्य उत्तीर्य जलभाजनानि गृहीत्वा कूपकण्ठे गताः। रज्जुबद्धानि भाजनानि कूपमध्ये पानीयार्थं लोकाश्चिक्षिपुः। ततस्तदा जलं चुलुकमपि न निस्ससार। ततो ह्येकस्यापि नरस्य तृषा नोपशान्ता। अहो एते जनाः सत्यपि जले मरिष्यन्ति, यज्जलं न निस्सरति तदग्रे किमपि कारणमस्ति। एवं चिन्तयन्तोऽपि लोका राक्षसभयात् कोऽपि कूपमध्ये सम्यग् न विलोकते। ततो यानेशोऽवग्—अत्र कोऽप्यस्ति यः कश्चिज्जलं मुत्कलं करोति? तदा कोऽपि नोत्सहते, प्रविशत्यपि न, ततोऽतीव चिन्तापरपोतेशेन वार्यमाणः कुमारोऽन्यै रज्ज्वालम्बनेन सात्त्विकचक्रवर्ती लोककृपया कूपमध्यं प्राविशत्। कुमारः जलप्राचुर्येऽपि तदुपरि स्थितस्वर्णजालिकाछिद्रैः स्तोकमेव जलं ददर्श। कुमारो दध्यौ च—अहो कस्यापि महद्विज्ञानं यदीदृक्षाः स्वर्णकम्बाः कुत्रापि न दृश्यन्ते। इति ध्यात्वा

कुमारो निर्भयस्तास्ताः स्वर्णकम्बाजालिका इतस्ततश्चकार । ततो हृष्टा लोकाः कुमारस्तुतिं कुर्वाणा जलं कर्षन्ति स्म । लोकैः सर्वाणि नन्दीभाजनानि जलेन भृतानि। इतः कुमारः कूपभित्तौ द्वारं मणिमयसोपानयुतं वीक्ष्य दध्यौ—मया स्वभाग्यपरीक्षायै स्वं राज्यं त्यक्तं, तृणमिव चित्रकूटप्रभुणा दीयमानं राज्यमपि नादत्तम् । अब्धिमध्यस्थद्वीपे स्वजीवितमप्यनादृत्य भ्रमरकेतुराक्षसाल्लोका मोचिताः । साम्प्रतमपि कूपप्रवेशेन जलप्रकटीकरणेन लोकानां जलेन तृषोपशमनादुपकारः कृतः । ततो कौतुकार्थमग्रतो गम्यते । अथवा कस्याप्युपकारः क्रियते । ततः कुमारः सोपानमणिमयं प्रासादमग्रे गच्छन् ददर्श । प्रथमावनौ वृद्धैका स्त्री दृष्टा तेन, सा वृद्धा प्राह—भो हीनपुण्य पुरुष ! किमर्थं कस्य बलेनात्राऽऽगास्त्वं ?, किं न वेत्सि भ्रमरकेतुं राक्षसम् ? । कुमारो जगाद—जानाम्यहं भ्रमरकेतुं, परं गरुडकेतोरपि जेताऽहं को भ्रमरकेतुर्ममाग्रेऽम्ब !, सात्त्विकोऽहं निजौजसा एवात्रागतोऽस्मि कौतुकविलोकनार्थम् । वद वृद्धे ! कस्येदं स्थानं ? केनायं कूपः कारितः ? कस्यायं प्रासादः ? का च त्वम् ? एवं तस्य सावष्टम्भं वचो निशम्य वृद्धाऽवदत्—सात्त्विकशिरोमणे ! शृणु । अत्रासन्ने राक्षसद्वीपे लङ्कायां भ्रमरकेतू राक्षसस्वामी अस्ति । तस्य मदालसा नाम्नी कन्या सर्वकलाविज्ञा सर्वस्त्रीलक्षणालङ्कृतशरीरा देवकुमारीवाऽऽस्ते । अन्यदा भ्रमरकेतुना

नैमित्तिकः पृष्टः—कन्याया अस्याः को वरो भावी ?। तेन प्रोचे—भूचरः क्षत्रियकुमारः, स च हिमवन्मेखलावधि कौबेरं लङ्काप्रभृतिद्वीपावधि दक्षिणां च शासिता महाराजाधिराजो भावी विद्याधरसेव्यः। तच्छ्रुत्वा खिन्नो भ्रमरकेतुर्नैमित्तिकवचोऽसत्यं चिकीरभूत्। हा[खेदे]मदीयां पुत्रीं भूचरः कथं परिणेष्यति ? इति ध्यात्वा समुद्रान्तः पर्वते कदाचिददृश्ये कूपमध्ये च तत्र द्वारं कृत्वा महान्तं प्रासादं निर्माय कन्यां मां चात्र मुमोच। मोहेन च तस्याः पञ्च दिव्यानि रत्नानि ददौ विषमदशायामुपकाराय। अहं च तस्या दासी। कूपमध्ये भ्रमरकेतु-प्रेषितं धनधान्याद्यागच्छति। जलमध्ये पतितानि वस्तूनि विरसानि स्युर्विनश्यन्तु मा इति हेतोः कूपमध्ये स्वर्णजालिका कारिता तेन। पुनरेकदा मासात् पूर्वं भ्रमरकेतुनाऽपरः परः कश्चिन्नैमित्तिकः पृष्टः—कन्यायाः को वरो भावी ?। तेन नैमित्तिकेनाप्युक्तं पूर्ववत्। राक्षसोऽवग्—किं तस्याभिज्ञानं ?, नैमित्तिकोऽवग्—यः समुद्र-मध्ये द्वीपे सांयात्रिकभक्षणाय प्रवृत्तं त्वां राक्षसं जेता। तच्च मासात् पूर्वं तथैव बभूव। ततः समुत्पन्नद्विगुण-रोषो भ्रमरकेतुः सम्प्रति सर्वं राक्षसवर्गं शून्यद्वीपे स्थितस्य तस्य कथितस्य वरस्य विनाशाय मेलयन्नस्ति। न ज्ञायतेऽग्रतः किं भावि ?। कुमारो दध्यौ—स एव भ्रमरकेतुः यो मया तत्र द्वीपे जितः। ततः शत्रुस्थानमिदं मम।

मायाविनी राक्षसजातिः, सावहितेन मयाऽत्र स्थेयमिति । इतश्च तत्रायाता मदालसा कुमाररूपं वीक्ष्य सानुरागाऽभूत् । कुमारोऽपि तस्या रूपमालोक्य सानुरागोऽभूत् । ततो द्वयोरप्यनुरागं वीक्ष्य वृद्धा गान्धर्वं विवाहं कारयामास । ततः पृथिवीजलतेजोवाय्वाकाशरूपं रत्नपञ्चकं तद्देवताधिष्ठितं सप्रभावाढ्यं मदालसां च तद्दासीं च लात्वा कूपमध्यमागतः कुमारः, सांयात्रिकजनमुक्तरज्जुप्रयोगेण बहिर्निर्गतश्च, किमिदमित्याश्चर्यत्वरितगतिभिः प्रणतश्च कोऽप्ययं(सुरो)न मनुष्य इति विचारतत्परैः पोतनैगमैः । अध्यारूढः पोतं समुद्रदत्तोत्तमचरित्रादिजनः । पुनरपि कियद्भिर्दिवसैः पुनरपि क्षीणे जले व्याकुलोऽभूत् । तदा सर्वं लोकं जलं विना म्रियमाणमालोक्य मदालसाऽवग्—हे प्रियतम ! मम रत्नकरण्डके यानि रत्नानि सन्ति तेषां प्रभावं शृणु । भूदेव्यधिष्ठितं भूरत्नं, तत् पूजयित्वा याच्यते, ततो मणिकनकमयानि नानाविधानि स्थालकच्चोलकघटघटीकरकप्रभृतिभाजनानि प्रादुर्भवन्ति, तथा शयनासनादीनि, तथा कलमसुगन्धशालिमुद्गगोधूमप्रभृतिधान्यानि तथा सन्मणिस्वर्णमयानि कटककेयूरादिभूषणानि तथा प्रादुर्भवन्ति मणिदेवताप्रभावात् १ ॥ द्वितीयस्माज्जलरत्नाद् व्योमधृताद्वाञ्छितजलवृष्टिर्जायते अकालेऽपि २ ॥ तृतीयस्माद्वह्निरत्नात् गगनधृतात् सूर्यपाकरसवतीतुल्या विनाऽप्येधांसि

विनाऽप्यग्निं सरससुस्वादुशालिदालिनानापक्वान्नसद्व्यञ्जनादिरसवती प्रादुर्भवति ३ ॥ चतुर्थाद्वायुरत्नादाकाशे धृताद्यथाभिलाषं प्राचीनप्रतीचीनादिर्मृदुरनुकूलः सरसो मारुत उत्पद्यते, यथाऽभिलाषं प्रचण्डः प्रतिकूलोऽपि वायुरुत्पद्यते ४ ॥ पञ्चमादाकाशमणेस्तेजोदेदीप्यमानसूक्ष्मसुकुमारदेवदूष्यानुकारिपट्टकूलरत्नकम्बलप्रभृतिवस्तु प्रादुर्भवति ५ ॥ ततः स्वामिन् करुणापर ! एतै रत्नैः दुःखितानां जनानामुपकारं कुरु ॥ यतः—"पिबन्ति नद्यः स्वयमेव नाम्भः, खादन्ति न स्वादुफलानि वृक्षाः। पयोमुचा किं नहि वाञ्छ्यते च(चो नैव पिबन्ति पाथः,)परोपकाराय सतां विभूतयः ॥१॥ विहलं जो अवलंबइ, आवइपडियं च जो समुद्धरइ। सरणागए य रक्खइ, तिसु तेसु अलंकिया पुढवी ॥ २ ॥" इति पत्नीप्रोक्तमाकर्ण्य प्रमुदितः कुमारो जलरत्नं पूजयित्वा कूपस्तम्भे बबन्ध। ततो मेघवृष्टिर्जाता, पूरितानि सर्वाण्यपि जलपात्राणि। तज्जलं प्राप्य लोका हृष्टाः १। ततश्चलति यानपात्रेऽन्येद्युर्धान्ये क्षीणे पृथिवीरत्नप्रभावेण धान्यानि वाञ्छितानि पूरयामास कुमारः २। पुनरन्येद्युरन्नपाकयोग्येन्धनादौ क्षीणे इन्धनैर्विनाऽपि वह्निरत्नप्रभावादन्नपाककरणेन लोकान् सुखिनोऽकार्षीत् ३। अपरेद्युर्व्योमरत्नप्रभावात् सर्वसांयात्रिकाणां वाञ्छितानि वस्त्राणि क्षीरोदकादीन्यदात् कुमारः ४। ततः सर्वेऽपि लोका भोजनाच्छादनादिप्राप्तेर्निश्चिन्तत्वेन

सुखिताः सन्तः कुमारमेव सेवयाऽभजन् । ततोऽन्यदा स्त्रीरत्नजिघृक्षया कृतघ्नशिरोमणितया च लज्जां परित्यज्य परलोकभयमप्यवगणय्य समुद्रदत्तः कुमारं रात्रौ समुद्रेऽपातयत् । ततो लोककोलाहले जाते रुरोद मदालसा । अथ मरणोन्मुखीं तां दासी प्राह—स्वामिनि ! किं बालमरणेन म्रियसे ?, निषिद्धमेतज्जिनागमे, यतः—"रज्जुग्गह विसभक्खण, जलजलणपवेस तिण्हछुहदुहिओ । गिरिसिरवडणाउ मुया, सुहभावा हुंति वंतरिया ॥ १ ॥" तेन यथा तथा वचोभिः समुद्रदत्तो विप्रतार्यते शीलरक्षा च विधीयते । वायुरत्नप्रभावादभीष्टे तटे गम्यते । तत्र चेत्तव भर्ता दिष्ट्या मिलति तदा भव्यं, नो चेत् प्रव्रज्या पारमेश्वरी । इति सखीवचः श्रुत्वा हृष्टा मदालसा तथैव चक्रे । इतश्चोत्तमचरित्रः समुद्रे पतितः केनापि महातिमिना ग्रस्तः, स च तटमायातः, धीवरैस्तिमिर्विनाशितः, स जीवन् कृष्टो मत्स्योदरात् धीवरैः कुमारो, महापुरुषोऽयमितिकृत्वा मैनिकैः सेव्यमानस्तिष्ठति तत्र । अथ समुद्रदत्तेन यानानि स्वेष्टद्वीपं प्रति नीयमानान्यपि मदालसाध्यातवायुरत्नसमुत्पादितमारुतबलेन दिनद्वयेन मोटपल्लीनामवेलाकूलं प्राप्तानि । तत्र च नरवर्मा नाम राजा परमार्हतः सकलधार्मिकाणां धौरेयो राज्यं करोति स्म । इतश्च मदालसां पुरस्कृत्य गृहीतमुक्ताफलादिप्रौढप्राभृतः समुद्रदत्तः पोतादुत्तीर्य राजसभां

प्राप ननाम नृपं च । राजाऽपि कुशलालापपूर्वकं प्रोवाच—भद्र! कैषा योषा ?, स प्राह—स्वामिन्! निःस्वामिकेयं मया चन्द्रद्वीपे लब्धा। तवादेशे सति मम कलत्रतां वाञ्छति। इत्युक्तं श्रुत्वा आः शांतं पापं, रे रे पापिष्ठ! किमलीकं जल्पसीति, अश्रोतव्यमिदमिति कर्णौ पिधाय नम्रमुखा जाता स्थिता। प्राह च—राजन्! मम भर्ताऽनेन दुरात्मना समुद्रे क्षिप्तः। ततो रुष्टो राजा पञ्चशतपोतस्थं सर्वं वस्तु गृहीत्वा वक्षस्कारिकासु निक्षिप्य स्वमुद्रां ददौ। समुद्रदत्तमन्यायिनं कारागारे क्षिप्तवान्। वत्से! मम पुत्र्यास्त्रिलोचनायाः प्रतिपद्य भगिनीभावमदूरवर्तिनि गृहे स्वसखीयुता सुखेन तिष्ठ, देहि दीनादिभ्योऽनिवारितं दानं। तव भर्ता क्वापि तटे लग्नो भावीति तच्छुद्धिं करिष्यामीति समाश्वास्य मदालसां पुत्रीत्वेन प्रपद्यावासे स्थापयामास राजा। साऽपि तत्र स्थिता रत्नपञ्चकमहिम्ना सञ्जातसर्वसम्पत्तिः प्रत्यहं दत्ते दानं जिनधर्मपरायणा। यतः—"जिनपूजनं विवेकः, सत्यं शौचं सुपात्रदानं च। महिमक्रीडागारं, शृङ्गारः श्रावकत्वस्य ॥ १ ॥" सा मदालसा सतीजनोचितान् कत्यपि नियमान् ललौ—यथा भर्तृमिलनावधि भूमौ शयनीयं मया, स्नानं न कार्यं, वस्त्राणि पट्टकूलादीनि त्याज्यानि, पुष्पाङ्गरागविलेपनादि त्याज्यं, न ताम्बूलमास्वाद्यं, लवङ्गादीनां फलानां च भक्षणे नियमः, शरीर-

मलोऽपि भूपार्थं नापनेयः, सर्वशाकानां नियमः, सर्वदधिदुग्धपक्वान्नगुडखण्डशर्करापायसप्रभृति सर्वं सरसमाहारं न भोक्ष्येऽहम्, नीरस एवाहारो ग्राह्यः, एकमेव भक्तं कार्यं सदा, महत्कार्यं विना बहिर्न गन्तव्यं, गवाक्षेषु न स्थातव्यं मया, लोकानां विवाहाद्यपि न वीक्षणीयं, सखीभिरपि सह शृङ्गारहास्यादिविलासकथा न कार्या, शृङ्गाररसानुविद्धकाव्यश्लोकगाथारासकगीताद्यपि नोच्चारणीयं, न श्रोतव्यं च, वैराग्यकथा एव कार्याः पठनीया च प्रत्यहं, कर्मकरादिभिः सहालापो न कार्यः, दूरेऽन्यपुरुषाः चित्रस्था अपि पुरुषा नालोक्याः। इतश्च—ते सर्वेऽपि धीवरा उत्तमचरित्रकुमारसहिताः केनापि प्रयोजनेन मोटपल्लीवेलाकूलमागताः। तदा च नरवर्मराज्ञा स्वसुतायाः कृते सप्तभूम आवासः कारयितुं प्रारेभे। पुरशोभां वीक्षमाण उत्तमचरित्रोऽपि तत्रायातः, सर्वशास्त्रपारगतत्वेनामुत्र अमुत्र स्थाने स्थाने अपराध्यतः सूत्रधारान् वास्तुविद्याविदुरः शिक्षयामास। सूत्रधाराश्चमत्कृता दध्युः—कोऽप्ययं विश्वकर्मावतार इतिकृत्वा तं बहुमंसत। स्वपार्श्वे च तं स्थापयामासुः। धीवराश्च तमलभमाना हा महापुरुषोऽस्मच्छ्यात् क गत इति स्वं निन्दन्तः स्वस्थानं गताः। अन्येद्युर्निष्पन्नप्रायमावासं विलोकयितुं राजा तत्रायातः, उत्तमकुमारं रूपसौभाग्यादिगुणैः सम्पन्नं दृष्ट्वा राजा दध्यौ—नूनमुत्तमवंशजोऽयं कोऽपि राजपुत्रः, ततोऽस्मै

योग्याय कुमाराय त्रिलोचनां दत्त्वा निश्चिन्तो भवामि । ततः सुमुहूर्ते महता महेन राजा तस्मै स्वां पुत्रीं त्रिलोचनां ददौ । ततश्च कुमारः पूर्वपुण्यानुभावेन कृतपाणिग्रहो राज्ञा दत्ते महत्यावासे सुखं तस्थौ । इतश्च मदालसा दासीं प्रति प्राह–हे सखि ! अद्यापि तस्य भर्तुः क्वापि शुद्धिर्न लब्धा । ततः समुद्रमध्ये पञ्चत्वं गतः सम्भाव्यते, तेन भर्त्रा विना मम जीवितेन किं ?, मया तु दानानि सुपात्रेषु दत्तानि रत्नानुभावेन द्रव्य-कोटिव्ययात्, जिनालयानि भूरिशः कारितानि, कृतानि साधर्मिकवात्सल्यानि, लेखितानि जिनागमपुस्तकानि, आराधितः श्राद्धधर्मः । अथ रत्नपञ्चकं मम भगिन्यास्त्रिलोचनाया वितीर्य जैनीं दीक्षां ग्रहीष्यामि । ततो दास्योक्तं–स्वामिनि ! मैवं विषादं कुरु । यतो राजसुतायास्त्रिलोचनायाः साम्प्रतं कोऽपि वैदेशिकः सर्वगुण-निधानं भर्ता जातः श्रूयमाणोऽस्ति । कदाचित् स एव तव भर्ता वर्यो भवेत् । यदि त्वमादिशसि तदाऽहं तदावासे गत्वा विलोकयामि तम् । ततस्तदादेशाद्दासी त्रिलोचनागृहे गता, दृष्टश्चोत्तमचरित्रः, किञ्चिद्गोपिता-कृतित्वात् सम्यग् न प्रत्यभिज्ञातस्तया । क्षणमेकं त्रिलोचनया समं गोष्ठीं कृत्वा पश्चात्स्वस्थाने दासी समा-गता । सर्वं तद्रूपाकृत्यादि दास्या प्रोक्तं मदालसायाः पुरः । ततस्तद्रूपाकृतिश्रवणान्मदालसा सरागा जाता,

क्षणमेवं दध्यौ—हा धिग् मां यदीदृशं मम मनोऽभूत् । यतः सहस्रशो नराः सदृशाकारा दृश्यन्ते, तेन मुधैवं चिन्त्यते । रागकरणे महापातकं भवति । सरागदृष्ट्या निरीक्षणेन सप्तमनरके पातो भवति । पुनरपि धर्मैकलीनचित्ताऽभूत्ला । इतः कुमारेण पृष्टा—प्रिये! कैषा वृद्धा नारी सम्प्रति गृहमागत्य गता?। सा प्राह—प्राणेश! मम प्रतिपन्नभगिन्या मदालसाया वैदेशिक्या दासी। तत् श्रुत्वा क्षणं मम भार्याऽसाविति रागी जातः। पुनरपि ध्यातं तेन—हा मया मुधा चिन्तितमिदमिति पुनः पुनः स्वं निनिन्द। इतश्च—अन्यदोत्तमचरित्रो मध्याह्ने जिनपूजार्थं स्वगृहसमीपप्रासादे गतः। ततः क्षणान्तरे प्रियमनागतं मत्वा त्रिलोचना तस्य पत्युर्विलोकनाय दासीं प्रेषयामास। दास्या सर्वत्र विलोकितोऽपि न लब्धो यदोत्तमचरित्रस्तदा त्रिलोचना तावद्दुःखिताऽजनि। अथ च तत्रैव पुरे महेश्वरदत्तो महेभ्योऽभूत्। तस्य श्रेष्ठिनो निधौ ५६ षट्पञ्चाशत् कलान्तरे ५६ षट्पञ्चाशत् व्यवसाये च ५६ षट्पञ्चाशत् सुवर्णकोटयः, ५०० पञ्च शतानि यानपात्राणि ५०० पञ्च शतानि शकटानि ५०० पञ्च शतानि गृहाणि ५०० पञ्च शतानि हट्टानि ५०० पञ्च शतानि वक्षस्कारिकाः ५०० पञ्च शतानि वणिक्पुत्राः ५०० पञ्च शतानि गोकुलानि प्रत्येकं दशदशगोसहस्रमानानि ५०० पञ्च शतानि गजाः ५०० पञ्च शतानि

अश्वाः ५०० पञ्च शतानि नरयानानि ५०० श्रीकर्यः ५०० पञ्च शतानि वादित्राणि ५००००० पञ्चलक्षभृत्याः ५०० पञ्च शतानि सुभटाः । परं पुत्रो नास्ति। कियता कालेन एका सुता जाता । ६४ चतुष्षष्टिकलाकुशलाऽपि सहस्रकलानाम्नी बभूव । इतश्च स महेभ्यः संसारासारतां विचारयन्निति दध्यौ—योग्याय कस्मैचिद्वर्यवराय कन्यां गृहसारं च दत्त्वाऽहं जैनीं दीक्षां प्रपद्ये । इतः—तेनान्यदा नैमित्तिकः पृष्टः—कोऽस्या वरो भावी ? । नैमित्तिकोऽवग्—मासान्ते महाराजाधिराजः स वरो भावी । अतस्त्वया विवाहसामग्री कार्या, नात्र सन्देहः कार्यः। ततो हृष्टो महेश्वरदत्तो मासान्ते लग्नं ललौ । क्रियते महोत्सवः आकार्यन्ते स्वजनाः भोज्यन्ते स्वजातयः सर्वाः कारिता महामण्डपाः बद्धानि महातोरणानि शृङ्गार्यन्ते कन्याः गायन्ति ललना धवलगीतानि, सज्जीक्रियन्ते वरस्य दानाय करितुरगवस्त्राभरणादीनि । विस्तृता चैषा वार्ता पुरमध्ये सर्वत्र, गता राजसभायां, राजापि विस्मयमापन्नो दध्यौ—अहो धन्योऽयं महेश्वरदत्तो य एवंविधैश्वर्यवानपि वैराग्येन जामात्रे गृहसारं वितीर्य दीक्षां जिघृक्षुः । ततोऽहमपि त्रिलोचनापतये उत्तमचरित्राय गवेषयित्वा प्रकटीकृताय राज्यं दत्त्वा प्रव्रजामि । ततो महेश्वरदत्तेन सह विमृश्य नैमित्तिकवचनास्थया राज्ञा नगर-

मध्ये पटहो दापितः—यस्त्रिलोचनायाः भर्तुः शुद्धिं मदालसायाश्च मूलवृत्तान्तं कथयति तस्मै राज्यं दीयते सहस्रकला कन्या इति च। अथ च मासप्रान्ते एकेन शुकेन पटहः स्पृष्टः, प्रोक्तं च—भो भो राजपुरुषाः! नयत मां राजसभायां. अहं च राज्ञो जामातुर्मदालसायाश्च शुद्धिं पूर्ववृत्तान्तं कथयामि, जीवितोऽस्मि राज्यं लप्स्ये, सहस्रकलां च कन्याम्। अहो पक्षिणोऽपि मम भाग्यानि जाग्रति। ततः कौतुकाच्चैः पुरुषैर्नीतो राजसभायां स शुकः, प्राह च—मदालसामत्रानय स्थापय च त्रिलोचनां यवनिकान्तरे, यथाऽहं त्रिकालज्ञानी सर्वं वदामि। राज्ञा तथा कारिते अहो शुकः कथंकारमतीतामनागतां च कथां कथयिष्यति? कथं वा राज्यमस्मै राजा दास्यति? कथं वाऽसौ तिर्यङ् राज्यं करिष्यतीति कौतुकादहमहमिकया मिलितेषु सर्वपौरलोकेषु पूर्वं मदालसाकथां प्राह—यथा वाराणस्यामुत्तमचरित्रः क्षमापालपुत्रः, पोतमारूढश्च, स एव समुद्रमध्ये जलकान्तगिरौ कूपमध्ये प्रविष्टः, पातालभवने लङ्काधिपस्य भ्रमरकेतुराक्षसस्य पुत्रीं मदालसां परिणीय कूपद्वारात् पुनर्बहिरागात्। समुद्रदत्तस्य पोतं सकलत्र आरूढः। पञ्चरत्नप्रभावात् जलधान्येन्धनवस्त्रादिभिः पोतलोकान् सुखिनश्चकार। ततः समुद्रदत्तेन स्त्रीधनलोभात् समुद्रान्तस्तमिस्रायां

पातितः, तिमिना ग्रस्तः । ततः स तिमिस्तटं प्राप्तः । मैनिकैस्तस्योदरे स्फाटिते निस्ससार जीवन्नेव कुमारः । तत्र मैनिकपाटके स्थितः । तैः सहान्यदाऽत्राऽऽयातः। राजपुत्र्यास्त्रिलोचनायाः पाणिग्रहणं कृत्वाऽऽवासे स्थितः । अन्यदा जिनालये जिनपूजां मध्याह्ने कुर्वाणः पुष्पमध्यस्थितमदनमुद्रितमुखां नलिकां कौतुकादुद्घाटयन् ताम्बूलिकसर्प्पेण दष्टः । पुष्पपात्रोपरि गतचैतन्यः पपात । हे राजन् ! कथिता तव मदालसायाः कथा त्रिलोचनाभर्तुरपि शुद्धिः । येन त्वं सत्यप्रतिज्ञोऽसि तेन मह्यं राज्यं देहि सहस्रकलां कन्यां च । यथा तिर्यङ्प्यहं शुकः कियन्तं कालं राज्यसुखमनुभवामि । इत्युक्त्वा मौनमाधाय शुकः स्थितः। ततो राजाऽवग्—कथं पशवे राज्यं दीयते?।शुकोऽवग्—हे राजन् ! यदि सत्यप्रतिज्ञोऽसि तर्हि राज्यं मह्यं देहि, नो चेत् महाराजाय स्वस्ति भवतु।अहं तु स्वस्थानं यास्यामि। फलास्वादनादिना स्वयं जीविष्यामि।पुराऽपि ज्ञातं मया—यत् प्रायो मानवा मायाविनः,(अ) सत्यप्रतिज्ञा(ः),कृते स्वकार्ये विघटयन्त्येव ।तेनात्र मया न स्थातव्यमित्युक्त्वा यावच्छुको याति तावत्स्वहस्तेन राज्ञा धृतः शुकः, प्रोक्तश्च—हंहो वाचालशिरोमणे कीरवर ! दास्यते तुभ्यं राज्यं, परमग्रतः किं जातं? क्वास्ते स उत्तमचरित्रः? किं जीवति मृतो वा? वद।ततः पुनरपि शुकः प्राह—अहो तिले

तैलं न जातं, तर्हि किं तिलसरैर्भविष्यति?। एतावत्प्राक्कथया कथितया यदि त्वया मे राज्यं न दत्तं तदा किमतो मम उक्तात्परं दास्यसीति?। तथापि वक्ष्यामि, शृणु—राजन्! यदा कुमारः सर्पदष्टोऽवनौ पपात तदाऽनङ्गसेनानाम्नी दिव्यरूपपात्रं गणिका केनापि प्रयोजनविशेषेण तत्रैकाकिन्येव समायाता । तया च विषापहारिमुद्रिकामणिजलेन सिक्तः पुनरुज्जीवितश्च, तदैव स्वगृहे स्थापितश्च चतुर्थभूमौ चित्रशालायां, तया सह सुखमनुभवति साम्प्रतम्। राजन्! स्वस्ति तवास्तु, मुञ्च मां निरपराधम्, अलं राज्येन, तुष्टोऽस्मि वनफलैरेव, मुधा मया गलतालुशोषः कृतः। शुभमस्तु सदा सत्यवादिभ्यो मानवेभ्यः। भद्रमस्तु वैद्येभ्यस्तेभ्यो ये सर्वथा दाक्षिण्यं मुक्त्वा पूर्वं धनं गृहीत्वा पश्चाद्रोगिणे रसायनं ददति। अहं पुनर्दाक्षिण्यवान् महामूर्खः यः सर्वां कथां कथयित्वा पश्चाद्राज्यमीहे इति। अथ राजा जगौ—हे कीर! यथाऽर्द्धे कृते गड्डुप्रभृतिवैद्यके वैद्यो न गमनं लभते कथितं धनमपि नाप्नोति तथा भवानपि अर्द्धोक्तां कथां मुक्त्वा गन्तुं न लभते राज्यमपि नाप्नोति। ततः स्थिरो भव यावद्वयमनङ्गसेनाया गृहे तं कुमारं विलोकयामः, अग्रतः कथां पृच्छामः, पश्चात्तव राज्यं दास्यामः। शुकोऽवग्—विदूपककार्यमाणजेमनवाण्यां चुलुकग्रहण एव प्रतीतिरुत्पद्यते तथाऽत्रापि तव वचसि ।

तथापि क्षणमेकं स्थितोऽस्मि। विलोकय गणिकावेश्म । ततो राजाऽऽज्ञया गता गणिकागृहे जनाः, तैर्विलोकितं गृहं सर्वं, स कुमारो न दृष्टः। पृष्टं—क स राजजामाता ?। सा किमपि प्रत्युत्तरं नार्प्पयति । प्रत्यागत्य ते नराः सर्वं राज्ञे विज्ञपयन्ति स्म । राजा दध्यौ—न ज्ञायते परमगहनं किमपीदं वृत्तम् । ततः शुकमेव पृच्छामि । ननु शुकराज ! किमस्मान् मुधा विप्रतारयसि ?, वदाग्रतः सर्वम्। त्वत्तः कोऽपि पर एतत्स्वरूपस्य वेदिता वक्ताऽऽपि च न । ततः शुकः प्राह—राजन् ! सर्वभाषणं विना नास्ति मम तव हस्तान्मुक्तिरिति सर्वं शृणु, जायतां सर्वेषां प्रमोद इति कथयामि। सर्पदशनादनु ना(अनङ्ग)गसेना दध्यौ—नूनमद्भुतसौभाग्यो गुणवानसौ राजजामाता । ममास्मिन् भवेऽयमेव भर्ताऽस्तु। परं यदि राजा ज्ञास्यति तदाऽस्य नात्र स्थातुं दत्ते इति, स्वस्थानाद्गतः कथं पुनरयमत्रायाति ? । ततस्तथा कुर्वे यथाऽसौ राजजामाता न याति इति तया मन्त्राभिमन्त्रिते दवरके प्रसुप्तस्य तस्यांघ्रौ निबद्धे जातः शुकः कुमारः, क्षिप्तः पञ्जरे । सा च प्रत्यहं दवरकच्छोटनानन्तरं पुनस्तद्बन्धनाच्च शुकं स्वेच्छया तन्मोहात् कुरुते स्म । इतश्च कुमारो दध्यौ—अहो मानुष्येऽपि मम तिर्यक्त्वं जातं, हा मया किं पातकं पूर्वभवे कृतम्। अत्र भवे किमपि कृतं न स्मरामि। हुं ज्ञातं, मयाऽत्रैव भवे पित्राऽदत्ताया मदालसायाः पाणिग्रहणं कृतं, रत्नपञ्चकं च

राक्षसेनादत्तं गृहीतम्। एतत्पातकद्वयेन गृध्रस्य गृध्रान्तरेण भक्ष्यग्रहणवत् सर्वं धनधान्यं मदालसादिकं गृहीत्वा तेन वणिजाऽहं समुद्रे क्षिप्तस्तिमिना च ग्रस्तः। तथा त्रिलोचनागृहे वृद्धा स्त्री समायाता। ततो मदालसेतिसदृशाभिधानायां तस्याः स्वामिन्यां कस्यांचिदज्ञातरूपायां स्त्रियां स्वप्रियाभ्रमात् क्षणं रागबुद्धिमकार्षम्। तथा जिनपूजासमये त्यक्तान्यव्यापारोऽपि पुष्पमध्यनिर्गतमुद्रितमुखनलिकोद्घाटनं देवपूजानुपयोग्यपि कौतुकादनर्थदण्डरूपमकरवम्। एतत्पापद्वयेन मम सर्पदंशः तथा मानुष्येऽपि शुकरूपत्वादि जातम्। अथवाऽमीषां पापतरूणामयं कुसुमोद्गमः, फलं तु यद्यागमः प्रमाणं तदा नरकपात एवेति स्वपापानि स्मारं स्मारं मुहुर्मुहुर्निनिन्द। अनङ्गसेनानुरागेण च तत्रैव मासं यावत्तस्थौ। अद्य पुनरुद्घाटमेव पञ्जरद्वारं मुक्त्वा क्वापि गतायामनङ्गसेनायामवसरं लब्ध्वा परिजनमुखेन पटहोद्घोषणां च श्रुत्वा तत उड्डीय पटहं स्पृष्टवान्। राजन्! सोऽहम्। इति श्रुत्वा राज्ञा दवरकः शुकस्यांघ्रितश्छोटितः, जातः स्फुटरूपः कुमारः। सञ्जातः सर्वेषां प्रमोदः। दत्ता च तदैव महेश्वरदत्तेन कन्या, परिणीता च कुमारेण महोत्सवपूर्वं, मिलितास्तिस्रो भार्याः। स्थापिता भार्यात्वेनानङ्गसेनाऽपि। अथारामिकीमाकार्य भृशं ताडयित्वा पुष्पमध्यसर्पक्षेपादिवृत्तान्तं पप्रच्छ

राजा। तयापि समुद्रदत्तेन कारितं सर्पनिष्पादनादिनोत्तमचरित्रस्य मारणमानीतमूचे, स्वामिन् ! कारास्थेन समुद्रदत्तेन वणिजा सुवर्णपञ्चशतीदानेन मम पार्श्वादिदं कारितं, मया लोभान्धया कृतमेतत् पातकम्। ततो राज्ञा रुष्टेन समुद्रदत्तो वध्य आदिष्टः आरामिकी च। कुमारेण कृपया द्वावपि मोचितौ। राज्ञा सर्वस्वदण्डं कृत्वा देशान्निष्काशितौ। अथ राज्ञा प्रागुत्पन्नवैराग्येण पुत्राभावात् जामात्रे तस्मै कुमाराय समुद्रतटं यावद्राज्यं दत्त्वा स्वयं तपस्या गृहीता। महेश्वरदत्तेन स्वगृहसर्वस्वं कुमाराय दत्त्वा राज्ञा सह प्रव्रज्या गृहीता। उत्तमचरित्रो राजा सञ्जातः। इतश्च—भ्रमरकेतू राक्षसेश्वरः षष्टिलक्षप्रमाणरक्षःसैन्यं मेलयित्वा नैमित्तिकं पृष्टवान्—क्वास्ते उत्तमचरित्रो मम वैरी ?। नैमित्तिकः प्राह—तव पुत्रीं मदालसां परिणीय सारभूतं त्वदीयं रत्नपञ्चकं गृहीत्वाधुना मोटपल्लीनामवेलाकूलराज्यं कुर्वाणोऽस्ति। सकलतटस्वामी सञ्जातोऽस्ति सम्प्रति। तत् श्रुत्वा राक्षसपतिर्दध्यौ—अहो अलंघ्या भवितव्यता। समुद्रान्तःशैलस्थितकूपद्वारा प्रविश्य भूचरेणाप्यमुना पातालभवने देवानामप्यगम्ये मया गुप्तीकृता मदालसा परिणीता। रत्नपञ्चतयी तथा च मम जीवितप्राया गृहीता। अहो नैमित्तिकस्य ज्ञानम्। अहो एतस्य भूमिगोचरस्यापि भाग्यातिशयः। यस्तदा शून्यद्वीपे एकाकी सन्नाहादिरहितोऽपि मया जेतुं

न शेके स सम्प्रति प्राप्तराज्यः पञ्चरत्नमहिम्ना सम्पूर्णकोशबलः प्रभूतसुभटकोटिपरिवृतः कथं जेतुं शक्यते? । अथवा जामात्रा सह कलहे का शोभा भवति? । इति विचिन्त्य विमुक्तरणसंरम्भो मोटपल्लीवेलाकूलमागत्य समणयं स्वतनयां सम्भाष्य श्रीउत्तमचरित्रं नृपं प्रणम्य तदाज्ञां प्रपद्य स्वस्थानमागमत् ।

इतश्च—एकदा राज्ञः संसदि कश्चिल्लेखहारकः समायातः । राज्ञे च लेखं समर्प्पयामास । राजाऽप्युन्मुद्रयावाचयत् । तथाहि—स्वस्तिश्रीवाराणस्यां राजा श्रीमकरध्वजः स्वपुत्रमुत्तमचरित्रनामानं कुमारं निर्भरमालिङ्ग्य कुशलकथनपूर्वकमादिशति—यथा वत्स! त्वयि विदेशं प्रति प्रस्थिते अहं त्वामपश्यन् अश्ववारान् पत्तीन् सर्वत्र लेखहारान् प्रेषयित्वा तव शुद्धिमकार्षम्, परं प्रयाणदिवसादनु ग्रामे पुरे पत्तने निवेशने वने पर्वते द्वीपे च भवतो वार्ताऽपि न लेभे । अन्यच्च—अहं वार्द्धकेण राज्यभारधौरेयस्य भवतो विरहेण च सम्प्रति व्याकुलो जातोऽस्मि । अधुना च त्वं मोटपल्लीवेलाकूले राज्यं कुर्वाणः श्रुतः । ततोऽसौ लेखः प्रहितः । एतज्ज्ञात्वा दृष्टलेखेनात्रागन्तव्यमिति लेखार्थमवगत्य तदैव वेलाकूलराज्यं प्रधानेभ्यो भलापयित्वा स्वयं ससैन्यप्रियाचतुष्टययुतो वाराणसीं प्रतस्थे । क्रमेण चित्रकूटं प्राप्तः । तत्र तत्स्वामिना महासेनराज्ञा समुत्पन्नवैराग्येण निष्पुत्रेण राज्यधुरन्धरं नरं ज्ञातु-

माराधितया सन्तुष्टया देव्या प्रोक्तम्—प्रातस्तव राज्यधुराधौरेयः श्रीउत्तमचरित्रनामा राजाऽत्रैष्यति, प्रातस्तस्मै राज्यं दत्त्वा निश्चितः सन् स्वकार्यं साधयेति । ततो राजा देवतागिरा तत्रागतायोत्तमचरित्राय राज्यं दत्त्वा श्रीचन्द्रशेखरसूरिपार्श्वे दीक्षां जग्राह । अत्र धर्मोपदेशः ।

अथ कतिचिद्दिनानि तत्र स्थित्वा मेदपाटमालवकसपादलक्षकर्णाटमहाराष्ट्रादिदेशान् स्वायत्तीकृत्य तत्र तत्र स्वनियोगिनः स्थापयित्वा क्रमेण गोपालगिरिमहादुर्गं प्राप्तः । तत्र च वीरसेनो राजा सिन्धुसौवीरप्रभृतिदेशनेता चतुरक्षौहिणीसैन्यसमुदायः श्रीउत्तमचरित्रस्य सम्मुखमागतः, दूतमुखेन ज्ञापयामास—मद्देशं परित्यज्यान्यतो व्रज युद्धसज्जो वा भवेति । उत्तमचरित्रोऽपि दूतगिरा क्रुद्धः सङ्ग्रामसज्जोऽभूत् । उभयोरपि सैन्ययोः प्रवृत्तो घोरो महारणः, तदा जितमुत्तमचरित्रेण, जीवन्नेव बद्धो वीरसेनो मुक्तश्च स्वाज्ञां ग्राहयित्वा। वीरसेनोऽपि तेनैव वैराग्येणोत्तमचरित्राय राज्यं दत्त्वा सहस्रनृपयुतस्तपः प्रपेदे । कियन्तमपि कालं तत्र स्थित्वाऽन्यदा वाराणसीं प्रति प्रस्थितः। प्राप्तः स्वराजधानीं पित्रा कृतप्रौढप्रवेशोत्सवः पुरमध्ये प्रविवेश, ननाम च पितुः पादौ। श्रीमकरध्वजोऽपि तस्मै राज्यं दत्त्वा प्रवव्राज। अथ राज्यचतुष्टयस्वामी राजा श्रीउत्तमचरित्रः पूर्वपुण्यानु-

भावेन चिरं सौख्यमन्वभुंक्त। तस्य च ४० चत्वारिंशत्कोटयो ग्रामाणां ४० चत्वारिंशत्लक्षाणि गजानां ४० चत्वारिंशत्लक्षाण्यश्वानां ४० चत्वारिंशत्लक्षाणि रथानां चत्वारिंशत्कोटयः पत्तीनां पत्न्यश्च तस्रो (परःसहस्राः) भूपानामासन्। तेन च कारिताः प्रतिग्रामं जिनप्रासादाः, प्रवर्तिताः प्रतिवर्षं रथयात्रातीर्थयात्रादिमहाः, मुक्ताः सर्वग्रामेषु कराः। अन्यदा समायातः केवली, गतो वन्दनार्थं राजा, श्रुता धर्मदेशना। राजा पप्रच्छ—भगवन्! केन कर्मणा मम सम्पदोऽद्भुता जाताः? केन च मम समुद्रे पतनं जातं? कियत्कालं केन वा मम शुकत्वं च? केन वाऽनङ्गसेनागणिका प्राप्ता?। केवली प्राह—शृणु राजन्! हिमवद्भूमौ सुदत्तग्रामे धनदत्तः कौटुम्बिकः, चतस्रस्तस्य भार्याः, स च पूर्वं धनवानपि कालेन विधिवशादत्यन्तं दरिद्रो जातः। अन्यदा मार्गे चौरैरपहृतवस्त्राश्चत्वारो मुनयस्तत्रागताः। धनदत्तेन भद्रकतयोदारतया च प्रासुकानि शीतकालपरिभोग्यानि स्वप्रावरणवस्त्राणि चत्वारि श्रद्धातिशयात् साधुभ्यो दत्तानि। भार्याभिरनुमोदना कृता। धनदत्तजीवस्तेन पुण्येन त्वं राजा जातः राज्यचतुष्टयस्वामी, वस्त्रपात्रदानात् तव रत्नपञ्चकं धनधान्यमणिकनकचीनांशुकक्षीरोदकरत्नकम्बलप्रभृतिवस्तूनां सर्वदा सम्पादकं जातम्। एकदा च पूर्वभवे त्वया मैनिका इव मलिनगात्रा एते मुनय इति जुगुप्सा

कृता तेन कर्मणा मीनोदरे उषितस्त्वं कियन्तमपि कालं मैनिकगृहे स्थितश्च भवान्। सहस्रतमे भवे एकः शुकः पञ्जरे क्षिप्तः तेन पापेनात्रापि भवे शुकत्वं प्रासम्। अनङ्गसेनायाश्च पूर्वभवे काचित्सखी अत्यद्भुत-शृङ्गारा अहो गणिकेयमिति हसिता तेन कर्मणाऽसौ गणिका जाता। इति श्रुत्वा राजादयो वैराग्यमापन्नाः सुताय राज्यं दत्त्वा प्रव्रज्यां जगृहुः। तीव्रं तपस्तप्त्वा देवा अभूवन्। महाविदेहे मुक्तिर्भविष्यति। इति वस्त्रदाने उत्तमचरित्रराजकथा समाप्ता ॥ ५४ ॥

**प्रतिबोध्यं कुटुम्बं स्वमुत्तमैर्निजशक्तितः। क्षेमङ्करमहासाधुनेव मुक्तिसुखाप्तये ॥ १ ॥**

केनचिद् गृहस्थेन स्वधान्यपरावर्तेनानीत[मन्य]मन्नं न ग्रहीतव्यं साधुना कलिसम्भवात्, तथाहि—वसन्तपुरे निलयः श्रेष्ठी, सुदर्शना भार्या, तयोर्द्वौ पुत्रौ—क्षेमङ्करदेवदत्तौ, लक्ष्मीर्दुहिता च। तत्रैव पुरे तिलकश्रेष्ठिनः सुन्दरी प्रिया। धनदत्तः पुत्रः, बन्धुमती सुता। अन्यदा तत्र क्षेमङ्करः पुत्रः सूरीणामुपकण्ठे दीक्षां गृहीतवान्। देवदत्तेन च बन्धुमती धनदत्तेन च लक्ष्मीः परिणीता। अन्यदा कर्मवशात् धनदत्तस्य गृहे दारिद्र्यमुपागतं, ततः स दुःखप्रापं कोद्रवकूरं भुङ्क्ते। देवदत्तश्चेश्वरः सन् सदा शाल्योदनं भुङ्क्ते। अन्यदा क्षेमङ्करसाधुस्तत्रागतश्चिन्त-

चानान—यदि देवदत्तस्य भ्रातुर्गृहे गमिष्यामि तदा मे भगिनी दारिद्र्येणाहमभिभूता ततो मम गृहे साधुरपि
भ्राता न समुत्तीर्ण इति परिभवं मंस्यते इति ततोऽनुकम्पया तस्या एव गृहं प्रविवेश। भिक्षावेलायां च तया
चिन्तितं लक्ष्म्या—यथा एको भ्राता साधुश्च प्राघूर्णकश्च, मम गृहे च कोद्रवकूरस्ततः कथमसौ असै दीयते?,
शाल्योदनश्च मम गृहे न विद्यते, ततो भ्रातृजायाया बन्धुमत्याः सकाशात् कोद्रवौदनपरावर्तनेन शाल्योदन-
मानीय ददामीति। तथैव कृतम्। अत्रान्तरे च देवदत्तो भोजनार्थं स्वगृहमागतः। देवदत्तो बन्धुमत्या पपृच्छे, यथा—
भो कान्त! अद्य भवता कोद्रवौदनो जेमितव्यः?। तेन चापरिज्ञातपरिवर्तनवृत्तान्तेन चिन्तितम्—यथाऽनया
कृपणतया कोद्रवौदनो राद्धो, न शाल्योदनः, ततस्तां ताडयितुमारेभे, सा च ताड्यमाना प्राह—किं मां ताड-
यसि?। तत्रैव भगिनी कोद्रवौदनं मुक्त्वा शाल्योदनं नीतवती। धनदत्तस्यापि भोजनार्थमुपविष्टस्य यः
शाल्योदनः क्षेमङ्करस्य दीयमान उद्धरितः स गौरवेण लक्ष्म्या परिवेषितः। ततस्तेन सा पृष्टा—कुतोऽयं शाल्यो-
दनः?। ततः कथितः सर्वोऽपि वृत्तान्तस्तया। ततश्चुकोप। धनदत्तश्चाहेति—हा पापे! किमिति माणकमेकं शालिं
पक्त्वा साधवे शाल्योदनो दत्तः?। अथवा (किमिति) आत्मीयगृहसत्कः कोद्रवो न दत्तः?। यत्परगृहादानयनेन

मम गृहे मालिन्यमानीतं त्वया । ततस्तेनापि सा ताडिता । साधुना चायं वृत्तान्तो गृहद्वयवर्त्ती सर्वोऽपि जनमुखात् शुश्रुवे । ततो निशि सर्वाण्यपि तानि प्रतिबोधितानि । यथा इत्थमस्माकं न कल्पते, परमजानता मया गृहीतमन्नम्, अत एव च कलहादिदोषसम्भवात् भगवता प्रतिषिद्धम् । ततो जिनप्रणीतधर्मं सविस्तरं कथितवान् । ततः सर्वेषामपि संवेगोऽभूत् । दत्ता च दीक्षा तेषां सर्वेषामपि । ततः कालेन तेषां मुक्तिरपि भविष्यति ॥ इति क्षेमङ्करमहासाधुकथा समाप्ता ॥ ५५ ॥

**जंघाहीणा ओमे कुसुमपुरे सिस्स जोग रह कहणं । खुड्डुगंजणसुणणा गमणं देसंतरे सरणं ॥ १ ॥**
**भिक्खे परिहायंते थेराणं तेसि ओमि दिंताणं । सह भुञ्ज चंदगुत्ते ओमोयरियाए दोबल्लं ॥ २ ॥**
**चाणक्क पुच्छ इट्टाल-चुण्णं दारं पिहित्तु धूमे य । दट्ठुं कुच्छ पसंसा थेरसमीवे उवालंभो ॥ ३ ॥**

तथाहि—कुसुमपुरे चन्द्रगुप्तो नाम राजा । तस्य मन्त्री चाणक्यः । तत्र च जङ्घाबलपरिहीनाः सुस्थिताभिधाः सूरयः । अन्यदा च तत्र दुर्भिक्षमपतत् । ततः सूरिभिश्चिन्तितम्—अमुं समृद्धाभिधानं शिष्यं सूरिपदे संस्थाप्य सकलगच्छसमेतं सुभिक्षे क्वापि प्रेषयामि । ततस्तस्मै योनिप्राभृतमेकान्ते व्याख्यातुमारब्धम् । तत्र च

क्षुल्लकद्वयेन कथमप्यदृश्यीकरणनिबन्धनमञ्जनं व्याख्यायमानं शुश्रुवे । यथा तेनाञ्जितचक्षुर्न केनापि दृश्यते । इति योनिप्राभृतव्याख्यानसमर्थनानन्तरं च समृद्धाभिधोऽन्तेवासी सूरिपदे स्थापितः । मुत्कलितश्च सकलगच्छसमेतो देशान्तरे । स्वयमेकाकिनस्तत्रैवावतस्थिरे सूरयः । कतिपयदिनानन्तरं क्षुल्लकद्वयमाचार्यसमीपे समाजगाम । आचार्या अपि यत् किमपि भिक्षया लभन्ते तत्समं विभज्य क्षुल्लकद्वयेन सह भुञ्जते । तत आहारापरिपूर्णतया सूरीणां दौर्बल्यमभवत् । ततश्चिन्तितं क्षुल्लकद्वयेन—अवमोदरता सूरीणां, ततो वयं पूर्वश्रुतमञ्जनं कृत्वा चन्द्रगुप्तेन सह भुञ्जावहे इति । तथैव कृतम् । ततश्चन्द्रगुप्तस्याहारस्तोकतया बभूव शरीरे कृशता । ततश्चाणक्येन पृष्टं—किं ते शरीरे दौर्बल्यं ? । स प्राह—परिपूर्णाहारालाभतः । ततश्चाणक्येन चिन्तितम्—एतावत्याहारे परिवेष्यमाणे कथमाहारस्यापरिपूर्णता ? । तन्नूनमञ्जनसिद्धः कोऽपि समागत्य राज्ञा सह भुङ्क्ते । ततस्तेनाञ्जनसिद्धग्रहणाय भोजनमण्डपेऽतीव श्लक्ष्णेष्टिकाचूर्णे विकीर्णे दृष्टानि मनुष्यपदानि । ततो निश्चिक्ये—नूनं द्वौ पुरुषावञ्जनसिद्धावायातः । ततो द्वारं पिधाय मध्येऽतिबहलो धूमो निष्पादितः । धूमबाधितनयनयोश्च तयोरञ्जनं नयनाश्रुभिः सह विगलितं । ततो बभूवतुः प्रत्यक्षौ क्षुल्लकौ । कृता चन्द्रगुप्तेनात्मनि जुगुप्सा—अहो विट्टालितोऽहमाभ्यामिति । ततश्चाणक्येन

तस्य समाधाननिमित्तं प्रवचनमालिन्यरक्षार्थं च प्रशंसितो राजा—यथा धन्यस्त्वमसि यो बालब्रह्मचारिभिर्यतिभिः पवित्रीकृत इति । ततो वन्दित्वा मुत्कलितौ द्वावपि क्षुल्लकौ । चाणक्येन रजन्यां वसतावागत्य सूरय उपालब्धाः—यथैतौ युष्मत्क्षुल्लकावुड्डाहं कुरुतः। ततः सूरिभिः स एवोपालब्धो । यथा—त्वमेवात्रापराधकारी। द्वयोरपि क्षुल्लकयोर्न निर्वाहं चिन्तयसि । स प्राह—भगवन् ! अद्यप्रभृति मया सर्वेषामप्यन्नपानादिचिन्ता कार्येति । पादयोर्निपत्य सूरयस्तेन क्षमिताः। सकलस्यापि सङ्घस्य तत ऊर्ध्वं यथायोग्यं चिन्तितम् । ततस्तावपि क्षुल्लकौ गुरुपार्श्वे आलोचनां लात्वा सम्यग् कृत्वा तौ स्वर्गं गतौ । क्रमान्मुक्तिं गमिष्यतः । इति क्षुल्लककथा ॥ ५६ ॥

मानोपरि क्षुल्लकोदाहरणम् । तथाहि—गिरिपुष्पिते पुरे सिंहाह्वाचार्याः सपरिवारा ईयुः । अन्यदा सेवतिकाक्षणः समजनि । तस्मिंश्च दिवसे तत्र पौरुष्यनन्तरं एकत्र तरुणश्रमणानां समवायोऽभवत् । तेषां परस्परमुल्लापोऽभूदिति । तत्र कोऽप्यवदत्—को नामैतेषां मध्ये प्रातरेव सेवतिका आनेष्यति ? । तत्र गुणचन्द्राभिधः क्षुल्लकः प्रत्यवादीत्—अहमानेष्यामि । ततोऽभाणीत् स साधुः—सर्वसाधूनां सेवतिका घृतगुडसहिता रोचते रहिता वा ? । क्षुल्लक आह—यादृशीस्त्वमिच्छसि तादृशीरानेष्यामि । एवं च कृत्वा प्रतिज्ञां नांदीपात्रमादाय भिक्षार्थं

निर्जगाम । प्रविष्टः क्वापि कौटुम्बिकगृहे। दृष्टाश्च तत्र प्रचुराः सेवतिकाः । घृतगुडादीनि च प्रभूतानि प्रगुणीकृतानि । ततोऽनेकधा वचनभङ्गीभिः सुलोचनाभिधाना कौटुम्बिकगृहिणी याचिता। तया च सर्वथा प्रतिषिद्धः क्षुल्लकः । ततः क्षुल्लकोऽभाणीत् सामर्षं—नियमादियं सेवतिका सघृतगुडा मया ग्रहीतव्या । सुलोचनाऽपि सामर्षं क्षुल्लकवचः श्रुत्वा सञ्जातकोपा प्रत्युवाच—यदि त्वमेतासां सेवतिकानां किमपि लभसे तदा मदीया नासिका छेद्या । क्षुल्लकोऽचिन्तयत्—अवश्यमेतन्मया विधातव्यम्, एवं विचिन्त्य गृहान्निर्ययौ । पप्रच्छ च कस्यापि पार्श्वे—कस्येदं गृहमिति ?। सोऽवादीत्—विष्णुमित्रस्य । ततः पुनरपि क्षुल्लकः पृच्छति—स इदानीं क्व वर्तते ?। तेनोक्तं—पर्षदि । ततः पर्षदि गत्वा सहर्ष इव पर्षज्जनान् पृष्टवान्—भो! युष्माकं मध्ये को विष्णुमित्रः?। जना अप्यवादिषुः—किं साधो! तव तेन प्रयोजनम्?। साधुरवोचत्—तं किमपि याचिष्ये। स च तेषां सर्वेषामपि प्रायो भगिनीपतिरिति सहासं तैरवाचि—कृपणोऽसौ, न ते किमपि दास्यतीत्यस्मानेव याचस्व। ततो विष्णुमित्रो दध्यौ—मा मे अपभ्राजना भवेदिति तेषामग्रतो भूत्वा बभाण—अहं विष्णुमित्रोऽहं। याचस्व किमपि मां। मा केलिवचनममीषां कर्णे अकार्षीश्च । ततोऽवादीत् क्षुल्लको—याचेऽहं यदि त्वं महेलाप्रधानानां षण्णां पुरुषाणामन्यतमो न भवसि। ततः

पर्षज्जना अवादिषुः—के ते षट् पुरुषा महेलाप्रधानाः? येषामन्यतमोऽयमाशङ्क्यते । ततः क्षुल्लक आह—

**श्वेताङ्गुलि १ र्बकोड्डायी २, तीर्थस्नायी ३ च किङ्करः ४। हृदज्ञो ५ गृध्ररिंखी च ६, षडेते गृहिणीवशाः ॥**

एतेषां षण्णामपि कथानकान्यमूनि सन्ति । तथाहि—क्वचिद्ग्रामे कोऽपि पुरुषो निजभार्याछन्दानुवर्ती, स च प्रातरेवोत्थाय जातबुभुक्षो निजभार्यां भोजनं याचते । सा च वदति—नाहमालस्येनोत्थातुमुत्सहे । ततस्त्वमेव समाकर्ष चुल्ल्या भस्म । बहिः प्रक्षिप । तत्र प्रातिवेश्मिकगृहादानीय वह्निं प्रज्वालय तमिन्धनप्रक्षेपेण । समारोपय चुल्ल्याः शिरसि स्थालीं । एवं यावत् पक्त्वा कथय । ततोऽहं परिवेषयामि इति । स च तथैव प्रतिदिनं कुरुते । ततो लोकेन प्रातरेवास्य चुल्ल्या भस्मसमाकर्षणेन श्वेतीभूताङ्गुलिदर्शनात् सहासं श्वेताङ्गुलिरिति नाम कृतम्। एष श्वेताङ्गुलिः १॥ तथा क्वचिद्ग्रामे कोऽपि पुरुषो निजभार्यामुखदर्शनसुखलम्पटस्तदादेशवर्ती । अन्यदा तया भार्यया कथितं—यथाऽहमालस्ये, त्वमेव चोदकं तडागादानय। स च देवताऽऽदेशमिव भार्याऽऽदेशमभिमन्यमानः प्रतिवदति—यदादिशसि प्रिये! तदहं करोमि। ततो दिवसे लोको मां मा द्राक्षीदिति रात्रौ पश्चिमयामे समुत्थाय प्रतिदिवसं तडागादुदकमानयति । तस्य च तत्र गमनागमने कुर्वतः पदसञ्चारशब्दश्रवण-

तो घटभरणे बुडबुडशब्दश्रवणतश्च तडागपालीवृक्षेषु प्रसुप्ता बका उड्डीयोत्पतन्ति। एष वृत्तान्तो लोकेन विदितः। ततोऽस्यार्थस्य सूचनार्थं हासेन बकोड्डायक इति नाम कृतम् । एष बकोड्डायकः २ ॥ तथा कचिद्ग्रामे कोऽपि पुरुषो भार्यास्तनजघनादिस्पर्शलम्पटो भार्याछन्दानुवर्ती, स च प्रातरेवोत्थाय कृताञ्जलिप्रग्रहो वदति—दयिते! किं करोमि?। सा च वदति—तडागादुदकमानय। ततो यत् प्रिया समादिशतीत्युक्त्वा तडागादुदकमानयति । पुनरपि भणति—किं करोमि प्राणेश्वरि ?। सा वदति—कुसूलादाकृष्य तण्डुलान् खण्डय । एवं यावद्भोजनादूर्ध्वं मम पादान् प्रक्षाल्य घृतेन फाणयेति । स च सर्वं तथैव करोति । तत एव लोकेन ज्ञात्वा तस्य किङ्कर इति नाम दर्शितम् । एष किङ्करः ३ ॥ तथा कचिद् ग्रामे कोऽपि पुरुषो भार्यादेशवर्ती । स चान्यदा निजभार्यामवादीत्—प्राणेश्वरि ! स्नातुमहमिच्छामि । तयोक्तं—यद्येवं तर्हि आमलकान् शिलायां वर्तय। परिधेहि स्नानपोतिकां । अभ्यङ्ग्य तैलेनात्मानं। गृहाण घटं । ततस्तडागे स्नात्वा घटं च जलेन भृत्वा समागच्छेति। स च देवताशेषामिव भार्याऽऽदेशं शिरसि निधाय तथैव करोति। एवं च सर्वदैव । ततो लोकेनास्यार्थस्य प्रकटनार्थं हासेनास्य स्नायक इति नाम कृतम् । एष स्नायकः ४ ॥ तथा कचिद् ग्रामे कोऽपि पुरुषो भार्याऽऽदेशविधायी ।

ार्थ भोजनमयाचत । तयोक्तं—मम समीपे स्थालमादाय समागच्छ । सोऽपि यत् प्रियतमा ा त तन्मे प्रमाणमिति वदंस्तस्याः समीपे गतः। तया परिवेषितं भोजनं । तत उक्तं—भोजनस्थाने गत्वा भुंक्ष्व । ततः स भोजनस्थानं गत्वा भोक्तुं प्रवृत्तः । ततः पुनरपि तेन तीमनं याचितम् । सा च प्रत्युवाच—स्थालमादाय मम समीपे समागच्छ । ततः स गृध्र इव उत्कटिको रिंखन् स्थालेन गृहीतेन याति । एवं तक्रादिकमपि गृह्णाति । तत एतल्लोकेन ज्ञात्वा हासेन गृध्र इव रिंखतीति नाम कृतम् । एष गृध्ररिंखी ५ ॥ तथा क्वचिद् ग्रामे भार्यामुखप्रलोकनसुखलम्पटस्तदादेशकारी कोऽपि पुरुषः । तस्यान्यदा भार्यया सह विषयसुखमनुभवतः पुत्रो बभूव । स च पालनक एव स्थितोऽतिबालत्वात् पुरीषमुत्सृजति, तेन च पुरीषेण पालनकं बालकवस्त्राणि च खरंट्यन्ते । ततः सा भणति—बालस्य पोतिकानि प्रक्षालय, पालनकं बालं वस्त्राणि च । ततो यत् प्रिया समादिशति तत् करोमीति वदन् तथैव करोति । एवं सर्वदैव । ततो लोकेनैतज्ज्ञात्वा बालस्य हदनं प्रक्षालयितुं जानातीतिकृत्वा हदज्ञ इति नाम तस्य कृतम्। एष हदज्ञः ६ ॥ तत एवमुक्ते क्षुल्लकेन सर्वैरपि पार्षदिकैरेककालमट्टाट्टहासेन हसद्भिरभाणि—क्षुल्लक एष षण्णामपि पुरुषाणां गुणानाददाति स । तस्मादेनं

महिला-प्रधाना षट्-पुरुषी ।

महेलाप्रधानं मा याचस्व । विष्णुमित्रोऽवादीत्—नाहं षण्णां पुरुषाणां समानः । ततो याचस्व मामिति । ततः क्षुल्लकेनोक्तं—देहि मे घृतगुडसंयुताः पात्रभरणप्रमाणाः सेवतिकाः । विष्णुमित्रेणोक्तं—ददामि । ततः क्षुल्लकं करे गृहीत्वा स्वसद्माभिमुखं चलितवान् । समागतो निजगृहद्वारे । ततः क्षुल्लकेनाभाणि—प्रथममेव तव गृहे गतोऽभूवम् । तत्र तव भार्यया प्रतिज्ञा व्यधायि—यथा न किमपि ते दास्यामि । तत इदानीं यद्युक्तं तत् समाचर । एवमुक्ते विष्णुमित्रोऽवादीत्—यद्येवं तर्हि क्षणमात्रमेव गृहद्वारे तिष्ठ । पश्चादाकारयिष्यामि । ततः प्रविष्टो गृहमध्यं विष्णुमित्रः । पृष्टा च तेन स्वभार्या—यथा राद्धा सेवतिका ? । प्रगुणीकृतानि घृतगुडादीनि ? । तयोक्तं—सर्वं सज्जीकृतमस्ति । क्षत्रियोऽवग्—प्रकटीकुरु, कार्यमस्ति । तया दर्शिता रसवती । ततो गुडानयनच्छलेन पत्नी मालस्योपरि चटापिता । अपनीता ततो निःश्रेणिः । तत स आकार्य क्षुल्लकं पात्रभरणप्रमाणा ददौ तस्मै सेवतिकाः । घृतगुडादीनि दातुमारब्धानि । अत्रान्तरे गुडमादाय सुलोचना मालादुत्तरीतुं प्रवृत्ता । परं निःश्रेणिं न पश्यति । ततो विस्मितदृष्टया सप्रसरं यावदालोकते तावत् पश्यति क्षुल्लकाय घृतगुडसंयुक्ताः सेवतिका दीयमानाः । ततोऽहमनेन क्षुल्लकेनाभिभूतेत्यभिमानपूरितहृदया माऽस्मै देहीति महता शब्देन पुत्कुरुते । क्षुल्लकोऽपि तस्याः

सम्मुखमवलोक्य मया तव नासिकापुटे मूत्रितमिति निजनासापुटे अङ्गुल्यभिनयेन दर्शयति। दर्शयित्वा च घृतगुडसेवतिका जगाम निजवसताविति । क्रमाद्गुरुपार्श्वे जिनेन्द्रोक्तधर्मं श्रुत्वा कौटुम्बिको दीक्षां जग्राह । चिरं संयमं प्रपाल्य स्वर्गसौख्यमाप । ततो मुक्तिमपि यास्यति । क्षुल्लकोऽपि मानं मुक्त्वा क्रमाच्चारित्रं प्रतिपाल्य मुक्तिं गमिष्यति । इति मानोपरि कृपणोपरि क्षुल्लक(कृपण)कौटुम्बिकप्रियाकथा समाप्ता ॥ ५७ ॥

गन्धसमृद्धे पुरे धनदेवो नाम भिक्षूपासकः । स च साधुभ्यो भिक्षार्थं गृहे समागतेभ्यो न किञ्चिदपि दत्ते । अन्यदा वरतरुणश्रमणानामेकत्र परिपिण्डितानां परस्परमुल्लापोऽभूत् । तत्र एकेनोक्तम्—अतिकृपणोऽयं धनदेवः संयतानां किमपि न ददाति। ततोऽस्ति कोऽपि साधुः य एनं घृतगुडादिकं दापयति। ततस्तेषां मध्ये केनाप्यूचे—यदीच्छत अद्य। ततो मामनुजानीध्वं येनाहं दापयामि । ततस्तैरनुज्ञातः। गतस्तस्य गृहम्। अभिमन्त्रितो विद्यया। ततो ब्रूते साधुभ्यः—किं प्रयच्छामि ?। तैरुक्तं—घृतगुडवस्त्वादि । ततो दापितं तेन संयतेभ्यः प्रचुरं घृतगुडादिकं। तदनन्तरं च प्रतिसंहृता विद्या क्षुल्लकेन । जातः स्वभावस्थो भिक्षूपासकः । ततो यावन्निभालयति घृतादिकं च न पश्यति। ततः केन मे हृतं घृतादिकं ? केनाहं मुषितोऽस्मीति विलपितुं प्रवृत्तः। ततः परिजनेनोक्तं—युष्माभिरेव

॥ २४५ ॥

दत्तं संयतेभ्यो। मुधा किं यूयं भणथ ?। ततो मौनमवलम्ब्य स्थितः। ततो गुरुपार्श्वे धर्मं श्रुत्वा धनदेवः क्रमात् संयमं गृहीत्वा तीव्रं तपस्तप्त्वा सर्वकर्मक्षयान्मुक्तिं यास्यति। इति कृपणकथा समाप्ता ॥ ५८ ॥

## अथ प्रथमसाध्वीनाम(लोभपिण्डस्या)धिकारः।

राजगृहपुरे सिंहरथो राजा। विश्वकर्मा नटः। तस्य द्वे दुहितरौ सुरूपे। अन्यदा तत्र यथाविहारक्रमं समायुर्धर्मरुचयः सूरयः। तेषामन्तेवासी प्रज्ञानिधिराषाढभूतिः। स भिक्षार्थमटन् कथमपि विश्वकर्मणो नटस्य गृहं प्राविशत्। तत्र च लब्धः प्रधानो मोदको। द्वारे चाभ्येत्य चिन्तितं तेन—एष मोदकः सूरीणां भविष्यति। तत आत्मार्थं रूपपरावर्तनमाधायान्यं मोदकं मार्गयामीति। ततः काणरूपं कृत्वा पुनः प्रविष्टः। द्वितीयो मोदको लब्धः। पुनर्द्वारेऽभ्येत्य दध्यौ—अयमुपाध्यायस्य भविष्यति। ततः कुब्जरूपं कृत्वा तृतीयो मोदकः प्राप्तः। एष द्वितीयसाधोर्भविष्यति इति ध्यात्वा कुष्ठिरूपं कृत्वा पुनः पूर्ववत् प्रविष्टः सन् चतुर्थं मोदकं प्राप सः। एतानि रूपाणि कुर्वन्तं तं मालोपरिस्थो विश्वकर्माऽपश्यत्। दध्यौ च—ईदृक्कलावानस्माकं कुले कोऽपि नास्ति। उत्पन्ना तस्य धीः—दुहितृभ्यां क्षोभयित्वा ग्रहीतव्यः। ततस्तत्रैत्याषाढभूतिः पात्रभृतैर्मोदकैः प्रतिलम्भितो

विश्वकर्मणा । भणितं—भगवन् ! सदाऽनुग्रहः कार्योऽस्मदुपरि भिक्षाग्रहणात् । ततश्चाषाढभूतिर्गतः स्वाश्रयम् । इतश्च—विश्वकर्मा तस्य यतेः स्वरूपं नानारूपकरणात्मकं दुहित्रोः निजकुटुम्बस्याग्रे चाकथयत्। भणिते च दुहितरौ—तथा स्वन्नदानस्नेहदर्शनादिना कर्तव्यः स यतिः यथा युष्माकमायत्तो भवति । सदाऽऽयात्याषाढभूतिराहारार्थम् । ततस्ताभ्यां तथोपचरितो यथा वशीभूतो जगावाषाढभूतिः—गुरुमापृच्छ्यात्रागमिष्यामि युष्माकं पार्श्वे । ततो गुरुपार्श्वे गतो यतिः। स्वाभिप्रायं प्रोक्तवांश्च। गुरुभिरुक्तं—विवेकिन् ! एवं तव न युज्यते । आषाढभूतिर्जगौ—भगवन् ! किमपि तथाविधं पूर्वमवार्यं कर्मोदयमागमत् यथा तत्र गमनं विना न शक्नोमि । एवमुक्त्वा रजोहरणं गुरुपार्श्वे मुक्त्वा गुरूणां पृष्ठिर्न दीयते इति ध्यायन् पश्चात्कृतपादचारोऽचलदाषाढभूतिः । तत्र गत आषाढभूतिः । विश्वकर्माऽवोचत्—महाभाग ! तवायत्ते द्वे अपि अमू कन्ये । ततः परिणीते तेन ते द्वे कन्यके । भणिते च विश्वकर्मणा—यो नामैतादृशीमप्यवस्थां गतोऽपि गुरुपादान् स्मरति स नियमादुत्तमप्रकृतिः । तत एतच्चित्तावर्जनं नित्यं कार्यं मद्यपानविरहिताभ्यां युवाभ्यां स्नेहेन सदा । अन्यथैष विरक्तो यास्यति । अनेन कलावता आत्मीयगृहे भूयसी श्रीर्भविष्यति । ततश्चाषाढभूतिः सर्वकलाकुशलोऽखिलनटानामग्रणीरभूत्,

लभते च भूरि द्रव्यं स्वकलादर्शनात् । अन्यदा राज्ञा समादिष्टा नटाः-अथ निर्महेलं नाटकं नर्तनीयम् । ततः सर्वेऽपि नटाः स्वां स्वां युवतिं स्वस्वगृहे विमुच्य राजकुलं गताः । तत्रानेके नटा भूपसमक्षं स्वकलया जिताः । तदा राज्ञा बहु धनं ददे । इत आषाढभूतिभार्याभ्यां ध्यातम्—अद्यास्माकं भर्ता राजकुलं गतोऽस्ति । सर्वां रात्रिं तत्र स्थास्यति । ततः पिबामो यथेच्छमासवमिति । तथैव कृतं ताभ्यां । मदवशाच्चापगतचेतने विगतवस्त्रे द्वितीयभूमिकाया उपरि सुप्ते तिष्ठतः स्म । राजकुलेऽपि परराष्ट्रदूतः समागात् इति राज्ञो व्याक्षेपो बभूव । ततो नावसर इतिकृत्वा प्रतीहारेण मुत्कलिताः सर्वेऽपि नटाः । गताः स्वं स्वं गृहम् । आषाढभूतिश्च स्वगृहेऽभ्येत्य यावद् द्वितीयभूमिकामारोहति तावद् ते द्वे अपि निजप्रिये विगतवस्त्रतया बीभत्से पश्यति स्म । ततः स महात्मा अचिन्तयत्—अहो मे मूढता, अहो मे निर्विवेकता, अहो मे दुर्विलसितं, यदेतादृशामप्यशुचिकरण्डभूतानामधोगतिनिबन्धनानां कृते परमशुचीभूतमिहपरलोककल्याणपरम्पराजनकमक्षेपेण मुक्तिपदनिबन्धनं संयममुज्झांचकार । ततोऽद्यापि मे किमपि न विनष्टमस्ति । गच्छामि गुरुपादान्तिकं । प्रतिपद्ये च चारित्रं । प्रक्षालयामि पापपङ्कमिति विचिन्त्य विनिर्गतो गृहात् । दृष्टः कथमपि विश्वकर्मणा । लक्षित इङ्गितादिना—यथा

रत्न. ५२

विरक्त एप यातीति। ततः सत्वरं निजदुहितरावुत्थाप्य निर्भर्त्सयति—हा दुरात्मके! हीनपुण्यचतुर्दशीके! युष्मद्विलसितमेतादृशमालोक्य सकलकलाकुशलो युष्मद्भर्ता विरक्तो यातीति। तद्यदि निवर्तयितुं शक्नुयातं तर्हि निवर्तयेयाथां। नो चेत् प्रजीवनं याचध्वमिति। ततस्ताभ्यां ससम्भ्रमं परिहितवसनाभ्यां पृष्ठतः प्रधाव्यागम्यत। तस्य पदयोर्लगित्वा प्रोक्तं—स्वामिन्! क्षमस्वैकमपराधं, निवर्तस्व, मा आवामनुरक्ते परिहर। एवमुक्तोऽपि स मनागपि न रज्यते। ततस्ताभ्यामभाणि—स्वामिन्! यद्येवं तर्हि प्रजीवनं देहि, येन पश्चादपि युष्मत्प्रसादेन जीवामः। तत एवं भवत्विति दाक्षिण्यवशादनुमन्य प्रतिनिवृत्तः। ततो भरतचक्रवर्तिनश्चरितप्रकाशकं राष्ट्रपालं नाम नाटकं कर्तुकामोऽभूत् तद्वचः कर्तुम्। ततो विज्ञप्तो विश्वकर्मणा सिंहरथो राजा—देव! आषाढभूतिः राष्ट्रपालं नाम नाटकं यदि तुभ्यं रोचते तदा तवाग्रे करोति। राजा जगौ—करोतु। आषाढभूतिः प्राह—तत्र नाटके राजपुत्रपञ्चशतैराभरणविभूषितैः प्रयोजनम्। ततो राज्ञा दत्तानि राजपुत्राणां पञ्चशतानि। तानि यथायथमाषाढभूतिना शिक्षितानि। ततः प्रारब्धं नाटकं नर्तितुम्। तत्राषाढभूतिरात्मना इक्ष्वाकुवंशसम्भूतो भरतश्चक्रवर्ती स्थितः। राजपुत्राश्च यथायोगं कृताः सामन्तादयः। तत्र च नाटके यथा भरतेन भरतषट्खण्डं प्रसाधितं, यथा चतुर्दश

रत्नानि नव महानिधयः प्राप्ताः, यथा चादर्शगृहेऽवस्थितस्य केवलालोकप्रादुर्भावः, यथा च पञ्चशतपरिवारेण सह प्रव्रज्यां प्रतिपन्नः, तत् सर्वमप्यभिनीयते स्म । ततो राज्ञा लोकेन च परितुष्टेन सर्वेषामपि यथाशक्ति हार-कुण्डलादीन्याभरणानि सुवर्णवस्त्राणि च प्रभूतानि क्षिप्तानि । ततः सर्वजनानां धर्मलाभं प्रदाय पञ्चशतपरिवार-सहित आषाढभूतिर्गन्तुं प्रावर्तत । ततः किमेतदिति राज्ञा निवारितः । तेनोक्तं—किं भरतश्चक्रवर्ती प्रव्रज्या-मादाय निवृत्तो येनाहमपि निवर्ते इति भणन् आषाढभूतिः सपरिवारो निजं निजं वपुरादर्शे प्रतिबिम्बितं दृष्ट्वा शुभभावात् केवलज्ञानं प्राप । तद्वस्त्राभरणादि निजनिजभार्याणां दत्तं । तासां प्रजीवनकमभूत् । तेषां नटानामपि शुद्धं चारित्रमभूत् । गुरुसमीपे जग्मुः सर्वेऽपि । तन्नाटकं विश्वकर्मणा कुसुमपुरे कृतम् । तत्रापि पञ्चशतानि क्षत्रियाणां प्रव्रज्यां ललुः । तदा राज्ञा चिन्तितं—एवं प्रव्रजन्तो निष्क्षत्रियां पृथ्वीं करिष्यन्ति । ततस्तन्नाट्यपुस्तकमग्नौ प्रवेशितम् । ततःप्रभृति तादृग् नाटकं नाजनि ।

इति श्रीमत्तपागच्छाधिराजश्रीमुनिसुन्दरसूरिशिष्यपण्डितशुभशीलविरचितायां
भरतेश्वरबाहुबलिवृत्तौ प्रथमः साध्वधिकारः समाप्तः १ ॥

## अथ द्वितीयः साध्वीनामधिकारः ।

तत्र प्रथमगाथोच्यते ।

**सुलसा चंदणबाला, मणोरमा मयणरेह दमयंती । नमया सुंदरि सीया, नंदा भद्दा सुभद्दा य ॥ १ ॥**

**पालयामास सम्यक्त्वं, शुद्धं यो भावतो जनः । सुलसेव स बध्नाति, योग्यं सत्कर्म निर्वृतेः ॥ १ ॥**

तथाहि—जम्बूद्वीपमध्यस्थं भरतखण्डविभूषणं राजगृहं नाम पुरं राजते । तत्र श्रेणिकनामा राजा राज्यं कुरुते । न्यायी । यतः—"न्यायेन पालयन् पृथ्वीं, भूपतिर्धर्म्मकर्म्मकृत् । इहामुत्र समाप्नोति, वर्द्धमानां सुखश्रियम् ॥ १ ॥" तस्य राज्ञः सुनन्दाद्या बह्वयः पत्न्योऽभूवन् । सुनन्दायाः अभयकुमारः पुत्रश्चतुर्बुद्धिनिधानमभूत् । यतः—"उप्पत्तिया वेणइया, कम्मिया परिणामिया । बुद्धी चउव्विहा वुत्ता, पंचमी नोवलब्भई ॥ १ ॥" तत्र च पुरे नागाभिधो रथिकः समृद्धो गुणमणिमकराकरोऽभूत् । तस्य च प्रिया सुलसा सच्छीलशालिनी बभूव । तेनान्यदा द्वितीयप्रियाया अङ्गीकरणे नियमो गृहीतः श्रीगुरुपार्श्वे । तौ दम्पती परस्परं स्नेहगुणावनद्धौ सद्भाग्यदशान्वितौ धर्मानुरक्तौ शुभभावयुक्तौ सुखेन कालं गमयतः स्म । नागस्तु श्रीश्रेणिकभूपस्य सेवां कुरुते ।

अन्यदा नागरथिकः कस्यचिच्छ्रेष्टिनो देवकुमारतुल्यान् पुत्रान् लाल्यमानान् रिंखनं प्राङ्गणे कुर्वाणान् वीक्ष्य दध्यौ—यत्र न स्वजनसङ्गतिरुच्चैर्यत्र नैव लघुलघूनि शिशूनि। यत्र नास्ति गुणगौरवचिन्ता, हन्त तान्यपि गृहाण्यगृहाणि ॥ १ ॥" ममैवंविधे विभवे सति यत्पुत्रो नाभूत् तन्न रुचिरं। ततो नागः पुत्रचिंतापरो बभूव। यतः—"यावन्न द्रव्यं भवने प्रभूतं, तावत् सचिन्तस्तदुपार्जनाय। प्राप्ते च तस्मिन् धनरक्षणायोपायैः सदा व्यग्रमना जनोऽयम् ॥ १ ॥ यावन्न लावण्यकलं कलत्रं, प्राप्तं तदर्त्त्या म्रियतेऽत्र तावत्। प्राप्तेऽथ तस्मिन् सकले कलत्रे, पुत्राप्तिकामः पुरुषं दुनोति ॥ २ ॥ धनेश्वरोऽप्याप्तकलत्रवांश्च, प्रभूतपुत्रोऽपि जनाश्रितोऽपि। काष्ठं घुणौघैरिव रोगशोकैर्नरः समर्थोऽप्यबलः क्रियेत ॥ ३ ॥" इत्यादि ध्यात्वा कृष्णमुखो नागोऽभूत्। तादृशं कृष्णास्यं पतिं वीक्ष्य सुलसयोक्तं—भो प्राणेश ! किं विन्ध्यच्युतकरीव ध्यायन्नसि ?, भ्रष्टराज्यराजसूनुरिव किं कालमुखोऽसि ?। राज्ञाऽथवा किं त्वमपमानितोऽसि ?। अथवा लोकैस्तव विरुद्धं जल्पितम्। अथवा किं तव गतं ?। कस्याभीष्टस्य वस्तुनो वियोगोऽभूत् ?। या चिन्ता तव चेतसि विद्यते सा निगद्यताम्। श्रुत्वेति प्रियावचो नागो विहस्य प्राह—भो प्रिये ! मम तद्गोप्यं नास्ति यन्न तवाग्रे लप्यते। यत्तव पुत्रो नाद्याप्यभूत्तन्मां दुनोति।

यतः—"एकोऽपि यः सकलकार्यविधौ समर्थः, सत्त्वाधिको भवति किं बहुभिः प्रसूतैः? । चन्द्रः प्रकाशयति दिङ्मुखमण्डलानि, तारागणः समुदितोऽप्यसमर्थ एव ॥ १ ॥" यतः दाराः पुत्रफला नराणाम् । ततः कान्ता प्राह—हे नाथ! जिनवाग्विदां कथमीदृशो खेदो भवति?। पुत्रेषु सत्सु कोऽपि श्वभ्रं न यातीत्येवं नियमो नास्ति । स्वामिन्! गुणाढ्योऽपि बलवानपि मातरं पितरं नरके पतन्तं कोऽपि न रक्षति । यतः—पिता न माता न सुतो न पुत्रो, न बान्धवो नो द्रविणं न गोत्रम् । श्वभ्रे पतन्तं मनुजं न धर्मं, विना समर्थो ननु पातुमत्र ॥ १ ॥ स ब्रह्मदत्तोऽपि सुतैः परीतो, जातोऽन्धलः कर्मवशाद्दशायाम् । पातालमूले निपतंस्तथोच्चैः, श्रीश्रीपतिः पुत्रगणैर्धृतो न ॥ २ ॥ क्षीणं तनूजैर्धृतराष्ट्रगोत्रं, पुत्रैः कलङ्की स पुलस्त्यवंशः । षट्खण्डभर्ता सगरः सपुत्रो, दुःखेन भेजे परलोकमार्गम् ॥ ३ ॥ स्वर्गः प्रभूतैरपि नैव पुत्रैर्न वाऽपवर्गोऽपि विनाऽऽत्मकृत्यात् । परन्तु संसारसमुद्रमार्गः, प्रवर्तते पुत्रगुणैः सुधीश! ॥ ४ ॥ निशम्येति प्रियावाक्यं नागः प्राह—प्रिये! यत्त्वया प्रोक्तं तत्सत्यमेव । तथापि पुत्रैः शिष्टैरशिष्टैर्विना न पितॄणां मनो धृतिं याति । यतः—"दिशो यथा बान्धववर्जितानां, सदैव चेतांसि यथा जडानाम् । समस्तविश्वानि यथाऽधनानां, गृहाणि शून्यानि तथाऽसुतानाम् ॥ १ ॥ कदापि येषु

स्वजनागमो न, न गौरवं येषु गुणाधिकानाम्। शिशूनि नो येषु भृशं लघूनि, गृहाणि किं तान्यपि? हाऽगृहाणि ॥ २ ॥ संसारवासे वसतां नराणां, विश्रामभूम्यो मनसोऽत्र तिस्रः। प्रियं कलत्रं तनयो विनीतः, सत्सङ्गतिः सर्वगुणोत्तरा च ॥ ३॥ चन्द्रप्रदीपेन यथा निशायां, रविप्रदीपेन यथा दिवा वा। पदार्थसार्थाः प्रकटीक्रियन्ते, सुतप्रदीपेन तथा स्वपूर्वे ॥ ४ ॥ एकेन भाग्याधिकतां गतेन, पुत्रेण वंशो विशदीक्रियेत। वनं समस्तं ननु चन्दनेन, संवास्यते गन्धगुणाधिकेन ॥ ५ ॥ पुत्रेण मातापितरौ जनानामुत्कृष्टभावं गमिताविहैव। पुत्रेण कीर्तिर्भजते स्थिरत्वं, यत् सागरी सा सगरस्य जाता ॥ ६ ॥ इति पतिवचो निशम्य सुलसा जगौ—मम पार्श्वादपत्यान्यधुना न दृश्यन्ते तेन त्वं द्वितीयां प्रियां परिणय। सा पत्नी तव पुत्रान् प्रसविष्यति। ततस्त्वं पुत्रवान् भविष्यसि। अथ नागः प्राह—यदि कोऽपि राजा राज्यं स्वसुतासमेतं मह्यं दत्ते तथाप्यपरां त्वत्तः प्रियां नेच्छामि। परमान्नं भुक्त्वा को घृष्टिं वाञ्छति?। अस्मिन् भवे त्वत्सकाशात् सुतो भवति यदि तदा भवतु। नो चेत् पुत्रं विना तिष्ठाम्यहम्। इतीरिते तेन कान्तेन सुलसा सुतार्थिनी चिन्तयामास। "धर्मः कल्पद्रुमो धर्मश्चिन्तामणिर्मनोहरः। धर्मः कल्पलता धर्मः, कामधेनुर्निगद्यते ॥ १ ॥" मूढास्तं धर्मं तादृशं स्वर्गापवर्गसुखदं

मुक्त्वाऽन्यत्र रतिं कुर्वते। यतः—"वरं कुलं प्रेम परस्परं च, दीर्घं तथाऽऽयुः पटुता च देहे। अभीष्टसङ्गश्च गुणानुरागः, सत्पुत्रलाभः प्रभुता च लोके ॥ १ ॥ लक्ष्मीः स्वगेहे वदने च वाणी, शौर्यं च बाहौ स्वकरे च दानम्। सौभाग्यमङ्गे हृदये सुधीश्च, कीर्तिश्च दिक्षूज्ज्वलधर्मतः स्यात् ॥ २ ॥ रे चित्त! खेदं किमुपैषि नित्यं, दृष्ट्वाऽन्यवस्तूनि मनोहराणि ?। धर्मं कुरुष्वाशु यदीच्छसीष्टं, धर्मं विना नैव समीहितं स्यात् ॥ ३ ॥ एवं विचिन्त्य सुलसा विशेषतो धर्मकर्मपरा पुत्रार्थिनी जिनार्चां चकार। दानं च चतुर्विधाहारसहितं सत्पात्रेभ्यो दत्ते स्म। ब्रह्मचर्यभूशयनाचाम्लानि कुरुते स्म। इतस्तस्याः सत्त्वमवधिज्ञानेनावगम्येन्द्रः सुलसां प्रशशंस—अधुना सुलसा श्राविका स्वधर्मकृत्यात् केनापि न चाल्यते। तदा शक्रवचनं श्रुत्वा हरिणेगमेषी सुरः सुलसापरीक्षार्थं स्वर्गाच्चचाल। स देवः साधुद्वयरूपं विधाय नागगृहे समागात्। तत्साधुद्वयमागच्छत् दृष्ट्वा सुलसा समुत्तस्थौ। दध्याविति चित्ते—पुराणपापग्रसनैकहेतुरुच्चैर्भविष्यत्फललाभवक्ता। नाभव्यगेहं खलु सर्वतीर्थमयोऽतिथिः पावयति क्रमाभ्याम् ॥ १ ॥ मनुष्यतायाः फलमेतदेव, यत् संविभागः क्रियतेऽतिथीनाम्। अन्यत् स्वकीयोदरपूरणं यत्, सर्वं पशूनां किल रक्षणं तत् ॥ २ ॥ तद्भोजनं यन् मुनिदत्तशेषं, सा प्राज्ञता या न करोति पापम्। तन्मित्रमा

पदि सुखे च समक्रियं यदेतत् त्रयं जगति पुण्यकृतो लभन्ते ॥ ३ ॥ ध्यात्वेति सुलसा दानशौण्डा साधुद्वयं प्रणम्य स्वं कृतार्थं मन्यमाना कृताञ्जलिर्व्यजिज्ञपत्—भो यतीश ! त्वदागमनेनेदं मदीयं गृहं पवित्रितं, यत्कार्यं भवति तन्निवेद्यताम् । यतिः प्राह—त्वदीयगृहे लक्षपाकतैलकुम्भाः श्रुताः । साधवो ग्लानाः सन्ति बहवः । तेषां चिकित्साकरणार्थं तैलं विश्राणय । ततो हृष्टा तैलकुम्भमेकं गृहाद्बहिर्दातुं यावन्निनाय तावत्तेन देवेनापररूपकरणेनादृश्यरूपेण कुम्भो भूमौ पातितो भग्नश्च । एवं सुलसया समानीतो द्वितीयो तृतीयश्चतुर्थः कुम्भो भग्नः । ततो देवः सुलसामनः खेदरहितं ज्ञानेन ज्ञात्वा प्रकटीभूय प्राह—त्वमेव धन्याऽसि । इन्द्रेण यादृशं धर्मस्थिरताकीर्तनं तावकं सभामध्ये वर्णितं तादृशं मया दृष्टमद्य । अहं हरिणेगमेषी सुरः त्वां परीक्षितुमागाम्। तुष्टोऽस्म्यहं। वरं वृणु। ततः सा जगौ—सुरेन्द्रचमूपते! त्वं ज्ञानेन मन्मनोभवं मनोरथं जानीषे। ततः सहर्षः सुरो द्वात्रिंशद्गुटिकास्तस्यै वितीर्य प्राह—त्वयैकैका गुटिका भक्षणीया। धटा(गच्छ)न्(स्वरूपं)प्रकटीकृत्य प्राह—तव गुटिकाप्रभावाद् द्वात्रिंशत् सुता भविष्यन्ति। गरीयस्यन्तरायिके [भूते] समागते त्वया स्मरणीयोऽहं यथा तवोत्पन्नविघ्नं पिनष्मि, एवमुक्त्वा सुरो विद्युदिव तिरोदधे । पुनर्जिनार्चा-

परा सुलसा भोगपरा बभूव । अथ समागते ऋतुकाले धर्मशीला सुलसा दध्यौ—मम बहुभिः पुत्रैः किम् ? । एकेनापि सुपुत्रेण, सुखमेव भविष्यति । यदि स्यात् पुण्यवान् जीवः, सर्वज्ञार्चाप्रसाधकः ॥ १ ॥ धर्मकरणे विघ्नं भवति मलमूत्रोज्झनादिना । द्वात्रिंशता गुटिकाभिर्भक्षिताभिरेकः पुत्रो द्वात्रिंशल्लक्षणो यदि भवति तदा वरम् । यतः—"प्रसूयते सूनुरनूनकार्यकर्ता स एकोऽपि किमु प्रभूतैः ? । आशाः प्रकाशाः कुरुतेऽमृतांशुरेकोऽप्यसङ्ख्या उदिता न ताराः ॥ १ ॥ एकाऽपि भव्या वरकामधेनुः, सदैव या कामितदानदक्षा । वारस्थितैर्वर्षयिणीसहस्रैर्वृद्धैस्तृणत्रोटिकरैः किमन्यैः ? ॥ २ ॥ एकोऽपि तेजःप्रकरैः प्रपूर्णश्चिन्तामणिश्चिन्तितकार्यकर्ता । हाराधिरूढैरपि वर्तुलैश्च, कण्ठस्थितैः काचमणिगणैः किम् ? ॥ ३ ॥" एवं ध्यात्वा सुलसया ता गुटिकाः समस्ताः समकालं प्राशिरे । तासां गुटिकानां प्रभावात्तस्या उदरे द्वात्रिंशद् गर्भाः प्रादुर्बभूवुः । ते वर्द्धमानाः क्रमात्तस्याः सुलसाया उदरे तथा व्यथां चक्रुः यथा तदा प्राणाः प्रयाणकं कुर्वन्तोऽभूवंस्तस्याः । यथा द्रोणप्रमाणे कलशे खारी पच्यमाना कलशं भिनत्ति तथा तस्या उदरं तैर्गर्भैर्भिद्यमानमभूत् । तदा वेदनां तामसह्यां सहमाना सुलसा विघ्नोपशान्त्यै कायोत्सर्गे देवं सस्मार । तस्याः सत्त्वेनाकर्षितः स एव सुरः प्रादुर्भूय प्राह—भो महासति ! अहं

त्वया यदर्थं स्मृतोऽस्मि तन्निवेदय। ततः सा मुक्तकायोत्सर्गा स्वकृतं कर्म जगाद। देवः प्राह—भो मुग्धे! त्वया अविचार्य कार्यं कृतं। यतस्त्वया द्वात्रिंशद्गुटिकाः समकालं मुक्ताः तेन तव द्वात्रिंशत् पुत्राः समकालं भविष्यन्ति। यदेकः पुत्रो मरिष्यति तदा द्वात्रिंशत् पुत्रा मरिष्यन्ति। यदि पृथक् पृथक् गुटिकास्त्वं प्राक्षीस्तदा पृथक् पृथक् द्वात्रिंशतं पुत्रानजीजनः। ततो सुलसा जगौ—जीवेन यत् कर्म कृतं शुभाशुभं बद्धं वा तत्तथैव मुज्यते। यतः—"संसारवासे कृतकर्मणोऽत्र, मुद्रप्रविष्टैरपि मुच्यते न। नो चेत् पराक्षः सलिलान्तरेकस्तम्भस्थसौधेऽपि कथं विपन्नः? ॥ १ ॥ यन्नैव भाव्यं भवतीह तन्न, तन्नान्यथा यस्य यदस्ति भाव्यम्। प्रत्यक्षमेकस्य यतोऽस्ति लाभः, छेदः परस्यैव ततो यतः स्यात् ॥ २ ॥ सम्पद्यते सैव मतिर्जनानां, तादृक्सहाया अपि सम्भवन्ति। यादृक्स्वरूपा भवितव्यताऽस्ति, नो चेत्कथं दीव्यति धर्मजोऽपि? ॥ ३ ॥ गुणाभिरामो यदि रामभद्रो, राज्यैकयोग्योऽपि वनं जगाम। विद्याधरः श्रीदशकन्धरश्चेत्, प्रभूतदारोऽपि जहार सीताम् ॥ ४ ॥ ततो भो हरिणेगमेषिन्! किं क्रियते मया अविमृश्य कार्यमेतत् कृतम्। यदि च ममानुकूलं कर्मास्ति तव च शक्तिरस्ति तदा त्वं ममोदरव्यथां प्रशमय। नो चेदहं स्वकृतं कर्म भोक्ष्ये। यदि त्वमिमां व्यथामुपशमयेस्तदा जिनशासनोन्नतिर्भवति।

ततो देवेन प्रसन्नेन तस्या उदरव्यथा स्फेटिता । ततो देवः स्वस्थाने गतः । ततः सुलसा धर्मपरा हितैर्मितैराहारैस्तं गर्भं पोषयामास । यतः—"वातलैश्च भवेद्गर्भः, कुब्जान्धजडवामनः । पित्तकैः पित्तलः पङ्गुः, कुष्ठी पाण्डुकफात्मभिः ॥ १ ॥ याममध्ये न भोक्तव्यं, यामयुग्मं न लङ्घयेत् । याममध्ये रसोत्पत्तिर्यामयुग्मे बलक्षयः ॥ २ ॥" ततः सम्पूर्णे समये सुस्वप्नसूचितान् द्वात्रिंशतं पुत्रानसूत सुलसा । नागस्तेषां पुत्राणां जन्मोत्सवं चक्रे महादानेन । यतः—"नागस्तदाऽदात् सुतजन्महर्षाद्वर्धापनीं मार्गणचेटिकाभ्यः । सुवर्णरत्नानि बहूनि यस्मात्, सर्वेऽपि लाभा अनु पुत्रलाभम् ॥ १ ॥ दिगन्तविश्रान्तमृदङ्गनादं, भेरीरवैर्मिश्रितशङ्खनादम् । नृत्यद्वधूवारकृतप्रमोदं, वेषान्तरैर्दत्तमनोविनोदम् ॥२॥ सुवासिनीमङ्गलगीतगानं, वित्तानुसारेण वितीर्णदानम् । कार्यान्तरप्रेरितकिङ्करौघं, सुपूज्यपूजाकरणैरमोघम् ॥ ३ ॥ पापठ्यमानामितबन्दिलोकं, वावद्यमानामितधर्मशास्त्रम् । अटाट्यमानामितबन्धुवर्गं, संशोध्यमानामितगुप्तिगेहम् ॥ ४ ॥ उद्भिन्नयूपं कृतसङ्घपूजं, कृतोत्सवं श्रीजिनमन्दिरेषु । प्रदीयमानाज्यगुडं गृहेषु, प्रविश्यमानाक्षतपात्ररम्यम् ॥ ५ ॥ सम्भोज्यमानागतसर्वलोकं, ताम्बूलदानेन विधूतशोकम् । आजीविकोत्सारितचित्तरोषं, सत्पात्रदानैर्विजितान्यदोषम् ॥ ६ ॥" क्रमाद्गते द्वादशमे वासरे सम्भोज्य स्वजनान्

तेषां पुत्राणां पृथक् पृथक् नामानि नागो ददौ । ततः पञ्चभिर्धात्रीभिर्लाल्यमानास्ते नागपुत्रा वृद्धिं गच्छन्तो देवकुमारतुल्या बभूवुः । ते नागपुत्राः पदनिबद्धघुर्घरशब्दैर्मातृपितृप्रमुखाणां प्रमोदं ददुः । ते पुत्रा नागेन पञ्चवर्षप्रमिता लेखशालायां पठितुं मुक्ताः, कलाः समस्ता धर्मकर्मशास्त्रसम्बन्धिनीर्लेलुः । सर्वेऽपि [ सुलसा ] धर्मकर्मपरायणाः क्रमाच्छ्रेणिकभूपस्य सेवका बभूवुः । ततः प्राप्तयौवनास्ते कुमारा नागेन महेभ्यपुत्रीः परिणायिताः । सुलसा ताभिर्वधूभिर्विनयवतीभिः सुखिनी बभूव । अन्येद्युः श्रेणिको विशालायाः चेटकभूपतेः सुज्येष्ठापुत्रीरूपं चित्रलिखितं तापसीसमानीतं दृष्ट्वा तामङ्गीकर्तुकामोऽभूत् । तदा श्रेणिकमनोरथपूरणायाभयकुमारो वणिग्वेषं विधाय विशालायां गतः । तत्र भूपान्तःपुरपार्श्वे हट्टं मण्डयामास । तदा सुज्येष्ठाचेटी तत्र क्रयाणकं ग्रहीतुमागच्छति । समर्घं स वणिग् ददाति । यदा यदा चेटी वस्तु ग्रहीतुमायाति तदा पट्टलिखितं श्रेणिकरूपं दिव्यं पूजयामासाभयः। चेट्याऽन्यदा पृष्टं—कस्य रूपम् ?, तेनोक्तं—मया वक्तुं न शक्यते तत्स्वरूपम् । ततो विशेषतश्चेटी पृच्छति । ततः प्रोक्तं—श्रेणिकस्य। ततश्चेट्या सुज्येष्ठाया अग्रे प्रोक्तम् । ततः सुज्येष्ठा जगौ—तथा त्वं कुरु यथा मां स परिणयति। ततश्चेट्या अभयस्याग्रे स्वामिन्युक्तं प्रोक्तम्। ततः सुरङ्गा कारिताऽभयेन ।

ततो देवेन प्रसन्नेन तस्या उदरव्यथा स्फेटिता । ततो देवः स्वस्थाने गतः । ततः सुलसा धर्मपरा हितैर्मितैराहारैस्तं गर्भं पोषयामास। यतः—"वातलैश्च भवेद्गर्भः, कुब्जान्धजडवामनः। पित्तकैः पित्तलः पङ्गुः, कुष्ठी पाण्डुकफात्मभिः ॥ १ ॥ याममध्ये न भोक्तव्यं, यामयुग्मं न लङ्घयेत्। याममध्ये रसोत्पत्तिर्यामयुग्मे बलक्षयः ॥ २ ॥" ततः सम्पूर्णे समये सुस्वप्नसूचितान् द्वात्रिंशतं पुत्रानसूत सुलसा । नागस्तेषां पुत्राणां जन्मोत्सवं चक्रे महादानेन । यतः—"नागस्तदाऽदात् सुतजन्महर्षाद्वर्धापनीं मार्गणचेटिकाभ्यः। सुवर्णरत्नानि बहूनि यस्मात्, सर्वेऽपि लाभा अनु पुत्रलाभम् ॥ १ ॥ दिगन्तविश्रान्तमृदङ्गनादं, भेरीरवैर्मिश्रितशङ्खनादम् । नृत्यद्वधूवारकृतप्रमोदं, वेषान्तरैर्दत्तमनोविनोदम् ॥२॥ सुवासिनीमङ्गलगीतगानं, वित्तानुसारेण वितीर्णदानम्। कार्यान्तरप्रेरितकिङ्करौघं, सुपूज्यपूजाकरणैरमोघम् ॥ ३ ॥ पापठ्यमानामितबन्दिलोकं,वावद्यमानामितधर्मशास्त्रम् । अटाट्यमानामितबन्धुवर्गं, संशोध्यमानामितगुप्तिगेहम् ॥ ४ ॥ उद्भिन्नयूपं कृतसङ्घपूजं, कृतोत्सवं श्रीजिनमन्दिरेषु । प्रदीयमानाज्यगुडं गृहेषु, प्रविश्यमानाक्षतपात्ररम्यम् ॥ ५ ॥ सम्भोज्यमानागतसर्वलोकं, ताम्बूलदानेन विधूतशोकम् । आजीविकोत्सारितचित्तरोषं, सत्पात्रदानैर्विजितान्यदोषम् ॥ ६ ॥" क्रमाद्गते द्वादशमे वासरे सम्भोज्य स्वजनान्

तेषां पुत्राणां पृथक् पृथक् नामानि नागो ददौ । ततः पञ्चभिर्धात्रीभिर्लाल्यमानास्ते नागपुत्रा वृद्धिं गच्छन्तो
देवकुमारतुल्या बभूवुः । ते नागपुत्राः पदनिबद्धघुर्घरशब्दैर्मातृपितृप्रमुखाणां प्रमोदं ददुः । ते पुत्रा नागेन
पञ्चवर्षप्रमिता लेखशालायां पठितुं मुक्ताः, कलाः समस्ता धर्मकर्मशास्त्रसम्बन्धिनीर्ललुः । सर्वेऽपि [ सुलसा ]
धर्मकर्मपरायणाः क्रमाच्छ्रेणिकभूपस्य सेवका बभूवुः । ततः प्राप्तयौवनास्ते कुमारा नागेन महेभ्यपुत्रीः परिणा-
यिताः । सुलसा ताभिर्वधूभिर्विनयवतीभिः सुखिनी बभूव । अन्येद्युः श्रेणिको विशालायाः चेटकभूपतेः सुज्ये-
ष्ठापुत्रीरूपं चित्रलिखितं तापसीसमानीतं दृष्ट्वा तामङ्गीकर्तुकामोऽभूत् । तदा श्रेणिकमनोरथपूरणायाभयकुमारो
वणिग्वेषं विधाय विशालायां गतः । तत्र भूपान्तःपुरपार्श्वे हट्टं मण्डयामास । तदा सुज्येष्ठाचेटी तत्र क्रयाणकं
ग्रहीतुमागच्छति । समर्घं स वणिग् ददाति । यदा यदा चेटी वस्तु ग्रहीतुमायाति तदा पट्टलिखितं श्रेणि-
करूपं दिव्यं पूजयामासाभयः। चेट्याऽन्यदा पृष्टं—कस्य रूपम् ?, तेनोक्तं—मया वक्तुं न शक्यते तत्स्वरूपम् ।
ततो विशेषतश्चेटी पृच्छति । ततः प्रोक्तं—श्रेणिकस्य। ततश्चेट्या सुज्येष्ठाया अग्रे प्रोक्तम् । ततः सुज्येष्ठा जगौ—
तथा त्वं कुरु यथा मां स परिणयति। ततश्चेट्या अभयस्याग्रे स्वामिन्युक्तं प्रोक्तम्। ततः सुरङ्गा कारिताऽभयेन ।

श्रेणिकाय ज्ञापितं—चैत्रशुक्लद्वादश्यां त्वया सुरङ्गयाऽऽगन्तव्यम् । सुज्येष्ठाया अपि ज्ञापितं—चैत्रशुद्धद्वादश्यां समेष्यति श्रेणिकः । ततः श्रेणिके तस्मिन् दिने सुरङ्गया तत्र समागते सुज्येष्ठा यावच्चलितुकामाऽभूत् तावच्चेलणा जगौ—अहमपि त्वया सह समेष्यामि, श्रेणिकं परिणेष्यामि त्वया सह । ततो द्वे अपि पुत्र्यौ सुरङ्गाया मुखे समागते । तदा सुज्येष्ठाऽवग्—भगिनि ! मम रत्नकरण्डको विस्मृतोऽस्ति, तं लात्वा यावदेष्यामि तावत्त्वयाऽत्र स्थेयम् । एवमुक्त्वा सुज्येष्ठा रत्नकरण्डकमानेतुं पश्चाद्गता । इतः श्रेणिकः सुलसाया द्वात्रिंशत् पुत्राः पृथक् पृथक् रथस्थ उत्सुकः सुज्येष्ठाभ्रान्त्या चेल्लणामेव रथारूढां कृत्वा पश्चात् त्वरितं ववले। इतः सुज्येष्ठाकृतकोलाहलात् पुत्रीहरणवृत्तान्तं श्रुत्वा चेटकः क्ष्मापः श्रेणिकपृष्ठौ दधावे स्वपुत्रीवालनाय । चेटकं युद्धाय गच्छन्तं निवार्य वैरङ्गिकश्चेटकभूपसेवकः सुरङ्गायां श्रेणिकपृष्ठौ गतः । तत्र युद्धे जायमाने सुलसाया एकस्मिन् पुत्रे तेन हते एकत्रिंशदपि पुत्रा मृताः । श्रेणिकश्चेल्लणां नीत्वा यावत् स्वपुरसमीपे सुज्येष्ठे ! इति जजल्प । तावच्चेल्लणा जगौ—नाहं सुज्येष्ठा, किन्तु तस्याः कनिष्ठा चेल्लणाऽस्मि । ततो राजा तां परिणीतवान् महोत्सवेन । तदा सुलसा स्वपुत्रान् मृतान् श्रुत्वा भृशं रुरोदेति । हा दैव ! हताः कथं त्वया मम पुत्रा युगपज्जगत्प्रियाः इत्यादि सुलसा रुदन्ती

जनान् रोदयामास । तदा नागमन्दिरे समेत्याभयकुमारः प्रबोधायेत्यवग्—अपि जैनमतार्थवेदिनामपि सांसारिकभावनाभृताम् । भवतां नहि शोकसागरे, पतितुं युक्तमिवाविवेकिनाम्॥ १ ॥ यदयं भव इन्द्रजालवद्धरिकोदण्ड इवातिचञ्चलः । चपलश्च गजेन्द्रकर्णवत्, परसन्ध्याभ्रमरागरूपवत् ॥ २ ॥ पवनेरिततूलपूरवत्, मृगतृष्णेव निदाघवासरे । युवतीनयनाञ्जनवत्सदा, द्रुतकल्लोल इवाम्भसां निधौ ॥ ३ ॥ इह यन्म्रियते शरीरिभिः, प्रकृतिः सा विकृतिस्तु जीवनम्। स्थिरता यदि कापि लभ्यते, स तु लाभः किमु शोच्यतेतराम् ? ॥ ४ ॥ कुशकोटिगतोदविन्दुवत्, परिपक्वद्रुमपत्रवृन्तवत् । जलबुद्बुदवच्छरीरिणां, क्षणकं देहमिदं च जीवितम् ॥ ५ ॥ न गजैर्न हयैर्न रथैर्न जनैर्न भटैर्न साधनैर्न धनैः । न च बन्धुभिः स्वदेवैर्मृत्योः परिरक्ष्यते प्राणी ॥ ६ ॥ श्रुत्वेति अभयोक्तानि सूक्तानि नागसुलसे गतशोके अभूताम् । इतः—चम्पापुर्यां भगवान् महावीरः समवासार्षीत् । तत्रानेके देवा राजानो धर्मं श्रोतुमीयुः । संसारसागरेऽपारे, जन्मकल्लोलसङ्कुले । दुर्लभं मानुषं जन्म, दृष्टान्तैर्दशभिर्भृशम् ॥ १ ॥ चुल्लग पासग धन्ने जूए रयणे य सुमिण चक्के य । चम्मजुगे परमाणू, दस दिट्ठंता मणुअजम्मे ॥ २ ॥ गोधूम इव धान्येषु, मेघाम्बु सलिलेष्वपि । स्वर्गद्रुः सर्वकाष्ठेषु, यथा धातुषु काञ्चनम् ॥ ३ ॥

सर्वकार्यकरः कामं, सर्वोत्कृष्टगुणाधिकः । भवेषु लक्षसंख्येषु, तथाऽयं मानुषो भवः ॥ ४ ॥ इत्यादि धर्मोपदेशं श्रुत्वा श्रीआम्बडपरिव्राजकः पूर्वप्रपन्नश्रावकधर्मः त्रिदण्डकुण्डिकाहस्तो धातुरक्तवस्त्रः शिखावृषीपीठधरः छत्रिकावारितातपो व्योमविद्याद्यनेकलब्धिधरः सर्वज्ञाज्ञाभृत् प्रभुं प्रणम्याह—भगवन्! मयाऽनेकेषु तीर्थेषु देवा नताः अधुना राजगृहे जिनान्नन्तुं यियासुरस्मि । यदि तत्र किमपि कार्यं भवति तदादिश्यताम् । प्रभुः प्राह—तत्र सुलसायाः सुश्राविकाया धर्मलाभः कथनीयस्त्वयाऽस्मदीयः । तथेति गदित्वा स मुनिः प्रभुं प्रणम्य चचाल । राजगृहोपान्ते गत्वा दध्यौ—यस्या गुणै रञ्जितो भगवान् धर्मलाभं प्रेषयति सा कीदृश्यस्तीति धर्मे परीक्षा करिष्यते प्रथमं, पश्चात् प्रभूक्तं कथयिष्यते मया। ततः पूर्वं सत्पात्रीभूय यतीभूय च सचित्तादिवस्तुयाचनेन परीक्षिता सुलसा । तदा न चलिता । ततो ब्रह्मरूपं कृत्वा पद्मासनस्थश्चतुराननः पूर्वद्वारे समेत्य मुनिः प्राह—अहं ब्रह्माऽस्मि । तदा ब्रह्माणमागतं श्रुत्वा सुलसां विना सर्वजनास्तत्र वन्दितुं समाययुः । दक्षिणस्यां विष्णुरूपे तेन कृते तत्र नागता सुलसा । पश्चिमायामीश्वररूपे कृतेऽपि तेन नागता वन्दितुं तत्र सुलसा । चतुर्थे दिने मुनिर्जिनेन्द्ररूपं विधाय स्वर्णरूप्यरत्नमयवप्रादिसमग्रजिनेन्द्रचिह्नधर उत्तरस्यां तस्थौ धर्मोपदेशं दातुम् ।

अहं साक्षात् पञ्चविंशतितमो जिनः समागाम्। तदा सुलसा दध्यौ—जिनाश्चतुर्विंशतिरेव भवन्ति, न पञ्चविंशतिः। अत एप कूटो जिनः। ततस्तत्रापि वन्दितुं सुलसा न गता। ततः पञ्चमे दिने श्रावकवेषं कृत्वा धौतिकवस्त्रधरः सुलसागृहे यावन् मुनिर्ययौ तावत् सुलसा तमागच्छन्तं दृष्ट्वा हृष्टा सम्मुखं गत्वा सादरं वन्दामीति मिथो जल्पतस्तौ। आसनमुपवेशनाय वितीर्य सुलसा जगौ—भवतः समाधिरस्ति?। तेनोक्तं—देवगुरुपादप्रसादैः। मया श्रीशत्रुञ्जयादितीर्थेषु यात्रा कृता। चम्पायामहं गतः। तत्र श्रीवर्द्धमानो जिनो वन्दितः। धर्मोपदेशः श्रुतः। भगवता प्रोक्तं—त्वया राजगृहे सुलसायाः श्राविकाया धर्मलाभः कथनीयः। एतच्छ्रुत्वा सुलसा समुत्थाय भक्त्या क्षमाश्रमणपूर्वं प्रभुं वन्दते स्म, स्तौतीति च—मोहमल्लबलमर्दनवीर, पापपङ्कगमनामलनीर। कर्मरेणुहरणैकसमीर, त्वं जिनेश्वरपते जय वीर!॥ १ ॥ देवदानवनरेश्वरवन्द्य, चालिताचलसुराचलशृङ्ग। केवलाक्षिकलिताखिलविश्व, रूपनिर्जितजगत्त्रयवीर ॥ २ ॥ वर्द्धमान जनपावननाथ, पादपीठलुठितामरनाथ!। तावकीनपदपङ्कजसङ्गं, मौलिसद्मनि करोमि सरङ्गम्॥ ३ ॥ ये तवांघ्रिरजसा जनिताङ्का, भालपट्टतिलके विकलाङ्काः। स्वीकरोति न भवोऽपि नरांस्तानङ्कशङ्कित इवाधिनिरस्तान् ॥ ४ ॥ यज्जिनेन्द्रपदपङ्कजमूले, लोलुठीति सततं शिवकूले। उत्तमाङ्ग-

मवृथार्थमविघ (घं) तद्वदन्ति विबुधा भुवि वन्द्यम् ॥ ५ ॥ येः प्रसूनलतिकाभिरिहाङ्गमङ्कयन्ति तव देव सुचङ्गम् । चामराणि नियतं विलसन्ति, तत्पराणि तत्पुरो विकसन्ति ॥ ६ ॥ यो जिनाधिप ! पूजनमत्र, प्रातरेव विदधाति पवित्रः । पूज्यतां स लभतेऽत्र परत्र, सर्वदैव च नृपेषु विशिष्टाम् ॥ ७ ॥ त्रैशलेयचरणाम्बुजशेषां, ये वहन्ति शिरसा हृतदोषाम् । आतपत्रममलं किल तेषां, मस्तकोपरि विभाति समेषाम्॥ ८ ॥ इत्यादि श्रीवीरजिनं स्तुत्वा सोदरतुल्यभक्त्याऽन्नपानादिविश्राणनेन सादरमम्बडं भोजयामास सुलसा । ततश्चाम्बडस्तत्र जिनान्नत्वाऽन्यत्र चचाल । सुलसा निरन्तरं श्रीवीरजिनस्य त्रिकालमर्चां कुर्वाणोभयकालं प्रतिक्रमणं तन्वाना सत्पात्रेषु दानं ददाना षष्ठाष्टमादितपःकरणपरा निजं वपुः निष्पापं चकार । ततः सुलसा श्रीशत्रुञ्जयादिषु यात्रां चकार विस्तरतः । नागोऽपि विशेषतः शुद्धं श्रीजिनधर्म्मं करोति । अथ सुलसा प्रान्तसमयमवगत्य गुरुपार्श्वे कृताञ्जलिः प्राह—भगवन् ! ममाराधनां कारयाधुना । ततो गुरुभिराराधना कारिता विस्तरात् । ततः सुलसा कृताराधना श्रीवीरजिनं हृदये स्मरन्ती स्वर्गलोकं जगाम । ततश्च्युता सुलसा अत्रैव भरतखण्डे भाविन्यां चतुर्विंशतौ निर्ममः पञ्चदशो जिनेन्द्रो भविष्यति । इति यः श्रीजिनेन्द्राणां कुरुते (आराधनां) स सुलसा श्राविकेव मुक्तिभाग् भवति । इति सुलसाचरित्रं समाप्तम् ॥१॥

वितीर्णं शुद्धपात्रेषु, दानं सद्भावपूर्वकम् । चन्दनाया इव श्राद्धा, वीरो मुक्त्यै भवेन्ननु ॥ १ ॥

तथाहि—अस्मिन् भरतखण्डे कौशाम्बी पुरी विद्यते । तत्रानेके जिनप्रासादाः शोभन्ते । तत्र शतानीको राजा न्यायाध्वना दानादिधर्मपरो राज्यं करोति स्म । तेन राज्ञा चेटकराज्ञः पुत्री मृगावती नाम्ना परिणीता । तस्य मन्त्री सुगोत्रोऽभूत् । तस्य प्रिया नन्दा नाम्न्यजनि । सा च श्राविका मृगावत्या सह मैत्रीं कुर्वाणा धर्मं करोति स्म । तत्र च धनावहनाम्ना श्रेष्ठी वसति स्म । तस्य पत्नी मूलाऽजनि । इतस्तत्र श्रीवीरजिनो विहरमाणः छद्मस्थः पौषकृष्णप्रतिपद्दिने समागात् । इतः प्रभुस्तत्राभिग्रहं लाति स्म । लोहनिगडितबद्धांघ्रिः १ मुण्डिता २ उपोषिता ३ रुदती ४ राजपुत्र्यपि प्रेष्यतां गता ५ देहल्यन्तरितैकपदा ६ निवृत्तायां भिक्षावेलायां ७ सूर्पकोणे ८ कुल्माषान् ९ ददाति तदा मया पारणकं कर्तव्यं, नान्यथा इति प्रभुर्वीरोऽभिग्रहं जग्राह । एवमभिग्रहं गृहीत्वा मध्याह्ने भिक्षाचर्यायां भ्रमतः प्रभोश्चतुर्मासी गता । अन्येद्युः प्रभुः भिक्षार्थं भ्रमन् कल्पद्रुरिव सुगोत्रमन्त्रिगृहे समागात् । तदा प्रभुं दुर्बलगात्रं शुद्धामपि भिक्षामगृह्णानं सुगोत्रमन्त्रिपत्नी नन्दा दृष्ट्वा हृष्टा भिक्षां दातुमभ्युत्तस्थौ । घृत-क्षीरखण्डाद्याहारं ददानां तामतिक्रम्य प्रभुरन्यत्र गतः । ततो नन्दा पत्युः पार्श्वे प्राह—प्रभुः कथं भिक्षां न गृह्णाति ?

कारणमत्र ज्ञायते यदि तदा वरम् । मन्त्री प्राह—अन्नं विना प्रभुर्मृतिं गमिष्यति । योऽभिग्रहः प्रभुणा गृहीतोऽस्ति स यथा तथा ज्ञातव्य एव । मृगावत्यपि प्रभुं भिक्षामगृह्णानं ज्ञात्वा प्रभोर्भिक्षां दातुं बहूनुपायान् करोति स्म । ततो मृगावतीनन्दे मिथः प्रीतिपरे प्रभुं पारणार्थं निमन्त्रयामासतुः । प्रभुर्यदा न गृह्णाति तदा द्वे श्राद्ध्यौ दुःखिन्यौ बभूवतुः । ततो राजा मन्त्री मृगावती नन्दा निरन्तरं भिक्षां दातुं प्रभवे उपचक्रिरे । ततस्तैर्ध्यातं जल्पितं च मिथः—प्रभुणा योऽभिग्रहश्चिन्तितोऽस्ति स कथं ज्ञायते ? । इतश्चम्पापुर्यां दधिवाहनो राजा राज्यं करोति स्म । दधिवाहनेन पद्मावती चेटकभूपपुत्री परिणीता । पद्मावत्या धारणीति नाम द्वितीयं कथ्यते । तस्य राज्ञश्चन्दनबालेति नाम्ना पुत्री बभूव । क्रमाच्छतानीकदधिवाहनभूपयोर्वैरं जातमभूत् । प्रच्छन्नं शतानीको राजा सर्वबलयुतः स्वपुरान्निर्गत्य चम्पां वेष्टयामास । ततो जायमाने महारणे रौद्रे मनुष्यसुभटेषु शतसंख्येषु पतत्सु दधिवाहनो राजा नष्टः सर्वराज्यं मुक्त्वा । ततः शतानीकेन भूपेन लुण्ठिता चम्पापुरी । तदैकेन पदिकेन दधिवाहनभूपस्य धारणीप्रियावसुमतीपुत्र्यौ गृहीते । कौशाम्बीनाथस्तत्र स्वाज्ञां प्रवर्तयित्वा पश्चाद्वले स्वपुरं प्रति । रथारूढे मातापुत्र्यौ द्वे धारणीवसुमत्यौ कृत्वा चचाल पदिकः । मार्गे गच्छन् सुभटो

जगौ—भो धारणि ! त्वं मम प्रिया भव । धारणी प्राह—रे अधम ! रे पापिष्ठ ! एवं किं त्वया प्रोक्तम् ?। अहं परस्त्री असि । परस्त्रीगमने पुरुषो नरकगामी भवति । यतः—"स्वाधीनेऽपि कलत्रे नीचः परदारलम्पटो भवति । सम्पूर्णेऽपि तटाके काकः कुम्भोदकं पिबति ॥ १ ॥ जं छन्नं आइरियं तइआ जणणीइ जुव्वणे समए। तं पयडिज्जइ इण्हिं सुएहिं सीलं चयंतेहिं ॥ २ ॥ अप्पउं धूलिहिं मेलिउं, सयणह दीधउं छार । पगि पगि मांथा ढांकणउं जिणि जोई परदार ॥ ३ ॥ विक्रमाक्रान्तविश्वोऽपि, परस्त्रीषु रिरंसया । कृत्वा कुलक्षयं प्राप, नरकं दशकन्धरः ॥ ४ ॥" तदा तेन पदिकेन तस्या धारिण्याः शीलभङ्गविषये अनेके प्रकाराः कृताः, परं तस्या मनो मनागपि न चलितम् । तदानीं तेनानुगेन शीलभञ्जनविषये बलं कुर्वता धारिण्या प्राणास्त्यक्ताः । तदा वसुमती मातृवियोगादेवं विललाप—हउ बांडी नइ छांडिउ नेह, भली माइ तूं भलउ सनेह । खण अधखण न फिरातउं घडी, हउं कां न मुई परहथि चडी ॥ १ ॥ वसुमती विलगी पाइ, जाइवा न हि देउ माइं। जिसी भावइ तिसो थाइ पुण, मूहइं लेई साथिइ जाइ ॥ २ ॥ इत्यादि। पुनः क्षणं भूमौ लुठित्वा पुनर्वसुमती रोदनं कुर्वती जगौ । पाणीतणइ वियोगिका, दम जिम फूटइ हीउं । तिम जइ माणस हुंति तो, साचउ सनेह पतीजीइ ॥ १ ॥ अतिवल्लहा मू-

आह, पाणी पापिणी निसरइ । जाणउं साचउ सनेह, जउ लोयणि लोही वहइ ॥ २ ॥ इत्यादि वसुमतीरोदनवचः श्रुत्वा पदातिको जगौ—भो मृगेक्षणे! किं मया कुवचनं जल्पितं?, भवितव्यताया अग्रतः को नु छुटति राजा वा रङ्को वा? । त्वं मा जानीहि इति अयं मां परिणेष्यति बलात् । मम त्वमतः परं भगिन्येव पुत्री वा त्वं मम । तदा पादातिक एवं पर्यवसाय्य तां धारण्याः शरीराद्धारादिश्रृङ्गारमादाय धारणीं रथाद्भूमौ चिक्षेप । ततः पादातिको यावता स्वगृहे समानीतवान् तदा गेहिन्येवं व्याजहार—केनेयं नारी अत्रानायिता, दृग्भ्यां द्रष्टुं मया न शक्यतेऽनयाऽऽगच्छन्त्या मम सर्वं गृहीतं, एषा यदि त्वया रक्ष्यते तदाऽहमात्महत्यां दास्यामि,यदि त्वयेयं छन्नमत्रानीता कोऽपि ज्ञास्यति राजा वा तदा तव सर्वस्वं राजा ग्रहीष्यति । अस्यामागतायां मम शीतं चटितम् । यदग्रतो रक्षिष्यसि ज्वरोऽपि चटिष्यति । तेनेयं गृहाद्बहिर्निष्कास्यतां त्वया । त्वं मा जानीहि एषा सर्वं सहिष्यति। अहमधुनैव भूपपार्श्वे गत्वा कथयिष्यामि। पुनरेवं तयोक्तम्—तुं लूसी आवीउ पराउ, छतेइ मारिसि तरखाइ काउ । ऊतर पडऊतर मनमाडि, जउ मइं काज तउ छोडी छांडि ॥ १ ॥ सउकिरूपि जउ आवइ दासि, तोइ न धीरउं आपण पासि । सउकिस रीसउं जइ आवइ राज, तिणि राजइं अम्ह नथी काज ॥ २ ॥

सउकिस रीसी कंचणकोडि, जहि दीसइ ते डोला फोडि। थोडउं घणुं लहु इनु विकि, नहीतर वेगिइं छोडी मुंकि
॥ ३ ॥ इति प्रियावचः श्रुत्वा कम्पमानतनुर्गृहे पादातिको बहिर्गृहे राजपुत्रीं निनाय । ततः प्रियातो बिभ्यत्
(भाय) पादातिकः। स्त्रीरत्नं विक्रेतुं राजपथे पादातिको निनाय । तदा अनेके लोकास्तां लातुं मिलिताः। वेश्या
अपि स्त्रियं वर्यामागतां विक्रेतुं श्रुत्वा ग्रहीतुं तत्राययुः । तदा काचिद्वेश्या एवं जगौ—अस्माकमग्रे को ग्रही-
ष्यति तां स्त्रियम् ?, यावन्मात्रं धनं मार्गयिष्यति तावदस्माभिरर्प्पयित्वा सा ग्रहीतव्या । तदा बहवो लोका
वेश्याश्च तां ग्रहीतुमागताः सत्यवन्यमक्षिका इव मधु वेष्टयामासुः। वृद्धा वेश्या जगौ—रत्नादि यत्तव विलोक्यते
तन्मार्गय इयमस्मभ्यमर्प्यताम् । कलकलाट जां लगइ न होइ. रणि राउल गति न जाणइ कोइ । तां लगइ रहा
विलवइ जिम, किम्हइ अवर न भोलवइ ॥ १ ॥ पादातिको जगौ—पञ्चशतं दीनाराणामर्प्पय इमां गृहाण । श्रुत्वै-
तद्वेश्या हृष्टा । एकस्या एकस्या अग्रे रहः कथयन्ति ता वेश्या मिथः—नवलक्षं सुवर्णानामेतस्या नख एको लभते।
मूल्यमल्पमेतदर्प्यते मयेति ब्रुवाणा अबलां वेश्या बाहौ दधार । तदा राजपुत्री पप्रच्छ—युष्माकं किं कुलं? किं
क्रियते युष्मत्कुले? किं यूयं ब्राह्मण्यः? अथवा किं वणिजः? । तदा जगुर्वेश्याः—किं तव कुलेन?, अस्माकं

गृहे वर्याणि पट्टकूलानि परिधीयन्ते ताम्बूलं भक्ष्यते । अस्माकं यादृग् भोजनादि वर्तते तादृग् राजगृहे भूपपत्नीनामपि नास्ति । एतच्छ्रुत्वा तया स्त्रियोक्तं—ज्ञातं तव कुलं वेश्या इति । अहं नायास्यामि भवत्कुले । यदा ताभिर्बलात्कारः कृतः तदा वसुमती एवं दुःखं धत्ते । तउ वसुमती दोहिलउं धरइ, तउ तीहां सील सखायत करइ । जे बहु बोली तेह तू काक, तेहनू दैवी ऊदाल्यूं नाक ॥ १ ॥ जां जोइ तां नाकज नही, बोल बोलंतां झबकइ रही । काली जिसी हूई डूंबडी, हसइ लोक पाडइ बूंबडी ॥ २ ॥ बीजी नासइ करती सान, आवि आवि हवे जासिइं कान । एक लोकपायक नइं खलइ, बीजी वेस पूंठि किलकिलइ ॥ ३ ॥ चालि चालि करति घरि गई, भूडी छोडी भनइं नवि लइ । कलरव कोलाहल अतिघणउ, अवसर टलिउ वेकावा तणो ॥ ४ ॥ तदा एकस्या नासिका गता, एकस्याः कर्णौ गतः । ततो नंष्ट्वा वेश्या गताः । ततोऽन्यस्मिन् चतुष्पथे पादातिको गतः । तत्र धनावहः श्रेष्ठी समागतस्तां ग्रहीतुम् । तया पृष्टं—तव गृहे किं क्रियते ?, धनावहो जगौ—अस्माकं कुले देवो जिनः पूज्यते, चारित्रिणः साधवः सेव्यन्ते, जैनोक्तो धर्मः श्रूयते, जीवदया पाल्यते, महामन्त्रो नवकारो जप्यते । जिणि तूठइं तरीइ संसार, त्रिणि वार पाणी गालीइ । दीजइ दान शील पालीइ, तप की ज

इ भावना भावीइ ॥१॥ साते खेत्रे धन वावीइ, विदल माहि नवि लीजइ दहीं। अठाणुनूं नामज नही, निसि
भोजन नवि कीजिइ माइ ॥ (मांस सुरा मधु मांखण, घरि कोइ न खाइ)॥२॥ एतच्छ्रुत्वा वसुमती हृष्टाऽवग्—भो पादा-
तिक! यदि मां विक्रेष्यसि तदाऽस्मै देहि त्वं, ततस्तेन पादातिगेन धनावहाय श्रेष्ठिने दत्ता धनेन। ततो यावद्
धनावहः श्रेष्ठी तां गृहीत्वा गृहे गतः। सुकर्मवशतः सुस्थाने चन्दनाऽगात्। यतः“—विहि विहडावइ विहि घडइ,
विहि घडिउं भंजइ। इम्हइ लोअ जु तडफडइ, जं विहि करइ स होइ ॥ १ ॥” तदा तां दृष्ट्वा तस्याः प्रिया मूला
चकिता। धनावहेन चन्दनबालेति नाम प्रोक्तम्। श्रेष्ठिनोक्तं—अस्याः पुत्र्याः पालने यत्नः कार्यस्त्वया। तदा
मूला दध्यौ—एष मम पतिरपरां स्त्रियं परिणेतुं एतामानीतवान्। अधुना जल्पति इयं पुत्री—पापीइ पति अखत्र
नवि गणइ, मनि मइलओ मुखि बेटी भणइ। सीअलउं बोली देसीइ दाघ, डोकरिनइ घरि पयठउ वाघ॥ १ ॥
दूध नीम लीधउं मंजारि, उंदरिसरसी मंत्री हारि। एह वात जइ साची होइ, ए बेटी नवि मानइ कोइ॥ २ ॥
हुं पडती ए चडती वेस, मुज माथइ हूआ करडा केस। वडपणतणी विणासणहारि, संतापती सउकि घरबारि
॥ ३ ॥ हउं आगइं जीभइ आपणी, पीहरि सविहं अलखामणी। कोइ न पावे पाणी पली, बेइ भव गिया

हिव निश्चिइं वली ॥ ४ ॥ एह कारणि वेचउं जेतलउं, मूं परणातां न लागइ तेतलउं। सिता नाकि राइ च पलुइ, नू सडि आज मूलानइ हुइ ॥५॥ अधुना यदि किमप्युच्यते तदा श्रेष्ठिनो न रोचिष्यते। एकवारं यद्यहमवसरं लप्स्ये तदाऽहमिमां मारयिष्यामि । सा मूला शून्यचित्ताऽजनि । एकदा मूलायां प्रातिवेश्मिकागृहे गतायां श्रेष्ठी गृहे समायातः । तदा तातमासने उपवेश्य चन्दनबाला विनयपूर्वं तातपादौ प्रक्षालयितुं लग्ना । तदाऽकस्मान्मूला गृहे समागता। चन्दनबालां धनावहश्रेष्ठिपादौ प्रक्षालयन्तीं वीक्ष्य श्रेष्ठिनं तद्वेणीं भूमौ लुठन्तीं स्वोत्सङ्गे नयन्तं च वीक्ष्य दध्यौ–एषा श्रेष्ठिपदौ एवं प्रक्षालयति, अस्याः पार्श्वादेवं च वेणीं समारयति, तदा ज्ञायते मां कर्षयित्वाऽथवा विषेण मां हत्वा अस्याः पाणिग्रहणं करिष्यति। मूला दध्यावेवम्–ऊगंती विसवेलडी, नखहिं न छेदी जेहिं। ते मूरख मूला भणइ, तउरितु न समाधिउं जेहिं ॥ १ ॥ फोडी नाम जु सीअला, विसहज महुरउं नाम। सउकिज नामि बिहनडी, ए त्रिन्हि खइ जाउ ॥ २ ॥ श्रेष्ठी प्रातर्हट्टे गतः, मूलया नापितस्तदाऽऽकारितः। प्रोक्तं च–अस्या मस्तकं भद्रीकुरु। ततस्तेन चन्दनबालाया मस्तकं भद्रीकृतम्। ततो निगडानि पदयोः क्षिप्त्वा तां गर्भगृहे मूला च रहश्चिक्षेप, तालुकं च तदा ददौ । ततो दध्यौ मूला–सउकि मारी केहु दोस, सउकि सरइ

तु हुइ संतोष। सउकि तणा नवि लागइ गोज्झ, राषइ सउकि ते माणुस रोज्झ ॥ १ ॥ गोरी पुछइ सुगुणजण, ऊभी रायह चउकि । जयको जाणइ ते कहतु, सूला भली कि सउकी ? ॥ २ ॥ सूली एकह कट्ठडउ, सउकी अणंता कट्ठ। नितु मरइ नितु मारीइ, पगि पगि हियडा हट्ठ ॥ १ ॥ तदा चन्दनबाला अपवरके स्थिता दध्यौ—मम वीतराग एव शरणं । मम चैवंविधं कर्म समायातं दुष्टं, यतः—नयर भंगिहउं पाइक लिइ, मारगि वहतां माडी मुइ । ढोर तणी परि मांडी पीठ, वेस विसाहण आवी दीठ ॥ १ ॥ एक वात पणी रूडी हुइ, दोहिलउं छइ पणि तेहि न लइ । निवरुं थानक पामिउं आज, करसिउं धर्म्मध्याननूं काज ॥ २ ॥ जाणइ नहीं दिवस नइ रयणि, झरतउ नीर निवारइ नयणि । चन्दन महामंत्र मनि जपइ, तिहु उपवासे करमज खिपइ ॥ ३ ॥ तत्र स्थिता चन्दनबाला दिनं रात्रिं च न जानाति ॥ इतो धनावहः श्रेष्ठी गृहे समागतः पप्रच्छ पत्नीं—भो पत्नि ! पुत्री कुत्र गता ?, [श्रेष्ठी जगौ—]चन्दनां विना कथं मया भोजनं क्रियते ?। मूला जगौ—छोकरडी वीसावी काय, घडीय इक न रहइ बाहरि पाय । कुण जाणइ ए किहां डमडमइ, कुण जाणइ किहिं सरसी रमइ ॥ १ ॥ आवइं छइ छोडाउं घणा, उलखिसिइं कोइ एहउ तणा । सगु सणीजउ लेई जाइसि, माहरइ वाहर कोइ धाइसि ॥ २ ॥ तुम्ह मनि

छोकरडीनउ सोग, अम्ह आपणा अरथनउ ऊजोग। एतलउ सोनउं आपत व्याजि, वरिसिहिं बिमणउं आवत काजि ॥ ३ ॥ धनावहः श्रेष्ठी जगौ—यदि कुमारी न लप्स्यते तदा मयाऽनशनं ग्रहीतव्यम्। तदा एकान्ते एकया वृद्धया दास्या धनावहस्याग्रे प्रोक्तम्—गहिला गामट मूढ गमार, चन्दन मुइ किसी करइ सार। कही वार जीवत जइ होइ, तउ तूं इणइ उरडइ जै जोइ ॥१॥ श्रेष्ठी जगौ—भो दासि! त्वमुत्तमे एवं वदन्त्यसि। तत्कालं तालकं भंक्त्वा यावत् श्रेष्ठी त्वरितमपवरकमध्ये गतः सन्नन्धकारवशाच्चन्दनामपश्यन् शब्दयामास रोदिति च। दीपकरणाच्चन्दनां वीक्ष्योत्सङ्गे लात्वा च श्रेष्ठी प्राह—भो पुत्रि! किं त्वं ममोत्तरं न ददासि?। तदा चन्दनां विहितोपवासत्रयामुत्पाट्य भोजनदानाय पट्टशालायामानीतवान् उम्बरपार्श्वे। इतो मूला सर्वमन्नं गृहमध्ये मुक्त्वा तालकं दत्त्वाऽन्यत्र ययौ। तदा श्रेष्ठी तालकं दत्तं गृहे दृष्ट्वा व्याकुलः प्राह दासीं प्रति—यदन्नं भवति तदानीयताम्। अस्याः क्रमात् मरणं भविष्यति। तदा दास्या दर्शितान् कुल्माषान् सूर्पके क्षिप्त्वा श्रेष्ठी पारणार्थं पुत्र्यै महानसादानीय ददौ। तदाऽष्टमतपःपारणे चन्दनबाला अतिथिसमागमं यावद्वाञ्छति तावद् भगवान् श्रीमहावीरो द्रव्यतः कुल्माषान् सूर्पकोणकस्थितान् क्षेत्राद्देहल्यामेकपादमारतः एकपादं परतः कृत्वा कालतो भिक्षा-

निगडिता रुदती मुण्डितमस्तका अष्टमभक्तिका कापि मह्यं
वेलायां व्यतीतायां भावतो राजपुत्री दासत्वमापन्ना भिक्षार्थं गृहे गृहे
भिक्षां दास्यति तदा मया भिक्षा ग्राह्येत्यभिग्रहं गृहीत्वा गोचरचर्यायां [श्रीवर्द्धमानजिनो] कुल्माषपूर्णसूर्पकहस्ता
भ्रमति स्म। एवंविधाभिग्रहवन्तं श्रीवीरजिनं तत्राकस्मादागतं वीक्ष्य हृष्टा चन्दनबाला तुष्टाव—भगवन्! जग-
निगडिता मुण्डितमस्तका एकं पादमुम्बराद्बहिर्दधाना द्वितीयं पादमुम्बरान्मध्ये दधाना शुद्धमन्नमिदं
तीवन्ध्य, स्वर्गापवर्गसौख्यद। निर्जिताशेषभावारे, विजयस्व चिरं प्रभो!॥ १॥ प्रसद्य चापि देवेश, कुल्माषान्
स्फुटम्। गृहाण मां (द्राक्) कुरुष्व त्वं, कृतार्थां मां हि साम्प्रतम्॥ २॥ प्रभुस्तदा स्वमभिग्रहं पूर्णं वीक्ष्य पदयोरन्तर्गतां
जग्राह। पृथ्वीनाथसुता भुजिष्यचरिता जर्जरिता (निर्यन्त्रिता) मुण्डिता, सीदन्ती च तथा विधाय महाभिग्रहः
देहलीम्॥ कुल्माषान् प्रहरद्वयव्यपगमे सूर्पस्य कोणे स्थितान्, दद्यात् पारणकं तदा भगवतः सोऽयं स्वर्णी-
॥ १॥ यदा प्रभुणा भिक्षा गृहीता तदा देवैरभ्येत्य द्वादशकोटिस्वर्णवृष्टिः कृता। तदा लोहनिगडानि प्राप।
भूतानि। देवदुन्दुभयो देवैर्वाद्यन्ते। तदा शतानीको राजा तत्रागतो दृष्ट्वा देवकृतां रत्नवृष्टिं चमत्कारं यत्प्रभुर्मया
राजा जगौ—इयं स्वर्णवृष्टिरस्याश्चन्दनबालाया भवतु। तदा चन्दनबाला जगौ—मदीयमथ भाग्यं वर्तते

पारणां कारितः । मूलापि धन्या । चन्दनबाला बोलइ तीणइ ठाइ, मूलादेवी अम्हारी माइ । धारणी तूठी तउ नवि कीधा, मूला दीठइ काज मुज सीधा ॥ १ ॥ पहिलुं सतानीक धुरि राय, पाछेइ पाइकतणउ पसाउ । जु विकत वेश्यानइं हत्थि, तउ हुं किम लागत परमत्थि ? ॥ २ ॥ धनावह पहला भवनो बाप, जेह पसाइं नाठउं मुझ पाप । मूलातणउ घणउ उपगार, चन्दन मागइ संजमभार ॥ ३ ॥ मूलादेवी मदीया सत्या माता यया एवं कृतम् । यदि एवं नाकरिष्यत् तदा भगवन्तं कथमपारयिष्यम् ? । धनावहोऽपि मम सत्यो धर्मपिताऽभूत् । ततः महावीरस्तत्र पारणकं पञ्चदिनोने षण्मासे जाते चकार । चन्दण भणइ जो मागिउं होइ, तउ मूला मत दूहवउ कोइ । सासणदेवि आपइ आसिका, मूला थइ परमश्राविका ॥ १ ॥ ततो मूलापि तया चन्दनया मानिता । यतः—“उवयारइ उवयारडउ, सव्वो लोअ करेइ । अवगुण कीधइ गुण करइ, विरलउ जणणि जणेइ ॥ २ ॥” प्रभुस्त्वन्यत्र विहारं चकार । क्रमात् सर्वकर्मक्षयात् प्रभुः केवलज्ञानं प्राप । तदा चन्दनबाला समेत्य प्रभुं प्रणम्य संयमं ययाचे । ततश्चन्दनबालया देवदत्तां श्रियं सप्तसु क्षेत्रेषु वपित्वा दीक्षा जगृहे । एकदा श्रीमहावीरः कौशाम्ब्यां समवासार्षीत् । तदाऽनेके देवा नृपाः साधवः साध्व्यः श्रावकाः श्राविकाश्च धर्मं श्रोतुमाजग्मुः । तदा

प्रभौ धर्मोपदेशं दिशति चरमपौरुषीव्याख्याने सहजविमानस्थौ चन्द्रसूर्यौ तत्रागतौ। सन्ध्यां पतितां ज्ञात्वा चन्दनाऽभ्युत्थाय पुरमध्ये उपाश्रयं गता। मृगावती वेलामजानती तत्रैव तस्थौ। चन्द्रसूर्ययोः स्वस्थाने गतयो-रन्धकारं वीक्ष्य मृगावती समुत्थायोपाश्रयं ययौ। इतश्चन्दनया पौरुषीं भणित्वा संस्तारितम्। मृगावती तु चन्दनायाश्चरणसंवाहनां कुर्वाणा स्वकृतं कर्म निन्दन्ती मिथ्यादुष्कृतं ददाति। अतः प्रभृति मयैवं न कर्तव्यम्। तदा चन्दना रुष्टोत्तरमपि न दत्ते। स्वमात्मानं निन्दन्त्या मृगावत्याः केवलज्ञानमुत्पन्नम्। तदा कृष्णं सर्पमाप-तन्तं दृष्ट्वा मृगावती चन्दनाया हस्तमुत्पाट्यान्यत्र मुमोच। तदा रुष्टा चन्दना जगौ—उत्तिष्ठेतः स्थानादन्यत्र गच्छ, मम हस्तं कथमुत्पाटयसि ?, मृगावत्योक्तं—सर्प आगच्छति। चन्दनयोक्तं—कथं ज्ञातं त्वया ?, मृगावती जगौ—ज्ञानेन। चन्दनयोक्तं—किं ज्ञानं प्रतिपाति अप्रतिपाति वा ?, तयोक्तम्—अप्रतिपाति। ततोऽभ्युत्थाय मिथ्यादुष्कृतं ददानायाश्चन्दनबालाया अपि केवलज्ञानमुत्पन्नं। ततो द्वे अपि मुक्तिं गते। इति चन्दनबालाकथा समाप्ता ॥ २ ॥

मनोरमाकथा सुदर्शनश्रेष्ठिकथाया ज्ञातव्या ॥ ३ ॥

**पालयन्ति सदा शीलं, मुक्त्यादिसुखदायकम्। भव्या मदनरेखावत्, मनसा वपुषा गिरा ॥ १ ॥**

तथाहि—भरतखण्डभूषणे सुदर्शननामपुरे मणिरथो राजा राज्यं कुरुते स्म । तस्य लघुर्भ्राता युवराजो युगबाहुरभूत् । तस्य प्रिया सुशीला मदनरेखाऽजनि । तस्या रूपश्रियं सर्वोत्कृष्टां वीक्ष्य मणिरथो मोहितो दध्यौ इति स्वचेतसि—इयं मदनरेखा मया ध्रुवं ग्राह्यैव । यद्यनया न रंस्यते तदा मम जन्म निष्फलं भविष्यति । ततो यदा यदा वर्यपुष्पताम्बूलवस्त्राभरणादीनि वस्तूनि मदनरेखायाः प्रलोभनाय प्रेषयामास दास्या हस्ते तदा तदा सा ज्येष्ठस्यायं महाप्रसाद इतिकृत्वा मस्तके मणिरथोक्तमङ्गीकरोति स्म । अन्यदा भूपप्रहिता दासी तत्र मदनरेखापार्श्वे गत्वा प्राहेति—भद्रे ! तव गुणग्रामासक्तो मणिरथो नृपस्त्वां भोगाय वाञ्छति मन्मुखेन (च) जल्पति । तदा दासीवचोवज्राहता राज्ञी जगाद तां प्रति—अन्यास्वपि गणिकादिनारीषु नोपैति वधूं जनः । यदि स्त्रीणां शीलगुणो न भवति तदा काञ्जिकं क्वथितमिव सा स्यात् । अग्रे स्त्रीजुगुप्सा । यदि शीलभङ्गं स्त्री करोति तदा नरकपातो भवति । यतः—अणंताउ कम्मरासीउ, जया उदयमागया । तया इत्थित्तणं पत्तं, सम्मं जाणाहि गोयमा ! ॥१॥ एवंविधेष्वन्तःपुरेषु सत्स्वपि कोऽन्यो मूढोऽन्यां स्त्रियमिच्छति नरकगामी ? । मम भर्तरि जीवति यो मां भोक्तुमिच्छति स नूनं मृत एव । यदि वा बलात्कारः करिष्यते तेन तदा मया शरीरदानस्थानेऽस्मै प्राणा

एव दातव्याः । उत्तमास्तु इहामुत्र विरुद्धं नाचरन्ति । यतः—"जीवघातादलीकोक्तात्, परद्रव्यापहारतः । परस्त्रीकामनेनापि, व्रजन्ति नरके गतिम् ॥ १ ॥ परस्त्रीग्रहणे वाञ्छा, न कार्या भूभुजा क्वचित् । यतो भूपानुगा लोका, भवन्ति जगतीतले ॥ २ ॥ इत्याद्याकर्ण्य दूती पश्चाद्भूपोपान्ते गत्वा मदनरेखोक्तं सर्वं कथयामास । तया वार्तया विशेषतो राजा कामातुरस्तां मदनरेखां भोक्तुं दध्यौ मणिरथः । युगबाहौ जीवति मयेयं नाङ्गीकर्तुं शक्यते। ततः आदावुपायेन युगबाहुं हन्मि । पश्चादहं मदनरेखामङ्गीकरिष्यामि । एवं ध्यात्वा लघुभ्रातरं मणिरथोऽनिशं हन्तुं वाञ्छति। छिद्राणि सदा विलोकयति । इतः—अन्यदा मदनरेखया स्वप्ने पूर्णेन्दुर्दृष्टः। ततस्तया भर्त्रे स्वप्नो निवेदितः। युगबाहुः प्राह—तव चन्द्रतुल्यः पुत्रः सौम्यगुणो भविष्यति । क्रमात्तस्यास्तृतीये मासे दोहद इत्यभवत्—जिनेन्द्राणां पूजां करोमि, गुरून् प्रतिलाभयामि, धर्म्मकथां शृणोमि करोमि श्रावयाम्यन्यम् । यतः—यादृशो जायते गर्भे, जीवो वृष्यवृषोऽप्यथ । तादृशो मातुरेव स्या—न्मनोरथः स्वमानसे ॥ १ ॥ अन्येद्युर्युगबाहुः सप्रियो वसन्तसमये उद्यानवने क्रीडायै ययौ । जलादिक्रीडां कृत्वा रात्रौ कदलीगृहे युगबाहुः स्मृतनमस्कारः सुप्तः । इतो—मणिरथो युगबाहुं स्वल्पपरिवारं रात्रौ तत्र स्थितं मत्वा तं भ्रातरं हन्तुमेकाकी

खड्गसखा वने ययौ । रहो मद्भ्रातुरेकाकिनोऽत्र वने स्थातुं न युक्तमिति वदन् राजा कदलीगृहे गतः । युगबाहुस्तत्क्षणात्तत्र भ्रातरमागतं दृष्ट्वा समुत्थाय विनयपूर्वं नतिं चकार । ततो मणिरथः स्वकल्पितवार्तां कुर्वन् खड्गमाकृष्य सहोदरं हतवान् । तदा मदनरेखया कलकले कृते सुभटास्तं हन्तुं यावदाययुः तावत् खड्गेन भ्रात्रा हतोऽपि युगबाहुराह—भो भटा ! मा घ्नन्तु मा घ्नन्तु मम सहोदरम् । यतोऽस्य भ्रातुर्न दूषणं । मम प्राचीनकर्मैव समागतम् । मणिरथो हृष्टः स्वमनीषितकार्यं सिद्धमिव मत्वा गृहे ययौ । तत्राकस्मात् सर्पेण दष्टः । यतः—“अत्युग्रपुण्यपापानामिहैव फलमाप्यते । त्रिभिर्मासैस्त्रिभिः पक्षै—स्त्रिभिर्यामैस्त्रिभिर्दिनैः ॥ १ ॥” युगबाहुपुत्रश्चन्द्रयशआह्वो व्रणचिकित्सार्थं चाययौ । इतः—श्वसन्तं पतिं मदनरेखा जगौ—भो पते ! खेदोऽधुना मनाग् न कर्तव्यः । जीवाः कृतकर्म्मणः सकाशान्न छुट्यन्ति । यतः—“यद्येन विहितं कर्म्म, भवेऽन्यस्मिन्निहापि वा । वेदितव्यं हि तत्तेन, निमित्तं तु परो भवेत् ॥ १ ॥ गृहाण धर्मपाथेयं, कायेन मनसा गिरा । यत् कृतं दुष्कृतं किञ्चित्, तत्सर्वं गर्ह संप्रति ॥ २ ॥ शत्रौ मित्रे सुते पुत्र्यां, मणौ दृषदि सर्वथा । मोहः सद्भिर्न कर्तव्योऽनन्तसंसारदायकः ॥ ३ ॥” ततः आराधना समग्रापि मदनरेखया स्मारिता पतिम् । युगबाहुना तदा सम्यगाराधना श्रद्दधे । तथाहि—यश्च

तिर्यक्त्वे सति मित्रममित्रं मे, स्वजनोऽरिजनोऽपि वा । तं क्षमयस्व तस्मै च, क्षमस्व त्वमपि स्फुटम् ॥ १ ॥ ये त्वया स्थापिता दुःखे, सर्वांस्तान् क्षमयाधुना । क्षमस्व त्वमपि तेषां, मैत्रीभावमुपागतः ॥ ३ ॥ व्याधिजन्मजरामृत्यु-ग्रस्तानां प्राणिनामिह । विना जिनोदितं धर्मं, शरणं कोऽपि नापरः ॥ ५ ॥ सर्वेऽपि जीवाः स्वजना, जाताः परजनाश्च ते । विदधीत मनोऽग्रे कः, कः प्रतिबन्धमेकदा ? ॥ ६ ॥ एक उत्पद्यते जन्तुरेक एव विपद्यते । सुखान्यनुभवत्येको, दुःखान्यपि स एव हि ॥ ७ ॥ इत्याद्यनित्यतादिभावनातस्त्वं धीरो भव, कातरत्वं मा कुरु । यतः-"न सा जाई न सा जोणी, न तं ठाणं न तं कुलं । न जाया न मुआ जत्थ, सव्वे जीवा अणंतसो ॥ १ ॥ एगोऽहं नत्थि मे कोई, नाहमन्नस्स कस्सई । एवमदीणमणसो, अप्पाणमणुसासइ ॥ २ ॥" इत्यादि प्रियावचः श्रृण्वन् युगबाहुः शुभध्यानपरायणो विपद्य ब्रह्मलोके देवोऽभूत् । ततश्चन्द्रयशास्तत्रागतो युगबाहुं मृतं दृष्ट्वा भृशं रुरोद । मदनरेखाऽपि चिरं रुदित्वा दध्यौ-धिगस्तु मां याऽहं पत्युर्मरणे हेतुरभूवम् । भर्ता तु मृतः । स्त्रियास्तु पतिरेव शरणं । मणि-

रथो दुष्टो मां प्रातर्ग्रहीष्यति । मम च कोऽपि रक्षिता नास्ति । अतः परं मया यथा तथा शीलं स्वर्गापवर्गसुखदं रक्षितव्यमेव । इति ध्यात्वा मदनरेखा प्रच्छन्नं निर्ययौ ततः स्थानात् । द्वितीयेऽह्नि मदनरेखा महाटव्यां गता । तत्र कस्मिंश्चिज्जलाशये पयः पीत्वा मदनरेखा कदलीगृहे सुप्ता । तत्र स्थिता मदनरेखा सप्तमे दिने पुत्रमसूत । प्रातः कम्बलरत्नेन वेष्टयित्वा शिशुं तस्य करे च युगबाहुनामाङ्कितमुद्रिकां क्षिप्त्वा तत्र च तं छायायां मुक्त्वा सरसि चीवराणि प्रक्षालयितुं गता मदनरेखा । तत्र पयोमध्ये प्रविष्टा सती मदनरेखा जलहस्तिना शुण्डया गृहीत्वा व्योम्नि उच्छालिता । तदानीं नन्दीश्वरतीर्थयात्राप्रस्थितेन खेचरेण नभसः पतन्ती राज्ञी जगृहे । स खगस्तद्रूपमोहितस्तां वैताढ्यं निनाय । खगेन रुदनकारणं पृष्टा मदनरेखा स्वसम्बन्धं प्राहेति । यतः स्थानादहमत्र त्वयाऽऽनीता तत्राहं पुत्रमसविषि । तं पुत्रं कदलीगृहे मुक्त्वा तत्र जलहस्तिनाऽऽकाशे उच्छालिता तव हस्ते चटिता-ऽहम् । स बालो मां विना तत्रस्थो मरिष्यति । प्रसादं कृत्वा तमत्रानय, अथवा मां तत्र नय । खगोऽवग्—यदि त्वं मां भर्तृत्वेन प्रतिपद्यसे तदाऽहं तव किङ्करो भवामि । आलम्बनं विना शीलं पालयितुं न शक्यते इति ध्यात्वा मदनरेखा जगौ—तं पुत्रमत्रानय । खगोऽवग्—अहं तु वैताढ्यपर्वतस्थरत्नावहपुरेशस्य मणिचूडविद्याधरस्य पुत्रो

मणिप्रभाभिधोऽस्मि । वैराग्यवासितो मत्पिता मां राज्येऽभिषिच्याग्रहीच्च संयमं चारणर्षिसन्निधौ। क्रमात्स मत्पिता
यतिर्विहरन्नत्रागत्यातीतवासरे नन्दीश्वरे देवान्नन्तुं गतोऽस्ति। तमनु गत्वा पश्चादागच्छता मया त्वं दृष्टा । तेन
त्वं पत्नी भव मम । सर्वखेचरीणां स्वामिनी त्वं भव । प्रज्ञप्त्या विद्यया तव पुत्रस्य स्वरूपं ज्ञातं मया । मिथि-
लापुरीपतिना पद्मरथेन भूपेन तुरगापहृतेन तव पुत्रो वने दृष्टः । स्वपुरे समानीय पद्मरथेन स्वप्रियायाः पुष्प-
मालायाः समर्पितश्च । तया स्वपुत्रवत्पाल्यमानोऽधुना सुख्यस्ति बाढम्। ततस्त्वं प्रसन्नीभूय मम राज्यमङ्गीकुरु।
तत् श्रुत्वा राज्ञ्या ध्यातं—अहो कर्मेदृशं प्रतिकूलमागसत् मम यतो व्यसनपरम्परा मम पुनर्ढौकते। तावच्छील-
रक्षार्थमियद्दूरमत्रागाम्। अत्रापि सङ्कटे पतिताऽस्मि । तन्मया नियमादुपायेन शीलं रक्षितव्यम्। अयं कामेन
पीडितः खेचरः कृत्याकृत्यं न वेत्ति। ततो व्याक्षेपः कोऽपि मया छलेन क्रियते। ततः सा जगाद—प्रसद्य मां
नन्दीश्वरे नय। तत्र देवा मया नम्यन्ते। पश्चात्त्वदुक्तं मया करिष्यते। ततस्तुष्टेन खगेन नन्दीश्वरे क्षणान्नीता
सा। तत्र सा मदनरेखा शाश्वतानि चैत्यानि वन्दते स्म।—चत्वारोऽञ्जनशैलेषु, दधिमुखेषु षोडश। द्वात्रिंशच्च
रतिकराभिधानेषु जिनालयाः ॥ १ ॥ योजनानां शतं दीर्घाः, पञ्चाशद्विस्तृताश्च ते । द्विसप्तत्युच्छ्रिताः सर्वे,

द्विपञ्चाशद्भवन्त्यमी ॥ २ ॥ विमानादुत्तीर्य ताभ्यां प्रथमं तेषु प्रासादेषु सर्वे जिनाः प्रत्येकं वन्दिताः । ऋषभः १ चन्द्राननः २ वारिषेणः ३ वर्द्धमानः ४ जिनाः शाश्वताः। एवंविधान् जिनान्नत्वा मणिचूडं मुनीश्वरं नमस्कृत्य यथोचितं धर्मं श्रोतुं तौ निषीदतुः। तदा यतीशो मणिचूडमुनिः पुत्राकार्यकरणस्वरूपं ज्ञात्वा प्राह—भो भो भव्यजनाः! कुमार्गः सदा न सेव्यः परस्त्रीगमनादिकुमार्गसेवया श्वभ्रपातो भवति । यतः—"परस्त्रीरतिवाञ्छातः,पुरुषो नरकं व्रजेत्। अन्य-नृसेवया नारी, गामिनी नरके भवेत् ॥१॥ दाराः परिभवकारा बन्धुजनो बन्धनं विषं विषयाः। कोऽयं जनस्य मोहो? ये रिपवस्तेषु सुहृदाशा ॥ २ ॥ पुत्रो मे भ्राता मे स्वजनो मे गृहकलत्रवर्गो मे । इति कृतमेमेशब्दं पशुमिव मृत्युर्जनं हरति॥३॥ कोऽहं ? कस्मिन् ? कथमायातः ? का मे जननी ? को मे तातः ?। इति परिभावयतः संसारः, सर्वोऽयं खलु स्वप्नविचारः ॥ ४ ॥ ओतुः पयः पश्यति नैव दण्डं, कीरोऽपि शालीन्नच लेष्टुखण्डम्। काकः पलं नो बलिसिंहतुण्डं, जन्तुस्तथा तं यमं नो (स्वं न यमं) प्रचण्डम्॥५॥" एतदाकर्ण्य मणिप्रभ उत्थाय राज्ञीं (क्षमितवान्) क्षमयित्वा भणिता खगेन—अद्यप्रभृति त्वं मम जामिरसि, तव कमुपकारं करोमि ?। राज्योक्तं—तीर्थवन्दनरूप एष उपकारस्त्वया कृतः। तेन त्वं मम परमबान्धवोऽसि। ततस्तया स्वपुत्रस्वरूपं पृष्टो मुनिः प्राह—प्राग् द्वौ राजपुत्रौ मिथः प्रतिभाज्ञावभूताम्।

तौ क्रमात् पुण्यविशेषात् सुरौ जातौ। तयोर्मध्यादेकः स्वर्गाच्च्युतः पद्मरथो राजाऽभूत्। द्वितीयस्ते सुतोऽजनि। तेनान्यदा पद्मरथेनाश्वापहृतेन तवाङ्गजो गृहीतः। स्वपत्न्याः पुष्पमालायाः समर्पितः। पूर्वभवस्नेहात् तव तस्य सूनोः पद्मरथो जन्मोत्सवादि कारयामास। अतस्तव सुतः सुख्यस्ति साम्प्रतम्। एवं जल्पति मुनौ तत्राकस्माद्ग-गनाध्वना जितसूरशशिप्रभं रत्नौघनिर्मितं किङ्कणीक्वणत्क्वाणं देवकृतजयजयारावं विमानं समाययौ। ततो विमानादुत्तीर्य तेजःपुञ्जपराभूतसूर्यचन्द्रः चलत्कुण्डलाद्यनेकाभरणभूषिताङ्गो गन्धर्वदेवगीयमानगुणः स सुरो मदनरेखायास्तिस्रः प्रदक्षिणा दत्त्वा तस्या एव पादौ प्रणणाम च। पश्चान्मुनिं वन्दते स्म। ततो मुनेरग्रे धर्मं श्रोतुमुपविष्टः सुरः। असम्बन्धमिमं प्रेक्ष्य, मणिप्रभः खगाधिपः। तं भासुरं सुरं नत्वा, प्रोवाचेति तकं प्रति ॥ १ ॥ देवा अपि अनीतिमार्गे चलन्ति तदाऽस्माकं किं दूषणं भवति ?, चतुर्ज्ञानधरं मुनिं मुक्त्वा कथं नारी-मानतस्त्वम्? । अथ सुरो यावत् किञ्चित् वक्ति तावन्मुनिराचष्ट—भो खेचर ! मैवं ब्रूहि, नैवायं सुर उपालम्भ-मर्हति। यदा अस्या मदनरेखाया भर्ता युगबाहुर्भ्रात्रा मणिरथेन भूपेनास्यामेवासक्तमनसा हतः तदा मृत्यु-कालेऽनया स्त्रिया स्वभर्ता मधुरैर्वचनैस्तथाऽऽराधनाभिर्निर्यामितः यथा जैनेन्द्रध्यानं प्रापितो युगबाहुः पञ्चमे

कल्पे ययौ। सामानिकः सुरेन्द्रोऽभूत् तत्र। स च देवोऽवधिज्ञानेन मदनरेखां स्वगुरुं मन्वानोऽत्रागत्य अमुं स्त्रियं प्रथमं वन्दते स्म। धर्माचार्योऽयं ध्रुवमियं धर्म्मदानादस्य देवस्य मदनरेखा। प्रणामैः कोटिशोऽप्यस्या नानृणो भवत्यसौ देवः। यतः—यो येन स्थाप्यते धर्मे, यतिना गृहिणाऽपि वा। स एव तस्य सद्धर्मदाता धर्मगुरुर्भवेत् ॥ १ ॥ किञ्च—सम्यक्त्वं ददता दत्तं, शिवसौख्यं सनातनम्। एतद्दात्रुपकारस्योपकारः कोऽपि नो समः ॥ २ ॥ सम्मत्तदायगाणं, दुप्पडियारं भवेसु बहुएसु। सव्वगुणमेलियाहिवि, वाससयसहस्सकोडीहिं ॥ ३ ॥ इत्यादौ मुनिना प्रोक्ते, जिनधर्मस्य भावयन्। सामर्थ्यं प्रबलं विद्याधरः क्षमयते सुरम् ॥ ४ ॥ सुरोऽवग् राज्ञीं प्रति—तव किं चेष्टं ददामि?। सा जगौ तत्त्वतो यूयं, नेष्टं कर्तुं मम क्षमाः। यतो भवन्ति गीर्वाणा, अविरताः समे सदा ॥ १ ॥ यतो जन्मजरामृत्युरोगशोकविवर्जितम्। निरुपाधि ध्रुवं मोक्षसौख्यमेव मम प्रियम् ॥ २ ॥ तथापि त्वं मां शीघ्रं मिथिलायां पुर्यां नय सुरोत्तम!। तत्र पुत्रमुखं प्रेक्ष्य यतिधर्मं श्रयिष्ये। ततः सुरेण सा मिथिलायां नीता। यत्र श्रीमल्लिनाथस्य जन्मदीक्षाज्ञानान्यभवन्। तत्र जिनप्रासादेषु प्रथमं जिनान्नत्वा तौ साध्वीः प्रणेमतुः। साध्वीभिस्तत्र धर्मोपदेशो दत्तः। लब्ध्वा मानुषजन्म क्षणमपि प्रमादो न कर्तव्यः। पुरुषः कुरुते पापं बन्धुनिमित्तं

वपुर्निमित्तं वा । वेदयते तत्सर्वं नरकादौ पुनरसावेकः ॥ १ ॥ यत्नेन पापानि समाचरन्ति, धर्म्मं प्रसङ्गादपि
नाचरन्ति । आश्चर्यमेतद्धि मनुष्यलोके, क्षीरं परित्यज्य विषं पिबन्ति ॥ २ ॥ इत्यादि धर्मोपदेशान्ते सुरो मदन-
रेखां प्रति प्राह—एहि राजकुलं यामो । दर्शयामि तवाङ्गजम् । ततो मदनरेखाऽवग्—पुत्रेणेहानन्तभवभ्रमणहेतुना
सृतम् । यतो गुरूणां पार्श्वे मया सर्वः संसारसारः श्रुतः । संसारे भ्रमतां प्राणभाजां पतिसुतादयः । सम्ब-
न्धाद्धरिशो भूता, भविष्यन्ति भवन्ति च ॥ १ ॥ ममैष तनयो जातोऽनन्तशो भवभ्रान्तितः । जनिताऽहं तथाऽनन्त-
वाराश्चानेन भूतले ॥२॥ यतः—कोऽहं कस्य (स्मिन्) कथमायातः, का मे जननी को मे तातः ? । इति परिभावयतः
संसारः, सर्वोऽयं खलु स्वप्नविचारः ॥ ३ ॥ दाराः परिभवकाराः बन्धुजनो बन्धनं विषं विषयाः । कोऽयं जनस्य
मोहो ? ये रिपवस्तेषु सुहृदाशा ॥ ४ ॥ एतासामपि साध्वीनां चरणाः शरणं मम ! । इत्युक्ते मदनरेखया देवः स्वर्गं
ययौ । साध्वीनां पार्श्वे दीक्षां गृहीत्वा मदनरेखा सञ्जातसुव्रताह्वाना तपस्तपतेतराम् । इतो भूपगृहे तस्य बा-
लस्य प्रभावेण सर्वे रिपवोऽपि भूपं नताः । ततस्तेन भूपेन पद्मरथेन तस्य पुत्रस्य नमिर्नामेति चक्रे । धात्रीभिः
पाल्यमानो नमिकुमारः क्रमात् प्राप्तयौवन उपाध्यायान्ते धर्म्मकर्म्मशास्त्रकला जग्राह । पित्रा क्रमाद्राजकुले जातानां

स्वरूपपराभूतामरीणां कन्यानामष्टोत्तरसहस्रस्य करान् कुमारो ग्राहितः । अथ पद्मरथो राजा योग्यं पुत्रं ज्ञात्वा राज्ये न्यस्य श्रीज्ञानसागरसूरिपार्श्वे दीक्षां ललौ । तीव्रं तपः कृत्वा लब्धकेवलज्ञानः पद्मरथः शिवं ययौ । नमिराजा राज्यं कुर्वाणो नतानेकक्ष्मापालमौलिः शक्रसमोऽभूत् । इतश्च यस्यां रात्रौ मणिरथो युगबाहुं लघुभ्रातरं हतवान् तस्यामेव निशि सर्पदष्टो मणिरथो मृत्वा तुर्यनरके गतः । ततो मन्त्र्यादिभिर्विमृश्य द्वयोरपि सोदरयोरेकस्थाने वह्निसंस्कारं कृत्वा युगबाहुसुतश्चन्द्रयशा मणिरथभूपराज्येऽभिषिक्तः। नमेर्मेदिनीं पालयतोऽन्येद्युः प्रधानः श्वेतहस्ती आलानस्तम्भमुन्मूल्याचालीद्विन्ध्याटवीं प्रति । अत्रान्तरे चन्द्रयशसो राज्ञो हस्ते स गजश्चटितः । स राजा च तमैरावणगजसोदरं बलाद्बद्ध्वा स्वपुरमानिनाय । तं ज्ञात्वा चरनरैर्नमीराजा तं गजमानयितुं दूतं प्राहिणोत् । दूतस्तत्र गत्वा प्राह—भो चन्द्रयशः! नमीराजा मिथिलास्वामी स्वं गजमत्रागतं याचते । ततश्चन्द्रयशा जगौ—यदेवं तव स्वामी निजं गजमत्रायातं याचते मां तत्कथं स त्वत्स्वामी नीतिशास्त्रं न वेत्ति ? । ततोऽस्मिन्नीतिशास्त्रे प्रोक्तं शुश्रावापि न ?, यतः—न श्रीः कुलक्रमायाता, शासने लिखिताऽपि वा । खड्गेनाक्रम्य भुञ्जीत, वीरभोग्या वसुन्धरा ॥१॥ इत्यादि । दूतोऽवग्—यदि त्वया गजो नार्प्पयिष्यते तदा मम स्वामी सङ्ग्रामे त्वां हत्वा गजं ग्रहीष्यति ।

॥ २६७ ॥

ततो रुष्टो नृपस्तं दूतं सभातो बहिः कर्षयामास। सोऽपि दूतो नृपस्य नमेः पार्श्वे गत्वा सर्वं व्यजिज्ञपत्। ततः कुपितो नमिः सर्वबलेन भेर्यादिस्वनपूर्णदिगन्तरं सुदर्शनपुरं प्रति चचाल। तं नमिं बहुबलयुक्तमागच्छन्तमाकर्ण्य यावच्चन्द्रयशा राजा सम्मुखोऽचालीद्युद्धाय तावच्छकुनैर्निषिद्धश्चन्द्रयशा मन्त्रिभिरिति विज्ञप्तः—बहिर्निर्गत्य युद्धं कर्तुं न युज्यते तव। गोपुराणि पिधाय मध्यस्थैरेव युद्धं क्रियतां, वैरिबलाबले ज्ञात्वा पश्चाद्बहिर्निसृत्य युद्धं करिष्यते। सोऽपि राजा मन्त्रिणोक्तं चकार। यतः—चित्तज्ञः शीलसपन्नो, वाग्मी दक्षः प्रियंवदः। यथोक्तवादी स्मृतिमान्, दूतः (मंत्री) स्यात्सप्तभिर्गुणैः ॥ १ ॥ नमिरेत्य तन्नगरं विष्वक् सेनया समवेष्टयत्। मिथो द्वयोर्भूपयोर्महायुद्धे जायमाने जीवसंहारं मत्वा सहोदरयोर्द्वयोश्च कलिं वीक्ष्य सुव्रतार्यया ध्यातं—यदहो संसारस्यास्यासारस्य धिगस्तु, यत्र द्वावपि भ्रातरावज्ञानाद्युद्धं कुर्वन्तौ, गमिष्यतश्च नरकमिति ध्यात्वा सुव्रतार्या गणिनीं समापृच्छ्य साध्वीपरिवारयुक् चचाल। सा साध्वी नमिचन्द्रयशसोर्युद्धं कुर्वतोरन्तरे भूत्वा नमिपार्श्वे समागात्। तदाऽभ्युत्थानपूर्वं नमिना साध्वी वन्दिता। ततः साध्वी धर्मोपदेशं ददौ—"चत्तारि परमंगाणि, दुल्लहाणीह जंतुणो! माणुसत्तं सुई सुद्धा, संजमंमि य वीरियं ॥ १ ॥ सज्झब्भरागजलबुब्बुओवमे, जीविएवि जलबिंदुचचले। जुव्वणे य

नइवेगसंनिभे, पावजीव! किमयं न बुज्झसे? ॥२॥" रहसि साध्वी नमेरग्रे इदं प्राह—राजन्नस्मिन् भवे दुःखदायके राज्यतः खलु। गच्छति नरके घोरे, जीवोऽत्राणो न संशयः ॥ १ ॥ ज्येष्ठभ्रात्रा समं युद्धं, कर्तुं न युज्यते तव। नमिः प्राह कथं ज्येष्ठभ्राता स विद्यते मम ॥ २ ॥ ततः साध्व्या चन्द्रयशसा सह सोदरभवसम्बन्धः प्रोक्तः। प्रत्ययार्थं पुष्पमाला पृष्टा—अहं कस्याः पुत्रः?। ततः पुष्पमालया प्रोक्तं—त्वमस्याः पुत्रोऽसि। ततस्तया मुद्रायुतं कम्बलरत्नं दर्शितम्। ततो यदा रणान्न नमिर्विरराम तदा चन्द्रयशसः पार्श्वे गत्वा साध्वी धर्मोपदेशं ददौ। चन्द्रयशा जगाद—भो महासति! एवंविधे युद्धे जायमाने त्वमत्र किमर्थमागाः?। ततः साध्वी द्वितीयपुत्रभवनसम्बन्धः प्रोचे। अथ राजा जगौ—साम्प्रतं स मे भ्राता कुत्रास्ति?। येन तव पुरं वेष्टितमस्ति स तव भ्राता। ततः चन्द्रयशा युद्धं मुक्त्वा भ्रातुर्मिलनाय चचाल। तं भ्रातरमागच्छन्तं श्रुत्वा नमिरपि मुक्त्वा मानं सम्मुखमुपेत्य ज्येष्ठभ्रातुः पादौ प्रणनाम। ज्येष्ठभ्राताऽप्युत्थाय स्वयं सस्वजे। तदा तयोर्द्वयोर्भ्रात्रोर्मिलितयोर्हर्षोऽभूत्। तस्य स्वरूपं गुरुरपि न वेद। ततो महोत्सवपुरस्सरं चन्द्रयशा राजा नमिं पुरमध्ये प्रवेशयामास। द्वाभ्यां भ्रातृभ्यां सस्नेहं वन्दिता साध्वी। चन्द्रयशा नमेरग्रे जगौ—पितुर्मरणादनु राज्यभारधरणकपुत्राभावादियत्कालं मया राज्यं

कृतम् । त्वं तु भ्राता न ज्ञातः। अधुना तु मात्रा ज्ञापितं—त्वं मम भ्राता। अतः परं मम राज्यं न कार्यम् । अहं त्वग्रेऽपि राज्यं त्यक्तुकामोऽस्मि । तव योग्यताऽस्ति राज्यभारधरणे । नमिः प्राह—ममापि राज्यं न रोचते, अहमपि संयमं ग्रहीष्यामि । ज्येष्ठभ्राताऽवग्—ज्येष्ठभ्रात्रा लघवे भ्रात्रे राज्यं दत्त्वा दीक्षा गृह्यते तदा युक्तमेव । एवं भ्रातरं नमिं पर्यवसाय्य चन्द्रयशा महामहपूर्वं व्रतं जग्राह । ततो नमिः प्रतापी राज्यं कुरुते न्यायाध्वना । अन्यदा पाण्मासिके दाहज्वरे नमेर्जायमाने वैद्याश्चिकित्सां चक्रुः। ततो मनागपि गुणो नाभूत् । दाहज्वरशान्तये भूपप्रियाः सर्वाश्चन्दनं घर्षयन्ति स्म । तासां बाहुवलयझणत्कारारावैर्नमेरत्यन्तं वेदनाऽभूत् । राज्ञोक्तं—अयं को दारुणो रवः प्रभवति ?। सेवकैश्चन्दनघर्षणादिस्वरूपं निवेदितम् । ततो राज्ञोक्तं—एतासां पञ्चशतस्य प्रियाणां हस्तेभ्य एकैकं वलयमुत्तारयत । तत एकैकस्मिन् वलये उत्तारिते मनाक् सुखीजातो राजा । एवं क्रमात् सर्वेषु वलयेषूत्तारितेषु राजाऽत्यन्तं सुख्यभूत् । तथैकैकं वलयं मङ्गलार्थं स्थापितम् । ततो राजाऽवग्—किं प्रिया अधुना चन्दनं न घर्षयन्त्यः सन्ति यत्साम्प्रतं वलयशब्दो न श्रूयते?। तदा मन्त्रिजनो वलयोत्तारणस्वरूपं जगौ । एतत् श्रुत्वा राजा सञ्जातवैराग्यो दध्यौ—भूरिसंयोगो दुःखाय भवति, यथा भूरिभिः कङ्कणशब्दैर्दुःखमभूत्, न तथा

स्तोकैरेव तैः। एवमेकत्वे महासुखम्। यथा—कङ्कणैर्भूरिभिर्दुःखं, स्वल्पैः स्वल्पतरैः सुखम्। यावदस्यैव दृष्टान्तादेकाकित्वे महासुखम् ॥१॥ उच्यते—यथा यथा महातन्त्रं, विस्ताराश्च यथा यथा। तथा तथा महद्दुःखं, सुखं तु न तथा तथा ॥ २ ॥ क्लेशाय विस्तराः सर्वे, संख्येयास्तु सुखावहाः। परार्थं विस्तराः सर्वे, त्यागमात्महितं विदुः ॥ ३ ॥ ततो नमिर्दध्यौ—यदि मम दाहज्वरः प्रशमिष्यति तदाऽवश्यं मया दीक्षा ग्राह्या। ध्यात्वेति यावन्नमिः सुप्तः तावद्दाहज्वरः प्रशशाम। प्रातर्वाद्यनिनादैः प्रबुद्धो भूपो दध्यौ—अहो अद्य मया स्वप्ने ऐरावणकुम्भी शैलराजश्च दृष्टः। स च वर्यो भवति तेन मे रोगो गतः। यतः—देवता यतयो गावः, पितरो लिङ्गिनो नृपाः। यद्वदन्ति नरं स्वप्नः, तत्तथैव भविष्यति ॥१॥ तं शैलराजं पुनः पुनर्ध्यायतो नमेर्जातिस्मृतिरभूत्। पूर्वभवे मया श्रामण्यं पालितं। ततोऽहं मृतः प्राणते सुरोऽभूवम्। ततो नमिः स्वपुत्रं राज्येऽभिषिच्य देवतादत्तरजोहरणः संयमं प्रतिपन्नवान्। तदा शक्रो द्विजवेषधरो नमिं परीक्षितुमाययौ। नमेरग्रे भूत्वा द्विजः प्राह—भो राजन्! त्वया तृणवद्राज्यं सान्तःपुरं त्यक्त्वा संयमो गृहीतो यत्तत्सुन्दरम्। त्वं तु जीवदयां पालयितुं दीक्षामग्रहीः। त्वद्व्रतग्रहणे एता अन्तःपुरीस्त्रियो रोदनं कुर्वाणाः सन्ति। तदिदमयुक्तं व्रतग्रहणं। पूर्वापरबाधकम्। ततो नमिमुनिर्ब्रूते स्म—दुःखकारणं नो

मम व्रतं। किन्तु लोके स्वस्वकार्यहानिर्दुःखस्य कारणं। ततोऽहमपि स्वकार्यं कुर्वे। किं परं जल्पनेन ?। हरिराह— अधुना ते गृहाणि अन्तःपुराणि प्रज्वलमानानि सन्ति, किमुपेक्ष्यन्ते?, तव दूषणं लगति स्म। आश्रितस्योपेक्षणं पापं। त्वं तु चतुरोऽसि। नमिः प्राह—मम गृहाणि न सन्ति। अन्तःपुराणि न सन्ति। पुनराह हरिः पुर्यां, प्राकारमतिदुर्गमम्। नानायन्त्रयुतं कारयित्वा राजन्! परिव्रजेः ॥ १ ॥ राजर्षिः प्राह भो भद्र!, संयमो नगरं मम। शमाख्यो विहितस्तत्र, प्राकारो जययन्त्रवान् ॥ २ ॥ इन्द्रोऽवोचन्निवासाय, लोकानां सुमनोहरान्। प्रासादान् कारयित्वा भो, क्षत्रिय! प्रव्रजेस्ततः ॥३॥ मुनिः प्रोचे कुधीरेव, कुर्यात् पथि वहन् गृहम्। निश्चलं यत्र संस्थानं, युक्तं तत्रैव मन्दिरम् ॥ ४ ॥ हरिराह निगृह्यादौ, चौरान् सुस्थं पुरं कुरु। यत्याह चौरा रागाद्या, निगृहीताश्च ते मया ॥ ५ ॥ वासवः प्राह केचिन्न, नमन्ति च नवोद्धताः। पार्थिवास्तान्विनिर्जित्य, प्रव्रज्यां कुरु सत्तम! ॥ ६ ॥ यत्याह लक्षसङ्ख्यातान्, सङ्ग्रामे सुभटान् जयेत्। यश्चात्मानं जयेदेकमेष मे परमो जयः ॥ ७ ॥ इत्यादि शक्रनमिजल्पनं श्रीउत्तराध्ययनाज्ज्ञातव्यम्। इत्यादि विप्रप्रोक्तमवगणय्य यावन्नमिरग्रतोऽचालीत्तावदिन्द्रः स्वरूपस्थो नमिं प्रति प्राह—त्वं धन्यस्त्वं कृतार्थः त्वं सर्वभावारिजयी जगदुत्कृष्टस्वभावः। इति स्तुतिं कृत्वा शक्रः स्वर्गं

जगाम। नमियतिः क्रमात् सर्वक्षीणकर्मा मुक्तिं ययौ। साध्वी मदनरेखाऽपि संयतिनीपार्श्वे शुद्धं तपस्तप्त्वा कर्मक्षयात् केवलज्ञानमवाप्य मुक्तिं ययौ। इति मदनरेखाकथा समाप्ता ॥ ४ ॥

**सङ्कटे विकटेऽत्यन्तमायाते सति देहिभिः। न मोक्तव्यो वृषः सम्यग्, दमयन्तीव कर्हिचित् ॥ १ ॥**

तथाहि—कोशलायां पुरि निषधो नृपो राज्यं न्यायाध्वना करोति स्म। तस्य लावण्यसुन्दरी प्रिया सच्छीलशालिनी बभूव। तयोः क्रमान्नलकूबरौ पुत्रावभूताम्। इतो विदेहदेशमण्डिते कुण्डिनपुरे भीमभूपतिर्निःसीमविक्रमः पृथ्वीं शास्ति। तस्य प्रिया पुष्पवती सत्स्वप्नसूचितां पुत्रीं समये प्रासूत। तस्याः पूर्वशुभकर्मानुभावाद्भालस्थले तिलकं रविरिव देदीप्यमानमस्ति। षष्ठीजागरणमहोत्सवं कृत्वा तस्याः पुत्र्या दवदन्तीति नामादाद्राजा। रिंखन्ती क्रमात् पादरणन्मधुरनूपुरा दवदन्ती मातापित्रोर्मुदं चकार। क्रमाद्वर्धमाना जाग्रत्सौभाग्यवैभवा दवदन्ती धर्मकर्मकलाकुशला बभूव। अन्यदा भाविनः श्रीशान्तिजिनस्य हेमप्रतिमां वितीर्य निर्वृत्तिदेवी दवदन्तीं प्राह—भवत्या पूजनीयैव, नित्यं कल्याणकारिणी। भविष्यति तवाह्नाय, महोदयसुखप्रदा ॥ १ ॥ ततो दवदन्ती तां प्रतिमां गृहचैत्यान्तर्निदधे। भैमी सा क्रमाद्युवमनोमोहनं यौवनं प्राप। रूपश्रिया जितः

दमयन्ती-
वृत्तं।

शशी तस्याः पिशाचकी तेनाद्यापि भूतपतिरेनं न सेवते । अनुरूपवराप्रास्त्या साऽष्टवार्षिका वर्द्धमाना मातापित्रो-र्मनो वरविलोकनचिन्ताब्धौ पातयामास । यतः—जम्मंतीए सोगो वड्ढंतीए य वड्ढए चिंता । परिणीयाए दंडो, जुवइपिया दुक्खिओ निच्चं ॥ १ ॥ ततो राज्ञा स्वयंवरमण्डपो मण्डितः । आकारिता बहवो नृपकुमाराः । तदानीं दूतेन निषधो भूपो विज्ञप्तः नलकूबराभ्यां पुत्राभ्यां तत्र स्वयंवरमण्डपे समागाद् । भीमो भूपः सर्वेषां संमुखयान-वासनादिना सत्कारं चकार । अथ प्रभाते सर्वे भूपाः सारालङ्काराः सर्वश्रिया मञ्चेषूपविष्टाः । दवदन्ती सुखा-सनारूढा सालङ्कारसखिपरिवारयुता स्वयंवरमण्डपे समागात् । तदा सर्वे लोकाः स्वस्वकार्यं विमुच्य ययुः । यतः—"थीयह तिन्नि पियारडा कलिकज्जल सिंदूर०" सुखासनासीना दवदन्ती प्रतीहारीवर्ण्यमानान् नृपान् अङ्गवङ्ग-तिलङ्गादिदेशेशान् मुक्त्वा क्रमान्नलपार्श्वे समागात् । तत्र वर्ण्यमानगुणां रूपश्रियं च तस्य दृष्ट्वा दवदन्ती हृष्टा-ऽनुरागं दधौ । तदा दवदन्तीमिति वर्णयन्ति स्त्रीजनाः । पादयोः शुशुभे तस्याः, सरसो यावकद्रवः । अनुराग इव क्षोणीभुजां लग्नोऽंगजोऽङ्गवान् ॥ १ ॥ प्रशस्तिरिव कन्दर्पभूमिपालस्य जाग्रती । कपोलयोर्बभौ तस्याः, कस्तूरीपत्रवल्लरी ॥ २ ॥ रराज जूटके तस्या, मल्लिकामाल्यमुज्ज्वलम् । नक्षत्राणीव संप्रापुर्मुखचन्द्रमुपासितुम्

॥ ३ ॥ कर्णयोः कुण्डले तस्या, रत्नोर्म्मिश्रे रराजतुः । स्वर्भाणुमयसंभ्रान्तौ, चन्द्रसूर्याविवागतौ ॥ ४ ॥ नेत्रयो राजती रेखा, रेजे भृङ्गीव पद्मयोः । कल्लोला इव गङ्गाया, वस्त्रे च परिधापिते ॥ ५ ॥ तदानीं दवदन्ती नलकण्ठ-कन्दले वरमालां चिक्षेप । वैदर्भ्या नले वृते जयजयकारोऽभूत् । निषधभीमाभ्यां तयोर्विवाहः सर्वः कृतः । माता-पितरौ दवदन्तीं पत्या सह चलन्तीं प्रति प्रोचतुः—श्वसुरश्वश्र्वादिवर्गस्य विनयकरी भवेः । निषधभीमयोर्विनयः कर्तव्यः । पत्युरनुकूलं कर्तव्यं त्वया । निषधो नरेशः पुत्रं परिणाय्य महोत्सवपुरस्सरं स्वपुरं प्रति चचाल । वर्त्मनि अत्यन्तमन्धकारे जायमाने वने निषधः स्थितः । नलः प्राह प्रियां सुप्तां प्रति—मा स्वाप्सीः, देवि ! जागृहि तिलकं प्रकटीकुरु यथा तमो याति । दवदन्ती तिलकं तेजयामास भालस्थम् । आदित्यस्येव दीप्रेण, दम्पती तस्य तेजसा । प्रतिमास्थितमग्रेऽथ, मुनिमेकमपश्यताम् ॥ १ ॥ हस्तिना तस्य मुनेर्देहं गण्डकण्डूतिस्फेटनाय घर्षता मनो न चचाल ध्यानात् । नलः पत्नीयुतो ननाम भक्त्या । तदा तं वृत्तान्तं ज्ञात्वा निषधादयः सर्वे जनास्तत्राजग्मुः । प्रदक्षिणीकृत्य यतिं सर्वे नेमुर्नृपादयः । ततः कायोत्सर्गं पारयित्वा धर्मोपदेशं यतिर्ददौ । पूज्यपूजा दया दानं, तीर्थयात्रा तपस्तथा (जपस्तपः) । श्रुतं परोपकारश्च, मर्त्यजन्मफलाष्टकम् ॥१॥ देशनान्ते नलो नत्वा मुनिं कृताञ्जलिः

प्राह—भैम्या भाले इदृक् तिलकं केन कर्मणा शुभेनाभूत् ?, यतिः प्राह—असौ पूर्वभवे एकैकं जिनं प्रति चतुर्विंशतिमाचाम्लान् चक्रे । तस्य तपस उद्यापने चतुर्विंशतिजिनानां तिलकांश्चकार । तस्य तपसः प्रभावादस्या भाले ईदृशं तिलकं रविजित्वरमभूत् । क्रमेण तस्य तपसः प्रभावादसौ कल्याणभाजनं भविष्यति । श्रुत्वैतद्गुरोर्वचनं बहवो जनास्तत्र तपः कर्तुं लग्नाः । निषधः पुत्रादिपरिवारयुग् स्वपुरमागात् । पौरैः कृतमहोत्सवो राजा दानं ददानः स्वगृहमागात् । नलो नानाविधदानैः स्वकीर्तिं चतुर्दिग्व्यापिनीं चक्रे । नले राज्यं वितीर्य कूबरे च युवराजपदवीं दत्त्वा निषधः संयममादाय तपस्तप्त्वा स्वर्गमगात् । त्रिवर्गसाधनपरः श्रीनलश्चिरं राज्यं पालयामास । क्रमेण साधयामास बहून् देशान् । महद्राज्यं दृष्ट्वा कूबरः कुटिलाशयो नलस्य राज्यं ग्रहीतुं मनो दधे । नलस्तु निर्मलस्वान्तोऽपि तेन कूबरेण तद्राज्यं ग्रहीतुं द्यूतायोद्यमं कारितः । नलः कूबरेण भ्रात्रा सह रममाणो दमयन्त्यादिभिर्वार्यमाणोऽपि सर्वं राज्यं हारयामास । सानन्दस्ततः कूबरोऽवग्—त्यजेमां महीं मदीयाम् । यतः—परकीयं धनं नैव, ग्रहीतव्यं हितेच्छुना । परस्वहरणात् श्वभ्रपातो भवति देहिनाम् ॥ १ ॥ ततो नलः प्रियायुतो वनं प्रति चचाल । वने एकाकी नलः प्रियायुतः पादचारी चलन् कण्टकादिव्यथां भूयसीं सहते ।

गेहिनीं वीजयन् पत्रैः, श्रान्तां संवाहयन् पदोः । पिपासुं पाययामास, सोऽम्बु तां पद्मिनीपुटैः ॥ १ ॥ अथ सत्त्वमवष्टभ्य, श्रान्तामपि कदाचन । पादसंवाहिनीं भैमीं, वारयामास पार्थिवः ॥ २ ॥ जायापती फलाहारै-र्मध्यन्दिनमतीत्य तौ । सायं लतागृहे क्वापि, श्रान्तौ रात्रिमतीयतुः ॥ ३ ॥ तिग्मभानुकरत्रस्तैरन्धकारैरिवा-श्रिताम् । सान्द्रद्रुमामरण्यानीमन्यदा तावुपेयतुः ॥ ४ ॥ ततः कान्तारकासारे, भैमीं धौतपदो नलः । दृष्ट्वा म्लानमुखीं कान्तामन्तश्चित्तमचिन्तयत् ॥५॥ क्वेयं प्रवालसोमाला ?, क्व मार्गो दुःखवि(संचयः) ?। क्व तद्राज्यं ? वनावासः, क्वायं दुःखशतप्रदः ? ॥ ६ ॥ विश्रामाय ततो भूमिपतिः कङ्केल्लिपल्लवैः । क्वचिच्छिलातले रम्ये-ऽनल्पतल्पमकल्पयत् ॥ ७ ॥ परमेष्ठिनमस्कारं, समुच्चार्य च जम्पती । स्वैरं सुषुपतुर्मार्गश्रान्तौ श्लिष्टभुजा-लतौ ॥ ८ ॥ अथ दुःखितो नलो दध्यौ—एकस्तावद्वने वासः, द्वितीया च दरिद्रता । तृतीयं च प्रियापादबन्धोऽयं जायतेऽधुना ॥ १ ॥ ततः सुप्तायां भैम्यां चीरखण्डं कृत्वाऽर्द्धं लात्वा शनैर्नलश्चलितुकामः प्रियावस्त्राञ्चले इति वर्णान् लिलेख । वामभ्रु! वामनः पन्था, वामः कुण्डिनगामुकः । किंशुकैर्दक्षिणेनायं, कोशलामुपतिष्ठते ॥ १ ॥ यत्र ते रोचते तत्र, गन्तव्यं गजगामिनि! । अहं तु स्वमुखं क्वापि, नैव दर्शयितुं क्षमः ॥ २ ॥ लिखित्वे-

ति नलोऽचालीद्दृढदुःखतया रुदन् । मुहुर्मुहुर्वलित्वाऽथ, पश्यन् भैमीमुखाम्बुजम् ॥ ३ ॥ हा विधे! ही त्वया
भैमी, सृष्टा सर्वाऽतिशायिनी । तत् किं दुःखीकृता स्वप्ने, वल्लरीव महामनाः? ॥ ४ ॥ प्रसद्य मयि शृण्वन्तु, तथा
काननदेवताः । तथा कार्यं यथा मार्गे, यात्यसौ निरुपद्रवा ॥ ५ ॥ इत्यावेद्य पुनर्जायां, पश्यन् वलितकन्धरः ।
तावद्गतो नलो यावद्भैमी ययावदृश्यताम् ॥ ६ ॥ वन्यहिंस्रभवा भीतिर्मा भूदस्या इति ध्यायन् नलो गतागतं
चकार । कथं त्वं स्वस्थतां यासि, हा दुरात्मन्नलं नलः। इत्थमेकाकिनी यस्य, प्रिया शेते वनान्तरे? ॥ १ ॥ इत्थं
विमृशतस्तस्य विभावरी विरराम । ततोऽग्रतो गच्छन् ज्वलज्ज्वालाजटिलं वनमेकमैक्षत नलः । आक्रन्दं दह्य-
मानानां, शृण्वन् वन्याङ्गिनां नलः । मानुषीं गिरमश्रौषीदिति तं निकटं गतः ॥ १ ॥ इक्ष्वाकुकुलपाथोधि-
चन्द्र! विश्वैकवत्सल! । रक्ष मां नल राजेन्द्र!, दह्यमानं दवाग्निना ॥ २ ॥ ततो नलो भुजङ्गममेकं दह्यमानमद्रा-
क्षीत् । प्राह च धीरः—महानाग! कथं नाम, मदीयं ज्ञायते त्वया? । कथं च मानुषीं वाणीं, ब्रूषे सर्पवपुर्धरः? ॥१॥
सर्पोऽवग्—महाभाग! मनुष्योऽहमभूवं पूर्वजन्मनि । तत्संस्कारवशेनेह, भाषेयं मम मानवी ॥ २ ॥ सर्पो जगाद—
अवधिज्ञानमप्यस्ति, येनेदं सकलं जगत् । करस्थमिव पश्यामि, ततो जानाम्यहं स्फुटम् ॥ ३ ॥ अहमप्युप-

कर्ताऽस्मि तुभ्यम् । ततो नलोऽवग्—इदं वस्त्राञ्चलमवलम्बय । ततो भुजङ्गं दवानलाद्बहिश्चकार नलः । सर्पेण स दष्टो नलः कुब्जोऽभूत् । नलोऽपि पाणिनाऽऽच्छोट्य भूतले तमपातयत्, ऊचे च—भो द्विजिह्व ! न साधु त्वयोपकृतं मम । ततोऽङ्गं स निजं कुब्जं, दृष्ट्वा वैराग्यवासितः । नलः क्षोणिपतिः सद्यो, व्रतमादातुमैष्यत ॥ १ ॥ दिव्यमूर्तिं ततः कृत्वा, भुजङ्गोऽपि तमाख्यत । तवैवाहं पिता वत्स!, निषधस्तद्विषीद मा ॥ २ ॥ दीक्षाप्रभावादहं ब्रह्मलोके स्वर्गे सुरो भूत्वा व्यसनं भविष्यत् ज्ञात्वाऽद्योपकाराय प्राप्तोऽस्मि । वैरूपं वपुर्मया कृतमस्ति । यतस्त्वामेकाकिनं शत्रवो नोपद्रोष्यन्ति । तव पूर्वभवोपार्जितकर्मवशात् कियत्कालमापद्भविष्यति । पश्चात् त्रिखण्डराज्यप्राप्तिर्भविष्यति । अवसरे त्वां दीक्षार्थं ज्ञापयिष्यामि । इदं श्रीफलं त्वं गृहाण । तथा चेमां करण्डिकाम् । सुगृहीते स्वपार्श्वे इमे स्थाप्ये त्वया । यदा स्वरूपप्रकटीकरणेच्छा स्यात्तव तदा श्रीफलमुन्मुद्य दुकूलानि समाकृषेः । करण्डिकामध्याद्धाराद्याभरणोच्चयमाकृष्य शरीरे स्वस्मिन् बन्धनीयम् । ततो निजं रूपं त्वमवाप्स्यसि । इत्युक्त्वा तयोर्माहात्म्यं पुनः प्राह सुरः—सुंसुमारपुरे वत्स! त्वं गच्छ । नलः प्राह—तत्र मां नय । मार्गस्तु विषमोऽस्ति । ततस्तेन देवेन नलः सुसुमारपुरसीमनि मुक्तः । अन्तर्नगरमश्रौषीन्नलः कोलाहलं महान्तम् । किमेतदिति ध्यायन्

॥ २७३ ॥

यावत्तत्र नलो याति तावन्मदोन्मत्तः पट्टहस्ती आलानस्तम्भमुन्मूल्य पादपमनुष्यादि मर्दयन् चतुष्पथमध्ये निःससार। तं हस्तिनं तादृशं दृष्ट्वा राजा जगौ—भो भोः शृण्वन्तु यः कश्चिदिभं वशयितुं क्षमः। तस्य निःशेष-सम्पत्तिपूरणे प्रभवाम्यहम् ॥ १ ॥ श्रुत्वेति श्रीनलो जाग्रद्विक्रमो गजमुद्दिश्य दधावे। मा मा म्रियस्व कुब्जेति वार्यमाणोऽपि पूर्जनैस्तं हन्तुं बलाबलमविमृश्य डुढौके नलः। प्राहेति—रेरे दुरात्मन् मातङ्ग, मा वधीः स्त्री-शिशूनमून्। अयमग्रेसरस्तेऽहं, मदोन्मत्तैककेसरी ॥ १ ॥ क्रोधान्धं तं गजं चिरं भ्रामयित्वा स्वोत्तरीयमग्रे प्रलम्बं क्षिप्त्वा तस्य पृष्ठौ गतो नलः। यावद्गजस्तदुत्तरीयं पुरुषभ्रान्त्या त्रोटयामास तावत् चरणं दत्त्वा तस्ये-भस्य स्कन्धमारुरोह। मर्मस्थाने तं गजं तथा हतवान्नलो यथा स्तम्भवन्निश्चलोऽभूत्। तं हस्तिनमालानस्तम्भे बबन्ध। नलस्य तादृशं बलं दृष्ट्वा दधिपर्णमहीपतिरस्य नलस्य गले रत्नमालां क्षेपयामास। ततो दधिपर्ण-भूपस्तं वस्त्रादिना सन्मान्य स्वपार्श्वेऽस्थापयत्। पृष्टं च—को वंशस्तवेति, कुब्जः प्राह—जन्मभूमिर्मनोज्ञश्रीः, कोशला मम भूपते !। सर्वस्वजनवर्गोऽपि, तत्रैव क्षेममश्नुते ॥ १ ॥ अहं च सूपकारोऽस्मि, हुंडिको नलभूपतेः। तत एव विदामास, प्रीतितः सकलाः कलाः ॥ २ ॥ किं चान्यद्भूपते ! सूर्यपाकां रसवतीं भुवि। स एव वेत्ति नान्यस्तु,

पुमान् सूर्यप्रसादतः ॥ ३ ॥ दुर्दैवात् कूबरे बन्धौ, साम्प्रतं स दुरोदरे । हारयित्वा महीं भार्यायुक्तः क्वापि गतो मृतः ॥ ४ ॥ दधिपर्णस्तदाकर्ण्य गुणांस्तस्य च स्मरन् क्षणं शोकपरो भूत्वा दध्यौ—संसारस्य स्थितिरीदृशी विद्यते । यतः—श्रियो विद्युल्लोलाः कतिपयदिनं यौवनमिदं, सुखं दुःखाघ्रातं वपुरनियतं व्याधिविधुरम् । दुरापाः सन्तोऽब्धौ बहुभिरथवा किं प्रलपितैः ?, असारः संसारस्तदिह निपुणं जाग्रत जनाः ॥१॥ अन्यदा तत्पार्श्वे राजा पप्रच्छ—सूर्यपाकरसवती त्वया ज्ञाता भाविनी तां दर्शयैकशः । बहुशोऽभ्यर्थितो राज्ञा, विद्यां वैवस्वतीं स्मरन् । सद्यो न्यस्यातपे स्थालीं, सम्पूर्णां शालितन्दुलैः ॥ १ ॥ कृत्वा रसवतीं सूर्यपाकां हुण्डिकसूपकृत् । सर्वेषां भोजयामास, निःशेषरसपेशलाम् ॥ २ ॥ ग्रामेषु पञ्चशतमितेषु राज्ञा दीयमानेषु स सूपकृत् सूपकारकृत्यं जग्राह । कुब्जः पुनः पृष्टो भूपेन—भो तवाभीष्टं विद्यते तद्ब्राहि । सोऽवदत्—देव ! यावति भूपीठे तव शासनं जागर्ति तावति द्यूतं मद्यं मांसं च प्रतिषिध्यतां, बहुपापमूलत्वात् । यतः—"द्यूतं च मांसं च०" ॥१॥ तत्सर्वं राज्ञा प्रतिपन्नं द्यूतादिनिषेधनम् । सूपकारः समाधिना तिष्ठन् राज्ञो मान्योऽभूत् । अन्येद्युः सरसीतीरस्थतरुच्छायामुपेयुषः कुब्जस्य कश्चिद्देशान्तरान्नर आगात्तत्र । कुब्जं सर्वाङ्गसुन्दरं दृष्ट्वा सोऽपि गीतगोष्ठीं पृच्छ्यमानः श्लोकद्वयमाह

नलं प्रति–अनार्याणामलज्जानां, दुर्बुद्धीनां हतात्मनाम्। रेखां मन्ये नलस्यै(मे)व, यः सुखप्रेमभाजनम् ॥ १ ॥ विश्रब्धां वल्लभां स्निग्धां, सुप्तामेकाकिनीं वने। त्यक्तुकामोऽपि जातः किं, तत्रैव हि न भस्मसात् ? ॥ २ ॥ कुब्जस्तदाकर्ण्यावग्–साधुः सम्बन्धस्त्वयोक्तः। कस्त्वं कुतोऽत्रागतः नलोदन्तः कुतस्त्वया श्रुतः ?। स नरः प्राह–अहं कुण्डिनपुरमगमम्। तत्र भैमीमुखाच्छ्रुतम्। हृष्टः कुब्जोऽवग्–भैमीत्यागावधिर्वार्ता मया श्रुता पूर्वं, अग्रतः प्रोच्यताम्। स नरः प्राह–विदर्भभूमिभृत्पुत्रीं, सुप्तां त्यक्त्वा नले गते। ततो विभावरीशेषे, स्वप्नमेकं ददर्श सा ॥ १ ॥ यदहं चूतमारूढा, तत्फलान्यत्तुमिच्छया। दन्तिनोन्मूलिते तस्मिन्, पतिताऽहं भुवस्तले ॥ २ ॥ प्रातः प्रबुद्धा पतिमदृष्ट्वा भीता। इतस्ततो दृशं क्षिप्त्वा चेतसेति व्यचिन्तयत्–दुर्दैव! मयि दग्धायां किमद्यापि चिकीर्षसि ?। यदीदृशीं दशां प्राप्ता, न पश्यामि दृशा पतिम्॥ १ ॥ मुखं प्रक्षालयितुं सरस्यां गतोऽस्ति पतिः, अथवा केनाप्यपहृतो देवेन दानवेन वा?, किमु वा केलिना कुत्रापि वने गतोऽस्तीत्युत्थाय दवदन्ती विलोकयन्ती क्वाप्यदृष्ट्वा पतिं सा रुदती पक्षिणोऽपि पार्श्वस्थान् रोदयामास। मूर्च्छित्वा सचेतनीभूय स्वप्नस्यार्थमभावयत्सा–सहकारतरुर्यो मया दृष्टः स मे सर्वोत्तमः प्रियः, फलानि खलु राज्यश्रीः, वारणः कूबरः, पुनः यः पातश्च ततः

सोऽयं पत्युर्विरहो ध्रुवम् । इत्यालोच्य सा प्राग्भवजं कर्म मत्वा क्वापि पटप्रान्ते वर्णान् पतिलिखितान् दृष्ट्वा वाचयामासेति । भो भो मानिनि ! त्वामेकाकिनीं वने त्यक्त्वा केनापि हेतुना गच्छन्नस्मि । त्वया मे दूषणं नानेयम् । अनेनाक्षरलिखनेन तस्य हृदयेऽहं भृशमस्मि, परं कारणेन मुक्ताऽस्मि । तदहं पत्योक्तेन वटाध्वना जनकागारं यामि । यतः—योषितां पतिशून्यानां पितैव शरणं यतः, ततस्तातगृहमुद्दिश्य भीमजा चचाल स्मरन्ती नलं हृदि । अदभ्रदर्भान्निर्भिद्य, रक्तपिञ्जरितक्रमा । अङ्कितामिव कुर्वाणा, यावकस्तबकैर्भुवम् ॥ १ ॥ श्वेतार्द्रतनुरुत्पातिधूलिधूसरितोपरि । हंसीव नड्वलं श्रान्ता, भैमी वनमगाहत ॥ २ ॥ अम्बिकामिव पारीन्द्रा, भुजङ्गा जाङ्गलीमिव । सिंहीमिव वनेभाश्च, मेनिरे नलगेहिनीम् ॥ ३ ॥ शीलप्रभावतस्तस्या व्रजन्त्या अपि वने तदा हिंस्राः सिंहादयोऽत्यन्तसहायायागच्छन्ति । भैमी महान्तं सार्थमैक्षत । यावत्स्वस्थमनाः सार्थपार्श्वे गच्छति सा तावत्स्तेनै रुद्धा भैमी विषयैरिव कामुकः । सा सती तानाचष्ट—रेरे स्तेना यात यात नालिकेरे शुकस्यैव प्रारम्भो निष्फलोऽत्र वः । तान् लुण्टितुं प्रवृत्तान् हुंकारैस्त्रासयामास । आगत्य सपरीवारः, सार्थेशोऽपि महासतीम् । कुलेश्वरीमिव प्रेक्षमाणः प्राणमदुच्चकैः ॥ १ ॥ सार्थेशः प्राह—कल्याणि !, भ्रमन्ती निर्जने वने ।

असाकं पुण्ययोगेन, कुतोऽत्र समुपेयुषी ? ॥ २॥ कासि त्वं च ?, साऽप्याख्यत्—नलदासी, नलस्तु विदेशं गतः । ततः सार्थेशस्त्वं मम भगिनीतिकृत्वा तां स्वपार्श्वे स्थापयामास । क्रमाच्चत्र प्रावृट्कालः समागात् । सार्थे गन्तुमग्रेऽशक्नुवन्तं चिरं विलम्बं जायमानं ज्ञात्वा सार्थेशमनापृच्छ्य निर्ययावेकाकिनी । गच्छन्ती पुरो राक्षसं दुरालोकं प्रायान्तं ससौष्ठवमाचष्ट—भो राक्षस ! यदि त्वं मां स्पृशसि तदा तव श्वभ्रपातो भविष्यति । अथवा त्वं भस्मसाद्भविष्यसि । इति तस्याः सत्त्ववचनात् सन्तुष्टो राक्षसः प्राह—भो स्त्रि ! किं तेऽभीष्टं करोमि ? । साऽपि तमाख्यत्—वद तर्हि त्वं ज्ञानेन कदा पत्या सह संयोगो मे भावी ? । तेनोक्तं—द्वादशानां वर्षाणां प्रान्ते संयोगो भविष्यति तव । सती प्राह—तवोक्तं भवतु । पलादोऽवग्—तव स्वस्ति भवतु। अहं यास्यामि स्वस्थाने । तस्मिन् गते सती अभिग्रहान् ललौ । ताम्बूलं रक्तवस्त्राणि, पुष्पाण्याभरणानि च । विकृतीश्च ग्रहीष्यामि, नार्वाक् प्रिय-समागमात् ॥ १ ॥ क्रमेण कन्दरां महतीं प्राप्ता । श्रीशान्तिनाथस्य मृन्मयीं प्रतिमां कृत्वा पुष्पैरर्चयन्ती कुर्वाणा स तपस्तीव्रं स्वभावपतितैः पत्रैः पारणं चकार । परमेष्ठिनमस्कारस्मरणपरा कियन्तं कालमभ्यवाहयत् सा । सार्थेशोऽपि क्रमात्तत्रागतस्तां जिनपूजापरां ददर्श । सार्थेशोऽवग्—भो आर्ये! इयं कस्य प्रतिमा ? । सा जगौ भैमी—

शान्तिनाथस्य प्रतिमेयम् । तयोरालापं श्रुत्वा तापसाः तत्रेयुः । भैमी जिनधर्ममचीकथत्तेभ्यः । तथाहि—पूया जिणिंदेसु रुई सुएसु, जत्तो अ सामाइअपोसहेसु । दाणं सुपत्ते सवणं सुतित्थे, सुसाहुसेवा परलोयमग्गो ॥ १ ॥ वसन्तसार्थेशस्तु बहुभावात् जिनधर्ममङ्गीकृत्य तस्थौ तत्रैव सार्थयुक् । निकटाश्रमवास्तव्यास्तापसा बह्व्यां वृष्टौ जायमानायां व्याकुला अभूवन् । ततस्तान् वीक्ष्य भैमीस्वकर्णकुण्डलं हस्तोपरि व्यधात् । ऊचे च सा—यद्यहं सम्यग् जैनोपासिकाऽस्मि महासती तदा वृष्ट्युपद्रवं निवारयतु जिनशासनदेवी । ततो द्रुतं निवृत्ता वृष्टिः, तापसा निराकुला बभूवुः । ततो तापसाः सविस्मया दध्युः—नूनं काननदेवी स्त्रीरूपेणात्र समागताऽस्ति । ततस्ते तापसा बुद्धा जैनधर्म्मं प्रपेदिरे । तत्रैव सार्थपो रम्यं पुरं महत् स्थापयित्वा विहारं तुङ्गं तोरणगवाक्षादिरम्यं श्रीशान्तिनाथस्य कारयामास । तत्र पञ्चशतीं तापसानां भैमी अबूबुधत् । तत्र प्रसिद्धं तापसपुरं जातम् । तत्र च श्रीयशोभद्रसूरिपार्श्वे विरागवान् विमलमतिः कुलपतिर्दीक्षां जग्राह । तदाऽकस्मादेव गुरोर्ज्ञात्वाऽऽयुः पञ्चशती-(दिनी)मितं कूबरस्य नवोढोढः पुत्रः सिंहकेसरी दीक्षां लात्वा गिरिशृङ्गं गतः । तत्र शुभध्यानाधिरूढस्य सिंहकेसरिणः केवलज्ञानमुत्पन्नम् । तन्महिमानं कर्तुं तत्र देवाः समाययुः । भैमी सार्थपस्ते च तापसास्तं केवलिनं नन्तुं

यथुः। तत्र धर्मोपदेशं शुश्रुवुः । आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं, व्यापारैर्बहुकार्यभारगुरुभिः
कालो न विज्ञायते। दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते, पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत्
॥ १ ॥ तेषां तापससार्थपानां पुरस्तात् केवली प्राह—भैमीयं सत्यवाक् परमार्हती महासती। ततः स शेषकर्म-
क्षयं कृत्वा तत्रैव केवली मुक्तिमगात्। चारणश्रमणो यशोभद्रोऽथ वैदर्भ्या पृष्टः पूर्वभवसम्बन्धं तस्याः प्राह,
तथाहि—मम्मणो महीपतिरभूत्। तस्य वल्लभा वीरमत्यभूत्। ताभ्यामन्यत्र ग्रामे गच्छद्भ्यां सम्मुखमागच्छन्मुनि-
र्दृष्टः। अकुशलोऽयं सम्मुख इतिकृत्वा ताभ्यां द्वादश नाडिका धृतो मुनिः। पश्चादुपशमितकोपाभ्यां ताभ्यां
स मुनिः क्षमितः। ततो मुनेः पार्श्वे धर्मं श्रुत्वा तौ जीवदयामयं धर्मं चक्रतुः। मम्मणो मृत्वा नलोऽभूत्।
वीरमती तु अष्टापदे चतुर्विंशतिं जिनानुद्दिश्य पञ्चशतमिताचाम्लतपः स्वर्णतिलकदानोद्यापनयुतं कृत्वा बहु
पुण्यमर्जयित्वा त्वमभूः। तेन प्राक्कृतकर्मणा द्वादशाब्दिकोऽयं वियोगो भविष्यति। तत्र वैदर्भ्यां स्थितायां
जिनेन्द्रं पूजयन्त्यां सप्त वर्षाणि जातानि। अन्यदा तत्र स्थितां गुहाद्वारे कश्चिदेत्य तां भैमीं प्रति बभाण—
त्वत्पतिर्मया नातिदूरे दृष्टः। अहं तु शीघ्रं गच्छामि। सार्थो मे न प्रतीक्षते। श्रुत्वेति भैमी प्रारब्धं ध्यानं

समासीकृत्य तस्मिन् मार्गे चचाल । चलन्ती वने सैकाकिनी पतिता । अन्यदा राक्षसी क्रूराशया हन्तुं तां
समायान्ती तस्याः शीलप्रभावेण स्तम्भिता। ततः सा राक्षसी तां क्षमयित्वा स्वस्थानमगात् । [illegible]
तृषार्ता शीलमाहात्म्यात् पाणिना भूतले महतीमाविश्चकार नदीं भैमी । तत्र स्नाता सा । पयश्च पपौ । अन्यदा
धनदेवसार्थेशेन समं भैमी अचलपुरे ययौ । बहिश्च स्थिता । तत्र ऋतुपर्णभूपतेर्भार्या चन्द्रयशानाम्न्यभूत् ।
सा च भैम्या मातृस्वसा । तया दासीमुखाद्बहिरेका दिव्यरूपा स्त्री समेता श्रुता । [illegible]
भैमी स्वगृहे । मातृष्वसा नलवल्लभेति न ज्ञाता । भैम्या च स्वसम्बन्धो न ज्ञापितः । [illegible]
तया न प्रकाशितवती । तथापि तां भैमीं पुत्रीमिव गौरवेण चन्द्रयशा ददर्श । भैमी [illegible]
स्वस्रनुज्ञयाऽऽस्ते। पिङ्गलनामकं चौरं वधाय चलितं भैमी दययाऽमोचयत्। भैम्या अर्पितः । [illegible]
सार्थस्य भृत्यः। पृष्टश्च तया प्राह—यदा श्रीतापसपुराद्भैमी निर्ययौ तदा सार्थपतेः भैमीवियोग[illegible]
यशोभद्रसूरिणा बोधितः ससाहप्रान्तेऽमुंक्त । अथान्यदा वर्षप्राभृते रत्नस्वर्णादिभिः कुबेरं भूपं सन्तोष्य तापस-
पुरस्वामी राजाऽभूत् सार्थनायकः स्वयं। सम्प्रति वसन्तशेखरभूपो राज्यं प्रशास्ति । [illegible] ।

दीधपत् । तामालम्ब्य करे राज्ञी भूपाभ्यर्णमुपाविशत् । भूपपृष्टा भैमी रुदन्ती राज्यभ्रंशादिकां कथामचीकथत् तस्याः पुरः । राजापि मार्जयन् बाष्पौघस्नापिताननं प्राह—वत्से! कोऽत्र खेदः ?। कर्मणां गतिरीदृशी स्यात् । तस्मिन्नवसरे कश्चिद्देवो दिवोऽभ्येत्य सभामुद्द्योतयन् भैमीं नत्वेदमवोचत्—सोऽहं चौरस्त्वया पूर्वं, यस्त्रातः पिङ्गलाभिधः । प्रबोध्य जैनधर्मे वा, त्वयैव ग्राहितो व्रतम् ॥ १ ॥ श्मशाने प्रतिमास्थायी । त्वत्प्रसादादहं सौधर्मे सुरोऽभूवम् । ततस्त्वं चिरं विजयस्वेत्युदीरयन् देवः सप्त कोटीः सुवर्णस्य वृष्टिं चकार सभाऽन्तरे । तां स्वर्णवृष्टिं धर्मप्रभावाज्जायमानां ज्ञात्वा जैनं धर्मं हर्षतो राजा लोकाश्च प्रपेदिरे । ततो हरिमित्रो नृपं प्रति प्राह—स्थिता च चिरं भैमी । तां प्रेषय । ततः पितुर्गृहे सेनया सह संनाह्य नरेन्द्रोऽपि तथाऽकरोत् । श्रुत्वाऽऽयान्तीं भैमीं भीमभूपः सप्रियोऽभ्यागमत् सम्मुखम् । ननाम पितरं मातृयुतं भैमी हर्षबाष्पजला । समहं भीमः पुत्रीं स्वगृहमनैषीत् । सप्तरात्रोत्सवप्रान्ते राज्ञा पृष्टा नलप्रिया स्वविदेशभ्रमकथां मातापित्रोः पुरोऽवदत् । तदानीं पिता प्राह—गृहेऽस्माकं सुखं वस । यतिष्यते मया तथा यथा पूर्णो मनोरथो भविता । ततो राजा ग्रामपञ्चशतीं हरिमित्राय दत्तवान् । ऊचे च—नलागमने तुभ्यं राज्यार्द्धं दास्यामि । अन्यदा दधिपर्णभूपो दूतं प्रैषीद्भीमपार्श्वे मैत्र्यर्थम् ।

स च भीमेन सत्कृतः प्राह—राजन् ! दधिपर्णान्ते, प्राप्तोऽस्ति नलसूपकृत् । सूर्यपाकां रसवतीं, स वेत्ति रस-पेशलाम्॥ ॥ कलाश्चान्या अपि सर्वा द्विपेन्द्रदमनादिकाः। श्रुत्वेति भीमजा नृपं भीममब्रवीत्—न कश्चित्तां वेत्ति इह तं विना। गुटिकामन्त्रदेवादिमाहात्म्यगोपिताकृतिः। नूनं तवैव जामाता, स तात ! निषधात्मजः ॥१॥ ततो दत्त्वा शिक्षां भीमभूपः कुशलं द्विजं दधिपर्णान्तिके प्रैषीत् । स तत्पार्श्वमुपेयिवान् । प्रेक्ष्य तं कुब्जं विषण्णश्चित्ते चिन्तयामास—केयं मुक्ताफलभ्रान्तिर्भैम्या अप्यस्थलेऽभवत्। क नलस्त्रिदशाकारः, श्रियः पुञ्ज इवाङ्गवान् ? ॥१॥ कैष कुब्जतनुर्वातव्याधिमानिव कुत्सितः? । क कल्पवृक्षः कैरण्डः?, क माणिक्यं क चोपलः? ॥ २ ॥ कायं कुब्जः क भैमीमनोरथः। हा सर्वथा व्यर्थतां प्राप्ता सा भैमी शकुनावली च। हा हा परीक्षकविधे! कथं दम्पत्यो-रनयोर्वियोगः कृतः? इति । जायां स्मृत्वा कुब्जोऽरुदत्। तदा द्विजः पप्रच्छ—किं त्वया नलनाम्नि श्रुते रुद्यते? । कुब्जोऽवक्—नलस्याहं भृत्यस्तेन रोदिमि । विप्र ! पूज्योऽसि वदन् पुण्यकथामिमाम्। अधुना समागच्छ ममावासं। सत्कारं तव विदधाम्यहम् । सूर्यपाकरसवत्या स सूपकारः स्वस्थाने तं भोजयित्वा पूर्वं लब्धमाभरणादिकं तस्मै ददौ । ततः स विप्रो विदर्भायां पुरि गत्वा भीमभूपभैम्योः पुरः कुब्जस्वरूपं प्रोक्तवान् । रम्या रसवती भुक्ता,

रोदनं च कथान्तरे । टण्कलक्षादिकं कुब्जप्रदत्तं चावदत् स तु ॥१॥ भैमी प्राह—तात! अत्र विचारणा न कार्या । कुब्जरूपेण स एव मे पतिर्ज्ञेयः । एकदा तमत्रानय कुब्जं । यथैङ्गितैस्तमुपलक्षयिष्यामि । भीमः प्राह—वत्से ! मिथ्यास्वयंवरमण्डपच्छलादत्र तमानयिष्यामि। ततो राजा स्वयंवरमण्डपं मिथ्या मण्डयामास । सर्वत्र कुङ्कुमपत्रिकां भूपानाकारयितुं भृत्यांश्च प्रेषयामास । भीमो दूतं दधिपर्णभूपपार्श्वे प्रेषयामास । दधिपर्णेन दूतार्पिता कुङ्कुमपत्रिका वाचितेति। विदर्भायां पुरि भीमस्य पुत्री दमयन्ती चैत्रसितपञ्चम्यां परिणेष्यति वरं। तेन स्वयंवरो मण्डितोऽस्त्यत्र । इति कुङ्कुमपत्रिकां वाचयित्वा दधिपर्णः प्राह—लग्नं निकटं विद्यते, तन्नगरं तु दूरेऽस्ति । इति जल्पन्तं विषादिनं दधिपर्णं वीक्ष्य कुब्जः प्राह—स्वामिन्! मा विषादं कुरु। यदि तव तत्र गन्तुमिच्छाऽस्ति तदा वयं रथमेकं घोटकद्वययुतं सज्जीकारय । तत्राहं सारथिर्भविष्यामि । मम मन्त्रशक्तिस्तथाऽस्ति यथा त्वरितं तत्र त्वां नेष्यामि । स्थगीप्रकीर्णकच्छत्रधरैः परिवृतो नृपः कटीबद्धो बिल्वकरण्डशाली कुब्जकसहितश्च चचाल । रथारूढे भूपे कुब्जकः सारथीभूतो। रथश्चचाल । स विद्यां वाजिकर्णे कथयित्वा खेटयामास। रथे गच्छति व्योम्नि भूपः प्राह—भो कुब्ज ! मम पटी पतिता। रथं रक्ष। पटी गृह्यते । कुब्जोऽवक् सस्मितं—देव !, यत्र ते पतिता पटी ।

योजनानां ततो भूमेरतीता पञ्चविंशतिः ॥ १ ॥ अमी हि मध्यमा वाहा, यदि स्युः पुनरुत्तमाः । शतार्द्धं योजनानां तल्लङ्घामि क्षणवत् प्रभो ! ॥ २ ॥ अक्षवृक्षं फलितं वीक्ष्य राजा वर्त्मन्यवदत्—अस्मिन् वृक्षे कियन्ति फलानि सन्ति ?। कुब्जोऽवग्—त्वमेव फलानामत्र सङ्ख्यां कुरु । राज्ञोक्तं—अष्टादश सहस्राणि फलानि सन्त्यत्र । ततः कुब्जेन मुष्टिना ताडिते वृक्षे फलानि पतितानि भुवि । गणितानि कुब्जेन । तावन्त्येवाभूवन् फलानि । राजाऽवग्—एवं यदि क्रीडा क्रियते तर्हि तत्र गमनं दुःशकम् । ततो राज्ञा कुब्जपार्श्वादश्वचालनविद्या गृहीता । कुब्जेन फलगणनविद्या भूपपार्श्वाद्गृहीता । ततो रथो रविरथस्य स्पर्धया चचाल । इतो भैमी तस्यां निशि स्वप्नं दृष्ट्वा पितुः पुरः प्राह—तात ! अद्य निर्वृत्तिर्देवी मां निन्ये कोशलावनम् । तया देव्या तत्र मुक्त्वा रसालफलं दत्तं विकचं सरसीरुहं च । विहगः कोऽपि तत्तरोराम्राद्भूतले पपात । भीमोऽप्याह—वत्से ! त्वया दृष्टः स्वप्नोऽयमुत्तमस्तेन पतिस्तव मिलिष्यति यतः । इत्थं तयोः पितृपुत्र्योर्वार्तयतोर्दधिपर्णः पुरप्रतोल्यामागात् । सर्वेषु भूपेषु भूपस्थानकस्थितेषु भीमः सर्वेषां गौरवं चक्रे । दधिपर्णस्योत्तारके रविपाकरसवतीं निष्पद्यमानां वीक्ष्य प्रच्छन्नं भिक्षाछलाद्दमयन्ती अन्नमानयामास । तदन्नमास्वाद्य भैमी प्राह ताताग्रे—कुब्जो वा यदिवा खञ्जो, नल एष महीपते ! । रूपपरावृत्तिं

कृत्वा, तिष्ठति स्म नलो नृपः ॥१॥ एवं निश्चित्य भैमी सुखासनारूढा प्रतीहार्या वर्ण्यमाननृपान् दृष्ट्वा स्वयंवरमण्डपं बहुमुल्लङ्घयामास। तदा लोका जगुः—अस्या एकोऽपि एष भूपेषु वरो न रोचते। न ज्ञायते किं करिष्यति?। सर्वान् भूपान् व्यतिक्रम्य सूपकारकण्ठे भैमी वरमालां चिक्षेप। तदा सर्वे लोका हाहाकारं चक्रुः। अहो अनया मूढया किं कृतं?। कुब्जोऽङ्गीकृतः। भैमी प्राह—स्वामिन्! मया त्वमुपलक्षितोऽसि। स्वरूपं प्रकटीकुरु। त्वमाश्रितेषु कल्पतरुस्ततो यावन्नलः स्वरूपं प्रकटीचकार तावद्भैमी अधोमुखं लज्जया व्यधात्। भीमभूप आसने निवेश्य प्राह—राज्यं प्राज्यमिदं चैताः, सम्पदो विधुतापदः। वयमादेशकर्तारो, यथारुचि नियुज्यताम् ॥ १ ॥ दधिपर्णोऽपि सम्भ्रान्तो नलं वीक्ष्य ननाम। मया अज्ञानात्त्वं रसवतीनिष्पादनान्नीचकर्म कारितः। क्षम्यतां ममापराधस्त्वया। तदा धनदेवः ससार्थेशो भीमं द्रष्टुमुपागमत्। बन्धुवद्गौरवं तस्य भैम्यकारयत्। तापसपुराधीशमृतुपर्णनृपं तातपार्श्वान्मानयामास भैमी। ततो नवैर्नवैर्महोत्सवैर्भूपेन कार्यमाणैरेको मासो व्यतीतो मुहूर्तवत्। अन्येद्युः कश्चिदभ्येत्य सुरो भैमीमवोचत्—देवि! स्मरसि यस्त्वया तापसेश्वरो वने प्रतिबोध्य सम्यक्त्वमूलं द्वादशव्रतं ग्राहितः। क्रमेणार्हतं व्रतं ग्रहीत्वा सौधर्मे केसराह्वः स सुरोऽभवम्। त्वामुपकारिणं मत्वाऽहमत्रागाम्। त्वं

धर्मगुरुर्ममेत्युक्त्वा नतिपूर्वकं सप्त कोटीः सुवर्णवृष्टिं कृत्वा स्वस्थानमगात्। ततः सर्वे भूपा मिलित्वा नलं राज्येऽभिषिषिचुः। ततो नलो बहुसैन्ययुक् कोशलां प्रति प्रतस्थे। तत्र गत्वा नलो दूतं प्रेष्य कूबरस्य प्रान्ते प्राह—त्वं पुनर्मया सह दुरोदरं कुरु। नो चेत्त्वं मया हनिष्यते। ततो दुरोदरेण कूबरो नलेन जितः। नलः स्वराज्यमङ्गीकृत्य दयया कूबराय युवराजपदं ददौ। भरतार्धनृपाः सर्वे नलाज्ञां भेजुः उपायनपाणयः। सर्वत्र स्वदेशेऽमारीं कारयामास। ततो नलो दमयन्तीयुतो महोत्सवपुरस्सरं सर्वेषु जिनचैत्येषु पूजां चकार। जैनान् प्रासादान् भूरिशश्च कारयतो नलस्य परःसहस्राणि शरदो व्यतीयुः सुखम्। इतो निषधनाकी स्वर्गादेत्य प्राह—भो नल! इदं राज्यं नरकान्तं। संयमं गृहाण। ततः क्रमात् स पुष्कलनामानं सुतं राज्ये निवेश्य तौ दम्पती नल-भैम्यौ दीक्षां जगृहतुः। नलस्तु श्रीश्रुतसागरपार्श्वे शास्त्राण्यपाठीत्। गुरुभिः सह विनयपरो व्यहार्षीत्। क्रमान्नलः सुकुमारत्वात्संयमे शिथिलाशयः पुनर्निषधसुरेणाभ्येत्य संयमे दृढीकृतः पुनः पुनः। कथञ्चित् प्रान्ते नलो भैम्यां विषये मोहं दधानोऽनशनेन मृत्वा कुबेरनामासुरोऽभूत्। भीमजाऽपि साध्वीपार्श्वे दीक्षां पालयित्वा

कुबेरस्य सुरस्य पत्नी बभूव । क्रमाद्वसुदेवपत्नी कनकवती भूत्वा भैमी मुक्तिं ययौ । नलोऽपि ततश्च्युत्वा मनुजोऽपि भूत्वा क्रमान्मुक्तिं ययौ । इति भैमी—दमयन्तीकथा ॥ ५ ॥

ये पालयन्ति सच्छीलं, स्वर्गापवर्गदायकम् । नर्मदासुन्दरीवालं, ते पूज्याः स्युर्महीतले ॥ १ ॥

तथाहि—भरतखण्डेऽस्मिन् श्रीवर्द्धमानं पुरं विद्यते । तत्र श्रीसम्प्रतिः भूपो राज्यं न्यायाच्चकार । तस्मिन्नेव पुरे ऋषभसेनसार्थेशस्य भार्या वीरमती बभूव । तयोः सहदेववीरदासौ पुत्रावभूताम् । ऋषिदत्ताह्वा पुत्री चाभूत् । क्रमात् सार्थेशः पुत्रौ पुत्रीं च पाठयामास । यतः—प्रथमे नार्जिता विद्या, द्वितीये नार्जितं धनम् । तृतीये नार्जितो धर्मश्चतुर्थे किं करिष्यति ? ॥ १ ॥ स सार्थेशस्तां पुत्रीं याचमानां मिथ्यादृशां न ददौ । सम्यक्त्वमूलद्वादशव्रतधारकं श्रावकं धर्मिणमेव वरं विलोकयते । यतः—न्यायसम्पन्नविभवः, शिष्टाचारप्रशंसकः । कुलशीलसमैः सार्द्धं, कृतोद्वाहोऽन्यगोत्रजैः ॥ १ ॥ अन्यदा रुद्रदत्तो नाम वणिक्सुतो महर्द्धिमान् रूपचन्द्रपुरात् व्यवसायार्थं तत्रागात् । परं मिथ्यात्ववासिताशयः । तत्रैव नगरे कुबेरदत्तस्य सुहृदो मन्दिरे व्यवसायपरः स्थितो रुद्रदत्तः । स्वगृहवत् वर्द्धमानपुरे मत्तवारणमासीतोऽन्यदा सखीवृतामृषिदत्तां सुरीमिवापश्यद्रुद्रदत्तो । दध्यौ च—

किमेषा पातालात् पातालकुमारी अत्रागात्?। अथवा सुरी रतिः प्रीतिः श्रीर्ह्रीर्लक्ष्मीर्वा?। कुबेरदत्तं पप्रच्छ रुद्रदत्तः—कस्यैषा कन्या?। कुबेरदत्तोऽवग्—ऋषभसेनस्य सुश्रावकस्य पुत्री ऋषिदत्ता । श्रावकं विनाऽसौ श्रेष्ठी स्वपुत्रीं मिथ्यादृशां न दत्ते। ततस्तेन रुद्रदत्तेन जैनमुनिपार्श्वे जैनधर्मः शिक्षितः सम्यक्। एकदा भोजनार्थं निमन्त्रितः ऋषभसेनेन । स मायावी विधिवज्जिनं प्रपूज्य बुभुजे । क्रमात्तं सुश्रावकं रुद्रदत्तं मत्वा श्रेष्ठी स्वपुत्रीमृषिदत्तां तस्मै ददौ। मायां विना दुःशकं कार्यं न सिध्यति। सविस्तरं तां कन्यां परिणीय रुद्रदत्तोऽत्यर्थं स्वं कृतार्थं मन्यते । कतिपयैर्दिनैः श्वशुरमापृच्छ्य लक्ष्मीं बह्वीमुपार्ज्य ऋषिदत्तायुक् स्वपुरं ययौ । मातापित्रोर्मिलितः प्रियायुक्। हृष्टौ पितरौ। रुद्रदत्तो जैनधर्ममपुण्यवान् रत्नमिवात्याक्षीत्। क्रमाद् ऋषिदत्तापि जैनधर्ममत्यजत्।तस्य पत्युः संसर्गात् । यतः—अंबस्स य निंबस्स य दुण्हंपिय समागयाइं मूलाइं। संसग्गीइ विणट्ठो, अंबो निंबत्तणं पत्तो ॥१॥ कथित-शवमिलितो वायुर्दौर्गन्ध्यं किमु नाश्नुते?। मत्वेति क्रमाद् ऋषिदत्तां तादृशीं पितरौ जन्मविवाहादावपि नाकारयामा-सतुः । ऋषिदत्ता क्रमान्महेश्वरदत्ताख्यं पुत्रमसूत। क्रमेण यौवनं प्राप। सोऽपि कलाः सकला अस्त्रधर्माद्या जग्राह। इतः ऋषभसेनपुत्रः सहदेवः श्रीदत्तश्रेष्ठिपुत्रीं सुन्दरीं परिणिन्ये । क्रमात् सा गर्भं दधार सत्स्वप्नसूचितम्। तस्या

अन्येद्युर्नर्मदायां जलकेलिक्रीडां कर्तुमिच्छा समुत्पन्ना गर्भानुभावात् । ततः सहदेवस्तां प्रियां तत्रानैषीत् । शुभेऽहनि जायया सार्द्धं सहदेवो नर्मदायां जलक्रीडां चकार । तत्र सहदेवो व्यवसायाय स्थितः । नर्मदाख्यं पुरं तत्र स्थापयामास । सहदेवः जिनमन्दिरं चासूत्रयत् उत्तुङ्गं मेरुवत् । सम्यक्त्वपिण्डमपोषयत् पुण्य-पिण्डपोषायात्मनः। स्वस्वस्थानानि संत्यज्य भूयांसो व्यवहारिणस्तत्रागत्य स्थितिं चक्रुः सरोजे भ्रमरा इव । अनेके जैनप्रासादास्तत्र निष्पन्नाः । क्रमाद्वैडूर्यं भूमिरिव सुन्दरी शुभे लग्ने साधुलक्षणां सुतामसूत । पुत्रीजन्मोत्सवं कृत्वा पिता नर्मदासुन्दरीति नामाभ्यधात्। पूर्वाभ्यासादेषाऽपि नर्मदासुन्दरी सकलाः कलाः प्रपद्य चन्द्रोदय इव यौवनं प्राप। नर्मदासुन्दरीरूपमद्भुतं श्रुत्वा ऋषिदत्ता स्वसुतार्थं सा याचिता, तामलब्ध्वा चिन्तयामास—धिग् धिग् मां दूरी-कृतां स्वजनैः। मया जिनधर्मं त्यक्त्वा सर्वं हारितं। स्वजनाः पर्वस्वपि मां न सम्भावयन्ति स्म। कथं ते स्वजना मम पुत्राय महेश्वरदत्ताय स्वां पुत्रीं दास्यन्ति ? । (दुःखेन) रुदन्तीति तदा पृष्टा रुद्रदत्तेन रोदनहेतुम् । सा पत्युः पुरः स्वमनश्चिन्तितं प्राह ।तन्मातृप्रोक्तं श्रुत्वा महेश्वरदत्तः प्राह—मातर्मां तत्र प्रेषय। अहं तत्र गतः सन् स्वजनानावर्ज्य मातुलसुतां नर्मदासुन्दरीमुद्वाह्य त्वां प्रमोदयिष्यामि । ततो मातरं मुत्कलाप्य प्रमुदितो महेश्वरदत्तः प्रतस्थे ।

ततो महेश्वरदत्तः स्तोकैरेव दिनैर्नर्मदापुरं प्राप । मातामहादयोऽपि स्वजनाः सर्वे लोकलज्जया मिलिताः मिथ्या-
त्ववासितमपि तं सच्चक्रुः । उचिताचारो जिनैरपि न मुच्यते । सोऽपि धैर्यगाम्भीर्यादिगुणैस्तोषयामास बान्धवान्
गीतैर्व्याधो मृगानिव । मातामहस्तमन्येद्युरारव्यदुत्सङ्गसङ्गिनम्—वत्सास्मच्चित्तमावर्जितं त्वया जाङ्गुल्याऽहिरिव ।
यत्ते मनीषितं भवति तद्याचस्व । महेश्वरदत्तोऽवग्—नर्मदासुन्दरीं कन्यां मह्यं देहि । मातामहोऽवग्—वत्स!
युक्तमुदीरितं त्वया, कुलं कुदृष्टिमत्त्वया कृतं, तेनाहं तुभ्यं मिथ्यात्ववासिताय न पुत्रीं दातुमीहे । पूर्वाराधित-
ज्ञानात्सद्यो गुरुपार्श्वे ज्ञातार्हत्तत्त्वो महेश्वरदत्तो जगौ—आस्तां कुलं, किं तस्य कुलस्य चर्चया ?। किमुत्पत्तिं वीक्षन्ते
जनाः पङ्कजादीनाम् ?। अहं तु जिनधर्म्माऽस्मि । सर्वैः परीक्षणैर्ज्ञेयः । इत्यादि प्रजल्प्य प्रत्याययामास तान् स्वज-
नान् । महेश्वरदत्ताय मातामहो नर्मदासुन्दरीं ददौ । महेश्वरदत्तो नर्मदासुन्दरीं परिणिन्ये । नर्मदासुन्दरी जैन-
धर्मकर्मणि कर्म्मठा जिनेन्द्रशास्त्रमहेश्वरशास्त्रयोः सम्बन्धमुक्त्वा जिनधर्मकुशलं पतिं चक्रे । कियत्यपि काले गते
श्वशुरादेरनुज्ञया भार्यायुक्तो महेश्वरदत्तो निजपुरे गतः । नर्मदासुन्दरी ऋषिदत्तायाः पदयोर्नमन्ती मुदमत्यन्तं
चकार । नर्मदासुन्दरी सुशीला सर्वकुटुम्बं मिथ्यात्वविषं त्याजयामास । नर्मदासुंदरी तथा चलति तथा जल्पति

यथा श्वशुरादेः सर्वस्य प्रमोदो भवति । मया मिथ्यात्वं मुक्तमधुना सर्वप्रकारेण । सुखिन्यभूत् नर्मदासुंदरी । गवाक्षारूढा नर्मदासुन्दर्यन्येद्युर्दर्पणे मुखं पश्यन्ती ताम्बूलमास्वादयन्ती च विद्यते । तदा गवाक्षस्याधस्ताद्गतस्य साधोः शीर्षस्योपरि ताम्बूलं पपात । दृष्ट्वा ताम्बूलं स्वमस्तके पतितं गवाक्षस्थां नर्मदासुन्दरीं च वीक्ष्य सकोपो ज्ञानवानाह—अस्मात्साधोराशातनाकारणात् त्वं पत्या सह वियुज्यसे । सहसा वातायनादुत्तीर्य खिन्नचित्ता नर्मदासुन्दरी साधोः पदयोः पतित्वा प्राह—भो साधो! दुर्विदग्धाऽहं, निर्भाग्याऽस्मि दुरात्मिका। श्रीजैनोपासिकाऽपीत्थमकार्षमविनीतताम् ॥ १ ॥ तद्विश्ववत्सलाः पुण्यकारुण्यरससिन्धवः । महात्मानो भवन्तीति, क्षम्यतां ममापराधः (मेऽपराधनं) ॥२॥ यतः—शत्रुभ्योऽपि न कुप्यन्ति, न मुह्यन्ति स्वकेष्वपि । न शपन्ति स्वनाशेऽपि, मुनयः समदृष्टयः ॥ ३ ॥ तस्मान्मयि दत्तः शापोऽपसार्यतां त्वया । प्रसद्य मुनिः प्राह—शृणु श्राद्धे वत्से! मा खिद्यथाः । न क्वापि मुनयो जैना ददते शापनिग्रहौ । यतः—वंदिज्जमाणा न समुक्कसन्ति, हीलिज्जमाणा न समुज्जलन्ति । दंतेण चित्तेण चरंति धीरा, मुणी समुग्घाइयरागदोसा ॥ १ ॥ स्वरूपमात्रमिदं मयाऽकस्मादुक्तं, किं कस्याप्युक्तेन दुःखादि [न] भवति ? । दुष्कर्मोदये सति वियोगादिदुःखं स्यात् । स्वार्जितं कर्म भुञ्जानः, को विज्ञो दुर्मनायते ? ।

प्रबोध्येति गतः साधुः, स्वमार्गे प्रणतस्तया ॥ १ ॥ पत्योक्तं—प्रिये! मा खेदं कुरु । निराबाधं जिनधर्मं वितन्वाना सुखं निर्गमयामास । अन्येद्युर्महेश्वरदत्तोऽपि व्यवसायार्थं चिचलिषुरभूत् दूरदेशं प्रति । यवनद्वीपं प्रति । तदा तीव्राग्रहान्नर्मदासुन्दर्यपि पत्या सह चचाल । अब्धिमार्गेण यानमारुह्य भूरिक्रयाणकयुतो महेश्वरदत्तश्चचाल। पयोधिमध्ये कस्मिंश्चिद् द्वीपे केनापि पुरुषेण गीयमानं मधुरं गीतं श्रुत्वा दूरे नर्मदासुन्दरी प्राह सरलस्वभावत्वात्—स्वामिन्! य एष गीतानि, गायन्मधुरया गिरा। श्यामाङ्गः स्थूलपाण्यंघ्रिकेशो ज्ञेयः स सत्त्ववान् ॥ १ ॥ यतः—चक्षुःस्नेहेन सौभाग्यं, दन्तस्नेहेन भोजनम् । त्वक्स्नेहेन (च) श्रीमान् स्यात्, पादस्नेहेन वाहनम् ॥ २ ॥ अकर्मकठिनौ हस्तौ, गुह्येऽस्य पुरुषस्य च। मशकोऽस्ति शोणितं च, वक्षसि लाञ्छनं (दक्षिणं लोचनं) तथा। द्वात्रिंशद्वर्षदेशीयः, पृथुवक्षाः स विद्यते ॥ ३ ॥ आर्षदत्तो दध्यौ—एषा मत्प्रिया अनेन पुरुषेण लुब्धाऽस्ति कौशिकेनेव मेनिका। अन्यथा असौ कथं तस्यादृष्टस्य देहे ईदृग्रूपं वेत्ति। अज्ञासिषमियत्कालमेनामहं महासतीम्। सांप्रतं कुशलां धौतकुले केतुमवैम्यहो ॥१॥ को वा प्रत्येति योषासु, शाकिनीष्विव बुद्धिमान्? । पुत्रादिकमपि स्वार्थे, तृणवद्गणयन्ति याः ॥ २ ॥ निष्ठ्यूतमिव पाथोधौ, पातयाम्यधुना किमु? । इमां वा खड्गदण्डेन, छिनद्मि कदली-

मिव ॥ ३ ॥ यावत्तस्यामदुष्टायां किञ्चित् प्रतिकूलं कर्तुं चिन्तयति वणिक् तावत् निर्यामकः कूपस्थितः प्राच्चैरवोचत्—स्थापयन्तु क्षिप्रं, पोतवस्त्रं पातयन्त्वधः। राक्षसद्वीपः समागतः । जलेन्धनादिसामग्रीं गृह्णीध्वं जवादितः । श्रुत्वेति तथा सर्वं विदधुः पोतवाहकाः । तत्र द्वीपे आर्षदत्तोऽपि मायया गूढमत्सरः नर्मदासुन्दरीं रन्तुमनयत् कानने । क्वचित्सरस्तीरे क्वापि स्थिता । तस्याः नर्मदासुन्दर्या निद्रा समागात् । यदि हन्यते तदा महत्पापं स्त्रीहत्यादिकं लगति, इति ध्यात्वा सुप्तां तां मुक्त्वा महेश्वरदत्तो नष्टः। समेत्य पोतवाहजनान् प्राह सः। अथ केनचिद्व्याघ्रेण मम प्रिया भक्षिता। अहं तादृशीं प्रियां विना कथं भविष्यामि ?। इति रुदन्तं जना जगुः—स्वामिन्! प्रियार्थे कः खेदं करोति ?। सा चेद् हता तर्हि नवीना वर्या भविष्यति । महेश्वरदत्तोऽवग्—अत्रास्ति स दुर्द्धरव्याघ्रो राक्षसरूपधरः। तेन त्वरितं चल्यते। स्थातुमत्र क्षणमपि न युक्तम्। ततो यानं त्वरितं चालितं तैः । आर्षदत्तो दध्यौ च—सा स्वैरिणी मुक्ता यत्तद्वरं कृतम् । क्रमाद्यवनद्वीपे गत्वा बह्वीं श्रियमर्जयित्वा महेश्वरदत्तः स्वपुरमागात् । मम प्रिया राक्षसेन भक्षितेति पित्रोः पुरः प्राह । ततः स्नुषायाः प्रेतकार्याणि कृत्वा महेभ्यकन्यां सुतं पर्यणाययतः पितरौ। इतश्च नर्मदासुन्दरी पञ्चनमस्कृतिं स्मरन्ती याव-

दुत्तस्थौ तावत् पतिमवीक्ष्य दुःखिताऽभूत् । नर्मदा नर्म मन्वाना उच्चैःस्वरं प्राह–भो पते! आगच्छ
२। उत्तरं देहि। मां प्रमोदय २। ततो बिभ्यती दुःखिता नर्मदा नदीतीरे पदे पदे स्थाने स्थाने व्यलोकत पतिं।
न दृष्टस्तया । अदृष्ट्वा क्वापि वनादिषु पतिं नर्मदासुन्दरी तथा रुरोद मुक्तस्वरं यथा तत्र पार्श्वस्थान् तरूनपि
रोदयामास । आकर्ण्य रुदितप्रतिध्वानं कन्दरासु धाविता सा मृगीव मृगतृष्णिकाम् । सर्वत्र बभ्राम सा । न
तद्वनं न ते वृक्षा, न तद्गुल्मं न सा गुहा । यत्र सा नहि बभ्राम, सा तारं न रुरोद वा ॥ १ ॥ तदा चन्द्र
उदेति स्म । पतिवियोगदुःखेन तापिताऽतीव दुःखिनी सा बभूव । संवत्सरशतमयीं रात्रिमतीत्य प्रातः पुना रुरो-
देति–हा नाथ! किमहो प्रेमसुधापूर्णामिमां प्रियां मुक्त्वा गतोऽसि?। यदि गतस्तर्हि एकदोत्तरं देहि मह्यं त्वमत्र
समेत्य । इत्थं रुदन्ती पथिकान् वृक्षानपि सा पञ्चाह्नीमत्यवाहयत् । विलम्बितमभूद्यत्र यानं पूर्वं तत्रागता।
सा सती पुनः पुनस्तारस्वरं रुरोद । ततो निराशा सती सा परमेश्वरवचः स्मृत्वा शोकं तत्याज । यतः–पूर्वा-
र्जितं निजं कर्म, भुज्यतां मा विषीद रे । आत्मानमात्मना चेत्थं, प्रतिबोध्य महासती ॥ १ ॥ स्नात्वा सरोवरे
जिनं पूजयित्वा कुसुमैः फलाहारं कुर्वाणा सा तस्थौ । इङ्गुदीफलैर्दीपं करोति स्म । अन्यदा नर्मदासुन्दरी

शोकं सर्वथा त्यक्त्वा व्रतग्रहणतत्पराऽभूत् सा । इतश्च वीरदासाख्यस्तस्याः पितृव्यो विवेकधीर्व्रजन् बर्बरकूलं नर्मदासुन्दर्यलङ्कृतं प्रदेशमगात् । सा पितृव्यं तत्रागतं दृष्ट्वा मुक्तस्वरं रुरोद । स पितृव्यः पप्रच्छ—किमेकाकिनी त्वं वत्से! दृश्यसे । ततः सा सर्वं चरितं न्यवेदयत् । निन्दन् कर्मस्थितिं नर्मदासुन्दरीमादाय संप्राप्य बर्बर-कूलं बहिः सार्थमवासयत् । महासतीं निवेश्य प्रत्यग्रे वस्त्रमण्डपे उपदामादाय स्वयं राजसभां ययौ । राज्ञा शुल्के मुक्ते वीरदासस्तत्र क्रयाणकक्रयविक्रयौ कुरुते स्म । इतोऽस्ति हरिणी नाम गणिका विश्रुता । भूपस्य प्रसादपात्रं । सर्वसौभाग्यसंपत् । सा तत्र विद्यते स्म । तत्र सांयात्रिकेभ्यो दीनारानष्टोत्तरशतं सा प्रतिवर्षं गृह्णातीति कृता व्यवस्था राज्ञा । सा वेश्या वीरदासमाह्वातुं दासीं प्रैषीत् । स्वदारसन्तुष्टः स तां निराकरोत् । अथोक्तायां स्थितौ धनं तस्यै तदार्पयत् । साऽपि दासी तत्सर्वं धनं स्वस्वामिन्यै हरिण्यै ददौ । गणिका प्राह—किमेभिर्धनैः?, तं वीरदासमिहानय । ततो दासी प्रपञ्चेन तं तत्रानिनाय । वेश्या हावभावादिभिः श्रेष्ठिनं क्षोभयितुं प्रचक्रमे । किञ्चित् कपटं विचिन्त्य श्रेष्ठिहस्ते उत्कृष्टां मुद्रिकां दृष्ट्वा जग्राह । तां मुद्रिकां प्रच्छन्नं दासीहस्तेऽर्पयित्वा प्राह—गच्छ त्वं वीरदासस्योत्तारके या स्त्री वर्तते तस्या अग्रे इमां मुद्रिकामभिज्ञानं दर्शयित्वा तामत्रा-

कारय । चेटी कूटपटुर्गत्वा तां नर्मदामब्रवीत् । गृहेऽस्माकं श्रेष्ठ्युपविष्टोऽस्ति । स त्वामाह्वयति । शोभने ! मुद्रिकेयं प्रेपिताऽस्ति अभिज्ञानार्थम् । नामाङ्कितां मुद्रिकां वीरदासस्यालोक्य नर्मदा तया सार्द्धं निश्छद्मा गणिकागृहेऽगमत् । तां प्रवेश्य गृहमध्ये भूमिगृहेऽक्षिपद्गणिका । ततो गणिका स्ववाञ्छितं कृत्वा पुनः पश्चादूर्मिकामार्पयत् तस्मै । अखण्डितव्रतः सोऽपि श्रेष्ठी स्वस्थानमागमत् । अप्रेक्ष्य नर्मदां स्वगृहे क्षुब्धः पप्रच्छ सेवकान् । विलोकिताऽपि सा न दृष्टा तेन यदा तदाऽतीव दुःख्यभूत् । वीरदासो चिन्तयति स्म—याऽपजह्रे सतीमेतां, निर्मायां मायया ध्रुवम् । सा कथं विद्यमानेऽत्र, मयि प्रकटयिष्यति ? ॥ १ ॥ चिन्तयित्वेति भाण्डानि बहूनि समादाय स्वपुरं प्रति गन्तुकामो नृपमापृच्छ्य चचाल । क्रमाद्भृगुपुरं गतो वीरदासः । ततो वीरदासेन तच्छुद्ध्यै शुद्धधीर्जिनदासश्चालितो बर्बरकूलं प्रति । तत्र गतः सन् जिनदासो नर्मदां विलोकयन् न प्राप क्वापि तच्छुद्धिं च । इतश्च—गणिका वीरदासे चलिते सति नर्मदां प्रति प्राह—हिरण्यमुपार्जयान्यपुरुषरञ्जनेन । भद्रे ! वेश्यात्वमादृत्य, स्वजन्म सफलीकुरु । उर्वशीव महेन्द्रस्य, मान्या भव महीभुजः ॥ १ ॥ तच्छ्रुत्वा विधुरा हस्तौ, धुनाना नर्मदाऽवदत् । जीवन्त्याः शीलमाणिक्यं, कोऽन्यो मे हर्तुमिच्छति ? ॥ २ ॥ वेश्याऽऽह सफलं जन्मास्माकमेव महीतले ।

इहस्था अपि याः स्वर्गभोगान् भुञ्जामहे वयम् ॥ ३ ॥ नर्मदा प्राह को नूनं, स्वं (स्वकं) वञ्चयते शिवात् । कुर्वन्ति बालका एव, माणिक्यैश्चणकक्रयम् ॥ ४ ॥ इति तस्या वचसा कोपाविष्टा हरिणी रयात् तामाजघान वाञ्छितसिद्ध्यै । सा तु न मन्यते । तदा ताड्यमाना च वेश्यया सा नर्मदा चित्ते पञ्चनमस्कृतिमस्मार्षीत् । अकस्मात्तस्याः सत्याः प्रभावाद्वेश्या प्राणैरमुच्यत । अथ मन्त्री नृपादेशाद्वेश्यामृत्योरनन्तरं तत्पदे स्थापनायालं प्रार्थयामास नर्मदाम् । नर्मदासुन्दरी दध्यौ—यदि बलात्कारः करिष्यते मया तदा मां भूपस्याग्रे नेष्यति मन्त्री । मम रूपेण मोहितो राजा यदि मामन्तःपुरे क्षेप्स्यति तदा मया प्राणांस्त्यक्त्वाऽपि शीलं रक्षणीयमिति ध्यात्वा मन्त्रिवचो (न) मेने । ततो मन्त्रिणा राज्ञो ज्ञापितम् । ततो राजा तामानेतुं सुखासनं प्रेषयामास । नृपभृत्यास्तां सुखासनारूढां कृत्वा मस्तकधृतच्छत्रां यावत्तूर्णं नयन्ति तां तावता शीलरक्षायै वैकल्यमेवौषधं परमिति मत्वा विशाले नगरक्षाले दृषत्पातं पपात सा । ततस्तया यक्षकर्दमेनेव तेनाशुचिना स्वशरीरं विलिप्तं कृत्वा (तं) । कन्येयं बहिर्निर्गता च सा नर्मदा वस्त्राणि पाटयामास । धूलिं पुनः पुनर्मस्तके चिक्षेप । इतस्ततो व्यन्तरीव धावति स्म । चीत्कारं करोति स्म । लोकान् भापयति स्म । तथा सर्वे लोका बिभ्यतो दिशं दिशं नष्टा जजल्पुरिति—कन्येयं व्यन्तरीग्रस्ताऽभूत् । ततो मन्त्रिणो भूपाग्रे

प्रोचुः—स्वामिन्! सा स्त्री ग्रथिला बभूव। व्यन्तरीव दृश्यते सा। ततो राज्ञा प्रहिता मान्त्रिकास्तां ताडयामासुः। अन्यदा ग्रथिलीभूय गायति जिनरासकान्। सा जिनदासेन ददृशे। सोऽपि तस्याः पुरोभूय करुणार्द्रोऽभ्यधात्—का त्वमसि?, व्यन्तराधीशः, जिनभक्तोऽसि?, सा प्राह—यदि त्वं जैनोऽसि तदा रहोभूय मया सह वक्तव्यं, त्वया वै रहस्यं मा कृथाः। तस्याः पृष्ठे जिनदासोऽपि गतः। योजिताञ्जलिः प्राह—का त्वं धर्मैकमानसा?। साऽपि तं सुश्रावकं मत्वा सर्वं स्वोदन्तमाह। तच्छ्रुत्वा स जिनदासोऽप्याह—साधु साधु मयेक्षितासि। यतस्त्वदर्थमेवात्राहमागमम्। वत्से! प्रेषितोऽहं वीरदासेन सुहृदा भृगुकच्छात्। तस्मात्त्वं मा खिद्येथाः। सर्वं साधु संघटयिष्यते। समये सुप्रयुक्ताया मायायाः किमसाध्यम्?। अतःपरं त्वया घटपटादि भञ्जनीयम्। यथा राजा त्वां पुराद्बहिर्निष्काशयति। ततः सा नर्मदासुन्दरी भूताविष्टीभूय तथैव चकार यथा राज्ञ आदेशादमात्या बहिर्निष्काशयामासुः। ततो जिनदासस्तां नर्मदासुन्दरीं लात्वा पश्चाच्चचाल। मार्गे स्नपयित्वा दुकूलं पर्यधापयज्जिनदासः। प्राप्याब्धितटं यानारूढो जिनदासो नर्मदां नर्मदापुरमानिनाय। तामायान्तीं ज्ञात्वा जनकादयः सर्वे स्वजना मिलिताः। हृष्टाश्चातीव ऋषभसेनाद्याः। जीवन्तीं तां तदा प्राप्य तस्या जन्मोत्सवमिव महोत्सवं व्यधुः। तथा जैनविहारेषु,

महापूजापुरस्सरम् । साधर्मिकादिवात्सल्यधर्मकर्माणि तेनिरे ॥ १ ॥ सगौरवं जिनदासोऽप्युषित्वा कतिचिद्दिनानि वीरदासं चापृच्छ्य भृगुपुरे ययौ। इतश्चार्यसुहस्त्याख्याः सूरयस्तत्र नर्मदापुरे आजग्मुः । नर्मदासुन्दरी पित्रादियुता सूरीन् वन्दितुं ययौ । धर्मोपदेशमाकर्ण्य देशनान्ते वीरदासो व्यजिज्ञपत्—नर्मदा किं कर्म पूर्वं चक्रे ? येनेयमिह निष्कलङ्काऽपि कलङ्कं प्राप्य दुःखभाजनं बभूव । अथ गुरवो ज्ञानिनः प्रोचुः—विन्ध्यगिरिर्महानस्ति । तदाश्रितैकाद्रिभवा नर्मदा नाम नदी बभूव । मिथ्यादृग् नर्मदासुन्दरी तस्या अधिष्ठाताऽभूत् । एकदा तया देव्या नर्मदातटस्थस्य मुनेः कायोत्सर्गस्थस्योपसर्गाश्चक्रिरे भृशम् । स मुनिर्मनागपि न तस्यां द्वेषं चकार । सा देवी ततश्च्युता भवद्भगिनी नर्मदासुन्दरी बभूव । पूर्वाभ्यासादस्या गर्भस्थाया मातुर्नर्मदायां जलक्रीडाकरणदोहदो बभूव । साधूपसर्गकरणात् कलङ्कदुःखाद्यभूत् । प्राप्तजातिस्मृतिर्नर्मदा दीक्षां जग्राह । सा साध्वी तपस्तपन्ती अवधिज्ञानवत्यभूत्, प्रवर्तिनीपदं प्राप । सा रूपचन्द्रपुरं क्रमाद्गता । तत्र महेश्वरदत्तो धर्मं श्रोतुं गतः । ऋषिदत्तापि गता । महेश्वरदत्तो धर्मं श्रुत्वा प्राह—मया प्रिया सकलङ्का सती त्यक्ता । साध्वी प्राह—सा निष्कलङ्का एव सतीशिरोमणिः । महेश्वरदत्तस्ततो जगौ—धिङ् मां, मया मुधा त्यक्ता प्रिया । तं दुःखिनं

इति श्रुत्वा महेश्वरदत्तः पश्चात्तापपरः स्वं निनिन्द—धिङ् मामीदृशं
दृष्ट्वा यतिनी प्राह—साऽहमेव तव प्रिया । इति श्रुत्वा महेश्वरदत्तः पश्चात्तापपरः स्वं निनिन्द—धिङ् मामीदृशं नर्मदाऽवग्—खेदं मा कुरु ।
पापिनं, यतो मयैकाकिनी त्वं मुधा वने मुक्ता । मत्तोऽपि नापरः कोऽपि पापी । न क्वापि कस्यचि-
सर्वोऽपि जीवः स्वकर्मणा सुखदुःखे अनुभवति । यतः—सर्वोऽपि चेष्टते प्राणी, प्रेरितः पूर्वकर्मभिः । ऋषिद-
द्दोषो, येन नानेन निर्मितः ॥ १ ॥ सोऽपि महेश्वरदत्तस्तां क्षमयित्वा तेषां गुरूणां पार्श्वे व्रतं जग्राह । ततो लोके नर्मदातीर्थं
त्ताऽपि चारित्रं प्राप । महेश्वरदत्तऋषिदत्ता कर्मक्षयं कृत्वा मुक्तिं ययतुः नर्मदातटे ।
जातं देवैर्महोत्सवकरणात् । इति नर्मदासुन्दरीऋषिदत्ताकथा समाप्ता ॥ ६ ॥

**सदा ये मनुजा नार्यः, सुशीलं पालयन्ति हि । सीतेव श्लाघ्यतां यान्ति, ते जना भुवनत्रये ॥ १ ॥**

तथाहि—मिथिलायां पुरि हरिवंशे वासुके राज्ञो विपुलाह्वा राज्ञी बभूव । तस्य जनको नन्दनो राज्यं करोति
स । तत्र जनकप्रिया विदेहा नाम्नाऽभूत् । तयाऽन्यदा पुत्रपुत्रीरूपं युगलं प्रासावि । तदा सौधर्मतः पिङ्गलनामा सुरः
प्राग्भववैरात्तत्रैत्य तयोर्मध्यात् पुत्रमपहृत्य निस्ससार । मार्गे जातकरुणो देवो भूषणैः कुण्डलादिभिर्भूषयित्वा
वैताढ्यवने मुक्त्वा तं बालं निजं स्थानं ययौ । वैताढ्यपर्वतोपरिस्थरथनूपुरस्वामी चण्डगतिः खगस्तत्रागात् ।

तं बालं लात्वा स्वपत्न्याः ददौ खगः । अथ गूढगर्भया पत्न्या तनयोऽजनि इति घोषायितं राज्ञा । जन्मोत्सवं तस्य सूनोः कृत्वा भामण्डलचिह्नदर्शनाद्भामण्डलकुमार इति पिता नाम ददौ । लाल्यमानो भृशं चंद्रगतिना तत्र सोऽर्भकः प्राप यौवनम् । इतः स्वजनकः पुत्रमपश्यन् सर्वतो दुःखितो भूत्वा क्रमाद्विशोकीभूय सीतेति नाम पुत्र्या ददौ राजा । क्रमाद्यौवनं प्राप्तां ज्ञातसर्वस्त्रीकलां वीक्ष्य राजा वरविलोकनचिन्तासिन्धौ पपात । यतः—

जम्मंतीए सोगो, वड्ढंतीए य वड्ढए चिन्ता । परिणीआए दंडो, जुवइपिया दुक्खिओ निच्चं ॥१॥ इतो म्लेच्छा दैत्या इव जनकं हन्तुमीयुः । तं वृत्तान्तं जनको दशरथाय ज्ञापितवान् सौहृदात् । तदा युयुत्सुं पितरं निषिध्य स्वयं रामस्तत्र गत्वा तं म्लेच्छकटकं युद्धकरणाज्जिगाय । ततो जनको हृष्टस्तं रामं स्वपुरमध्ये समानयत् । गौरवपूर्वं सीतां दातुकामोऽभूत् श्रीरामाय । इतस्तत्रागतं पिङ्गकेशं छत्रिकाधरं भीषणरूपं प्रेक्ष्य सीता भीताऽनेशत् । ततो दासीं तुमुलं कुर्वाणां श्रुत्वा कोपाविष्टा राजपुरुषास्तत्रैत्य तं कण्ठे धृत्वा गृहान्निरवासयन् । नारदस्तु ततः कुपितः सीतारूपं चित्रपटे लिखित्वा चंद्रगतिसुताय भामण्डलायादर्शयत् । सोऽपि स्वसारं सीतामजानन् कामविह्वलमनाः स्तोकजले मीन इवाजनि । अथ चन्द्रगतिः सुतोद्वेगकारणं ज्ञात्वा स्वसेवकं चपलगतिं

प्रेष्य जनकं सीतां स्वपुत्राय याचते स्म। प्रीत्या जनकोऽवग्—मया पुत्री पूर्वं दशरथपुत्राय दातुं वाञ्छिता-ऽस्ति। तथापि यो वज्रावर्तार्णावर्तधनुषी उत्पाट्य गुणेऽधिरोपयिष्यति स सीतां परिणेष्यति। उक्त्वेति जनकस्ते धनुषी स्वयंवरमण्डपे मुक्त्वा भूपाननेकश आकारयामास। ततश्चपलगतिना सीतासम्बन्धे प्रोक्ते चन्द्रगतिः स्वपुत्रयुतस्तत्रागात्। दशरथोऽपि राजा रामादिपुत्रयुतस्तत्रागात्। अनेके भूपाः खगास्तत्रेयुः। सीता सुवेषा तत्रागात्। अङ्गवङ्गादिदेशोत्पन्नैर्भूपपुत्रैरुत्पाटिते धनुषी यदा न स्थानाच्चेलतुः तदा लीलया श्रीरामो मञ्चादुत्थाय धनुरेकमधिज्यं चक्रे। ततो जानकी श्रीरामस्य कण्ठे वरमालां चिक्षेप। द्वितीयं धनुरधिज्यं लक्ष्मणो व्यधात्। ततः खगा अष्टादश कन्यास्तस्मै ददुः। ततो भरतो भद्राह्वां कनकभूपपुत्रीमुपयेमे। ततो दशरथः स्वान् पुत्रान् परिणाय्य स्वपुरमगात्। भामण्डलस्त्वप्राप्तमनोरथः पितृयुतो यदा दुःखं दधौ तदा व्योम्नि वाग् जाता—मा विषादं कुरु, सीता तवेयं भगिनी, जनकस्ते पिता, त्वं देवापहृतश्चन्द्रगतिहस्ते चटितः। ततो भामण्डलः सीतां स्वां जामिं ज्ञात्वा जनकं तातं मत्वा हृष्टो, मिलितश्च। सीतां क्षमयामास। ततो जनकं पृष्ट्वा चन्द्रगतियुतः स्वपुरमगात्। रामः सीतया सह वर्यभोगान् भुंक्ते स्म। क्रमाद्दशरथः पूर्ववितीर्णवरात् भरतं

स्वराज्ये संस्थाप्य श्रीसत्यभूतिमुनिपार्श्वे दीक्षां ललौ । श्रीरामं च दशरथो वनवासायादिष्टवान् । ततः श्रीरामो लक्ष्मणयुतो वने ययौ । क्रमाद्दण्डकारण्ये गतः श्रीरामः । सीतापहरणपश्चाद्वालनदशकन्धरहननस्वराज्यप्राप्तिं यावत् विस्तरतः स्वयं ज्ञेयं, प्रसिद्धत्वान्नोक्तमत्र । श्रीरामः स्वराज्ये उपविश्य भ्रातॄणां देशान् विभज्य ददौ । अथ गर्भं बभार सीता । वर्या दोहदा जाताः । अत्रान्तरे सीताया दक्षिणं चक्षुः स्फुरितम् । चक्षुःस्फुरणं रामाग्रे प्रोक्तं सीतया । रामोऽवग्–दुर्निमित्तमिदम् । यतः–साहेइ विप्फुरंतं, इट्ठं पुरिसस्स दाहिणं नयणं। वामं कहइ अणिट्ठं, इय भणियं पुव्वसूरीहिं ॥ १ ॥ तेन भद्रे ! जिनालये त्वं दीपान् कुरु। दानं देहि दीनस्य । पत्युक्तं सीता सर्वमकरोत् । इतो रामं जना अभ्यधुः–देव ! लोका वदन्ति–स्त्रीलोलुपेन रावणेन सीता षण्मासान् गृहे स्थापिता । तस्याः कथं सतीत्वमुच्यते ? । यतः–युक्तियुक्तः प्रवादोऽयं, तैलबिन्दुरिवाम्भसि । सर्वत्र प्रसृतो लोके, तन्मा मृष रघूद्वह ! ॥ १ ॥ तेनायं जनप्रवादो न वर इत्यादिजनमुखाद्रामो निशम्य तूष्णीभाग् बभूव । क्षणात् स जगौ–साधु व्यज्ञपि युष्माभिर्न स्त्रीमात्रकृतेऽप्यहम्। सहिष्ये दुर्नयं तानित्युदित्वा विससर्ज सः ॥ १ ॥ बंभ्रमन्नथ काकुत्स्थो निशीथे चर्मकृन्मन्दिरासन्नं गत्वा स्थितः। तदा चर्मकृच्चिरप्राप्तां स्वभार्यां हत्वा अंघ्रिणा

प्राह–इयत्कालं त्वं क्वासीः ?। साप्यूचे–वर्य ! पुमन्! किं श्रीरामादप्यधिकोऽसि । श्रीरामो रावणगृहादानीतां सीतां शुद्धामेव मेने। त्वं तु एकं क्षणमपि मामन्यत्र स्थितां न सहसे तत् किम् ?। सोऽप्यूचे–स्त्रीजितः सोऽस्ति। नाहं तादृक्। कथं सहे?। श्रुत्वेति दध्यौ रामो–धिङ् मां स्त्रीवशगम्। ध्यात्वेति रामः सौमित्रिणा समं रहो मन्त्रयामास । लोकाः सीतामसतीं जल्पन्ति । सौमित्रिः प्राह–लोकोक्त्या सीतां महासतीं मा त्यज । लोकाः परदोषोक्तौ रसिका भवन्ति । यतः–रसिकः परदोषोक्तौ, स्वभावादेव यज्जनः । शिक्षणीयः स भूपालैर्यद्वोपेक्ष्यो महात्मभिः॥ १॥ रामोऽप्याह–इदं सत्यं । तथापि लोकविरुद्धं त्याज्यम् । ततो रामो निषिध्य सौमित्रिं सेनान्यं प्रति प्राह–सीतां त्यज वने। किञ्च–अस्याः संमेततीर्थे यातुं दोहद उत्पन्नोऽस्ति । तेन गङ्गायाः परकूले त्यक्त्वा अत्र समागच्छ। तथेत्युक्त्वा सीतापार्श्वेऽभ्येत्याह–स्वामिनि ! श्रीरामादेशात्संमेततीर्थे त्वां नेष्यामि । रथमारोह । ततः सेनानीः सीतां रथे समारोप्य स्वाम्यादेशात् भीषणे काननेऽमुञ्चत्। सेनानीः प्राह तां च प्रति–त्वत्पत्या त्वं त्याजिताऽसि मत्पार्श्वात्। अतोऽहं किं करोमि ?। स्वाम्यादेशो दुष्करः। श्रुत्वेति मूर्च्छिता सीता पतिता रथाद्। विललाप। क्षणेन स्वस्थीभूय रामं प्रति प्राह सीता–यद्यजायत ते लोकापवादभयभीरुता । दिव्यं किमिति तन्नादाः,

समक्षं जगतो मम॥ १ ॥इत्थं कुलोचितं किन्ते?, निर्घृणेभ्योऽपि निर्घृण! । एकाकिनीं वनेऽत्याक्षीर्यदाधानवर्तीं प्रियाम् ॥ २ ॥ तवाहं न भविष्यामि, पते! विघ्नकरी मनाक् । चिरं जयतु किन्तु श्रीराघवो लक्ष्मणान्वितः ॥ ३ ॥ एतद् श्लोकत्रयं त्वया श्रीरामायार्पणीयमित्युक्त्वा सीतया विसर्जितः सेनानीः। क्षरदश्रुप्लुताक्षः सीतां मुक्त्वा पश्चाद्वले। जानकी स्वकर्म कृतं निन्दन्ती वने बभ्राम। इतस्तत्रागतेन भूभुजा श्रीवज्रसंघेन त्वं मम भगिनीत्युक्त्वा पुण्डरीकपुरे सीता नीता। इतः सेनान्यानीतं सीतावितीर्णं श्लोकत्रयं वाचयित्वा रामो दीनाशयः सीतावियोगमसहमानस्तां प्रियां पश्चादानेतुं तेन सेनान्या सह वने तत्र गतः। विलोकिताऽपि जानकी न लब्धा रामेण। सीता भक्षिता श्वापदेनेतिकृत्वा श्रीरामेण पश्चाद् स्वगृहे समेत्य तस्याः प्रेतकार्यं कृतम्। ततो ध्यायन् सीते सीते इति कालं रामोऽत्यवाहयत्। इतः सीता पुत्रद्वयं प्रासूत। तयोर्जन्मोत्सवं कृत्वा वज्रजंघः कुशलवेत्यभिधां ददौ। सत्कलाकलापसंपूर्णौ महाभुजौ जातौ कुशलवौ। शशिकलां निजां पुत्रीं परा द्वात्रिंशतं कन्या वज्रजंघो लवाख्यमुदवाहयत्। कुशाय पृथुपृथ्वीपतेः सुतां वज्रजंघो ययाचे। अज्ञातवंशत्वात्तस्मै स्वपुत्रीं न दत्ते स्म। ततो वज्रजंघस्तत्र गत्वा कुशलवान्वितो रणे पृथुसैन्यं बभंज। हतप्रहतं चकार तथा यथा दिशोदिशं गतम्।

पृथुं पलायमानं दृष्ट्वा कुशलवौ प्रोचतुः—अवंशजाभ्यामावाभ्यां, नाशिता वंशजाः कथम्?। क्षणं स्थित्वाऽऽवयोः शौर्यं, पश्य पृथुमहीपते!॥ १॥ ततस्तदा तयोर्बलं दृष्ट्वा पृथुभूपः श्रीवज्रजंघेन सह संधानं चकार। प्राह पृथुश्च-अनयोर्बलेन मया महत्कुलं ज्ञातम्। इतश्च शिबिरे नारदः समेतः तं नारदं नत्वा वज्रजंघोऽवक्—एतौ कस्य शिशू?। लोकापवादभीरुणा रामेन सत्यपीयं सीता सगर्भा त्यक्ता सा। तस्या इमौ पुत्रौ। अंकुशोऽवदत्—भो ब्रह्मन्! तेन रामेण न साधु कृतम्। लवः प्राह—सा पुरी कियद्दूरेऽस्ति यत्र तौ नृपौ स्तः?। मुनिराह—षष्टियोजनशतमिताऽस्ति। ततः पृथुभूपेन कनकमाला कन्या कुशाय दत्ता। ततो वज्रजंघः कुशलवाभ्यां सह-स्वपुरीमागात्। अथ मातुलं मातरं चापृच्छ्य लवांकुशौ जननीयुतौ सारसैन्ययुतौ चेलतुरयोध्यां प्रति। अयोध्यासमीपे यावत्तौ गतौ तावद्रामलक्ष्मणौ रुषारुणौ युद्धाय संमुखमागतौ। जाते समरे लवांकुशौ रामसैन्यं दैन्यदशां निन्यतुः। तदा क्रुद्धो लक्ष्मणः कुशाय चक्रं मुमोच। चक्रं तु तस्य प्रदक्षिणां दत्त्वा पुनर्लक्ष्मणमाश्रयत्। अथ श्रीरामसौमित्री विपण्णाविति दध्यतुः—बलनारायणावेतौ किं नवीनावुत्पन्नौ?। इतो भामण्डलयुतो नारदो मुनिः सलक्ष्मणं रामं समेत्य विहस्य प्रोचिवानिति। कोऽयं विषादो युवयोर्हर्षस्थाने रघूद्वहौ?। कस्य नान-

न्दयेच्चित्तं, निजपुत्रात् पराजयः ॥ १ ॥ तवैव तनयावेतौ, सीताकुक्षिसमुद्भवौ । त्वां द्रष्टुं रणदम्भेन, समागताविमौ तु तौ ॥ २ ॥ प्रबभूव न यच्चक्रमभिज्ञानमिदं मुने! । अन्तरेण स्वगोत्रं यन्न चक्रं क्वापि निष्फलम् ॥ ३ ॥ ततो युद्धं मुक्त्वा यावद्रामलक्ष्मणौ स्थितौ तावत्तौ विनीतौ पितरं प्रणेमतुः। ताभ्यामप्यालिङ्गितौ । ततो द्वयोरपि सैन्ययोर्मुदभूत् । ततो रामः स्वपुरमविशत् । ततो वज्रजंघसुग्रीवबिभीषणैः प्रोक्तं—पुरमध्ये आनीयते सीता। ततः सौमित्रिस्तत्र गत्वा सीतां प्रणम्य प्राह—पवित्रय त्वं पुरम् । सीता प्राह—विना शुद्धिं न प्रवेक्ष्यामि। मया चाङ्गीकृतं दिव्यपञ्चकं। तदिदं यथा—ज्वालालीढे वह्नौ प्रविशामि १ वह्निं पिबामि २ तप्ततैलात्कपर्दिकां कर्षयामि ३ तुलामारोहामि ४ जिह्वया फालं गृह्णामि वा ५। दिव्यं विना पुरीमध्ये नैष्यामि । एतदाकर्ण्य रामोऽवग्—त्वं सती एव पुरे प्रविश। सीताऽवग्—सर्वथा दिव्यं विना पुरीमध्ये न समेष्यामि । ततो रामेणैव सीतादिव्यकरणायैवंविधा खातिः खानिता। तथाहि—तदा सीतया धनुःशतमितां खातिकां खानयित्वा ज्वलत्खादिराङ्गारैः पूर्णां कारयित्वा स्वकलङ्कस्फेटनाय खातिकायाः समीपे समागतम् । ततः श्रीरामादिषु भूरिषु लोकेषु पश्यत्सु सीता जगौ—भो! भोः सर्वे लोकाः शृणुत—यदि मया स्वशीलं खंडितं मनागपि स्यात्तदा

मामेषा खातिका ज्वालयतु, नो चेज्जलमयी भवतु । एवमुक्त्वा सीता नमस्कारं हृदि ध्यात्वा तां खातिकां पद्भ्यामुत्तीर्यापरस्मिन् खातिकायास्तटे ययौ । तदा श्रीरामो दध्यौ—मया मुधेयं पत्नी एवंविधे संकटे पातिता । एवं खेदं दधानं कान्तं दृष्ट्वा सीतेति जगौ—मा गा विषादभवनं भुवनैकवीर !, निष्कारणं विगणिता किमियं मयेति । दैवेन केनचिदहं दहने निरस्ता, निस्तारिता च भवता हृदयस्थितेन ॥ १ ॥ ततो लोका जगुः—सीतया दुरपवादभीतया, पावके स्वतनुराहुतीकृता । पावकोऽपि जलतामियाय यद्, तत्र शीलमहिमा निबन्धनम् ॥१॥ इतस्तत्र चतुर्ज्ञानधरः शीलचंद्रसूरिरागात् । तत्र तं गुरुं वन्दितुं श्रीरामादयो धर्मं श्रोतुं ययुः । धर्मोपदेशदानानन्तरं सीतयोक्तम्—भगवन् ! मया किं कृतं कर्म दुष्टम् ? । येनात्र मम कलङ्कश्चटितः । गुरवो जगुः सीताप्रबोधाय लोकप्रबोधाय चेति । नो चेव भासियव्वं हियत्थिणा दुक्खकारणं वयणं । अलियं अब्भक्खाणं, पेसुन्नं मम्मवेहाइ ॥ १ ॥ संतोवि हु वुत्तव्वो, परस्स दोसो न होइ विबुहाणं । किं पुण अविज्जमाणो, पयडो छन्नो अ लोअस्सा ॥२॥ विअरइ अब्भक्खाणं, इयरस्सवि जो जणस्स दुब्बुद्धी । सो गरिहिज्जइ लोए, लहेइ दुक्खाइं तिक्खाइं ॥३॥ जो पुण जईण समियाण सुद्धभावाण बंभयारीणं । अब्भक्खाणं देइ, मच्छरदोसेण दुट्ठमई ॥ ४ ॥

निव्वत्तिऊण पावं, पावइ सो इत्थदुहगणमणंतं । सीआ इव पुव्वभवे, मुणिअब्भक्खाणगाणाओ ॥ ५ ॥ अत्रैव भरते मिणालिनीनामपुरे श्रीभूतिपुरोधसः सरस्वती पत्नी बभूव । तयोः वेगवती पुत्री जाता । तत्रैकदोद्याने एकः साधुस्तपस्वी समागात् । प्रतिमायां पुराद् बहिः स्थितः । लोकस्तं तपस्विनं नन्तुं यातः । तं साधुं बहुजननिषेव्यमाणं दृष्ट्वा वेगवती ईर्ष्यापरा लोकानां पुरस्तादेवं जगौ–एष मुण्डः पाखण्डी कूटकपटकारी किं भवद्भिर्लोकैः पूज्यते ?। ब्राह्मणा एवं किं न पूज्यंते ?। एष साधुर्नार्या सह रममाणो रहसि मया दृष्टः। अधुना त्वयं दम्भो मण्डितोऽस्ति तेन । तस्या वचस्तादृशं श्रुत्वा तदा जनास्तस्मिन् साधौ विरागवन्तोऽभूवन् । मुनिना वेगवतीजल्पितं श्रुत्वा ध्यातम्–मया तु किमपि मनाग् न कुमार्गे चलितम् । अनया त्वेवं जल्पन्त्याऽपि कलङ्कः सर्वैरपि जनैर्ज्ञातो दत्तः। जिनशासने महत्यपभ्राजना जाताऽस्ति। ततस्तेन जिनमतप्रभावनार्थमिदं कृतम् । यदा मम तया दत्तः कलङ्क उत्तरिष्यति तदा मया भोक्तव्यमिति प्रतिज्ञाय कायोत्सर्गे स्थितः । ततः शासनदेव्या शिक्षानिमित्तं तस्याः शरीरे महती वेदनोत्पादिता । उक्तं च–वेगवईए देहे, विअणा तिव्वा समुट्ठिया दहया । पाउब्भूआ अरई, सूणं वयणं च सहसत्ति ॥ १ ॥ इयं गाथा देव्या प्रोक्ता–असौ वेगवती तीव्रपापकृद्

दंभसंयुता । अस्य साधोर्मुधेदानीं, कलङ्कं प्रददौ स्फुटम् ॥ २ ॥ असौ वाचंयमोऽशेषदोषरिक्तो हिताशयः । असौ वेगवती कन्या, दुष्टा दोषैकमानसा ॥ ३ ॥ अहमेनां वेगवतीं पापिनीं हनिष्यामि । शासनदेव्या वचः श्रुत्वा भीता वेगवती तं साधुं नत्वा सर्वलोकसाक्षिकं प्राह—मया पापिन्या कूटं जल्पितम्। अहमधमाऽस्मि । ततः शासनदेव्या वेगवती सज्जीकृता। तं साधुं पुनः पुनः क्षमयित्वा दीक्षां वेगवती ललौ । ततो वेगवती निरंतरं तीव्रं तपः कुर्वाणा प्रकारान्तरेण स्वकृतं कर्म किञ्चिद्गुरुसाक्षिकं निनिन्द । ततो वेगवती स्वर्गं ययौ । ततो वेगवतीजीवः स्वर्गाच्च्युत्वा जनकभूपपुत्री सीता नाम्नेयं बभूव । तत्पापं सम्यगनालोच्य मृता तेनात्र कलङ्कं प्राप्ता । एवं यतीन्द्रवचः श्रुत्वा सर्वेऽपि श्रीरामसीतादयो विशेषतो धर्मं प्रपेदिरे। क्रमादवसरे सा श्रीसीता संयमं लात्वा सम्यक् प्रपाल्य चाच्युतेन्द्रोऽभूत्। सा सीतेन्द्रोऽवसरे एकदा श्रीरामं प्रबोधयामास । क्रमान्मुक्तिं गमिष्यति सीताजीवः ॥ इति श्रीसीताचरित्रम् ॥ ७ ॥

नन्दाकथा तु अभयकुमारकथायां ज्ञातव्या ॥ ८ ॥

भद्राकथा तु शालिभद्रकथायां ज्ञातव्या ॥ ९ ॥

शीलं पालयतां पुंसां, शुद्धभावेन सन्ततम् । वशीभवन्ति गीर्वाणाः, सुभद्राया इवाचिरात् ॥ १ ॥

वसन्तपुरे जितशत्रुनृपो राज्यं करोति स्म । तस्यामात्यो जिनमतिः श्रेष्ठ्यस्ति । तस्य च तत्त्वमालिनी प्रियाऽभूत् । तयोः सुभद्रा पुत्री । श्रेष्ठी स्वां पुत्रीं जिनधर्मविदे वराय दातुमीहते सदा । अन्यदा चम्पापुरवास्तव्यो बुद्धधर्मवासितो बुद्धदासो व्यवसायार्थी तत्रागात् । तां सुभद्रां रूपनिर्जितसुराङ्गनां कुमारीं वीक्ष्य कञ्चिन्नरं पप्रच्छ । कस्येयं पुत्री? इयं कन्या पित्रा विवाहिताऽस्ति कुमारी वा ? । तेनोक्तम्—श्रेष्ठ्ययं शुद्धश्रावकाय कन्यां दास्यति । नान्यस्य । ततो बुद्धदासस्तच्छ्रुत्वा दध्यौ—कथंचिज्जैनीभूयापि एनां स्त्रियं परिणयामि । जैनधर्मसम्बन्धिशास्त्रं पठित्वा जिनधर्मकरणकुशलो भविष्याम्यादौ । पश्चान्मह्यं श्रेष्ठी दास्यति । ततो विमृश्येति कुत्रचित् स्थाने साधुपार्श्वे श्राद्धधर्मसामाचारीं शिक्षयित्वा कुशलोऽभूद्बुद्धदासः । ततः सुश्राद्धो भूत्वा देवगृहेषु देवान्नत्वा धर्मशालायां धर्मं श्रोतुं जैनमुनिपार्श्वे गच्छति । तं तादृशं सुश्रावकं दृष्ट्वा जिनमतिः स्वगृहे देवपूजायै तमाकारयामास । बुद्धदासस्तत्र श्रेष्ठिगृहेऽभ्येत्य यतनापूर्वं शरीरं प्रक्षाल्य शतपत्रादिभिर्जिनेन्द्रपूजां व्यधात् । ततो भोजनायोपविष्टः । श्रेष्ठिनः परिवेषयतो बुद्धदासोऽन्तरा जगौ—मम तृतीया विकृतिर्न कल्पते । तेन एका घृत-

सम्बन्धिनी द्वितीया पक्वान्नसम्बन्धिनी बभूव । तेन दध्यादि न ग्रहीतव्यं । तेन, भाजनं प्रक्षाल्य तक्रं गृहीतं
तेन इत्यादि । इतो भव्यं जिनधर्मकुशलं तं वीक्ष्य श्रेष्ठी दध्यौ—यद्ययं मम पुत्र्या वरो भवति तदा वरं धर्म्म-
वान् । यतः—जिनेन्द्रधर्मवेत्तारं, दातारं विनयान्वितम् । कर्तारं यतनां सर्वजीवेषु करुणान्वितम् ॥ १ ॥
सरलं स्ववपूरूपलक्ष्मीनिर्जितमन्मथम् । पुत्र्यर्थं विरला एव, लभन्ते वरमङ्गिनम् ॥ २ ॥ युग्मम् । जिनदासो
विमृश्येति भोजनानन्तरं प्राह—इयं मे कन्या समस्ति, त्वं गुणज्ञोऽसि, यदि त्वमेनामङ्गीकुरु तदा लक्ष्मीकृष्ण-
योरिव शशिरोहिण्योरिव युवयोः शोभा भवति । तेन बुद्धदासेन तन्मानितम् । ततो महोत्सवपुरस्सरं बुद्धदासाय
जिनदासः स्वां पुत्रीं ददौ । सुभद्रां परिणीय बुद्धदासः श्वशुरादिवर्गं सर्वं मुत्कलाप्य बहूपार्जितधनः स्वपुरे
समेत्य मातापित्रोर्मिलितः । मातापितृभ्यां महामहः कृतः । सुभद्रा श्वशुरश्वश्र्वोर्विनयं करोति स्म । प्रातरुत्थाय
जिनेन्द्रगृहे गत्वा जिनेन्द्रं प्रणम्य जिनमुनीन् प्रणम्य गृहे समागता । तदा श्वश्रूर्जगौ—वत्से! अस्माकं गृहे बुद्ध
एव देव आराधनीयो विद्यते । अतस्त्वयाऽन्यत्र कुत्र न गन्तव्यम् । सुभद्रा दध्यौ—अहो कपटं मण्डयित्वाऽहमनेन
भर्त्रा परिणीता । एते तु बौद्धाः । अतः किं कुर्वे ?। यद्भावि तद्भवतु । मया स्वहितमाचरणीयम् । यतः—सर्वथा

र , किं करिष्यति जनो बहुजल्पः । विद्यते स नहि कश्चिदुपायः, सर्वलोकपरितोषकरो यः ॥ १ ॥ तथापि सुभद्रां देवगृहेषु गच्छन्तीं वीक्ष्य श्वश्रूरीर्ष्यया यथा तथा वक्ति । ततः सुभद्रा पृथग्गृहे स्थापिता सती जिनेन्द्रं पूजयन्ती साधून् प्रतिलाभयन्ती क्षणमपि धर्मं न मुञ्चति । यतः—राज्यं यातु श्रियो यान्तु० ॥ १ ॥ इतोऽन्यदा सुभद्रागृहे साधुरेको मासक्षपणपारणे विहर्तुं समागात् । तस्य चक्षुषि तृणं पतितं वीक्ष्य प्रतिलाभयन्ती दध्यौ—यद्यस्य तृणं चक्षुषि स्थास्यति चिरं तदा चक्षुर्गमिष्यति च । एवं विमृश्य तन्व्या जिह्वया तृणं मुनेर्नेत्रात् तया कर्षितम् । तदा स्नुषाभालस्थमार्द्रकुङ्कुमतिलकं यतिललाटे लग्नं दृष्ट्वा श्वश्रूर्जगौ—भो बुद्धदास ! त्वत्पत्नीचरितं विलोकय । इयं वधूरीदृशी विद्यते । अस्मिन् साधौ लुब्धाऽस्ति । अन्यथैवं न करोति । ततो मिलितं सर्वं कुटुम्बं, दृष्टं वधूचेष्टितम् । सर्वं कुटुम्बं प्राह—इयमात्मच्छंदचारिणी कुशीला विद्यते । एषा अयोग्याऽस्ति । आत्मनः कुलं कलङ्कयिष्यति । ततो बुद्धदासस्तस्यां निःस्नेहोऽभूत् । ततः सुभद्रया ध्यातं । मया वर्यं कृतं । एवं यदि कुटुम्बं जल्पति तदा किं क्रियते ? । ततः सर्वं कुटुम्बं जल्पति—इयं कुशीलाऽस्ति । ततः स्वकलङ्कापनयनाय कायोत्सर्गे स्थिता सुभद्रा । दध्यौ च—यावच्छासनदेवी मम कलङ्कं नोत्तारयिष्यति तावन्मया कायो-

त्सर्गो न मोक्तव्यः । ततस्तस्याः सत्त्वसाहसेन शासनदेवी प्रकटीभूय प्राह—वत्से ! कायोत्सर्गं पारय । ततः
सुभद्रा कायोत्सर्गं पारयित्वा प्राह—भो शासनदेवि ! मदीयं कलङ्कं स्फेटय । शासनदेवी जगौ—वत्से ! खेदं
मा कुरु, प्रातस्ते कलङ्क उत्तरिष्यति यथा तथाऽहं करिष्यामि । यथा व्योम्नि स्थिता जल्पिष्यामि तथा त्वया
कर्तव्यम् । ततो हृष्टा सुभद्रा । शासनदेवी तिरोदधे । प्रातरुत्थाय यावत् प्रतोलीपालकाः प्रतोलीमुद्घाटयन्ति
तावन्मनागपि चतसृषु प्रतोलीषु कपाटानि नोद्घटन्ति । ततो राजा तत्रागतो । द्वारमुद्घाटयति । एकमपि
नोद्घटति । ततो लोकाः सर्वे व्याकुला बभूवुः । शान्तिकर्माणि कारितानि । ततो राजा विलक्षोऽभूत् । इतः
शासनदेव्योक्तं व्योम्नि—या स्त्री सती विद्यते सा चेत् कूपमध्याच्चालिन्या जलमाकृष्य कपाटानि छंटयिष्यति
तदा प्रतोल्य उद्घटिष्यन्ति । ततो राज्ञा पटहो वादितः । या स्त्री कपाटानि उद्घाटयति तस्याः सन्मानो
दास्यते । ततोऽनेकाः स्त्रियश्चालिन्या जलं यावत् कृषन्ति तावद्गलित्वा तद्याति । एवं बह्व्यः स्त्रियो विलक्षा
बभूवुः । राजा सचिन्तोऽभूत् । इतः सुभद्राऽवग् श्वश्रूं—यदि वो रोचते तदाऽहं कपाटानि उद्घाटयामि । श्वश्रूर्जगौ—
अग्रे त्वया कुले कलङ्क आनीतोऽस्ति । अथ किं करिष्यसि ?। वधूः सविनयं प्राह—मातर्यत्त्वया पूज्यया जल्प्यते

तत् प्रमाणं। प्रत्युत्तरश्चेद्दीयते तदा मम का शोभा भवति?। यद्यादेशो दीयते तदाऽहं कपाटानि उद्घाटयामि। तयोक्तम्—उद्घाटय। ततः सुभद्रया पटहः स्पृष्टः। मनुष्येषु लक्षसंख्येषु मिलितेषु पश्यत्सु स्त्रीषु बह्वीषु पश्यन्तीषु सुभद्रा शासनदेव्याः सान्निध्याच्छीलप्रभावाच्चालिन्या कूपाज्जलं बहिः कृत्वा तेन जलेन प्रतोलीत्रयं छंटितम्। तत्कालं प्रतोलीत्रयमुद्घटितम्। इतः शासनदेव्योक्तं—या काचिदेवंविधा सती भवति सा चतुर्थीं(र्थी) प्रतोलीमुद्घाटयतु। ततः कयाऽपि नोद्घाटिता। तथैव स्थिता सा। देव्योक्तम्—अस्यां सत्यां यो विरुद्धं चिन्तयिष्यति तस्य शिक्षा दास्यते। ततः सर्वोऽवनीपप्रमुखो जनश्चमत्कृतो धर्म्मं जग्राह। श्वश्रूरप्युत्थाय वधूं क्षमयामास। सा वधूरपि श्वश्रूं क्षमयामास। ततस्तत् कुटुम्बं सर्वं जैनधर्मपरायणमभूत्। ततः क्रमात्सुभद्राऽपि श्रीगुरुपार्श्वे दीक्षां लात्वा सर्वक्षीणकर्मा मुक्तिपुरीं ययौ। इति सुभद्राचरित्रं समाप्तम् ॥ १० ॥

**[राइमई[11] रिसिदत्ता[12], पउमावई[13] अंजणा[14] सिरीदेवी[15]। जिट्ठ[16] सुजिट्ठ[17] मिगावई[18], पभावई[19] चिल्लणादेवी[20] ॥२॥]**

**कुमार्गे निपतञ् जीवो, रक्षणीयः प्रयत्नतः। राजीमत्येव सद्वाचा, रथनेमिरिव व्रती ॥ १ ॥**

तथाहि—मथुरायां पुर्यां उग्रसेनो राजा राज्यं करोति स्म। तस्य धारिणी प्रियाऽभूत्। अपराजितविमानाच्च्युतो

देवो धारिण्या देव्याः कुक्षाववतीर्णः स्त्रीत्वेन। सुदिवसे धारिणी सूतामसूत। तस्या जन्मोत्सवं कृत्वा राजीमतीति नाम मातापितृभ्यां दत्तम्। क्रमात् यादवसार्थे मथुराया उग्रसेनराजा द्वारकायां समागात्। वर्द्धमाना सुता क्रमाद्रूपस्विनी (द् अतीव रूपवती) जाता राजीमती। कन्यारत्नमिदं चारु, प्रकृत्या संस्कृतं पुनः। तारुण्यमणि कारेणानर्घ्यं त्रिभुवनेऽप्यभूत् ॥१॥ निःसीमरूपकारं यद्यौवनं तत्र सूत्रभृत्। ब्रह्मा कृतात्मरूपाणि(०पः सन्) विशेषज्ञो यथाऽकरोत् ॥ २ ॥ इतः शिवा राज्ञी पुत्रं प्रति प्राह–पुत्र! विवाहं कुरु। ततः प्रभुः प्राह–यदाऽहं योग्यां कन्यां वीक्ष्ये तदा परिणेष्ये ताम्। वत्स! त्वं कुरु नः प्रमोदविधये वीवाहमेवं यथा(दा), प्रोक्तः श्रीशिवयाऽम्बया जिन! ततोऽवादीस्त्वमेवं तदा। योग्यामम्ब! कनीमहं ननु यदा लप्स्ये वरिष्ये तदेत्युक्त्वाऽमोदयदम्बिकां गुरुतरं तच्चे गुरुत्वं गुरोः ॥ १ ॥ अन्यदा द्वारिकायां श्रीनेमिकुमारः सवयोभिः सह क्रीड़ां कुर्वाणः कृष्णस्यायुधशालायां गतः। तत्रायुधशालापालकेन निवार्यमाणो नेमिकुमारश्च हस्ते चक्रं गृहीत्वा कुलालचक्रमिव भ्रमयामास। ततः शार्ङ्गधनुर्मृणालनालमिव नामयामास प्रभुः। ततः कौमोदकीं गदां भुजशाखायां प्रापयामास। ततः पाञ्चजन्यं शङ्खमापूरयामास प्रभुः। तदा जगद् व्याकुलमभूत्। उक्तं च–चक्रं० ॥ १ ॥ विष्णो०। शंखं० २। संचेलुः० ३।

तदा कृष्णः स्वशङ्खं प्रपूर्यमाणं ज्ञात्वा रोषाक्रान्तः सभायां प्राह—अथ यो मम शङ्खं पूरयामास स मरिष्यत्येव । अथ यावत् कृष्णः संनह्य स्वं सकलं बलं युद्धायोद्यतोऽभूत् तावत्केनचिन्नरेणोक्तम्—नेमिकुमारेणैतत् सर्वं कृतम् । ततः कृष्णो दध्यौ—असौ विष्णुर्भावी। नाहम् । इत्यादि ध्यायति कृष्णे नेमिकुमारस्तत्रागतः । ततो बलपरीक्षार्थं कृष्णेन प्रोक्तम्—भो नेमिकुमार ! तव बलं विलोक्यते । प्रथमं त्वं मम भुजालतामूर्ध्वीकृतां वालय । ततो नेमिकुमारेण कमलनालवन्नामिता कृष्णभुजा । ततो नेमिकुमारभुजलतामूर्ध्वीकृतां वालयन् सर्वबलेन कृष्णः कपीशवत् आन्दोलयामास । तथापि प्रभोर्भुजा न नामिता मनागपि । ततः कृष्णः कालमुखोऽभूत् । ध्यातं कृष्णेन—मदीयं राज्यं गतमेव। ततो बलभद्रेणोक्तम्—एष नेमिकुमारो न राज्यार्थी । ततोऽकस्मात् कोऽपि देवोऽवग् व्योम्नि—एष नेमिकुमारो न राज्यार्थी। त्वयाऽस्माद्भयं नानेयम् । ततः कृष्णः स्वस्थोऽभूत्। उक्तं कृष्णेन—स्व०॥ १ ॥ ततः कृष्णो हृष्टः श्रीनेमिकुमारे प्रीतिं करोति स्म । एकदा शिवया राज्ञे उक्तम्। नेमिकुमारः पाणिग्रहणविषये न मन्यते स्म ।त्वं तथा कुरु स यथा पाणिग्रहणं कन्यायाः करोति स्म । अथ कदाचिद्ग्रीमग्रीष्मागमे श्रीकृष्णनरेन्द्रो जलक्रीडां कर्तुं गतः । तत्र जलक्रीडां कुर्वतीभिर्जाम्बूवत्यादिभिः कृष्णप्रियाभिर्देवरत्वेन

हास्यस्थानत्वेन श्रीनेमिकुमार उक्तः—भो नेमिकुमार! पाणिग्रहणं कुरु। त्वद्भ्राता द्वात्रिंशत्सहस्रं कन्याः अङ्गीचकार। त्वमेकाऽपि परिणेतुं न शक्तः। पूर्वं सर्वे तीर्थङ्करा अपि परिणीताः। आत्मीये वंशे मुनिसुव्रतो जिनोऽपि पाणिग्रहणं चकार। इत्यादियुक्त्या ताभिर्नेमिकुमारः पाणिग्रहणं कर्तुमङ्गीकारितः। ततः कृष्णेन समुद्रविजयभूपशिवादेव्योरग्रे उक्तम्—नेमिकुमारः पाणिग्रहणविषयेऽङ्गीकारितोऽस्ति। शिवया देव्योक्तम्—कन्या वर्या विलोक्यताम्। ततः सत्यभामयोक्तम्—उग्रसेनस्य भूपस्य राजीमती पुत्री सर्वोत्कृष्टगुणा निजरूपश्रीपराभूतसुराङ्गना विद्यते। सा तु मज्जामिर्विद्यते। तस्या रूपमेवंविधं विद्यते। तथाहि—यस्य रूपस्य पुरतः सर्वासामप्सरसां रूपाणि अङ्गारतुलामपि न दधते। इत्यादि तस्या राजीमत्या रूपवर्णनमाकर्ण्य ततः कृष्णः स्वयमुग्रसेनभूपस्य गृहे गत्वा राजीमतीं श्रीनेमिकुमारपाणिग्रहणार्थं याचते स्म। समुद्रविजयभूपोऽवग्—यदि श्रीनेमिकुमाराय राजीमती दीयते तदा किं न लब्धं ?। यद्भवतां रोचते तत् क्रियताम्। ततः श्रीकृष्णसमुद्रविजयराजादयस्तत्राभ्येत्य गणकानाकार्य प्रोचुः—शुभलग्नं गृह्यताम्। ततः क्रोष्टिको विलोक्य शास्त्रं प्राह—श्रावणसितषष्ठीदिने उभयोर्वरकन्ययोर्विवाहयोग्यं लग्नमस्ति। ततो विवाहलग्नं लात्वा विवाहसामग्री द्वयोरभूत्। उक्तं च—कण्हेण

मग्गिय धुआ, रायमई उग्गसेणनरिंदस्स । विवाहस्स य सामग्गी, विहिया य विभूसिओ नेमी ॥ १ ॥ ततः श्रावणषष्ठीदिनलग्नवेलायां अर्वाग् श्रीनेमिकुमारो रथारूढः श्रीसमुद्रविजयाद्यनेकनरेन्द्रश्रेणीशोभमानः श्रीशिवादेवीसत्यभामारुक्मिणीप्रभृतिबहुप्रमदाजनगीयमानबहुगुणः छत्रधरधृतातपत्रो महाविस्तरेण श्रीउग्रसेन-भूपगृहसमीपे प्राप्तः। प्रभुणा तदा सारथेरग्रे प्रोक्तं—कस्येदं धवलगृहम् ?। स सारथिरङ्गुल्याऽदर्शयत्। इदमुग्रसेन-भूपस्य तव श्वशुरस्य गृहं विद्यते। तदानीं गवाक्षस्था राजीमती नेमिं विलोकते। ततः सख्य एवं मिथो जजल्पुः। इक्कच्चिय रायमई मिहिलावग्गंमि वन्नणिज्जगुणा। जीसे नेमि करिस्सइ लायन्ननिही करग्गहणं ॥ १ ॥ चन्द्रा-नना जगौ—रायमईए रूवं विही विनिम्मिय रंभरूवहरं। न करिज्ज जइ सुयोगं हविज्ज ता नूणमजसभरं ॥ २ ॥ चन्द्रानना पश्चाद्विलोक्य सोत्सुकं प्राह श्रीमतीं राजिमतीं प्रति—रायमई ! जइ मम पारितोषिकं देहि तदाऽहं नेमिं दर्शयामि। विलोक्य नेमिमेवंविधम्। किं पायालकुमारो ? किं वा मयरद्धओ ? अह सुरिंदो ?। मह चेव मुत्तिमंतो अह एसो पुण्णपब्भारो ॥ १ ॥ अपिच—किं तस्स करेमि अहं अप्पाणंपि हु निउंछणं विहिणो। निरुवमसोहग्ग-निही एस पई जेण तुह विहिओ ॥२॥ तदा चन्द्रानना हसित्वाऽवग्—अवरं जणं न पिच्छइ इमंमि दिट्ठेऽवि पिय-

अथ पशूनामार्तस्वरं श्रुत्वा नेमिः सोत्कण्ठं सहीएवि । अहुणा अपरिणिआए पाणिग्गहणं कुणई नेमी ॥ १ ॥ अत्रैते सारथिं प्रति प्राह—भो सारथे! कोऽयं दारुणस्वरः?। अत्रोत्तरम्—स्वजनस्य तवोद्वाहे, गौरवं कर्तुमामिषैः । मीलिताः सन्ति, भीरवः पशवः प्रभो!॥ १ ॥ अजयर गड्डरय महिसा सूयर संबर हरिण रोझ रिंछा तित्तिर मयूर-बग सुग इत्यादि जीवाः । ततो नेमिः प्राहात्मगतम्—अहह श्रोतुमशक्यं, चरित्रमपि चित्रचित्तवृत्तीनाम् । ये कुर्वन्ति निजोत्सवमनुत्सवैरपरजन्तूनाम् ॥ १ ॥ इतो राजिमती प्राह—किंनिमित्तं मे दाहिणं चक्खू परिप्फुरइ?। सख्यः प्रोचुः—इदममङ्गलं प्रतिहतं भवतु च। इतो नेमिः प्राह—सारथे! रथमित एवाभिवर्तय । तावता तत्रैको हरिणो नेमिं पश्यन् स्वग्रीवया हरिणीग्रीवां पिधाय सभयौत्सुक्यं ब्रूते—मा पहरसु २ एअं मह हिययहारिणिं हरिणिं। सामि! अम्ह मरणाविहु दुस्सहो पिअतमाविरहो॥ १ ॥ हरिणी प्राह हरिणं प्रति—एसो पसन्नवयणो तिहुअणसामी अकारणो बंधू। ता विण्णवेसु वल्लह! रक्खत्थं सव्वजीवाणं॥ १ ॥ एवं छागादीनां पशूनां करुणस्वरं श्रुत्वा श्रीनेमिकुमारः प्राहरिकान् प्रति प्राह—भवत्स्वामी ममोद्वाहे तावदेतान् हनिष्यति तन्नैवाहं विवाहं करिष्ये। तन् मृगान् मुञ्चत मुञ्चत । पशूनां रुधिरैः सिक्तो, यो दत्ते दुर्गतेः फलम्। विवाहं विषवृक्षेण, कार्यं मे

नाधुना ननु ॥ १ ॥ शिवा सगद्गदं प्राह—पत्थेमि जणणिवच्छल! वच्छ! तुमं पढमपत्थणं किंपि । काऊण पाणि-गहणं मह दंसे नियवहूवयणं ॥ १॥ चन्द्राननाऽवग्—आकयं करसायणं (अकयं कस्सवि वयणं) जणणीभणियस्स नेव पडिवयणं। किज्जइ नो अवहीला किज्जइ जणणीइ कइआवि ॥१॥ ततो नेमिरवग्—मुञ्चाग्रहममुं मातर्मानुष्यां नतु मे मनः । मुक्तिश्रीसङ्गमोत्कण्ठमकुण्ठमवतिष्ठते ॥ २ ॥ राजीमती जगौ—जइ सयलसिद्धभुत्ताइं, धुत्त! रत्तो सि मुत्तिगणिआए । ता एवं परिणयणारंभेण विडंबिया किमहं? ॥ १ ॥ सख्यो जगुः—पिम्मरहिअंमि पियसहि! एयंमिवि किं करेसि पियभावं?। पिम्मपरं किंपि वरं अन्नयरं ते करिस्सामो ॥ १ ॥ राजिमती कर्णौ पिधाय प्राह—जइ कहवि पच्छिमाए, उदयं पावेइ दिणयरो तहवि । मुत्तूण नेमिनाहं, करेमि नाहं वरं अन्नं ॥ १ ॥ जइ-विहु एयस्स करो मज्झ करे नत्थि परिणयणसमए। तहऽवसरे मह सुच्चिय दिक्खासमए करो होही ॥ १॥ समुद्र-विजयस्तदाह—वत्सामलतमस्वान्त!, पूरयास्मन्मनोरथान् । नाभेयाद्याः कृतोद्वाहा, मुक्तिं जग्मुर्जिनोत्तमाः ॥ १ ॥ ततोऽप्युच्चैः पदं ते स्यात्, कुमारब्रह्मचारिणः?। अन्यन्महोदयं नास्ति, पदमुच्चैस्तरं क्वचित् ॥ २ ॥ नेमिः प्राह—एकस्त्रीसङ्गमेऽनन्तजन्तुसन्तानघातके । भवतां भवतांतेऽस्मिन्, विवाहे कोऽयमाग्रहः? ॥ ३ ॥ ततो नारायणो

जगौ—एकवारं प्रसद्य त्वं, मातापित्रोर्मनोरथम्। विवाहकरणात्सद्यः, पूरयोत्तमशेखर!॥ १ ॥ नेमिः प्राह—मातापित्रोस्तवाग्रहाच्च पूर्वं विवाहकरणं मया मम नोचितमप्यङ्गीकृतम्। अत्र विवाहकरणे भूरिजीवानां संहारो भवति। तेन नात्र वक्तव्यं भवता। ततः समुद्रविजयादयो मौनं चक्रुः। यावन्नेमिकुमारो गृहे समागात् तावत्सारस्वतादिदेवा अभ्येत्य प्रोचुरेवम्—जय निर्जितकन्दर्प!, जन्तुजाताभयप्रद!। नित्योत्सवावतारार्थं, नाथ! तीर्थं प्रवर्तय ॥ १ ॥ इति विज्ञपयन्तो लोकान्तिका देवाः स्वामिनं प्रणम्य श्रीसमुद्रविजयं राजानं शिवां देवीं कृष्णं भापन्ते—कोऽयमानन्दस्थाने विषादः?। ततः स्वामी वार्षिकं दानं ददौ। एगा हिरण्णकोडी अट्ठेव अणूणगा सयसहस्सा। सूरोदयमाईए दिज्जइ जा पाउरासाउ ॥ १ ॥ इति दानं दत्त्वा दीक्षां लात्वा सर्वकर्म क्षिप्त्वा यदा केवलज्ञानं नेमिः प्राप (तदा) रैवताद्रौ सदेवैरिन्द्रैः समवसृतिश्चक्रे। अनेके देवा नृपाः कृष्णस्तत्र धर्मं श्रोतुं समागमन्। प्रभुर्धर्मोपदेशं ददौ।—भवारण्यं भीमं तनुगृहमिदं छिद्रबहुलं, बली कालश्चौरो नियतसमसिता मोहरजनी ॥ गृहीत्वा ध्यानासिं विरतिफलकं शीलकवचं, समाधानं कृत्वा स्थिरतरदृशो जाग्रत जनाः ॥ १ ॥ संसाराम्बुनिधौ सत्त्वाः, कर्मोर्मिपरिघट्टिताः। संयुज्यन्ते वियुज्यन्ते, तत्र कः कस्य बान्धवः? ॥ २ ॥ इत्यादि

धर्मोपदेशं श्रुत्वा वरदत्तादयो बहवो राजानो दीक्षां ललुः। तत्र वरदत्तादीनां साधूनां गणधरपदवी दत्ता। ततो राजिमती समुत्थाय प्रभुं प्रणम्य दीक्षां याचते स्म। ततो नेमिनाथेन दीक्षा विश्राणिता। राजिमती नानाविधं तपः कुर्वाणा संयमं शुद्धं पालयामास। अन्येद्युः श्रीसमुद्रविजयं भूपं पर्यवसाप्य श्रीनेमीनाथभ्राता रथनेमिर्दीक्षां जग्राह। अन्येद्यू राजिमती प्रभुं नन्तुं चलिता। अत्रान्तरे मेघो वर्षितुं लग्नः। अत्यन्तं वर्षति मेघे तदा राजिमती आर्द्रवस्त्रा गुहायां मध्ये वस्त्राणि शोषयितुं गता। तत्र सर्वाणि वस्त्राणि शरीरादुत्तार्य निरार्द्रीकर्तुं विरलानि चक्रे। तदा तस्यां गुहायामकस्माद्रथनेमिः श्रीनेमिलघुभ्राता प्रागागात्। राजिमतीं निरावरणां दृष्ट्वा रागान्धितनेत्रो रथनेमिर्विजनस्थानं मत्वा राजिमतीं प्राह–भो राजिमति! मया सह भोगान् भुंक्ष्व। ममापि भोगेच्छां पूरय। भुक्तभोगौ पुनर्व्रतं पालयिष्यावः। हितकृद्भविष्यसे त्वम्। तदा राजिमती दध्यौ–अहो अस्य मूढत्वं विद्यते। रागित्वात्। प्रायो जीवा रागान्धितनेत्राः कृत्याकृत्ये न जानन्ति। यतः–"दृश्यं वस्तु परं न पश्यति जगत्यन्धः पुरोऽवस्थितं, रागान्धस्तु यदस्ति तत् परिहरेत् यन्नास्ति तत्पश्यति। कुन्देन्दीवरपूर्णचन्द्रकलशश्रीमल्लतापल्लवानारोप्याशुचिराशिषु प्रियतमागात्रेषु यन्मोदते ॥ १ ॥ तावत् महत्त्वं पाण्डित्यं, कुली-

नत्वं विवेकिता। यावज्ज्वलति नाङ्गेषु, हंत पञ्चेषुपावकः ॥ २ ॥ विकलयति कलाकुशलं, हसति शुचिं पण्डितं विडम्बयति। अधरयति धीरपुरुषं क्षणेन मकरध्वजो देवः ॥ ३ ॥" एवं ध्यात्वा राजिमती जगौ—भो महासत्त्व ! त्वयैवं कथं जल्प्यते। रागो न क्रियते। यतः—"रागोऽयं दोषपोषाय, चेतनारहितेष्वपि। मञ्जिष्ठा कुट्टनस्थानं, भृशं तापसहा भृशम् ॥१॥ मुखे पुरीषप्रक्षेपं, तथा पाषाणपेषणम्। एकेन्द्रियोऽपि सहते, मिति(मृत्ति)का रागदोषतः ॥२॥ अप्पउं धूलिहि मेलिउं, सयणह दीधउ छारु। पगि पगि माथा ढांकणउं, जिण जोई परनारि ॥ ३ ॥ विक्रमाक्रान्तविश्वोऽपि, परस्त्रीषु रिरंसया। कृत्वा कुलक्षयं प्राप, नरकं दशकन्धरः ॥४॥" एवं जल्पने नरके पातो भवति नृणाम्। उक्तं च—"धिरत्थु ते जसोकामी, जो तं जीवियकारणा। वंतं इच्छसि आवेउं, सेअं ते मरणं भवे ॥ १ ॥" अहं च भोगरायस्स, तं चसि अंधगवण्हिणो। मा कुले गंधणा होमो, संजमं निहुओ चर ॥२॥ जइ तं काहिसि भावं, जा जा दिच्छसि नारीउ। वायाइद्धुव्व हडो, अट्ठिअप्पा भविस्ससि ॥ ३ ॥ इत्यादि राजिमतीवचांसि श्रुत्वा रथनेमिरुत्थाय तस्याः पादयोस्तलं नत्वा प्राह—अहमभाग्यवानस्मि। यद्यपि एवंविधं मनो मया विदधे। त्वं मम गुरुस्थाने जाताऽसि। अतः परं त्वं गुरुरसि। राजिमती प्राह—त्वं धन्योऽसि। एवं रथनेमिं प्रबोध्य राजिमती

स्वोपाश्रये गता । क्रमात्सर्वकर्मक्षयं कृत्वा राजिमती श्रीनेमिनाथनिर्वाणगमनादर्वाग् मुक्तिं गता । इति श्रीराजिमतीकथा समाप्ता ॥ ११ ॥



**शुद्धभावेन ये शीलं, पालयन्ति महाजनाः । ऋषिदत्तेव ते सौख्यभाजनं स्युः सदाशयाः ॥ १ ॥**

तथाहि—अस्तीह भरते मध्यदेशो। भाति तत्र रथमर्दनं नाम पुरं। राजते तस्मिन् हेमरथो राजा। न्यायाध्वना पृथ्वीं पालयामास। तस्य भार्या सुयशाः। रूपलावण्यमणिखानिः। स्वरूपश्रीपराभूतामरी बभूव। तयोः पुत्रः कनकरथाह्वोऽभवत्। क्रमात् स धर्मकलाकुशलोऽजनि च। ततः—बावत्तरिकलाकुसला पंडि०। इतः कौबेरी नाम्ना पुरी विद्यते। सुन्दरपाणिर्भूपस्तां पाति स्म। पौलोमीवेंद्रस्य तस्य भूपस्य वासुला वल्लभाऽजनि। सा प्रिया रुक्मिणीं नाम्नीं पुत्रीमसूत। क्रमात् पित्रा शास्त्राणि पाठिता सती धर्मकर्मशास्त्रादिकलाकुशलाऽजनि। ततो माता यौवनं प्राप्तां पुत्रीं वीक्ष्य पितुः पार्श्वे प्रेषयामास। राजा पुत्रीं परिणयनयोग्यां वीक्ष्य चिन्तयामासेति चेतसि। कस्मै वराय दातव्या यौवनस्थेयं पुत्री मया। ततोऽवग् राजमन्त्र्यग्रे राजा—कस्यैषा दातव्येति पुत्री?। वृद्धमन्त्री प्राह—रथमर्दनपुरे हेमरथभूपस्य पुत्रः कनकरथः। अस्याः पुत्र्या योग्योऽस्ति। ततो राज्ञा दूतस्तत्र प्रेषितः। रुक्मिण्याः

पुत्रं तत्रोपरि (कौबेरी) भूपसुन्दरपाणिपुत्रीं परिणेतुं प्रेषयामास। क्रमात्तस्य
कन्यायाः स्वरूपे दूतेनोक्ते राजा हृष्टः। पुत्रं तत्रोपरि (कौबेरी) भूपसुन्दरपाणिपुत्रीं परिणेतुं प्रेषयामास। क्रमात्तस्य
कुमारस्य गच्छतोऽन्यदा सन्ध्यायां सैन्यं स्थितम्। उत्तार्यमाणभारेषु स्वर्णा (वारणा) दिषु कुमारश्चूतवृक्षस्याधः
सिंहासनमुपविष्टः। तदाऽकस्मात् कोऽपि दूतस्तत्रागत्योवाच—भो कुमार! पौरुषाधार तवात्र मार्गे गन्तुं न
युज्यते। अरिदमनो भूपोऽत्रस्थस्त्वामादिशति—कथितं विना मम देशे कथमायास्त्वं?। यद्येवमागास्तर्हि युद्धं कुरु।
कुमारेणोक्तम्—यद्येवं तव स्वामी समादिशति तदाऽत्रागच्छतु, तस्य करकण्डूमहमुत्तारयामि। वाण्या कर्कशया
तस्य, भृकुटीभीषणाननः। कुमारः स्माह रे दूत!, गत्वा तं जल्प पांसुलम्॥ १॥ आत्मनः स्वामिनं ब्रूहि, यदहं
नृपनन्दनः। त्वामेव हन्तुमायातो, वैनतेय इवोरगम्॥ २॥ युग्मम्। दूतः पश्चाद्गत्वा स्वस्वामिपुरः कुमारोक्तं
स्माह। ततोऽरिमर्दनो नृपः सन्नह्य युद्धाय कुमारेण सह समागात्। अथ तुल्यप्रतिद्वन्द्वो, युगान्तप्रतिचारकः।
मिथो मिलितयोरासीद्दारुणः सेनयो रणः॥ १॥ तूर्यताम्रानकध्वानक्ष्वेडाबृंहितहर्षितैः। तदा नादमयं
विश्वमिदं विश्वमजायत॥ २॥ घनाघनेषु वीरेषु, वर्षत्सु शरधोरणीः। विपक्षवाहिनीहंसैरुड्डीयोड्डीय
निर्गतम्॥ ३॥ अथ सेवकैर्वार्यमाणोऽपि कुमारो गत्वाऽग्रतोऽरिदमनं प्रति प्राह—रे सङ्ग्रामसरोभेक!, विवेक-

विकलाकृते ! । आगतोऽयमसिः ग्रासं, चिकीस्त्वां भुजगो मम ॥ १ ॥ एवं वदन् कुमारो युद्धं कुर्वन् क्षणाज्जीवग्राहं तं वैरिणं जग्राह । अथ दत्त्वा कतिपयानि प्रयाणानि स्वाज्ञां ग्राहयित्वा कुमारस्तं रिपुं पश्चात् प्रेषयामास स्वराज्ये । तदानीमुत्पन्नवैराग्यः स्वपुत्रं राज्येऽभिषिच्यारिदमनो राजा गुरुपार्श्वे दीक्षां लात्वा सर्वक्षीणकर्मा मुक्तिमगात् । कनकरथकुमारोऽपि व्रजन्नेकामटवीं गतः । तत्र वरूथिनीं नगरस्थित्या स्थापयामास कुमारः। सायाह्ने च तत्र समागत्य सभासीननृपात्मजं मुक्त्वा जलवीक्षायै गता नरास्तत्रैत्य प्रणेमुः । राजा जगौ–किं चिरेण यूयमागताः?। ततस्ते प्रोचुः–तावदद्भुतवनान्तरे तत्रैकां दोलाकेलिपरां स्वर्गिवधूतुल्यां नारीं पश्यामः । यावद्वयं तत्र गतास्तावद्विद्युज्झात्कार इवालक्षितगतिः क्वापि तरुकुञ्जे गता । ततो भृशं विलोकितापि तत्र सा न दृष्टा, अभाग्यवद्भिरिव सेवधिः । ततो वयं समागताः । इत्याकर्ण्य नृपश्चमत्कृतोऽभूत् । अत्रान्तरे सूर्योऽस्तं गतः । तद्विसृज्य कुमारः सन्ध्यायां प्रतिक्रमणादिकृत्यं कृत्वा स्मृतपञ्चनमस्कारो हंसतूलायुतायां शय्यायां सुप्त्वा रात्रीमनैषीत् । इतः प्रातर्मङ्गलपाठका जयजयाशिषं प्रयुञ्जाना उच्चैः प्रोचुर्भूपमुद्दिश्येति—शय्यां त्यज कुमारेन्द्र !, विभातेयं विभावरी। उदियाय रविर्ध्वस्तध्वान्तपुञ्जः स्फुरत्करः ॥ १ ॥ रवि-

॥ ३०१ ॥

रोचिःकृतस्मेरपद्मेभ्यः साम्प्रतं स्फुटम् । निर्गत्य कमला इभ्यान्, वृण्वते विहितादराः ॥ २ ॥ मङ्गलवचः श्रुत्वा
कुमारस्तल्पमुज्झांचकार । प्रक्षाल्य वदनाम्भोजं, देवपूजां विधाय च। अवादयत् प्रयाणाय, ढक्कामथ नरेन्द्रभूः
॥ १ ॥ ढक्काशब्दं श्रुत्वा सर्वं सैन्यं चलनाय सज्जमभूत् । ततो निजैः कतिपयैः सवयोभिः समं चरनिर्देश्यमा-
नं मार्गं नृपात्मजश्चचाल । अग्रेसरः कुमारस्य, प्लवमानः प्लवङ्गवत्। एकस्तारगिरा कश्चिदपाठीदिति मागधः ॥१॥
व्योमश्रीकुचकुंकुमपङ्को दिनमुखतरुप्रवालभरः । तिमिरावदनादहनः प्रभवति भगवानयं भानुः ॥ २ ॥ तीरं
तारमनारतमटतस्तत्सङ्गमाशया सरसः । सङ्घटयति पतिरह्नामसुं दयितां चक्रवाकस्य ॥ ३ ॥ ततः क्रामन्
कुमारः सरसः समीपे गतः। तदुपान्तस्थवने भ्रमन् कनकरथकुमारस्तां नारीं दृष्ट्वा विस्मित इति दध्यौ—एवंविधं
स्त्रीरत्नं मर्त्यलोके न घटते। केन कारणेन स्वर्गात् समागता सुरी सम्भाव्यते। यतः—"कर्पूरपूरः किमहो, जायते
लवणाकरे?। जलपूर्णं सरः किं स्यान्मरुदेशे महत्तमम्? ॥ १ ॥" तदानीं तत्र वधूरपि समागता । कुमारस्तु
तामपश्यन् चैत्यमेकं कैलासाद्रिसोदरमपश्यत् । एतस्मिन् प्रासादे कदाचिद् गता स्यात्सा भामिनीति ध्यायंस्तत्र
गतः कुमारः। प्रासादमध्ये श्रीऋषभदेवमूर्त्तिं ददर्श । ततः शुचिर्भूपकुमारः प्रवरनीरेण प्रक्षाल्य पुष्पैः प्रभुमर्च-

यामास । ततः प्रभुमिति कुमारस्तुष्टाव । निःशेषसुखसन्दोहकन्दकन्दलनाम्बुदः । जयामेयगुणग्राम !, नाभेय ! जिनपुङ्गव ! ॥ १ ॥ अद्य मे सफलं चक्षुरद्य मे सफलं शिरः । अद्य मे सफलः पाणिरद्य मे सफलं वचः ! ॥ २ ॥ दृष्टोऽसि वन्दितोऽसि त्वं, पूजितोऽसि स्तुतोऽसि च । वदन्निति स तीर्थेशं, प्रणनाम मुहुर्मुहुः ॥ ३ ॥ तस्मिन्नवसरे पांशुर्मुनिरेकः समागमत् । जराभिदेलिमवपुः, प्रलम्बितजटाभरः ॥ ४ ॥ सापि कन्या हस्तगृहीतप्रौढपुष्पपूर्ण-करण्डकाऽऽगात्तत्र । प्रभुं प्रपूज्य स्तुत्वा च सा कन्या कुमारं वीक्ष्य दध्यौ—किमिन्द्रः ? किमु वा चन्द्रः !, किमु वाऽसौ दिवाकरः ? । देवः किमथवा साक्षादयं मकरकेतनः ? ॥ १ ॥ अथवा चारिमा तस्येदृशी क्वास्ति बिडौजसः ? । यो वपुर्वहते नेत्रैः, पिटकैरिव दन्तुरम् ॥ २ ॥ कलङ्की रजनिजानिस्तापनस्तपनः खलु । अनङ्गस्तु मनोजन्मा, तत्कोऽयं शुभगाग्रणीः ? ॥ ३ ॥ अथोत्थितः कुमारोऽपि, नमस्कृत्य जिनेश्वरम् । तं मुनिं सहसोद्वीक्ष्य, ननश्चक्रेऽति-विस्मितः ॥ ४ ॥ मुनिः प्राह—त्वं कः ? कुतोऽत्रागाः ? किंनामा ? । तदा मागधकुमारः स्वपुरपित्रादिसम्बन्धं प्राह । अत्रान्तरे कुमारस्तां पुनर्जटाभारान्तरस्थां कन्यां ददर्श । ततो कुमारो मुनिं पप्रच्छ—मुने ! केनेदं जिनमन्दिरं कारितं ?, केयं कन्या ? । अथ मुनिरुवाच—महती कथाऽस्ति । देवपूजाकरणादनु कथयिष्यते । ततो देवपूजां चकार

मुनिः । ततो देवगृहाद्बहिरभ्येत्य प्राह मुनिः—ममोटजे समागच्छ । तत्र सर्वं कथयिष्यते । ततः कुमारो मुनेरुटजे गतः। मुनिस्तस्य भोजनादि दत्त्वा पूर्वपृष्टं कथासम्बन्धमिति प्राह—अमरावतीतुल्या पुरी मित्रावती विद्यते इह । तत्र हरिषेणभूपः पृथ्वीं प्रशशास । तस्य पट्टराज्ञी प्रियदर्शनाऽभूत् । तत्कुक्षिजन्मा पुत्रोऽजितसेनाह्वोऽभूत् । तं नृपमन्यदा कश्चिदशिक्षितोऽश्वोऽपहृत्य काननावनौ नीतवान् । गच्छतोऽश्वस्य वटं प्रालम्ब्य शाखायां विलग्नः। ततस्तरोरधोऽवततार नृपः । ततः सरसि गत्वा पयः पीत्वा प्रक्षालिताङ्गोरुः रुरुबहुसङ्कीर्णं मुनेराश्रमं प्राविशन्नृपः । तत्र कच्छमहाकच्छवंशोद्भवं कुलपतिं विश्वभूतिनामानं राजैक्षत । ततो राजा तं कुलपतिमवन्दत । लक्षणैर्वर्यैः कुलपतिस्तं भूपतिं जज्ञे । ततो नामग्राहमाशिषं तस्मै नृपाय कुलपतिर्ददौ । "राजन्! वृषध्वजविभुस्तव मङ्गलानि, पुष्णातु शेषभुवनत्रयपूर्णकुम्भः । यस्योपकर्णमधिरोपितभूतकर्णलीलामुपैति चिकुरालिरिहालिनीला ॥१॥" मुनिरित्याशिषं दत्त्वाऽप्राक्षीदिति भूपम्—कुतो यूयमिहायाताः?, कथमेकाकिनस्तथा?। इति पृष्टो विश्वभूतिना सर्वं निवेदयामास भूपो यावद्राजा मुनिपदोपास्तिं कुरुते तावत् कानने तुमुलारव उच्चैरभूत् । किमेतदिति तुमुलरवः?। अधुना कस्माज्जायते?। सर्वे आश्रमवासिनः परस्परमुखेक्षिणोऽभूवन् । तदा मत्सेना आगच्छत्यस्ति

इति ज्ञात्वा नृपो विश्वभूतिपादानदोऽवदत्–इदं मम सैन्यं पश्चात् स्थितं समागमत् इति सम्भाव्यते । ततोऽहं तस्य स्वं दर्शयिष्यामि । ततो मुनिं नत्वा स्वसैन्यं राजा स्वदर्शनदानात् प्रमोदयामास । तत्सैन्यं राजा तत्रास्थापयत् । मासमेकं मुनिसेवापरो राजा हरिषेणोऽस्थात् । तेन भूपेनेदं चैत्यं कारितं महत् । ततस्तस्य हरिषेणस्य गच्छतः स्वपुरं प्रति मुनिर्विषापहारमन्त्रमदात् । ततो राजा स्वपुरमेत्य सत्प्रवेशमहोत्सवपूर्वं पृथिवीं नयात् पालयामास । अन्यदा सभासीनस्य तस्य भूपस्य सदसि कोऽप्यभ्येत्य प्राह–स्वामिन्नस्ति स्वस्तिमती नगरी मङ्गलावती । तां पालयति प्रियदर्शनभूपः । तस्य विद्युत्प्रभा पत्नी पुत्रीमसूत । तस्या जन्मोत्सवः कृतः । प्रीतिमतीनाम दत्तं तस्याः । वर्द्धमाना क्रमात् अन्येद्युः दुष्टाहिना दष्टा । तस्या विषं कथमपि नोत्तीर्णम् । त्वमत्र श्रुतोऽसि विषापहारमन्त्रविद् । ततो राजा हरिषेणो वेगिभिः करभोत्तमैस्तत्र गत्वा नृपसुतां प्रीतिमतीं निर्विषां चकार । ततो हृष्टेन प्रियदर्शनभूपेन सा पुत्री तस्मै हरिषेणाय दत्ता । पुनस्तया पत्न्या सहितो भूपः समहं स्वपुरमागात् । तया सह भोगान् भुञ्जानस्य राज्ञः पुत्रोऽभूत् । धारनामेति दत्तं तस्य । बालं पुत्रं राज्ये निवेश्य उत्पन्नवैराग्यो राजा तपस्विनो व्रतं जग्राह । पत्न्यपि तद्व्रतं ललौ । ततस्तौ दम्पती वीक्ष्यमाणावश्रुमुखैर्जनैर्नगरादाश्रमं

प्रति चेलतुः। वने गत्वा विश्वभूतिमुनेः पार्श्वे हरिषेणप्रीतिमत्यौ तापसवेषधरे पर्युपास्तिं चक्रतुः। अथ पञ्चमे मासे तस्या गर्भः प्रकटोऽभूत्। प्रीतिमत्यास्तपस्यन्त्या अपि गर्भः स लज्जाकारी बभूव तपस्विषु। इतः गुर्विणीं तां ज्ञात्वा तत्पतिः प्राह—प्रिये! कोऽयं गर्भस्तव सदाचारवत्याः?, साऽपि लज्जावती प्राह—स्वामिन्! गृहस्थवासे भवदीयोऽयं गर्भो बभूव। मया त्वन्तरायभयात् संयमस्य न प्रोक्तः। हरिषेणो जगौ—भविता हन्त धिक्कारस्तापसेष्वावयोरतः। प्रातरन्यत्र स्थास्याव, इत्यालोच्य परायणौ॥ १॥ एवं ध्यानवन्तौ तौ तां निशां निन्यतुः। प्रातरन्यत्र गुप्तस्थाने स्थिता तापसी। प्रगे ताभ्यां शून्यं वनं दृष्टम्। तापसा मन्दं मन्दं वृद्धं गच्छन्तं मुनिं ददृशुः। ततो हरिषेणः पत्नीयुतः पश्चादानीतः पुष्पनामतापसपार्श्वे जगौ—मत्पत्न्या न वयं कृतं पूर्वगर्भाकथनात्। ततोऽहं स्वमुखं नीत्वाऽन्यत्र स्थास्यामि। मुनिरुवाच—भद्र! एवं किं प्रोच्यते त्वया?। युवयोराश्रमस्थयोर्गृहस्थसाम्यमभवत्। शीलं मिथः सम्यक् पालनीयं। को दोषो भवतोर्विद्यतेऽत्र?। पूर्वकृतकर्मणामिदं विलसितं यतः। ततो वसुभूतिमुनेः सेवां तौ तनुतः स्म। ततो दम्पती तौ निजकर्म निन्दन्तौ अत्यवाहयतां चतुरो मासान्। प्रीतिमती नवमे मासे पुत्रीं प्रासूत। ऋषीणामाश्रमे जाता इयमिति पितृभ्यां ऋषिदत्ता इति तस्या नाम दत्तम्।

तदा प्रसवरोगेण प्रीतिमती मृता । ततः पिता तामृषिदत्तां पालयामास। अष्टवार्षिका जाता ऋषिदत्ता । ममेयं पुत्री ऋषिदत्ता । इमां रूपवतीं दृष्ट्वा वनेचरा हरिष्यन्ति । इति सञ्चिन्त्य जनकोऽस्या अहमदृश्यकरणमञ्जनं चकार । तेनाञ्जनयोगात् कदाचिदियं दृश्या भवति कदाचिददृश्या भवति। सोऽहमस्याः पिता । इयं मम पुत्री ऋषिदत्ता। अलक्ष्याऽपि कानने भ्रमन्ती तव स्वं दर्शनं ददौ । कुमारस्तां दृष्ट्वा रागवानभूत् ।—कुमारातिथये तुभ्यमातिथ्यमियमङ्गजा । अस्तु मे भरतायैव, चक्रिणे विनमेः सुता ॥ १ ॥ एतच्छ्रुत्वा ऋषिदत्ता लज्जयाऽधोमुखी जाता ।—कुमारस्तु समानीय, पाणी वाणीमिमां जगौ। यदादिशन्ति पूज्यास्तत्, प्रतिपन्नं मया खलु ॥१॥ अत्रान्तरे जगौ बन्दी—मुने! त्वमात्मसुतामस्मै दत्त्वा सुखी भव। ततस्तस्मै कुमाराय महोत्सवपुरस्सरं ऋषिदत्ता मुनिना दत्ता । तत्रैव सत्या ऋषिदत्तया सह भोगान् भुञ्जानस्य भूपस्य कियन्तो वासराः सुखसंभारभासुराः समजायन्त । अन्यदा मुनिर्गद्गदगिरा कुमारं प्रति प्राह—कुमार! जगदाधार, प्रतिपन्नैकवत्सल । किम्बहु ब्रूमहे मैनामपमानपदं कृथाः ॥ १ ॥ इयं पुत्री मदीया काननवासत्वान्मुग्धाऽस्ति । तेनेयमेवंविधाऽपि न्यासीकृता त्वयि गुणवति। इयमपि गुणवती भविष्यति । यतः—मृगनाभौ गता धूलिरप्यहो सुरभीभवेत् । किं चाहं

॥ ३०४ ॥

यतो जीवितान्मरणं श्रेयो मादृशां जरतां जनानाम् । कुमारोऽपि मुनीश्वर-
वृद्धत्वात् पावके प्रवेष्टुमिच्छामि । यतो जीवितान्मरणं श्रेयो मादृशां जरतां जनानाम् । इतः रुदती ऋषिदत्ताऽपि योजयित्वा
पादयोर्निपत्य प्राह—अलं वह्नियोगात् प्राणपरित्यागेन। दुर्गतिहेतुत्वात् । इतः रुदती ऋषिदत्ताऽपि योजयित्वा
करद्वयीं पितरं प्रति प्राह—यदयं तात ! जामाता, भवतां यदि जल्पति । तद्यूयं प्रतिपद्यध्वं, विधाय करुणां मयि॥१॥
सुप्रसन्नो मुनिः सुतां प्रत्येवं प्राह—शोकेनानेनालं वत्से ! तव । परं शिक्षावचोऽस्माकमिदं कचन मा मुञ्च । शुश्रूषेथा
गुरून् शीलं, पालयेथाः पतिव्रते ! । सपत्नीष्वपि मा कोपीः, कोपयन्तीष्वपि ध्रुवम् ?॥ १ ॥ विधुः संतप्यते कचिद्
ग्रस्यमानोऽपि राहुणा । मा भूः सुखे च दुःखे च, वत्से ! धर्मपराङ्मुखी । धर्म एव हि जन्तूनां, पिता माता सुता प्रभुः
॥ १ ॥ अहं तु वृद्धोऽभूवं । शरीरे तीव्रवेदनाऽस्ति । तेनाहं द्रुतं मरणं साधयिष्यामि । अग्निं विना तन्न भवति । एवमापृ-
च्छ्य भूपपुत्रं पुत्रीं च पञ्चपरमेष्ठिपरायणो मुनिरन्तर्विवेशाग्नौ । ततो जगतीपीठे विलुठ्य च भूय ऋषिदत्ता विला-
पानकरोदिति । हा तात ! तात !! निःसीमापत्यवात्सल्यतत्पर ! । अथाहं त्वदृते शोच्या, गतमूलेव कन्दली ॥ १ ॥
दृष्टाऽपि न मया माता, तात ! माताऽपि मे भवान् । तदभावोऽपि जायेत, भुवि हाऽस्ते गते त्वयि ॥ २ ॥ रुदतीं
पत्नीं प्रबोधयन्निति भूपः प्राह—तिष्ठ तिष्ठ प्रिये ! माऽश्रुपातमत्यन्तमातनु । केवलं ते कृते दुःखे, परलोकपथं

गतः ॥ १ ॥ अयं हि ते पिता कामं, कृतराज्यव्रतव्रतः। न शोच्यः किं भवेत् शोच्यः?, प्रिये! पूषाऽस्तमीयिवान् ॥ २ ॥ इत्थं प्रियां प्रबोध्य कनकरथ ऋषिदत्तां लात्वा चचाल स्वपुरं प्रति। अखण्डितप्रयाणोऽथ कुमारः स्वपुरे समागात्। पित्रा प्रवेश्य महोत्सवः कारितः। सवधूककुमारो मातापितृचरणद्वयीं ननाम। तावपि पितरौ सविनयां वधूं दृष्ट्वा हृष्टौ। कैलाससोदरे सदने स्थिता ऋषिदत्ता पत्या सह भोगान् भुङ्क्ते स्म। इतश्चाश्रावि कावेरीपुरी-स्वामिना सुन्दरपाणिना नृपेण—कुमारेण वर्त्मनि ऋषिदत्ता परिणीता। सापि वार्ता रुक्मिण्या श्रुता। ततो रुक्मिणी कुमाराकांक्षिणी तस्या योगिन्या भक्तिं कुरुते भोजनाच्छादनदानेन। योगिन्योक्तं—यत् तव कार्यं भविष्यति तन्निवेदय। तयोक्तं—त्वं विद्यया तथा कुरु, यथा ऋषिदत्तायाः कलङ्को भवति। कनकरथः कुमारोऽत्रायाति। तयोक्तं—तथा करिष्यामि यथा स्वयमेव कनकरथकुमारोऽत्र समायाति। ततो रुक्मिणीप्रेषिता योगिनी रथमर्दनपुरं प्राप कुमारदयिताया अभाग्यात्। इत आदित्योऽस्तं गतः। उदियाय सर्वतस्तमःप्रसरः चन्द्रश्च। पूर्वाचलचूलायां समागात्। दत्त्वाऽवस्वापिनीं तत्र जनमेकं निहत्य च सा योगिनी कुमारचतुःशालं ययौ। ऋषिदत्तां कुमारसमीपे सुखशायिनीं दृष्ट्वा दध्याविति—अहो रूपमहो दीप्तिरेतस्या मृगचक्षुषः। अयं तु पुण्यवान्

यस्य, दयितेयमजायत ॥ १ ॥ तया योगिन्या तदा ऋषिदत्ताया मुखं शोणितविलिप्तं कृतम्। उपधानपदे च पलं न्यस्तमृषिदत्तायाः। ततोऽवस्वापिनीं हृत्वा स्वस्थानके गता योगिनी। मारितमेकं नरं दृष्ट्वा परिजनः कलकलं चकार। कुमारस्तदा जजागार। प्रियाया वक्त्रं शोणितलिप्तं उपधाने च पलं वीक्ष्य कुमारश्चकितः सन्निति दध्यौ। इतो लोकैर्विज्ञप्तं—केन पुरुषेण वा स्त्रिया अस्मदीय एकः पुरुषो भक्षितोऽस्ति। त्वं तु प्रजापतिर्न्यायी तेन त्वं निगृहाण। ततो राजा जगौ—कोऽपि पुरमध्ये राक्षसो राक्षसी वा यो भविष्यति स कर्षयिष्यते। विलोकयतु सर्वत्र। इतः कुमारो दध्यौ—मत्प्रिया किं राक्षसी विद्यते?। मारितः श्रूयते कश्चिदमुत्र पुनरीदृशः। राक्षसीयं हहा प्राणवल्लभा तु कथं मम! ॥ १ ॥ रूपसम्पदः पापाय, यदत्र श्रूयते श्रुतौ। हा धातः किमिदं तात!, विपरीतमजायत ॥ २ ॥ अनल्पान् सङ्कल्पानिति ध्यायन् कुमारः प्राह—भो प्रिये! जागृहि। ततः सुप्तोत्थितां प्रियां तामाचष्ट कुमारः—पृच्छामि भवतीं किञ्चित्, गोपायसि न चेतसि। नहि स्त्री चामुनापि त्वं, प्रिये! किमसि राक्षसी?॥ १॥ सा भीता जगौ—देव! किमेवं त्वं मयि जल्पसि। कुमारः प्राह—मुखं रक्तं तव दृश्यते, उपधाने तु पलमस्ति। तेनाहं जानामि त्वया कोऽपि ना हतोऽस्ति। अन्यथा मुखमीदृक्षं कथं ते दृश्यते?। इति पत्युर्वचः

श्रुत्वा ऋषिदत्ता स्वं रक्ताक्तं स्वपार्श्वे च पललं वीक्ष्य कुमारं प्रति प्राह—पुराऽपि यद्यहं देव, भवेयं मांसलोलुपा । आर्यपुत्र! कथं कुर्यां, तदा मांसनिषेधनम् ॥ १ ॥ एतत् किमपि नो वेद्मि, पादाः क्रुध्यन्ति ते मयि । मम कर्मेरितेनाद्य, केनचिद्वैरिणा कृतम् ॥ २ ॥ यदि तव मयि प्रीतिः स्यात्तदा मां यथारुचि निगृहाण । यतः—इष्टोऽपि त्यज्यते दुष्टः, शटदङ्गप्रदेशवत् । कुमारस्तस्या वचः श्रुत्वा, विवेकी तामदोऽवदत् ॥ १ ॥ निर्दोषाऽसि प्रिये !। त्वं चित्ते खेदं मा कुरु । तदा कुमारो मांसादि पश्यन्नपि पत्न्याः स्नेहात् प्रदोषं न पश्यति । ततस्तया स्वमुखं प्रक्षालितम् । एवं प्रतिवासरं योगिनी ऋषिदत्तायाः कलङ्कार्थं करोति । प्रत्यहमेकैकं नरं केनचिद् हन्यमानं मत्वा राजा मन्त्रीश्वरान् भाषते । रे! मम पुरे नित्यमेकैको मार्यते जनः । यूयं किमु न जानीथ, यदेवं स्थ निराकुलाः? ॥ १ ॥ ते मन्त्रिणो जगदुः—मानवी काऽपि दुष्टा नास्ति । किन्तु काऽपि मारी भविष्यति उत । निर्वास्यतां योग्याद्याः पाखण्डिनः सर्वेऽपि पुरादस्मात् । ततो राजा जिनमुनीन् विना पद्रे (परे) पाखण्डिनो निरवासयत् । इतो रहसि सा सुलसा योगिनी पापिनी नृपं प्राहेति—देव ! अद्य कोऽपि देवः स्वप्ने समेत्य ममाग्रे जजल्प—एते पाखण्डिनो निर्दोषाः सन्ति । भूपपुत्रस्य प्रिया ऋषिदत्ता वने ववृधे सैव राक्षसी ज्ञेया

राज्ञा
तस्याश्चेष्टितमिदम्। यदि राजा न मन्यते तदा छन्नं स्थित्वा रात्रौ विलोकयतु । विलोकयिष्यामि इति राज्ञा प्रोक्ते योगिनी स्वस्थाने गता । इतः कुमारो राज्ञः पार्श्वस्थो दध्यौ—अथ यदि मत्प्रियाया दोषः प्रकटी- भविष्यति तदा किं क्रियते मया ?। राज्ञोक्तं—पुत्र! त्वमत्र तिष्ठ । तव पत्न्याश्चेष्टितं विलोकयिष्यते । कुमारो दध्यौ—एकतः पितुरादेशलङ्घनं युज्यते न मे । अन्यतो दयितादुःखमितो व्याघ्र इतस्तटी ॥ १ ॥ ततो राज्ञा स्वसेवका ऋषिदत्तागृहपार्श्वे छन्नं मुक्ताः । तदा सुलसा तेषु (अ) पश्यत्सु मांसपिण्डकरा ऋषिदत्तागृहे गता । तत्र तस्याः सुप्ताया मुखं रक्तारक्तं कृत्वा मांसं च मुक्त्वा स्वस्थानं गता । ततो राजानुगैरुक्तं भूपाग्रे । ऋषिदत्ताचेष्टितमिदम् । ततो राजा पुत्रं निर्भर्त्सयामासेति—अरे! जानन्नपि क्रूरां, राक्षसीचरितामिमाम् । कुला- ङ्गार दुराचार!, पाप पालयसे कथम् ? ॥१॥ याहि याहि दृशोरग्रं, त्यज मे राक्षसीपते !। त्वया कलङ्कितमिदं, शशाङ्कधवलं कुलम् ॥ २ ॥ तदा कुमारोऽपि कृताञ्जलिः प्राह—सर्वमिदं मिथ्या । भवतः स्नुषा निर्दोषाऽस्ति । तेन मयि मा कुप्य। किन्तु प्रसीद !। ततो रुष्टो राजाऽवग्—यत् प्रत्यक्षेण दृष्टं तन्मन्यते मया । स्वयं तत्र गत्वा निभालय । तथाविधां प्रियां दृष्ट्वा कुमारोऽवग्—भो प्रिये! किं ते दुश्चेष्टितमिदं दृश्यते ?। तयोचे—अहं किमपि

न जाने । ततो राज्ञा रुष्टेन दण्डपाशिकानां मारणाय विश्राणिता । प्रोक्तं च—एषा राक्षसी विद्यते । भवद्भिः सयत्नैः स्थातव्यम् । ते भ्रामयित्वा पुरमध्ये तामृषिदत्तां श्मशानभुवि गता दण्डपाशिकाः । पौरेषु रुदत्सु दूरं वने नीता ऋषिदत्ता तैः । एतस्मिन्नेवावसरे भानुरस्तं गतः । तामृषिदत्तां ते राजपुरुषाः क्रूराशयाः श्मशानभूमौ निशि निन्युः । ततस्तत्र तां यावद्धन्तुं लग्ना असिपाणयः पुरुषाः तदा ऋषिदत्ता मूर्च्छिता भूमौ पपात, निश्चेष्टा चाभूत् । मृतां तां मत्वा ते राजपुरुषाः पश्चादाययुः । साऽपि वातैः स्वस्थीकृता स्वयं पूर्वकृतं कर्म ममेदानीमागतमिति ध्यायन्ती बिभ्यती च वने बभ्राम । भ्रमन्तीति जल्पति च—ताताहं कथं तदा त्वया मृगीव गच्छता मुक्ता? । दध्यौ चेत्थम्—संसारे जीव! भवता, पापं किं दुष्कृतं पुरा? । निरागसोऽपि यदयं, कलङ्को हि ममाभवत्! ॥ १ ॥ रे विधे! यदि त्वया ममेदृशो मुधा कलङ्को दत्तस्तर्हि मम पतिः स कथं मया विना भविष्यति? । अथवा रे भर्तः! अत्रागच्छ । रे जीव! स्वं कृतं कर्म त्वं सहस्व । यतः—हसन्तो० । इति चिरं विलप्य स्वस्थीभूय ऋषिदत्ता चचालाग्रतः । भ्रमन्ती ऋषिदत्ता क्रमात् पितुराश्रमं गता । ततो यत्र पिता भस्मीभूतस्तत्रागता । तत्रेति भृशं गाढस्वरं रुरोद ऋषिदत्ता—हा तात ! दुहितेयं तेऽनवधिदुःखसेवधिः । क्वासि त्वमेहि मे देहि,

वत्सावत्सल! दर्शनम् ॥ १ ॥ दुःखितां दीनवदनामेकां शरणवर्जिताम् । आश्वासय समागत्य, विधाय करुणां मयि ! ॥ २ ॥ शून्येऽमुत्र वने तात !, त्वद्दते दुःखभागहम् । पूत्करोमि पुरः कस्य ?, क्व यामि च ? करोमि किम् ? ॥ ३ ॥ रम्यमासीत् पुरमिव, त्वयीदं तात ! जीवति । अभूत् पुनरिदानीं मे, गहनं दहनोपमम् ॥ ४ ॥ अद्राक्षमथ जीवन्तमिव त्वां तात ! यद्यहम् । दुःखमप्युत्सवीयेत, तदा वै हसनं मम ॥ ५ ॥ अथ ग्रहिलतामेतां, जल्पामि कियतीमिह । यादृगारोप्यते पूर्वं, तादृगेव हि लूयते ॥ ६ ॥ इति शोकं तनूकृत्य, जनकोटजवासिनी । कन्दमूलफलाहारा, तस्थावेकाकिनी वने ॥ ७ ॥ हस्तन्यस्तमुखी दुःखं, तस्थुषी सुमुखी हृदि । दध्याविलन्यदा चित्रलेपकाष्ठमयीव सा ॥ ८ ॥ प्रायशः पाकमधुरा, कर्कन्धूरिव यद्वधूः । यद्वा वनी कथं तन्मे, भविता शीलशालिनी ? ॥ ९ ॥ हुं ज्ञातं जनकेनास्ति, पुरा सन्दर्शितौषधी । एका यस्याः प्रभावर्द्धिवशान्नारी नरीयति! ॥ १० ॥ इति निश्चित्य तामौषधीमाददौ । तस्या औषध्याः प्रभावात् ऋषिदत्ता पुंस्त्वं प्राप । ततो मुनिवेषा सुखेनास्थात् ऋषिदत्ता जिनमर्चयन्ती । इतश्चामुष्या वल्लभः कनकरथो रुदन् विरहदुःखवह्निज्वालाकृशतनुस्तस्थौ । सुलसा योगिनी स्वं कृतार्थं मन्यमाना स्वकार्यकरणात् कावेरीपुर्यां गत्वा

रुक्मिणीं ज्ञापयामास । ततो रुक्मिणी पितुः पुरः प्राह—मां कनकरथेन सह परिणायय । ततः काबेरीपतिः सुन्दरपाणिभूपो ज्ञापयति। मत्पुत्री रुक्मिणी त्वत्पुत्रेऽनुरक्ताऽस्ति इत्यादि शिक्षयित्वा दूतं प्रास्थापयत् कनकरथं प्रति । सोऽपि दूतो गत्वा तत्र रथमर्दनभूपालमभ्यधात्—भवन्तं प्रति काबेरीपतिः सुन्दरपाणिभूपो ज्ञापयति—मत्पुत्री रुक्मिणी त्वत्पुत्रेऽनुरक्ताऽस्ति । तेन त्वं स्वं पुत्रमत्र तां कन्यां परिणेतुं प्रेषय। दूतवाणीं श्रुत्वा क्षोणीपतिर्निजाङ्गजं दुःखितं प्राह रहसि—किमेवं नित्यशोऽतुच्छं, वत्स ! चेतसि ताम्यसि । किं तथा(त्वया)ऽश्रावि नैवं यत्, कृतं कर्म न दूषयेत् ! ॥१॥ तत्त्वं वत्स ! सत्वरं काबेरीपतिपुत्रीं परिणेतुं चल । अनिच्छन्नपि पितृवचनं स पुत्रो मन्यते स्म । अथ शुभेऽहनि रुक्मिणीं परिणेतुं चचाल कनकरथः । क्रमात् चलन् कनकरथकुमार ऋषिदत्तालङ्कृतं वनं ययौ । वनं पूर्वदृष्टमालोक्य च स गुणैकभूः कुमारो बाष्पक्लिन्नविलोचनश्चिन्तयामास—तदेव वनं यत्र मया ऋषिदत्ता कन्या परिणीता । यद्वनं पूर्वं हर्षायाभूत् तदधुना मम दुःखायाजनि । एवं ध्यात्वा कुमारो जिनसद्मनि जिनेन्द्रं नन्तुं गतः । तदाऽकस्मात्तस्य दक्षिणं चक्षुः परस्पन्द । ततो दध्यौ कुमारः—मम स्फुरदिदं चक्षुः, प्रियासङ्गमसूचकम् । सा तु दैवहता क्वास्ते ?, तदिदं किल निष्फलम् ॥ १ ॥ यतः—"विना धर्मं विशुद्धं

न, जायते प्रियसङ्गमः । प्रायः प्रियवियोगाय, प्राणिनां पापसञ्चयः ! ॥ २ ॥" अथ पूर्वमिदं चैत्यं मम प्रिया-
सङ्गमायाभूत् । अधुनापि किं प्रियासङ्गमाय स्यात् ?। इति ध्यायतस्तस्य कुमारस्य ऋषिदत्तामुनिवरः पुष्पकरण्ड-
कयुक्तस्तत्र देवं नन्तुं समागात् । कुमारोऽपि कराचस्य पुष्पमालां ललौ । दृशाऽपश्यत् सञ्जातप्रियाभ्रमः विशा-
लया स च ऋषिदत्तामुनिम् । साऽपि दध्याविदम्—रुक्मिणीं परिणेतुं किं प्रस्थितोऽयं मम प्रियः ? । कुमारोऽपि
मुनिं नत्वा तं सादरमाहूय स्फारासने उपवेशयामास । मुनिर्भोजितः परिधापितश्च स राज्ञा । अथ कुमारस्तं
मुनिं प्रति प्राह—मदीयनयनाम्भोजभास्करप्रतिम ! प्रभो ! । निवेदय वनेऽमुष्मिन्, कदाऽऽयासीः ? कुतस्तथा ? ॥१॥
उवाच मुनिः—आसीदत्राश्रमे हरिषेणमुनिः । तस्य चैकः पालितपुत्रोऽभूत् । पुत्री च ऋषिदत्ताह्वा विनयान्विता ।
कुमार ! तां परिणीय कोऽपि नृपः स्वस्थाने गतः । हरिषेणमुनिः पूर्वं वह्निप्रवेशात्स्वर्गं जगाम । अहमपि क्षोणीं
भ्रामं भ्रामं श्रीनाभेयसेवायै अत्रागमम् । अत्र मम तिष्ठतः पञ्चसंवत्सरी जाता । परमथ तव भाग्यवतो दर्श-
नान्मम जन्म फलेग्रहिरभूत् । अथ सानन्दो भूपपुत्रस्तं प्रति प्राह—मुने ! त्वां पश्यतो मम दृष्टिः कथं तृप्तिं न
याति ?। मुनिः प्राह—कोऽपि कस्यापि वल्लभ इहलोके स्याद्, अथवा प्राग्भवसम्बन्धात्प्रमोदो भवति ! । यतः—

"मोदन्ते कुमुदानीन्दौ, कमलानि तु भास्करे। अभीष्टे वीक्षिते ह्येवं, प्रमोदो जायते नृणाम्! ॥ १ ॥" ततो मुनिं प्रति सोपरोधमिति क्षोणीपतिपुत्रो जगाद—अग्रे समस्ति गन्तव्यं, मुने! यामि कथं? यतः। त्वत्प्रीतिशृङ्खलाबद्धं, मनो मे गमनाक्षमम् ॥ १ ॥ ततो मया समं तत्रागच्छ। पश्चात् समागच्छताऽत्र स्थेयम्। अथ प्राह मुनिः—मैवं वद कुमार!। यतः—"संयमिनो व्रतं देव!, दूष्यते राजसङ्गतेः। तेनैकान्ते स्थितैः साधुवरैर्ध्येयं परं महः ॥ १ ॥" ततो भूपेनोक्तं—त्वादृशाः पुरुषा अपि किं कुर्वते प्रार्थनाभङ्गम्?। अमात्या अपि जगदुः—भो मुने! यथा तथा अस्य कुमारस्य वचो मन्यते यदि तदा वरम्। ततो मुनिनोक्तम्—एवं भवतु। ततः सन्ध्यायां धर्म्मकृत्यानि कृत्वा स्थितौ तावेकत्र। अथ प्रातः प्रयाणकं कुमारश्चकार। ततश्चलन्कुमारः काबेरीं पुरीं ययौ। सुन्दरपाणिभूपः सम्मुखं समागात्। निष्पादिततलिकातोरणां पुरं काबेरीं कुमारं प्रावेशयन्नृपः। विवाहसज्जितं सदनं कुमारोऽलंचकार। अथ ज्योतिर्विदादिष्टे वासरे च कुमारस्तां कन्यां पर्यणैषीत्। ततस्तं भूपः कतिपयदिनानि तत्रास्थापयत्। अन्यदा रुक्मिणी जगाद—स्वामिन्! या तव पूर्वमृषिदत्ता तपस्विनी प्रिया जाता सा कीदृशी?। तया च तव मनो हृतं श्रुतम्। जगाद मेदिनीशसूनुः साश्रुलोचनः—शुभे! तस्यास्तुल्या स्त्री कापि काऽपि न दृश्यते!।

वर्णिका मेनका नागयोषितः पादपांशवः ! ॥ १ ॥ जाते
रूपलक्ष्मीजुषो यस्याः, समा स्यात् कामकामिनी । तद्विरहे दैवादासीस्त्वमपि मे प्रिया । यत् क्षैरेयीं विना घृष्टिरपि प्रीतिकरी न किम् ? ॥ २ ॥ ततः सकोपा
रुक्मिणी पूर्वं कारितं स्वचेष्टितं परिणेतुः पुरः प्राह । एतदाकर्ण्य सोऽपि ऋषिदत्तामुनिर्मुदं दध्रे स्वकलङ्कापनो-
दतः । श्रुत्वेति कुमारोऽथ क्रुद्धो रुक्मिणीमपनीयाङ्कादतुच्छं निर्भर्त्सयामास । अरे पापीयसि क्रूरे !, भवती तन्व-
तीदृशम् । आत्मानं नरकक्रोडे, मां च दुःखावटेऽक्षिपत् ॥ १ ॥ हा हा ! गुणवती रूपवती याऽऽसीन्महासती ।
कथाशेषीकृता साऽपि, धिक् त्वामशुभकारिणीम् ॥ २ ॥ केवलं सूत्रयन्त्याऽऽत्महितं किं विहितं त्वया ?। लोकद्वय-
विरुद्धं हा, पापकारिणि वैरिणि ! ॥३॥ इति निर्भर्त्सयतः तस्य भूपपुत्रस्य प्रभातं क्रमाज्जातम् । प्रातः स्वपूर्वकान्ता-
विरहदुःखितः कुमारः किङ्करैश्चितां कारयामास । अधिरोढुं चितां कुमारोऽग्निचितां चलितः । स्वजनैर्वार्यमाणोऽपि,
सबाष्पपूरितेक्षणः । कावेरीपतिनाऽप्येष, जवादेत्य निवारितः ॥ १ ॥ त्वमेव धैर्यमालम्बस्व । तां विस्मारय भामिनीम् ।
कुमार ! त्वादृशां नेदमबलाकार्यं युज्यते । राज्ञेत्युक्ते यावत् कुमारः स्वं कदाग्रहं न मुञ्चति ततः परिजनोऽवग्—भो
ऋषिदत्तमुने ! अमुं कुमारं काष्ठाग्निभक्षणान्निवारय । ततो जनैरभ्यर्थितो मुनिर्निह्नुतामन्दसंमदो विहस्य नृपनन्दनं

प्रति प्राह—मनोरमाप्रियामात्रकृते किं म्रियसे वद ? । त्वादृशा वसुमत्या हि, पतयः सेयमज्ञता ॥ १ ॥ प्रतिश्रुतमहो यन्मां, भवताऽऽनयता वनात् । धन्यमण्डलमूर्द्धन्य !, विस्मृतं तत्कथं तव ? ॥ २॥ किं च तद्वल्लभासङ्गकाम्यया मा मृथा वृथा । देहिनां गतयो भिन्नाः, परलोकजुषां यतः ॥ ३ ॥ मृतस्य वल्लभासङ्गवार्ताऽपि तव दुर्लभा । जीवतः पुनरागत्य, सा कुतोऽपि मिलिष्यति! ॥ ४ ॥ यतः—"रुदता कुत एव सा पुनर्भवता नानुमृताऽपि लभ्यते । परलोकजुषां स्वकर्मभिर्गतयो भिन्नपथा हि देहिनाम् ॥ ५ ॥ इत्यादि ।" कुमारः प्राह—भो मुने ! मां किमेवं विप्लावयसि ? । सङ्घटंते क्वचिज्जीवा मृता अपि राजिमतीनेमिनाथवत् । मुनिरप्येनं प्राह—मा विषीद महामते ! । अमुना तव सत्त्वेन जीविष्यति मृतापि सा । ततः कुमारः सप्रणयं प्राह—यद्येवं त्वया कुत्र दृष्टा श्रुता वा सा मत्पत्नी तदा सत्वरं प्रकटय । मुनिर्जगाद—जानामि ज्ञानेन तव वल्लभाम् । दक्षिणाशापतेः पुरे समस्ति । यद्यादेशं देहि तदाऽहं तत्र गत्वा तामानयामि । उपकारो भवति मत्कृतस्त्वयि । अब्रवीदथ भूपनन्दनः । यदि त्वया सा तत्र दृष्टाऽस्ति तदा तव विलम्बो कर्तुं न युज्यते !। मुनिर्बभाषे—भो कुमार ! तत्र तव प्रियापार्श्वे यास्याम्यहं काष्ठाग्निभक्षणेन । ततो भूपभूः प्राह—मया पूर्वमुक्तं या तव गतिर्भविष्यति सा ममापि भवतु । ततोऽहमपि प्रियां

द्रष्टुं त्वया सह तत्रागमिष्यामि । ततो मुनिर्जगाद—यद्यन्मयोच्यते तत्त्वया कर्तव्यमेव ?। भूपनन्दनः प्राह—भो मुने ! त्वं यज्जल्पसि तन्मया कर्तव्यमेव । भूपसुतोऽपि तं प्राह—किं विलम्बस्त्वया क्रियते ?, तया प्रियया विना मम प्राणाः परलोकाय प्रयाणं करिष्यन्ति । मुनिः प्राह—भो कुमार ! सावधानीभूय तिष्ठ त्वम्। तवाधुना प्रिया यत्र मन्त्रशक्त्या पुनस्तत्र यास्यामि । जयजयेतिनिनादपूर्वं प्रादुष्करिष्यामि । इत्युक्त्वा मुनिर्नेपथ्यान्तरमाविशत्। तत्रस्थो मुनिः प्राहेति—भविताऽहो मुनेः कर्म, समीचीनमिदं यदि । अहमेव तदा धन्यः, पुण्यवानिह भूतले ॥ १ ॥ प्रभविष्णुः प्रभावोऽत्र, सतीनां च सतामपि। भूयादिति महीनाथे, सनाथे हृदि चिन्तया ॥ २ ॥ द्रष्टव्याऽद्य मया दिष्ट्या, दृष्टया सञ्जीवनौषधीः । सा प्रियेत्युत्सुकस्वान्ते, त्वयि भूपसुते सति ॥ ३ ॥ परोलक्षेषु निस्पन्दमान-लोचनपक्ष्मसु । पश्यत्सु पुरलोकेषु, मालिताट्टालपङ्क्तिषु ॥ ४ ॥ यक्षकिन्नरगन्धर्वस्वर्वासिषु नभोऽङ्गणे । स्थितेषु कौतुकात् पाणिधृतमाल्येषु सादरम् ॥ ५ ॥ विहाय सममौषध्या, मणिना मुनिनन्दिनी । प्रादुरास पुरीमध्यादब्धेरिव रमा ततः ॥ ६ ॥ षड्भिः कुलकम् । तदा तस्याः शिरसि पुष्पवृष्टिं त्रिदशावलिर्व्यधात् । तदा तां रूपसंपत्तिविजितामरसुन्दरीं दृष्ट्वा हृष्टो जनसमूह उवाच—चामीकरस्य पुरतो, यादृशी किल पित्तला । तादृशी

ऋषिदत्तायाः, पुरः स्फुरति रुक्मिणी ॥ १ ॥ स्थाने तदस्य भूपालसूनोराग्रहसङ्ग्रहः । को नाम म्रियते नास्याः, कृतेऽतिमधुराकृतेः ? ॥ २ ॥ कुमारोऽपि बहोः कालादागतां दृष्ट्वा रूपलावण्यामृतपूर्णशरीरां भृशं नेत्रपुटैः पपौ। ऋषिदत्तापि नीरङ्गीदलोत्सङ्गीकृतानना आलुलोके तं पतिं प्रेम्णा । तदा निजजामातुर्जीवातुं तां कन्यां पुरःस्थितां दृष्ट्वा राजापि प्रमोदवशगोऽभवत्! । ततो राजा जामातरं तया कन्यया सह कुञ्जरारूढं कृत्वा समहोत्सवं सौधमानिनाय । गौरवात्तामृषिदत्तां वस्त्राभरणदानादिभिः सच्चकार । सुलसायोगिनीकृतं ज्ञात्वा राजा तस्यां रुष्टोऽभूत् । सुलसां तु महीनाथः, पापिनीं तामपापधीः। भ्रामयित्वा पुरे पौरैर्निन्द्यमानामनारतम् ॥ १ ॥ मुष्टियष्ट्यादिभिर्लोकैः, कुट्टयमाना पदे पदे । गर्दभारोहितां वाद्यमानकाहलडिण्डिमाम् ॥ २ ॥ विलूनकर्णयुगलनासिकां निरवासयत् । अवध्या हि सतामेते, नारीगोद्विजलिङ्गिनः ॥ ३ ॥ त्रिभिर्विशेषकम् । ततः स्वां नन्दिनीं भूपो रहसि नीत्वा निरभर्त्सयदत्यन्तरूक्षाक्षरकिरा गिरा । कुमारोऽपि कियत्कालं सहैव ऋषिदत्तया विषयसुखं भुञ्जानस्तत्र तस्थौ। अन्यदा च प्रियामूचे तामुत्सङ्गनिषेदुषीं। साश्रुनेत्रः कुमारः प्राह—प्रिये! सर्वं भव्यं तव मिलनादभूत् । परं मम मित्रं परं गतं विधेः पार्श्वे पश्चान्नागतं तद् दुनोति मामत्यन्तम् । परार्थकर्मठेनाद्य, मठेन

गुणसम्पदाम् । मित्रेण रहिता जज्ञे, भूरियं मे तमोमयी ॥१॥ ऋषिदत्ता विहस्याह, मा विषीदावधारय । देव! सर्वमिदं सर्वमौपधीललितं मम ॥ २ ॥ किंच–तं वरं प्रयच्छ मह्यं यस्त्वया वरः प्रतिश्रुतः पूर्वतः, प्रसीद त्वं, पश्य दयितां रुक्मिणीं मामिव। दध्याविति कुमारोऽपि श्रुत्वा तद्भारतीं तदेति । विरोधिन्यां रुक्मिण्यामपि अस्या मनोवृत्तिः कृपावती । स्त्रीस्वभावेन वक्रा भवेदियं तु कल्पवल्लीव सर्वहितकारिणीति ध्यात्वा कुमारस्तदा मुदाऽऽचष्ट–विवेकिनि! त्वद्वचः प्रमाणं भवतु। परं तव रुक्मिण्या अन्तरं महद् दृश्यते!। यतः–"यथा चित्तं तथा वाचो, यथा वा० ॥१॥" रुक्मिणी तदा मानिता तेन भर्त्रा । ततस्ताभ्यां प्रियाभ्यां युक्तः कुमारः काबेरीपतिं सुन्दरपाणिभूपमापृच्छ्य चचाल स्वपुरं प्रति। वर्त्मनि स्थाने स्थाने जिनेन्द्रान्नमन् कुमारः सम्मुखमभ्येतस्य पितुः पादौ प्रणनाम । भक्त्या पादानतं पुत्रमुत्थाप्य परिरभ्य च वक्षसा चुचुम्बे शिरसि राजा। पुरं पुरपुरन्ध्रीभिः, कृतवन्दनमालिकम् । नृपः प्रावेशयन्मोदाद्वधूयुगयुतं सुतम् ॥ १ ॥ ऋषिदत्तां सतीं निर्दोषां पुत्राच्छ्रुत्वा विषादमानयत् राजा । स्वयमुत्थाय तां क्षमयामास। ततो हेमरथो राजा समुत्पन्नवैराग्यः कनकरथपुत्रं स्वराज्ये निवेश्य श्रीभद्राकरसूरिपार्श्वे दीक्षां जग्राह । क्रमान्नानाविधतपःपरः क्षीणसर्वकर्मा मुक्तिं ययौ । अथ न्यायेन कनक-

रथभूपः पृथ्वीं प्रशशास । क्रमात् ऋषिदत्ता सिंहस्वप्नसूचितं पुत्रं प्रासूत । जन्मोत्सवं राजा कृत्वा तस्य सूनोः सिंहरथ इति नाम ददौ । ऋषिदत्तान्वितो भूपोऽन्यदा वातायनस्थितो व्योम्नि प्रसृतमम्बुवाहं ददर्श । तदाऽकस्मात् प्रचण्डपवनोद्धूतं तदभ्रवृन्दं क्षणाद्विशरारुतां निनाय । मिलितं गलितं वापि, घनवृन्दमुदीक्ष्य तत् । चिन्तयामास वैराग्यवानिदं मेदिनीपतिः ॥ १ ॥ दृष्टनष्टमिदं यादृग्, घनाघनकदम्बकम् । संसृतौ तादृगेवायुर्विभवादि चलाचलम् ॥२॥ ततो भूपः संसारमनित्यं भावयामास । तथा हि भूपालोऽपि ऋषिदत्तया सह विरागवान् धर्मवार्ताभिरपनयन्निशाम् । प्रातःकृत्यं राजा विधाय यावदास्थानसभामलञ्चकार तावदारामिकेनाभ्येत्य प्रोचे–"यथा चित्तं तथा वाचो, यथा वाचस्तथा क्रियाः । धन्यास्ते त्रितये येषां, विसंवादो न विद्यते ॥ १ ॥" सद्भिः संसेव्यमानोऽपि, शान्तिवाक्यैर्जलैरिव । घृष्टपाषाणवद्दुष्टः, स्वभावं नैव मुञ्चति ! ॥ १ ॥ नाथ ! भद्रयशाः सूरिरुद्याने कुसुमाकरे । आगत्य सपरीवारः, शमवान् समवासरत् ॥ २ ॥ इत्याकर्ण्य पारितोषिकं तस्मै दत्त्वा राजा सपरिवारो गुरुं नमस्कर्तुं ययौ। प्रणम्य गुरुं राजा धर्मं श्रोतुमुपाविशत्। धर्मोपदेशोऽत्र। देशनान्ते ऋषिदत्ता कृताञ्जलिरवादीत्–भगवन्! मया पूर्वजन्मनि किं कर्म निर्मितम् ? । राक्षसीति ममालीककलङ्को यद-

जायत । ततो गुरुरुवाच—गङ्गापुरं पुरं भारतखण्डभूषणमासीत् । तत्र गङ्गदत्तभूपो भूरिविक्रमोऽभवत् । तस्य प्रिया गङ्गाऽभूत् । क्रमाच्च तयोः पुत्री गङ्गसेनाऽजनि । सा क्रमाच्छीलशालिनी बभूव । तत्रैवासीत् पुरे चन्द्रयशाः साध्वी । तस्याः पार्श्वे धर्मं प्रपेदे गङ्गसेना । ततो व्रतं गृहीत्वा जगदेकसहोदरे धर्मेऽभवत्तस्या मतिः । तदा तस्याश्चन्द्रयशसः प्रवर्तिन्याः पदान्तिके निःसङ्गयतिनीं निःसङ्गाभिधां तापसीं तीव्रतरं तपः तपस्यंतीं नमस्यन्तीं जिनान् स्तोत्रपरां वीक्ष्य तां निःसङ्गां यतिनीं अपरसाध्वीभिर्वर्ण्यमानां गङ्गसेना न सहते । तदा गङ्गसेना जगादेति । यदियं दम्भिनी सङ्गा, तपस्यति दिवा तपः । राक्षसीव पुना रात्रौ, ग्रसते मृतकामिषम् ॥ १ ॥ अभ्याख्यानमिदं साक्षात्, प्रशमामृतदीर्घिका । तितिक्षामास साऽसङ्गा, भवभङ्गाभिधावती ॥ २ ॥ वत्सेऽतुच्छस्त्वया कर्मवन्धः शमनिपूदनः । उपार्ज्यत पुनर्मिथ्यादुष्कृतादानतस्ततः ॥ ३ ॥ तत्कर्मानालोच्य तद्विपाकवशाद् भ्रान्त्वा भवं वहुं गङ्गसेना गङ्गापुरे राजसुताऽभवत् । तत्र श्रीमुनिसुव्रतजिनसेवया विकटं तपः कुर्वाणा मृता सुता कपटपापवशात् पर्यन्ते पापमनालोच्येशानेन्द्रकलत्रतां प्राप सा । ततश्च्युता हरिषेणमहीपतेः प्रीतिमतीकुक्षिभवा ऋषिदत्ता सा त्वमभूः । प्राचीनकर्मपरमाणुमहोदयेन भद्रे ! तवाभवदयं विपुलः कलङ्कः । दुष्कर्म

शर्मभिदुरमतिदुरन्तमेव तत्। न क्षीयते भवशतैरपि देहभृतां खलु ॥ १ ॥ इति गुरोर्मुखादाकर्ण्य ऋषिदत्ता जातिस्मृतिं प्राप्य च पश्चाद्भवं सर्वमैक्षत। तदाकर्ण्य भूपालोऽपि विशेषतो वैराग्यवासितमनाः साक्षाद्गुरुं दीक्षामयाचत। ऋषिदत्ताऽपि वैराग्यवती गुरुमजिज्ञपत्। एतदेव पुरा कर्म्म, मयाऽऽत्तं पृथुवेपथु ॥ १ ॥ अहमपि दीक्षां जिघृक्षुरस्मि। ततो गुरुरुवाच। विलम्बो न युज्यते। असारेऽत्र संसारे सारेयं हि तपःक्रिया। अथ तौ दम्पती स्वं पुत्रं सिंहरथं राज्येऽभिषिच्य दीक्षां जगृहतुः। तत्र श्रीशीतलतीर्थेशजन्मपवित्रीकृते तपश्चक्राते। –"तपोहुताशे किल कर्मजालं, पलालपूलप्रतिमं विधाय। अवापतुस्तत्र पुरे गरीयः, सत्केवलज्ञानमतिप्रकाशम्! ॥ १ ॥" इति ऋषिदत्ताकथा समाप्ता ॥ १२ ॥



पद्मावतीकथा तु उदयनभूपकथायां ज्ञातव्या ॥ १३ ॥

**शुद्धशीलप्रभावेण, लब्धामप्यापदं भृशम्। अञ्जनासुन्दरीवेह, लङ्घयन्ति जनाः क्षणात् ॥ १ ॥**



आदित्यनगरे प्रह्लादनभूपो विद्याभृत्। केतुमती प्रिया। तत्कुक्षिसमुद्भूतः पवनञ्जयो नाम सुतो। बह्वीर्विद्याः साधयामास। माहेन्द्रपुरे महेन्द्रराजाऽभूत्। हृदयसुन्दरी प्रिया। अञ्जनासुन्दरी पुत्री। वर्द्धमाना क्रमात् प्राप्तयौवना-

ऽञ्जनासुन्दरी पवनञ्जयाय दत्ता महोत्सवपूर्वकं। केनाप्यवलेपेन स पवनञ्जयः (गृहीतः) तां सतीधुरंधरां मनसाऽपि पवनञ्जयो न सम्भावयामास। कायस्पर्शविषये किं कथ्यते ?। ततोऽञ्जनासुन्दरी दुःखेन कालमवाहयत्। इतो रावणस्य दूतः प्रल्हादस्य पार्श्वेऽभ्येत्य प्राह—यादोनाथं जेतुं रावणो गमिष्यति। तेन त्वामाकारयति तत्र। ततः पवनञ्जयो रावण-पार्श्वे गन्तुकामो मातरं नन्तुं गतः। तत्र मातरं नमन् भक्त्या प्रियामप्यपश्यत्। कांतां पादनतामप्यवज्ञाय पवनञ्जयः ससैन्यो व्योममार्गेण सरसीतीरे गत्वोवास रात्रौ। तत्र तां वियोगार्तचक्रवाकीं चक्रवाकवियुक्तां रुदतीं वीक्ष्य पवनञ्जयः स्वां प्रियां सस्मार। तदैव मित्रेण प्रहसितेन सह तत्र गत्वा कामविह्वलामञ्जनासुन्दरीं भोगदानेन सुखिनीं चकार। प्रातः पतिर्गच्छन्नञ्जनसुन्दर्योक्तः—त्वमद्यात्रागतोऽसि। मम गर्भो ववृधे। अथ निजां मुद्राम-भिज्ञाननिमित्तं तस्यै च दत्त्वा प्राह—मा भैषीस्त्वं। अहं वैरिणं जित्वा यावत्पश्चादायामि तावत् सुखं तिष्ठ। ततः पवनञ्जयः शिबिरे गतः। पवनञ्जयश्चचालाग्रतः। इतस्तस्या गर्भो ववृधे। अथाऽञ्जनासुन्दरीं सगर्भां दृष्ट्वा श्वश्रूः साधिक्षेपमदोऽवदत्। हे हले! किमिदमुदरवृद्धिस्वरूपं कुलकलङ्ककारि कृतं त्वया देशान्तरगते पत्यौ। ततो रुदती अञ्जना पतिदत्तां मुद्रिकां दर्शयन्ती तस्यै पतिप्राप्तिसमुत्पन्नगर्भस्वरूपं दर्शयामास।

ततोऽपि क्रुद्धा श्वश्रूः प्राह–स्नुषे! किमीदृशमकार्यं कृत्वा स्वचित्तकल्पितमुत्तरं मदग्रे विधत्से?। तदेवं वचो न ते प्रत्येमि। इत्यादि कर्कशं वदन्ती श्वश्रूस्तलारनरैश्च रथमारोप्य तां माहेन्द्रपुरोपान्ते विसर्जयामास। ततोऽञ्जनासुन्दरी पितृगृहं गता। पिताऽपि माताऽपि च सदोषां पुत्रीं मन्यमानौ निजालयाद्वसन्ततिलकादासीयुतां तदैव निरवासयताम्। पितृग्रामेषु पितृनिर्देशात् प्रवेशमलभमानाऽञ्जनासुन्दरी अरण्यं गता। यतः–"स्फुरन्त्युपायाः शान्त्यर्थमनुकूले० ॥ १ ॥" तिष्ठन्ती दुःखेनान्यदा यतिमेकं तपस्विनं वीक्ष्यानंसीत्। ततस्तत्र धर्मोपदेशमाकर्ण्याञ्जनासुन्दरीप्रेरिता सखी प्राह–भगवन्! अनया किं कर्म कृतं येनास्याः कलङ्क ईदृशो लग्नः?। ततो मुनिर्जगौ–देवलोकात् प्रच्युतोऽस्या गर्भेऽवतीर्णोऽस्ति जीवः। स जातः सन् मुक्तिगामी भविष्यति। अन्यच्च श्रूयताम्–पूर्वं कस्मिंश्चित् पुरे कनकरथराज्ञः उभे पत्न्यौ लक्ष्मीवतीकनकोदर्यौ परमार्हत्यौ अभूताम्। तस्या लक्ष्मीवत्या अर्हदर्चां कुर्वत्या जैनीं प्रतिमां हृत्वाऽन्यदा सापत्न्यात् कनकोदरी रहो मुमोच। प्रतिमां गतां ज्ञात्वा दुःखिन्यभूत् लक्ष्मीवती। कनकोदरी साध्वीपार्श्वे जिनप्रतिमाहरणपापमाकर्ण्य पश्चात् स्वस्थानके च मुमोच प्रतिमाम्। ततः प्रान्ते धर्मावबोधात् सा कनकोदरी स्वर्गे देव्यभूत् ॥ ततश्च्युता सा कनकोदरी देवी अञ्जना-

सुन्दरी तव सखी जाता । पूर्वभवार्हत्प्रतिमाहरणपापादिदानीमार्तिभागभूदेषा । भुक्तप्रायं कर्मास्या बभूव । अधुना विशेषात् पुण्यं कुरु । ततोऽञ्जनासुन्दरी स्वपूर्वभवकृतं कर्म तत्प्रतिमाहरणं श्रुत्वा धर्मकर्मणि सादराऽभूत् । यतः—"धर्मश्चिन्तामणिः श्रेष्ठः० ॥ १ ॥" तत्रस्था सा कतिभिर्दिनैः कन्दरायां पुत्रमसूताऽञ्जनासुन्दरी । क्रमाच्चां रुदतीं वीक्ष्य प्रतिसूर्यखेचरस्तत्रागतः संस्तां भागिनेयीमितिकृत्वा तामादाय स चचाल व्योम्नि। विमाने वेगतो याति जनन्युत्सङ्गतोऽर्भकोऽपतत् । स बालः पर्वतशिखरात् पतन् शीलां चूर्णीचकार । प्रतिसूर्यो वेगेन बालमादायाक्षताङ्गं भगिन्यै ददौ । प्राह च पर्वतस्य चूर्णीभवनस्वरूपम् । प्रतिरूपस्तं निजे द्रङ्गे हनुरुद्राभिधे निनाय । जातमात्रोऽयं बालो हनुरुद्रे समागादिति हनुमानिति नाम दत्तं मातुलेन । क्रमाद्वृद्धिं प्राप । इतश्च सान्निध्यं कृत्वा स्वपुरमागात् पवनञ्जयः । श्रुत्वा प्रियागमनादिवृत्तान्तं श्वशुरौकसि गतः पवनञ्जयः । ततस्तां तत्राप्यवीक्ष्य वनाद्वनं बभ्राम । पवनञ्जयः शोकाकुलः तां न प्रियामपश्यत् । पवनञ्जयो मित्रं प्रहसितं प्रेष्य नतिपूर्वं निजमृतिकरणस्वरूपं ज्ञापयामास । सोऽपि नतिपूर्वं प्रल्हादाय । प्रल्हादोऽथ पुत्रस्य स्वरूपं तच्छ्रुत्वा दुःखितस्तत्क्षणादेवोत्थाय विद्याधरैः सह अञ्जनासुन्दरीं वीक्षितुं चचाल ।

प्रल्हादो भ्रमन् वने स्वं पुत्रं प्रियावियोगिनं वह्नौ प्रविशन्तं वीक्ष्य प्राह—भोः पुत्र! मा कुरु त्वमिदं बालमरणम् । अस्मान्मरणात् दुर्गतौ पातः स्यात् ।—"रज्जुग्गह विसभक्खण, जलजलणपवेस तिण्हछुहदुहिओ । गिरिसिरवडणा उ मुआ, सुहभावा हुंति वंतरिआ ॥ १ ॥" ततोऽकस्मात् पवनञ्जयं मरणं कुर्वाणं प्रियावियोगाच्छुत्वा प्रतिसूर्यखेचरोऽञ्जनासुन्दरीयुतस्तत्रागात् । ततः सर्वेऽपि हृष्टाः । प्रतिसूर्योपरोधतः प्रल्हादपवनादयो हृष्टा हनुरुद्रपुरमागुः । ततः सर्वेऽपि स्वं स्वं पुरं जग्मुः खगाः । पवनाञ्जने पुत्रेण सह तत्र तस्थतुः । हनुमानथ तत्रस्थो ववृधे । जनहर्षदोऽभूत् । कलाविद्या भूरिशो हनुमानग्रहीत् । वरुणस्य सङ्ग्रामे हनुमद्बलं दृष्ट्वा हृष्टो दशास्यस्तस्य प्रसादं सच्च (महान्तं च) क्रे । ततः पवनञ्जयोऽञ्जनासुन्दरीहनुमत्पुत्रयुतः स्वपुरं समेत्य मातापितरौ ननाम । अत्रान्तरे सीतापहारात् हनुमान् श्रीरामस्य मिलितः । तत्र रामस्य सीतावालनाऽवसरे सर्वबलेन हनुमान् सान्निध्यं चकार यत्तत्सर्वं विदितमेवास्ति । देवाज्ञापय किं करोमि ? किमहं लङ्कामिहैवानये ?, जम्बूद्वीपमिहानये किमथवा ? वारांनिधिं शोषये ? । हेलोत्पाटितविन्ध्यमन्दरहिमस्वर्णत्रिकूटाचलं, पक्षक्षेपविवर्धमानसलिलं बध्नामि वारांनिधिम् ? ॥ १ ॥ पातालतः किमु सुधारसमानयामि ?, निष्पीड्य चन्द्रममृतं किमु वाऽऽनयामि ? । उद्यन्त-

मुष्णकिरणं किमु वारयामि ?, कीनाशमाशु कणशः किमु चूर्णयामि ? ॥ २ ॥ इत्यादि जल्पनं हनुमतो ज्ञातव्यं बहुशः । ततः पवनञ्जयः स्वपुत्राय हनुमते राज्यं दत्त्वा दीक्षां गृहीत्वा सर्वकर्मक्षयं कृत्वा मुक्तिं गतः । अञ्जनासुन्दर्यपि मुनिचन्द्रसूरिपार्श्वे संयमग्रहणात् क्षीणकर्मणी मुक्तिं गता । हनुमानपि चिरकालं पृथिवीं पालयन् श्रीशत्रुञ्जयादितीर्थेषु यात्रां चकार । पुनः स्वपुत्रं राज्ये निवेश्य श्रीदेवसूरिगुरुपार्श्वे दीक्षां जग्राह हनुमान् । क्रमादुग्रमहातपः कुर्वाणः शत्रुञ्जये गतः । तत्र केवलज्ञानमवाप्य मुक्तिं ययौ हनुमान् । इति अञ्जनासुन्दरीकथा समाप्ता ॥१४॥

अत्र केनापि हेतुना सिरिदेवीकहा नत्थि ॥ १५ ॥

**मनसा वचसाऽङ्गेन, शुद्धं शीलं प्रपालयेत् । ज्येष्ठेव लभते प्राणी, कल्याणसुखसम्पदम् ॥ १ ॥**

तथाहि—कुण्डग्रामे सिद्धार्थभूपतिर्न्यायाध्वना पृथ्वीं पालयामास । तस्य प्रिया त्रिशलाह्वा राज्ञी सच्छीलशालिनी बभूव । तयोः सत्स्वप्नसूचितः शुभे वासरे पुत्रोऽभवत् । तस्य जन्मोत्सवं कृत्वा नन्दिवर्द्धन इति नाम दत्तम् । क्रमाद्वर्धमानः कुमारः शस्त्रशास्त्रकलाः पण्डितोपान्ते पाठितः । इतः कालान्तरे चतुर्दशस्वप्नसूचितः पुत्रोऽजनि । त इन्द्रादिभिर्जन्ममहः कृतः । मातापितृभ्यां वर्द्धमान इति नाम दत्तम् । इतो विशालायां पुर्यां

चेटको राजा राज्यं करोति स्म । तस्य पुत्री ज्येष्ठा रूपलावण्यशालिनी बभूव । क्रमात् सर्वकलाकुशलाऽजनिष्ट । एकदा राज्ञोक्तं—भो मन्त्रिन् ! इयं कन्या कस्मै वराय दास्यते ? । तदा मन्त्रिणोक्तं—कुण्डग्रामे सिद्धार्थभूपस्य नन्दिवर्द्धनो नाम्ना कुमारोऽस्ति । सोऽस्याः कन्याया योग्योऽस्ति । ततस्तेन राज्ञा चेटकेन दूतप्रेषणादिना ज्ञापितं । मम पुत्री समस्ति, तव पुत्रोऽस्ति, द्वयोर्विवाहः क्रियते । ततोऽवमृश्य राज्ञोक्तम्—अस्तु । ततो राज्ञा चेटकेन ज्येष्ठा पुत्री नन्दिवर्द्धनाय विश्राणिता महामहपूर्वम् । ज्येष्ठा श्रीवर्द्धमानपार्श्वेऽन्येद्युर्धर्मं श्रोतुं गता । तत्र धर्मोपदेशः श्रुत इति—"धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं, धर्मेणैव भवन्ति निर्मलयशोविद्यार्थसम्पत्तयः ॥०" पद्मावत्या ज्येष्ठापराभिधया सम्यक्त्वमूलो द्वादशव्रतसमन्वितो धर्मोऽङ्गीकृतः । पद्मावती तु देवैरपि स्वशीलाच्चाल्यमाना न चलति । इति शक्रमुखात् कोऽपि देवः श्रुत्वा तां शीलाच्चालयितुं तत्राभ्येत्यापहृत्य वने मुमोच । तत्र च ज्येष्ठा स्वधर्मं कुर्वाणा मनाग् न चचाल । स च देवो भूरितुरङ्गेभपत्तिप्रभृतिमहासेनां विकुर्व्य तत्रागात्तां पद्मावतीं चालयितुम् । तत्र तस्याः पार्श्वे गत्वा प्राह—भो मृगनेत्रे ! त्वमत्रैकाकिनी वर्तसे । ममैवंविधा विभूतिरस्ति । तेन त्वं मम पत्नी भव । सुखमेकान्तिकं भविष्यति । तया तु कर्णयोरङ्गुल्यौ क्षिप्त्वा प्रोक्तम्—यदि

देवकुमारः समेति तदाऽहं स्वयमङ्गीकृतं पतिं मुक्त्वा नान्यमङ्गीकरोमि। ततो राज्ञोक्तं—त्वमेकाकिनी वनेऽत्रासि। अहन्तु यदि बलादपि त्वामङ्गीकरिष्यामि तदा त्वया किं करिष्यते ?। पद्मावत्योक्तं—यदि समधिकं करिष्यसि तदाऽहमात्महत्यां तुभ्यं दास्यामि। एवं बहुशोऽपि तेन जल्पितेन यदा सा पद्मावती न चचाल, तदा स देवः प्रादुर्भूय प्राह—त्वं धन्यासि कृतपुण्यासि सतीतमासि। इत्युक्त्वा तस्याः स्तुतिं कृत्वा देवः कुण्डलद्वयं वितीर्य स्वस्थाने मुमोच। देवो भूपाग्रे वदति—भूप! तवेयं पत्नी महासती। मया चालिताऽपि न चलिता शीलात्। ततो देवः स्वर्गे गतः। क्रमात् पद्मावती श्रीवर्द्धमानस्वामिपार्श्वे दीक्षां गृहीत्वा सर्वकर्मक्षयान्मुक्तिं गता। इति ज्येष्ठाकथा समाप्ता ॥ १६ ॥

**जिननाथोदितं धर्मं, कुर्वाणो भावतोऽनिशम्। सुज्येष्ठेवाक्षयं स्थानं, भवति (लभते) भविको जनः॥१॥**

तथाहि—विशालायां पुरि चेटको राजा राज्यं कुरुते स्म। तस्य द्वे सुते मिथः प्रीतिस्यूते सुज्येष्ठाचिल्लणे बभूवतुः। प्रपञ्चेन चिल्लणा श्रेणिकेन परिणीता। सुज्येष्ठा तु चिल्लणाविरहाद्विरागवत्यभूत्। सुज्येष्ठा श्रीचन्दनाया अन्तिके व्रतं जग्राह। तीव्रतपःपरा सुज्येष्ठा बभूव। अन्तर्वसति गुप्तेव, कदाचित्तपनातपे। आतापनां प्रतायन्ती, जिनातां तनुते स्म सा ॥ १ ॥ इतश्च नाम्ना पेढालः, परिव्राडेति खेचरः। सिद्धोऽनवद्यविद्यानां, न्यासपात्रं

समीहते ॥ २ ॥ परिव्राणितलीनाया, निष्कामाया य आत्मजः । जातो ब्रह्मविदः स स्याद्विद्यानां पात्रमुत्तमम् ॥ ३ ॥ ततः पेढालेन विद्याभृताऽन्यदा विमानारूढेन गच्छता साध्वी तपः कुर्वती दृष्टा । तां पश्यन् मोहितः खगः। स च विद्याभृत् मधुकरं विकुर्व्य तस्याः साध्व्या आतापनां कुर्वत्या योनौ भ्रमररूपेण स्ववीर्यमक्षिपत्। क्रमेण सुज्येष्ठाया गर्भः साध्वीभिर्ज्ञातः। हक्किता सा ताभिः—रे पापिष्ठे ! त्वमेवंविधं कार्यं किं कृतवती ?। तया प्रोचे—भो महासति ! मया कुत्रापि मनसाऽपि शीलं न खण्डितम्। शरीरं पश्चात्तिष्ठतु । ततस्ताभिर्ज्ञानी पृष्टः। भगवन्नियं सती अथवा असती ?। तेन ज्ञानिनोक्तम्—इयं साध्वी सर्वासु सतीषु मुख्याऽस्ति। अस्या योनौ विद्याधरेण स्वं वीर्यं रहसि क्षिप्तम्। अनया तु न ज्ञातम्। ततः सुज्येष्ठया पुत्रोऽसावि । स तु बालः श्राद्धालये वर्द्धितः। सत्यकिरिति नाम जातम्। स सत्यकिः साध्वीभिः सहैकदा श्रीवीरजिनपार्श्वे गतः। साध्वीभिः प्रभुर्नतः। तदा कालसंदीपनामा खेटकस्तत्र समवसरणे प्रभुं पृष्टवान्—भगवन्! को मां हन्ता भविष्यति?। प्रभुणोक्तम्—इतः सत्यकितो मृत्युस्ते भविष्यति। ततः स कालसंदीपो मनसि दध्यौ—अहो कौतुकं, मामेष बालो हनिष्यति । स बाल आर्याभिर्लालितो धीमानेकादशाङ्गानि कर्णश्रुत्यैवाध्यगात् । तीव्रप्राग्जन्मसंस्कारात् स

वालो विद्या अनेकशोऽतीवानर्घ्या असरत्। प्रसद्य प्रसन्ना देवतास्तं प्रति प्रोचुः। त्वं रोहिणीं केवलां साधय। तस्यां सिद्धायां रोहिण्यां वयं सिद्धा भविष्यामस्तव । तां रोहिणीं साधयतस्तव सप्तमो भवः । तया विद्यया त्वं पातकीतिकृत्वा पञ्चसु जन्मसु हतः। षष्ठे तु भवे षण्मासशेषायुषि सति रोहिणी तुष्टाऽभूत्त्वयि । तदा त्वया स्वल्पायुष्कत्वान्नाङ्गीकृता । तेनास्मिन् भवे तव प्रसन्ना भविष्यति रोहिणी सद्यो विघ्नापहारिणी । ततोऽसौ सत्यकिरूर्ध्वमुखस्तपस्तपति । विद्यासाधनार्थमुच्चैश्चितां निष्पाद्य देहदाहार्थं वह्निं लात्वा चितामध्यस्थ एवं प्राह–अहमस्यां चितायां प्रविश्य ज्वलिष्यामि रोहिणी विद्यासाधनार्थं, तेन सिध्यतु सा विद्या ममेति प्राह। ततो हुतवह्निना जाज्वल्यमानायां संचरन् सत्यकिरङ्गुष्ठेन विद्यां स्मरंश्च मन्त्रं पुनः पुनर्जपति स्म । तदा समेत्य कालसंदीपस्तां चितां भूरिकाष्ठभरैर्बभार तथा यथाऽसौ भस्मसाद्भवति । एवं तस्य कालसंदीपस्य विघ्नं कुर्वतः सप्तमे दिने प्रत्यक्षीभूय देवता तं विघ्नकारकं न्यवारयत् । तं सत्यकिं प्रति देवता रोहिणी प्राह–यच्छ त्वं प्रतीकमेकं मे येन प्रतीकेन तवाङ्गं प्रविशामि । ततः सत्यकिना स्वं भालं दत्तम् । ततः सा रोहिणी भालेन कृत्वा तस्य सत्यकेर्देहं प्रविवेश । ततस्तदा तस्य तृतीयं नेत्रमभूत् । असौ त्रिनेत्र इति ख्याति-

मगात् । मातुर्मे ब्रह्मनिष्ठाया अनेन पेढालेन ब्रह्मविप्लवेन कलङ्को विदधे इति ध्यात्वा सत्यकिः पेढालं हतवान् । ततः सत्यकिर्विद्यया बलिष्ठः स कालसंदीपं हन्तुं बम्भ्रमीति सदा । ततः कालसंदीपो बिभ्यत् पुरत्रयं दृढं कृत्वा स्वयं तन्मध्येऽस्थात् । तच्च पुरत्रयं सत्यकिर्भस्मसाच्चक्रे । पलायमानो वारिधेरंतः प्रविश्य स्थितः कालसंदीपः । सत्यकिना हतो नरके जगाम । तत्र क्रमात् सत्यकिः विद्याबलादनेकासु तपस्विपत्नीषु भोगान् भुङ्क्ते स्म । यः कश्चित्तेन सह विरोधं करोति तमग्निना भस्मीकरोति सत्यकिः । स्त्रीलम्पटः सत्यकिर्विद्याबलाद्यां यां वर्यां स्त्रीं पश्यति तां तां भुङ्क्ते स्म । ततो भिक्षुवेषभृत् विश्वं भ्रमति स्म । पुष्पकेतनविमानं विद्यया निष्पाद्य तदारूढो व्योम्नि चचाल । नन्दीनन्दीकेशनामानौ मित्रे द्वे तस्याभूताम् । अथ उज्जयिनीशस्य प्रद्योतनस्य भूपस्य शिवां प्रियां मुक्त्वा सर्वाः प्रिया भुङ्क्ते स्म सत्यकिः । ततस्तं सत्यकिं स्त्रीलम्पटं विज्ञाय राजा तस्य वधाय पृथक् पृथग् जनान् पप्रच्छ । उमानाम्नी गणिका सत्यकिवधाय बीटकं जग्राह । अहं तस्य हननविषये मर्म विलोकयामि इत्युक्त्वा गवाक्षे तस्थौ । तामुमां रूपवतीं दृष्ट्वा सत्यकिः कामयामास । पुष्पकविमानाधिरूढां तां कृत्वा सत्यकिश्चचाल । तया सह भोगान् भुङ्क्ते । सा बाणान् पञ्च मुञ्चति । तान् बाणान् सत्यकिर्जग्राह । तैः

पञ्चभिर्बाणैः सत्यकिर्जगद् वशीचकार। तया सह संवसतस्तस्य बहुः कालो गतः। अन्येद्युस्तं विश्वस्तं साऽपृच्छत्—तव वर्ष्मणि सदा सन्निहिता विद्याः स्युरथवा पार्श्वे कस्य (हिं) चित्?। स प्राह—सदैव यन्त्रितस्यान्ते, रतियन्त्रक्षणं विना। सदा सन्निहिताः सन्ति, सत्यमित्याह सत्यकिः ॥ १ ॥ ततः सा छन्नं प्रद्योतपार्श्वमेत्य प्राह—अयं सत्यकिर्यदा मया सह भोगं भुङ्क्ते तदा स्वां रोहिणीं विद्यां खड्गे मुञ्चति। तदा कोऽपि समेत्य तं हन्ति तदा हन्यते। अन्यथा न केनापि हन्तुं शक्यते। तदा राज्ञा एको भृत्यो गणितपत्रच्छेददक्षस्तस्य वधायादिष्टः। उक्तं च राज्ञा-तथा त्वया सत्यकिः खड्गेन हन्तव्यो यथा वेश्यासौ उमानाम्नी न हन्यते। तेन भृत्येनोक्तं—तथा मया कर्तव्यं यथा स एव हनिष्यते मया। ततः सा वेश्या सत्यकिपार्श्वे गता। यदा सत्यकिस्तया सह मैथुनं कर्तुं प्रथमं स्वां रोहिणीं विद्यां खड्गे पृथग् मुमोच। ततो यावत्तया सह भोगान् भोक्तुं लग्नः तदा स भृत्यो यावत्तं हन्तुं लग्नः तदा परैर्भटैः प्रोक्तः—तथा त्वया कर्तव्यं यथाऽसौ सन्निहितो म्रियते। तदा तेन भृत्येन सत्यकिः सप्रियो हतः। निजस्वामिनं हतं ज्ञात्वा ( पुर्युपरि शिलां कृत्वा ) नन्दीशेनोक्तं—मम स्वामी त्वया घातितस्तेनाहं त्वां स्वपुरसहितं हनिष्यामि। ततः प्रद्योतः प्राह—यत्त्वं कथयसि तदहं करिष्यामि। शिलां पश्चात्कुरु। ततो नन्दीशो जगौ—मदीयस्वामी

यादृश्यामवस्थायां हतस्तादृश्यामवस्थायां प्रासादे स्वपरिवारयुतः पूज्यते तदा मुञ्चामि । ततः प्रद्योतस्तथा चकार । ततस्तेन नन्दीशेन स्वस्वामी सर्वत्र ग्रामे ग्रामे पूजितः कारितः । ततोऽपि लोकैस्तथा पूज्यते । इतः सुज्येष्ठा महासती श्रीमहावीरजिनोपदेशान्नानाविधं तपः कुर्वाणा क्रमात्सर्वकर्मक्षयात्केवलज्ञानं प्राप्य मुक्तिं ययौ। प्रद्योतभूपस्य पत्नी शिवाऽपि श्रीवीरपार्श्वे दीक्षां लात्वा शुद्धशीला सर्वकर्मक्षयान्मुक्तिं ययौ । इति शिवाकथा-प्यत्र ज्ञेया । इति सुज्येष्ठाशिवयोः कथा समाप्ता ॥ १७ ॥

**जीवो निन्दन् स्वयं कर्म, कुत्सितं स्वान्यगर्हितम् । मृगावतीव लभते, केवलज्ञानमद्भुतम् ॥ १ ॥**

तथाहि—साकेतनाम्नि पत्तने सुरप्रियाह्वो यक्षोऽभूत् । विचित्रं रूपं तस्य यक्षस्य प्रतिवर्षं चित्र्यते । स यक्षश्चित्रितः सन् चित्रकं हन्ति । यदि न चित्र्यते स तदा ग्रामलोकं हन्ति वर्षं यावत् । ततश्चित्रकरकुलं नष्टम् । ततो राजा प्रजादुष्टमारिभीरुश्चित्रकरान् स्वभटान् प्रेष्य समीपे आनैषीत् । ततस्तेषां चित्रकराणां सर्वेषां नामानि लिखित्वा कुम्भे क्षिप्तानि । यस्य नाम निस्सरति स यात्रादिने चित्रयति यक्षं। ततस्तं चित्रकरं यक्षो हन्ति स्म । एवं काले गच्छति कोऽपि चित्रकरदारकः कौशाम्बीतः सच्चित्रकौशलसिद्धये वृद्धायाश्चित्रकर्या गृहे

समागात्। तां मातरं कृत्वा स्थितः सः। पुत्रस्य घटे नाम्नि तदाऽऽयाते कृतान्तलेख इव वृद्धा भ्रन्ती वक्षः कराघातैः स्वपुत्रपुरो रुरोदतराम्। ततश्चित्रको वैदेशिकः प्राहेति—चित्रयिष्याम्यहं यक्षं, यक्षाराधनदक्षधीः। मह्यं न ह्यन्तको माता, तत्र घातक्षमो भवेत् ॥ १ ॥ इति प्रबोध्य तां वृद्धां कृत्वा षष्ठं तपः पवित्रीभूय तस्मिन् पर्वदिने स युवा यक्षगृहे गतः। चारुचन्द्रकस्तूरीकाद्यधिवासितैर्नवैः कूर्चकैर्वेष्टयित्वा अष्टधामुखं पद्यामुखप्रदत्तसारसौरभ-मूर्तेर्यक्षस्यार्चां चित्रयामास चित्रको भक्त्या। मनोवचनकायैः संवरितात्मा चित्रको यक्षमेकाग्रचेतसा चित्रयित्वाऽग्रे भूत्वा च कृताञ्जलिराह—"मया चित्रयता त्वां यदयुक्तं विहितं मनाग्। प्रसद्यः तत्समं सद्यः, क्षमस्व त्वं ममोपरि ॥ १ ॥ त्वमेव त्रिजगज्जन्तुहितवात्सल्यकारकः। त्वयि तुष्टे जनः किं किं?, शुभं न लभते खलु ॥ २ ॥" आकर्ण्यैतत् सुरप्रिययक्षो हृष्टोऽवग्—भो चित्रक! तुष्टोऽस्मि तुभ्यं। वरं मार्गय। चित्रको जगौ—यदि तुष्टोऽसि त्वं तदाऽतः परं प्रजाघातः श्वभ्रप्रदो न कर्तव्यः। यतः—"जीवानां हिंसया जीवा, लभन्ते नरकेऽसुखम्। यो न कुर्याद्वधं जन्तोस्तस्य स्वर्गसुखं भवेत् ॥ १ ॥" इत्यादि तद्वाक्यं श्रुत्वा हृष्टो यक्षो जगाद—अतः परं जीवहिंसा मया न कर्तव्या। अयं तु वरः परोपकाराय मम हितकृते याचितस्त्वया। स्वस्मै वरं वृणीष्व।

ततः चित्रकः प्राहेति—भो! भो! यक्षपते! तात, विश्रान्तोऽस्मि (सि) तदस्तु मे। दृष्टे मयाऽङ्गदेशेऽपि, सर्वं भवतु तद्वपुः ॥ १ ॥ यक्षः प्राह—एवं भवतु । ततो हृष्टश्चित्रको यक्षं नत्वा पुरमध्ये सर्वं यक्षदत्तवरादिस्वरूपं ज्ञापयित्वा राजानं प्रमोदयामास । ततः पुरमध्ये महोत्सवोऽभूत् । ततः क्रमात् स कौशाम्बीं शतानीकभूपपालितां ययौ चित्रकृत् । राज्ञो मिलितश्च । राज्ञा स्वां चित्रशालां चित्रयितुं तस्मै दत्ता । तस्य चित्रशालां चित्रयतो नानाव्याघ्रहंसमृग-जम्बूकैणादिरूपैः एकदा मृगावत्या नृपपत्न्याश्चेटकभूपसुताया गवाक्षस्थाया जालकान्तरेण क्रमाङ्गुलिर्दृष्टिगोचरे पपात । तदा तस्य चित्रकस्य तस्य रूपं चित्रयतो यक्षदत्तवराद्यादृशं समस्ति तादृशमभूत् । ऊरौ मषीलवोऽपतत् । स चित्रकृन्मषीबिन्दुं ममार्ज । मार्जितं मषीबिन्दुं मृगावतीरूपस्योरौ पुनः पुनः पतन्तं दृष्ट्वा चित्रकृच्चिन्तयामासेति ।—निर्भाग्यस्य विपत्ताप, इवोन्मृष्टोऽपि यन्मुहुः । मषीलवोऽपतत्तस्यास्तन्मन्येऽस्तीह लाञ्छनम् ॥ १ ॥ ततस्तद्रूपं मृगावत्याश्चित्रितं वीक्ष्य हृष्टोऽपि भूप ऊरुबिन्दुदर्शनात् क्रुद्धोऽभूत्तस्मिन् चित्रकरे । दध्यौ च भूपः—एष पापमानवोऽस्ति । अनेन मृगावती विप्लुतैव । इहोरौ संस्थायी बिन्दुरित्यन्यथा कथं जानात्येषः ? । ततो रुष्टो राजा चित्रकारं हन्तुमादिष्टवान् । तदा चित्रकारास्तत्रैत्य प्रोचुः—स्वामिन्! अस्य यक्षदत्तः प्रसादोऽस्ति । तेनै-

वंविधं रूपं लिखितमनेन। असौ निर्दोषोऽस्ति। तदभिज्ञानाय कुब्जिकाया दास्या मुखे दर्शिते तस्या यथास्थितं रूपं लिखितं चित्रे तेन। तथापि राजा रुष्टः सन् तस्याङ्गुलीमेकां छिन्नवान्। ततश्चित्रकरोऽमर्षरसोत्कर्षी चिन्तयामासेति–राजानं धिगस्तु। येनाहं मुधा प्रापितोऽवस्थामीदृशीम्। तथा कुर्वे यथाऽस्या राज्ञा सह वियोगं कारयिष्यामि। इति विचिन्त्य मृगावत्या रूपं पटलिखितं विधायावन्त्यां गत्वा चण्डप्रद्योताय तद्वैरिणे दर्शयामास। स तद्रूपं चित्रलिखितं वीक्ष्य चमत्कृतो राजा मस्तकं धूनयन्नाह–कस्या रूपमिदम्?। तेनोक्तं–शतानीकभूपस्य पत्न्या मृगावत्याः। ग्राह्या शक्त्या बलेन मयाऽसाविति दध्यौ चण्डप्रद्योतः। ततो वज्रजङ्घाख्यं दूतं मृगावत्या याचनाय शतानीकभूपपार्श्वे प्रेषयामास। तत्र गत्वा दूतो जगौ–चण्डप्रद्योतो मृगावतीं याचते। त्वां प्रत्येवं प्राह च–त्रपुणीव मणिर्नैवं, त्वय्याभाति मृगावती। साऽस्मभ्यं प्रेष्यतां नांघ्रौ, मौलिर्मौलौ हि युज्यते ॥ १ ॥ जीवितव्यं च राज्यं च, प्रेष्य रक्ष मृगावतीम्। सर्वनाशोऽंशनाशेन, रक्षणीयो विचक्षणैः ॥ २ ॥ त्यजेदेकं कुलस्यार्थे० ॥ ३ ॥ ततो रुष्टः शतानीको जगौ–मद्गिरा जल्प त्वं गत्वा स्वस्वाम्यन्तिके इति–त्रपुणीव मणिर्नैव, त्वयि भाति मृगावती। इहास्तु तदियं नांघ्रौ, मौलिर्मौलौ हि युज्यते ॥ १ ॥ राज्यं च जीवितव्यं

च, रक्ष्यं प्रेष्य वरं धनम् । सर्वनाशोऽंशनाशेन, रक्षणीयो विचक्षणैः ॥ २ ॥ ततः स दूतोऽभ्येत्य चण्डप्रद्योतं प्रति प्राह शतानीकोक्तम् । ततश्चण्डश्चतुर्दशनृपान्वितोऽह्नाय प्रयाणं चक्रे । ग्रीष्मरविरिव शोषयन् जलाशयान् प्रचण्डपवन इव धूल्या नभश्छादयन् चण्डप्रद्योतः प्रतस्थे मार्गे । तमायान्तं चण्डं श्रुत्वा सन्नह्य सर्वसैन्यं स्थितः । कियतीं वेलां युद्धं कृत्वा शतानीको वैरिसेनां बह्वीं विलोक्याकस्मादतीसारान्मृतिं गतः । प्रियं मृतं मत्वा मृगावती दध्यौ–सूनुर्मे बालोऽस्ति, वैरिषु तु बलवान् भर्ता परलोकं गतः । तेन छलेन स्वशीलं रक्षणीयं मया । भर्तुः प्रेतकर्म कृत्वा दूतं शिक्षयित्वा मृगावती चण्डपार्श्वेऽप्रैषीत् । चण्डपार्श्वे गत्वाऽवग् दूतो मृगावत्योक्तमिति–मृगावती वक्ति–भर्ता मम मृतः, पुत्रस्तूदयनो लघुरस्ति । तस्य राज्यं भवति तदा मया त्वद्वाञ्छा पूर्यते । अधुना तु भर्तृशोकोऽस्ति । प्रथमममुं वप्रं सज्जं कारय । धनधान्यादिभिर्भर । मम पुत्रो राज्ययोग्यो भवति । ततोऽहं सुस्थिता पुत्रमत्र मुक्त्वा तव पार्श्वे समेष्यामि । यदि त्वं मयि बलात्कारं करिष्यसि तदाऽहमात्महत्यां करिष्यामि । यथा तथा तु त्वया राज्यं ग्रहीतुं दुःशकमस्ति । इत्थं त्वावयोः समाधिर्भवति । अत्र द्विषो बहवः समीपे सन्ति बलिष्ठाः । अधुना पश्चाद्गच्छ । ततश्चण्डप्रद्योतो हृष्टः स्वपुरमेत्य चतुर्दशभूपैः सह अवन्तीकौशाम्ब्योरन्तरे पुरुषमात्रे भूतले पुरु-

पान्निवेश्य हस्ताद्धस्तमिष्टिकानिचयैस्तूर्णमानीतैर्वप्रं कारयामास । तदा मृगावत्या ज्ञापितम्—अहं न त्वां मनसाऽपीच्छामि, कायस्तु दूरे तिष्ठतु । मया तु शीलरक्षायै प्रपञ्चोऽयं वप्रकरणरूपः कृतः । ततः क्रुद्धः प्रद्योतः सन्नह्य सर्वां सेनां चचाल कौशाम्बीं प्रति । कौशाम्बीसमीपे गत्वा चण्डेन ज्ञापितम्—भो मृगावति! यदि त्वमात्मनश्चात्मपुत्रस्य हितं वाञ्छसि तदाऽत्रागच्छ, नो चेत्सर्वं राज्यादि गतमेव तव । इतः श्रीवीरजिनः सर्वज्ञस्तच्छीलमाहात्म्यकर्षितस्तत्रागत्य समवासार्षीत् । मृगावती प्रभुमागतं ज्ञात्वा पुरद्वारमुद्घाट्य श्रीवर्द्धमानं नन्तुं समवसरणे गता । देवा अनेके तत्रागताः । प्रभोरनुभावाद्वैरं मुक्त्वा चण्डप्रद्योतोऽपि श्रीवीरं प्रणम्य धर्मं श्रोतुमुपविष्टः! । प्रभुणा धर्मदेशना विदधे । इतः कोऽपि तदा नाथं तत्राभ्येत्य हृदयेगूढं स्वमीहितं दधानः प्रभोः पुरः स्थितः । प्रभुणोक्तं—पृच्छतु भवान् । स जगौ धन्वी—भगवन्! या सा सा सेति? । तदा प्रभुणोक्तं—भो धन्विन्! या सा सा सैव । तदा गौतमः प्रपच्छ. भगवन्! कः प्रश्नोऽयं कृतोऽनेन? । अस्य प्रत्युत्तरं विस्तरात् कथय । भगवानाह—चम्पापुर्यामेकः स्वर्णकारो धनी । यां यां कन्यां विलोकते स्म ततो ततो धनदानेन व्युवाह सः । क्रमात् पञ्चशती कन्यानामभूत् तस्य गृहे । सर्वासां प्रत्येकमाभरणादीनि भूषणानि कारयामास ।

यस्या वारो यस्मिन् दिने भवति सा शृङ्गारं करोति। नान्या। इतः कस्मिंश्चित् कार्ये स्वर्णकारे गते सर्वाः शृङ्गारं चक्रुः। तदा ताः कृतशृङ्गारा दृष्ट्वा स स्वर्णकृद् द्विष्टस्तास्तास्ताडयामास। ततस्तासां रक्षार्थं द्वारे एव तिष्ठति स्वर्णकृत्। स कदाऽपि निजे गृहे किमपि मित्रं न भोजयति। स्वयं कस्यापि गृहे न याति। ताः सर्वाः कारागार इव स्वगृहे स्थिताः स्वं स्वं मन्यन्ते। एकदा बलात् केनापि सुहृदा स्वगृहे भोजयितुं स्वर्णकृन्निमन्त्रितः गतः। ताः सर्वा हृष्टाः। कृतस्नानलेपमण्डनाः पश्यन्त्यो दर्पणेषु स्वं स्वं मुखं तस्थुः। तदाऽकस्मात् स्वर्णकृत् तत्रागात्। भार्यास्ताः तथाविधा वीक्ष्य एकां तावत् क्रुधा हन्तुं दधावे। तां मस्तके जघान यदा तदाऽन्याभिः पत्नीभिर्विमृश्य स्वप्राणरक्षार्थं दर्प्पणाः क्षिप्ताः। तासां सर्वासां दर्प्पणघातान्मृतः स्वर्णकृदपि। पश्चात्तापपरा ता अपि अग्निप्रवेशादिना स्वमृतिं चक्रुः। ता विपद्य पश्चात्तापेनाकामनिर्जरया च स्त्रीणामेकोना पञ्चशती पल्ल्यां पुंस्त्वेनोत्पन्नाः। ते च क्रमात् पल्ल्यां तस्करा बभूवुः। पूर्वमृता स्वर्णकृत्प्रिया कस्यापि रोरस्य विप्रस्य पुत्रोऽभूत्। स्वर्णकारस्तु कस्यचिच्छ्रेष्ठिनः पुत्री जाता। बालायाः पितृभ्यां तस्या बालायाः पालकः कृतः। सा तु बाला शिशुत्वेन रुरोदात्यर्थं। स बालपालको यदा यदा तस्या गुह्ये हस्तं दत्ते तदा तदा सा मुदिता भवति। अन्यथा रौति स्म। तं तथा कुर्वाणं तदा पितृभ्यां

वीक्ष्य हक्कितो। निष्काशितश्च स्वगृहात्। ततो भ्रमन् एकोनपञ्चशतचौराणां मिलितः। पञ्चशती जाता। सर्वे सम्भूय चौर्यं कुर्वन्ति। एकदा ते चौराः श्रेष्ठिगृहे चौर्यार्थं प्रविष्टाः। तान् धनं गृह्णानान् वीक्ष्य साऽऽकुला श्रेष्ठिपुत्री जगौ—यूयं किं धनमेव गृह्णीत?। मां स्त्रीं कथं न गृह्णीत?। ततस्तैः सा जगृहे। स्वस्थाने नीता। गतैस्तैरेकैव पत्नी कृता। सा तु सर्वेषां तेषां रतदानेन न तृप्यति। चौरैर्विमृष्टम्—इयं वराकी एकाकिन्यस्ति। वयं तु बहवः स्मः। तेन मरिष्यति। ततो द्वितीया तैरानीता प्रिया। सा पूर्वस्त्री तां सपत्नीमसहमाना हन्तुमिच्छति। इतो गतेषु तेषु चौरेषु चौर्याय पूर्वभार्याऽतिकोपिनी तां नवीनां कूपे प्रक्षेपयामास। ततस्तैरागतैस्तस्याः स्त्रिया वृत्तान्ते पृष्टे सा पत्नी जगौ—अहं किं तस्या रक्षणे यामिकीकृताऽस्मि?। ते दध्युश्चौराः—अनयैव सा हता। द्विजोऽपि व्यमृशत्—किं मे सा स्वसा?। यस्या मया पूर्वं योनिं स्पृशता सुखमभूत्। इहागतोऽस्ति सर्वज्ञ इति ध्यात्वा समागत्यात्र मनसा संशयमपृच्छम्। लज्जया भगवन्! या सा सा सा?। अस्माभिस्तु प्रोक्तं—या सा सा सैवेति। यतः—

"एवं च वञ्चनाचञ्चत्पञ्चत्वादिविडम्बनैः। रागद्वेषादयो लोकान्, दुःखयन्ति भवे भवे!॥१॥" इत्याकर्ण्य स चौरः संविग्नवान् प्रभोः पार्श्वे व्रतं प्राप्य पल्लीं गत्वा प्रबोध्य तांश्चौरान् प्राव्राजयन्निजान्। उत्थाय नाथमानम्य,

जगाद च मृगावती । प्रव्रजिष्याम्यहं चण्डप्रद्योतानुज्ञया प्रभो ! ॥ १ ॥ चण्डः प्राह—यद्रोचते तत् कुरु । त्वत्पुत्रः स्वं राज्यं करोतु । ततः प्रद्योतो वीरवचसा प्रमृष्टवैरो मृगावतीसुतमुदयनं कौशाम्ब्यां राज्येऽतिष्ठिपत् । प्रद्योतस्याष्टाभिः प्रियाभिः सह मृगावती व्रतं जग्राह । ततः प्रभुणा ताः सर्वा मृगावतीयुताश्चन्दनायै सामाचारीं शिक्षितुमर्पिताः । ततश्चण्डप्रद्योतो धर्ममङ्गीकृत्य स्वपुरं ययौ । ततः प्रभुः पृथ्वीं प्रतिबोध्य बहुकालेन पुनरपि कौशाम्ब्यां समवासार्षीत् । तदा तृतीयपौरुष्यां भगवद्वचः श्रोतुं चन्द्रसूर्यौ स्वस्वविमानगौ प्रभुं नन्तुं चागतौ । रविविमानतेजोभिस्तदा रात्रिः समायाताऽपि केनापि न ज्ञाता । सन्ध्यां मत्वा तदा चन्दना प्रवर्तिनी स्वोपाश्रये गत्वा प्रतिक्रमणादि सर्वा क्रियां कृत्वा सुप्ता । इतश्चन्द्रसूर्ययोः स्वस्थानं गतयोर्मृगावती भीता । स्वोपाश्रयं गता । ईर्यापथिकीं प्रतिक्रम्य प्रतिक्रमणं कृत्वा स्वामिनीं प्रति प्राह मृगावती—अहं मुग्धा सती इयतीं वेलां तत्र स्थिता । चन्दनाऽवग्—महति कुले समुत्पन्नाया गृहीतदीक्षाया रात्रौ उपाश्रयाद्वहिः स्थातुं न युक्तम् । मृगावती पदयोर्लगित्वाऽवग्—अचैतन्यादिदं जज्ञे तत् क्षम्यतां भगवति ! । चन्दनायास्तदा निद्रा समागात् । मृगावती स्वयंकृतं कर्म निन्दन्ती सर्वं कर्म शुभाशुभं क्षिप्त्वा केवलज्ञानं प्राप । तदानीं तत्र सर्पमागच्छन्तं दृष्ट्वा मृगावती भगवत्या

मृगावती-वृत्तं ।

हस्तमन्यतश्चकार। तदा सहसा चन्दना जागरिता सती प्राह—रे दुराचारे! मम हस्तोऽन्यत्र कथं कृतः?। तयोक्तं-तयोचे—सर्प आगच्छन्नस्ति। तेन वचसोत्थाय चन्दना जगौ—त्वं कथमीदृशे ध्वान्ते सर्पं द्रक्ष्यसि?। तयोक्तं-ज्ञानेन। चन्दनया चोक्तं—किं ज्ञानं, प्रतिपाति अप्रतिपाति वा?। मृगावत्योक्तं—त्वत्प्रसादादप्रतिपाति। ततस्तदा चन्दनाया मृगावत्याः पादयोः पतित्वा क्षमणकं कुर्वत्याः केवलज्ञानमुत्पन्नम्। इति मृगावतीकथा ॥ १८ ॥

प्रभावतीकथा उदयनकथामध्ये ज्ञेया ॥ १९ ॥

**पालयन् रुचिरं शीलं, शुद्धभावेन देहवान्। चिल्लणेव समाप्नोति, कल्याणकमलां किल ॥ १ ॥**

तथाहि—विशालायां पुरि चेटीकृतारातिश्चेटको राजा राज्यं न्यायाध्वना करोति स्म। पृथक्पृथग्राज्ञीभवाः सुस्वप्नसूचिताः सप्त कन्या जज्ञिरे। क्रमात्तासु राज्ञा वीतभये उदयनभूपतेर्दत्ता प्रभावती १। पद्मावती चम्पेशस्य दधिवाहनस्य दत्ता २। मृगावती कौशाम्बीनाथस्य शतानीकस्य दत्ता ३। शिवा प्रद्योतनस्य भूपस्योज्जयिनीशस्य दत्ता ४। सुज्येष्ठा तु कुण्डग्रामाधिपस्य श्रीवीरज्येष्ठभ्रातृनन्दिवर्द्धनस्य दत्ता ५। सुज्येष्ठाचिल्लणे २ कुमारिके राजभुवने देवकुमारिके इव तिष्ठन्त्यौ धर्मकर्मकुशले बभूवतुः। ते रूपश्रिया रतिप्रीतितुल्ये अभूताम्। कुलकलाविज्ञे

ते मिथः प्रीतिपरे साक्षात् सरस्वत्योर्मूर्ती इव रमेते । अन्येद्युः सुज्येष्ठाचिल्लणाभ्यामलङ्कृते शुद्धान्ते कापि स्थविरा तापसी समागात् । सा च शिवधर्ममाचष्ट । तदा तु सुज्येष्ठा तापस्या प्रोक्तं धर्ममिति निराकरोत्—"कूपेषु चाधमं स्नानं, वापीस्नानं च मध्यमम् । तडागे वर्जयेत् स्नानं, गृहस्नानं च कारयेत् ॥ १ ॥ गृहे चैवोत्तमं स्नानं, जलं चैवानुशोधितम् । तस्मात्त्वं पाण्डव० २" इत्यादि सुज्येष्ठया जिनधर्मे स्थापिते सति सा तापसी उल्लुण्ठतया जल्पति । ततः स्वचेटिकापार्श्वादर्धचन्द्रप्रदानेन गले गृहीत्वा सा तापसी पुराद्बहिर्निष्कासिता । फालच्युतद्वीपीव सा तापसी अलब्धसन्माना प्राप्तपराभवा दध्यौ—इमां सुज्येष्ठां दुष्टगर्वितां भूयसीषु सपत्नीषु सपत्नीदुःखपात्रीकरोमि अहम् । एवं ध्यात्वा तापसी सुज्येष्ठारूपं चित्रपट्टलिखितं कृत्वा राजगृहपुरे श्रेणिकायोपनिन्ये । तां सुज्येष्ठां चित्रपट्टलिखितां दृष्ट्वा राजा हृतचित्तो दध्यौ—किं पातालकन्या ? इत्यादि । अपृच्छद्राजा—कस्येयं पुत्री ? । विद्यमाना त्वया लिखिता अथवा अविद्यमाना ? । परिणीता विद्यतेऽथवा अपरिणीता ? । तापसी प्राह—विशालेशस्य चेटकस्य भूपस्य सुज्येष्ठारूपं मया लिखितमत्र । तां कन्यामुद्वोढुं त्वमर्हसि । नान्यः । किञ्चिद्दानं वितीर्य तस्यै राजा तामुद्वोढुकामः शून्यचित्त इवाजनि । ततो दूतं प्रेष्य श्रेणिकराजा सुज्येष्ठां

दूतमुखाच्चेटकोक्तमाकर्ण्य श्रेणिकः खिन्नोऽभूत्। ततस्तातमनोगतभावमिङ्गिताकारेण ज्ञात्वा अभयकुमारोऽवग्—तात ! मा शोचीस्त्वं। समीहितं च करिष्येऽहम्। ततः पितृमनोरथपूरणाय वैनयिकबुद्ध्याऽभ्येत्य स्वगृहेऽभयश्चित्रपटे पितृरूपमलीलिखत्। ततो गुलिकया स्वरवर्णभेदं कृत्वा वणिग्वेषं च गृहीत्वा विशालीं पुरीं ययौ। उपचेटकराजान्तःपुरमापणमग्रहीदभयः। तत्रान्तःपुरचेटीनां क्रेतव्यमधिकं ददौ च। अन्येद्युरभयं श्रेणिकरूपं चित्रपट्टलिखितं नमन्तं वीक्ष्य सुज्येष्ठादासी जगौ—कस्येति ?। उक्तम्। ततस्तया दास्या स्वामिन्या अग्रे प्रोक्तम्। ततः सुज्येष्ठया पारम्पर्येण श्रेणिकस्य रूपं ज्ञात्वा स्वदासीपार्श्वादभयं प्रति प्रोक्तम्—तस्य श्रेणिकस्य मया सह पाणिग्रहणं कारय। अभयेन ज्ञापितं छन्नं। किं क्रियते ?। तव पिता त्वां तस्मै न ददाति। ततः सुज्येष्ठया ज्ञापितं। छन्नं श्रेणिकमत्रानय। अभयेन ज्ञापितम्—सुरङ्गायोगेनात्रानेष्यते मया। स त्वां परिणेष्यति। ततोऽभयेन ज्ञापितं श्रेणिकाय—यत् त्वयाऽमुष्मिन् दिने समागन्तव्यं। तस्मिन्नवसरे सा सुज्येष्ठा त्वामङ्गीकरिष्यति। ततः श्रेणिको हृष्टः। ततोऽभयेन तदपि सुज्येष्ठायै ज्ञापितं दिनम्। अभयेन ज्ञापिते दिने श्रेणिकः सुलसायाः सुतैर्द्वात्रिंशद्भिः सहापरैश्च सेवकैर्युतश्च रथारूढः सुरङ्गायां

समागात्। इतस्तु सुज्येष्ठां चलचित्तां गन्तुं मानसां दृष्ट्वा चिल्लणा जगौ—त्वं कुत्र गच्छन्त्यसि?। तयोक्तं—नाहमस्मि कुत्र गन्त्री?। साऽवग्—भगिनि! सत्यं कथय। मया किमपि अद्य यावत् त्वयि गूढं न कृतम्। त्वमेवं कथं कुरुषे?। ततः सुज्येष्ठा स्वगमनोदन्तं जगौ। चिल्लणा जगौ—त्वां विना नाहं क्षणमपि स्थास्यामि। इतः रथमारोपयद्। अथ सुज्येष्ठा चिल्लणां प्रत्यवग्—मम रत्नकरण्डिका विस्मृताऽस्ति तामानेतुं यान्त्यस्मि। सुज्येष्ठा रत्नकरण्डिकां लातुं गता। इतस्तां चिल्लणां सुज्येष्ठाबुद्ध्या रथोपविष्टां वीक्ष्य भटैरुक्तम्—अत्र वैरिगृहे चिरं स्थातुं न युक्तम्। ततो रथाः पश्चाद्वालिताः। अग्रे रथस्थश्रेणिकश्चिल्लणायुतोऽचालीत् सुरङ्गायाः। इतः सुज्येष्ठा सरत्नकरण्डिका तत्रागता। श्रेणिकमप्रेक्ष्य व्याकुला म्लानमुखी स्वभगिनीवियोगपीडिता उच्चैःस्वरं गाढं पूत्कारेति—चिल्लणा हृता, अहं हताऽस्मि। सुज्येष्ठारोदनं श्रुत्वा ततश्चेटकः संनह्य तत्र वैरिपृष्ठौ गन्तुं सुरङ्गापार्श्वे समागाद् यावत् तावद्वैरङ्गिको मुख्यसुभटोऽवग्—स्वामिन्नत्र मयि सेवके ईदृक्षे सति तव क उद्यमः?। ममादेशं देहि। क्षणमात्रतो वैरिणं हत्वा चिल्लणां पश्चादानयिष्यामि। ततः स्वाम्यादेशं प्राप्य वैरङ्गिको रथस्थः श्रेणिकपृष्ठेऽचालीत्। वैरङ्गिकेन सुरङ्गामध्ये गत्वा युद्धं कुर्वाणेन सुलसायाः पुत्रा द्वात्रिंशत् हताः। ततः श्रेणिकः सुरङ्गाया

चेल्लणा-
वृत्तं।

निःसृत्य राजगृहं प्रत्यचालीत्। वैरङ्गिके पश्चात् समागते चिल्लणावियोगात् सुज्येष्ठा विषयविरक्ता पितरमापृच्छ्य चन्दनायाः समीपे प्रव्रज्यामुपाददौ। इतः सुज्येष्ठा इति जल्पन्तं श्रेणिकं प्रति चिल्लणाऽवग्—सुज्येष्ठा नागताऽत्रेश!। तत्कनिष्टाऽस्मि चिल्लणा। श्रेणिको व्याजहार—मुधा ममायासोऽभूत्। चिल्लणाऽवग्—अहमपि तत्कनिष्ठाऽस्मि। चिल्लणाऽपि भगिनीवियोगाद्दुःखिन्यभूत्। सुपतिलाभात् सुखिन्यभूत्। श्रेणिकस्तु तादृक्पत्नीलाभात् सुलसापुत्राणां मारणश्रुतेश्च हर्षविषादाभ्यां युतोऽभूत्। पुरमध्ये समेत्य श्रेणिकश्चिल्लणां पर्यणैषीत्। इतः सुलसायाः पुत्रान् मृतान् श्रुत्वा रुदत्याः शोकः अभयकुमार उत्तारयामास। इतः कदाचिद्राजा हृष्टश्चिल्लणादेव्याः कृते एकस्तम्भगृहकरणायाभयमादिशत्। तेनाभयेन कोऽपि सुर आराधितः। तस्य पार्श्वादेकस्तम्भं धवलगृहं कारितं। सर्वर्तुफला वाटिका च। सा तत्र वसन्ती एकाग्रचित्ता जिनमर्चेति। क्रमाच्छीलविषये तथा दृढाऽभूत् चेल्लणा यथा जिनोऽपि वीरः सुलसाया इव तस्याः श्लाघां करोति। कदाचिद् हिमसमये रात्रौ 'स कथं भावी'ति चिल्लणाव्याहृतिं श्रुत्वा प्रातर्नृपो रुष्टो वीरं समवसरणे पप्रच्छ—भगवन्! चिल्लणा प्रिया सती न वा?। प्रभुणोक्तम्—सर्वास्तव पत्न्यः सत्य एव। कल्ये कायोत्सर्गस्थः साधुस्त्वया वन्दितः। स एव कथं भावीति कृपया तयोक्तम्।

रात्रौ निरुत्तरीयकं तमृषिं तदानीं च स्मृत्वा सोवाच कृपालुचेताः। शीते ईदृशे पतिते अधुना कथं स भवितेति ध्यातं। न मनोविकारोऽस्याः। ततः श्रीवीरोक्तं धर्मं कृत्वा चिल्लणा सती श्रीवीरपार्श्वे दीक्षां गृहीत्वा प्रक्षीणसर्वकर्मसञ्चया मुक्तिं गता॥ सुज्येष्ठाऽपि साध्वी शुद्धं चारित्रं प्रपाल्य मुक्तिं गता॥ इति चिल्लणाकथा समाप्ता॥ २०॥

[ २१ बंभी २२ सुंदरि २३ रुप्पिणी, २४ रेवई २५ कुंती २६ सिवा २७ जयंती यँ। २८ देवई २९ दोवई ३० धारणी, ३१ कलावई ३२ पुप्फचूला य॥३॥]

लसत्तपःसुशीलादि, पालयन् सततं जनः। सर्वकर्मक्षयं कृत्वा, ब्राह्मीव याति निर्वृतिम्॥ १॥

तथाहि—अयोध्यायां श्रीऋषभो राजा नाभिकुलकरस्य पुत्रो राज्यं करोति स्म। तस्य सुमङ्गलासुनन्दे द्वे पत्न्यौ अभूताम्। सुमङ्गला चतुर्दशमहास्वप्नसूचितं पुत्रपुत्रीयुग्ममसूत। भरतब्राह्म्यौ नाम तयोरदाद्राजा। सुनन्दा तु बाहुबलिसुन्दर्यावसूत। सुमङ्गला पुनरेकोनपञ्चाशत्पुत्रयुगलान्यसूत। इन्द्रेण प्रभू राज्येऽभिषिक्तः। सर्वलोकव्यवहारा दर्शिताः प्रभुणा। शिल्पशतं प्रकाशितं च भरताय इत्यादि। अष्टादश लिपीर्ब्राह्मीं पाठयामास। सुन्दरीं गणितं शिक्षयामास प्रभुः। त्र्यशीतिपूर्वलक्षप्रान्ते प्रभुर्भरतं स्वे राज्येऽभिषिच्यापरेषां बाहुब-

ल्यादिपुत्राणां देशान् पृथक् पृथग् ददौ । ततः सांवत्सरिकं दानं दत्त्वा श्रीऋषभप्रभुर्दीक्षां ललौ । क्रमात् कर्म क्षित्वा केवलज्ञानं वटस्याधः प्राप । देवैः समवसरणं कृतं। प्रभुणा धर्मोपदेशो ददे। "जराऽऽधिव्याधिदौर्गत्या-दिकनक्रचयाकुले । किं सुखं प्राणिनामत्र, संसारक्षारसागरे? ॥ १ ॥ दूरापास्तसुखे नित्यं, दुःखलक्षशताकुले। रतिं वध्नाति संसारे, मरुस्थल इवात्र कः? ॥ २ ॥ क्रूरावसाना नियतं, विषयाः खलवाक्यवत्। पक्वं फलमिव प्रेम, पतनान्तं शरीरिणाम् ॥ ३ ॥ चातुर्गतिकसंसारं, दुःखरूपं विचार्य तत्। यतध्वं खलु मोक्षाय, सर्वथा भो मनीषिणः! ॥ ४ ॥ स पुनर्दुर्लभः सर्वसावद्यविरतिं विना । दीयतां सर्वदुःखेभ्यस्तमादाय जलाञ्जलिम् ॥ ५ ॥" इत्यादिधर्मदेशनामाकर्ण्य पुत्राणां पञ्चभिः शतैः भरतस्याददे दीक्षा प्रपौत्रस्य सप्तशतीयुतैः। तदा भरतस्यानुज्ञया ब्राह्मी दीक्षां जग्राह । सुन्दरी तु बाहुबलिना विसृष्टा भरतेन दीक्षां गृह्णती निषिद्धा श्राविका प्रथमाऽभूत्। भरतः सुन्दरीं पट्टराज्ञीं कर्तुं स्थापयामास । भरतोऽपि प्रथमः श्रावकोऽभूत्। भरतपुत्रः पुण्डरीको गणधर आद्योऽभूत्। इतो भरतोऽखिलान् देशान् साधयितुं चचाल। इतः सुन्दर्या आचाम्लतपः कर्तुमारब्धम् । भरतः षट्खण्डभुवं साधयित्वा स्त्रीरत्नं नमिविनमिभगिनी प्राप्य स्वपुरं प्राप । तदा हिमानीसम्पातदीनां कम-

लिनीमिव । कदलीमिव संशुष्कां, दिवा चन्द्रकलाप्रियाम् ॥ १ ॥ प्रम्लानरूपलावण्यामस्थिशेषतनूलताम् । ददर्श भरतस्तत्र, सुन्दरीं सुन्दराशयाम् ॥ २ ॥ कृशां भवान्तरायातामिवान्यादृशविग्रहाम् । निरीक्ष्य सुन्दरीं राजा, स्वयुक्तानित्यभाषत ॥ ३ ॥ किं रे मम गृहे शस्यसम्पत्तिस्तादृशी न हि ? । बीजसूरपि निर्बीजा, तर्हि सम्भवति ध्रुवम् ॥ ४ ॥ न भोक्तुं लभते स्वैरं, कोऽपि कार्पण्यतोऽत्र वा । क्षारश्रद्धालवस्तर्हि, क्षारोदधिगृहा अपि ॥ ५ ॥ किमङ्गी सूपकारो वा, भोज्यं न कुरुते मनाक् । किंवाऽस्या विद्यते रोगः?, कृशता दृश्यतेऽधुना ॥ ६ ॥ खर्जूरोत्पत्तिका द्राक्षा, नालिकेरफलादिकाः । सुखासिका न किं सन्ति, द्विरदस्येव वेश्मनि? ॥ ७ ॥ ततस्ते सूपकारा जगुः—न दुर्लभं किमप्यत्र कल्पद्रोरिव ते गृहे । यदा श्रीभरतेन भवता सुन्दरी प्रव्रजन्ती निषिद्धा ततः परमनया वैराग्यवासितया प्रवर्तिन्येवाचाम्लतपःपरया स्थितम् । अस्माभिर्बहुशः कथितं विकृतिं गृहाण । षष्टिवर्षसहस्राणि आचाम्लानि कुर्वत्या अस्या बभूवुः । श्रुत्वैतद्भरतः खिन्नो व्याचष्ट—धिग्वयं विषयासक्ताः, प्रोन्मत्ता इव हेलया । हिताहितमजानाना, मूर्च्छामो राज्यसम्पदि ॥ १ ॥ अनेन वपुषा धन्यैः, प्राप्यते निर्वृतींदिरा । अमुना नरके वासो, लभ्यते भोगवाञ्छया ॥ २ ॥ आधिव्याधिशकृन्मूत्रमलश्लेषात्मकं

वपुः । न शक्यं सुरभीकर्तुं, पलाण्डुशकलं यथा ॥ ३ ॥ तस्मादियं मम भगिनी धन्या । यस्या एवंविधस्त-
पसि रागोऽस्ति । तेनासौ संयमं गृह्णातु । इतो भगवान् विहरमाणस्तत्रागात् । प्रभुं स बहिरुद्याने समागतं
श्रुत्वा दानं दत्त्वा यथेष्टं प्रभुं नन्तुं गतो भरतः । सुन्दर्यपि तत्रागात् । ततस्तत्र धर्मोपदेशमाकर्ण्य भरतः
प्राह—भगवन्! मयाऽस्याः सुन्दर्याश्चारित्रग्रहणेऽन्तरायः कृतः तेन महत्पापं मम लग्नम् । अहं तु बह्वारम्भ-
विधानरतः । इत्युक्त्वा सुन्दरीं क्षमयामास भरतः । तदा सुन्दरी प्राह—ममेयान् कालो गतो दीक्षां विना यत्
तत्कर्मविलसितम् । यतः—"पत्थरेणाह० ॥ १ ॥" ततः सुन्दरी प्रभुपार्श्वे भरतानुज्ञाता दीक्षां जग्राह । ततो
विशेषतः शुद्धं चारित्रं पालयन्ती तपः करोति सुन्दरी । ब्राह्म्यपि प्रभुपादप्रोक्तं संयमं विशुद्धं पालयामास ।
अनित्यं संसारं भावयतः द्वे अपि नित्यम् । निहत्य घातिकर्माणि, निरवद्यतपःक्रमैः । केवलज्ञानमह्नाय, प्रापतु-
स्ते वराशये॥२॥ प्रभूतं कालं भव्यजीवान् प्रबोध्य अष्टापदतीर्थं जग्मतुः। आयुःक्षये क्रमात्ते ब्राह्मीसुन्दर्यौ मुक्तिं
ययतुः ॥ इति ब्राह्मीसुन्दरीकथा ॥ २१ । २२ ॥

रुक्मिणीकथा शांबप्रद्युम्नकथायां कृष्णाग्राष्टमहिषीकथायां ज्ञातव्या ॥ २३ ॥

ओषध्यादिप्रदानेन, साधूनां शुद्धभावतः । रेवतीव शिवं कर्मक्षयाद् याति जनः क्रमात् ॥ १ ॥

तथाहि—भगवान् महावीरो विहारं कुर्वाणोऽन्येद्युः श्रावस्त्यां पुर्यां बहिरुद्याने समवासार्षीत् । तदा तत्रानेके भूपादयो भव्यजना धर्मं श्रोतुं समाजग्मुः। प्रभुर्धर्मोपदेशमेवं ददौ।—“सुलहो विमाणवासो, एगच्छत्ता य मेइणी सुलहा । दुलहा उण जीवाणं, जिणिंदवरसासणे बोही ॥ १ ॥ पंचिंदियत्तणं माणुसत्तणं आरिए जणे सुकुलं । साहुसमागम सुणणा, सद्दहणा राग पव्वज्जा ॥ २ ॥ आउं संविल्लंतो, सिढिलंतो बंधणाइं सव्वाइं । देहं विणिम्मुअंतो, झायइ कलुणं बहुं जीवो ॥३॥ न तहिं दिवसा पक्खा, मासा वरिसावि संगणिज्जंति । जे मूलउत्तरगुणा, अक्खलिया ते गणिज्जंति ॥ ४ ॥” धर्मोपदेशं श्रुत्वा तत्र बहुभिर्जनैः सम्यक्त्वमूला द्वादशव्रती गृहीता । तदा तदानीं गोशालः समागात् । प्रभोः सेवां करोति स । अहं तव सेवकोऽस्मि इत्यादि जल्पन् क्रमात् प्रत्यर्थीभूय गोशालः साधिततेजोलेश्याकः प्रभुं प्रति तेजोलेश्यां मुमोच । तदा निर्द्वन्द्वगुरुभक्तिभासुरः सुनक्षत्रो मुनिरन्तराले तस्थौ । तदा तेजोलेश्यया सुनक्षत्रो दग्धः । प्रभुभक्त्या शुभध्यानान्मृत्वाऽच्युते स्वर्गे देवोऽभवत् । सा तेजोलेश्या प्रतिहतशक्तिका प्रभौ लग्ना । ततः प्रभोः षण्मासीं यावदतीसारोऽजनि ।

तस्मिन्नतीसारेऽत्यर्थं जायमाने कोऽपि वैद्यस्तत्रागतः प्रभुं वीक्ष्येति प्राह—यद्यस्य परमेश्वरस्यातीसारस्फेटनसमर्थं बीजपूरकावलेहभेषजं दीयते तदाऽतीसाररोगः प्रशाम्यति। तया रेवत्या त्रिभुवनगुरो रोगोपशान्तिनिमित्तं भावोल्लासपूर्वमौषधं दत्तम्। तदा तया प्रभोर्भक्तया तीर्थङ्करकर्मोपार्जितम्। यतः—"ज्ञानवान् ज्ञानदानेन, निर्भयोऽभयदानतः। अन्नदानात् सुखी नित्यं, निर्व्याधिर्भेषजात् भवेत् ॥ १ ॥ दानेन भूतानि वशीभवन्ति, दानेन वैराण्यपि यान्ति नाशम्। परोऽपि बन्धुत्वमुपैति दानात्, तस्मात् सुदानं सततं प्रदेयम्! ॥ २ ॥ सततं ददतो दातुः, पात्रयोगोऽपि सम्भवेत्। वर्षन् क्षीरार्णवेऽप्यब्दो, मुक्तात्मा क्वापि जायते! ॥ ३ ॥" तत औषधात् प्रभोर्नीरोगता जाता। रेवती तेनौषधदानपुण्येनाग्रेतनचतुर्विंशतौ सप्तदशमः समाधिर्नामा तीर्थङ्करो भविष्यति। यदुक्तं—"धर्मायापद्रुतां हन्तुं, दद्याद्भेषजमुत्तमः। रेवती यज्जिने दत्त्वा, भविष्यति जिनेश्वरः ॥ १ ॥"

इति सत्पात्रौषधदानोपरि रेवतीकथा समाप्ता ॥ २४ ॥

**सद्धर्मकर्मनिरता, भव्यलोका निरन्तरम्। लभन्ते निर्वृतिं सद्यः, कुन्तीव वरमानसा ॥ १ ॥**

तथाहि—मथुरायां पुर्यां भोजवृष्णे राज्यं पालयत उग्रसेनः पुत्रोऽभूत्। शौर्यपुरेऽन्धकवृष्णेर्भ्रातुश्च सुभद्रा दश

पुत्रानसूत। ते चेमे पुत्राः। तथाहि—समुद्रविजयोऽक्षोभ्य, स्तिमितः सागरस्तथा। हिमवानचलश्चैव, धरणः पूरणस्तथा ॥ १ ॥ अभिचन्द्रो वसुदेवो, दशार्हाख्या दशापि ते। गुणैर्दश समानास्ते, दशार्हा लक्षणैर्यथा ॥ २ ॥ ते सर्वे पुत्रा विक्रमभाजो व्यधुः पित्रोर्भक्तिम्। तेषां द्वे भगिन्यौ कुन्तीमाद्र्यावभूतां। रूपनिर्जितरतिप्रीती बभूवतुः । इतो हस्तिनागपुरे पाण्डुराजा क्रीडार्थं वने ययौ। तत्र राजैवंविधोऽभूत्। माकन्दे समदी चारु, नारङ्गे रङ्गवानरम् । चम्पके कामदेवस्य, दीपको दीप्यतांतराम् ॥१॥ अलंचकार स मुदं, बकुले कुड्मलाकुलः । अशोके गतशोकोऽभून्, मल्लिकामाल्यमालितः ॥ २ ॥ युग्मम् । राजा तत्र भ्रमन् पुरतश्चूततले फलकं पश्यन्तं मुहुर्मुहुर्निमेषपरं नरं कञ्चिदपश्यत् । आच्छादयन्तं वसनाञ्चलेन नृपस्तं प्रति प्राह—किमत्र फलके विद्यते ? । तेनोक्तं—स्त्रीरूपमस्ति । फलके दर्शिते राजा नारीरूपमद्भुतं वीक्ष्य दध्यौ शिरो धूनयन्निति—अहो सर्वाङ्गसौन्दर्यमहो लवणिमा नवः । अहो कान्तिभरः कश्चित्, सहजोऽस्याः शरीरजः ॥ १ ॥ अस्याः सविधमासाद्य, पद्मेन्दुतिमिराण्यपि । चक्षुर्वक्त्रकचव्याजादमुञ्चन्नित्यवैरिताम् ॥ २ ॥ अस्याश्चित्रकृतो हेमलतयोः पल्लवाः करौ । पुष्पदन्तौ च सौगन्धः, फलानि निविडौ कुचौ ॥ ३ ॥ इत्यादि । अस्याः स्त्रिया यो वरो भविष्यति स धन्यः। पाण्डुर्ध्यायन्निति प्राह—कस्येयं

॥ ३२९ ॥

चतुःषष्टिकलादक्षा, तारुण्यतरुमञ्जरी ।
मूर्तिः ? । सोऽप्याचख्यौ—शौर्यपुरान्धकवृष्णिजाता कुन्तीनाम्नी स्त्री । तं फलकं गृहीत्वा
सद्दग्वरैकदारिद्र्याच्चिन्ताब्धौ पितरं न्यधात्॥ १ ॥ तस्या रूपमिदं मया फलके लिखितमस्ति । ततो राजा तां ध्यायन्
तस्मै वहु धनं वितीर्य च स्वगृहे ययौ । चित्रे तां बालां दर्शं दर्शं राजा तन्मयोऽभूत् । कीलितं लोहनाराचैर्मूर्च्छितमपश्यत्
पुनः पुनः सर्वतो वनं वभ्राम । तत्र चम्पकवीथीषु, नरं कञ्चिन्नियन्त्रितम् । ततश्च तस्याग्रे खड्गमेक-
(अपश्यन्मूर्छितं) पुरः ॥ १ ॥ तं नरं तादृशं दृष्ट्वा राजा करुणापरः कोऽयमित्यमृशत् । एकयौषध्या नरं विशल्यं चक्रे ।
मपश्यत् राजा । तमसिं लात्वा प्रतीकारमकरोत् । ओषधीवलये तत्र चापश्यत् । विद्याभृ-
द्वितीयया सहजरूपं चक्रे राजा । कस्त्वमित्युक्ते भूपेन नरो जगौ—अहं वैदेशोऽनिलगतिर्नाम्नाऽस्मि । निष्कारणोपकारिणा
दशनिवेगो मम प्रियामपाहरत् । तस्य पृष्ठौ गतोऽहं । तेन विद्येशेनेदृशीं दशां प्रापितः । पाण्डुः
त्वयाऽत्रागतेन मद्भाग्यात् तादृशादुःखान्मोचितः । इति जीवितदातुस्तव किं प्रत्युपकारं करोमि ? । कामुकां गृहाण ।
प्राह—मम वीतरागप्रसादात् सर्वमपि समस्ति । विद्याभृत् प्राह—इमे द्वे औषध्यौ मुद्रिकां च । स विद्या-
कल्पितस्थानगामी त्वं भविष्यसि मुद्रायोगात् । स्मृतोऽहं च तुभ्यं समीहितं दास्यामि पूरयिष्यामि च ।

भृत् स्वस्थाने गतः। राजा तां ध्यायन्निजपुरमलञ्चकार। इतः सूर्यपुरे गत्वा फलकहस्तः पाण्डुरूपमवर्णयत्। तच्छ्रुत्वाऽन्धकवृष्णिर्मुमोद। परं दातुं नेहते। भर्तृदुर्लभतां ज्ञात्वा कुन्ती स्वं हन्तुं गले पाशं बध्नती प्राह—मातः! कुलदेवि! अहमभ्यर्थये कृताञ्जलिः। भर्तृप्राप्तिं विनेदानीं, म्रिये ह्यशरणा पुनः ॥ १ ॥ अस्मिन् भवे यदि पाण्डुः कान्तो नाभवत्तर्हि अग्रेतनेऽपि भवे पतिरेष भूयान्मम। यावदिति वदन्त्यात्मानमधस्तान्मुञ्चति कुन्ती तावत् पाण्डुर्मुद्राप्रभावात्तत्रागत्यार्गलापाशं छित्त्वा प्राह—मा मरणं कुरु। अहं पाण्डुरस्मि। ततस्तयोपलक्षितः। तदानीं सख्या गान्धर्वविवाहेन पाण्डुकुन्त्यौ परिणायितौ। तत्र तस्थुषः पाण्डोः कुन्त्या ऋतुस्नाताया गर्भोऽभूत्। कुन्ती गर्भस्वरूपं पाण्डवे प्राह। कृतकृत्योऽथ राजा मुद्रायोगात् स्वपुरं गतः। कुन्त्यपि स्वगृहं गता। धात्रीभिर्गोप्यमाना सा कुन्ती पुत्रमसूत। निशीथे कांस्यपेटायां क्षिप्त्वा कुन्ती तं बालं गङ्गाप्रवाहे प्रवाहयामास। क्रमात् सा पेटी हस्तिनागपुरे गता। सूतसारथिना स्वगृहे नीता। कर्णपार्श्वदत्तहस्तं बालं दृष्ट्वा कर्ण इति नाम चक्रे। ततः पत्नीं प्राहेति—मया गूढगर्भया पुत्रो जनित इति लोकाग्रे त्वया वाच्यम्। कर्णः सूतगृहे ववृधे। इतश्च कन्यायाः कुन्त्या मनोभावमन्धकवृष्णिभूपः पाण्डुभूपासक्तं दृढं मत्वा तां कुन्तीं पाण्डुराज्ञे ददौ। पाण्डुमुदवाह-

यत् । मद्रकोऽथ भूपो मद्रकीं नन्दिनीं पाण्डुभूपाय च ददौ । इतो देशेशस्य सूबलस्य राज्ञः सुता गान्धारी-
प्रमुखा बभूवुः । गान्धारीं धृतराष्ट्राय ददौ राजा । कुन्ती स्वप्ने सुराचलं क्षीराब्धिं भास्करं चन्द्रं श्रियं चालोकय-
न्निशि । धर्मे चातीव सादराऽभूत् । कुन्ती सुलग्ने सुदिने पुत्रमसूत । जन्मोत्सवं सूनोः कृत्वा राज्ञा धर्मपुत्रो युधि-
ष्ठिर इति नाम ददे । गान्धारी दुर्योधनप्रमुखपुत्राणां शतमसूत । कुन्ती पुनर्वायुदेवसूचितं भीममसूत । सूर्यदे-
वसूचितमर्जुनम् । माद्री नकुलसहदेवौ सुतावसूत । कुन्ती नासिक्यपुरे पुत्रपार्श्वात् चन्द्रप्रभस्वामिनः प्रासादं
चन्द्ररत्नमयबिम्बयुतं कारयामास । पाण्डुः स्वपुत्रं युधिष्ठिरं राज्येऽभिषिच्य व्रतं गृहीत्वा स्वर्गं गतः । युधिष्ठिरो
मात्रा सह विस्तरात् श्रीशत्रुञ्जये यात्रां कृत्वोद्धारं चकार । तत्र श्रीनेमीश्वरपार्श्वे कुन्ती पुत्रयुता जिनधर्मं प्रपद्य
शुद्धं पालयामास । पाण्डवानां राज्यगमनप्राप्त्यादिस्वरूपं विस्तराद्वक्तव्यम् । पाण्डवाः पञ्चापि स्वपुत्रान्
राज्ये निवेश्य गुरुपार्श्वे मातृपत्नीयुता दीक्षां जगृहुः । क्रमाद्गुरुपार्श्वे तीव्रं तपस्तन्वानाः श्रीशत्रुञ्जये
घोरतरतपःपराः पञ्चापि पाण्डवाः कुन्तीयुताः सर्वकर्मवियुक्ता मुक्तिं ययुः । द्रौपदी तु पञ्चमकल्पं ययौ ॥
इति कुन्तीकथा समाप्ता ॥ २५ ॥

शीलं शुद्धतरं सम्यगाराधयन्निरन्तरम् । जनौघो लभते शर्म, शिवा श्राद्धीव हेलया ॥ १ ॥

तथाहि—उज्जयिन्यां प्रद्योतनो भूपो न्यायाध्वना पृथ्वीं पालयामास । एकदा राजा सभायामुपविष्टो यावत् तावत् कोऽपि दूतस्तत्राभ्येत्य प्राञ्जलिर्भूपं प्रणनाम । राजा पप्रच्छ—कस्त्वं ? किमर्थमागाः ? । स दूतो जगौ—विशालायां पुरि चेटको राजा राज्यं कुरुते । तस्य शिवाह्वा कुमारी देवकुमारीतुल्याऽस्ति । चतुःषष्टिकलाकुशलां तां पुत्रीं चेटकभूपस्तुभ्यं दातुकामोऽस्ति । यदि रोचते तदा तां त्वमेव परिणय । नो चेदन्यराज्ञे तेन राज्ञा स्वा पुत्री दास्यते । प्रद्योतनो जगौ—चेटको भूपो यत् कथयति तत् प्रमाणमेव । ततश्चेटकेन भूपेन महोत्सवपुरस्सरं शिवा पुत्री प्रद्योतनाय व्यतारि । सा शिवा राज्ञी अन्येद्युः श्रीवीरपार्श्वे धर्मोपदेशं श्रुत्वा धर्ममङ्गीचकार । शीलात् केनापि सुरेण चाल्यमाना सा महासती न चलिता । तस्मिन् पुरे सदा प्रदीपनं लगति । ततोऽशेषं पुरं ज्वलति । तदाऽनेके उपचाराः कृताः । परं प्रदीपनं न प्रशाम्यति । अन्यदा छलेन तत्रानीतो बुद्धिनिधानमभयकुमारः । राज्ञा पृष्टं—कथमिदं प्रदीपनं शाम्यति ? । अभयेनोक्तं—यदि शीलवती नारी स्वयमत्राभ्येत्य नीरेण सर्वेषां गृहाणामुपरि नीरप्रक्षेपं करोति तदा प्रदीपनं सद्यः प्रशाम्यति । ततो बह्वीभिर्नारीभिर्जलप्रक्षेपणं कृतं ।

परं प्रदीपनं न प्रशाम्यति। ततः शिवया सर्वेषां गृहाणामुपरि जलप्रक्षेपे कृते तत्कालं प्रदीपनं प्रशशाम। ततः सर्वैरपि जनैरियं शीलवती इति प्रशंसिता। लोकैरुद्घोपितम्।—"ते कह न वंदणिज्जा रूवं दट्ठूण परकलत्ताणं। धाराहयव्व वसहा, वच्चंति महीयले जंता॥ १॥ देवदाणवगंधव्वा, जक्खरक्खसकिंनरा। बंभयारिं नमंसंति, दुक्करं जे करंति ते॥ २॥ शीलं नाम नृणां कुलोन्नतिकरं शीलं परं भूषणं, शीलं ह्यप्रतिपाति चित्रमनघं शीलं सुगत्यावहम्। शीलं दुर्गतिनाशनं सुविपुलं शीलं यशः पावनं, शीलं निर्वृतिहेतुरेव परमं शीलं तु कल्पद्रुमः॥ ३॥" क्रमात् श्रीवीरपार्श्वे दीक्षां जग्राह। नानाविधतपःपरा क्षीणकर्मा मुक्तिं ययौ। इति शिवा—महासतीकथा समाप्ता॥ २६॥

अत्रापि सिरिदेवी १५ वत् जयंतीकहा नत्थि॥ २७॥

**शीलं चन्द्रोज्ज्वलं शश्वत्, पालयन् सततं जनः। देवकीव समाप्नोति, ख्यातिं मुक्तिसुखं पुनः॥१॥**

तथाहि—वसुदेवः समुद्रविजयभूपादात्मनोऽपमानं स्वयं मन्यमानो विदेशं प्रति चचाल। क्रमादनेकेषु देशेषु भूरिकन्यानां पाणिग्रहणं कुर्वाणो वसुदेवो मृत्तिकावत्यां गतः। तत्र कंसपितृव्यो देवको राजा राज्यं न्यायाध्वना

चकार । तस्य पुत्री देवकी समजनि । क्रमाद्वर्धमाना चतुःषष्टिकलाकुशलाऽजनि । देवको राजा वसुदेवं शौर्य-वीर्यविक्रमादिशालिनं वीक्ष्य स्वपुत्रीं दातुकामोऽभूत् । महामहोत्सवपूर्वं देवको राजा वसुदेवाय स्वपुत्रीं ददौ। विवाहादनन्तरं दशगोकुलनायकं गोकोटियुतं नन्दं वसुदेवाय देवको ददौ । तस्मिन् विवाहमहोत्सवे जाय-माने कंसानुजन्मा पूर्वोपात्तव्रतोऽतिमुक्तकनामा मुनिः पारणार्थी तत्रागात् । तदा सा कंसप्रिया जीवयशा मदपानमत्ता नृत्यं कुर्वती अतिमुक्तकमागतं दृष्ट्वा कण्ठे विलग्ना मुनिं प्रति प्राह—भो देवर ! वरं जातमद्य । यत् एवंविधेऽवसरे त्वमायातः । एहि उद्यमं कुरु । आवां नृत्यावः । मुञ्च पात्रादिकमुपकरणम् । एवंविधोऽवसरः पुनः पुनर्न लभ्यते । तां भ्रातृजायां तथाविधमदोन्मत्तां वीक्ष्यातिमुक्तकः प्राह—याऽधुना वसुदेवेन परिणीता तस्याः कुक्षिसमुत्पन्नेन बालेन तव पतिपितरौ हनिष्येते। इति मुनिवचः श्रुत्वा जीवयशा सद्यो गलितमदाऽभ-वत् । कंसाय तद्वृत्तान्तः प्रोक्तः पत्न्या रहसि । ततः कंसो वसुदेवयुतो मथुरायामागात् । ततः कंसो वसुदेवेन सह प्रीतिं कुर्वाणोऽन्यदा जगौ—अद्य ममैकेन देवेनेत्युक्तम्—तव मृतिर्भविष्यति शीघ्रं सप्ताष्टवर्षमध्ये। तदा मयोक्तं—कथंचिन् मम मृतिष्टलति नवा ?। ततो देवेनोक्तम्—यदि त्वं वसुदेवपत्न्या देवक्याः सप्तगर्भान् स्वगृहे पालयसि

तदा तव मृतिर्न भवति । ततो वसुदेवदेवकीभ्यां कंसवचः प्रतिपन्नम् । जातान् जातान् गर्भान् कंसेन गृहीत्वा शिलायामाच्छोटिताः छन्नम् । तदाऽन्तराले हरिणेगमेषी देवो भद्दिलपुरे नागश्रेष्ठिनः प्रियायाः सुलसायाः सुतान् मृतान् कंसगृहे वसुदेवपुत्रस्थाने मुञ्चति स्म । तांश्च वसुदेवपुत्रान् षट् नागश्रेष्ठिगृहे मुमोच । तेषां नामानि नाम्नाऽनीकयशोऽनंगसेनावजितसेनकः । मथितारिर्देवयशा, शत्रुसेनश्च ते त्वमी ॥ १ ॥ अथ देवक्याः सप्तमे गर्भे उत्पन्ने सा स्वप्नानि सिंहार्काग्निगजध्वजसरोविमानानि सप्त ददर्श । ततः क्रमात् सप्तमे गर्भे समुत्पन्ने देवक्योक्तं पत्युः पुरः—मयैकः पुत्रो न लालितः । अधुना यो भविष्यति स गृहे स्थाप्यते पाल्यते च मया । वसुदेवो जगौ—प्रतिज्ञाभङ्गो भवत्येवं । ततः पत्न्योक्तम्—उपायेन पाल्यते । ततो वसुदेवेन गोकुले नन्दस्य पत्न्या यशोदाया गर्भः कंसायार्पितः । स्वपुत्रश्च यशोदायाः पालनायार्पितः । ततो देवकी नवनवोत्सवमिषं कृत्वा पुत्रविलोकनाय याति । ते उत्सवा अद्यापि लोके प्रथिताः सन्ति । इत्यादि सर्वं श्रीनेमिनाथचरित्रादवगन्तव्यम् । अन्येद्युः श्रीनेमिनाथपार्श्वे धर्मं श्रुत्वा सम्यक्त्वमूलद्वादशव्रतं धर्ममङ्गीचकार । श्रीजिनधर्मं शुद्धं पालयित्वा सच्छीलशालिनी देवकी स्वर्गं जगाम । ततश्च्युत्वा मर्त्यभवं प्राप्य कर्मक्षयान् मुक्तिं यास्यति । इति देवकीकथा समाप्ता ॥ २८ ॥

आपदो विलयं यान्ति, शुद्धशीलप्रपालनात् । द्रौपद्या इव सान्निध्यं, कुर्वते निर्जरा अपि! ॥ १ ॥

तथाहि—पाञ्चालदेशविभूषणं काम्पील्यपुरं पत्तनं शोभते स्म। तत्र द्रुपदो राजा न्यायाध्वना पृथिवीं पालयामास। तस्यान्यदा पुत्री बभूव। तस्या जन्मोत्सवं कृत्वा द्रौपदीति नाम दत्तम्। द्रौपदी वर्धमाना क्रमात् पित्रा धर्मकर्मशास्त्राणि पाठिता। यतः—"प्रथमे नार्जिता विद्या, द्वितीये नार्जितं धनम्। तृतीये नार्जितो धर्मश्चतुर्थे किं करिष्यति? ॥ १ ॥ रूपयौवनसम्पन्ना, विशालकुलसम्भवाः। विद्याहीना न शोभन्ते, निर्गन्धा इव किंशुकाः! ॥ २ ॥" अन्यदा राजा यौवनं प्राप्तां परिणयनयोग्यां दृष्ट्वा वरचिन्ताशोकसागरे पपात। यतः—जम्मंतीए सोगो वड्ढंतीए य वड्ढए चिंता। परिणीयाए दंडो जुवइपिया दुक्खिओ निच्चं ॥ १ ॥ नियघरसोसा परगेहमंडणी कुलकलंककलिभवणं। जेहिं न जाया धूआ ते सुहिआ जीवलोगंमि ॥ २ ॥" ततस्तदा राज्ञोक्तम्—यो राधावेधं साधयिष्यति स ममेमां पुत्रीं परिणेष्यति। ततो बहुषु देशेषु देशदेशेषु कुङ्कुमपत्रिकाः प्रेष्य बहून् युधिष्ठिरादिभूपान् आनिनाय। षोडशारं चक्रमुच्चैः स्तम्भस्योपरि मण्डितम्। अधस्तात्तैलभृतः कटाहो मण्डितः। सृष्टिसंहाराभ्यां भ्रमतश्चक्रस्योपरि स्थितायाः पुत्तलिकाया वामचक्षुरूर्ध्वमुष्टिरधोदृष्टिर्नरो यदा विध्यति

तदा राधावेधः साधितः कथ्यते । एवंविधो राधावेधो न केनापि भूपेन साधितः । ततोऽर्जुनेन राधावेधः साधितः । ततो द्रौपदी यावदर्जुनस्य कण्ठकन्दले वरमालां चिक्षेप तावत् परेषां चतुर्णां युधिष्ठिरभीमनकुलसहदेवानां कण्ठे पपात भूयो भूयः । द्रुपदो भूपो जगौ—किं करिष्यते ?, माला तु पञ्चानामपि कण्ठे पपात । तदाऽकस्मात्तत्र चारणश्रमणो महात्माऽऽगात् । ततः सर्वे भूपास्तं नन्तुं ययुः । तत्र धर्मोपदेशं श्रुत्वा द्रुपदो राजा पप्रच्छ—भगवन् ! अनया पुत्र्याऽर्जुनकण्ठे क्षिप्ता सती वरमाला कथमन्येषां चतुर्णां कण्ठे पपात ? । अग्रतः किं करिष्यते ? । ततो यतिः पूर्वभवकृतं कर्म अस्या द्रौपद्या यथा समागात्तथा प्राह—पूर्वं चम्पायां पुर्यां सोमदेवसोमभूतिसोमदत्ताह्वास्त्रयो भ्रातरो द्विजा वसन्ति स्म । तेषां क्रमात्तिस्रो नागश्रीरतिभूतश्रीयज्ञश्रीनाम्न्यः प्रिया आसन् । त्रयाणामपि प्रियाभिः स्वस्ववारके भोजनं कुटुम्बार्थं निष्पाद्यते । अन्येद्युः स्ववारकदिने नागश्रीर्वर्यां रसवतीं वरव्यञ्जनादिपेशलां कुर्वाणा वर्यं तुम्बफलं रन्धयामास । ज्ञानतः कटुतुम्बीफलं ज्ञात्वा नागश्रीर्दध्यौ—बहुद्रव्यव्ययोऽत्र लग्नः, तेन मया कथं त्यक्ष्यते ? । कापि भाजने तत्फलं क्षिप्त्वा नागश्रीरन्यया रसवत्या सर्वं कुटुम्बं भोजयामास । इतश्च श्रीधर्मघोषसूरयस्तत्रायायुः । तेषां शिष्यो धर्मरुचिर्यतिर्मासक्षपणपारणे नागश्री-

निलयं ययौ भिक्षायै । तया नागश्रिया यतिद्विष्टया तस्मै मुनये तत् कटुतुम्बीफलं ज्ञात्वा बहु विश्राणितम् । धर्मरुचिर्मुनिर्गुरूणां पार्श्वे समेत्य तत् कटुतुम्बीफलं बहुद्रव्यसंस्कारितं दर्शयामास । गुरवस्तं तद् दृष्ट्वा प्रोचुः—कटुतुम्बीफलमिदं भूरिप्राणिप्राणापहारकं विद्यते । तदिदं कटुतुम्बीफलं क्वापि निरवद्ये स्थण्डिले परिष्ठापय यत्नतः । गुरूपदेशात्तत्फलं धर्मरुचिस्त्यक्तुं बहिरुद्याने गतः। कथंचिदेकस्मिन् बिन्दौ भुवि पतिते बह्वीः सहस्रमिताः पिपीलिका मृता दृष्ट्वा धर्मरुचिर्दध्यौ—यदैतत् कटुतुम्बीफलं परिष्ठाप्यते तदा बहवो जीवा मरिष्यन्ति । तस्मादहमेतद्भक्षयामि । एवं विमृश्य स्वयमेव धर्मरुचिर्भुङ्क्ते स्म । स यतिः शुद्धं संयममाराध्य पञ्चपरमेष्ठिध्यानपरो मृत्वा सर्वार्थसिद्धिविमाने ययौ। तदा धर्मरुचेर्बहिर्गतस्य बह्वीं वेलां ज्ञात्वा तस्य साधोर्विलोकनार्थं मुनयः प्रेषिता गुरुभिः। ततस्ते यतयस्तं साधुं मृतं दृष्ट्वा तस्योपकरणं गुरुपार्श्वे आनिन्युः । सूरयस्तस्य साधोः सर्वार्थसिद्धिगमनं ज्ञात्वा साधूनां पार्श्वे जगुः=धर्मरुचेर्यतेर्भाग्यवतो जीवो यतनया मृत्वा सर्वार्थसिद्धिविमाने ययौ । नागश्रीरकृतालोचना क्रमान्मृता षष्ठे नरके ययौ। ततो मत्स्योऽभूत्। ततः सप्तमे नरके ययौ । ततोऽपि मीनस्ततोऽपि नरके गता । एवं सप्तवारनरकगमनं मत्स्यभवोद्भवनं चाभूत्तस्याः। एवं बहून् भवान् भ्रान्त्वा गिरिनदी-

ग्रावन्यायेन नागश्रीजीवश्चम्पापुर्यां सागरदत्तश्रेष्ठिनः सुभद्रापत्नीकुक्षाववततार। क्रमात् प्राप्तसमये सुभद्रा पुत्रीमसूत। तस्या मातापितृभ्यां सुकुमारिकेति नाम दत्तम्। तत्रैव पुरे जिनदत्तश्रेष्ठिनः पुत्रः सागरः सतां सुकुमारिकां क्रमात् परिणिन्ये। श्रेष्ठिना सागरदत्तेन स जामाता स्वगृहे स्थापितः। अन्यदा सुकुमारिकया सह यावद्रात्रौ शय्यायां सुप्तः तावत्तस्या ज्वलत्खदिराङ्गारतुल्यदेहस्पर्शं ज्ञात्वा सागरो विरागवान् जातस्तस्याम्। ततस्तां सुकुमारिकां सुप्तामेव मुक्त्वा स्वगृहे गतः। सागरं गतं मत्वा प्रातः सुकुमारिका भृशं रुरोदेति—मां मुक्त्वाऽद्य पतिर्गतः। ततः पुत्रीरोदनकारणं मातापितृभ्यां ज्ञात्वा दासीपार्श्वात् तत्रागतम्। भो पुत्रि ! मा रोदनं कुरु। कर्मणोऽग्रे कोऽपि न छुटितो राजा वा रङ्को वा। त्वया पूर्वभवे कस्यापि वियोगः कृतस्तेनाधुनाऽभूत्तव। ततः सागरदत्तोऽभ्येत्य जिनदत्तांतिके जगौ—त्वत्पुत्रो न वर्यः। यो मदीयां पुत्रीं परिणीय गतोऽन्यत्र। तेन स त्वत्पुत्रो मत्पुत्रीं पुनरङ्गीकरोतु। जिनदत्तः श्रेष्ठी स्वपुत्रमाकार्य प्राह—पुत्र ! येन नरेण या नारी अङ्गीकृता सा नारी न मोक्तव्या। त्वं त्वेवं तां कथं मुञ्च, कुलीनेन त्वया सुत!। कथमेवंविधा श्रेष्ठिपुत्री त्यक्ताऽधुना इह ॥ १ ॥ सगुणं निर्गुणं चापि, मुच्यतेऽङ्गीकृतं नहि। सकलङ्कं सकोट्यल्पं, चन्द्रं नोज्झति

धूर्जटिः ॥ २ ॥ तस्मादिमां प्रियां सद्य, आद्रियस्व मनोरमाम् । मातापित्रोर्वचः सम्यक्, क्रियते हितमिच्छुना ॥ ३ ॥ सागरस्ततः ताताग्रे प्राह—प्रविशामि ज्वलत्यग्नौ, मज्जामि जलधौ पुनः । न पुनर्गेहिनीमेनां, श्रयेऽहं दुःखदायिनीम् ॥ १ ॥ अस्याः पत्न्या वपुःस्पर्शोऽङ्गारतुल्योऽस्ति निर्भरम् । तेनास्या अन्तिके स्थातुं, शक्यते न मया मनाक् ॥ २ ॥ एतच्छ्रुत्वा सागरदत्तः पुत्रिकायाः पार्श्वे समेत्यावग्—सागरो मनसाऽपि त्वां, न ध्यायति सुते! मनाक् । वार्ता तिष्ठतु दूरे तु, ततोऽन्यं रमणं वृणु ॥ १ ॥ वर्यं वरं कुलीनं च, विनीतं हितकारकम् । त्वत्कृते आनयिष्यामि, दुःखं कार्यं त्वयाऽत्र न ॥ २ ॥ ततः सागरदत्तेन द्वित्रा वरा आनीताः ये स्वपुत्र्याः पाणिग्रहणार्थं ते सर्वे तां सुतां मुक्त्वा गताः । ततः सागरदत्तेन रङ्क एको भिक्षार्थं मार्गयन् तत्र स्वगृहे आनीतः । तं रङ्कं कर्प्पूरवासिताम्बुप्रक्षालिताङ्गं नानाविधभूषणभूषितं कृत्वा स्वां पुत्रीं तस्मै दत्ता सागरदत्तेन । सोऽपि रङ्कस्तां सुकुमारिकामङ्गारतुल्यशरीरां ज्ञात्वा दध्यौ—किमङ्गारशकटीयं स्त्री? राक्षसीयं वा?। एवंविधां तां ज्ञात्वा सोऽपि रङ्कः सुकुमारिकां त्यक्त्वा गतः। पुनर्जग्राह खर्प्परं रङ्कः । पृष्टः श्रेष्ठिना—भो महाभाग! किं त्वया मदीया पुत्री त्यक्ता ?। रङ्कोऽवक्—अग्निप्रवेशो वर्यः। न पुनरस्यास्तव पुत्र्याः स्पर्शः । ततः पूर्ववत्तां

पुत्रीं रुदतीं वीक्ष्य सागरदत्तस्तत्रैत्य पुत्रीं प्रति प्राह—पूर्वकृतकर्मणः कोऽपि न छुट्यते । यतः—

"सूर्योऽपि भ्राम्यति व्योम्नि, गुणी भिक्षामटाट्यते । मूर्खोऽपि सम्पदं भुङ्क्ते, विपाकात् पूर्वकर्मणाम् ॥ १ ॥
आरोहति गिरिशिखरं समुद्रमुल्लंघ्य याति पातालम्। विधिलिखिताक्षरमालं फलति कपालं न भूपालः! ॥ २ ॥"

ततः सुकुमारिके! प्राक्कर्मच्छित्त्यै दानं देहि। तपः कुरु। शान्तात्मा त्वं तिष्ठ। ततः सा सुकुमारिका सन्तोषं कृत्वा जैनधर्मं कुरुते स्म। तस्या गृहे एकदा साध्व्यो विहृत्यर्थं समागमन्। तया शुद्धान्नपानैर्भावतः प्रतिलाभिताः साध्व्यः। तासां साध्वीनां पार्श्वे सुकुमारिका दीक्षां जग्राह । सा सुकुमारिका पूर्वार्जितनिबिडकर्मच्छिदे दुष्करं तपः कर्तुं लग्ना। कदाप्येषा सुकुमारिका प्रवर्तिनीं प्रणम्य प्राह—जनरिक्ते वने गत्वा, रवौ दत्तेक्षणा स्फुटम्। एकाग्रमानसा षष्ठाष्टमादिसत्तपःपरा ॥ १ ॥ आतापनामहं कर्तुं, वाञ्छामि साम्प्रतं किल । पूर्वसंसारसम्बन्धि, कर्म वहस्ति मे दृढम् ॥ २ ॥ प्रवर्तिनी जगौ वत्से!, स्वच्छे आतापना मनाक्। युज्यते बहिरुद्याने, कर्तुं साध्व्या कदापि न ॥ ३ ॥ सुकुमारिका जगौ—यद्यपि बहिरुद्याने आतापना कर्तुं साध्व्या न युज्यते, तथाप्यहं बहिरुद्याने कर्मच्छेदायातापनां करिष्ये। आदेशं देहि। बलादादेशं प्राप्यातापनां लातुं सुकुमारिका बहिरुद्याने गता

सप्ताष्टौ दिनानि । एकदा यावत्सुकुमारिका आतापनां लातुं लग्ना तावदकस्मादेका वेश्या तत्रागता। सा कीदृशी अस्ति ?। एकस्य नरस्योत्सङ्गे सुप्तां नारीं वेश्यां सुकुमारिका ददर्श। द्वितीयो नरस्तस्या मस्तके पुष्पावतंसं बध्नाति। तृतीयो नरस्तालवृन्तेन वातप्रक्षेपं करोति। चतुर्थो नरस्तस्या मस्तकस्योपरि छत्रं धत्ते। पञ्चमस्तस्या अङ्गे विश्रामणां कुरुते स्म। एवंविधां गणिकां दृष्ट्वा सुकुमारिका दध्यौ—असौ नारी धन्या। यस्याः पञ्च नरा एवंविधां शुश्रूषां कुर्वन्ति। अहं तु पुनः पुनः पुरुषेण त्यक्ताऽस्मिन् भवे । ततः सुकुमारिका एवं निदानं चकार—यद्याचीर्णस्य चेदस्य, तपसोऽस्ति फलं मम। तदानीं देवदत्तेव, भवेयं पञ्चभर्तृका ॥ १॥ साध्वीभिः सा तथा तपस्यन्ती निदानं कुर्वती यदा न निवृत्ता तदा सुकुमारिका पृथगुपाश्रये स्थापिता। क्रमात् संलेखनामष्टौ मासान् कृत्वा नवपल्योपमस्थितिका सुरी सौधर्मे बभूव । ततश्च्युत्वा सा सुरी अस्मिन् काम्पील्यपुरपत्तने द्रुपदभूपतेः पुत्री द्रौपदी पञ्चानां पाण्डवानां कण्ठे वरमालां चिक्षेप। निदानकर्मत एवमस्याः कर्मोदयः समागात्। कर्मणः पुरतः कोऽपि न छुटति। यतः—“किं करोति नरः प्राज्ञः, प्रेर्यमाणः स्वकर्मभिः ?। प्रायेण हि मनुष्याणां, बुद्धिः कर्मानुसारिणी ॥ १ ॥
यदुपात्तमन्यजन्मनि शुभमशुभं वा स्वकर्म परिणत्या । तच्छक्यमन्यथा नैव कर्तुं देवासुरैरपि हि ॥ २ ॥

ततो वहुभिर्जनैस्तदा जिनधर्मः प्रपेदे। ततो द्रौपदी पञ्चभिः पाण्डवैः वारकेण स्वस्वदिने भोक्तव्या, यस्मिन् दिने यस्य वारकः तस्मिन् दिनेऽन्येन नागन्तव्यम् । अन्येद्युर्द्रौपदी यावदन्तःपुरे स्थिता स्वात्मप्रमाणमादर्शं विलोकयति तावदितो नारदस्तत्रागात्। तदा द्रौपदी स्ववपुः पुनः पुनर्विलोकयन्ती मनसाऽपि न सम्भावयामास। ततो नारदो रुष्टः। तत उत्थाय धातकीखण्डमध्यस्थापरकङ्कापुर्यां ययौ । तत्र पद्मोत्तरो राजा राज्यं कुरुते स्म । तस्याग्रे यावन्नारदो गतः तावत् पद्मोत्तरो राजा जगौ। क्व क्व गतस्त्वं? । कुतोऽत्रागाः? । नारदोऽवग्—हस्तिनागपुरेऽहं गतः । तत्र पञ्चानां पाण्डवानामन्तःपुरे यादृशी द्रौपदी अस्ति तादृशी तवान्तःपुरे नास्त्येकाऽपि पत्नी। ततः स पद्मोत्तरो राजा तामङ्गीकर्तुकाम एकं देवमाराध्य द्रौपदीं स्वपार्श्वे आनिनाय । ततः पद्मोत्तरो राजा जगौ—भो द्रौपदि! त्वं मया सह भोगान् भुंक्ष्व । इदं राज्यं तव वर्तते । पट्टकूलादि त्वं गृहाण । सर्वासां पत्नीनां त्वं मुख्या भव । त्वां पृष्ट्वैवाहं सर्वं कार्यं करिष्यामि । तदा बहुभिः प्रकारैस्तस्याः शीलं खण्डितुमुपक्रमः कृतो राज्ञा । तस्या द्रौपद्या मनागपि न मनो विकारं गतम् । द्रौपदी पञ्चपरमेष्ठिनमस्कारं कुर्वाणा षष्ठाष्टमादितपःपरा वभूव । इतः पञ्चापि पाण्डवाः कृष्णपार्श्वे गत्वा द्रौपदीगमनवृत्तान्तं प्रोचुः । कृष्णोऽवग्—साम्प्रतं न

ज्ञायते केन द्रौपदी हृता ?। इतो नारदः पुनस्तत्र कृष्णपार्श्वे समागात्। कृष्णोऽवग्—भो नारद! त्वया कुत्रचिद् द्रौपदी दृष्टा ?। नारदोऽवग्—धातकीखण्डमध्यस्थापरकङ्कास्वामिनः पद्मोत्तरस्य राज्ञोऽन्तःपुरे द्रौपदीतुल्या नारी एका दृष्टा। ततः कृष्णः पञ्चभिः पाण्डवैः सह सुस्थितदेवमाराध्य षडपि रथस्थाः समुद्रमध्ये भूत्वा तत्रापरकङ्कापुर्या बहिर्गताः। प्रथमं कृष्णं निषिध्य पाण्डवैः पद्मोत्तरेण सह युद्धं कृतम्। तत्र पाण्डवैर्हारितम्। ततः कृष्णेन तत्र युद्धं मण्डितम्। तेनापरकङ्केशेन पद्मोत्तरभूपेन सम्मुखं समेत्य पाण्डवैः कृष्णेन च सह युद्धं कृतं। पद्मोत्तरो भग्नो। वप्रमध्ये प्रविश्य प्रतोलीं दृढं दापयित्वा मध्ये स्थितः। ततः कृष्णः प्राकारस्योपरि स्थित्वा नरसिंहरूपं कृत्वा वप्रं तथा कम्पयामास यथा राज्ञो वपुरपि चकम्पे। लोकानां तदानीं गृहाणि पेतुः। पद्मोत्तरो राजा बिभ्यत् कृष्णस्य पार्श्वे समेत्य प्रणणाम। कृष्णस्य पादयोः पतित्वा क्षमयामास। मया मौढ्यं कृतं प्रथमं यद् द्रौपदी हृता। द्वितीयं मौढ्यं मया कृतं भवता सह युद्धं कुर्वता। ममोपरि कृपां कुरु। द्रौपदीमङ्गीकुरु। उत्तमानां प्रणामान्तः कोपो भवति। ततः कृष्णेन स्वरूपं कृतं। पुरमध्ये नीतः कृष्णः। पद्मोत्तरेण राज्ञा भक्तिः कृता भोजनदानेन। द्रौपदी समानीयान्तःपुरात् कृष्णायार्पिता। ततः कृष्णो द्रौपदीं महासतीं वाल-

॥ ३२७ ॥

यित्वा लात्वा पश्चाद्वलितः । इतस्तद्वीपोत्पन्नजिनपार्श्वे जम्बूद्वीपसत्कं कृष्णमागतं श्रुत्वा तत्रत्यो वासुदेवः समुद्रोपकण्ठे समागात् । द्वाभ्यां कृष्णाभ्यां शङ्खः पूरितः । शब्दौ मीलितौ । सागरमुत्तीर्य गङ्गातटे सर्वे समीयुः । पूर्वं पाण्डवा नावा नदीमुत्तीर्य कृष्णस्य बलं विलोक्यते इतिकृत्वा तैः नौर्न प्रेषिता । कृष्णो भुजाभ्यां नदीमुत्तीर्य पाण्डवपार्श्वं प्राप । ततः कृष्णेन रुष्टेन राज्यमुद्दाल्य जगृहे । दक्षिणमथुरा दत्ता कुन्तीवचसा । द्रौपदी हृष्टा । ततः स्वगृहे समागता सती पुण्यं चकार । कृष्णो द्वारिकायां गतः । एकदा श्रीनेमिनाथस्तत्र समवासार्षीत् । तत्र कुन्ती पञ्चभिः पुत्रैस्तत्पत्नीभिः सह नेमिं नन्तुं गता । श्रीनेमिनाथेन धर्मोपदेशो ददे । तथाहि—"माणुसखित्तजाई, कुलरूवारुग्गमाउयं बुद्धी । सवणुग्गह सद्धा संजमो य लोगंमि दुलहाइं ॥ १ ॥" इत्यादिधर्मं श्रुत्वा कुन्तीद्रौपद्यौ पञ्चापि पाण्डवाः सम्यक्त्वमूलां द्वादशव्रतीं जगृहुः । क्रमात् पञ्चापि पाण्डवाः स्वं पुत्रं राज्येऽभिषिच्य कुन्तीद्रौपदीयुताः श्रीगुरुपार्श्वे दीक्षां ललुः । ततो द्रौपदी नानाविधं तपः कुरुते । अन्येद्युः श्रीशत्रुञ्जये द्रौपदी साध्वी समागात् । तत्रापि बहुतपः कुर्वाणा क्रमादायुषः क्षये पञ्चमे स्वर्गे जगाम द्रौपदी । ततश्च्युत्वा क्रमात् स्तोकभवमध्ये द्रौपदी महासती मुक्तिं यास्यति । इति द्रौपदीमहासतीकथा समाप्ता ॥ २९ ॥

धारिणीकथा चन्दनबालाकथायां समस्ति ॥ ३० ॥

**सच्छीलपालनपरा, जीवाः सद्धर्मकारिणः । धारिणीव श्रयन्त्यत्र, परत्र च सुखश्रियम् ॥ १ ॥**

तथाहि—उज्जयिन्यां चण्डप्रद्योतो भूपः पृथ्वीं प्रशशास न्यायाध्वना । तस्य भूपस्य द्वौ सहोदरौ—पालकगोपालकौ । मिथः प्रीतिभाजौ भवतः स्म । अन्येद्युस्तत्र श्रीधर्मघोषसूरिः समागात् । तत्र धर्मं श्रोतुं गोपालकोऽगमत् । "संसाराम्बुनिधौ सत्त्वा, ऊर्मिभिः परिघट्टिताः । संयुज्यन्ते वियुज्यन्ते, तत्र कः कस्य बान्धवः? ॥ १ ॥ ऋतुर्व्यतीतः परिवर्तते पुनः, क्षयं प्रयातः पुनरेति चन्द्रमाः । गतं गतं नैव तु सन्निवर्तते, जलं नदीनां च नृणां च जीवितम् ॥ २ ॥" इत्यादि धर्मोपदेशं श्रुत्वा गोपालकः प्रव्रज्यां ललौ । पालकस्य द्वौ पुत्रौ बभूवतुः । एकोऽवन्तिवर्द्धनो द्वितीयो राष्ट्रवर्द्धनश्च । द्वावपि धर्मकर्मशास्त्रं पठतः स्म ।—"रूपयौवनसम्पन्ना, विशालकुलसम्भवाः । विद्याहीना न शोभन्ते, निर्गन्धा इव किंशुकाः! ॥ १ ॥ विद्वत्त्वं च नृपत्वं च, नैव तुल्यं कदाचन । स्वदेशे पूज्यते राजा, विद्वान् सर्वत्र पूज्यते! ॥ २ ॥" क्रमाद् द्वावपि पुत्रौ भूपपुत्र्यौ परिणायितौ । अन्येद्युरसारसंसारसुखं क्षणभङ्गुरं मत्वा अवन्तिवर्द्धनराष्ट्रवर्द्धनयोर्यथायोग्यं राजपदवीं युवराजपदवीं च वितीर्य

पालकः संयमं जग्राह । यतः—"जह चयइ चक्कवट्टी पवित्थरं तत्तियं मुहुत्तेण । न चयइ तहा अहन्नो दुब्बुद्धी खप्परं दमओ ॥ १ ॥" राष्ट्रवर्द्धनस्य भार्या धारिणी सच्छीलशालिनी बभूव । तस्याः पुत्रोऽवन्तिसेनोऽजनि । अन्यदा धारिणीमप्सरोनिभां वीक्ष्य राजा दूतीपार्श्वाद्ययाचे इति—मम पत्नी भव त्वम् । तदा तया जल्पितं—किमयं भूपो न लज्जते लघुभ्रातृपत्नीं याचमानः ?। परस्त्रीगमनात् पुरुषो नरकं याति । यतः— "विक्रमाक्रान्तविश्वोऽपि, परस्त्रीषु रिरंसया । कृत्वा कुलक्षयं प्राप, नरकं दशकन्धरः ! ॥१॥ ते कह न वंदणिज्जा, रूवं दट्ठूण परकलत्ताणं । धाराहयव्व वसहा वच्चंति महीं पलोयंता ? ॥ २ ॥ अलसा होन्ति अकज्जे पाणिवहे पंगुला होइ (णरा धन्ना) । परतत्तीसु य वहिरा जच्चंधा परकलत्तेसु ॥ ३ ॥ देवदाणगंधव्वा जक्खरक्खसकिंनरा । बंभयारिं नमंसंति दुक्करं जे करंति ते ॥ ४ ॥" एतद्धारिणीप्रोक्तं भूपः श्रुत्वा गूढमनाः स्थितः । राजा दध्यौ—भ्रातरि जीवति एषा मां नाङ्गीकरिष्यति। तेनादौ भ्रातरं हन्मि। पश्चादहमिमामङ्गीकरिष्यामि। एवं ध्यात्वाऽन्येद्युर्भूपो धारिणीमिच्छन् भ्रातरं हतवान् । धारिणी स्वकान्तं ज्येष्ठेन हतं मत्वा प्रच्छन्नं शीलरक्षार्थं सहसा कौशाम्ब्यां गता । धारिणी सगर्भा स्वं गर्भमनाख्याय समुत्पन्नवैराग्या महत्तरोपान्ते दीक्षां जग्राह । काले गर्भो ज्ञातो महत्तरया । हक्किता

सा—भो धारिणि! किमिदं त्वया कृतम्?। धारिणी जगौ—मया दीक्षाग्रहणावसरे ध्यातं, यद्यहं गर्भस्वरूपमकथयिष्यं पुरा तदा त्वया मह्यं दीक्षा न दास्यते स्म!। अतो मया गर्भस्वरूपं न प्रोक्तम्। ततः काले सुतोऽजनि। नाममुद्राभरणैरलङ्कृतं सुतं कृत्वा भूपगृहाङ्गणे मुक्तोऽङ्गजः। तदा क्षणान्तरेण तत्रागतेन जितसेनभूपेन गृहीतः स बालः। स्वगृहे नीत्वा पुत्रवत्तं स्थापयित्वा जन्ममहोत्सवपूर्वं मणिप्रभ इति नाम दत्तं राज्ञा। क्रमाद्राज्ञि परलोकं गते मणिप्रभो राज्येऽभिषिक्तोऽमात्यैः कृतः। इतोऽवन्तिवर्द्धनो राष्ट्रवर्द्धनभ्रातृवधोद्भूतपश्चात्तापात् धारिणीपुत्रस्यावन्तिसेनस्य स्वपुत्राभावाद्राज्यं वितीर्य गुरुपार्श्वे दीक्षां ललौ। सोऽवन्तिसेनो बली मणिप्रभं भूपं दण्डं याचते स्म। दण्डादानेन सर्वबलेन कौशाम्बीमवन्तीसेनो वेष्टयामास। तदा मात्रा साध्व्या तया तत्राभ्येत्य स्वरूपमुक्त्वा सुतौ युद्धान्निवारितौ। मिलितौ परस्परं। प्रीतिभाजौ भूपौ जातौ। ततो द्वावपि भ्रातरावुज्जयिनीं प्रति चलितौ। मातापि महत्तरा तत्राभ्येति। धर्मोपदेशं ददौ। यतः—“धर्म्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्बलं, धर्मेणैव भवन्ति निर्मलयशोविद्यार्थसम्पत्तयः। कान्ताराच्च महाभयाच्च सततं धर्म्मः परित्रायते, धर्मः सम्यगुपासितो भवतु वः स्वर्गापवर्गप्रदः॥ १॥” ततो द्वावपि भूपौ मातृपार्श्वे सम्यक्त्वमूलं द्वादशव्रतं ललतुः।

मार्गे धर्मोपदेशं शृण्वानौ द्वावपि भ्रातरौ जिनेन्द्रधर्मं कुरुतः स्म। धारिणी चिरं संयमं प्रतिपाल्य सर्वकर्मक्षयान्मुक्तिं ययौ। इति धारिणीकथा समाप्ता ॥ ३० ॥

**वैयावृत्त्यं वितन्वानः, साधूनां सततं जनः। पुष्पचूलेव लभते, सद्यः केवलिसम्पदम् ॥ १ ॥**
**देवाः कुर्वंति सान्निध्यं, श्रद्धाशीलप्रभावतः। कलावत्या यथा रश्मिः, प्रियायाः शङ्खभूपतेः! ॥ २ ॥**

तथाहि—इहैव जम्बूद्वीपे मङ्गलादेशभूषणे शङ्खपुरे प्रजानुकूलः श्रीमान् शङ्खभूपो राज्यं करोति स्म। तं भूपमेकदा सिंहासनस्थं गजश्रेष्ठिपुत्रो दत्तो मुदा ननाम। राजा प्राह—भो दत्त! यत् किञ्चित् कौतुकं दृष्टं भ्रमता भुवि तत्कथ्यतां त्वया। ततो जगौ—देवाहं! देवशालपुरे गतोऽभूवं वाणिज्यार्थम्। वाणिज्यसागरे यस्मादस्माकं श्रीः प्रवर्धते। तत्र यन्मया कौतुकं दृष्टं तस्य स्वरूपं वक्तुं न शक्यते। वदन्निति दत्तो नृपाग्रे चित्रपाटिकां न्यधात्। तत्र लिखितां काञ्चिद्वरां नारीं विलोक्य देवीति मन्यमानो व्यधूनयत् भूपपुरन्दरः शिरः। ततो दत्तः सस्मेरं प्राह—देव! नेयं देवी, किन्तु मानुषी विद्यते। राजाऽवक्—कस्येयं पुत्री ?। दत्तोऽवक्—देवशालपुरे विजयसेनभूपस्य

श्रीमती प्रियाऽभूत् । तस्य च पुत्री कलावती रूपलावण्यपराभूतामरी विद्यते । सा विधातुराद्या सृष्टिरिव सती क्रमात् सर्ववर्यधर्मकलाकुशला बभूव । उद्वाहयोग्यां तां पुत्रीं भूपो मत्वा विवाहमेलनचिन्तासागरे ममज्ज । इतोऽन्येद्युस्तया पुत्र्या पितुरग्रे प्रोक्तमिति । यो मे प्रश्नचतुष्टयीं पूरयिष्यति स एव मया परिणेतव्यः । ततो गाढतद्वरचिन्ताब्धौ भूपो निमग्नोऽतीवाभवत् । तस्याः पुत्र्या विवाहार्थं राजा स्वयंवरमण्डपं कारयामास । मासद्वयान्ते चैत्रशुक्लपक्षे एकादशीदिने लग्नमस्ति । सा पुनः कलावती जिनधर्मकुशलाऽस्ति! । एतन्मया तत्र व्यवसायार्थं गतेन दृष्टम् । तत्र च पुरे विजयसेनभूपस्य जयसेनाह्वं सुतं सर्पदष्टमहमजीवयम् । सुखासनसमारूढं कृत्वा राजा हृष्टस्तं पुत्रं स्वगृहमानयामास । ततो राजा मां सद्वस्त्राभरणादिदानात् सच्चकार पुत्रमिव । अन्यदा मां सभासमक्षं नरराजः समादिशत् । स्वबन्धोर्जयसेनस्य यथोपकृतं त्वया तथा स्वसुः कलावत्या अस्यास्तुल्यवरकथनेन मां वरचिन्तासागरादुत्तारय । तदा त्वां योग्यं मत्वा तस्या रूपं चित्रपटे लिखित्वाऽहमत्राऽऽगमम् । इदं हि रूपं वर्णिकामात्रं तस्या इहानीतं प्रभुविलोकनाय । यादृशमस्ति तस्या रूपं तादृशं देवोऽपि वक्तुं न क्षमः । यावती प्रभा भानोः प्रतिबिम्बेऽपि किं तादृशी दृश्यते ? । तद्बिम्बं पश्यन् भूपः क्षणं मुकुलितेक्षणो । धूनयित्वा च शिरो

दत्तं प्रति तदैवं मधुरमूचिवान् ( एषा मां समीहिष्यते कथम् ।?) ततस्तं राजानं खिन्नं दत्तः प्राह—स्वामिन् !
न क्रियते खेदः, चेतसा शकुनैः पुनः । नूनं कलावती सैव, पत्नी तव भविष्यति ॥ १ ॥ परमाराध्यतां देव!,
द्रुतं वागीश्वरी सुरी । यथा प्रश्नचतुष्टय्या, निर्णयो ज्ञायते त्वया ॥ २ ॥ ततः श्रीशङ्खभूपो ब्रह्मचर्यादिक्रियादि-
भिर्वाग्देवीं तथा तोषयामास यथा सा प्रत्यक्षीभूयावदत् । यतः—त्वत्पाणिपातयोगेन, शालभञ्ज्यपि तत्क्षणात् ।
कर्ता कलावतीप्रोक्तप्रश्नानां वर्णनिर्णयम् ॥ १ ॥ प्रणम्य देवीं वचनं जग्राह । ततो देवी तिरोदधे । ततः
कृतकृत्यो भूपः समं दत्तेन सत्वरं प्रतस्थे देवशालपुरं प्रति । तं भूपमागच्छन्तं श्रुत्वा विजयसेनो नृपोऽपि विजयं
पुत्रं शङ्खभूपतेः सम्मुखं प्रैषीत् । शङ्खस्य विजयो मिलितः । पुरमध्ये समहं प्रवेशितः स शङ्खो विजय-
सेनेन । अथ स्वयंवरे भूपाः समीयुः । उपविष्टा मञ्चोन्मञ्चेषु । शङ्खोऽप्युपविष्टः । ततः सुखासनारूढा सखी-
परिवृता धृतातपत्रा कलावती स्वयंवरमण्डपे आययौ । अथ प्राहरिकप्रतिहारीमुखात् समस्याचतुष्कं पृथक् पृथक्
कलावती पपृच्छेति—को देवः १ को गुरुः २ किं वा, तत्त्वं ३ सत्त्वं ४ च कीदृशम् ?। स्पष्टीकर्ताऽर्हति स्पष्टं,
कलावत्या वरस्रजम् ॥ १ ॥ स्वस्वप्रज्ञानुसारेण, ततः सर्वेऽपि भूधवाः । उत्तरं प्रददुर्नैव, मेने सा परमार्हती ॥ २ ॥

ततः शङ्खभूपः प्राह—एषा पाञ्चाली स्तम्भस्था अनयोक्तायाः प्रत्युत्तरं कथयिष्यति । इत्युक्त्वा पाञ्चालीमूर्ध्नि पाणि-कुशेशयं शङ्खभूपो ददौ यावत्तावत् स्तम्भस्था पाञ्चाली प्राह प्रश्नप्रत्युत्तरमिति—वीतरागः परो देवो १, महाव्रतधरो गुरुः २ । तत्त्वं जीवदया ज्ञेया ३, सत्त्वं चेन्द्रियनिग्रहः ४ ॥ १ ॥ ततः प्रमुदिता पूर्णकामा कामं कलावती । कण्ठे श्रीशङ्खभूभर्तुश्चिक्षेप वरणस्रजम् ॥ २ ॥ ततः कलावतीशीलप्रभावेण महौजसः । सामर्षा अपि भूपाला, न शङ्खे प्राभवंस्तदा ॥ ३ ॥ ततस्तयोर्विवाहोत्सवः कृतो मातापितृभ्याम् । ततो राजा परिणयने वराय जात्येभाश्वादीन् बहून् ददौ । मुत्कलाप्य श्वशुरवर्गं शङ्खभूपतिः कलावतीयुतः प्रतस्थे स्वपुरीं प्रति । दत्तोऽपि विजयसेनभूपादेशात् कलावत्या सह चचाल । एकस्यन्दनमारूढौ तौ दम्पती महामहोत्सवपुरस्सरं पुरमध्ये प्रविविशतुः । तया कलावत्या समं सुखमनुभवन् शङ्खभूपो भूयांसमनेहसं समक्षिपत् । अन्येद्युः स्वप्ने पीयूषकुम्भं प्रपूर्णमालोक्य पत्युः पुरः प्राह कलावती । श्रुत्वैतत्स्वरूपं भूपो हृष्टः प्राह—भो भद्रे ! तव पुत्रो वर्यो भविष्यति । इतः—मौक्तिकं ताम्रपर्ण्यां वा, देव्या गर्भं दधानया । अष्टमासी व्यतिक्रान्ता, विंशत्याऽभ्यधिका दिनैः ॥१॥ प्रसूयते किल स्त्री प्राग्, पितृगेहे इति श्रुतिः । विजयः स्वनरान् प्रैषीदित्याह्वातुं कलावतीम् ॥२॥ तेषां भृत्यानां

हस्तेन, सांशुकामङ्गदद्वयीम्। भगिन्यै प्रेषयामास, मूर्तं स्नेहमिवात्मनः॥ २॥ ते भृत्यास्तत्र गताः। राज्ञोऽग्रे कथितं तैः—कलावतीं प्रेषय पितृगृहे। राज्ञा न मानितम्। ततस्ते कलावत्यै सांशुकामङ्गदद्वयीं कुशलोदन्तकथनपूर्वं ददुः। ततस्ते पश्चाद्गताः। बन्धुस्नेहात् करे धृत्वा, तदानीमङ्गदे मुदा। भुजामूले महादेवी, वयस्याभिरनीनहत् ॥ १ ॥ ततः कलावती वर्ये अङ्गदे भुजामूले बद्धे दृष्ट्वा प्रमोदमेदुरा सखीभिः सह गवाक्षस्था वार्तां कर्तुं लग्ना। अहो प्रेमा प्रस्थिते हि, मयि तस्य चिरायुषः। येनेदमद्भुतं प्रैषि, केयूरद्वयमद्य मे! ॥ १ ॥ चिरादद्य मया प्राप्तं, वस्तु तत्पाणिसङ्गतम्। शोभते स्म तथा जातं, जन्म मे सफलं स्फुटम्! ॥ २ ॥ सख्योऽप्यूचुर्महादेवि!, तस्य विश्वाभिनन्दिनः। चन्द्रस्येव कुमुद्वत्यां, त्वयि प्रेमातिरिच्यते ॥ ३ ॥ तदानीमेतज्जल्पमानां कलावतीं सखीभ्यां राजा गवाक्षस्याधस्ताद् व्रजन् अशृणोत्। ततः समुत्पन्नातीवकोपो भूपो दध्यौ—एवंविधं कलावत्या, यद्यकृत्यं प्रजायते। तदा विधोः समुत्पन्नाऽङ्गारवृष्टिरसातकृत् ॥ १ ॥ बहिरेव ध्रुवं रक्तां, गुञ्जामिव चलेक्षणाम्। धिगिमां कपिवत् कामजाड्यलोलो नरः स्फुटम् ॥ २ ॥ तदिमां महाऽसतीमङ्गमाल्यमिव त्यजामि। इति गूढं ध्यायन् भूपः स्वस्थाने समागात्। ज्ञात्वा कलावत्या दुःखागमनं द्रष्टुमशक्नुवानो रविरस्तं गतः। प्रच्छन्नं नृपेण

मातङ्गयुगलमाकार्य प्रोक्तम्—इयं कलावती वने त्याज्या युवाभ्यां । हस्तयुगं साङ्गदं छित्त्वा युवाभ्यामानेयं मम पार्श्वे । ततस्तौ मातङ्गौ कलावतीं वने निन्यतुः । प्रोचतुश्च तौ—देवि ! न ज्ञायते सम्यक् केन दोषेण राजा त्वां त्याजयति ? । तव साङ्गदे भुजे छेत्तुमादेशो दत्तोऽस्ति। राज्ञ आदेशः कृतो विलोक्यते एवं । कलावती जगौ—भो मातङ्गौ ! युवयोर्न दूषणं। पत्युश्चापि न दूषणं। मम कर्मण एव दूषणम्। ततस्तौ मातङ्गौ तस्याः कलावत्याः साङ्गदे भुजे छेदयामासतुः। तदा कलावत्योक्तं तयोरग्रे—मम कर्मणेदं कृतं, तेन को दोषो भवतोः ?। तौ मातङ्गौ भुजे साङ्गदे लात्वा स्वपुरं प्रति चेलतुः। इतस्तत्र कलावती पुत्रमसूत। कलावती पुत्रं प्राह—तव यदि पितुर्गृहे जन्माभविष्यत् तदाऽनेकवाद्यनिनादाद्युत्सवः पित्रा करिष्यते स्म । अत्र तु शृगालादिशब्दैरुत्सवो जायमानोऽस्ति। इतस्तत्र नदीपूरो वृक्षादीनुन्मूलयितुमारेभे। परमेष्ठिनमस्कारं स्मृत्वा सा प्राह—पतिव्रताधर्मो यदि मे त्रिशुद्ध्या पालितोऽभूत् शीलं च पालितं मया सम्यग् भवति तदा मदीयौ भुजौ पुनर्भवौ भवेतां, नदीप्रवाहश्चानुकूलो भवतु। ततः शीलप्रभावेण तस्या भुजौ पुनर्नवौ जातौ । अत्रान्तरे कश्चित्तापसस्तत्राभ्येत्य प्राह—तवात्र स्थातुं न युक्तं। यतो भवती प्रासूत पुत्रम् । ततः कलावती जगौ—देवगुरुप्रसादात् सर्वं वर्यं समस्ति । ततः सा कुलपतेः पार्श्वे गता ।

कुलपतिना पृष्टा दुःखकारणं कलावती स्ववनवाससम्बन्धं प्राह । तापसाधिपतिः प्राह—भद्रे ! मा खिद्येथाः
वृथा । जानाम्यहं लक्षणैस्तव श्रेयांसि पुनर्भविष्यन्ति । एवमाश्वासिता तेन हृष्टा कलावती विजयसेनभूपपुत्री
तापसीभिः समं तस्थौ । इतस्ताभ्यां मातङ्गाभ्यां कलावत्याः साङ्गदे भुजे भूपाय दत्ते । राजा तु तयोरङ्गदयो-
र्विजयसेनाख्येत्यक्षराणि वीक्ष्य साकुलो दत्तमाहूय पप्रच्छ—को नु देवशालापुरादत्रागात् कल्ये ?। तेनोक्तं—तत्र-
त्या राजभृत्या आगता अभूवन् । देव्याः कृते भ्रात्रा अङ्गदद्वयं प्रेषितं विजयेन । तस्याः पार्श्वे समस्ति । श्रुत्वै-
तद्रूपो वज्राहत इव क्षणं भूत्वा सिंहासनात् पपात मुमूर्छ च । कथञ्चिच्चन्दनादिभिश्चैतन्यं लम्भितो राजा
पश्चात्तापपरो वक्षस्ताडयन्निदमूचे । यतः—अहो मे मूढकारित्वमहो मे मन्दभाग्यता । अहो मे निर्विचारित्व-
महो मम कुशीलता ! ॥ १ ॥ किमेतदित्यसौ पृष्टो, विलपन्निति मन्त्रिभिः । सलज्जं सानुतापं च, सपूत्कार-
मथोऽवदत् ॥ २ ॥ क यामि किमु वा वच्मि, क विशामि करोमि किम् ?। आत्मनैव मयाऽऽत्माऽसौ, हन्त कष्टे निपा-
तितः ॥ ३ ॥ अनादृत्य कुलाचारमप्यचिन्त्य निजोचितम् । धर्मच्छेदमनालोच्य, हा किं चक्रे दुरात्मना ? ॥ ४ ॥
लक्ष्मेव चन्द्रलेखायां, दुग्धे पूतरकानिव । हा हा ! दोषमसम्भाव्यं, तस्यां कथमभावयम् ? ॥ ५ ॥ तत् कस्य

दर्शयिष्यामि स्वकीयमाननं । मया मौढ्यात् प्रिया त्यक्ता । ततः प्रगुणीकृत्य चितामहं काष्ठभक्षणं करिष्यामि । ततोऽमात्याः प्रोचुः—स्वामिन् ! एका तावन्मृता देवी केनापि निजकर्मणा । द्वितीयं त्वमात्महत्यां कर्तुमिच्छसि । तस्माद्विवेकिन् ! अमुं कदाग्रहं मुञ्च । इत्यादि पौरामात्यानां युक्तियुक्तवचांस्यप्यनादृत्य नृपो वेगान्मृत्यवे काननेऽगमत् । समयज्ञो गजश्रेष्ठी कालक्षेपचिकीः मधुराक्षरमाह स्म श्रीशङ्खधरणीधवम्—भो राजन् ! दिनेशान् जिनेन्द्रानर्चय तवापदो गमिष्यन्ति । ततः प्रथमं जिनं पूजयितुं श्रीजिनप्रासादे गतो राजा । तत्र जिनं पूजयित्वा ततोऽमिततेजसं मुनिं वन्दितुं गतः । मुनिरिति देशनां ददौ—"जीवाः संसारकान्तारे, पूर्वकर्मवशेरिताः । वातप्रम्य इव व्यर्थं, भ्राम्यन्ति भ्रान्तिसम्भृताः ॥ १ ॥ सुखं सुखमिति भ्रान्ता, दुःखपृक्ताः पदे पदे ! । जीवाः क्लिश्यन्ति संसारे, वातोद्धूतपलाशव (त्) ॥ २ ॥ कल्पद्रुमिव मा हार्षीद्, भवोद्विग्नो भवी हहा । न सेवते जिनाधीशं, परत्रेह च शर्मदम् ! ॥ ३ ॥ दुष्प्रापं प्राप्य जन्मेदं, भवकोटिषु दुर्लभम् । कर्तव्यो हि तथा धर्मो, यथा स्यान्मुक्तिशर्म च ॥ ४ ॥ मुनेर्वचनमाकर्ण्य, सद्यः सञ्जातनन्दथुः । विशश्राम विशामीशस्तत्रैव खलु तां निशम् ॥ ५ ॥ अथ विभातकल्पायां निशि स्वप्नमालोक्य भूपो गुरोः पुरतः प्राह—"अपक्वैकफला

वल्ली, पतिता कल्पपादपात्। आरुरोह पुनः पूर्णफला सा तत्र तत्क्षणात् ॥ १ ॥" तं स्वप्नं श्रुत्वा गुरुराह—भवान् कल्पवल्लीमहीरुहः, वल्ली प्रिया ते, साऽसूत पुत्रं, साऽत्र समेष्यति। ततो हृष्टो राजा। पुरमध्ये समागात्। जनांस्तां द्रष्टुं प्रैषीत्। दत्तोऽपि भूपप्रेषितो वनाद्वनं भ्रमन् तापसवनमेकमद्राक्षीत्। तत्र गत्वा दत्तः कलावतीसम्बन्धं तापसं पप्रच्छ। प्रोवाच मुनिः—भद्र ! किं तया कार्यं तव ?। दत्तोऽवग्—शङ्खभूपस्य प्रिया न लभ्यते। तेन स भूपः प्रियावियोगान्मरिष्यति। ततो मुनिराह—अस्मिन् वने एका स्त्री सपुत्राऽस्ति। ततो दत्तः कलावतीं द्रष्टुं निर्ययौ। दूरतो दत्तमालोक्य, जाग्रच्छोका कलावती। रुरोद रोदसीकुक्षिम्भरिपूर्णप्रतिस्वनैः ॥ १ ॥ दत्तः प्राह स्वसर्मा त्वं, रोदीः कर्मफलं ह्यदः। अभुक्त्वा प्राग्भवोपात्तं, न मुच्यन्ते जिना अपि ॥ २ ॥ यतः—तद्विवेकिनि ! धीरत्वमादाय रथमारुह। स्वदर्शनसुधावृष्ट्या, नृपमाश्वासय द्रुतम् ॥ ३ ॥ पश्चात्तापपरो भूत्वा, वह्निमह्नाय सोऽविशत् (विशन्नह्नाय सोऽनलम्)। दिनमद्यतनं कष्टात्, स्थापितोऽस्ति नरेश्वरः ॥ ४ ॥ कुलीना मानमुन्मुच्य, प्रियकारुण्यतस्ततः। नत्वा कुलपतिं सद्य, आपप्रच्छ कलावती ॥ ५ ॥ ततस्तेनापि दत्ताशीः, प्रहिता हितमिच्छुना। चचाल सह दत्तेन, साङ्गजा विजयाङ्गजा ॥ ६ ॥ आकर्ण्याथ पुरोपान्ते समायातां कलावतीं राजा हृष्टः पुरप्र-

वेशमहोत्सवं तस्याश्चकार । प्राह च भूपः—निर्दोषाऽपि तथा भद्रे !, यन्मया त्वं विडम्बिता । मोचिता च वने तन्मे, क्षम्यतां देवि! दुष्कृतम्! ॥१॥ ततः कलावतीयुतो राजा सुखेन राज्यं चकार। कलावतीपुत्रस्य जन्ममहोत्सवं कृत्वा स्वप्नानुसारतः पुष्पकलशेत्यभिधां स्वसूनोर्ददौ । कलावत्याऽन्यदोक्तं—स्वामिन्नहं केन दोषेण त्वया वने त्याजिता? । राजाऽवक्—भो भद्रे! त्वयि दोषो न मनाग् विद्यते । किन्तु ते प्राग्भवाचीर्णं कर्म तत् विद्यते। मया त्वं भुजे साङ्गदे दधाना सखीपार्श्वे (दृष्टा, त्वं) 'तेन प्रेमपात्रेण मे इदं दत्त'मिति प्राह तदा तच्छ्रुतं मया। ततो मया रुष्टेन तव भुजच्छेदः कारितः। भूपोऽवग्—प्रिये! श्रीअमिततेजा मुनिर्वने समागतोऽस्ति। तस्य पार्श्वे गत्वा तव प्राग्भवस्वरूपं पृच्छ्यते साम्प्रतम् । ततः कलावतीयुतो राजा मुनिपार्श्वे धर्मं श्रोतुं ययौ । देशनान्ते महीपालः पप्रच्छ—भगवन्! किं कर्म कृतं कलावत्या परभवे ? । येन कर्मणा निर्दोषाया अस्या मया कथं (ऽकृपं) छेदितौ भुजौ ? । मुनिः प्राह—अस्ति श्रीमद्विदेहोर्व्यां श्रीमहेन्द्राह्वं पुरम्। तत्र नरविक्रमो राजा राज्यं चकार । लीलावती तस्य जाया। असूत पुत्रीं सुलोचनाम्। मातापित्रोर्महाप्रेमपात्रं सुलोचनाऽभूत् । सा प्राप तारुण्यं क्रमात् । पुत्र्यामुत्सङ्गस्थितायां भूपस्य केनचित् राजकीर उपायनीकृतः। ततः कौतुकिना राज्ञा पृष्टः कीरः प्राहाशीर्वादवच-

नेन ।—स्फुरत्तमःक्षपाघाती, राजतेजोऽभिवर्द्धकः । भाति प्रतापभानुस्ते, राजन्! विश्वावभासकः ॥ १ ॥ प्रीतेन राज्ञा तस्मै नराय बहुदानं दत्त्वा पुत्र्यै राजशुको दत्तः। सुलोचना हृष्टा । तं शुकं गृहीत्वा स्वस्थाने समेत्य स्वर्ण-पञ्जरेऽक्षिपत् ।—शर्कराशकलैः शालिदाडिमाफलभक्षणैः । हारहूरादिपानैश्च, प्रमोदात्तमपोषयत् ॥ १ ॥ तं शुकं करस्थं हृदयस्थं अंससंस्थं पञ्जरस्थं पाठयन्ती सुलोचना व्यनोदयत् । यतः—भोजने शयने राजस्थाने पाने वने गृहे । योगीव मानसैकाग्र्यं, नामुञ्चत्तं सुलोचना ॥ १ ॥ अन्येद्युर्वने तं शुकं गृहीत्वा सखीयुता गता । तत्र सीमन्धरप्रासादे शुको दृष्ट्वा श्रीवीतरागं चेतस्यचिन्तयत् । 'दृष्टपूर्वमिदं बिम्बमीदृक् क्वापि मया पुरे'ति भावयन् जातिस्मृतिं प्राप्य पूर्वभवं शुकः सस्मार । चारित्रं सुगतिप्रदं पूर्वभवे प्राप्तवान् ।—अध्यैषि सर्वशास्त्राणि, क्षयोपशमतस्ततः। क्रियां पुनरकार्षं न, सर्वथा पठनैकधीः ॥ १ ॥ वस्त्रपुस्तकपात्रादिमूर्च्छोनूदिततत्त्वधीः । परोपकारिणीकृत्य, मुधा ज्ञानमहारयम् ॥ २ ॥ व्रतं विराध्य पर्यन्तमसंसाध्य मुधाव्रतः । विपद्य काननेऽमुष्मिन्नहं राजशुकोऽभवम्! ॥ ३ ॥ प्रागभवाभ्यासितविद्यावशात् तिर्यग्भवेऽपि पण्डितोऽभूवम् । तत्कथं ज्ञानदीपेऽहं, करप्राप्तेऽप्यपुण्यवान् । तिर्यग्जन्मोदधौ मग्नः, स्खलच्चरणपद्धतिः ? ॥ १ ॥ अतः परं प्रभुं श्रीसीमन्धरं प्रणम्य

मया भोक्तव्यमित्यभिग्रहं शुको ललौ । सुलोचनाऽपि तीर्थेशं, नत्वाऽभ्यर्च्य च भक्तितः । सपञ्जरं तमादाय, निजमन्दिरमासदत् ॥ १ ॥ कीरं करेऽन्यदाऽऽदाय, राजकन्या सुलोचना । भोक्तुं यावदुपाविक्षत्, स्मृत्वा स्वनियमं शुकः ॥ १ ॥ तावन्नमोऽरिहंताणमित्युक्त्वा च नभोऽध्वना । उदडीयत तीर्थेशं, नन्तुं चैत्यं जगाम च ॥ २ ॥ युग्मम् । स्वैरं सीमन्धरं नत्वा, तत्रैवाग्रे त्रिशुद्धितः । विजहार फलाहारैः, प्रीतिश्रीकुसुमाकरैः ॥ ३ ॥ इतो राजतनूजायां, क्रन्दन्त्यां तद्वियोगतः । धावन्ति स्म तदादातुं, पयोधिं गरुडा इव ॥ १ ॥ छिन्नपादपे ते राजसेवकाः शाखिनि निविष्टं तं शुकं बद्ध्वा भूपालपुत्र्या अग्रे उपनिन्यिरे । सा प्रेममन्मनालापैः करेणादाय जगौ शुकमिति । जननीतुल्यां मां त्यक्त्वा कथं गतः ?। न विश्वासमतः परं तव करोमीति जल्पन्ती राजपुत्री सुलोचना शुकस्य गतिभङ्गाय पक्षौ चिच्छेद । ततस्तं काष्ठपञ्जरे चिक्षेप । शुकोऽप्यचिन्तयत् धिङ् मे !, पराधीनत्ववेदनाः । क्रियां नाकरवं मूर्खः, स्वाधीनामपि हा तदा ! ॥१॥ सह कलेवर ! खेदमचिन्तयन्, स्ववशता हि पुनस्तव दुर्लभा । बहुतरं च सहिष्यसि जीव ! हे, परवशे नच तत्र गुणोऽस्ति ते ॥२॥ इत्यादिचिन्तापरः शुकश्रुणिममुञ्चत् । दुःखितोऽभूत् । स मृत्वाऽनशनेनाथ कतिपयदिवसान्तरे देवः सौधर्मकल्पे भासुरोऽभूत् । सुलोचना

कीरस्य दुःखान्मृत्वाऽनशनेन मृत्युना सौधर्मेऽभूत् प्रिया तस्य। बुभुजाते च तौ सुखम्। राजन्! शुकजीवस्त्वं शङ्खनामा त्वं ततश्च्युतो बभूव। सुलोचनाजीवः पुनरेषा कलावती। प्राग्भवे यत्कलावत्या पक्षौ छिन्नौ शुकस्य ते तत्कर्मविपाकेन त्वयाऽस्याः छेदितौ करौ। सर्वस्य कर्मणोऽवश्यं, शुभस्याप्यशुभस्य च। दशधा बहुधा चैव, विपाकः परिपच्यते ॥ १ ॥ ततस्तौ शङ्खकलावत्यौ दम्पती जातिस्मृतिं प्राप्य चारित्राभिलाषिणौ बभूवतुः। निवेश्य स्वराज्ये पुत्रं पुष्पकलशाख्यं शङ्खकलावत्यौ गुरोः पार्श्वे दीक्षां जगृहतुः। प्रपाल्य चारित्रं चिरं तौ दम्पती स्वर्गमवापतुः। ततश्च्युतौ नृभवं प्राप्य प्राप्तसंयमकेवलज्ञानौ मुक्तिं गमिष्यतः। इति कलावतीकथा समाप्ता ॥२१॥

पुष्पचूलाकथा अन्निकापुत्राचार्यकथायां ज्ञेया ॥ २२ ॥

[ पउमावई[1] य गोरी,[2] गंधारी[3] लक्खमणा[4] सुसीमा[5] य। जंबुवई[6] सच्चभामा[7] रुप्पिणि[8] कण्हऽट्ठमहिसीओ ॥४॥ ]

शीलादिरुचिरं धर्मं, कुर्वाणो मानवोऽनिशम्। सत्यभामेव लभते, साधुवादं पदे पदे ॥ १ ॥

तथाहि—द्वारवत्यां कृष्णो राज्यं करोति स्म। अन्यदा नारदो भ्रमन् केलिकुतूहली हरिमन्दिरमभ्यगात्। हरिः कतिचित् पदान् सम्मुखं गत्वा मुनिं ननाम। तत्र स्थित्वा क्षणं क्रीडालोलः शुद्धान्तमीयिवान् मुनिः। तदा

सत्यभामया वदनं दर्पणे वीक्षमाणया नारदो न नमस्कृतः। देवाधीश्वरप्रिया अपि ममावज्ञां न कुर्वन्ति स्म । एषा पुनरहंयुत्त्वादौचित्यमपि नाचरत् । क्रुद्धो नारदो व्योममार्गेण कुण्डिनपुरं गतः। रुक्मिराजस्वस्रा रुक्मिण्या सत्कृतस्तत्र । ततस्तस्याः पुरो हरिगुणानाचष्ट । कृत्वाऽनुरागिणीं विष्णौ तां रुक्मिणीं तस्या रूपं चित्रपटे लिखित्वा कृष्णस्य दर्शयामास । कृष्णोऽवग्—कस्या रूपमिदं? । नारदो जगौ—रुक्मिभूपतेर्लघुः स्वसा रुक्मिणी । कन्येयम् । तदा तेन वर्ण्यमानान् गुणानाकर्ण्य कृष्णोऽनुरागभारं बभार तस्याम् । कृष्णः प्राह—भो ऋषे! तथा कुरु यथा ममेयं पत्नी भवति । मुनिराह—मया त्वय्यनुरागिणी भृशं कृताऽस्ति । दूतं तत्र प्रेष्य मार्गय तां त्वम् । अहं तथा करिष्ये यथा तव पत्नी भविष्यति । विचारो न कर्तव्यः । कृष्णोऽभ्यर्च्य तं रुक्मिणीं याचितुं दूतं प्राहिणोत् रुक्मिणं प्रति । दूतस्तत्र गत्वा कृष्णोक्तं प्रोक्तवान् । ततो रुक्मी प्राह—गोपाय भगिनीमहं न दास्यामि । पुरा मयेयं शिशुपालाय दत्ताऽस्ति । तं वरं विना नासौ शोभां लभते । रत्नं हेमाश्रितं भाति, ज्योत्स्ना चन्द्राश्रिता पुनः । नागवल्ल्या मुखं यद्वत्तथेयं तेन निश्चितम् ॥ १ ॥ इत्याद्युक्त्वा दूतं पश्चात् प्रेषयामास । रुक्मीदूतः पश्चादागत्य कृष्णाय रुक्मिप्रोक्तं प्रोक्तवान् । इतो रुक्मिणीपितृस्वसा प्राह

रुक्मिण्यग्रे—त्वं विष्णुना याचिता। परं तव भ्राता तस्मै न दत्ते। तं निराकृत्य त्वां शिशुपालाय दास्यति। तदा
रुक्मिणी जगौ—मया विष्णुरेवाङ्गीकर्तव्यः। तदा पितृस्वसा रुक्मिणीं केशवे रक्तां निश्चिकाय। पितृस्वसा
कृष्णाय ज्ञापयामास। त्वयि रुक्मिणी सानुरागाऽस्ति। तेन त्वया गुप्तवृत्त्या माघाष्टमीदिने समागन्तव्यम्।
नागपूजामहोत्सवच्छलेनाहं रुक्मिणीं वने आनयिष्यामि। ततस्त्वया रुक्मिणी अङ्गीकार्या। इतश्च कुण्डिन-
पुरे कृतवैवाहिकमहोत्सवे शिशुपालः पाणिग्रहणोत्सवोत्सुकोऽभ्यगात्। विज्ञाय शिशुपालस्यागमं कलिप्रिय-
मुखात् रथद्वयारूढौ शीरिशार्ङ्गिणौ तत्र जग्मतुः। तदा पितृस्वसा पुरस्कृतां रुक्मिणीं प्रति प्राह—भद्रे! समागतो
दूरात्त्वदीप्सितः पतिः। मा विलम्बं कुरु। रथं समारुह। तदा पितृस्वसुक्त्या रुक्मिणी तथाऽकरोत्। तदा
पितृस्वसा विष्णुं केनाप्यभज्यमानवैभवं मत्वा स्वदोषापहाराय गाढं पूच्चक्रे—धावत धावत! भो ह्रियते ह्रियते
रुक्मिणी हरिणा बलात्!। पूरयित्वा पाञ्चजन्यं स्वमनोरथं च लक्ष्मण(बल)युक् कृष्णः स्वपुरं प्रति चचाल। अथ
भूरिबलयुतौ दमघोषरुक्मिणौ वादित्रनिनादैरोदसी पूरयन्तौ रुक्मिणीं हृतां ज्ञात्वा तत्पृष्ठौ दधावतुः। रुक्मिणी
वर्धी सेनां दृष्ट्वा चागच्छन्तीं प्राह—युवामेकाकिनौ नाथ!, तौ त्वसङ्ख्यबलान्वितौ। मत्कृतेऽयमपायोऽभू-

द्युवयोराकुलाऽस्मि तत् ॥ १ ॥ ततः कृष्णः प्राह—मा भैषीस्त्वं रिपुच्छेदि, शौर्यं पश्येति नौ ब्रुवन्। तद्वीच्छिदे हरिस्तालीं, चिच्छेदैकेन पत्रिणा! ॥ २ ॥ प्रिये! मदग्रे एतौ वराकौ काकाविव गमिष्यतो नाशमित्युक्त्वा कृष्णो मुद्रिकावज्रं घटवदचूर्णयत्। ततः युद्धसंरम्भिणं कोपात् स्वानुजं वीक्ष्य रथी बलस्तत्रागृह्य सप्रियः प्रैषीत्। स्वयं तत्रैव तस्थिवान्। रुक्मिणी प्राह—स्वामिन्! कृष्ण तथा त्वया युद्धं कार्यं यथा क्रूरोऽपि रुक्मिभूपालो रक्षणीयो रणाङ्गणे!। रथेन जविना गेहं, प्रस्थिते सप्रिये हरौ। अमन्थत्तूर्णं स क्षमाभृतो वैरिबलार्णवम् ॥१॥ हलेन कुलिशेनेव, विद्विषो बलसूदनः। मूसली पातयामास, दन्ताबलः शिलोच्चयान् ॥ २ ॥ तदानीं घोरे रणे जायमाने भीतः शिशुपालो नंष्ट्वा क्वापि जगाम। पुनः क्षणाद्युद्धं कर्तुं शिशुपालो डुढौके रुक्म्यपि च। तदानीं युद्धं कुर्वता नारायणेन शिशुपालशिरः छिन्नं कमलनालवत्। जगादैवं बली रुक्मिणं प्रति—रुक्मिणीवधूवचनान्मुक्तोऽसि गच्छ जीवितं लात्वा। तत्रैव पुरं निवेश्य रुक्मी तस्थौ। कृष्णस्तु द्वारकाया बहिरुद्याने समागात्। स्वपुरे स्वर्गपुरसोदरे दर्शिते हरिणा रुक्मिणी प्राह—इदं वर्यं पुरमस्ति। परं त्वयाऽहं छलेनात्रानीताऽस्मि। हरिराह-त्वया खेदो न कार्यः, अहं त्वां सर्वासु पत्नीषु मुख्यां करिष्यामि। ततो गान्धर्वविवाहेन परिणेयां हरिः परिणिन्ये।

पुरातनीं लक्ष्मीमूर्तिमुत्थाप्य रुक्मिणीं हरिरतिष्ठिपत्। ततो गृहे समागात्
उद्याने लक्ष्मीधवलगृहसोदरे पुरातनीं लक्ष्मीमूर्तिमुत्थाप्य रुक्मिणीं हरिरतिष्ठिपत्। ततो गृहे समागात्
कृष्णः। सत्यभामया प्रोक्तं—त्वया कीदृशी प्रियाऽऽनीताऽस्ति ?। कृष्णोऽवक्—सुन्दरोद्याने मुक्ताऽस्ति यस्मिन् श्रीगृह-
मस्ति। ततः सत्यभामा कृष्णान्यपत्नीयुता चचाल। मार्गे श्रीगृहं प्राप। तत्र रुक्मिणीमुपविष्टां वीक्ष्य लक्ष्मी-
भ्रान्त्या तस्याः पादयोः पपात। ततस्तां प्राह—भो लक्ष्मि! त्वं सर्वस्य वाञ्छितं दत्से। तेन मम सर्वस्त्रीषूत्कृष्टं रूपं
कुरु। तयोक्तं—भविष्यति तवोत्कृष्टं रूपम्। अग्रे सत्यभामा रुक्मिणीं द्रष्टुं चचाल। तदा रुक्मिणी उत्थिता
श्रीस्तत्रोपविष्टा। ततः सत्यभामा पश्चाद्वलित्वा कृष्णं प्राह—त्वयाऽहं वाहिता। अस्याः पादयोः पातिताऽस्मि। अहं
मुग्धा। ततः कृष्णो हसित्वा प्राह—भो भामे! इयं त्वया श्रीबुद्ध्याऽऽराधिता। ततोऽतः परमसौ पट्टराज्यस्तु।
ततः क्रुद्धा सत्यभामा स्वगृहं ययौ। एवं सर्वासु भार्यासु रुक्मिणीं मुख्यां कृत्वा कृष्णो राज्यं करोति स्म।
अन्येद्युः श्रीनेमिपार्श्वे धर्मं श्रोतुं गता। तदा तत्र प्रभुणा प्रोक्तं जीवदयामयं धर्मं श्रुत्वा रुक्मिणी दीक्षां ललौ।
खड्गधारासहोदरं तीव्रं तपस्तप्त्वा क्रमात् क्षीणकर्मा रुक्मिणी मुक्तिपुरीं जगाम। इतिरुक्मिणीकथा समाप्ता ॥ २२ ॥
द्वारकायां पुरि वसुदेवपुत्रः श्रीकृष्णस्त्रिखण्डाधिपो न्यायाध्वना पृथ्वीं पालयामास। तेन कृष्णेन पद्मावती

गौरी गान्धारी लक्ष्मणा सुसीमा जाम्बूवती सत्यभामा रुक्मिण्यभिधा अष्टौ राजपुत्र्यो महामहोत्सवपूर्वं पृथक्
पृथक् परिणीताः । अष्टौ अग्रमहिष्यः कृताः कृष्णेन । एतासां परिणयनस्वरूपं विस्तरात् श्रीनेमिनाथचरित्रे
ज्ञेयम् । समुद्रविजयराजपुत्रः श्रीनेमिकुमारस्तृणवद्राजीमत्यादि राज्यं च त्यक्त्वा वर्षं यावद्दानं दत्त्वा श्रीगिरि-
नारगिरौ संयमं जग्राह। क्रमात् केवलज्ञानमपि प्रपेदे । स श्रीनेमिजिनोऽन्येद्युर्भव्यजीवान् प्रबोधयन् द्वारकायां
बहिरुद्याने समवासार्षीत्।प्रभुं तत्र समवसृतं श्रुत्वा कृष्णो दध्यौ।अद्य मम भ्राता श्रीनेमिरागतोऽस्ति। तेन गत्वा
वन्दिष्ये तं जिनम् । ततस्तस्मै वर्धापनकाय पारितोषिकं ददौ। तत्र धर्मं श्रोतुं श्रीकृष्णसमुद्रविजयराजवसुदेवा-
दयो बहवो नृपा गताः। प्रभुणेति धर्मोपदेशो ददे । तथाहि–"स्वर्गस्तस्य गृहाङ्गणं सहचरी साम्राज्यलक्ष्मीः शुभा,
सौभाग्यादिगुणावलिर्विलसति स्वैरं वपुर्वेश्मनि । संसारः सुतरः शिवं करतलक्रोडे लुठत्यञ्जसा, यः श्रद्धाभर-
भाजनं जिनपतेः पूजां विधत्ते जनः॥ १ ॥ रत्नानामिव रोहणः क्षितिधरः खं तारकाणामिव, स्वर्गः कल्पमहीरुहा-
मिव सरः पङ्केरुहाणामिव । पाथोधिः पयसामिवेन्दु महसां स्थानं गुणानामसावित्यालोच्य विरच्यतां भगवतः
सङ्घस्य पूजाविधिः ॥ २ ॥" देशनान्ते श्रीकृष्णः पप्रच्छ–भगवन् ! ममामूरष्टौ अग्रमहिष्यो जाया वर्तन्ते

ताः सर्वाः सत्य एव अथवा न सन्ति ?। श्रीनेमिनाथो जगौ—सर्वा अग्रमहिष्यः सत्य एव । ततः कृष्णः प्रोवाच—भगवन्! वर्षमध्ये का सर्वोत्कृष्टा तिथिर्विद्यते ?। प्रभुः प्राह—मार्गशीर्षस्य शुद्धा एकादशी सर्वोत्कृष्टा विद्यते!। एवं कथमुच्यते ? । श्रीनेमिनाथो जगौ—मार्गशीर्षस्य शुद्धायामेकादश्यां श्रीअरजिनस्य दीक्षा। श्रीमल्लिनाथस्य जन्म दीक्षा ज्ञानं च । श्रीनमिनाथस्य दीक्षाऽभूत् । यथाऽस्मिन् भरते पञ्च कल्याणकानि जातानि तथा शेषेषु भरतेषु ऐरावतेषु पञ्चसु पञ्चसु पञ्च पञ्च कल्याणकानि। एवं सर्वकल्याणकानि पञ्चाशत् भवन्ति। अतः कारणात्तेषु कल्याणेषु विशेषतया तपः कार्यम् । ततः कृष्णो जाम्बुवत्यादिपत्नीयुतस्तां तिथिमारराध विशेषात् । ततो लोकैरपि एकादशी तिथिराराधिता । अद्यापि लोकैस्तां तिथिं मुक्त्वा सर्वा एकादश्यो मूढैराराध्यन्तेऽपुण्यवद्भिः । तासां कृष्णस्य पत्नीनां देवैरपि समेत्य शीलचालनं न कृतं । पुनर्न मनाग् चलिताः सत्यभामादयः । उभयकालं प्रतिक्रमणं त्रिकालं जिनपूजाः सर्वाः सत्यभामादयः कुर्वते। क्रमादवसरे श्रीनेमिनाथपार्श्वे दीक्षां ललुः । ततो निरंतरं यतिनीपार्श्वे षष्ठाष्टमाऽऽदि तपः कुर्वते तथा यथा क्षीणकर्मलेपा जाताः । श्रीशत्रुञ्जये गत्वा तीव्रं तपः कुर्वाणाः केवलज्ञानं। स्वस्वायुषः क्षये मुक्तिं ययुः। इति कृष्णाग्रमहिषीकथाः सङ्क्षेपात्, विस्तरात्स्वस्थाने ज्ञातव्याः ॥ ३४ ॥

[जक्खा[१] य जक्खदिन्ना[२], भूया[३] तह चेव भूयदिन्ना[४] य। सेणा[५] रेणा[६] वेणा[७], भइणीओ[३५] थूलभद्दस्स ॥५॥]

एतासां कथा श्रीस्थूलभद्र—श्रीयककथयोरन्तरे ज्ञातव्या । इति यक्षादिकथा समाप्ता ॥ ३५ ॥

[इच्चाइ महासइओ, जयंतु अकलंकसीलकलियाओ। अज्जवि वज्जइ जासिं जसपडहो तिहुयणे सयले!॥६॥]

अतोऽत्र कासांचिदगृहीताभिधानां चरित्राणि कथ्यन्ते ! ।

पालयन्तो जनाः शीलं, सलीलं शुभभावतः । लभन्ते मुक्तिशर्माणि, सद्यः शीलवती[३६]व सा ! ॥ १ ॥

तथाहि—जम्बूद्वीपमध्ये दक्षिणभरतभुवि श्रीनन्दवननामधेयं पुरं राजते । तत्रानेकभूपसेव्योऽरिमर्दननामा राजा राज्यं कुरुते स्म । अस्य रत्नाकराभिधः श्रेष्ठी राजमान्यो विद्यते । तस्य श्रेष्ठिनः श्रीनाम्नी पत्नी निरुपमगुणमणिखानिर्विद्यते । श्राद्धधर्ममनाबाधं पालयन् श्रेष्ठी सुखहेतुं पुत्रं चिरेणापि कालेन न लेभे । पुत्राभावदुःखपीडिता श्रीरन्येद्युः श्रेष्ठिनमाचष्ट—चैत्याग्रे जिननाथस्य, स्वामिन्नुपवने पुरः । देवी व्यक्ता महाशक्तिरास्तेऽजितबलाभिधा ॥ १ ॥ सा च पुत्रानपुत्राणां, निर्धनानां धनानि च । दुर्भगानां च सौभाग्यमाधत्ते सेविता सती ॥ २ ॥ अपुत्ताण पुत्तं अवित्ताण वित्तं, अविज्जाण विज्जं असुक्खाण सुक्खं । अचक्खूण चक्खू सरोगाणऽरोगं, मणोवंछि-

यत्थं सयं देइ एसा ॥ ३ ॥ तस्मादार्यपुत्र! पुत्रार्थं तस्या उपयाचितुमर्हसि । पुत्रार्थे हि विधीयन्ते स्वप्राणा अप्युपायनम् । तेन श्रेष्ठिनाऽऽराधिता देवी प्राह—तवाधुना पुत्राभावकृदन्तरायकर्म क्षयं गतं। पुत्रो भविष्यति । क्रमाच्छ्रेष्ठिनः पुत्रोऽभवत्। भाग्ययोगात् फलत्येव काले स्वाराधिता क्रिया। अथ जन्मोत्सवं कृत्वा सूनोरजितसेनेति नाम श्रेष्ठी ददौ । क्रमाद्बाल्यमतिक्रम्य यौवनश्रियं प्राप । अजितसेनपुत्रस्य तस्यानुरूपकन्यायै श्रेष्ठी रत्नाकरो बुद्धिमानिव शास्त्रं सन्दोहमानो दध्यौ। कन्यां गुणैस्तुल्यां यद्येष मम नन्दनो लभते तदा वरम्। यतः—

"निर्विशेषः प्रभुः पारवश्यं दुर्विनयोऽनुगः। दुष्टा च भार्या चत्वारि, मनःशल्यानि देहिनाम् ॥ १ ॥" इतश्च व्यवसायार्थं तेनैव श्रेष्ठिना प्रहितः पुरा कोऽपि पश्चादभ्येत्य वणिक्सुतस्तदन्तिकमुपाविशत् ।—व्यवहारस्वरूपं च, स पृष्टः श्रेष्ठिना कृती। आयव्ययादिकं सर्वं, व्याजहार यथाविधि ॥ १ ॥ ततः पश्चादागच्छन्नहं मङ्गलपुर्यामगां। तत्र जिनदत्तश्रेष्ठिना सह व्यवसायं कुर्वन् एकदा भोजनाय निमन्त्रितोऽहमद्राक्षं कन्यकां तत्रैकामद्भुताकाराम् । ततो भोजनानन्तरं मया पृष्टं—श्रेष्ठिन्नियं ते देवकन्येव का कन्या विद्यते? । श्रेष्ठी प्राह—ममेयं शीलवत्याह्वा पुत्री वरयोग्याऽस्ति । तादृशो वरो तद्योग्यो न मिलति तेनातीव चिन्ता चेतसि विद्यते मम । यतः—" किं प्राप्स्यति

वरं श्रेष्ठं?, तदिष्टा किं भविष्यति?। किमसौ श्वशुरादीन्वा, स्वगुणै रञ्जयिष्यति? ॥ १ ॥ पालयिष्यति शीलं किं?, प्रसविष्यति किं सुतम्?। श्वशुरादिकवर्गोऽस्याः, कथं वा तोषयिष्यति? ॥ २ ॥ मा भवन्तु सपत्न्योऽस्या, दुष्येयुर्मा स्म मातरः। इत्थं पितृगृहे कन्या, मूर्त्ता चिन्तेव वर्द्धते ॥ ३ ॥" एषा पुत्री गुणमाणिक्यरोहणाचलसोदरी विद्यते। वरः सदृशो न दृश्यते। मयोक्तं—तत्र चिन्तां मा कुरु। श्रीनन्दने पुरे रत्नाकरश्रेष्ठिनः पुत्रोऽजितसेनो विद्यते। स तव पुत्र्या योग्योऽस्ति। ततो जिनदत्तोऽवक् मां प्रति—भो भद्र! त्वया साधूक्तं। वरचिन्तोदधौ पतितोऽहं भवताऽद्योद्धृतः। एवमुक्त्वा तेन श्रेष्ठिना स्वसुतां दातुं वरविलोकनार्थं च स्वपुत्रो जिनशेखरः प्रहितोऽस्ति मया सार्धमत्र। स च मद्गृहे विद्यते। रत्नाकरः श्रेष्ठी जगौ—तर्हि स आकार्यताम्। ततो वणिजा तत्रानीतो जिनशेखरः। जिनशेखरेण वरं विलोक्य भगिन्या विवाहो मेलितः। ततोऽजितसेनस्तत्र गतवान्। शीलवतीं परिणीयाजितसेनो महामहःपूर्वं पश्चादागात्। रत्नाकरः श्रेष्ठी तया स्नुषया विनीतया हृष्टः सन् स्वं कृतार्थं मन्यते स्म। यतः—"स्नुषया वर्यया स्वीयकुलगेहप्रदीपया। त्रिवर्गसारगार्हस्थ्यं, मन्यते मानवः खलु ॥ १ ॥" अन्यदा मध्यरात्रौ शिवाशब्दं श्रुत्वा घटं मस्तके कृत्वा च शनैर्गृहान्निस्ससार। तदा श्रेष्ठी तां

स्नुषामकाले गच्छन्तीं दृष्ट्वा दध्यौ—इयं स्नुषा मया सुशीला ज्ञाता पूर्वम् । अधुना त्वेवं कुर्वाणा दृश्यमानाऽस्ति । ततो न ज्ञायते स्त्रीणां स्वरूपं केनापि सम्यक् । यतः—"अश्वप्लुतं माधवगर्जितं च, स्त्रीणां चरित्रं भवितव्यतां च । अवर्षणं वापि सुवर्षणं च, देवा न जानन्ति कुतो मनुष्याः ? ॥ १ ॥ मनस्यन्यद्वचस्यन्यत्, क्रियायामन्यदेव हि । नारीणां विद्यते नूनं, दोषमय्यः स्त्रियो यतः ॥ २ ॥ सद्गोत्रजा अपि घना, रसकल्लोलसङ्कुलाः । प्रायः स्त्रियो भवन्त्येव, निम्नगा इव निम्नगाः ॥३॥ एताः स्वार्थपरा नार्यो, बहिरेव मनोहराः । अत्यन्तदारुणाश्चान्तः, स्वर्णात्कच्छुरिका इव ॥ ४ ॥" एवं ध्यायति श्रेष्ठिनि निर्माया निष्कलङ्का सती शीलवती किञ्चिदनिन्दितं कार्यं कृत्वा पुनस्तत्र घटं मुक्त्वा स्वशय्यायामुपेत्य सुप्ता । ततश्चिन्तापरः श्रेष्ठी प्रातः प्रियाया अग्रे प्राह—वधूः शीलगुणैर्वृद्धे !, कीदृशी प्रतिभाति ते ? । तयोक्तं कुलमर्यादानुरूपं चेष्टतेऽखिलम् ! ॥ १ ॥ श्रेष्ठी जगौ प्रिये ! नैव, स्नुषाऽऽत्मीया वरा खलु । यतोऽद्य रजनौ क्वापि, गच्छन्ती वीक्षिता रहः ॥ २ ॥ श्रेष्ठिन्याह—वधूरियं विरुद्धा नास्ति । श्रेष्ठ्यवग्—यन्नेत्रैर्वीक्ष्यते तदेव सत्यं । मयैषा मध्यरात्रे घटमादाय बहिर्गता दृष्टा । मुहूर्तं यावत् केनापि नरेण सह रंत्वा गृहे प्राप्ता । ततः परोक्षात् प्रत्यक्षं बलवद्विद्यते । मया तु साक्षाद् दृष्टा । इतः प्रातरजितसेनो जिनेन्द्रगुरुक्रम-

सेवां कृत्वा मातापित्रोर्वन्धयोः पादप्रणामार्थं प्राप्तः । पृथक् पितुः पादौ प्रणम्य यावदग्रे स्थितः पुत्रः तावत् पिता सखेदं प्राह—किमिह प्रोच्यते वत्स!, विधात्राऽस्मद्गृहाङ्गणे। रोपिता वनसेहेव, पारिजातकवल्लरी॥ १ ॥ या ताद्दग्वंशजाताऽपि, गुणसंसर्गवत्यपि। कौटिल्यं भजते चापलतिकेव वधूरियम् ॥ २ ॥ मयाऽद्य रात्रौ वध्वाश्चरित्रमेवं दृष्टं, रात्रौ क्वापि गत्वा पश्चादायाता । ततः—जाने वत्स! वधूरासीत्, कल्पवल्लीव नः कुले । साम्प्रतं दुष्टदोषा तु, विषवल्लेर्विशिष्यते ॥ १ ॥ ततः को नाम स्त्रीणां विश्वासो भवति ? । यतः—" न बध्यन्ते गुणैः पत्युर्न लक्ष्यन्ते परीक्षकैः। न धनेन च धार्यन्ते, शीलत्यागोद्यताः स्त्रियः॥ १ ॥ शास्त्रेषु श्रूयते यच्च, यच्च लोकेषु गीयते । संवादयन्ति दुःशीलं, तन्नार्यः कामविह्वलाः ॥ २ ॥" निशीथेऽद्य क्व गता नीरानयनदम्भतः। पुनर्मुहूर्तान्तरे समागात् । तेनेयं त्याज्या त्वया। पुत्रः प्राह—तात! तव वचः प्रमाणम्। ततः श्रेष्ठी कूटप्रयोगेण वध्वाः अग्रे प्राह—त्वत्पित्राऽहं त्वया सहाकारितोऽस्मि । तेनाधुना तत्र गम्यते। स्नुषयोक्तं—तात! अत्र किं कथ्यते ?। एकं तावत्पित्रादिस्वजनमिलनं, द्वितीयं तव वचो वर्यम्। ततः शीलवत्यनुमेने श्वशुरोक्तम् । परीक्षायां सत्याः कृतायां विशेषतो गुणो जायते । यतः—यावन्न क्रियते रत्ने, परीक्षा कोविदोत्तमैः । तावत्कर्करबुध्या स, ज्ञाय-

तेऽन्यजनैः खलु ! ॥१॥ स्यन्दनं प्रगुणीकृत्य, शीलवत्या समन्वितः। स्वयं रत्नाकरः श्रेष्ठी, चचाल कृतमङ्गलः॥ २ ॥
श्रेष्ठी मार्गे गच्छन् नद्यामुपेतायां शीलवतीं प्रति प्राह—पादत्राणे परित्यज्य, वत्से! संचर पाथसि। किञ्चिद्विचार्य
साऽप्रतः उपानद्युता नदीमुत्तीर्णा। श्रेष्ठी मेने तदा दुर्विनीतेयं शीलवती। पुरतो गच्छन् श्रेष्ठी मुद्गक्षेत्रं फलितं
दृष्ट्वा जगौ—अहो अस्य क्षेत्रे स्वामिनः सस्यश्रियः करगोचरा भविष्यन्ति । स्नुषाऽभाणीत्—यदि जग्धं नाभ-
विष्यत्तदा तातोक्तं सर्वं सत्यमभविष्यत्। श्रेष्ठी दध्यौ—इयमसम्बन्धं कथं भाषते?। क्षेत्रं तु फलितं दृश्यमान-
मस्ति। क्षेत्रं भक्षितं तु मनाग् न दृश्यते। समृद्ध्या धनदं द्रङ्गं, सरङ्गं जनसङ्कुलम्। पुरः पुरमथो वीक्ष्य,
सश्लाघं मूर्धं धूनवान् ॥ १ ॥ स्नुषया तदोक्तं—यदीदमुद्वसनं न भवति तदा श्लाघ्यते। ततः श्रेष्ठिना चिन्तितम्—
असौ स्नुषा मामेवं हसति। ततो हास्यफलं प्राप्स्यति। अग्रे सुभटमालोक्य, प्रहारभरजर्जरम्। श्रेष्ठी श्लाघित-
वानस्य, शौण्डीर्यं साधु साध्विति॥ १ ॥ दृष्ट्वा तं सुभटं शीलवती प्राह—साध्वस्ति कुट्टितस्तावत्पामरश्चैव कातरः।
श्रेष्ठी दध्यौ—स्नुषेयं मयि प्रतिकूला विद्यते। यद्यदहं जल्पामि तत्तदसावन्यथा करोति । यतः—"सर्वस्यात्मा
गुणवान् सर्वः परदोषदर्शने कुशलः। सर्वस्य चास्ति वाच्यं न चाऽऽत्मदोषान् वदति कश्चित् ॥ १ ॥"

एवं भावयन् मार्गे कस्यचिन्न्यग्रोधपादपस्याधस्तात् क्वापि श्रेष्ठी पथि स्थितः । वधूरपि वटच्छायां परिहृत्य दूरत आतपे पटमावृत्य तस्थौ । श्रेष्ठी जगौ—स्नुषे ! छायायामागच्छ । वधूः श्रुत्वाऽपि श्रेष्ठिवचः तत्रैव स्थिता । दध्यौ च श्रेष्ठी—उपदेशानर्हेयं कुशिष्यवत् । तत एकं जनसङ्कुलं पुरं दृष्ट्वा श्रेष्ठ्यवक्—कीदृशं पुरं सप्तभिः पाटकैर्वसदस्ति ?। वधूराह—अयमुद्वसग्रामः । श्वशुरेण चिन्तितं—मदुक्तमेषाऽन्यथा कुरुते एव । ततः क्वापि गतः श्रेष्ठी त्रिचतुरांस्तृणकुटीरान् वीक्ष्य प्राह—उद्वसोऽयं ग्रामः। ततः शीलवती विमृश्येति जगौ—जनतासङ्कुलमिदं स्थानम्। ततः श्रेष्ठी जगौ—सर्वथा विपरीतेयं कुशिक्षिततुरङ्गवत् । अनर्थे रभसा पातयिष्यति मां हठात् किल। एवं श्रेष्ठी यावद् दध्यौ तावन्मातुलः शीलवत्यास्तत्राभ्येत्य सगौरवं श्रेष्ठिनं स्वगृहे नीत्वा भोजनाद्यैरुपाचरत् । साग्रहं स्थाप्यमानोऽपि तेन वणिजा दत्तकरम्बकशम्बलयुतः श्रेष्ठी सोत्सुकोऽग्रतः प्रतस्थे सवधूकः । ततो मार्गे चलन् श्रेष्ठी कस्यचित्करीरवृक्षस्य पार्श्वे तस्थौ। वटस्याधः करम्बं भुक्त्वा सुप्तः। स्नुषा तु भोक्तुं यावल्लग्ना तावद्वायसो रौति स्म। तं वायसं रुदन्तं श्रुत्वा स्नुषा प्राह—भो काक ! किं कर्करायसे ?। तव यन्मनसि वर्तते तदहं जानामि। श्रेष्ठी सुप्तोऽपि वधूवचः श्रुत्वा दध्यौ—इयं काकादीनामपि भाषितं जानाति। पुनः पुनः काकस्याभिप्रायं ज्ञात्वा

शीलवती जगौ—भो काक! पूर्वमेकेन मुधाऽलीकेन पत्या सहाहं वियुक्ताऽभूवं । यदि पुनरपि किमपि क्रियते जल्प्यते वा तदा न मिलामि मातापित्रोरपि । जागरूकः श्रेष्ठी तस्या वचः श्रुत्वा पप्रच्छ—किं वत्से! दुर्विनीते त्वयेत्युदीर्यते ?। सा प्राह—यदि सत्यं प्रोच्यते तदा दोषाय मे गुणा भवन्ति । यत—"कुसुमनिचयः शाखाभङ्गं तनोति वनस्पतेरलसगमनं वर्हाटोपे वधाय शिखण्डिनः । चतुरगमनो यो जात्योऽश्वः स गौरिव वाह्यते, गुणवति जने प्रायेणैते गुणाः खलु वैरिणः ॥ १ ॥" बाल्ये बन्धूपरोधेन सर्वशास्त्राणि भणन्ती पक्षिरुताह्वयं शास्त्रं सार्थं साम्नायमहमध्यैपि। गिरा गारुडिकस्येव, सर्पदष्ट इव क्षणात्। उत्थाय चोद्यतः श्रेष्ठी, वधूपार्श्वं समीयिवान् ॥ १ ॥ श्रेष्ठी जगौ—वधु! मया योऽपराधः कृतस्त्वयि स क्षम्यताम् । ततः स्नुषाऽवक्—तदाऽहं तव जाग्रतः शिवाशब्दं वहिः श्रुत्वा घटं मस्तके कृत्वा च नदीं गता। शिवाशब्दज्ञानेन साभरणं मृतकमाकृष्य जलमध्यतस्तदङ्गाल्लक्षमूल्यान्याभरणान्यादाय घटे क्षिप्त्वा तत्रैव नदीतटे रहसि खातं कृत्वा तत्र तं घटं सन्न्यस्य पश्चात् स्वगृहमहमागाम् । अनेन दुश्चेष्टितेनाहं त्वयाऽत्रानीता त्यक्तुं यद् एतदद्भुतकर्मण एव विलसितम् । यतः—"कृतकर्मक्षयो नास्ति, कल्पकोटिशतैरपि। अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥१॥ साम्प्रतमेष वायसः करम्बं याचमानो

ब्रूते—करीरस्तम्बस्याधो दश लक्षाणि काञ्चनं समस्ति। ततो मयोक्तं काकं प्रति—पूर्वं मयैकं श्वशुरस्य न रुचितं कृतं। यदि द्वितीयं करोमि तदा मे मरणं स्यात्। कृतप्रहारसम्पातो जायते हि यथाऽङ्गिनां।क्षते क्षारमिवात्र ममापि जल्पितं दुःखं भवति च।उत्पाट्य विलोक्यतामिदम्। वधूक्तं श्रुत्वा स्थविरः ससम्भ्रमं कर्णौ धूनयन् जगौ—किं वत्से! सत्यमेतत्ते प्रोक्तं?, साऽवग्—संशयोऽत्र करीरे?, यदि न मन्यते तदाऽमुं करीरमेवोत्पाट्य विलोक्यताम्। ततः करम्बबलिप्रदानपूर्वं परिकरं बद्ध्वा वृद्धोऽपि लोभात्तरुण इव कुद्दालेन करीरस्याधः खनितुं लग्नः। यतः—"दन्तैरुच्चलितं धिया तरलितं पाण्यंघ्रिणा कम्पितं, दृग्भ्यां कुड्मलितं बलेन गलितं रूपश्रिया प्रोषितम्। प्राप्तायां यमभूपतेरिव महाधाट्यां जरायामियं, तृष्णा केवलमेककीव सुभटा हृत्पत्तने नृत्यति ॥ १ ॥" तत्र स्वर्णकुम्भाश्चत्वारो निर्गताः। ततः श्रेष्ठी दध्यौ—अहो मूर्तिमती लक्ष्मीरेवासौ मद्गृहे वधूः। काचभ्रान्त्या मरकतमिवावगणिता मया ॥ १ ॥ एवं ध्यात्वा श्रेष्ठी तां क्षमयामास स्वापराधप्रकाशनपूर्वम्। ततस्तत्क्षणाच्छ्रेष्ठी रथं वालयामास। पश्चादागच्छन् श्रेष्ठी प्राह—अयं वसन् ग्रामः सप्तपाटकैस्त्वयोद्वसः कथं प्रोक्तः?। स्नुषा जगौ—तात! यत्र बहवोऽपि लोका वसन्ति, आत्मीयः कोऽपि नास्ति, स शून्य एव कथ्यते। यतः—"स्वभावस्नेहसान्द्रेण, विनैकेन प्रियात्मना।

जनाकुलमपि क्षोणीपीठं भाति ह्यरण्यवत् ॥ १ ॥" उद्वसप्रायो ग्रामो दृष्टः । तत्र वसन्नसौ ग्रामोऽस्तीति कथं स्नुषे! त्वयोक्तमिति श्रेष्ठिना पृष्टे स्नुषा प्राह—तस्मिन् ग्रामे एकं मम मातुलगृहमभूत् । तेनोक्तं मया—असौ ग्रामः सप्तभिः पाटकैर्वसति । पुनः श्रेष्ठी प्राह—वटच्छायां मुक्त्वा यदातपे स्थिता तत्र किं कारणम्? । वधूः प्राह—वायसश्चेद्वटारूढो, वनिताशिरसि श्रवेत् । षण्मासाभ्यन्तरे पत्युस्तदाऽनर्थो भवेन्महान् ॥ १ ॥ वृक्षमूले च सर्पादिभयाद्या दोषराशयः । तेनाहं च वटच्छायां, त्यक्त्वाऽन्यत्र स्थिताऽऽतपे ॥ २ ॥ ततः श्रेष्ठी जगौ—साधु साधु कुलाधारे!, सर्वभावविचक्षणे । वृद्धत्वेन वयं वीतमतयो बोधितास्त्वया! ॥ १ ॥ ततः श्रेष्ठी प्राह—यत्र मया सुभटो वर्णितस्तत्र त्वया कातरोऽयमिति कथं ज्ञातः । स्नुषा प्राह—पृष्ठिस्थप्रहारान् दृष्ट्वा मयोक्तं—कातरोऽयं भटः । यदि सुभटोऽयं भवति तदा देहाग्रभागे प्रहारा लगन्ति । श्रेष्ठी प्राह—वधु! यन्मया मुद्गक्षेत्रे परिपाकदशापन्ने वर्णिते सति त्वयोक्तं—यदि भक्षितं नाभविष्यत्तदा वरं । तच्च जग्धं न दृष्टं । तत्र को हेतुर्जग्धकथने ?। वधूः प्राह—एके कौटुम्बिका दुःस्थाः सन्तः द्विगुणवृद्ध्या कणादि गृहीत्वा कृषिं कुर्वन्ति । तेषां यावद्धान्यं निष्पन्नं गृहे आयाति तदा ते धान्यदायकाः सर्वं धान्यं गृहीत्वा यान्ति ।

यतस्तैः कृषिभिः पूर्वं भक्षितं क्षेत्रं, द्विगुणवृद्धिधान्यग्रहणात्। श्रेष्ठी प्राह—यत् नदीं पयःपूर्णां दृष्ट्वा मयोक्तं—वधु ! उपानहावुत्तारय। तत्र त्वं नोपानहावुत्तारितवती। तदा तत्र किं कारणम् ?। स्नुषा जगौ—नद्यां कण्टककीटादेर्भयं दृष्ट्वा। दृष्टेरगोचरे को नामाल्पकृते कायमपाये पातयेत्?। इत्यादिपुत्रजायोक्तियुक्तिप्रीणितमानसः। क्रमात् प्राप गृहं श्रेष्ठी, प्रेक्ष्यमाणः पुरीजनैः॥ १ ॥ ततो वध्वा तानि भूषणानि घटस्थानि दर्शितानि श्वशुराय। ततः श्रेष्ठिना सन्मान्य सा स्नुषा सर्वस्वस्वामिनीं कृत्वा स्थापिता। क्रमादायुषः क्षये श्रेष्ठी परलोकं गतः। श्रेष्ठिप्रियाऽपि स्वर्गं गता। ततोऽजितसेनः कुटुम्बनायको बभूव। इतो राजा अरिमर्दन एकोनपञ्चशतीं मन्त्रिणां मेलयित्वा पञ्चशतीं पूर्णां चिकीर्षुः प्रत्येकं नागरान् समाकार्य जगौ—'यो मां हन्ति स्वपादेन, को दण्डस्तस्य युज्यते?' सर्वेऽप्यूचुर्जनाः तदा—शिरश्छेदं सर्वदण्डं सोऽर्हति। इति तेषां नागराणां मुखाच्छ्रुत्वा राजा यदा न मन्यते स्म तदा शीलवतीवितीर्णबुद्ध्याऽजितसेनो भूपस्याग्रे गत्वा भूपचिन्तितं न्यवेदयत्। ततो राज्ञा सर्वाभरणव्रातं दत्त्वा तस्मै सन्तोषितोऽजितसेनः। ततो राजा तं बुद्धिमन्तं मत्वाऽजितसेनं मन्त्रिमुख्यं मन्त्रिषु स्थापयामास। अन्यदा राजा षड्विधं बलं गृहीत्वा पर्यन्तदेशभूपालं सिंहं जेतुं चचाल। तदा राज्ञा सार्द्धमाकारितोऽजितसेनोऽपि चिन्ता-

चान्तमना मनाक् शीलवत्या महासत्या पृष्टः स्पष्टं समभाषत। यद्यपि त्वं सुशीलाऽसि, तथाप्येकाकिनीं गृहे। विहाय सह भूपेन, यियासोर्मे न निर्वृतिः॥ १॥ शीलवती जगौ–राजकार्याणि कर्तव्यानि यथा तथा। शीलं तु मदीयं निश्चलं वर्तते। देवदानवाद्यैरपि शीलं खण्डयितुं न शक्यमित्यवधार्यमित्युक्त्वा सा प्रत्ययार्थं पुष्पमालां पत्युः कण्ठे क्षिप्त्वा शीलवती प्राह–यावन्मदीयं शीलं निश्चलं भविष्यति तावदियं पुष्पमाला त्वया कण्ठस्था अम्लाना द्रक्ष्यते। एवं प्रियावचः श्रुत्वा ततोऽजितसेनो राज्ञा सह निश्चिन्तः सन् सैन्येऽचालीत्। भूपस्य च मिलितः। राजा तदानीं कुसुमवर्जितायामटव्यां (अ)जितसेनकण्ठे पुष्पमालामम्लानां वीक्ष्य पप्रच्छ–कुत इयमीदृशी पुष्पमाला तव कण्ठे दृश्यते एवंविधे वने?। मन्त्री प्राह–ममेयं पुष्पमाला प्रियया कण्ठे क्षिप्ता। तस्याः शीलप्रभावान्न म्लायति। ततो राजा शीलवत्याः शीलस्वरूपं श्रुत्वा चमत्कृतः। अन्यदा नर्मपात्राणां नृणां पार्श्वे शीलवत्याः शीलं वर्णयामास। ततः कामाङ्कुरो भूपानुगः सासूयं प्राह–कुतः शीलं चञ्चलदृशां?, ततो ललिताङ्गो जगौ–सत्यं कामाङ्कुरोदितं, रतिकेलिरभाषिष्ट–संशयः कोऽत्र दृश्यते?, अशोकः प्राह–अहं यामि शीलवतीशीलभ्रंशाय!। कौतुकी राजा बहु धनं दत्त्वा प्रैषीदशोकम्।

भृत्योऽवधूतवेषं कृत्वा अशोको वर्यनेपथ्यभृत् नन्दनपुरे गत्वा शीलवत्या गृहस्यासन्नं स्थानं गृहीत्वा तस्थौ । अशोकस्तत्रस्थो वर्यवेषभृत् पञ्चमोद्गारं गीतमुद्गिरन् रुचिराङ्गकः सञ्चचार पुरस्तस्याः । बहुप्रकारान् विकारान् कुर्वन्तं तं सा सती वीक्ष्य दध्यौ शीलवती—ममासौ शीलध्वंसं करिष्यति । नूनमिच्छति मूर्खोऽसौ, कष्टुं केसरिकेसरान् । विविक्षति हतस्वान्तः, सुहुतं वा हुताशनम् ॥ १ ॥ इति ध्यात्वा सा निर्विकल्पाऽपि नेत्रकोणेन तं विलोकते । ततोऽशोको हृष्टो दध्यौ—सिद्धं मम समीहितमस्याः सम्मुखविलोकनात् । ततो दूतीं प्रस्थापयामासाशोकस्तस्याः पार्श्वे । सा तत्र गत्वा शीलवत्या अग्रे प्राह—भद्रे ! तव गतो भर्ता समं राज्ञा । न ज्ञायते तस्य किं भविष्यति ? । गतो वासरो नायाति । भोगं विना यौवनं तव निष्फलं गच्छदस्ति । शीलवती जगौ—कुलस्त्रीणां न युज्यतेऽन्येन पुरुषेण सह वार्तामपि कर्तुं । किं पुनरन्यसङ्गमः ? । पुनः पुनः कथयन्त्या तया दूत्या शीलवत्या मानितं । स प्रेष्यतामत्र पञ्चमे दिने । ततो दूतिकया शीलवत्याः स्वरूपे कथिते अशोको हृष्टः । अर्धलक्षं स्वर्णस्य प्रथमं प्रेषितं तस्या गृहे । तेन शीलवती स्वशीलरक्षार्थं प्रच्छन्नमपवरकस्य मध्ये गर्ता खानयामास । तस्या उपरि पर्यङ्कं निष्केवलतन्तुस्यूतं सोत्तरच्छदं चकार सा । पञ्चमेऽहनि स स्वर्णस्य सार्द्धं लक्षमादाय

तत्रागात्। शीलवत्योक्तं—भोजनं क्रियमाणमस्ति। यावत् स्नानाय पानीयमुष्णं भवति तावत्त्वं तु पर्यङ्के उपविश। ततो यावदसौ तत्रोपविशति तावत् त्रुटिततन्तुपल्यङ्कादधो गर्तायामशोकः पतितः। रज्जबद्धशरावेण भोजनोदके तस्मै ददती तिष्ठति स्म। स चाशोको नरकदुःखं तत्रोपभुङ्क्ते स्म। मासे एकस्मिन् गते राजाऽऽख्यत्—अशोकस्य शुद्धिरपि न ज्ञायते। ततो रतिकेलिस्तथैव प्रतिज्ञां कृत्वा तत्र गतः। तयाऽशोकवत् कूपे क्षिप्तः। एवं कामाङ्कुरोऽपि तत्र गतः। तया गर्तायां क्षिप्तः। तथा ललिताङ्गोऽपि। एवमशोकरतिकेलिकामाङ्कुरललिताङ्गा गर्तायां महादुःखमनुभवन्ति स्म। नारका इव नरके। ते च शीलवतीं प्रोचुर्दीनास्याः पीडिताः क्षुधा। अनात्मज्ञा नरा एवमसद्दुःखभाजनम् ॥ १ ॥ न दृष्टं तव माहात्म्यं, मूढैरस्माभिरेव हि। प्रसद्यास्मान्नितः कूपान्निष्कासय सतीतमे! ॥ २ ॥ तयोचे—यूयमस्मदीयोक्तं कुरुत तदा कृषिष्यामः। तैरुक्तं—यत्त्वयोपदिश्यते तद्दुष्करं सुकरं वा करिष्यते। शिक्षयित्वेति शीलवत्या भर्तरि समागते तेषां चतुर्णां राजानुगानां स्वरूपं प्रोक्तम्। एकदा भूपं सपरिच्छदं भोजयामि। पश्चात्तान् प्रादुष्करिष्यामि। ततो राजा निमन्त्रितस्तेन भोजनार्थं। तत्र भोक्तुमागतः। इतः प्रच्छन्नं शीलवत्या रसवती निष्पादिता। ततस्ते प्रच्छन्नं दुर्बला बहिष्कृता अपवरकान्तरास-

नेपूपवेशिताः।, प्रक्षालिताश्चन्दनेन चर्चिताश्च। इतो राजा प्राह—भो मन्त्रिन्! उत्सूरं जायमानमस्ति। भोक्तुं तव गृहे रसवती निष्पाद्यमाना न दृश्यते। मन्त्रिणोक्तं—मत्प्रियावशंवदाश्चत्वारो यक्षाः सन्ति। ते सर्वां रसवतीं मार्गितां दास्यन्ति। ततो यावद्भोजनार्थं राजोपविष्टः सपरिच्छदः। इतो यक्षपार्श्वेन रसवतीमानीय मार्गयित्वा राजा भोजितः। ततो राजा जगौ—भो मन्त्रिन्! ये यक्षाः सन्ति ते प्रियाभीष्टरसवतीप्रदाः। ते च यद्यस्माकं पार्श्वे भवन्ति तदा मार्गे रन्धनादिक्लेशं विना चमूर्भोज्यते। ततो मन्त्री जगौ—प्रियां पृष्ट्वा ते तुभ्यं दास्यन्ते। इतः शीलवत्योक्तं यक्षाणां चतुर्णामग्रे—अहं तदा मोचयिष्यामि यदि मदुक्तं करिष्यथ। ततस्तैरुक्तं—यत्त्वया प्रोच्यते तदस्माभिः करिष्यते। शीलवत्योक्तं—यूयं मञ्जूषामध्ये तिष्ठत। मञ्जूषा भूपाय दास्यते। यावद्राजा एकं प्रयाणकं कृत्वा मध्याह्ने यावद्भोजनं मार्गयति तावद्भवद्भिर्न वक्तव्यं। यद्यन्तरा जल्प्यते भवद्भिस्तदा वो मरणं भविष्यति। एवं भवतु इति तैरुक्ते सा मञ्जूषा भूपाय दत्ता। भूपो हृष्टो यावदेकं प्रयाणकं कृत्वा मध्याह्ने रसवतीं याचते तावत्ते जगुः—वयं कृशगात्रा अत्र स्थिताः स्मो। भोजनं विना तुभ्यं कुतो दीयते?। ततो राजा शब्दैस्तानुपलक्ष्य बहिः कर्षयामास। ततो राज्ञा पृष्टास्ते स्वं रूपं शीलवत्याः शीलस्वरूपं च जगुः। ततो राजा हृष्टः पश्चादेत्य शीलं

परिधापयामास तां सभर्तृकाम् । ततः
शीलवत्या वर्णयामास । त्वं मम भगिनीति कृत्वा वस्त्राभरणादिभिः परिधापयामास तां सभर्तृकाम् । ततः
सर्वलोकाश्चमत्कृता जगुः—असौ सतीतमा विद्यते ! । इतोऽजितसेनस्तया प्रियया समं भोगान् भुञ्जानश्चिरं
सुख्यभूत् । लक्ष्मीधरचन्द्रसेनाह्वौ पुत्रौ जातौ तयोः । धर्मं जिनोक्तं कुरुतस्तौ । अन्यदा तत्र पुरे दमघोषसूरय
आगताः । (अ)जितसेनः सप्रियो धर्मं श्रोतुं तत्र गतः । तथाहि—"धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्ध्रुवं (बलं)
धर्मेणैव भवन्ति निर्मलयशोविद्यार्थसम्पत्तयः । कान्ताराच्च महाभयाच्च सततं धर्मः परित्रायते, धर्मः सम्यगु-
पासितो भवति च स्वर्गापवर्गप्रदः ॥ १ ॥" देशनान्ते मुनिं शीलवती पप्रच्छ—मया किं कृतं पूर्वभवे ? । ज्ञानी
प्राह—कुशपुरे श्रावकः सुलसाभिधोऽभवत् ! । तस्य भार्या सुयशा बभूव । तस्य दुर्गतनामा भृत्यः प्रकृत्या
भद्रकोऽभवत् । दुर्गिला प्रिया तस्याभवत् । सार्द्धं सुयशसाऽन्येद्युर्दुर्गिला व्रतिनीपार्श्वे ययौ । सुयशसं पुस्तक-
पूजां कुर्वाणां वीक्ष्य दुर्गिला प्राह—आर्ये! किमद्य पर्वेति ? । साध्वी प्राह—अद्य श्रुततिथिर्विख्याता ज्ञानपञ्चमी
विद्यते ! । —"य इह श्वेतपञ्चम्यामुपवासपरायणः । पुस्तकाभ्यर्चनापूर्वं, कुर्याज्ज्ञानप्रभावनाम् ॥ १ ॥ स
प्रेत्य सुखसौभाग्यभाग्यबुद्ध्यादिवैभवम् । प्राप्य क्रमेण लभते, शुद्धशीलपरो नरः ! ॥ २ ॥" श्रुत्वेति दुर्गिला

प्राह–धन्याऽसौ स्वामिनी ममानिन्द्या या एवंविधं ज्ञानपञ्चमीतपः कुर्वाणा विद्यते । मया तु तपः कर्तुं न शक्यते । प्रवर्तिनी प्राह–भद्रे ! तर्हि स्वाधीनं शीलं पालय, येन त्वं सुखिनीभव । –"विधेहि परपुंस्त्यागं, यावज्जीवं विवेकिनि ! । तथाऽष्टमीचतुर्दश्योः, स्वभर्तुः परिवर्जनम् ! ॥ १ ॥" ग्रहीत्वाऽभिग्रहं हृष्टा दुर्गिला पत्युः पार्श्वे प्राह–मया शीलव्रतमष्टमीचतुर्दश्योर्गृहीतम् । दुर्गतः प्राह–यदि त्वया गृहीतं शीलं तर्हि ममापि भवतु । कर्मलाघवतो दुर्गिलायुतो दुर्गतः शुद्धशीलं पालयामास । क्रमेण तौ च प्रापतुः सम्यक्त्वम् । दुर्गिला क्रमाद्गुरुपार्श्वे ज्ञानपञ्चमीतपो गृहीत्वा पालयामास । स्वायुषः क्षये द्वावपि सौधर्मे त्रिदशावभूताम् । दुर्गतजीवस्ततो देवलोकाच्च्युतस्त्वं (अ)जितसेनोऽभवः । दुर्गिलाजीवस्तु एषा शीलवती जाता । पञ्चमीज्ञानाराधनपुण्याराधनात् । जातिस्मृत्या तं पूर्वभवं स्मृत्वा वैराग्यं प्राप्तौ दीक्षां ललतुः । प्रपाल्य संयमं पञ्चमं स्वर्गं गतौ । ततश्च्युतौ तावपि मनुष्यभवं प्राप्य सर्वकर्मक्षयान्मुक्तिं गमिष्यतः । इति शीलवतीकथा समाप्ता ॥ ३६ ॥

**पालयन्निर्मलं शीलं, भव्यो भव्याशयः सदा । नन्दयँन्तीव लभतेऽनुत्तरां सुखसन्ततिम् ॥ १ ॥**

तथाहि–पोतनपुरे सुरपुरसुन्दरे नरविक्रमो जाग्रद्विक्रमो भूपतिः करोति राज्यम् । तत्र सागरपोतो वणिग्

बभूव। श्रीः प्रिया च तस्य। तयोः समुद्रदत्तः पुत्रः। पण्डितः स पुत्रो। बाल्येऽपि पुरोपात्तपुण्यप्राग्भारादखिला
वर्यकला जग्राह। इतः क्रमेण स समुद्रदत्तो यौवनं प्राप। इतश्च सोपारपुरे श्रेष्ठिनो नागदत्तस्य महिमानिधेर्न-
न्दयन्ती नाम्ना पुत्री बभूव। सा क्रमात् प्राप्तयौवना जिनधर्मकुशला शीलशालिनी बभूव। नागदत्तश्रेष्ठिना
नन्दयन्ती पुत्री समुद्रदत्ताय विश्राणिता। क्रमात् सह देवाभिधेन मित्रेण सह क्रीडां कुर्वाणः सुखेन कालं
नयति स्म समुद्रदत्तः। अन्यदा विदेशं गन्तुकामस्तातं प्रति प्राह—ताताहं द्रव्योपार्जनार्थं विदेशं यास्यामि। त्वमा-
देशं देहि। पिता प्राह—कोटिमितं गृहेऽस्ति। द्रव्यं भुङ्क्ष्व त्वमत्रस्थ एव। ततः कः फलिते कल्पद्रौ निम्बपादपे
व्रजति ?। ततः पुत्रः प्राह—ते तु कापुरुषा एव, भुञ्जते प्राग्भवा (भिर) र्जितम्!। अभोग्या पैतृकी लक्ष्मीर्यौवने
जननीव यत्!॥१॥ निशम्येति तनूजस्य, सगद्गदमदोऽवदत्। पित्राऽर्जितैर्धनैर्मत्वा (पुंस्त्वे), दुर्मदाः सन्ति भूरिशः॥
स्वार्जितैर्विरला एव, दातारो भोगिनश्च ये!॥२॥ (षट्पदी) यदा पितानुमतिं न दत्ते विदेशगमनाय तदा समुद्रो
रात्रौ विदेशं प्रति चचाल। तदा गच्छन् समुद्रदत्तस्तत् प्रियाचेष्टितं विलोकितुं छन्नं गृहान्तरजालिकायां स्थितः।
तदा नन्दयन्ती जागरित्वा पतिमनालोक्य दुःखिताऽभूत्। स्मारं स्मारं गुणान् पत्युर्वियोगविधुरा सती गले पाशं

क्षेप्तुं लग्ना। जगाद च—यदि मे पतिर्नागमिष्यत्यधुना तदा मया मर्तव्यमेव। एवं प्रियां दुःखिनीं दृष्ट्वा रतिदानेन सन्तोष्य समुद्रः प्राह—अहं विदेशं गमिष्यामि, त्वया कस्याप्यग्रे न वक्तव्यमित्यापृच्छ्य प्रियां समुद्रदत्तोऽब्धिमार्गे लक्ष्म्यर्थं चचाल। इतोऽन्तर्वत्नी नन्दयन्ती मासत्रयं निनाय। तां सगर्भां वीक्ष्य श्वश्रूर्दध्यौ श्वशुरश्च—पुत्रस्तु विदेशं गतः। इयं वधूरन्यादृशी दृश्यमानाऽस्ति। न ज्ञायते स्त्रीणां स्वरूपम्। यतः—"बाह्याकारसदाचारवृत्त्या स्त्रीषु न विश्वसेत्!। दुरन्तपरिणामाः स्युः, किम्पाकफलवत् खलु ॥ १ ॥ तन्नूनं परिहार्यैषा, श्वपचीवात्मपङ्क्तितः। निष्कलङ्के कुलेऽस्माकं, कलङ्कश्चानया ददे ॥ २ ॥" विमृश्येति श्रेष्ठी स्नुषां तां जिहासुर्निष्करुणाभिधं पुरुषं प्रति रहः प्राह—एतां मत्स्नुषां वने मुक्त्वाऽऽगच्छ। ततः पुरुषस्तां दूरतो वने मुक्त्वा पश्चाद्वले। तावदाकस्मिकोत्पातभीता महासती मूलच्छिन्नवल्लीव पतिता क्षितौ। पुनः सचेतनीभूय जगौ—हा! हा!! दैव! केनापराधेनाहं श्वशुरेण त्यक्ता?। मया किं कृतं कर्म?। एकस्तावद्भर्ता मां त्यक्त्वा विदेशं गतः। द्वितीयं त्वहं वने त्यक्ता। मया मनागपि शीलं न खण्डितम्!। अस्मिन् भवे समुद्रं पतिं मुक्त्वाऽन्यो जनः सर्वोऽपि मम भ्राताऽस्ति!। ततः सा नन्दयन्ती विलपन्ती भृगुपुरस्वामिना तत्रागतेन पद्मभूपेन दृष्टा। मम

भगिनी त्वमिति कृत्वा स्वपुरं निनाय पद्मभूपः । तत्र भूपादेशेन यथेष्टं दानं ददाना शीलं पालयन्ती धर्मकर्मनिरता नन्दयन्ती तिष्ठति स्म । तत्रस्थया तया पुत्रो जनितः । इतो निष्करुणः स पुमान् नन्दयन्तीं वने विसृज्य पश्चादेत्य श्रेष्ठिनः पुरस्तान्नन्दयन्त्याः शीलस्वरूपं प्रोक्तवान् । इतो विदेशं गतः समुद्रदत्तो बहुधनमर्जयित्वा गृहे समागात् । पित्रा स्नुपात्यजनसम्बन्धे प्रोक्ते समुद्रदत्तोऽवग्—मत्प्रियाया यो गर्भोऽभूत् स मदीय एव ज्ञातव्यः । ततः श्रेष्ठी दुःखितः स्नुपां विलोकयितुं जनान् प्रेषयामास । समुद्रदत्तोऽपि प्रियां द्रष्टुं चचाल । सागरपोतोऽपि शोकसागरमध्यगः स्नुपामन्वेष्टुं चचाल । ग्रामकर्वटखेटनगरारण्यभूमिषु भ्रमन्तस्ते सर्वे कुत्रापि नन्दयन्तीं न पश्यन्ति स्म यदा तदा विलक्षा बभूवुः । क्रमाद् भ्रमन् समुद्रदत्तो भृगुकच्छपुरे ययौ । क्षुधाक्रान्तश्च तत्रैव सत्रागारे समीयिवान् । समुद्रदत्तो वेषपरावृत्तिभृत् । एकां नारीं वीक्ष्य दध्यौ समुद्रदत्तः—इयं कीदृशी शीलविषये विद्यते ? । समुद्रदत्तेनैका स्त्री शिक्षयित्वा तस्याः पार्श्वे प्रेषिता सती जगौ—भो नन्दयन्ति! मानुषं जन्म त्वया प्राप्तं । भोगसुखं विना कथं वृथा नीयते ? । यतः—“पिब खाद च चारुलोचने!, यदतीतं वरगात्रि! तन्न ते । ० ॥ १ ॥” त्वं तु विचक्षणाऽसि । यदि तव रोचते तदैको वणिक्पुत्रो देवकुमारतुल्यः समायातोऽस्ति ।

तस्य भूयसी श्रीरस्ति । तं पुरुषमङ्गीकर्तुं सुराङ्गना अपि वाञ्छन्ति । यदि त्वं तस्याङ्गमङ्गीकुरुषे तदा तवातीव सुखं भवति । अहं तुभ्यं हितं वक्तुमागताऽस्मि । नन्दयन्ती जगौ—भगिनि ! त्वमत्रागता तद्वरं । पुनरीदृशजल्पनं न सत्या अग्रे । एवं जल्पन्त्या जिह्वा एव त्रुट्यति । अहं त्वस्मिन् भवे समुद्रदत्तं भर्तारं मुक्त्वाऽन्यं देवकुमारतुल्यमपि न वाञ्छामि । यद्यधिकं त्वं कथयिष्यसि तदा तवैवाहमात्महत्यां दास्यामि । अत्रान्तरे मूलस्वरूपं समुद्रदत्तः कृत्वा तत्रागात् । स्वां प्रियां दृष्ट्वा हृष्टः । साऽपि पतिं दृष्ट्वा निश्चयं कृत्वोत्थाय च सविनयं स्वागतं चकार । यतः—"जाते मिथो दृगाश्लेषे, स्मृतप्रागदुःखदुर्दशा । वृष्टिर्भाद्रपदीनेव, तदाऽश्रुभिरभूत्सती ॥ १ ॥" ततः समुद्रदत्तो हृष्टस्तां गृहीत्वा स्वपुरमागात् । पित्रादयोऽपि तत्राययुः । ततो नन्दयन्त्या स्वः सर्वः प्रवासस्थितिसम्बन्धः कथितः । इतश्च केवली ज्ञानभानुस्तत्र समागमत् । समुद्राद्यास्तत्र वन्दितुं ययुः । गुरुभिर्धर्मोपदेशो दत्त इति । [तथा हि] देशनान्ते नन्दयन्ती पप्रच्छ—भगवन् ! केन कर्मणा इयन्तं कालं मम पत्यादिभिः समं वियोगोऽभूत् ? । गुरुराह—चन्द्रपुरे मुकुन्दाह्वस्य द्विजस्य श्रीमती प्रियाऽभूत् । तयैकदा यज्ञोत्सवे जायमाने भिक्षार्थमागतः साधुरिति हसितः—भो शूद्र ! त्वमत्र कथमागाः ? । तदा सर्वैरपि श्वशुरादिभिरनु-

गतम्। स मुकुन्दो मृत्वाऽजितसेनोऽभूत्। श्रीमती त्वमभूः। तेन तव पत्या श्वशुरादिभिश्च सह वियोगोऽभूत्।
ततो नन्दयन्ती विशेषतो धर्मं कृत्वा स्वशीलं पालयन्ती प्रथमस्वर्गं गता। ततश्च्युत्वा मुक्तिं गमिष्यति। इति
नन्दयन्तीकथा समाप्ता ॥ ३७ ॥

३८

**शीलं वितन्वतां पुंसां, शुद्धेन मनसा सदा। रोहिणीव सुखश्रेणीर्नराणां लभते चिरम्! ॥ १ ॥**

तथाहि—पाटलीपुत्रे पुरे श्रीनन्दो मेदिनीपतिर्बभूव। तत्र धनावहः श्रेष्ठी अभूत्। तस्य प्रिया रोहि-
णीति नाम्ना जाता। धनावहः श्रेष्ठी समुद्रमध्ये धनार्जनाय चलितः। तदा रोहिणी वेणीबन्धमाधाय स्वशीर्षे
रालीवृन्देषु निनाय दिवसान् धर्मकर्मभिः। धूलीकदम्बपुष्पौघधूसरिताम्बरो ग्रीष्मकालस्तदाऽऽगमत्। तदानीमु-
द्याने गच्छन् क्रीडार्थं श्रीनन्दभूपतिः वातायनस्थां रोहिणीं ददर्श। तदा स दर्शं दर्शं रोहिणीं तल्लीनचित्तो
राजाऽभूत्। ततो भूपो गृहे समेत्य प्राभृतसंयुतां दूतीं प्राहिणोदुपरोहिणि। तत्र गत्वा दूती प्राह—त्वां नन्द-
भूपः कामयते। सफलीकुरु स्वं पुण्यं तारुण्यं तस्य सङ्गमात्। श्रुत्वेति रोहिणी दध्यौ—अहो कुलमनालोच्य,
निजमेष निरर्गलः। भक्तदन्तीव मे शीलद्रुममुन्मूलयिष्यति ॥ १ ॥ उपायैस्तावदयं बोध्यो भूपो यावन्मार्गे

समेति। मत्वेति रोहिणी दूतीं प्रति प्राह—सखि! स्वभावतो नार्यो, वाञ्छन्ति सुभगं स्वयम्। असावर्थयते मां तु, धिगस्तु तदमुं नृपम्! ॥ १ ॥ अनाविलं कुलं किन्तु, शशिलक्ष्म्योरिवावयोः। तदेष च्छन्नमायातु, यामिन्यां सुभगाग्रणीः ॥ २ ॥ इति प्राभृतमादाय, राज्ञः स्वीयं वितीर्य च। सद्यः प्रीतिपरामेतां, विससर्ज महासती ॥ ३ ॥ दूती पश्चादेत्य भूपपार्श्वे प्राह—स्वामिन्! रोहिण्योक्तं राजाऽत्रायातु। ततो राजा कृतस्फारशृङ्गारो रोहिणीसदनं ययौ। सिंहासने रोहिणीदासीविश्राणिते राजा निविष्टः। ततस्तत्र भूपतेः पुरो रोहिणी भूमिदत्तदृग् समाययौ। तदा तां दृष्ट्वा भूपतेः स्तिमितं चक्षुर्विष्वक् प्रसारितं बभूव। यावद्राजा धार्ष्ट्यमवष्टम्भ्य वक्तुमुपतिष्ठति तावद्रोहिणी रसवतीनिष्पादनाय सखीवृन्दमुपदिशति। नृपस्य पुरतो न्यस्य, स्थूलं स्थालं लसत्फलैः। पूरयित्वा सखे! वर्यं, ढौकयस्व द्रुतं किल ॥ १ ॥ रोहिणीसखी स्वस्वामिन्याः प्रोक्तं चकार। ततस्तानि फलान्यास्वाद्य रसवतीं च भुक्त्वा चन्द्रशालायां राजा क्षणं सुप्तः। क्षणाज्जागरितः सन् भूपः पानकं पातुं ययाचे। ततोऽपि भुञ्जन् नवनवां रसवतीं क्वचित् सरसां क्वचिद्विरसां राजा प्राह—व्यञ्जनानां नानाविधैर्वेषवारैरनेकधा रसोऽत्र विद्यते कथम्?। रोहिणी जगौ—राजन्! ज्ञास्यते विवेकं वचः?। यथा वस्तुषु रसविरसत्वे

दृश्येते तथा स्त्रीषु दृश्येते । इयं स्त्री पुरुषं भ्रमे पातयति । "जाज्वलीति यथा सूर्योपलः सूर्यविलोकनात् ।
तथा कामानलः पुंसां, मूढानां स्त्रीनिरीक्षणात्! ॥ १ ॥" स्वामिंस्त्वं सर्वासां प्रजानां गुरुरसि । प्रादुष्ष्यन्ति
नरेन्द्रेभ्यो यतो न्यायप्रवृत्तयः। मार्गोल्लङ्घनं कर्तुं न युक्तं । स्त्री नरकखानिः । यतः—"खानिर्नरकदुःखानां,
र्गलानिः सुगतिसम्पदाम् । पत्तनं चैव पापानामपि वैषयिकं सुखम्! ॥ १ ॥" एवं तद्वचनाज्ज्ञातवान् परना-
रीसम्भोगमनन्तदुःखदं । राजा समुत्थाय रोहिणीं क्षमयामास, प्राह च—सन्ति भद्रे! दुराचारमुपदेष्टारः पदे
पदे । हितार्थमुपदीकर्तुं, विरला एव केचन ॥ १ ॥ अस्माकं कुमार्गाकरनिषेधनात्त्वं गुरुरसि । ततस्तस्या
गुणश्रेणीं शीलं च प्रशंसन् भूपः स्वावासं ययौ । इतोऽर्जितधनो धनावहः श्रेष्ठी स्वगृहमागात्। रोहिणी तदा स्वका-
न्तमुखचन्द्रदर्शनान्मुमुदेतराम्। एकदा चेटीमुखान्नरेन्द्रागमनोदन्तं श्रुत्वा श्रेष्ठी दध्याविति—समासाद्य मधुश्छत्रं,
वानरः क्षुधितोऽशनम्। काको दधिघटीं प्राप्य, विजने किमु मुञ्चति? ॥ १ ॥ लावण्यामृतकुल्येयं, तथा प्रेयस्विनी
मम। नृपेष्वतिथितां प्राप्य, सुशीला कथमस्ति तत्? ॥ २ ॥ इत्यादि विकल्पशतानि चिन्तयन् श्रेष्ठी धनावहः
प्रियां त्यक्तुकामोऽभूत्। इतो धनावनस्तस्या रोहिण्याः कलङ्कमुत्तारयितुं समागात् । अथ सप्त दिनानि तथा

मुसलधाराभिर्मेघो ववर्ष यथा नदीह्रदादिस्थानानि सर्वाणि परितो भृतानि बभूवुः। ततो नद्यो निजतटान्युल्लङ्घ्य प्रतोलीद्वाराण्यपि रोधयामासुः। ततः पुरीं पयसा प्लाव्यमानां दृष्ट्वा राजा दध्यौ—सा रोहिणी यदि प्रतोल्यां समेति तदा तस्याः शीलप्रभावात् पानीयं विरमेत्!। ततो रोहिण्याकारिता तत्र राज्ञा। प्रोक्तं च—भो भगिनि! त्वं पानीयं निवारय!। ततो रोहिणी मनुष्येषु लक्षमितेषु पश्यत्सु पुरः प्रतोल्या उपरि स्थित्वा नमस्कारं भणित्वाऽऽह—यदि मया शुद्धमस्मिन् भवे शीलं पालितं स्यात्तदाऽधुना जलोपसर्गो विरमतु। गङ्गे! त्वदङ्गचङ्गं चेत्रिशुद्ध्या शीलमस्ति मे। निवर्तस्व पुरादस्मात्तार्क्ष्यान्नागचमूरिव ॥ १ ॥ इत्युक्ते तया नद्याः पूरः क्षणाद्विरराम। ततो लोका हृष्टा जगुः—अहो शीलमहो जैनधर्मोऽयमिति सर्वतः। भुवि व्योम्नि ध्वनिर्जातो, नृणां सुधाभुजामिव! ॥ १ ॥ अहो अस्या महासत्या, रोहिण्याः शीलमद्भुतम्। विद्यते सर्वलोकानामुपसर्गहरं खलु ॥ २ ॥ रोहिण्या वचनेन तदा बहवो जना जैनं धर्मं प्रपेदिरे। ततो राजा जगौ—अस्या यादृशं शीलमस्ति तादृशमन्यत्र कुत्रापि न दृश्यते। ततो नृपकान्तादिलोकयुक्ता रोहिणी सर्वेषु जिनचैत्येषु जिनवन्दनां पूजापुरस्सरं चकार। धनावहोऽपि हृष्टः प्रियायाः शीलमाहात्म्यं दृष्ट्वा जिनधर्मं ललौ। एकदा रोहिणी धर्मोपदेशं श्रोतुं श्रीगुरु-

पार्श्वे गता। तदा श्रीगुरुभिरुक्तम्—यो रोहिणीतपः शुद्धभावेन कुरुते सदा। स एव लभते सद्यः, स्वर्गापवर्गसम्पदम्, ॥ १॥ रोहिण्याह—तपः कथं कार्यम्?। गुरुणोचे—श्रीवासुपूज्यप्रतिमाग्रे रोहिणीनक्षत्रे उपवासः कार्यः। उद्यापनेन सहितः सप्त वर्षाणि सप्त मासांश्च यावदुपवासः कार्यः। श्रीवासुपूज्यप्रतिमा रोहिणीयुता कार्यते। एकनवतिर्मोदकादिवस्तूनि प्रभोः पुरो ढौक्यन्ते। तपः सकललक्ष्मीणां, नियन्त्रणमशृङ्खलम्। दुरितप्रेतभूतानां, रक्षामन्त्रो निरक्षरः ॥ १ ॥ यस्माद्विघ्नपरम्परा विघटते दास्यं सुराः कुर्वते, कामः शाम्यति दाम्यतीन्द्रियगणः कल्याणमुत्सर्पति। उन्मीलन्ति महर्द्धयः कलयति ध्वंसं च यः कर्मणां, स्वाधीनं त्रिदिवं शिवं च भवति श्लाघ्यं तपस्तन्न किम्? ॥ २ ॥ तद्रोहिणीतपः शुद्धमाराध्य रोहिणी शिवगमनयोग्यं पुण्यमर्जयामास। प्रान्ते शुद्धामाराधनां कृत्वा रोहिणी प्रथमे स्वर्गे जगाम। ततश्च्युत्वा मानुषं जन्म प्राप्य मुक्तिं गता। इति रोहिणीतपः। [ इति रोहिणीकथा समाप्ता ॥ ३८ ॥ ]

**सुशीलरक्षणे वाञ्छा, विद्यते यस्य देहिनः। स एव लभते सातं, सुन्दरीव शुभाशयः ॥ १ ॥**[३९]

तथाहि—साकेतपुरे नरकेसरी राजा राज्यं करोति स्म। तस्य प्रिया कमलसुन्दरी। रतिसुन्दरी पुत्री चाभूत्।

क्रमाद्यौवनं प्राप्ता। अन्येद्यू रतिसुन्दरी प्रवर्तिनीं ववन्दे। गणिन्येति धर्मोपदेशो दत्तः। यथा—"निधिं रोर इव प्राप्य, दुर्लभं मानुषं जनुः। ग्राह्यं धर्मफलं रत्नमिव बुद्धिमता ततः ॥ १ ॥ रत्नपूर्णे निधौ प्राप्ते, इव बालो वराटिकाम्। मूढो मोक्षफले भोगानीहते मर्त्यजन्मनि ॥ २ ॥ तस्माद्गृहाण सम्यक्त्वं, प्रतिपद्यस्व संयमम्। निर्मलं च तपस्तप्त्वा, भवपर्यन्तमाप्नुहि ॥ ३ ॥ तपःकृशानुना तप्तः, शीलोज्ज्वलजलोक्षितः। जीवः कर्ममलं मुञ्चत्यग्निशौचमिवाम्बरम् ॥ ४ ॥ शरीरं विशरारुश्रि, फलं तस्य तपःक्रिया। यावज्जीवं राजपुत्रि!, जिनधर्मे यतस्व तत् ॥ ५ ॥" इति प्रवर्तिनीवचः श्रुत्वा रतिसुन्दरी साधु साध्विदमिति जल्पन्ती प्राह—नाहं व्रतं लातुं क्षमा। तेन गृहस्थोचितं धर्मं भवपोतावलम्बनं प्रसद्य मे देहि। ततस्तयोक्तं—तर्हि सम्यक्त्वं गृहाण त्वं, शीलं पालय च शुद्धम्!। स्वयं निवृत्यते पापात्, परश्चापि निवर्त्यते। इति शीलव्रतं पाल्यमन्यपुंवर्जनात्मकम् ॥ १ ॥ शीलादेवार्कचन्द्रान्तं, कीर्तिर्नृत्यति भूतले। शीलादेव च कल्याणस्थानं मुक्तिरवाप्यते ॥ २ ॥ कुलाङ्गनानामत्रैव, भवे सर्वमनोरथाः। एतत्प्रभावाज्जायन्ते, मेघादिव लताङ्कुराः ॥ ३ ॥ परलोके च संसारदुःखदौर्गत्यभूभृताम्। चिरं वज्रायुधीभूय, पारम्पर्येण मुक्तिदम्! ॥ ४ ॥ इति धर्मोपदेशं श्रुत्वा गुरूक्तं नियमं सम्यक्त्वशी-

त्सादियुतं लली रतिसुन्दरी । इतश्च नन्दनाह्वे पुरे चन्द्रभूभुजा स्वकार्याय प्रहितो दूतः श्रीसाकेतात् समागमत् । देशस्वरूपकथनादनु दूतो रतिसुन्दर्या रूपसम्पदं जगौ । ततश्चन्द्रभूपस्तां वरीतुमीहमानो दूतं प्रेष्य नरकेसरीभूपान्तिके रतिसुन्दरीममार्गयत् । आत्मनः पूर्वं प्रीतिरस्ति । रतिसुन्दरीं यदि दास्यसि तदा विशेषतः प्रीतिर्भविष्यति । यतः—" उत्तमैः सह साङ्गत्यं, पण्डितैः सह संकथाम् । अलुब्धैः सह मित्रत्वं, कुर्वाणो नावसीदति ॥ १ ॥ आरम्भगुर्वी क्षयिणी क्रमेण, लघ्वी पुरा वृद्धिमती तु पश्चात् । दिनस्य पूर्वार्द्धपरार्द्धभिन्ना, छायेव मैत्री खलसज्जनानाम् ॥ २ ॥ ततो योग्याभिसम्बन्धं, मत्वा साकेतनायकः । चन्द्राय भूभुजे दत्ता, नृपेण रतिसुन्दरी ॥३॥ शुभेऽह्नि प्रेषिता राज्ञा, महर्ध्या मदने पुरे । लक्ष्मीरिव मुकुन्दाय, तस्मै जाता स्वयंवरा ! ॥ ४ ॥ " सुमुहूर्ते तयोर्विवाहो जातो महामहःपूर्वम् । देवी वा खेचरी वाऽथ, किं वा पातालकन्यका । सौन्दर्यं रतिसौन्दर्या, दृष्ट्वेति जगदुर्जनाः ॥१॥ ज्योत्स्नयेव तया चन्द्रः, प्रिययाऽलङ्कृतो नृपः । सर्वोपरिस्थितिं लेभे, क्षत्रनक्षत्रनायकः ॥२॥ इतो महेन्द्रसिंहभूपोऽन्यदा कुरुपतिर्बली चन्द्रं दूतमुखेनाह मृगारिर्वा मृगाधिपं—देव ! त्वया सहास्माकं कुलक्रमागता प्रीतिरस्ति चिरम् । "पद्मानामिव सूर्येण, समुद्रेणेव वारिधेः । कैरवैरिव चन्द्रस्य, प्रीतिश्च जायते यथा ! ॥ १ ॥"

ततः कुलक्रमागता प्रीतिर्न लुप्यते । यतः—“कुलोद्योतकराः पुत्रास्ते एव महिमास्पदम् । सम्बन्धं पूर्वजाचीर्णं, ये न लुम्पन्ति सात्त्विकाः ॥ १ ॥” सौजन्यं सद्भिर्न मुच्यते । किं च—वर्यप्रीतिविवृद्ध्यर्थं नवोढा रतिसुन्दरी अस्मभ्यं प्रेष्या प्राभृते । दूतवचः श्रुत्वा चन्द्र ईषत् स्मित्वा समालपत्—सौजन्यं कस्य नाभीष्टं, ज्योत्स्नेवामृतदीधितेः ? । परोपकारो मैत्री च, दाक्षिण्यं प्रियभाषणम् । सौशील्यं विनयस्त्यागः, सज्जनानां गुणा अमी ! ॥ १ ॥ तद्दूत ! तव भूपेन, साधूदितमिदं मम । नहि लुम्पन्ति मर्यादां, कुल्याः कुल्यापतिर्यथा ॥ २ ॥ कः प्रियां स्वीयां कस्मै दत्ते जीवन् सन् ? । दूतः प्राह—नैवं वक्तुं ते च युज्यते । मर्यादां लुम्पमानो हि, ध्रियते केन वारिधिः ? । विधातुं सेतुबन्धं वा, क्षुब्धे तस्मिन्नलं हि कः ? ॥ १ ॥ स राजाऽतीव बलवानस्ति । यस्य सेनाभारेण पृथ्वीं कम्पयामास । अतस्त्वया सामवाक्यमेव वक्तव्यम् । अथ रुष्टश्चन्द्रो राजा जगौ—रे दूत ! तव स्वामी मम प्रियां वाञ्छन् स्वभृङ्गता (वाञ्छति स्वगृहागतां) कुलीनस्तव स्वामी श्रूयते स एवं कथं वक्ति ? । यतः—“प्रहिणोति निजां भार्यां, कोऽपि किं निजमन्दिरे ? । गृह्यते केन रत्नं हि, जीवतः पन्नगेशितुः ? ॥ १ ॥” दूतः पुनः प्राह—रक्ष्यो यथा तथा स्वात्मा, राजनीतिरिति स्मृता । जीवतो जायते भद्रं, मृतस्य न हि किञ्चन !

॥ १ ॥ त्यजेदेकं कुलस्यार्थे, ग्रामस्यार्थे कुलं त्यजेत् । ग्रामं जनपदस्यार्थे, आत्मार्थे पृथिवीं त्यजेत् ॥ २ ॥ इत्यादि दूतो गदन् कण्ठे धृत्वा राज्ञा सभाया बहिः कर्षितः। गत्वा दूतः स्वाम्यन्ते चन्द्रचेष्टितं प्राह। ततो रुष्टोऽखिलं बलं सन्नह्य प्राचालीन्महेन्द्रभूपः समुद्र इव सैन्ययुग्। तं भूपं समागच्छन्तं श्रुत्वा युद्धाय सज्जीभूतो राजा चन्द्रः सम्मुखोऽगात्। क्रमात्तयोर्भूपयोर्महायुद्धं भटाभटि खड्गाखड्गि अस्यासि बभूव। महेन्द्रसिंहेन चन्द्रो जीवितश्च (वन्नेव) बद्धः। स्वयं तु चन्द्रसैन्येषु नश्यत्सु हरिरिव मृगीं रतिसुन्दरीं महेन्द्रसिंहो जग्राह। विमोच्य चन्द्रं राजा रतिसुन्दरीं लात्वा तुष्टः स्वपुरमागान्महेन्द्रसिंहः। प्राह चैनां प्रति—भद्रे! त्वदर्थो ममारम्भः सर्वः। भृङ्गो भृङ्गीमिवाहं त्वामेव बहुकालादवाञ्छं। ततो मम प्रिया भूत्वा स्वं जन्म सफलीकुरुष्व। श्रुत्वेति चन्द्रप्रिया दध्यौ—धिङ्, मे रूपेण भर्ता ईदृशीं दशां प्राप्तः। दध्यौ चैवं पुनः—असौ कामी दुराचारो, द्यूतकार इवोत्सुकः। अपर्यालोच्य मच्चित्तं, धिगीदृशमधिष्ठितः ॥ १ ॥ तस्मान्मया कथंकारं, शीलं रक्ष्यमतः परम्। सौनिकापणवद्धेन, छागेनैवात्मजीवितम् ॥ २ ॥ यद्वा कालविलम्बो हि, श्रेयसे प्राणसङ्कटे। नीतिवाक्यमितिस्मृत्वा, सा साम्नैवं तमालपत् ॥ ३ ॥ गाढानुरागिता ज्ञाता, मयि श्रीनरकुञ्जर!। अतोऽर्थयामि किञ्चित्त्वां, विफलीकुरुषे

न चेत् ॥ ४ ॥ भूपोऽभापत रम्भोरु!, किमिदं प्रार्थनावचः ?। त्वदर्थं व्यापृता ह्येते, प्राणा अपि तृणाय मे ॥ ५ ॥ यो ददाति शिरः सुभ्रु!, चक्षुः किं तेन नाप्यते ?। अतोऽतिदुर्लभमपि, प्रार्थ्यतां पूरयामि ते ॥६॥ ततो रतिसुन्दर्योक्तं—अधुना तव वाक्येन, पर्याप्तमपरेण मे । मा कुर्या ब्रह्मभङ्गं मे, यावन्मासचतुष्टयम्! ॥ ७ ॥ नृपोऽवग्—यत्त्वयोक्तं तन्न मे रोचते तथापि त्वदुक्तमस्तु। ततो रतिसुन्दरी आचाम्लादि तीव्रं तपः कुर्वाणा स्नानाङ्गभूषणादीनि वर्जयामास । ततः प्रतिदिनं तपस्तपस्यन्ती कृशतनुरभूत् । तादृशीं दुर्बलगात्रीं रतिसुन्दरीं दृष्ट्वा राजा प्राह—भो कुरङ्गाक्षि! किमवस्था तवेदृशी ?। किं कोऽपि रोगो दोषो वा तवादृश्यो विद्यते ?। साऽप्याह—वैराग्यं मम विद्यते। तीव्रं तपः क्रियमाणमस्ति। चतुर्मासं यावन्मया आचाम्लतपः कर्तव्यं। यदि त्वं व्रतभङ्गं करिष्यसि तदा तव ममापिच श्वभ्रपातो भावी । पप्रच्छ भूपः—वैराग्यहेतुः कस्ते? यदीदृशं भोगयोग्यं वपुः क्षिप्तं तपोऽग्नौ पुष्पदामवत् । पतिव्रता प्राह—इदं देहं कुत्सितमस्ति । वसासृङ्मांसमेदोऽस्थिपित्तविण्मूत्ररक्तकम् । श्रवत्तेतद्वपुर्द्वारैर्नवभिः पूतिगन्धिताम् ॥ १ ॥ मुहुर्विलेपनस्नानधूपनादिभिरप्यदः । सुसंस्कृतं स्वदौर्गन्ध्यं, न मुञ्चति कथञ्चन ॥ २ ॥ अन्तर्बहिश्च भोगाङ्गं, यद्यद् यदस्योपनीयते । उपकारः खलस्येव, तत्तद्वैरूप्यमश्नुते

॥ ३ ॥ अशुचीनां निधीभूतं, दृश्यमानं मनोहरम् । वैराग्यं कस्य नो कुर्याद्वैरस्यं च सदा वपुः ? ॥ ४ ॥ तेन तपो विना नात्मा शुध्यति । राजा जगौ—त्वमात्मीयं तपः सम्पूर्णं कुरु । पूर्णे तपसि राजा जगौ—अद्य मे वाञ्छितं पूरय भद्रे ! । तयोक्तम्—अद्य पारणं विधते । शासनदेवी ततः सा सस्मार । ततस्तां प्रति प्राह रतिसुन्दरी—स्वामिनि ! त्वं तथा कुरु यथा मदीयं शीलं तिष्ठति । ततस्तया देव्या तस्यास्तथा रूपं कुत्सितं कृतं यथा राजा तां गलत्कुष्ठादिव्याधिग्रस्तां ददर्श । तां तादृशीं दृष्ट्वा राजा दध्यौ—इदं देहमशुचि यतः ततः सारं पुण्यमेव । मया परदारा एषा मुधा गृहीताः । ततो राज्ञा चन्द्रभूपायार्पिता । दिव्यरूपा जाता रतिसुन्दरी शीलस्य प्रभावात् । ततो मिथो राज्ञोः प्रीतिरभूत् । देव्या कृतं सान्निध्यं शीलं च निश्चलं ज्ञात्वा राजा तां प्रशशंस । रतिसुन्दरी शीलप्रभावात्स्वर्गं गता । ततो मुक्तिं यास्यति । इति रतिसुन्दरीकथा समाप्ता ॥ ३९ ॥

४०

**तस्य यशांसि गीयन्ते, स्वर्गे देवाङ्गनादिभिः । यस्य शीले भवेत् प्रीतिः, श्रीमत्या इव सन्ततम् ! ॥ १ ॥**

तथाहि—श्रीराजपुर्यां जयद्रथो राजा राज्यं करोति । धनदत्तश्रेष्ठ्यभवत्तत्र । तस्य प्रिया धनश्रीः । पुत्राः

क्रमात्सप्ताभूवन् । ततः क्रमात् पुत्रीं वाञ्छन्त्या धनश्रियः पुत्री बभूव । तस्या जन्मोत्सवं कृत्वा श्रीमतीतिनाम दत्तम् । कदाचित् पल्लीशः शत्रुमर्दनस्तां पुरीं बभञ्ज । तदा पुरीजनः स्वं जीवितं लात्वा ननाश । तस्मिंस्त्रासे जायमाने धात्री श्रीमतीं पालनस्थामादाय बिभ्यती वने ययौ । श्रीमतीं वहन्ती धात्री तं पालनकं कस्यामपि न्यग्रोधतरुशाखायां सबाष्पमुदलम्बयत् । तृषार्ता धात्री पानीयपानाय बभ्रामारण्यमध्ये । इतो रत्नपुराद्रत्नशेखर-भूपपालितात् जिनदत्तः सार्थप आययौ । जनपदान्तरे बहुद्रव्यमुपार्ज्य पश्चादागच्छन् तस्मिन् वने सपालनक-शाखिसमीपे तस्थौ । तत्र सार्थेशसेवका वनान्तर्भ्रमन्तो वृक्षशाखायां बद्धं पालनकं काकोलेनान्दोल्यमानं व्यलोकन्त । वनश्रीर्यमिकीभूय द्विकरूपेणोल्लापयन्ती तं बालकं तस्थौ । वनश्रीः पञ्चैते उल्लापनानि गायति । असङ्ख्यपितृपक्षे त्वं, मा रोदीर्नित्यभूषणे!। अदुःखदाऽस्यतो जीव, पतिवल्लि सुतोचिते ॥ १ ॥ इति उल्लापनानि पञ्चापि सप्रपंचानि तस्या दीयमानानि श्रुत्वा ते नराः सार्थपतेः पार्श्वे न्यवेदयन् । ततः सार्थेशो नवभिः पुत्रैः समं तत्र न्यग्रोधे गत्वा तां बालिकां तथावस्थां ददर्श । दध्यौ च क्षिप्ताऽपहृत्य, केनापि स्वैरिवैरिणा । बालाऽप्यबाललावण्या, विजने विपिने हहा ॥ १ ॥ गुप्तप्रसूनसौरभ्यवासितेष्वथ सूनुषु । नवस्वनवमा ज्येष्ठा,

ममादायि वनश्रिया ॥ २ ॥ ध्यात्वेति तां बालां स्वप्रियायै विश्राण्य सार्थपो जगौ—इयं नन्दिनी तुभ्यं नवपुत्रेषु मङ्गलकारिणी वनदेवतया दत्ता, तेन विशेषतोऽनिशं पालनीया। धात्रीभिस्तस्याः शुश्रूषां कारयन् सार्थपः स्वपुरं ययौ। वर्द्धमाना क्रमाद्गुणैरनर्घ्यैर्दर्शनीयाऽभूत्। अन्यदा सा बाला नूपुररणत्कारशब्दकृताडम्बरा सखीभिः सह गच्छन्ती श्रीमती गवाक्षोपरिस्थेन भूपेन दृष्टा। ततो व्याघुट्य घोटकं राजा सार्थपगृहद्वारे समागाद्यावत्तावत्सार्थपो राजानमागच्छन्तं श्रुत्वा सम्मुखं समेत्य प्रणणाम। तत्र सिंहासनाधिरूढो राजा पप्रच्छ सार्थेशं-कस्येयं बाला रूपलावण्यावर्जितसुरसुन्दरी ?। सार्थपो जगौ—एषा मत्पुत्री विद्यते। मम वने चटिताऽभूत्। यतो मयाऽसौ पुत्रीतिकृत्वा स्थापिताऽस्ति पुत्रमङ्गलकारिणी। अस्या विरहं क्षणमप्यहं न सहे। ततो राजाऽवक्-मम पुत्रीणां शतं विद्यते। तथापि तेषां (तासां) मङ्गलकारिणी भवतु। द्वयोरपि पुत्री अदुःखदर्शिनी वर्द्धते!। क्रमाद्विवाहयोग्यां ज्ञात्वा सुमतिसार्थेशपुत्राय मदनाय दत्ता। तदा तस्या बिरुदावलीं श्रोतुमनेके जनाः समायान्ति। भूरिद्रव्यव्ययं मत्वा सार्थपतिः प्राह—भवदीया अन्तःपुर्यः समायान्ति, तासां तादृशीं भक्तिं कर्तुं न शक्यते तेन कलिः समायान्मद्गृहे पुत्रीसमागमच्छलात्। ततः सर्वो जनस्तत्र गच्छन् निषिद्धो

राज्ञा । अन्यदा सदाभूषणाऽसाविति बिरुदं तस्याः श्रुत्वा सुमतिर्निशि श्रीमत्या आभूषणानि मञ्जूषाया अपहृत्य छन्नं पुरोपान्ते ह्रदमध्ये मुमोच। ततः स्वगृहमेत्य च सुप्तः। इतः प्रातर्यावन्मञ्जूषां भूषणरिक्तां श्रीमती यावत् पश्यति तावदित एको मात्स्यिकोऽभ्येत्य भूपस्यैतानि भूषणानि दत्त्वा प्राह—मया मत्स्यो विदारितस्तस्योदरान्निर्गतान्येतानि वस्तूनि । सुमतिकृतमेतत्परीक्षाहेतवे ज्ञात्वा राजाऽवग्—त्वं मुधाऽस्याः परीक्षां कुरुषे। मदुक्तं तु नान्यथा स्यात्। अमोघा वासरे विद्युदमोघं निशि गर्जितम्। नारीबालवचोऽमोघममोघं देवदर्शनम् ॥ १ ॥ एकदा मदनं हन्तुमनेके सुभटाः समायाताः। तदा दैवयोगान्मदनस्थानेऽन्यो हतः। एकदा मदनो वार्द्धौ चचाल। तत्रापि याने भग्ने प्राप्तफलकः स्वग्रामं समागात्। तया श्रीमत्या क्रमात् पुत्रा बहवो जनिताः। तस्याः पुत्रो न ह्येकोऽपि मृतः। इतो माता धनश्रीरपि तत्राभ्येत्य मिलिता सपुत्रा। इतश्चतुर्ज्ञाननिधयः श्रीगुरवस्तत्र समाययुः। भूपः सुमतिमन्त्रिप्रभृतिपरिवारयुतो वन्दितुं गतः। तत्र धर्मोपदेशं श्रुत्वाऽवदत्—भगवन्! श्रीमत्याऽनया किं कृतं सुकृतं पूर्वभवे?। गुरुराह—गर्जनाह्वे पुरे द्विजो ज्वलनाभिधो

भट्टः दुस्थः। तस्य रेवती प्रिया। अष्टौ क्रमात्तस्याः पुत्र्योऽभूवन्। अष्टावपि परिणायिता दुःखेन। पुनर्नवमी जाता। सा नवमी पुत्र्यनादरादपि क्रमेण ववृधेऽरण्यलतावत्। साऽथ मातापितृभ्यां माणवकस्य भिक्षोर्विश्राणिता। स माणवकस्तां परिणीय पर्यटत् पृथ्वीम्। स्वग्रामे समेत्य जननीं सप्रियो ननाम। स्नुषां नमन्तीं श्वश्रूराशीर्वाद्दानात्समभावयत्। क्रमाद्रोगाक्रान्ता श्वश्रूः परलोकमसाधयत्। माणवकेन मातुरौर्ध्वदेहिकं चक्रे। धनमपि नष्टम्। ततः सप्रियो माणवको महति तृणकुटीरे संवसति। अन्यदाऽनामिका द्विजपत्नी विमलश्रीप्रवर्तिनी पार्श्वे ययौ। तदा धर्मोपदेशस्तपोविषये दत्तः प्रवर्तिन्या। यथा—"पोरसि चउत्थछट्ठे काउं कम्मं खवंति जं मुणिणो। तं नो नारयजीवा, वाससयसहस्सलक्खेहिं ! ॥१॥ यद् दूरं यद् दुराराध्यं, यच्च दूरे व्यवस्थितम्। तत्सर्वं तपसा साध्यं, तपो हि दुरतिक्रमम् ॥ २ ॥" अदुःखदर्शिनीत्याख्यं तपो यः कुरुते तस्य दुःखं नायाति। तपःस्वरूपं प्रोक्तव्यमत्र। उद्यापने पालनकं रूप्यमयं काञ्चनमयी पुत्रिका पुरः स्थालं शर्करात्थरथूलमोदकराशिभृत्, तत्सर्वं साधूनां दातव्यं, ततः सदशशाटकं वस्त्रं वितीर्यते। तत एतच्छ्रुत्वा तया तपः

कृतम् । उद्यापनमपि कृतं तया द्विजपत्न्या। तस्य तपसः प्रभावान्मृत्वाऽसौ श्रीमती जाता। ततो देवलोके देवोऽभूत् । ततश्च्युत्वा भवान्तरे मुक्तिमपि गमिष्यति । ततस्तस्याः श्रीमत्या एतच्छ्रुत्वा जातिस्मृतिरभूत् । पश्चाद्भवं दृष्ट्वा विशेषतस्तया तपश्चक्रे । उद्यापनमपि कृतम् । इति तपः कृत्वा श्रीमती देवलोके गता । ततश्च्युत्वा राजपुत्री बभूव । ततो वैराग्यात् संयमं प्राप्य पुण्यपापफलं भुक्त्वा मुक्तिं गता ॥ इति अदुःखदर्शिनीतपःपरायाः श्रीमत्याः कथा तपसि विषये समाप्ता ॥ ४० ॥

[ अथ प्रशस्तिः—]

श्रीचन्द्रगच्छाम्बरभूषकोऽभूत्तपागणो भानुरिवेद्धदीप्तिः ।
प्रबोधयन् भव्यजनाम्बुजालीं, खगोविलासैरिव साधुवर्गैः ॥ १ ॥ [ उपजातिच्छन्दः ]

तत्राभवन् वरगुणगणमणिरोहणमहीधरप्रतिमाः ।
परमगुरुसोमसुन्दरगुरवः संयमरमापतयः ॥ २ ॥

तच्छिष्या मुनिसुन्दरगुरवो जयचन्द्रसूरयोऽभूवन् ।
पारगतागमजलनिधिपारगता रुचिरगुणनिलयाः ! ॥ ३ ॥

तच्छिष्या विजयन्ते, दधतः श्रीसूरिमन्त्रमहिमभरम् ।
श्रीयुक्तरत्नशेखरगुरव उदयनन्दिसूरिवराः ॥ ४ ॥ [ आर्यावृत्तानि ]

लक्ष्मीसागरसूरीशाः, सोमदेवाह्वसूरयः ।
विजयन्ते लसद्विद्यावार्द्धिमन्थनमन्दराः ॥ ५ ॥ [ अनुष्टुब्वृत्तम् ]

श्रीमन्मुनीशमुनिसुन्दरसूरिराजशिष्यो मुनीशशुभशील इति प्रमुख्यः ।
एतां कथां वितनुते स्म नवाम्बरेषुचन्द्रप्रमाणसमये[१५०९]किल विक्रमार्कात् ! ॥६॥[वसन्ततिलकावृत्तम्]

भरहेसरबाहुबलीवृत्तिः शुभशीलविबुधरचितेयम् ।
शोध्या सुबुद्धिमद्भिर्विबुधैः कूटापसारणतः ॥ ७ ॥ [ आर्यावृत्तम् ]

अनाभोगादिना किञ्चिद्यदत्रोत्सूत्ररोपणम् ।
चक्रे तदस्तु मे मिथ्यातमोऽर्हदादिसाक्षिकम् ॥ ८ ॥ [ अनुष्टुब्वृत्तम् ]

इति श्रीमत्तपागच्छाधिराज–श्रीमुनिसुन्दरसूरिशिष्य–पण्डित–शुभशीलगणिविरचिते
भरहेसरबाहुबलीवृत्तिनाम्नि कथाकोशे द्वितीयो महासत्त्याधिकारः समाप्तः २ ॥

इति श्रीभरहेसरबाहुबलीवृत्तिः सम्पूर्णा ॥

इति श्रेष्ठि—देवचन्द्र लालभाई जैनपुस्तकोद्धारे–ग्रन्थाङ्कः ८७ ॥

# श्रेष्ठी देवचंद लालभाई जैनपुस्तकोद्धारफंडद्वारा मुद्रिताः—

## लभ्या ग्रन्थाः—

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ४२ | आनंदकाव्यमहोदधिः (षष्ठं मौक्तिकम्) | ०-१०-० |
| ६२ | सुबोधा सामाचारी | ०—८—० |
| ६४ | प्रवचनसारोद्धारः (सटीक उत्तरार्द्धः) | ४—०—० |
| ६६ | आनंदकाव्यमहोदधिः (सप्तमं मौक्तिकम्) | १—८—० |
| ६७ | तत्त्वार्थाधिगमसूत्रम् (भाष्यटीकायुतंपूर्वार्द्धम्) | ६—०—० |
| ६८ | नवपदप्रकरणम् (लघुवृत्तिसहितम्) | १—०—० |
| ६९ | पञ्चवस्तुकग्रन्थः (स्वोपज्ञटीकाऽन्वितः) | ३—०—० |
| ७० | आनंदकाव्यमहोदधिः (अष्टमं मौक्तिकम्) | १—८—० |
| ७१ | आचारप्रदीपः | १—८—० |
| ७२ | विचाररत्नाकरः | ३—०—० |
| ७३ | नवपदप्रकरणम् (बृहद्वृत्तिसहितम्) | ४—०—० |
| ७४ | लोकप्रकाशः (द्वितीयो विभागः) | २—८—० |
| ७५ | महावीरचरित्रम् (गुणचन्द्रगणिकृतं प्राकृतम्) | ४—०—० |
| ७६ | तत्त्वार्थाधिगमसूत्रम् (भाष्यटीकायुतं उत्तरार्द्धम्) | ६—०—० |
| ७७ | लोकप्रकाशः (तृतीयो विभागः) | २—०—० |
| ७८ | भरतेश्वरबाहुबलिवृत्तिः (प्रथमो विभागः) | २—०—० |
| ७९ | भक्तामर-कल्याणमन्दिर—नमिऊणस्तोत्रत्रयं सटीकम् | ५—०—० |
| ८० | प्रियङ्करनृपकथा | १—८—० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ८१ | अनेकार्थरत्नमञ्जूषा ( अष्टलक्षार्थी ) | ३—०—० |
| ८२ | कल्पसूत्रम् ( बारसासूत्रम् ) सचित्रम् | १२-०-० |
| ८३ | ऋषभपञ्चाशिका ( टीकाभाषान्तरयुता ) | ४—०—० |
| ८४ | जैनधर्मवरस्तोत्रम् ( टीकाभाषान्तरयुतम् ) | ३—०—० |
| ८५ | आवश्यकसूत्रम् ( मलयगिरीयटीकायुतं तृतीयो भागः, सम्पूर्णः ) | २—८—० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| | **मुद्र्यमाणा ग्रन्थाः** | |
| ८६ | लोकप्रकाशः ( चतुर्थविभागः, सम्पूर्णः ) | |
| ८७ | भरतेश्वरबाहुबलिवृत्तिः ( द्वितीयो विभागः, पूर्णा ) श्रीमत्शुभशीलगणिविरचितोऽयं ग्रन्थः । | |
| ८८ | | |

**प्राप्तिस्थानम्—**

**शेठ देवचंद लालभाई जैन धर्मशाला,**
**बडेखान् चकला, गोपीपुरा, सुरत.**

# श्रीमतीआगमोदयसमितिद्वारा मुद्रिताः

## लभ्या ग्रन्थाः—

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ३४ | विशेषावश्यकभाष्यगाथा-विषयानुक्रमौ | ०—५—० |
| ३६ | गच्छाचारप्रकीर्णकम् ( सटीकम् ) | ०—६—० |
| ३७ | धर्मबिन्दुप्रकरणम् ( सटीकम् ) | ०-१२-० |
| ४५ | भक्तामरस्तोत्रपादपूर्तिकाव्यसङ्ग्रहः ( टीकाभाषान्तरयुतः प्रथमो विभागः ) | ३—०—० |
| ४६ | प्रकीर्णकदशकम् ( संस्कृतच्छायाऽन्वितम् ) | २—०—० |
| ४७ | पञ्चसङ्ग्रहः ( स्वोपज्ञटीकायुतः ) | २—८—० |
| ४८ | विशेषावश्यकभाष्यम् ( मूलस्य टीकायाश्च गुर्जरानुवादयुतो द्वितीयो विभागः | ३—०—० |
| ५० | जीवसमासः ( सटीकः ) | १—८—० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ५१ | स्तुतिचतुर्विंशतिका ( शोभनमुनिकृता सचित्रा, सटीका च ) | ८—०—० |
| ५२ | स्तुतिचतुर्विंशतिका ( शोभनमुनिकृता सचित्रा, टीकाभाषान्तरयुता च ) | ६—०—० |
| ५३ | चतुर्विंशतिका ( बप्पभट्टिसूरिकृता, सचित्रा, टीका-भाषान्तरयुता ) | ६—०—० |
| ५४ | भक्तामरस्तोत्रपादपूर्तिकाव्यसङ्ग्रहः (टीका-भाषान्तरयुतो द्वितीयो विभागः) | ३—८—० |
| ५५ | नन्द्यादिसप्तसूत्रगाथाविषयानुक्रमः | २—०—० |

| ग्रन्थाङ्कः | ग्रन्थनामानि | मूल्यम् |
|---|---|---|
| ५६ | आवश्यकसूत्रम् ( मलयगिरीयटीकायुतं, प्रथमो भागः ) | ४—०—० |
| ५७ | लोकप्रकाशः ( गुर्जरानुवादयुतः प्रथमो विभागः ) | ३—८—० |
| ५९ | चतुर्विंशतिजिनानन्दस्तुतिः (पं. मेरुविजयकृता, सचित्रा, टीकाभाषान्तरयुता ) | ६—०—० |
| ६० | आवश्यकसूत्रम् ( मलयगिरीयटीकायुतं, द्वितीयो विभागः ) | २—८—० |
| ६१ | लोकप्रकाशः ( गुर्जरानुवादयुतो द्वितीयो विभागः ) | ३—८—० |

प्राप्तिस्थानम्—

शेठ देवचंद लालभाई जैन धर्मशाला,
बडेखान् चकला, गोपीपुरा, सुरत.

# श्रीजैनआनंदपुस्तकालये-लभ्यग्रन्था:—

| | |
|---|---|
| १ अहिंसाष्टकं, सर्वज्ञसिद्धि, ऐन्द्रस्तुतिश्च | ०-८-० |
| २ अनुयोगद्वारचूर्णि.हारिभद्रीयवृत्तिश्च | १-१२-० |
| ३ उत्तराध्ययनचूर्णि. | ३-८-० |
| ४ ऋषिभाषितानि | ०-२-० |
| ५ ज्योतिष्करण्डकप्रकीर्णकम् (सटीकम्) | ३-०-० |
| ६ जिनस्तुति-देशना (हिन्दी) | ०-६-० |
| ७ तत्वतरंगिणी | ०-८-० |
| ८ त्रिपष्टीयदेशनासंग्रह. | ०-८-० |
| ९ दशवैकालिकचूर्णिः | ४-०-० |
| १० प्रकीर्णकदशकम्(संस्कृतच्छायान्वितम्) | १-८-० |
| ११ द्रव्यलोकप्रकाशः | १-०-० |
| १२ नंदीआदिअकारादिक्रमो विषयक्रमश्च | १-८-० |
| १३ नंदीचूर्णिहारिभद्रीयवृत्ती | १-४-० |
| १४ नवपद-प्रकरण-बृहद्वृत्तिः | ३-०-० |
| १५ परिणाममाळा (लेजर पेपर) | ०-१२-० |
| ,, ,, (ड्राईंग पेपर) | ०-१०-० |
| १६ प्रवचन-सारोद्धार. (पूर्वार्धम्) | ३-०-० |
| १७ ,, ,, (उत्तरार्धम्) | ३-०-० |
| १८ पंचाशकादिशास्त्राष्टकम् मूलमात्रम् | ३-०-० |
| १९ पंचाशकादिशास्त्रदशकस्याकाराद्यनुक्रमः | ३-०-० |
| २० पंचवस्तुकग्रन्थः (सटीकः) | २-४-० |
| २१ पयरणसंदोहो | ०-१२-० |
| २२ प्रव्रज्या-विधान-कुलकादि | ०-३-० |
| २३ प्रत्याख्यानादि-विशेषणवती-वीशवीशी | १-४-० |
| २४ बारसासूत्रं (सचित्र) | १२-०-० |
| २५ मध्यमसिद्धप्रभा व्याकरणम् | ०-८-० |
| २६ यशोविजयजीकृत १२५, १५०,३५०, गाथास्तवनानि(साक्षिपाठसहितानि) | ०-८-० |
| २७ युक्तिप्रबोधः | १-८-० |
| २८ ललितविस्तरा (सटीप्पना) | ०-१०-० |
| २९ वस्त्रवर्णसिद्धिः | ०-४-० |
| ३० विचार-रत्नाकरः | २-४-० |
| ३१ विशेषावश्यक-विषयानुक्रमः अकारादिक्रमः | ०-३-० |
| ३२ वंदारुवृत्तिः | १-४-० |
| ३३ श्राद्धविधिः (हिन्दी) | १-८-० |
| ३४ क्षेत्रलोक-प्रकाशः | २-०-० |
| ३५ बृहत्सिद्धप्रभाव्याकरणम् | २-८-० |
| ३६ आचारांगसूत्रवृत्तिः | ७-०-० |
| ३७ भगवतीटीका दानशेखरीया | ५-०-० |
| ३८ पुप्पमाळावृत्तिः स्वोपज्ञा | ६-०-० |
| ३९ तत्त्वार्थटीका (हारिभद्रीया) | ६-०-० |
| ४० पर्युषणादशशतकं | ०-१०-० |

| | | | |
|---|---|---|---|
| ४१ भवभावनावृत्तिः | ३-८-० | मुद्र्यमाणाः ग्रन्थाः । | प्रवचनपरीक्षावृत्ति |
| ४२ विशेषावश्यकको० | ५-०-० | भगवती अभयदेवीया | सुबोधिका |
| ४३ षडावश्यकानि | ०-८-० | प्रव्रज्याविधानवृत्ति | भवभावना द्वितीयभागः |
| ४४ षोडशकप्रकरणं | १-०-० | उत्पादादिसिद्धि | विशेषावश्यक द्वितीयभागः |

१०-११-१२-१४-१६-१७-२०-२४-३०-३१-३४ अन्येषां। श्री-जैन-आनंद-पुस्तकालय, ओशवाल महोल्ला, गोपीपुरा, सुरत.

## मोहमय्यां श्रीजिनदत्तसूरि-ज्ञानभाण्डागारे-लभ्यग्रन्थाः—

| | | | | | |
|---|---|---|---|---|---|
| द्वादशकुलकानि ( सटीकानि ) | १-०-० | श्रीपालचरित्रम् ( संस्कृतं श्लोकबद्धम् ) | भेट | पंचप्रतिक्रमणादि सूत्र (मूलमात्र, शास्त्री ) | ०-१०-० |
| षट्स्थानप्रकरणम् ( सटीकं ) | ०-८-० | ,, ,, (प्रा० हिन्दीअनुवादयुतं) | २-०-० | ,, ,, ( ,, गुजराती ) | ०-१०-० |
| भक्तामरस्तोत्रम् ( सटीकं ) | ०-८-० | साधुपंचप्रतिक्रमणसूत्र (हिन्दीशब्दार्थयुक्त) | १-०-० | राइदेवसिप्रतिक्रमणसूत्र (मूल, शास्त्री ) | ०-४-० |
| कल्याणमन्दिरस्तोत्रम् ( सटीकं) | ०-८-० | श्रावकपंचप्रतिक्रमणसूत्र ( ,, ,, ) | १-०-० | दादासाहेबकी पूजा ( शास्त्री ) | ०-२-० |
| वैराग्यशतक (मूल-छाँया-शब्दार्थ-भावार्थ-सहित ) | भेट | सौभाग्यपंचम्यादि (द्वादश) पर्व कथासंग्रह ( संस्कृत-गद्य ) | १-८-० | श्रीजिनदत्तसूरिजी जीवनचरित्र(गुजराती) | भेट |
| | | | | जिनकुशल जीवनप्रभा (गुजराती) | भेट |
| | | नवपदादितपविधि संग्रहः | ०-८-० | जिनचंद्रजीवनचंद्रिका (गुजराती) | भेट |

प्राप्तिस्थानम्—श्रीजिनदत्तसूरि-ज्ञानभंडार, महावीरस्वामि-जैन-मंदिर, पायधुनी, मुंबई ३.

# सूर्यपुरे श्रीजिनदत्तसूरि-ज्ञानभाण्डागारे-लभ्यग्रन्थाः—

| | |
|---|---|
| पचलिंगीप्रकरणम् ( सटीकं ) | २-८-० |
| संदेहदोलावली ( बृहद्वृत्तियुता ) | २-०-० |
| जयतिहुअणस्तोत्रम् ( सटीक ) | ०-४-० |
| संवेगरंगशाला ( सं० छायाऽन्विता ) | २-८-० |
| प्राकृतदीपालिकाकल्पम् | ०-८-० |
| भक्तामरस्तोत्रम् ( सटीकम् ) | ०-८-० |
| ईर्यापथिकीषट्त्रिंशिका (जयसोमीया, सटीका) | १-०-० |
| प्रश्नोत्तरमंजरी भाग ( १-२-३ हिंदी ) | भेट |
| पौषधषट्त्रिंशिका ( जयसोमीया, स० ) | १-०-० |
| श्रीपालचरित्रम् ( सं० श्लोकबद्धम् ) | भेट |
| ,, ,, (प्रा० हिन्दीअनुवादयुतं) | २-०-० |
| चैत्यवन्दनकुलकम् ( सटीकम् ) | २-४-० |
| साधुपंचप्रतिक्रमणसूत्र (हिन्दीशब्दार्थयुक्त) | १-०-० |
| श्रावकपंचप्रतिक्रमणसूत्र ( ,, ,, ,, ) | १-०-० |
| हर्षहृदयदर्पण (भाग १-२ हिंदी) | भेट |
| पंचप्रतिक्रमणादिसूत्र (मूलमात्र, शास्त्री) | ०-१०-० |
| राइदेवसिप्रतिक्रमणसूत्र ( मूल, शास्त्री ) | ०-४-० |
| धर्म० उत्सूत्रखण्डनम् ( सटीक ) | १-०-० |
| श्रीजिनदत्तसूरिचरित्र ( पूर्वार्द्ध ) | १-८-० |
| श्रीजिनदत्तसूरिचरित्र ( उत्तरार्द्ध ) | १-८-० |
| बृहत्स्तवनावली | १-८-० |
| प्राकृतव्याकरणम् | १-०-० |
| वैराग्यशतक (मूल-छाया-शब्दार्थ-भावार्थ सहित ) | भेट |

**प्राप्तिस्थानम्—श्रीजिनदत्तसूरि-ज्ञानभंडार, शीतलवाडी-उपाश्रय, ओशवाल महोल्ला, गोपीपुरा, सुरत.**

इति श्रीमत्तपागच्छाधिराजश्रीमुनिसुन्दरसूरिशिष्यपण्डित—

श्रीशुभशीलगणिविरचिता

श्रीभरतेश्वरबाहुबलिवृत्तिः समाप्ता ।

( द्वितीयो विभागः पत्राङ्कः १८७—३६८ )

इति श्रेष्ठि-देवचन्द्र लालभाई-जैन-पुस्तकोद्धारे-ग्रन्थाङ्कः ८७

# शेठ देवचंद लालभाई जैन पुस्तकोद्धार फंड

तथा

# श्री आगमोदय समिति.




जव्हेरी बजार–मुंबई.
१०००० – १–७–१९२९.

गोपीपुरा–सुरत.

बायंडरः–श्रीकृष्ण रूलींग प्रेस.
मुस्तफा मारकेट मुंबई नं. ३.

'सरणि' टीकयोपेतं, सप्तसन्धान नामकम् ;
चिरं जीयाच्चिरं जीयाद्, महाकाव्यं सदाहितम् ॥

गुणनिधिनिधिचन्द्रे १९९३ सम्मिते हायने स-न्नभसि विमलपक्षे व्यालतिथ्यां बुधेऽह्नि ।
इयमलभत पूर्त्तिं नेमिसज्जन्मतिथ्यां, भवतु च सरणीयं तेन तेषां मुदेद्राक् ॥ १८ ॥
तदियं सरणी लभतां गुरुजनपादप्रसन्नतां शश्वत् । आकल्पांतं भूमौ भूयान्निःपङ्किला भूयः ॥ १९ ॥

तदीय-

विनीतविनेयविनेयो धुरन्धरविजयः

शुभमस्तु

तपोगच्छच्छायायदवधिरभूत्साधुनिकरे, यदीयाच्छच्छाया क्षपयति महामोहतपनम् ।
समागच्छत्पट्टे तदनु भुवि रोचिष्णुरधिक-श्चतुश्चत्वारिंशत्तम इह जगच्चन्द्रमुनिराट् ॥ ६ ॥

यस्योपदेशमहिमा ननु वर्ण्यते किं, सम्राट्महानकबरोऽपि च संप्रबुद्धः ।
पट्टेऽष्टमागरमिते प्रबभूव हीर-सूरिः समस्तमुनिवृन्दविविक्तहीरः ॥ ७ ॥

सद्बुद्धिबुद्धिविजयस्तदनुक्रमेण, पट्टेऽक्षिवागरमितेऽजनि शान्तमूर्त्तिः ।
यः सर्वदा भुवि जनावनबद्धलक्ष्यो, लक्षीचकार निरवद्यशिवाख्यलक्ष्मीम् ॥ ८ ॥

तत्पट्टपङ्कजविकासनभानुमाली, चंचन्निशाकरसमुज्ज्वलकीर्त्तिशाली ।
श्रीवृद्धिवृद्धिविजयोऽभवदुग्रशील-शाली सुशासनविभावकशिष्यमाली ॥ ९ ॥

राजद्राजगुणोजनावनमहत्संधानुसंधानवान्, तीर्थोद्धारदृढव्रतो व्रतिजनज्ञानप्रचारोत्सुकः ।
सम्यग्बोधितराजमण्डलनमत्पादारविन्दोऽभव-त्तत्पट्टाम्बुनिधावखण्डशशभृत् श्रीनेमिसूरीश्वरः ॥ १० ॥

योऽयं सम्प्रतिशासनोन्नतिकरः शिष्यान्विनेयान् भृशं-नानादेशविशेषकेषु सुकृतोद्भागाय संप्रेषयन् ।
नित्यं सज्जनतोपकारकरणे लग्नो निमग्नः शिवे-मद्धर्मोपचयाञ्चितो विजयते ह्येको धरामण्डले ॥ ११ ॥

# शेठ देवचंद लालभाई जैन पुस्तकोद्धार फंड

तथा

# श्री आगमोदय समिति.




जव्हेरी बजार–मुंबई.
१००००–१–७–१९२९.

गोपीपुरा–सुरत.
बायंडरः–श्रीकृष्ण रुलींग प्रेस.
मुस्तफा मारकेट मुंबई नं. ३.

ॐ अर्हं नमः

शासनसम्राट्-श्रीमद्विजयनेमिसूरीश्वरसद्गुरुभ्यो नमः ।

महामहोपाध्याय-श्रीमेघविजयगणि-प्रणीतं

# सप्तसन्धान-महाकाव्यम्

शासनसम्राट्-सूरिचक्रचक्रवर्ति-सर्वतन्त्रस्वतन्त्राचार्यवर्य-श्रीमद्विजयनेमिसूरीश्वरमहाराज-पट्टालङ्कार-

शास्त्रविशारद-कविरत्नाचार्य-श्रीमद्-

—: विजयामृतसूरीश्वरमहाराजविरचित-'सरणी' टीकोपेतम् :—

—: प्रकाशयित्री :—

सूर्यपुर (सुरत) नगरस्था श्री जैन-साहित्य-वर्धक-सभा.

वीर-निर्वाण-संवत् २४७०

मूल्यम् रूप्यकाणां चतुष्कम् रु ४-०-०

विक्रम-संवत् २०००

जैन भास्करोदय मुद्रणालये मुद्रितम्

भाशापुरा रोड-जामनगर.

खूबी ए छे साते नायको कया मासमां कइ तिथिए जन्म पाम्या, ते पण एक बीजा चरित्रनी साथे विरोध वगर बताव्युं छे, ने ए रीते जन्म वर्णन नामे बीजो सर्ग २५ सूक्तमां पूर्ण करेल छे.

त्रीजा सर्गमां सुरेन्द्रोए करेल जिनेश्वरोनो जन्मोत्सव ने अन्य बे नायकोनो अन्यकृत जन्मोत्सव, सर्वेनुं नामकरण, बाल्यक्रीडा,–यौवनप्राप्ति, स्वयंवरनी परिस्थिति, विवाह, कुटुम्बपरिवार, आदि विशद वर्णव्या छे. आ सर्गमा ४८ सूक्तो छे. अनुप्रास अने यमक सूक्त मात्रमां छे. आनुं नाम 'कौमारवर्णन' छे.

'पूज्य राज्य वर्णन' नामे चतुर्थ सर्ग ४२ श्लोक प्रमाण छे. तेमां राज्यनीतिथी थतो प्रजाने संतोष–आनन्द, कृष्णचरित्रान्तर्गत पांडवो अने कौरवोने थयेल राज्यखटपटो–युद्धो वगेरेनुं वर्णन, तीर्थङ्करोने लोकान्तिकदेवोए तीर्थप्रवर्ताववा करेल प्रेरणा, वार्षिकदान, पञ्चमुष्टिलोच–दीक्षा आदि वर्णन छे.

पांचमा सर्गमां–श्रीजिनेश्वरोना विहारनुं वर्णन, कर्मक्षय माटे करेल विविध तपश्चरण, उपसर्गसहन, आदि, रामपक्षमां वनवास, त्यां पडता कष्टो, सीता विरह, कृष्णपक्षमां विविध युद्ध वगेरेनुं शान्त वीर करुण रसमिश्रित वर्णन छे श्रीभगवद्विहारवर्णन नामनो आ सर्ग ५८ श्लोक प्रमाण छे.

छठा सर्गमा–६३ श्लोको छे. तेमां जिनेश्वरो–समितिगुप्तिनुं आसेवन करतां अप्रतिबद्धपणे विचरतां काम वगेरे अभ्यन्तर शत्रुगणनो विनाश करी केवळज्ञान प्राप्त करे छे, ते तथा अन्य पक्षमां बाह्य शत्रुओना विजय वगेरेनुं वर्णन छे. तेनु नाम 'भगवत्केवलज्ञानसाम्राज्यवर्णन' एवुं छे.

सातमा अने आठमा–सर्गनुं नाम अनुक्रमे 'भगवत्केवलज्ञानसाम्राज्यविहारवर्णन' अने दिग्विजयवर्णन छे. तेमां ४२ ने २८ सूक्तो छे. नाम प्रमाणेज भगवन्तोए केवळप्राप्ति पछी क्यां

क्यां विहार कर्यो ते, गणधरोनी स्थापना, अनेक जीवोने करेल धर्मप्रतिबोध आदि वर्णव्या छे. ने इतर बे नायकोए करेल अनेक राजाओनो विजय वगेरे वर्णव्या छे. आ बे सर्गमां बीजी विशेषता ए छे के महाकाव्यना लक्षणने अनुसार एक सर्गमां विविध छन्दोनां मूक्यो छे. ने यमक नामे शब्दालङ्कारना प्रायः जेटला भेदो थाय छे ते सर्वना उदाहरणो छे. यमकनो महायमक नामे जे छेल्लो भेद छे तेनुं उदाहरण पण आमां छे. छए ऋतुनुं वर्णन घणुज रसिक आ सर्गोमां छे.

छेवट नवमां सर्गमा जिनेश्वरोना मोक्ष कल्याणकादिनुं विशदवर्णन, परम्परावर्णन वगेरे छे. तेनुं नाम 'परम्पराधिकारवर्णन' एवु छे.

(६) अन्य काव्यना रचयिता कोइ सामान्य कवि होय तो आ काव्यना कर्ता समर्थ महाकवि छे. आ काव्यना प्रथम उत्पादक कलिकाल सर्वज्ञ भगवान् श्रीहेमचन्द्रसूरिजी महाराज छे, के जेमनी सर्वशास्त्रविषयक विद्वत्ता माटे, आजे कोइपण वेगत नथी. तेओ श्रीए काव्यसृष्टिमां चमत्कार उपजावे एवुं सर्वाङ्गसुन्दर सप्तसन्धान महाकाव्य योज्युं हतुं. परन्तु कराल काल तेनी सुन्दरता सांखी न शक्यो, ने तेने निःसहाय स्थितिमां जोइ छिन्नभिन्न करी फेंकी नाख्युं. त्यारबाद सत्तरमी अने अढारमी सदीना मध्यकालमां झळकता, साहित्यना अद्वितीय विद्वान, उपाध्यायजी महाराज श्री मेघविजयजीगणिए ते काव्यने पुनर्जन्म–आप्यो. उपाध्यायजीनी ग्रन्थविरचन शक्ति अद्भुत हती; तेमनां ग्रन्थो अवलोकतां तेमनुं व्याकरण साहित्य ने ज्योतिष् विषयक पाण्डित्य अगाध हतुं ए निश्चित थाय छे. सौ करता तेमनामां एक विशेषता ए हती के, तेओ पादपूर्ति करवानी कळामां अतिशय कुशळ हता; ने कळामां तेमनाथी आगळ वधेल कोइपण हजु सुधी जोवामां जाणवामां के सांभळवामां आवेल नथी. तेमणे मात्र काव्यनी पादपूर्ति करी पूज्या-

करो तो अमो तेने छपावी प्रसिद्ध करीए' महाराजश्रीए टीका पूर्ण करी अने कपडवणजनी शेठ मीठाभाइ कल्याणचंदनी पेढीए जामनगर–भास्करोदय प्रेसमां तेनुं मुद्रण करावबानो आरम्भ कर्यो.

सं. १९९५ मां महाराजश्री सुरत पधार्या ने चतुर्मास दरम्यान शासनप्रभावनाना अनेक धार्मिक कार्यो थया, तेमां आ– 'श्री जैन साहित्य वर्धक सभा' नी स्थापना पण थइ. अमोए आ ग्रन्थ आ सभा तरफथी प्रकट करवानी महाराजश्रीने विनति करीने शेठ मीठाभाइ कल्याणचंदनी पेढी पासेथी ग्रन्थ मांगी लीधो. पेढीए पण रु. २०० नी मदद आपवा साथे आ ग्रन्थ प्रसिद्ध करवा अमोने आप्यो ते माटे अमो तेमनो आभार मानीए छीए.

विद्वानोने आग्रह सह विनवीए छीए के कविरत्न–शास्त्रविशारद विद्वद्वर्य–आचार्य महाराज श्रीविजयामृतसूरिजी महाराजश्रीए घणाज परिश्रमे तैयार करेल आ 'सरणी' टीका युक्त संस्कृत साहित्यना परमकोटिना अद्वितीय ग्रन्थरत्नतुं वाचन–विलोकन करी पोतानी विद्वत्ताने समृद्ध बनावे; बधु न बने तो आ ग्रन्थरत्नने साचवणीथी पोतानी पासे राखी पोते, शोभे ने पोताना भंडारने शोभावे.

आवा विशिष्ट ग्रन्थो साचवी राखवा ने तेनो प्रचार करवो ए पण जीवनतुं एक अमूल्य कर्तव्य छे. सहृदयो हृदयथी आ महाकाव्यने सत्कारे !

पज इच्छा साथे विरमोए छीए अमे
केशरीचंद हीराचंद झवेरी तथा नेमचद मोतिचंद झवेरी
ओ. सेक्रेटरीः–श्री जैन साहित्य वर्धक सभा–सुरत.

# श्रीसप्तसन्धानमहाकाव्यस्य प्रधानविषयानुक्रमणिका।

॥ अर्हं नमोनमः ॥

अक्षीणमहानसादिलब्धिसमन्विताय श्रीगौतमस्वामिनेनमः ॥

तपोगणगगनाङ्गणगगनमणये जगद्गुरवे
श्रीनेमिसूरीश्वरमद्गुरवेनमः ॥

—o—

महोपाध्यायश्रीमेघविजयगणिविरचितं

# सप्तसन्धानमहाकाव्यम्

शास्त्रविशारद–कविरत्न–भट्टारकाचार्य–श्रीविजयामृतसूरिप्रणीतया–
सरणी इत्यभिधानया टीकया समन्वितम् ।

श्रियेऽनन्याभव्याविदधतु कृपाकाः स्मरणतः, शशाङ्काकच्छायोच्छलितललितामन्दयशसः ।
शिवाङ्गांगोद्धाबाधिकरमणसद्भोगिगुखदा, महावीरा धीराः प्रगतभवतीराः सुरुचिराः ॥ १ ॥

१ श्रीऋषभदेवादिपञ्चजिनपतिस्तुत्यात्मक पद्यार्थकोऽयश्लोक शिखरिणीछन्दसि

पकमलोल्लासने रविः, मुनिसुव्रतान्वये=मुनिसुव्रतस्य=द्वाविंश जिनस्यान्वयः कुलं हरिवंश स्तस्मिन् अश्चितः=पूजितः, शिवायाः=तन्नामिकाया निजजनन्याः महोदय=तीर्थकृज्जनिजनितजगद्वन्द्यताद्यात्मकसौभाग्यं दधत्=सम्पादयन् स जिनो नेमिनाथाख्यः भासतां=प्रकाशताम् शेषं पूर्ववत् शान्तिनाथपक्षव्यावर्णितदिशा चतुर्विंशति जिनसामान्यस्य स्तुत्यात्मकमिदंपद्यमवगन्तव्यं नेमिनाथ=मुनिसुव्रतवर्ज सर्वेषामिक्ष्वाकुवंशप्रभवत्वात् तत्र नेमिनाथ पक्षोचितप्रकारः परिदर्शित एव । मुनिसुव्रतान्वये=मुनिसुव्रतायाः=स्वमातुः अन्वये=पितृवंशे श्वशुरवंशे च अश्चितः-अर्चितः उभयकुलानन्दकरत्वात् । श्रीनाभिजन्मान्वयपद्मभास्करत्वं तु नेमिनाथपक्षवर्णितदिशावसेयमिति.

श्रीअर्हदाद्यः कृतशान्तिसर्गः, समुद्रजन्मानवराजवर्गः ।
श्रीपार्श्वनाथः शुभवर्द्धमानः, श्रियाऽभिरामस्तमिह स्मरामः ॥ २ ॥

(अन्वय.) इह [य] अर्हदाद्य. कृतशान्तिसर्गः समुद्रजन्मा नवराजवर्गः श्रीपार्श्वनाथ शुभवर्द्धमान श्रियाभिरामश्च तम् स्मराम ॥ २ ॥

व्याख्या–प्रवृत्तिनिमित्तभूत सप्तशलाकापुरुषचरितवर्णनात्मक विधेयं तत्स्मरणव्याजेन दर्शयन्नाह–श्री इत्यादि ।

इह=अस्मिन् काव्ये, यत्तदोर्नित्यसम्बन्धादग्रेतनतमित्यनुरोधात् यः श्रीअर्हदाद्यः=श्रीमतामर्हतां=चतुर्विंशति तीर्थकृताम् आद्यः=प्रथमः ऋषभदेव इत्यर्थः । कृतशान्तिसर्गः–कृतः–सम्पादितः शान्तेः– सकलोपप्लवप्रशमनस्य सर्गः=सृष्टिरुत्पत्तिर्येन स तथोक्तः । समुद्रजन्मा नवराजवर्गः=मुदा–हर्षेणसहितः समुद्–सहर्षः रजन्–रागवान् मानवानां राज्ञां च वर्गः–समूहोयस्मिन् सतथोक्तः । श्रीपार्श्वनाथः–पार्श्वे–समीपे (सेवार्थमागताः) नाथाः–इन्द्रादयो यस्य स तथोक्तः । शुभवर्धमानः–शुभेन वर्धते इति, शुभं

वर्धमानमस्मादिति, शुभं—कल्याणं वर्धते अन्तर्भावितणयर्थतया वर्धयतीति वा स तथोक्तः। श्रिया–चतुस्त्रिंशदतिशयसम्पदा त्रिलो-
कीकमनीयसौन्दर्यलक्ष्म्या वाऽभिरामो–मनोहरः, तं स्मरामः–वर्णनीयतया चिन्तयामो वयं कवयितार इति गम्यते।

३ पार्श्वनाथपक्षे–श्रीअर्हदाद्यः–अर्हतां–पूज्यानाम् अर्हत्सु वा आद्यः–प्रधानः श्रीपार्श्वनाथः–तदाख्यत्रयोविंशतीर्थकरः

शेषं पूर्ववत्।

२ शान्तिनाथपक्षे च—कृतशान्तिसर्गः–गर्भावस्थायामपि विहितमारीरूपोपप्लवोपशमनः शान्तिकरणाच्च तदाख्य

शान्तिनाथ इत्यर्थः शेषं समानम्।

**नेमिनाथपक्षे**–समुद्रजन्मा–नामैकदेशे नामग्रहणात् समुद्रेत्यनेन समुद्रविजयो नृपो गृह्यते तस्माज्जन्म यस्य स तथोक्तः

नेमिनाथ इत्यर्थः। नवराजवर्गः–नौतीति नवः–स्तोता राजवर्गोऽस्य सः, नवानां राज्ञां वर्गः पितृव्यत्वेनास्त्यस्येति वा स तथोक्तः

अन्यत् समानम्।

**महावीरपक्षे**–शुभवर्धमान इति विशेष्यपदम् गर्भस्थितेऽस्मिन् प्रभौ पितुः सिद्धार्थराजस्यानुदिनमुत्तरोत्तरं कल्याणाऽभि-
वृद्ध्या पित्रा शुभसंवर्धनहेतुभूतस्यास्य 'वर्धमान' इति नामकरणात्. यद्वा शोभने इति शुभः स चासौ वर्धमान इति.

**रामपक्षे**–श्रीअर्हन्तश्चतुर्विंशतितीर्थकृत आद्याः–मुख्या यस्य यस्माद्वा स श्रीअर्हदाद्यः। त्रिषष्टिशलाकापुरुषेषु तीर्थकृतां
मुख्यत्वात्। श्रिया–सीतारूपया लक्ष्म्या अन्वित इति शेषः आभिरामः–आभाऽस्याऽस्तीत्याभी स चासौरामः–तदाख्यो दाशरथिर्व-
लदेवः, " श्रियासरामः इति पाठान्तरम् तत्र श्रिया–लक्ष्म्या युक्तः सः प्रसिद्धः रामः–रामचन्द्रः तं स्मराम इति सम्बन्धः अन्यदि-

अन्वयः—इह आगमादौ सा निपुणा ब्राह्मी अव्यात् यस्या नद्या रसांगात्। कमलोदयश्रीः द्रवसुप्रसादात् सिताम्बराणां जनतानुवृत्तिरद्यापि ॥ ४ ॥

व्याख्या—इह आगमादौ शास्त्रादौ अर्थात् अस्मिन् काव्यादौ सा भुवनविदिता निपुणा दक्षा पूर्णेत्यर्थः ब्राह्मी सरस्वती "ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वतीत्यमरः" अव्यात् पायात् यस्याः सरस्वत्या भारत्या नद्याः पवित्रायाः सर्वश्वेतायाः रसांगात् रसस्यास्वादस्य अनुभवस्येत्यर्थः अङ्गात् उद्यमात् यत्नात् कमलोदयश्रीः कमलाया लक्ष्म्याः सम्पदः उदयश्रीः समभ्युदय-सम्पत् द्रवसुप्रसादात् द्रवति स्निह्यतीतिद्रवः स्नेहः प्रसन्नता इति यावत् तस्य परिहासस्य सुप्रसादात् सत्कृपातः सिताम्बराणां निर्मलवसनानां देवानां जनतानुवृत्तिः जनतायां मनुष्ये अनुवृत्तिरागमनम् स्तुत्यालम्बनतया जनानुकम्पनमिति भावः अथ च सिताम्बराणां श्वेताम्बराणां आर्हतानां जनतानुवृत्तिः लोकसदुपदेशानुसरणम् अद्यापि अधुनापि भवतीति शेषः।

नदीपक्षे च—यस्या नद्याः नदीरूपायाः सरस्वत्याः सरस्वत्यभिधानायाः रसांगात् जलरूपात् कमलोदयश्रीः कमलानां सरोजानाम् उदय श्रीः समुद्भवश्रीः सद्विकाशशोभेत्यर्थः द्रवसुप्रसादात् प्रवाह सुप्रभावात् सिताम्बराणां अम्बते शब्दं करोतीत्यम्बः शब्दः तं रातिगृह्णातीति अम्बरः पक्षः सितौ अम्बरौ येषां ते सिताम्बराः हंसाः तेषां जनतानुवृत्तिः मानससरात् नरक्षेत्रे अनुवृत्तिरनुस्मृतिरद्यापीदानीमपि भवतीति शेषः।

मुखेन दोषाकरवत् समानः, सदा—सदम्भः—सवने सशौचः।
काव्येषु सद्भावनयानमूढः, किं वन्द्यते सज्जनवन्ननीचः? ॥ ५ ॥

अन्वय -नीच· सज्जनवत् किं न वन्द्यते ? मुखेन दोषाकरवत् ममानः । सदा सदम्भः सवने सशौच', काव्येषु सद्भावनया न मूढः ॥ ५ ॥

व्याख्या-नीचः=दुर्जनः सज्जनवत्=सत्पुरुष इव किं न वन्द्यते अभिवाद्यते स्तूयते वा उभयोः समत्वात् । साम्यं दर्शयति= मुखेन दोषाकरवत्=दोषा रात्रिं करोतीति सः तेन तुल्यं तद्वत् चन्द्रसदृशः, समानः=सह मानेन=सम्मानेन पूजा सत्कारेण वर्तते इति स तथोक्तः सदम्भःसवने सत्=सत्यमेवाऽम्भः=जलं तस्मिन् सवने=स्नाने अनुशीलने स शौचः=सनिर्मलः पवित्रः सत्यनिष्ठ इत्यर्थः । काव्येषु=सद्भावनया=उत्कृष्ट भावनया न मूढः उत्तमविचारणया हेतुना न मूढः न अनभिज्ञः यद्वा=काव्येषु सद्भावनयानमूढ इति समस्तं, काव्यस्य इषुषु=गुणेषु सद्भावनं=सद्विचारस्तत्रयानं=गमनम् ऊढः प्राप्त इत्यर्थः। अत्र दुर्जनस्य व्याजस्तुत्या सर्वथाऽन्य-त्वमेव सोसूच्यते सज्जनतो महदन्तरत्वात् तथाहि नीचः मुखेन दोषाकरवत्समानः=दोषाणां दुर्गुणानां=माकरः राशि रस्त्यासौ दोषा-करवान् तेन समानः सदृशः गुह्यप्रकाशनादिदुर्गुणोदीरणकरणतया वदनेन दोषपुञ्जविशिष्टतुल्यः ।

यद्वा दोषाऽऽकर इव दोषाकरवत् । समानः=साऽहङ्कारः सदासदम्भः=सकपटः, सवने=सद्यमन्थाने उपलक्षणतया तदादिकार्येऽ-सशौ चः=शौचेन=सहितः सशोचः स नभवतीत्यसशौचः अशुचिरित्यर्थः । यद्वा सदम्भः सवने=सत्पक्षपातकरणे सशौचः=शुचेव शौचं=शोकः स्वार्थिकः प्रत्ययण् तेन सहितः सशौचः=सशोक इत्यर्थः । काव्येषु सद्भावन-यान-मूढः=सद्भावने=सद्विचारे यानं=गमनं तस्मिन् मूढः=विकलः अपटुः, ॥ उपमा, अर्थश्लेषः, सभङ्गशब्दश्लेषः, व्याजस्तुतिश्चालङ्काराः ॥ सवनं त्वध्वरेस्नाने सोमनिर्दलनेऽपिचेतिमेदिनी ॥ ५ ॥

## उच्छृङ्खलात्कि खलतो न बिभ्येत्, सभ्यस्तथेभ्यः परमार्थनाशात् ॥

[अन्वय.]—अस्मिन् खले सभाया रुचिः न भायात् [ इति ] राज्ञा राज्यात् पुरतोऽपि स त्याज्य. ।. यत्र, पुरस्तात्कण्टकिनो द्रुमा. स सुमनः-प्रदेशः दुष्प्रवेश· ॥ ९ ॥

व्याख्या—अस्मिन् खले=पिशुने विषये सभायाः=समाजस्य जनताया इत्यर्थ रुचिः=प्रीतिः न भायात्=शोभेत यद्वा अस्मिन् खले सति सभाया रुचिः=कान्तिः नभायात्–प्रकाशेत् विवादोत्थानसंभवात् । अथ वा अस्मिन् खले सभाया न रुचिः=राजपरिषत्प्रवेशाऽभि रुचिः भायात् एवं समम्भाव्यते इति हेतोः राज्ञा=नृपेण शासकेनेतिभावः राज्यात्=राजधान्याः राष्ट्राद्वा पुरतः=स्वाग्रतः नगराद्वा गृहाद्वा अपि त्याज्यः=वर्जनीयः निष्कासनीय इत्यर्थः अमुमर्थं दृष्टान्तेन दृढयन्नाह=यत्रेति=यत्रसुमनःप्रदेशे पुरस्तात्=प्रवेशमार्गस्याग्रतः कण्टकिन=स कण्टकाः द्रुमा=मार्गवृक्षा भवेयुः स सुमनसां=पुष्पाणां प्रदेशः सुमनः=प्रदेशः पुष्पवाटिकादिः दुष्प्रवेशः अशक्यान्तर्गमनो भवतीति लोके प्रसिद्धोऽयमर्थः । शब्दश्लेषो, द्रष्टान्तश्च पुरं नपुंसकं गेहे देह पाटलिपुत्रयोरितिमेदिनी स्यात्पुरः पुरतोऽग्रत इत्यमरः ॥ ८ ॥

खलादरो यश्च गवां स्वभुक्तौ, भवेत्पशूना मुचितो न नृणाम् ।
स गोः पतित्वाद् यदि भूपसर्गे, तत्पाशुपत्यं ध्रुवमीश्वरस्य ॥ ९ ॥

अन्वयः—गवा स्वभुक्तौ य. खलादरः. भवेत् [ असौ ] पशूनां [ गवाम् ] उचित., नतु नृणाम् । स गोःपतित्वात् यदि भूपसर्गे स्यात् तत् ईश्वरस्य ध्रुव पाशुपत्यं भवेत् ॥ ९ ॥

व्याख्या:–गवां=धेनूनां स्वभुक्तौ=स्वाहारे विषये यः खलादरः=खलं=तिलकल्कः धान्यमर्दनभूमिश्च तत्राऽऽदरः स्नेहः अगौ पशूनाम् उचितः=योग्यः अगर्हणीयः भवेत् न तु नृणां=मनुष्याणामपि।

दुर्जनेषु प्रीतेः तेभ्य ग्रासस्य तिलकल्काऽशनस्य च मनुजाना=मनौचित्यात्। तथा च सः=खलादरः=खले=नीचे आदरः गोः पतित्वात्–गौः (सौरभेयी पृथ्वी च तस्याः पतित्वात्=स्वामित्वात तत्साम्यादिति भावः, यदि भूपसर्गे–नृपस्वभावे नृपसाम्राज्ये वा स्यात् तत्–तदा ईश्वरस्य=राज्ञः पाशुपत्यं=पशुपतित्वं मूर्खशिरोमणित्वं ध्रुवं निश्चितं स्याद् शब्दसाम्येन छलितत्वात्॥ स्वर्गेषु पशुवाग्वज्र दिग्नेत्रघृणिभूजलेगौरित्यमरः॥ ९॥

खले प्रतीता वहुधा-न्यपाताद्, विक्षेपणा क्षेपमतिर्नृपस्य।
मुखे निवन्धेन गवां नृणां वा, निजार्जितस्यापिमनाग् न भोगः॥ १०॥

अन्वय.–खले वहुधा–न्यपाताद् नृपस्य, विक्षेपणाक्षेपमति प्रतीता। नृणां गवां वा मुखे निवन्धेन निजार्जितस्यापि मनाग् भोग न॥ १०॥

व्याख्या–खले=दुर्जने विद्यमाने सति वहुधा=वहुप्रकारेण अन्यपातात् अन्येषां–परेषां खलानुमतानां पातात्=आपतनात् प्रदेशात् नृपस्य खलाधीनसर्वराज्यतन्त्रतया विक्षेपणाक्षेपमतिः–विक्षेपणे=अभिमतानां दूरीकरणेआक्षेपे=मान्यानां गर्हणे च आ=समन्तात् क्षेपे–विलम्बे राजकार्याणां सम्पादन कालाऽतिपाते वा मतिः–बुद्धिः विचारो वा प्रतीता–प्रसिद्धा एवाऽस्ति।

लोकेऽपि खले–धान्यमर्दनस्थले वहुधान्यपातात्–बहूनां–प्रचुराणां धान्यानां–शालि·गोधूमादिव्रीहीणां पातात्–मर्दनार्थं पक्षेपात्

यद्गोरसाधिक्यमुदेतिलोके–खलस्यपर्यायविनाशनेन ।
संभाव्यतेस्मादमृताशनस्या–धिकाधिकारद्विबुधात्मनैव ॥ १२ ॥

अन्वयः—लोके खलस्यपर्यायविनाशनेन यद्गोरसक्यमुदेति अस्मात् । अमृताशनस्य अधिकाधिकारात् विबुधात्मतैवसंभाव्यते ॥ १२ ॥

व्याख्या–लोके खलस्य तिलकलकस्य द्रव्यविशेषस्य पर्याय विनाशनेन पर्यायः क्रमभाविस्वभावः प्रकृते खलत्वरूपस्तस्य विनाशने नध्वंसेनेत्यर्थः गोरसाधिक्यं दुग्धघृतादिप्रचुरता उदेति उद्भवति अस्मात् गोरसाधिक्यात् अमृताशनस्य दुग्धघृतादि भोजनस्य अधिकाधिकारात् अधिकप्रवर्त्तनात् निरंन्तरप्रचारात् विबुधात्मतैवपण्डितात्मतैवसंभाव्यते उत्प्रेक्ष्यते शुद्धाहारविहारस्य-निर्मलबुद्धि-प्रयोजकत्वादितिभावः ।

अथ च खलस्य दुर्जनस्य पर्यायविनाशनेन तद्वाचकपर्याय नृशंस घातुक क्रूरादिशब्दानामपि निराकरणेन गोरसाधिक्यम् गोः वाल्याः रसस्य आस्वा-द विशेषस्य आधिक्यम् समृद्धिरुदेति यद्वा गोः पृथिव्या रसस्य गुणस्य क्षान्त्यादे राधिक्यं बाहुल्यमुदेति प्रकाशते अस्माद् गोरसाधिक्यात् अमृताशनस्य देवस्य अधिकाधिकारात् अत्यधिकसम्बन्धात् विबुधात्मतैव सर्वेषान्देवत्वमेव संभाव्यते देवसम्बन्धादन्येषामपि देवत्वं सुतरां भवतीति भावः ॥ १२ ॥ श्लेषतुल्ययोगिते चात्रालंकृती । खलःकल्केभुविस्थाने इति हेमः पिशुने दुर्जने खल इति शृङ्गारादौ विषे वीर्ये गुणेरागेद्रवेरस इत्युभयत्रामरः ॥ १२ ॥

कायेन वाचा मनसा विशुद्धः, स पक्षमध्यस्थित एव हंसः ॥
ब्रह्माऽमुनाऽवाह्यधियापि वाह्यः, प्रियो विधिस्तन्ननु सज्जनस्य ॥ १३ ॥

अन्वयः-स हंस एव [ यथा हंस ] कायेन वाचा मनसा विशुद्ध पक्षमध्यस्थित. । [ तथा सज्जनोऽपि ] अमुना ब्रह्माऽवाह्यधियाऽपि वाह्य तत् विधिःसज्जनस्य प्रिय. ॥

व्याख्या—सः=सज्जनः हंस एव हेतुमाह यथा हंसः=स्वनामख्यातपक्षिविशेषः कायेन=स्वरूपेण वाचा=स्वरेण मनसा च विशुद्धः अवदातः पवित्रश्च पक्षमध्यस्थितः पक्षयोः गरुतोर्मध्ये-ऽन्तरालेस्थितः तथा सज्जनोपि कायवाङ्मनोभिः विशुद्धः=अनाघः, पक्षमध्यस्थितः= पक्षे=वादि प्रतिवादिनोर्विरोधे मध्यस्थितः=मध्यस्थः । यद्वा पक्षयोः=वादिप्रतिवाद्युभयप्रश्नकोटि-समाधान कोट्योः मध्यस्थितः=माध्यस्थ्य माश्रितः नत्वन्यतर पक्षपातीत्यर्थः निष्पक्षपात इति यावत् । अन्यदपिसाम्यं दर्शयति ब्रह्मेति अमुना-हंसपक्षिणा ब्रह्मादेवविशेषः अवाह्यधिया हार्दिकानुरागेण यद्वा अयं मयावाह्य इति संकल्पमन्तरेणापि स्वभावतएववाह्यः स्वपृष्ठेधार्यः हंसस्य तद्वाहनत्वात् तत् तस्मात् सज्जनस्य विधिः शास्त्रोक्तक्रियाकलापः प्रियः स्वकर्तव्यत्वेनाभिमत इत्यर्थः अत्रविधिशब्दस्य ब्रह्मशब्दपर्यायत्वेऽप्यर्थभेदादर्थश्लेपः तथा सज्जने हंसारोपणाद्रूपकोऽवाह्यवाह्यत्वेन विरोधाभासश्चेत्यलंकृतयः ॥ १३ ॥

मरालबालः स्वत एववक्त्रे, रक्तः प्रसक्तश्चरणेऽपि तद्वत् ॥
स राजहंसः कविनास्वकार्ये, स्मार्यः स दुग्धाम्भसि तद्विवेक्ता ॥ १४ ॥

# श्रीसप्तसन्धानमहाकाव्यस्य प्रधानविषयानुक्रमणिका।

॥ अर्हं नमोनम ॥

अक्षीणमहानमादिलब्धिसमन्वित्ताय श्रीगौतमस्वामिनेनमः ॥

तपोगणगगनाङ्गणगगनमणये जगद्गुरवे
श्रीनेमिसूरीश्वरमद्गुरवेनमः ॥

महोपाध्यायश्रीमेघविजयगणिविरचितं

# सप्तसन्धानमहाकाव्यम्

शास्त्रविशारद–कविरत्न–भट्टारकाचार्य–श्रीविजयामृतसूरिप्रणीतया–
सरणी इत्यभिधानया टीकया समन्वितम् ।

श्रियन्नव्या भव्या विदधतु नृपांकाः स्मरणतः, शशाङ्काकच्छायोच्छलितललितामन्दयशसः ।
शिवाङ्गांगोद्वाचाधिकरमणसद्भोगिसुखदा, महावीरा धीराः प्रगतभवतीराः सुरुचिराः ॥ १ ॥

१ आक्षयनव्यादिपञ्चजिनपतिस्तुत्यात्मकः पद्यार्धेऽयश्लोक शिखरिणीछन्दसि

या संस्मृताऽन्तरतमोऽतिनिरस्तसद्यः, प्रोद्भासिमन्मतिविकाशमलं ददाति ।
श्वेताम्बरप्रगुणहार्द्दरमाभिरामां, जैनीङ्गिरंस्वहृदये समुपास्महे ताम् ॥ २ ॥
यस्योपदेशवचनामृतसेकलेशः, सद्योऽङ्गहृन्मरुधरेऽपिनिपत्यसम्यक् ।
प्रोद्भावयत्यतिसुपुण्यविशालकन्दं, तंनेमिसूरिनवचारिदमानमामि ॥ ३ ॥
सप्तार्थमङ्ग्रथनकौशलचञ्चुबुद्धेः, क्वेदंहिमेघविजयस्यगभीरकाव्यम् ।
काव्यार्थभावनविधावतिमन्दबुद्धिः, काहन्तथापि रभसाद्विवृतिं करोमि ॥ ४ ॥
श्रीमद्गुरोः कतिपयाक्षरसत्सुधानां, सङ्ग्राहकस्य मम मेघवचःप्रवृत्तिः ।
सच्छास्त्रशुद्धमनसां मनसां मुदेस्या-त्केकेवकिन्नहिसदाभविनांकवीनाम्॥ ५ ॥
सप्तसंधानकाव्येऽस्मिन् सरणी क्रियते मया । इमामालम्ब्य विद्वांसः प्रवर्त्स्यन्तीह निर्भयम् ॥ ६ ॥

ऐदंयुगीन चतुर्विंशति तीर्थकृतांमध्ये प्रथम षोडश-द्वात्रिंश-त्रयो-विंश-चतुर्विंशानां क्रमतः श्रीमदादिदेव-शान्तिनाथ-पार्श्वनाथ नेमिनाथ-महावीरस्वामीनां प्राधान्यात्,-विचित्र पवित्र चरित्र तया, पुण्य प्राग्भारसम्पन्नतया च. वासुदेव-बलदेवानां च मध्ये स्व-पर दर्शनेषु श्रीकृष्ण-रामयोर्देवाऽतिप्रसिद्धतया तेषां चरित्रवर्णनात्मकस्तुतिव्याजेन प्रपाणकरसन्यायेन एकेनैव काव्येन सप्तपुरुषोत्तमसत्तमचरिताऽमृताऽऽस्वादजन्याऽनन्यसामान्यमान्द्रानन्दसन्दोह मनुभवितुं परॉश्चानुभावयितुं 'सप्तसन्धाना'ऽभिधानमन्वर्थनामानं महाकाव्य चिकीर्षु ग्रन्थकृद् विघ्नविघाताया ऽविगानेन शास्त्रपरिसमाप्त्यर्थमाशीर्वादात्मकं मङ्गलमाचरन् शिष्य-

शिक्षायै श्रोतृ-व्याख्यातॄणामनुपङ्गतो-मङ्गलाय च निबध्नाति—

श्रीनाभिजन्माऽन्वयपद्मभास्करः, स्तुतोऽञ्चितः श्रीमुनिसुव्रतान्वये ।
जिनः शिवायास्तु दधन्महोदयं, स भासतां यद्भजनेजयाश्रयः ॥ १ ॥

(अन्वय) यद्भजने सभासतां जयाश्रय, श्रीनाभिजन्मान्वय पद्मभास्कर, श्रीमुनिसुव्रतान्वयेऽञ्चित, स्तुत, महोदयं दधत् स जिन शिवाय अस्तु ।

व्याख्या —प्रथममादिनाथपक्षीयाविवृतिः-यस्य=ऋषभस्य भजने=भक्तौ सेवायां 'कृते' इतिशेषः । सभासतां=सभ्यानां जयाश्रयः=जयाश्रयणं बाह्याऽऽन्तररिपुकर्मकविजयाऽऽप्तिः 'सञ्जायते'इतिशेषः । सः श्रीनाभिजन्मा=श्रीयुक्त नाभिराजतनुजः, अन्वयपद्मभास्करः=स्वकीयकुलकमलोद्द्योतनप्रद्योतनः, श्रीमुनिसुव्रतान्वये=श्रीमतां मुनीनां, सुव्रतानां=व्रतान्वितश्राद्धानां चाऽन्वये=कुले लक्षणया समूहे इत्यर्थः अञ्चितः=पूजितः सत्कृत इति यावत् स्तुतः=स्तुतिविषयीकृतः शक्रेन्द्रादिभिरिति गम्यते महोदयं=चतुस्त्रिंशदतिशयसमृद्धिरूपमहैश्वर्यं दधत्=धारयन् जिनः=जयति रागादीन् इति स तथोक्तः रागादि जयनशीलः शिवाय=भव्यानां कल्याणाय अस्तु=भवतु

शान्तिनाथ पार्श्वनाथ वीरपक्षे च श्रीनाभेर्जन्म=उद्भवो यस्य तादृशोऽन्वयः=वंश इक्ष्वाकुवंशः सएव पद्मं तत्प्रकाशे सूर्यः, अन्यत् पूर्ववत् ।

श्रीनाभिजन्मान्वयपद्मभास्करः=श्रिया इनः=पतिः श्रीनः=श्रीकृष्णस्तस्याऽभिजन्म=जनिर्यस्मिन् सचासावन्वयो यदुवंश स्तद्-

पकमलोल्लासने रविः, मुनिसुव्रतान्वये=मुनिसुव्रतस्य=द्वाविंश जिनस्यान्वयः कुलं हरिवंश स्तस्मिन् अञ्चितः=पूजितः, शिवायाः=तन्नामिकाया निजजनन्याः महोदय=तीर्थकृज्जनिजनितजगद्वन्द्यताद्यात्मकसौभाग्यं दधत्=सम्पादयन् स जिनो नेमिनाथाख्यः भासतां=प्रकाशताम् शेषं पूर्ववत् शान्तिनाथपक्षव्यावर्णितदिशा चतुर्विंशति जिनसामान्यस्य स्तुत्यात्मकमिदंपद्यमवगन्तव्यं नेमिनाथ=मुनिसुव्रतवर्ज सर्वेषामिक्ष्वाकुवंशप्रभवत्वात् तत्र नेमिनाथ पक्षोचितप्रकारः परिदर्शित एव । मुनिसुव्रतान्वये=मुनिसुव्रतायाः=स्वमातुः अन्वये=पितृवंशे श्वशुरवंशे च अञ्चितः-अर्चितः उभयकुलानन्दकरत्वात् । श्रीनाभिजन्मान्वयपद्मभास्करत्वं तु नेमिनाथपक्षवर्णितदिशावसेयमिति.

श्रीअर्हदाद्यः कृतशान्तिसर्गः, समुद्रजन्मानवराजवर्गः ।
श्रीपार्श्वनाथः शुभवर्द्धमानः, श्रियाऽभिरामस्तमिह स्मरामः ॥ २ ॥

(अन्वय ) इह [य] अर्हदाद्य. कृतशान्तिसर्गः समुद्रजन्मा नवराजवर्गः श्रीपार्श्वनाथ शुभवर्द्धमान श्रियाभिरामश्च तम् स्मराम ॥ २ ॥

व्याख्या-प्रवृत्तिनिमित्तभूत सप्तशलाकापुरुपचरितवर्णनात्मक विधेयं तत्स्मरणव्याजेन दर्शयन्नाह-श्री इत्यादि ।

इह=अस्मिन् काव्ये, यत्तदोर्नित्यसम्बन्धादग्रेतनतमित्यनुरोधात् यः श्रीअर्हदाद्यः=श्रीमतामर्हतां=चतुर्विंशति तीर्थकृताम् आद्यः=प्रथमः ऋषभदेव इत्यर्थः । कृतशान्तिसर्गः-कृतः-सम्पादितः शान्तेः-सकलोपप्लवप्रशमनस्य सर्गः=सृष्टिरुत्पत्तिर्येन स तथोक्तः । समुद्रजन्मा नवराजवर्गः=मुदा-हर्षेणसहितः समुद्-सहर्षः रजन्-रागवान् मानवानां राज्ञां च वर्गः-समूहोयस्मिन् सतथोक्तः । श्रीपार्श्वनाथः-पार्श्वे-समीपे (सेवार्थमागताः) नाथाः-इन्द्रादयो यस्य स तथोक्तः । शुभवर्धमानः-शुभेन वर्धते इति, शुभं

वर्धमानमस्मादिति, शुभ—कल्याणं वर्धते अन्तर्भावितण्यर्थतया वर्धयतीति वा स तथोक्तः । श्रिया–चतुस्त्रिंशदतिशयसम्पदा त्रिलोकीकमनीयसौन्दर्यलक्ष्म्या वाऽभिरामो–मनोहरः, तं स्मरामः–वर्णनीयतया चिन्तयामो वयं कवयितार इति गम्यते ।

३ पार्श्वनाथपक्षे-श्रीअर्हदाद्यः–अर्हतां–पूज्यानाम् अर्हत्सु वा आद्यः–प्रधानः श्रीपार्श्वनाथः–तदाख्यत्रयोविंशतीर्थकरः शेषं पूर्ववत् ।

२ शान्तिनाथपक्षे च—कृतशान्तिसर्गः–गर्भावस्थायामपि विहितमारीरूपोपप्लवोपशमनः शान्तिकरणाच्च तदाख्य शान्तिनाथ इत्यर्थः शेषं समानम् ।

नेमिनाथपक्षे–समुद्रजन्मा–नामैकदेशे नामग्रहणात् समुद्रेत्यनेन समुद्रविजयो नृपो गृह्यते तस्माज्जन्म यस्य स तथोक्तः नेमिनाथ इत्यर्थः । नवराजवर्गः–नौतीति नवः–स्तोता राजवर्गोऽस्य सः, नवानां राज्ञां वर्गः पितृव्यत्वेनाऽस्त्यस्येति वा स तथोक्तः अन्यत् समानम् ।

महावीरपक्षे-शुभवर्धमान इति विशेष्यपदम् गर्भस्थितेऽस्मिन् प्रभौ पितुः सिद्धार्थराजस्यानुदिनमुत्तरोत्तरं कल्याणाऽभिवृद्ध्या पित्रा शुभसंवर्धनहेतुभूतस्यास्य ' वर्धमान ' इति नामकरणात्. यद्वा शोभते इति शुभः स चासौ वर्धमान इति.

रामपक्षे-श्रीअर्हन्तश्चतुर्विंशतितीर्थकृत आद्याः-मुख्या यस्य यस्माद्वा स श्रीअर्हदाद्यः । त्रिषष्टिशलाकापुरुषेषु तीर्थकृतां मुख्यत्वात् । श्रिया–सीतारूपया लक्ष्म्या अन्वित इति शेषः आभिरामः–आभाऽस्याऽस्तीत्याभी स चासौरामः–तदाख्यो दाशरथिर्व-
शेषः " श्रियासरामः इति पाठान्तरम् तत्र श्रिया–लक्ष्म्या युक्तः सः प्रसिद्धः रामः–रामचन्द्रः तं सराम इति सम्बन्धः अन्यद्वि-

शेपणयोजनं पूर्ववत् ।

कृष्णपक्षे-" श्रीअर्हदाद्य " इत्यादिविशेपणार्थ योजनं रामवत् श्रियाऽभिराम इत्यस्य श्रिया-लक्ष्म्या अभिरामो-मनोज्ञः इत्यर्थः । श्रियासराम इति पाठान्तरे श्रिया-लक्ष्म्या सरामः-सभार्यः ( रामया-भार्यया सहितः इति कृत्वा ) रामा हिङ्गुलिनी स्त्रियोः इति हैमः ॥ २ ॥

**यो वीतरागः कृततीर्थयागः, प्रोद्यत्सभामण्डलसंविभागः ।**
**यो नीतिकारी भुवनोपकारी, सेव्यः स भव्यैर्नवकाव्यनव्यः ॥ ३ ॥**

अन्वयः—यः वीतराग कृततीर्थयागः, प्रोद्यत्सभामण्डलसविभाग । य नीतिकारी भुवनोपकारी, भव्यै सेव्य स नवकाव्यनव्य ॥

व्याख्या—ननु सत्स्वप्यन्येपु बुद्धादिपु परश्शतेषु देवेपु कथमेतेपामेव चरित्राख्याने कविः जातादर इत्याह-य इति. यः अनिर्दिष्टनामधेयः, वीतरागः-वीतः-विगतः निवृत्तः रागः-स्रक्चन्दनवनितादिविषयाऽभिपङ्गः यस्य स तथोक्तः तीर्थकृत्पञ्चक श्रीरामपक्ष साधारणोऽयमर्थः । कृष्णपक्षे तु विः-पक्षी गरुड इत्यर्थः तं तस्मिन् वा इतः प्राप्तोरागः-प्रीतिर्यस्य स तथोक्तः । कृततीर्थयागः तीर्थं-साधु-साध्वी-श्रावक-श्राविकात्मकचतुर्विध सङ्घः लक्षणया तत्स्थापनमिह गृह्यते तीर्थ याग इव तीर्थयागः कृतः सम्पादितः तीर्थयागः-तीर्थस्थापन यज्ञो येन स तथोक्तः । रामकृष्णपक्षे-कृतस्तीर्थस्य-साध्व्यादिसंघस्य यागः-यजनं पूजनं येन सः, कृतस्तीर्थे-सरय्वादितटात्मकपुण्यक्षेत्रे यागः-देवपूजा येन स इति वा तथोक्तः.

प्रोद्यत्सभामण्डलसविभागः–प्रोद्यन्ती दीप्यमाना सभा देवादिपरिषत् तस्या मण्डले–समूहे संविभागः–जीवाजीवादिपदार्थानां विच्यवि कथनं येन सः यद्वा प्रोद्यन्–प्रकाशमानः भामण्डलेन सहितः सभामण्डलः संविभागः–प्रदेशो यस्य स तथोक्तः तीर्थकृत्पञ्चकसामान्योऽयमर्थः । रामकृष्णपक्षे–प्रोद्यन्–प्रकटीभवन् सभायाः राज्यशासनव्यवस्थापिकापरिषदादेः मण्डलस्य–द्वादशराजकस्य देशस्य वा संविभागः संविभजनं यस्य स तथोक्तः " स्यान्मण्डलं द्वादशराजके च देशे च विम्बे च कदम्बके च " । इति विश्वः ॥ यः–यातीति यः निर्वाणपदगन्ता, कलुषपटलजलदनिरसनपवनो वा । यो ना वायौ यमने इति मेदिनी ॥ नीतिकारी नीयन्ते–उन्नीयन्तेऽर्था अनयेति नीतिः न्यायःतां करोति तच्छीलः नीत्यावर्तनशीलो नीतिप्रचारणशीलो वा ॥ अनीतिकारी इतिच्छेदे अनीतिः–षडविधेतिगर्हित्यं तत्करण शीलः । अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः खगाः । प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः । भव्यैः–प्राणिभिः सेव्यः–सेवितुं योग्यः सः–वर्ण्य-भुवनोपकारी–भुवनानामुपकारं करोति तच्छीलः सकलजगदुपकारकरणप्रवणः ॥ नव्यः–स्तुत्यः 'णुंक् स्तवने' ॥ अन्त्यानुप्रासः, शब्दार्थोभयश्लेषः, काव्यलिङ्गं चात्रालङ्काराः ॥ तीर्थं शास्त्रा–ऽध्वर–क्षेत्रो पायो–पाध्याय मन्त्रिषु इति विश्वः । तीर्थं साध्वादिसंघेऽप्यात्यागमः ।

तया प्रकान्तः नवकाव्यनव्यः नवेन–सप्तार्थानुसन्धानादिगुणविशिष्टतया नवीनेन काव्येन

ब्राह्मीह साऽव्यान्निपुणागमादौ–यस्या रसांगात्कमलोदयश्रीः ।
अद्यापि नद्या द्रवसुप्रसादात्–सिताम्बराणां जनतानुवृत्तिः ॥ ४ ॥

अन्वयः—इह आगमादौ सा निपुणा ब्राह्मी अव्यात् यस्या नद्या रसांगात् । कमलोदयश्रीः द्रवसुप्रसादात् सिताम्बराणां जनतानुवृत्तिरद्यापि ॥ ४ ॥

व्याख्या—इह आगमादौ शास्त्रादौ अर्थात् अस्मिन् काव्यादौ सा भुवनविदिता निपुणा दक्षा पूर्णेत्यर्थः ब्राह्मी सरस्वती " ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वतीत्यमरः " अव्यात् पायात् यस्याः सरस्वत्या भारत्या नद्याः पवित्रायाः सर्वश्वेतायाः रसांगात् रसस्यास्वादस्य अनुभवस्येत्यर्थः अङ्गात् उद्यमात् यत्नात् कमलोदयश्रीः कमलाया लक्ष्म्याः सम्पदः उदयश्रीः समभ्युदयसम्पत् द्रवसुप्रसादात् द्रवति स्निह्यतीतिद्रवः स्नेहः प्रसन्नता इति यावत् तस्य परिहासस्य सुप्रसादात् सत्कृपातः सिताम्बराणां निर्मलवसनानां देवानां जनतानुवृत्तिः जनतायां मनुष्ये अनुवृत्तिरागमनम् स्तुत्यालम्बनतया जनानुकम्पनमिति भावः अथ च सिताम्बराणां श्वेताम्बराणां आर्हतानां जनतानुवृत्तिः लोकसदुपदेशानुसरणम् अद्यापि अधुनापि भवतीति शेषः ।

नदीपक्षे च–यस्या नद्याः नदीरूपायाः सरस्वत्याः सरस्वत्यभिधानायाः रसांगात् जलरूपात् कमलोदयश्रीः कमलानां सरोजानाम् उदय श्रीः समुद्भवश्रीः सद्विकाशशोभेत्यर्थः द्रवसुप्रसादात् प्रवाह सुप्रभावात् सिताम्बराणां अम्बते शब्दं करोतीत्यम्बः शब्दः तं रातिगृह्णातीति अम्बरः पक्षः सितौ अम्बरौ येषां ते सिताम्बराः हंसाः तेषां जनतानुवृत्तिः मानससरात् नरक्षेत्रे अनुवृत्तिरनुसृतिरद्यापीदानीमपि भवतीति शेषः ।

मुखेन दोषाकरवत् समानः, सदा–सदम्भः–सवने सशौचः ।
काव्येषु सद्भावनयानमूढः, किं वन्द्यते सज्जनवन्ननीचः? ॥ ५ ॥

अन्वय -नीचः सज्जनवत् किं न वन्द्यते ? मुखेन दोषाकरवत् समानः । सदा सदम्भः सवने सशौच , काव्येषु सद्भावनया न मूढः ॥ ५ ॥

व्याख्या-नीचः=दुर्जनः सज्जनवत्=सत्पुरुष इव किं न वन्द्यते अभिवाद्यते स्तूयते वा उभयोः समत्वात् । साम्यं दर्शयति= मुखेन दोषाकरवत्=दोषा रात्रि करोतीति सः तेन तुल्यं तद्वत् चन्द्रसदृशः. समानः=सह मानेन=सम्माननेन पूजा सत्कारेण वर्त्तते इति स तथोक्तः सदम्भःसवने सत्=सत्यमेवाऽम्भः=जलं तस्मिन् सवने=स्नाने अनुशीलने स शौचः=सनैर्म्मल्यः पवित्रः सत्यनिष्ठ इत्यर्थः । काव्येषु=सद्भावनया=उत्कृष्टभावनया न मूढः उत्तमविचारणया हेतुना न मूढः न अनभिज्ञः यद्वा=काव्येषु सद्भावनयानमूढ इति समस्तं, काव्यस्य इषुषु=गुणेषु सद्भावनं=सद्विचारस्तत्रयानं=गमनम् ऊढः प्राप्त इत्यर्थः। अत्र दुर्जनस्य व्याजस्तुत्या सर्वथाऽवन्द्यत्वमेव सोसूच्यते सज्जनतो महदन्तरत्वात् तथाहि नीचः मुखेन दोपाकरवत्समानः=दोषाणां दुर्गुणाना=माकरः राशि रस्त्यासौ दोपाकरवान् तेन समानः सदृशः गुह्यप्रकाशनादिदुर्गुणोदीरणकरणतया वदनेन दोपपुञ्जविशिष्टतुल्यः ।

यद्वा दोषाऽऽकर इव दोषाकरवत् । समानः=साऽहङ्कारः सदासदम्भः=सकपटः, सवने=मद्यसन्धाने उपलक्षणतया तदादिकार्येऽसशौ चः=शौचेन=सहितः सशोचः स नभवतीत्यसशौचः अशुचिरित्यर्थः । यद्वा सदम्भः सवने=सत्पक्षपातकरणे सशौचः=शुचेव शौचं=शोकः स्वार्थिकः प्रज्ञाद्यण तेन सहितः सशौचः=सशोक इत्यर्थः । काव्येषु सद्भावन-यान-मूढः=सद्भावने=सद्विचारे यानं=गमनं तस्मिन् मूढः=विकलः अपटुः, ॥ उपमा, अर्थश्लेषः, सभङ्गशब्दश्लेषः, व्याजस्तुतिश्चालङ्काराः ॥ सवनं त्वध्वरेस्नाने सोमनिर्दलनेऽपिचेतिमेदिनी ॥ ५ ॥

उच्छृङ्खलात्किं खलतो न बिभ्येत्, सभ्यस्तथेभ्यः परमार्थनाशात् ॥

नाशा ह्य नाशा किमु वर्धनीया, श्रुत्याविहीनस्य सकर्णतायाम् ॥ ६ ॥

(अन्वयः)—इभ्य परमार्थनाशात् तथा सभ्य उच्छृङ्खलात् खलत. किं न बिभ्येत् श्रुत्याविहिनस्य सकर्णतायाम् अनाशा आशा किमु न वर्द्धनीया?॥६॥

व्याख्या–इभ्यःआढ्यः परमार्थनाशात्=परमार्थस्य=उत्कृष्टाभीष्ट वस्तुनः मूलधनादेः नाशात्=अपायात् तथा–इव सभ्यः=सज्जनः उच्छृङ्खलात्=उद्धतः शृङ्खलातः इत्युच्छृङ्खलः=मर्यादादिबन्धनरहितः नीत्यादिनियन्त्रृरहितो वा तस्मात्तथोक्तात् खलतः=दुर्जनात् किं न बिभ्येत्=भयमाप्नुयात् ननु खलस्यापि शास्त्रश्रवणादिना सौजन्यं किं न स्यादित्याशङ्कायामाह ' नाशा ' इति श्रुत्या–शास्त्रश्रवणेन विहीनस्य=वर्जितस्य अकृतशास्त्राभ्यासस्य श्रवणशक्तिरहितस्य बधिरस्येत्यप्यर्थो गम्यते. सकर्णतायाम्=श्रुतितत्परतायाम् शास्त्राभ्यासादिक्ष मतायामित्यर्थः अभिज्ञतायामिति यावत् अन्यत्र श्रवणक्षमतायामिति गम्यते अनाशा=न आशा दिक् परिच्छेदो यस्यां सा तथोक्ता अपरिच्छिन्नेत्यर्थः आशा=अशक्योपायार्थविषयिणी दीर्घाऽऽकाङ्क्षा अनधिगतविषयातृष्णा वा किमु न वर्द्धनीया–वृद्धिं नेया. वर्धनीयैवेत्यर्थः भैषज्यादिसेवनेन कर्णबाधिर्यमिव शास्त्रश्रवणादिना खलानामपि औद्धत्यं दूरीभूय जातसौजन्यतया भयाऽजनकत्वं सम्भवतीतिभावः । अर्थान्तरन्यासः ॥ ६ ॥

काठिन्यभाजो हृदये खलस्य, का वक्रता शृङ्खलकस्य नाङ्गे ॥
भारक्षमस्याऽपि नसोऽग्रवेधः, सुमेधसाऽकारि स वेधसाऽपि ॥ ७ ॥

अन्वयः–हृदये काठिन्यभाज खलस्य [काठिन्यभाज. खलस्य हृदये वा] शृङ्खलकस्य भङ्गे [च] का वक्रता न [अस्ति] [यतः] भारक्षमस्यापि

ममोऽग्रवेधः सुमेधसाऽकारि, स वेधसाऽपि अस्य [अकारि] हृदये=मनसि काठिन्यं=

व्याख्या—हृदये=मनसि काठिन्यं=नैष्ठुर्यं भजते स काठिन्यभाक् तस्य तादृशस्य खलस्य=दुर्जनस्य, दार्ढ्यं भजते तादृशस्य शृङ्खलकस्य=उष्ट्रस्य अङ्गे च का वक्रता=क्रूरता अन्यत्र कुटिलता भुग्नतेत्यर्थः न अस्ति सर्वाप्यस्तीत्यर्थः खलानां क्रूरहृदयत्वात् उष्ट्राणां च कुटिलबहुलाऽवयवत्वात् । अत एव भारक्षमस्य=कर्षण वाहनयोग्यतादिधुरंवोढुं शक्तस्य शृङ्खलकस्य नसः=नासिकायाः अग्रवेधः-पुरोवेधनं सच्छिद्रीकरणं सुमेधसा-कर्षणवहनादिक्षमताऽवगतिमेधाविना कृषीवलादिना अकारि=व्यधायि. वेधसा=ब्रह्मणाऽपि सः=प्रक्रान्तः अग्रवेधः=अग्रे=प्रथमंवेधः व्यधनं हिंसनं खलस्य नैसर्गिकतया अकारीत्यर्थः । यद्वा सः= खलः अपि वेधसा अग्रवेधः अग्रं=पूर्वं विध्यति=छिनत्ति स तथोक्तः हिंस्रस्य भावकः अकारि । यद्वा अग्रवेधः=वेधः=विवाहादिशुभकार्यवर्ज्यं नक्षत्र विशेषस्थितग्रहभेदकृतसंसर्गः 'वेधं सर्वत्र वर्जयेदितिज्यौतिषोक्तेः तथा च अग्रे=आदौ वेध इव अग्रवेधः वर्जनीय इतिभावः अकारि ।

हृदयं वक्षसि स्वान्ते वुक्कायामितिहैमः । वक्रः कुटिले क्रूर भौमयोरितिहैमः । काठिन्यभाजः खलस्य हृदये काऽपि वक्रता । (अस्ति) या शृङ्खलकस्यापि अङ्गे न वर्तते । यतः भारक्षमस्यापि । तस्य सोऽग्रवेधः सुमेधसावेधसाऽपि नाकारि इति तु न्यायः ।

त्याज्यः स राज्यात्पुरतोऽपिराज्ञा, भायात्सभाया न रुचिः खलेऽस्मिन् ।
यत्र द्रुमाः कण्टकिनः पुरस्ता-त्स दुष्प्रवेशः सुमनःप्रदेशः ॥ ८ ॥

[अन्वय.]—अस्मिन् खले सभाया रुचिः न भायात [ इति ] राज्ञा राज्यात् पुरतोऽपि स त्याज्यः ।. यत्र, पुरस्तात्कण्टकिनो द्रुमा. स सुमन.-प्रदेश. दुष्प्रवेश ॥ ९ ॥

व्याख्या—अस्मिन् खले=पिशुने विषये सभायाः=समाजस्य जनताया इत्यर्थ रुचिः=प्रीतिः न भायात्=शोभेत यद्वा अस्मिन् खले सति सभाया रुचिः=कान्तिः नभायात्–प्रकाशेत् विवादोत्थानसंभवात् । अथ वा अस्मिन् खले सभाया न रुचिः=राजपरिषत्प्रवेशाऽभि रुचिः भायात् एवं समम्भाव्यते इति हेतोः राज्ञा=नृपेण शासकेनेतिभावः राज्यात्=राजधान्याः राष्ट्राद्वा पुरतः=स्वाग्रतः नगराद्वा गृहाद्वा अपि त्याज्यः=वर्जनीयः निष्कासनीय इत्यर्थः अमुमर्थं दृष्टान्तेन दृढयन्नाह=यत्रेति=यत्रसुमनःप्रदेशे पुरस्तात्=प्रवेशमार्गस्याग्रतः कण्टकिन=स कण्टकाः द्रुमा=मार्गवृक्षा भवेयुः स सुमनसां=पुष्पाणां प्रदेशः सुमनः=प्रदेशः पुष्पवाटिकादिः दुष्प्रवेशः अशक्यान्तर्गमनो भवतीति लोके प्रसिद्धोऽयमर्थः । शब्दश्लेषो, दृष्टान्तश्च पुरं नपुंसकं गेहे देह पाटलिपुत्रयोरितिमेदिनी स्यात्पुरः पुरतोऽग्रत इत्यमरः ॥ ८ ॥

खलादरो यश्च गवां स्वभुक्तौ, भवेत्पशूना मुचितो न नृणाम् ।
स गोः पतित्वाद् यदि भूपसर्गे, तत्पाशुपत्यं ध्रुवमीश्वरस्य ॥ ९ ॥

अन्वयः—गवा स्वभुक्तौ य खलादर· भवेत् [ असौ ] पशूनां [ गवाम् ] उचित., नतु नृणाम् । स गोःपतित्वात् यदि भूपसर्गे स्यात् तत् ईश्वरस्य ध्रुव पाशुपत्य भवेत् ॥ ९ ॥

व्याख्याः-गवां=धेनूनां स्वभुक्तौ=स्वाहारे विषये यः खलादरः=खलं=तिलकल्कः धान्यमर्दनभूमिश्च तत्राऽऽदरः स्नेहः असौ पशूनाम् उचितः=योग्यः अगर्हणीयः भवेत् न तु नृणां=मनुष्याणामपि ।

दुर्जनेषु प्रीतेः तेभ्य ग्रासस्य तिलकल्काऽशनस्य च मनुजाना=मनौचित्यात् । तथा च सः=खलादरः=खले=नीचे आदरः गोः पतित्वात्-गौः ( सौरमेयी पृथ्वी च तस्याः पतित्वात्=स्वामित्वात तत्साम्यादिति भावः, यदि भूपसर्गे-नृपस्वभावे नृपसाम्राज्ये वा स्यात् तत्-तदा ईश्वरस्य=राज्ञः पाशुपत्यं=पशुपतित्वं मूर्खशिरोमणित्वं ध्रुवं निश्चितं स्याद् शब्दसाम्येन छलितत्वात् ॥ स्वर्गेषु पशुवाग्वज्र दिग्नेत्रघृणिभूजलेगौरित्यमरः ॥ ९ ॥

खले प्रतीता वहुधा-न्यपाताद्, विक्षेपणा क्षेपमतिर्नृपस्य ।
मुखे निवन्धेन गवां नृणां वा, निजार्जितस्यापिमनाग् न भोगः ॥ १० ॥

अन्वयः-खले वहुधा-न्यपाताद् नृपस्य, बिक्षेपणाक्षेपमतिः प्रतीता ; नृणां गवां वा मुखे निवन्धेन निजार्जितस्यापि मनाग् भोगः न ॥ १० ॥

व्याख्या-खले=दुर्जने विद्यमाने सति वहुधा=वहुप्रकारेण अन्यपातात् अन्येषां-परेषां खलानुमतानां पातात्=आपतनात् प्रवेशात् नृपस्य खलाधीनसर्वराज्यतन्त्रतया विक्षेपणाक्षेपमतिः-विक्षेपणे=अभिमतानां दूरीकरणेआक्षेपे=मान्यानां गर्हणे च आ=समन्तात् क्षेपे-विलम्बे राजकार्याणां सम्पादन कालाऽतिपाते वा मतिः-बुद्धिः विचारो वा प्रतीता-प्रसिद्धा एवाऽस्ति ।

लोकेऽपि खले-धान्यमर्दनस्थले वहुधान्यपातात्-वहूनां-प्रचुराणां धान्यानां-शालि-गोधूमादिव्रीहीणां पातात्-मर्दनार्थं पक्षेपात्

नृपस्य तत्स्वामिनः खेटकादेः विक्षेपणाक्षेपमतिः—विक्षेपणे पूर्वं प्रसारणे तदनु आक्षेपे—दूरं विकीर्णानां समूहन्यादिना राशिकरणे च मतिः—मनः प्रवृत्तिः प्रतीता—ख्याता एव ।

पूर्वत्र खलनीत्या नृणां—राजपुरुषाणां मुखे—निःसरणे निर्गमन=प्रवेशमार्गे इत्यर्थः विषये निबन्धेन—नियमनेन प्रतिबन्धजननेन सता निजार्जितस्य—स्वोपार्जितस्य वेतनादेः मनाग्-अल्पमपि भोगः-उपभोगः सुखं वा न संभवतीत्यर्थः ।

यद्वा नृणां—विपश्चिन्मनुजानां मुखे—प्रवेशे निबन्धेन निजार्जितस्य—स्वोपार्जितविद्यादेः मनाग् भोगः—उपयोगः विद्यालाभजन्यमैहिक सुखं वा न समस्ति भवितुमित्यर्थः । विद्यावतां बाणभट्टादीनामिव राज्ञः श्रीहर्षादेरिव ऐहिकसुखसाधनधनलाभे सत्येव विद्याया ऐहिकोपयोगः । राजधान्यां खलप्रवेशे तु विदुषां प्रवेशस्याप्यसम्भवः विद्याचमत्कारप्रदर्शनपरितुष्टनरेन्द्रदित्स्वस्वापतेयाद्यात्मकपुरस्कारादेस्तु कथैव का ।

अन्यत्रापि स गवां—वृषभाणां—मुखे—तुण्डे निबन्धेन—नितरांबन्धनेन निजार्जितस्य—हलकर्षणादिव्यापारजन्यतया स्वोपार्जितपलालादेरपि मनाग् भोगः न भवति ।

शब्दा-ऽर्थोभयश्लेषः । उपमालङ्कारध्वनिः । खलः कल्केभुवि स्थाने क्रूरे कर्णेजपेऽधमे इतिहैममैदिन्यो मुखं निःसरणे वक्रे प्रारम्भोपाययोरपीतिमेदिनी । भोगः सुखे धने पुंसि चाहेः फण-शरीरयोः। पालनेऽभ्यवहारे च योषिदादिभृतावपीति मेदिनी ॥१०॥

**कार्या खलानां स्खलना नृपेण,प्रसङ्गतः शृङ्खलमीलनेन ॥**

उच्छृङ्खलः शृङ्खलको न किंस्या-दुद्वेजकः कण्टकसंकटेन ॥ ११ ॥

उच्छृङ्खलः शृङ्खलक कण्टकसंकटेन उद्वेजक· किं न स्यात् ।

(अन्वय.)—नृपेण प्रसङ्गत शृङ्खलमीलनेन खलानां स्खलना कार्या. उच्छृङ्खलः शृङ्खलक कण्टकसंकटेन उद्वेजक· किं न स्यात् ।

व्याख्याः—नृपेण=राज्ञा प्रसङ्गतः-अवसरं प्राप्य शृङ्खलमीलनेन-शृङ्गात्=प्राधान्यात् स्खलयतेऽनेनेतिशृङ्खलः=पृषोदरादित्वात् शृङ्खला लौहमयबन्धनरज्जुविशेषः तस्य तेन वा मीलनं=संबन्धः तेन तथोक्तेन शृङ्खलया नियम्येतिभावः खलानां दुष्टानां स्खलना=गतिप्रतिरोधः कार्या=विधेया । अन्यथाऽनिष्टमाह=उच्छृङ्खल इति. उद्गतः शृङ्खलातः इति. उच्छिन्ना शृङ्खला येनेति वा उच्छृङ्खलः लौहमयपादबन्धनरहितः नासारज्वादिरहिततयानिर्बाधगतिकः शृङ्खलकः=उष्ट्रः कण्टकसंकटेन=कण्टकैः=सूचीवत्तीक्ष्णाग्रवृक्षावयवविशेषैः संकटः=संकीर्णः वन्यप्रदेशादिस्तेन, कण्टकैः=संकटं=दुःखं तेन तज्जननेन हेतुनावा उद्वेजकः-चित्तव्याकुलताजनकः किं न स्यात् स्यादेव. उष्ट्राणां कण्टकप्रियतया तदाचितप्रदेशादौ तद्गमने तदन्वेषणार्थं तत्रगतानां तदारूढानां कण्टकसम्बन्धसम्भवात् ।

उच्छृङ्खलः=अनियन्त्रितः निरङ्कुशः खलोपि कण्टकसंकटेन=कण्टका इव दुःखजनकत्वात् कण्टकाः=क्षुद्रशत्रवस्तेभ्यः संकटं=दुःखं विपत्ति र्वा तेन तज्जननेनेतिभावः उद्वेजकः-क्षुद्रशत्र्वादिभिर्विरोधादिजननद्वारा व्याकुलीभावजनकः । किं न स्यात् स्यादेवेत्यर्थः ॥ शब्दाऽर्थोभयश्लेषः अर्थान्तरन्यासः अनुप्रासः । शृङ्खलं पुंस्कटीकाञ्च्यां लौहरज्जौ च बन्धने इति हैमः ॥ कंटकः क्षुद्रशत्रौ च कर्मस्थानकदोषयोः । रोमाञ्चे च द्रुमाङ्गे च कण्टको मस्करेऽपिचेति विश्वः ॥

यद्गोरसाधिक्यमुदेतिलोके—खलस्यपर्यायविनाशनेन ।
संभाव्यतेस्मादमृताशनस्या—धिकाधिकारद्विबुधात्मनैव ॥ १२ ॥

अन्वय—लोके खलस्यपर्यायविनाशनेन यद्गोरसक्यमुदेति अस्मात् । अमृताशनस्य अधिकाधिकारात् विबुधात्मतैवसंभाव्यते ॥ १२ ॥

व्याख्या—लोके खलस्य तिलकलकस्य द्रव्यविशेषस्य पर्याय विनाशनेन पर्यायः क्रमभाविस्वभावः प्रकृते खलत्वरूपस्तस्य विनाशने नध्वंसेनेत्यर्थः गोरसाधिक्यं दुग्धघृतादिप्रचुरता उदेति उद्भवति अस्मात् गोरसाधिक्यात् अमृताशनस्य दुग्धघृतादि भोजनस्य अधिकाधिकारात् अधिकप्रवर्त्तनात् निरन्तरप्रचारात् विबुधात्मतैवपण्डितात्मतैवसंभाव्यते उत्प्रेक्ष्यते शुद्धाहारविहारस्य निर्मलबुद्धि-प्रयोजकत्वादितिभावः ।

अथ च खलस्य दुर्जनस्य पर्यायविनाशनेन तद्वाचकपर्याय नृशंस घातुक क्रूरादिशब्दानामपि निराकरणेन गोरसाधिक्यम् गोः वाल्याः रसस्य आस्वा-द विशेषस्य आधिक्यम् समृद्धिरुदेति यद्वा गोः पृथिव्या रसस्य गुणस्य क्षान्त्यादे राधिक्यं बाहुल्यमुदेति प्रकाशते अस्माद् गोरसाधिक्यात् अमृताशनस्य देवस्य अधिकाधिकारात् अत्यधिकसम्बन्धात् विबुधात्मतैव सर्वेषान्देवत्वमेव संभाव्यते देवसम्बन्धादन्येषामपि देवत्वं सुतरां भवतीति भावः ॥ १२ ॥ श्लेषतुल्ययोगिते चात्रालंकृती । खलःकल्केभुविस्थाने इति हेमः पिशुने दुर्जने खल इति शृङ्गारादौ विषे वीर्ये गुणेरागेद्रवेरस इत्युभयत्रामरः ॥ १२ ॥

कायेन वाचा मनसा विशुद्धः, स पक्षमध्यस्थित एव हंसः ॥
ब्रह्माऽमुनाऽबाह्यधियापि वाह्यः, प्रियो विधिस्तन्ननु सज्जनस्य ॥ १३ ॥

अन्वयः-स हंस एव [ यथा हंसः ] कायेन वाचा मनसा विशुद्ध पक्षमध्यस्थित.। [ तथा सज्जनोऽपि ] अमुना ब्रह्माऽबाह्यधियाऽपि वाह्य. तत् विधिःसज्जनस्य प्रिय ॥

व्याख्या—सः=सज्जनः हंस एव हेतुमाह यथा हंसः=स्वनामख्यातपक्षिविशेषः कायेन=स्वरूपेण वाचा=स्वरेण मनसा च विशुद्धः अवदातः पवित्रश्च पक्षमध्यस्थितः पक्षयोः गरुतोर्मध्ये-ऽन्तरालेस्थितः तथा सज्जनोपि कायवाङ्मनोभिः विशुद्धः=अनवद्यः, पक्षमध्यस्थितः= पक्षे=वादि प्रतिवादिनोर्विरोधे मध्यस्थितः=मध्यस्थः । यद्वा पक्षयोः=वादिप्रतिवाद्युभयप्रश्नकोटि-समाधान कोटयो-मध्यस्थितः=माध्यस्थ्य माश्रितः नत्वन्यतर पक्षपातीत्यर्थः निष्पक्षपात इति यावत् । अन्यदपिसाम्यं दर्शयति ब्रह्मेति अमुना-हंस-पक्षिणा ब्रह्मादेवविशेषः अबाह्यधिया हार्दिकानुरागेण यद्वा अयं मयावाह्य इति संकल्पमन्तरेणापि स्वभावतएववाह्यः स्वपृष्ठेधार्यः हंसस्य तद्वाहनत्वात् तत् तस्मात् सज्जनस्य विधिः शास्त्रोक्तक्रियाकलापः प्रियः स्वकर्तव्यत्वेनाभिमत इत्यर्थः अत्रविधिशब्दस्य ब्रह्मशब्दपर्या-यत्वेऽप्यर्थभेदादर्थश्लेपः तथा सज्जने हंसारोपणाद्रूपकोऽबाह्यबाह्यत्वेन विरोधाभासश्चेत्यलंकृतयः ॥ १३ ॥

मरालवालः स्वत एववक्त्रे, रक्तः प्रसक्तश्चरणेऽपि तद्वत् ॥
स राजहंसः कविनास्वकार्ये, स्मार्यः स दुग्धाम्भसि तद्विवेक्ता ॥ १४ ॥

अन्वय —कविना स्वकार्येमरालवाल· वक्त्रेस्वतएवरक्त· तद्वच्चरणेऽपि प्रसक्तः सदुग्धाम्भसि तद्विवेक्तासराजहसः स्मार्य. ॥ १४ ॥

व्याख्या—कविना=काव्यकर्त्रा स्वकार्ये=कविकर्म्मणि काव्यादौ सः=प्रसिद्धः ( प्रक्रान्त प्रसिद्धाऽनुभूतार्थकस्तच्छब्दो यच्छब्दोपादानं नाऽपेक्षते इति नियमादत्र ( पद्ये ) यच्छब्दस्याऽनपेक्षिततया नोपादानम्) राजहंसः=हंसानां राजा श्रेष्ठत्वात् (राजदन्तादित्वात् परनिपातः) रक्तवर्णचञ्चु चरणयुक्त श्वेतवर्ण हंसविशेषः राजहंसास्तु ते चञ्चु चरणैर्लोहितैः सिताः इत्यमरः। राजा हंस इव सारग्राहित्वादिगुणसाधर्म्यात् राजहंसःनृपश्रेष्ठश्च स्मार्यः=एकत्र सारग्राहित्वादिगुणैरनुकरणीयतया अपरः पवित्रचित्रचारित्रशालितया वर्णनीयतया स्मरणीयः तेन च कवेः प्रतिभादिविकाशात्। सकलकलंपुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव इत्यादाविव उभयोः ( हसस्य राज्ञश्च ) समान शब्द वाच्यतारूपसाधर्म्यं श्लेषेणाह—मरालेति। हंसपक्षे मरालवालः मरालः=राजहंसजातीय हंसविशेषः तस्य बालः=शावकः अपत्यमित्यर्थः तद्वंश्य इति तात्पर्यम्, अत एव वक्रे चञ्चौ स्वतएव=निसर्गादेव रक्तः=लोहितः, चरणे=अङ्घ्रियुगलेऽपि तद्वत्=तथा रक्त इत्यर्थः, प्रसक्तः=प्रसक्तिः=प्रसङ्गः=गुणिनां प्रस्तावः गुणवतां चर्चायामाख्यानमित्यर्थः अस्याऽस्तीति स तथोक्तः। स दुग्धाम्भसि=क्षीरसंमिश्रनीरे तद्विवेक्ता=तयोः ( दुग्धजलयोः ) पृथग्भावसम्पादयिता विवेचको वा राजपक्षे—मरालवालः=मरालाः=कज्जलानि इव बालाः=मूर्धजाः केशायस्य स इति. मरालाः=चिक्कणा बालाः=केशायस्येतिवा स तथोक्तः। यद्वा मरालान्=खलान् वारयतीति सः। रलयोर्डलयोश्चैव स-शयोर्बवयो स्तथेतिवचनेन वचयोः रलयोश्चैकत्वस्मरणात्। वक्त्रे=वाग्मिने युक्तियुक्तबहुवादिने रक्तः=अनुरागवान् यद्वावक्त्रे मुखे रक्तः प्रसन्न इत्यर्थः चरणे=आचारे श्रेष्ठाचरणे शीले वा प्रसक्तः=व्यासङ्गवान् लीन इत्यर्थः यद्वा रणे-युद्धे प्रसक्तः—सानन्दः सदुग्धाम्भसि—दुग्धमिश्र जले लक्षणया सदसतोरित्यर्थः तद्विवेक्ता—विवेचनशीलः

सदसद्विवेकशालीत्यर्थः ॥ १४ ॥

सत्त्वेऽप्यसत्त्वे कियती कथा न, तत्सन्तु सन्तः सततं प्रसन्नाः ।
काव्येक्षणाद्वः कृपया पयोवद्, भावाःस्वभावात्सरसा यतः स्युः ॥ १५ ॥

अन्वय.—सत्त्वेऽसत्त्वेऽपि कियती कथा न [ अस्ति ] तत् सन्त. प्रसन्ना. सन्तु. [ मयि ] यत. व· कृपया काव्येक्षणात् भावा. पयोवत् स्वभावात् सरसा. स्यु. ॥ १५ ॥

व्याख्या—अपि समुच्चयार्थकोभिन्नक्रमश्च ( गर्हा-समुच्चय-प्रश्न-शङ्कासंभावनास्वपि इत्यमरः ) तथा च सत्त्वे=साधुभावे सज्जनत्वे इत्यर्थः असत्त्वे=असाधुभावे असज्जनत्वे दौर्जन्ये इत्यर्थः कियती=किंप्रमाणिका कथा=वाक्यविस्तारः न अस्तीति शेषः बहुविधैनकथाऽस्तीत्यर्थः । यद्वा सत्त्वे=गुणे असत्त्वे दोषारोपे च बह्व्यउक्तयः सन्ति तत्-तेन हेतुना तस्माद्धेतोर्वा सन्तः-सज्जनाः सततं प्रसन्नाः=कृतप्रसादाः अनुग्राहका इत्यर्थः सन्तु-भवन्तु मयीतिशेषः । यतः-यस्मात् कारणात् प्रसादाद्वा वः-युष्माकम् ईक्षणकर्तृभूतानाम् कृपया अनुग्रहेण काव्येक्षणात्-काव्याऽवलोकनात् प्रस्तुतकाव्यसमीक्षणादित्यर्थः यद्वा काव्यया-धिया-ईक्षणात्-पर्यालोचनादित्यर्थः (काव्यं ग्रंथे पुमान् शुक्रे काव्यास्यात्पूतना-धियोरितिकोशः) भावाः-रत्यादिस्थायिभावादयः । देवादिविषयरत्यादयो वा पदार्था वा यद्वा अभिप्रायाः, पयोवद्-दुग्धवत् जलवद्वा स्वभावात्-निसर्गात् सरसाः-अनुकूलाः वर्णनीयानुगुणा इत्यर्थः। यद्वा मनोहराः, मधुरा वा स्युः ॥ यद्वा यतः-प्रसन्नत्वात् कृपया काव्येक्षणात् वः भावाः-आशयाः हृदयानीत्यर्थः स्वभावात् न तु

दुर्जनादेरविकृत्रिमतयेतिभावः सरसाः सार्द्रा अनुकूला वा स्युर्येन कवीनां प्रवृत्तिः सफला भवेत् ॥ १५ ॥

श्रेणीभवद्भव्यमणी मणीवकै-र्वरैरगानां निकरैर्विकस्वरे ।
द्वीपेऽस्ति जम्बूपपदे प्रभारतं, श्रीभारतं भारतवित् स भारतम् ॥ १६ ॥

अन्वयः—श्रेणीभवद्भव्यमणी मणी च (व) कैः वरै अगाना निकरै. विकस्वरे जम्बूपपदेद्वीपे प्रभारत भारतवित्सभारत श्रीभारतम् अस्ति ॥ १३ ॥

व्याख्या—श्रेणीभवद्भव्यमणीमणीवकैः-अश्रेणयः श्रेणयः सम्पद्यन्ते तथा भवन्ति इति श्रेणीभवन्ति, मण्यः-रत्नानि मणीवकानि कुसुमानीव इति मणीमणीवकानि श्रेणीभवन्ति भव्यानि-शोभनानि मणीमणीवकानि येषु ते श्रेणीभवद्भव्यमणीमणीवकाः तैः तथोक्तैः । अगाना-न गच्छन्तीत्यगाः-पर्वता वृक्षाश्च "शैल-वृक्षौनगावगौ" इत्यमरः । तेषां तथोक्तानां निकरैः-समूहैः विकस्वरे विकासिनि " विकासीतु विकस्वरः " जम्बूपपदेद्वीपे-जम्बूद्वीपे इत्यर्थः । प्रभारतं भरतस्य-आर्षभेः, दौष्यन्तेर्वा दाशरथेर्वा गोत्रापत्यानि भारताः, प्रकृष्टा भारताः-भरतवंशीयनृपतयो यस्मिन् तत् । यद्वा भरतेन मुनिना प्रोक्तं भारतं प्रकृष्टं भारतं-नाट्यशास्त्रं यस्मिस्तत् । अथवा प्रभा रता-सदास्थितिकायत्र तत्-प्रभासु रतं-सक्तं वा तत् ।

यद्वा अरतिः-रतिविरहः रागाभावोवाऽस्याऽस्तीत्यरतः अर्श आद्यच् प्रभः-चन्द्रप्रभस्वामी ' नामैकदेशग्रहणे नामग्रहणात् देवदत्तो दत्त इतिवत्. तथाच प्रभः-चन्द्रप्रभः अरतः-रतिविरहितः रागा-भाववान् वाऽत्र तत्प्रभारतम् ।

भारतवित्सभारतम्–भरतान्–भरतवश्यानधिकृत्य कृतोग्रंथो भारतं–पाण्डवचरित-महाभारतादिकम् भरतेन मुनिना प्रोक्तं भारतं=नाट्यशास्त्रम् वा विदन्ति–जानन्तीति भारतविदस्तेषां सभासु–परिषत्सुरतम् बहुतरभारतवित्परिषत्कमित्यभिसन्धिः । श्रीभारतम्=त्रिभर्त्ति=पालयति षट्खण्डं भरतक्षेत्रमिति भरतः तेन चिन्हितं पालितं वा तस्येदं वा भारतम् श्रीभिः=सहितं भारतं श्रीभारतं=भरतक्षेत्रमित्यर्थः अस्ति=वर्तते अनुप्रासः । स्वभावोक्तिश्च ।

रत्नं मणिर्द्वयोरश्मजातौमुक्तादिकेऽपिचेत्यमरः पुष्पंसूनं सुमनसः प्रसवश्च मणीवकम् इति हेमचन्द्रः भारतो भरतापत्ये .. इति. भारतं ग्रंथभेदेस्यादर्पभेदे नपुंसकमिति च कोशः ॥ श्रीर्वेशरचना शोभा भारती सरलद्रुमे । लक्ष्म्यां त्रिवर्गसम्पत्तिविधोपकरणेषु च । विभूतौ च मतौ च स्त्री इति मेदिनी कोशः ॥

"श्रेणीभवद्भव्यमणीमणीचकैः" इत्येतदूषकटकं "मणीचक्र" पदं यदि कवेः स्वीयशयकुशेशयकलितललितलिप्या 'चकार' तृतीयाक्षरकमेवनिर्गत चेत्तदाऽयमर्थः–"मणीव चकते=धातोरनेकार्थत्वात् दीप्यते इति मणीचकः=दीपविशेषः=विद्युद्दीप इत्यर्थः । चक तृप्तौ प्रतीघाते च. पचाद्यच् । मण्यः मणीचका इव इति मणीमणीचकाः, श्रेणी भवन्तः पंक्तिबद्धतयास्थिताः भव्याः=शोभना मणीमणीचकायेषु ते श्रेणीभवद्भव्य मणीमणीचकास्तैस्तथोक्तैः" ॥ १६ ॥

गङ्गाऽनुपङ्गान्मणिमालभारिणी, सुरद्रुसेकामृतपूरसारणी ।

क्षेत्रक्षमेशस्य रसप्रचारिणी, साप्रागुदूढा वनितेव धारिणी ॥ १७ ॥

अन्वयः--प्रागुदूढा वनितेव गङ्गा [ शोभते ] क्षेत्रक्षमेशस्य अनुषङ्गात मणिमालभारिणी सुरद्रुसेकामृतपूरसारणी [ क्षेत्रक्षमेशस्य ] रसप्रचारिणी धारिणी. ॥ १८ ॥

व्याख्या–क्षेत्रक्षमेशस्य=क्षेत्र पृथ्वीपतेः भरतक्षेत्रस्य प्रागुदूढा=पूर्वं परिणीता वनिता=स्त्री इव गङ्गा=तन्नाम्नी शाश्वती महानदी शोभते इति सा कीदृशीत्याह–क्षेत्रक्षमेशस्य=क्षेत्रस्थः क्षमेशः क्षेत्रक्षमेशस्तस्य=वैताढ्य पर्वतस्य अनुषङ्गात्=सम्बन्धात् मणिमालभारिणी=मणीनांमालां बिभर्ति=धारयति तच्छीला यद्वा मणीनां मालेव इति मणिमाला=दीप्तिस्तां यद्वा मणीना मालेव माला=पंक्ति-र्मणिमाला तां बिभर्त्तीत्येवंशीला रत्नसमूहधारिणीत्यर्थः माले–पिके–ष्टिकस्यान्ते भारि–तूल–चितेषु इत्यनेन माला शब्दस्य ह्रस्वत्वम् । वैताढ्य पर्वतासन्ने गङ्गाया नवनिधान शालित्वस्य शास्त्रसिद्धतया मणिमालाधारित्वमुपपद्यते । पुनः कीदृशी ? सुरद्रुसेकामृपूरसारणी=सुरद्रुः=कल्पवृक्षः देवदारुवृक्षो वा तस्य सेचनं सेकः=जलादिनाऽऽर्द्रीकरणम् सिचेर्भावेघञ् । सेकार्थम् अमृतं=वारि तस्य पूरः=प्रवाहः तस्य सारणी कुल्या इव । पुनः कीदृशी ? क्षेत्रक्षमेशस्य=वर्षपर्वतस्य प्रस्तावात् हेमवतः रसप्रचारिणी=रसं=जलं तस्य प्रचारिणी आसमुद्रं विस्तारिणीत्यर्थः । यद्वा क्षेत्रक्षमेशस्य=क्षेत्रं=कलत्रं भार्येत्यर्थः तस्यै तस्या वा क्षमः=योग्यः हितो वा शक्तो वा ईशः=पतिः=तस्य तथोक्तस्य रसप्रचारिणी=रसः=आनन्दः कशृङ्गारादिर्वा तस्य प्रचारिणी सम्पादिका जनिकेत्यर्थः । पु० की० ? धारिणी=दुर्गतौपतज्जन्तून् धारयतीत्येवंशीला यद्वा पापान्नरके संभावितपातान् प्राणिनो निजभुवनपावन जीवनाऽवगाहनवि-

गतरूपतया धारयति=अवलम्बते तच्छीला । अत्रपद्ये 'क्षेत्रक्षमेश' पदे तंन्त्रं विवक्षितम् तेनासौ अर्थत्रयवाची ॥ १८ ॥
उपमाऽतिशयोक्तिश्चालंकारौ ॥

सिन्धुर्द्वितीयाऽब्जमुखानुसारिणी, जडप्रसङ्गाद्वृतचारुचारुणी ।
इतस्ततो नौ निभृतार्थतारिणी, वसुप्रकाशैः सुरविप्रतारिणी ॥ १८ ॥

अन्वयः—[ क्षेत्रक्षमेशस्य उद्वढा द्वितीया स्त्रीव सिन्धु. प्रवहति ] अब्जमुखानुसारिणी इतस्ततो नौनिभृतार्थतारिणी वसुप्रकाशै. सुरविप्रतारिणी ॥ १८ ॥

व्याख्या-" क्षेत्रक्षमेशस्य " इति. 'प्रागुद्ढ वनितेवे '-ति च पूर्वतोऽन्वेति । तथा च क्षेत्रक्षमेशस्य=क्षेत्रपृथ्वीपतेः प्रागुद्ढा= पूर्वपरिणीता द्वितीया वनिता=स्त्री इव सिन्धुस्तन्नाम्नी पश्चिमाभिवाहिनी महानदी प्रवहति । यद्वा पूर्वं क्षेत्रक्षमेशस्य द्वे वनिते तयोः पूर्वां परिचाययतीन्युक्तमपरापरिचाययन्नाह-सिन्धुरिति. द्वितीया=भागीरथीतरा सिन्धु=स्तन्नाम्नी पश्चिमाभिमुखवाहिनी महानदी प्रवर्तनीति शेषः । सा कीदृशी? अब्जमुखानुसारिणी=अब्जं पद्मं पद्महृद इत्यर्थस्तस्य मुखं=निस्सरणं निर्गमसार्गं इत्यर्थः अग्रभागो वा तत् अनुपश्चात् .(तस्य) समीपं वा सरति=गच्छतिपततीतीत्यर्थ स्तच्छीला । जडप्रसङ्गाद्=रलयोर्डलयोश्चैकत्वसरणात् जलप्रसङ्गात् जलसम्बन्धात् वृतचारुचारुणी=वरुणोदेवताऽस्याः वरुणस्येयं वा वारुणी=पश्चिमदिक्. वृता=स्वीकृता चारुः=शोभन वारुणी

यया सा तथोक्ता अन्यापि काचित् जड़ः=मूढ़ः, शिशिरः ( शैत्यं ) वा तस्य प्रसङ्गात् हृतचारुवारुणी=स्वीकृतरुचिरमदिरा भवति। पुनः कीदृशी इतस्ततः नौनिभृतार्थतारिणी=नावा=नौकयानावि वा निभृतान्=धृतान् गुप्तान् वा निभृतं=निश्चलं यथा तथेति वा अर्थान्=वस्तूनि धनानि वा तारयति=परपारंनयति तच्छीला सा तथोक्ता। वसुप्रकाशैः=वसोः=सूर्यस्य वसूनां=देवानां वा मणीनां वा प्रकाशैः प्रतिबिम्बनैः यद्वा वसुपु=तोयेषु प्रकाशैः=प्रतिबिम्बाद्युद्योतैः सुरान्=देवान् विप्रतारयितुं शीलमस्याः सा तथोक्ता। वसूना=जलानां प्रकाशैः सुरान्=देवान् विप्रान् ब्राह्मणान् च तारयति तच्छीला।

जडा स्त्रियाम्। शूकशिम्ब्यां, हिमग्रस्त-मूकाऽप्रज्ञेषु तु त्रिषु इति मेदिनी। वसु तोये धने मणौ इति वैजयन्ती, वसुः सूर्यो वसुर्देवो वसुर्वन्हिर्वसुर्मरुत् इत्यनेकार्थध्वनिमञ्जरी अर्थोऽभिधेय रैवस्तु- प्रयोजन निवृत्तिषु इत्यमरः ॥ १८ ॥

तत्रार्यभागो वदनं खगानां, श्रेण्यौपुनश्चौष्ठपदं दधाने।
क्षेत्रावनीशस्य तु सिन्धु-गङ्गे, ते श्मश्रुणीभात इव प्रसिद्धे ॥ १९ ॥

अन्वय -तत्र आर्यभागः [अर्यभागश्च] क्षेत्रावनीशस्य वदन खगानां। श्रेण्यौ ओष्ठपद दधाने प्रसिद्धे ते सिन्धु गङ्गे श्मश्रुणीइवभात. ॥ १८ ॥

व्याख्या—तत्र=षट्खण्डात्मभूभागे. आर्यभागः=आर्यखण्डम् अर्यभागः अर्यैः=स्वामिभिः भाति-शोभते इत्यर्यभाः स चासावगः पर्वतश्चेति स तथोक्तः-वैताढ्यपर्वतश्च. क्षेत्रावनीशस्य=क्षेत्र पृथ्वीपतेर्भरतक्षेत्रनृपस्य वदनं-मुखं तत्स्थानीय इत्यर्थः। खगानां-

विद्याधराणां श्रेण्यौ-वैताढ्यपर्वतस्य दक्षिणोत्तरश्रेण्यौ ओष्ठपदं= ओष्ठस्थानं दधाने ओष्ठस्थानीये इत्यर्थः। प्रसिद्धे-ख्याते भूपिते वा ते प्राग्दर्शितस्वरूपे सिन्धुगङ्गे श्मश्रुणी-पुम्मुखरोमराजी इव भातः-शोभेते। स्यादर्यः-स्वामि-वैश्ययोरित्यमरः। प्रसिद्धौ ख्यातभूपितौ इति चाऽमरः। तनूरुहं रोम-लोम. तद्वृद्धौ-श्मश्रु पुंमुखे इत्यमरः ॥ १९ ॥

**क्षेत्राऽवनीशोऽब्धिदुकूलवास-स्तत्र प्रभासो मगधाधिवासः।**
**पादौ, वराद् दामगिरिर्नितम्बः, क्षेत्रस्य नास्त्येव ततोऽस्यबिम्बः ॥ २० ॥**

अन्वय.-क्षेत्रावनीश अब्धिदुकूलवास तत्र प्रभास. मगधाधिवास च पादौ, वराद्दामगिरिर्नितम्बः ततोऽस्य क्षेत्रस्य बिम्ब नास्त्येव ॥ २० ॥

व्याख्या—अवन्यामवनिं वा ईष्टे इत्यवनीट्. क्षेत्रस्याऽवनीट् तस्य. क्षेत्रावनीशः=क्षेत्रपृथ्वीपतेर्भरतक्षेत्रस्य अब्धिदुकूलवासः= दुकूलम्=अन्तरीयक्षौमयुगलं तदात्मकं वासः=वस्त्रं दुकूलवासः, अब्धिः लवणसमुद्रः एव दुकूलवास इति स तथोक्तः। तत्र=भरतक्षेत्रे वर्तमानौ-प्रभासः=स्वनामख्याततीर्थविशेषः, मगधाऽधिवासः=मगधाधिपदेवस्य वासस्थानं मागधतीर्थम् च इमौ द्वावपि पादौ= चरणस्थानीयौ। वराद्दामगिरिः=वरदामनामा शाश्वतपर्वतः नितम्बः=कटिप्रदेशः। ततो हेतोः अस्य क्षेत्रस्य बिम्बः=प्रतिकृतिः सादृश्यमिति यावत नाऽस्त्येव। क्षौमं दुकूलं स्यादित्यमरः। अतिशयोक्तिरलंकारः उत्प्रेक्षा वा. ॥ २० ॥

**मूर्धाऽस्य हैमाद्रि रमुष्य चूला-स्याद्रोहिता भ्रूर्युसरिच्च वामा।**

सा दक्षिणा सिन्धुसरिद् रसाग्रे, तयोः पथस्ते नयने च मन्ये ॥ २१ ॥

अन्वयः–अस्य मूर्धा हैमाद्रिः, रोहिता अमुष्य चूला स्यात् द्युसरित् वामाभ्रूः सिन्धुसरिद् दक्षिणा सा, रसाग्रे तयोः पथः ते नयने मन्ये ॥२१॥

व्याख्या—अस्य=क्षेत्रावनीशस्य मूर्धा=शिरस्थानं हैमाद्रिः=हेमवान् पर्वतः । रोहिता=तन्नामिका हैमवताऽभिधक्षेत्रवाहिनी नदी अमूष्य=क्षेत्रस्य चूला=चूडा शिखास्थानीयेत्यर्थः । द्युसरिद्=आकाशगंगा हैमवतशिखरिशिखरप्रपतद्गङ्गाप्रवाहः वामा=सव्यभागीया भ्रूः=नेत्रोपरिस्थरोमराजिः, सिन्धुः दक्षिणा भ्रूः । रसा=जिह्वा इव रसा=नदीनिर्गमनलिका तस्या अग्रे=अग्रभागे उपरीत्यर्थः तयोः= सिन्धुगङ्गयोः पथः=मार्गः ते=प्रसिद्धे नयने=नेत्रे मन्ये=उत्प्रेक्षे इत्यर्थः उत्प्रेक्षा. ॥ २१ ॥

पूर्वापरौ तोयनिधी च बाहू, तन्मध्यदेशः स तु मध्यभागः ।
नाभिः कुशावर्तपदेऽदसीया–स्याज्जङ्गलस्तद्गलनालदेशः ॥ २२ ॥

अन्वयः—पूर्वापरौ तोयनिधी [अस्य] बाहू, स मध्यभाग तु तन्मध्यदेश. । कुशावर्त्तपदे ऽदसीया नाभि., जङ्गलः तद्गलनालदेशः स्यात् ॥२२॥

व्याख्या—पूर्वापरौ=पूर्व-पश्चिमौ, तोयनिधी=समुद्रौ अस्य भरतक्षेत्रस्य बाहू=भुजस्थानीयौ. स=प्रसिद्धः मध्यभागः=मध्यप्रदेशः तन्मध्यदेशः=तस्य भरतक्षेत्रस्य मध्यमावयवः । कुशावर्त्तपदे=अमुष्य इयमदसीया=भरतक्षेत्रसम्बन्धिनी नाभिः तत्स्थानमित्यर्थः । जङ्गलः=कान्तारभूयिष्ठदेशः तद्गलनालदेशः तस्य भरतक्षेत्रस्य कण्ठभागः बोधव्यः ॥ उत्पेक्षा. ॥ २२ ॥

स्कन्धांशुकं श्रीभरतस्य गङ्गा, यज्ञोपवीतं शुचि तस्य सिन्धुः ।
नास्मिंस्ततो वैषयिको विकारः, सिद्धं शिवं ब्रह्मपदं तदेतत् ॥ २३ ॥

अन्वयः—गङ्गा श्रीभरतस्य स्कन्धांशुकं, सिन्धुः तस्य शुचि यज्ञोपवीतं ततः अस्मिन् वैषयिकः विकारः न तदेतत् सिद्धं शिवं ब्रह्मपदम् अस्ति ॥ २३ ॥

व्याख्या–गङ्गा श्रीभरतक्षेत्रराजस्य स्कन्धांशुकं स्कन्धोत्तरीयं पूजा–जप–ध्यानादिकालीनस्कन्धधार्ययोगपट्टः । सिन्धुश्च तस्य= भरतक्षेत्रस्य, शुचि=पवित्रं यज्ञोपवीतं=यज्ञसूत्रं वामस्कन्धत आरभ्य दक्षिणकुक्षि––पृष्ठवेष्टकविप्रधार्योपवीतसूत्रमित्यर्थः, ततः=तस्मात् कारणात् अस्मिन्=भरतक्षेत्रे निवासिनां जप-ध्यानादि लीन मनसां वा, वैषयिकः=विषिणोति=स्वात्मकतयाविषयिणं निरूपयति इति विषयः=भोगसाधनं स्रक्चन्दनवनितादिः, इन्द्रियगोचर शब्द–रूपादिश्च, देशश्च तेन––

विषयेण निर्वृत्तो वैषयिकः=विषयजनितः विकारः=विकृति श्चेतसोऽन्यथाभावः न अस्तीति शेषः । तत् तस्मात् विषयजन्यवि- कारान्नु त्थानाद्धेतोः एतत्=भरतक्षेत्रं सिद्धं=सिद्धिः योगादिसिद्धिरस्ति अस्मिन् अर्शआद्यच् सिद्धिसम्पादकं शिवं=कल्याणावहं निरुप- द्रवं वा ब्रह्मपदं–ब्रह्म–ब्रह्मचर्यं तस्य पदं–स्थानं, यद्वा ब्रह्म–महानन्दः मोक्ष इत्यर्थः तस्य पदं–साधनस्थानम् आम्नातं पूर्वसूरिभिरिति शेषः । स्वर्गादीना भोगभूमित्वात्तत्रकर्मानुष्ठानाऽनधिकारात्. अस्य तु भरतक्षेत्रस्य कर्मभूमित्वेनाभिमतत्वान्मोक्षसाधनकर्माऽऽचरणे प्रवृत्त्या भवन्ति भव्या मोक्षाधिकारिण इति भरतक्षेत्रस्य मोक्षसाधनस्थानत्वं युज्यते महानन्दोऽमृतं सिद्धिः कैवल्यमपुनर्भवः । शिवं

निःश्रेयसं श्रेयो, निर्वाणं ब्रह्म निर्वृतिः इति हेमचन्द्रः ॥ २३ ॥

क्रीडाऽऽस्पदं यद्‌ भरतं रमाया, जनस्ततोऽस्मिंश्चरतः प्रमायाम् ।
रत्नप्रसक्तो निगमः क्षमाया, मायास वर्जं बहुलक्षमायाः ॥ २४ ॥

अन्वय—यद् भरत रमाया. क्रीडास्पद तत अस्मिन् जन. प्रमाया रत., रत्नप्रसक्त बहुलक्षमाया निगम क्षमायाम् आयासवर्जं ( निरतः ) । यद्वा बहुलक्षमाया. क्षमाया (निरता.) निगम आयासवर्जं रत्नप्रसक्त ( आसीत् ) ॥ २४ ॥

व्याख्या—यद्-यस्मात् कारणात् भरतं-भरतक्षेत्रं रमायाः-लक्ष्म्याः क्रीडास्पदं-विलासस्थानं सार्वदिकस्थितिस्थानमित्यर्थः नित्यनिवासस्थानभूतमिति भावः ततः-तस्मात् भरतक्षेत्रे लक्ष्म्यानित्यनिवासित्वेन लोकानां शरीरस्थितिचिन्ताद्यभावात् हेतोः जनः-लोकः प्रमायां-प्रमितौ यथार्थज्ञाने तत्साधनकर्मादावित्यर्थः रतः-सक्तः तल्लीनमना इत्यर्थः रत्नप्रसक्तः-रत्नसंग्रहतत्परः बहुलक्षमायाः-बह्वः अनेके लक्षाः-लक्ष्या अनुकम्पनीयतया आश्रयणीयतया वा उद्देश्या यस्याः सा बहुलक्षा, सा चासौ मा बहूनां लक्षाणाम्-अयुतपंक्तीनां समाहारः बहुलक्षं तदात्मिका वा मा-लक्ष्मीस्तां याति-प्राप्नोत्यध्यवसायादिनेति स तथोक्तः " या प्रापणे, विच् " निगमः-वाणिजः व्यवसायिजन इत्यर्थः क्षमायां-पृथिव्यां आयासवर्जमर्जनक्लेशरहितं यथा तथा निरत इत्यर्थः पृथिव्या रत्नगर्भत्वात् । यद्वा बहूनि लक्षाणि लक्ष्याणि विषयतया यस्या सा बहुलक्षा तादृशी माया-बुद्धिर्येषां ते तथोक्ताः प्रभूतविषयाऽवगाहिबुद्धिशालिनः विवेकिन इति यावत् क्षमायां-शान्तौ तत्प्रधानकर्मणि मुनिव्रतग्रहणादावित्यर्थः निरता इति शेषः । निगमश्च

आयासवर्जं रत्नप्रसक्त इति सम्बन्धः ॥ निगमः वणिक्पथः आयासवर्जं रत्नार्थं प्रसक्ताः प्राप्ता लीना वा लोका अत्र स रत्नप्रसक्तः आसीत् इति शेषः ॥ २४ ॥

निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे इति विश्वः । क्षितिक्षान्त्योः क्षमा इत्यमरः माया स्याच्छाम्बरीबुद्ध्योरितिमेदिनी ॥

मन्ये तदा रामपदं जगत्याः, साम्राज्यरूपं भरतं यतः सा ।
श्रीदे-वरत्वाश्रितलक्ष्मणाशां, सीतापि लेभे धरणी प्रतीता ॥ २५ ॥

अन्वय.—तद् भरत जगत्या आरामपद साम्राज्यरूप मन्ये यत. प्रतीता सीतापि धरणी श्रीदेऽवरत्वाश्रितलक्ष्मणाशां लेभे अथ च तदा जगत्याः साम्राज्य रूप रामपद भरत मन्ये यत.धरणीप्रतीतासीताऽपि श्रीदेवरत्वाश्रितलक्ष्मणाशा लेभे, यद्वा श्रीदेवरत्वाश्रितलक्ष्मणा सीता यत आशा लेभे ॥२५॥

व्याख्या–तद्भरतं तदाख्यविस्तृतशोभनक्षेत्ररत्नं जगत्याः पृथिव्या भुवनस्य वा आरामपदं विश्रामस्थानम् उपवनस्थानं वा "आरामः स्यादुपवनं कृत्रिमं वनमेव यदित्यमरः" साम्राज्यरूपम् सर्वैश्वर्यरूपं च मन्ये उत्प्रेक्षे यतः यस्मात् भरतक्षेत्रात् प्रतीता प्रसिद्धा सीता हलोत्कृष्टापि सा धरणी रत्नप्रभाभिधाना श्रीदेवरत्वाश्रितलक्ष्मणाशां श्रीदे-धनदेऽवरत्वेन न्यूनत्वेन अनिष्टत्वेन वा आश्रितं युक्तं न्यूनत्वसूचकं यत् लक्ष्म चिन्हं रत्नादि तेन श्रीदे-वरत्वाश्रितलक्ष्मणा उपलक्षिता आशा दिक् तां दक्षिणदिशामित्यर्थः लेभे, प्राप. ॥ २५ ॥

अथ च तदा श्रीरामचन्द्रवनवासकाले जगत्याः साम्राज्यरूपं रामपद दाशरथिरामस्थानं भरतं कैकयीसुतं मन्ये यतः यस्मात्

भरतात् यन्निमित्तमित्यर्थः धरणीप्रतीता धरण्याः पृथिव्याः सकाशात् प्रतीता प्रसिद्धिं प्राप्ता प्रादुर्भूतेत्यर्थः सीता जनकराजनन्दिनी अपि श्रीदेवरत्वाश्रितलक्ष्मणाशां श्रिया युक्तो देवरः श्रीदेवरस्तस्य भावस्तत्त्वं श्रीदेवरत्वेनाऽऽश्रितो लक्ष्मणः सौमित्रिर्यस्यां सा चासौ आशा भरतेन राज्येऽङ्गीकृते रामवनवासार्थंनियतीकृता दिक् दक्षिणादिगित्यर्थः ता लेभे। यद्वा श्रीदेवरत्वेन आश्रितो लक्ष्मणो यां यस्यां वा सा श्रीदेवरत्वाश्रित लक्ष्मणा सीता जानकी यतः भरतात् आशां दिशम् दक्षिणांदिशमित्यर्थः यद्वा आशां कामम् इच्छां वनवासान्ते राज्यविषयिणीं वाञ्च्छामित्यर्थः लेभे इति सम्बन्धः ॥

यद्वा तद्भरतं भरतक्षेत्रं जगत्याः भूमेः आरामपदं उद्यानस्थानम् रमणकस्थलमित्यर्थः साम्राज्यरूपम् सर्वसम्पद्रूपम् सर्वसाम्राज्योपभोगायतनमिति भावः यतः सा प्रसिद्धिं गता त्रिजगद्विख्याता प्रतीता सर्वतः प्रसन्ना कृतादरा च धरणी भारतभूमिः सीतापि–हलोत्कृष्टापि यद्वा लक्ष्मीरपि सर्वसम्पद्रूपापि श्रीदे कुबेरे उत्तरदिग्विभागे वरत्वाश्रितलक्ष्मणाशां वरत्वेन श्रेष्ठत्वेन आश्रिता अधिगता लक्ष्मप्रधानमेव लक्ष्मणः स्वार्थेऽण् तस्य आशा अश्नुते व्याप्नोतीति आशा तां प्रधानव्यापकतां लेभे सर्वतः श्रेष्ठत्वेनाश्रितप्रधानव्यापकतां प्रापेत्यर्थः ॥ अत्र श्लेष उत्प्रेक्षा चेत्यलंकृती ॥ २५ ॥

**दाक्षिण्यमामृश्य यदस्य मेरुः, स काञ्चनार्चिर्विबुधैर्धृतार्चः ।**
**महाविदेहं पुरतश्च पश्चा–दस्यादिशद् दक्षिणभागमेव ॥ २६ ॥**

अन्वयः—यत् मेरु अस्य दाक्षिण्यमामृश्य महाविदेह पुरतः पश्चात् च निवेश्य अस्य दक्षिणभागमेव ( संनिवेशार्थम् ) आदिशत् । स काञ्चनार्चि. विबुधैर्धृतार्चः ॥ २६ ॥

यत्=यस्मात्कारणात् मेरुः=सुवर्णपर्वतः अस्य=भरतक्षेत्रस्य दाक्षिण्यम्=औदार्यं सरलतां वा सर्वानुकूलतां वा यज्ञादिविधिदानं वा आमृश्य=विमृश्य विचार्येत्यर्थः। महाविदेहं भरतक्षेत्राधिकविस्तृतमपरक्षेत्रविशेषं पुरतः=पूर्वस्यां दिशि पश्चात्=पश्चिमायां च दिशि यद्वा पुरतः=अग्रतः पूर्वदिशीत्यर्थः पश्चात्=अवरस्मिन् भागे पृष्ठभागे पश्चिमदिशीत्यर्थः निवेश्य अस्य=भरतक्षेत्रस्य दक्षिणभागमेव= स्वदक्षिणदेशमेव आदिशत्=उपाऽकल्पयत्संनिवेशार्थमिति शेषः। मेरुः कीदृशः स काञ्चनार्चिः=सुवर्णमयरोचिष्कः, पु० की० विबुधैः= देवैः धृतार्चः कृतपूजः ॥ दक्षिणे सरलोदारौ इत्यमरः। दक्षिणो दक्षिणोद्भूत-सरलच्छन्दवर्तिषु। आरामे त्रिषु यज्ञादिविधिदाने दिशि स्त्रियाम् इति मेदिनी ॥ २६ ॥

स्पर्धां दधच्चैरवतं यदस्य, विन्यस्य वामं कृतरत्नकामम्।
स शूरतं प्राप्तघृणित्वभव्यं, मेरुर्दधौ तद्भरतं त्वसव्यम् ॥ २७ ॥

अन्वय.-स मेरु यत् अस्य स्पर्धां दधत् कृतरक्तकामम् ऐरवत वाम विन्यस्य स शूरत प्राप्तघृणित्वभव्य तद्भरत तु असव्य दधौ ॥ २७ ॥

व्याख्या-सः=प्रसिद्धः मेरुः=सुवर्णशैलः यत्=यस्मात् भरतक्षेत्रे दाक्षिण्याद्यनेकगुणानुरोधाद्धेतोः, अस्य=भरतक्षेत्रस्य स्पर्द्धां= दक्षिण भागावस्थापनादिमन्मानजनितामीर्ष्यां परोत्कर्षासहिष्णुत्वमिति यावत् दधत्=धारयत् तथा कृतरक्तकामं=कृतः=विहितो रक्ते= शोणिते रक्तस्य वा कामः=अभिलाषो येन तत् ( परिहारपक्षे तु कृतो रक्ते=ऐरवतक्षेत्रगत 'रक्ता रक्तवतीत्येतन्नदीद्वयसम्बन्धिलो- हितवर्णजले कामो येन तत्, रक्ता रक्तवती च नदीद्वयमैरवतक्षेत्रेवर्तते तदीयं जलं रक्तं तत्राऽनेनेच्छाकृतेतिकल्पना। लोकेऽपि

रक्तेच्छवेऽधमपदं राज्ञा प्रदीयते) अत एव दोषात् ऐरवतं=तदाख्यक्षेत्रभेदं वामं=वामगतं=सव्यभागस्थं विन्यस्य=विधाय कृत्वत्यर्थः। स शूरतं=शूरतः=कृपालुस्तेन सहितं यद्वा शूरस्य भावः शूरता=शौर्यं तेन सहितम् । प्राप्तघृणित्वभव्यम्=प्राप्ता=अधिगता घृणिः=कान्तिर्यैस्ते प्राप्तघृणयस्तेषां भावस्तत्वं तेनभव्यं=शोभनं योग्यं वा यद्वा घृणा=करुणा दयेत्यर्थः अस्त्यस्यासौ घृणी=दयालुस्तस्य भावो घृणित्वं=दयालुता कृपेत्यर्थ स्तेन भव्यं, यद्वा प्रकृष्टाः आप्ताः=प्रत्ययिता विश्वास्यवचना इत्यर्थः यस्मिन् तत्प्राप्तं तच्च तद् घृणित्वभव्यं चेति विशेषणोभयपदकः कर्मधारयः, तत्=प्रसिद्धं भरतं=भरतक्षेत्रं तु असव्यं=दक्षिणं दक्षभागस्थं कृत्वेत्यर्थः दधौ=धारयामास। वामंधने पुंसि हरे कामदेवे पयोधरे वल्गुप्रतीपसव्येषु त्रिषु नार्यां स्त्रियामथ इति मेदिनी। कृपालुः शूरतः समाः इत्यमरः। आप्त–प्रत्ययितौ समौ इत्यमरः। जुगुप्सा–करुणे घृणे इति चाऽमरः ॥ २७ ॥

**कुरुप्रकाशी विषयः स–मागधः, प्रशंसितः काव्यशतैः स–मध्यमः।**
**स–कौशलः कोशलसत्कृषीवलैः, श्रियाऽभिनीतो जगतीह नीतितः ॥ २८ ॥**

अन्वय.—कुरुप्रकाशी विषयः ( अस्ति ) स मागध काव्यशतै. प्रशसितः स मध्यम. स कौशल. कोशलसत्कृषीवलैः ( उपलक्षित. ) इह जगति नीतित. श्रियाऽभिनीत· ( पक्षान्तरेपु–स मागध विषयोऽस्ति। स मध्यमो विषयोऽस्ति स कौशलो विषयोऽस्ति ( शेष विशेषणान्वयः प्रथमवत् ) ॥ २८ ॥

व्याख्या–कुरुप्रकाशी=कुरुभिः=तदाख्यराजविशेषैः प्रकाशी=प्रकाश (प्रसिद्धि) शाली, यद्वा कुरून् प्रकाशयति तच्छीलः स तथोक्तः

काव्यशतैः- परश्शतकाव्यैः स्तुतिसहस्रेण वा प्रशंसितः प्रशंसामुखेन व्यावर्णितः, समध्यमः-मध्यमेन-मध्यजस्वरेण मध्यस्थजनेन वा मध्यमया- हृदयोत्पन्नवृद्धिसंपृक्तनादस्वरूपवाणीभेदेन वा सहितः। स कौशलः-कुशलस्य भावः कौशलं, कौशलेन-क्रियानैपुण्येन सहितः। कोशलसत्कृपीवलैः-कोशै-धनधान्यराशिभि र्लसद्भि-र्विराजमानैः-कृपीवलैःकर्पकैः उपलक्षितः इह-अस्मिन् जगति-संसारे नीतितः- न्यायवर्त्तनशीलतया श्रिया-लक्ष्म्या भारत्या वा समृद्ध्या वा अभिनीतः-आभिमुख्येन सामीप्येन वा प्राप्तः। एतेन शान्तिनाथ- नेमिनाथ-कृष्ण वासुदेवाना मवतारदेशः प्रदर्शितः। हस्तिनापुर-शौरिपुर-द्वारिकाणां कुरुदेशान्तर्गत्वात्। हस्तिनापुरमारभ्य कुरुक्षेत्रा च दक्षिणे। पञ्चालपूर्वभागे तु कुरुदेशः प्रकीर्तितः इत्युक्तेः ॥ १ ॥ चरम तीर्थकराऽवतारभूमिमाह-स मागध इति मगधे-देशभेदे भवा मागधाः-मगधदेश वास्तव्यजनाः तैः सहितो विषयः=देशः मगधदेश इत्यर्थः ब्राह्मणकुण्डनगर मगधदेशस्याऽभ्यन्तरवर्तीति संभाव्यते ॥ सः=प्रसिद्धः मध्यमः=मध्ये भवः, विषयः=देशः मध्यदेशः मध्यप्रान्तः तदन्तर्वर्त्ति वाराणसीत्यर्थः मध्यदेशस्तु मध्यम इत्यमरः। हिमव-द्विन्ध्ययोर्मध्यं यत्प्राग् विनशनादपि। प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः इति मनुः। अयं च प्रभुपार्श्वना- थाऽवतारदेशः। स कौशलः=कोशले=देशविशेषे भवाः कौशलाः तैःसहितो विषयः कोशलदेश इत्यर्थः। अनेन श्रीयुगादिभवाऽऽदि- नाथस्य श्रीरामचलदेवस्य चाऽवतारभूमिःसंसूचिता। सर्वत्र पक्षेषु 'कुरुप्रकाशी'-इत्यस्य कुरुभिः=ओदनैः रूपविशेषैर्वा प्रकाशी=प्रका- शशीलः। कुरुर्नृपांतरे भक्ते पुमान् पुंभूम्नि नीवृत्ति इति मेदिनी ॥

देशः सदेशस्थितिभृन्नरेशः, सुरार्चनाहूत महीसुरेशः ।
तपस्विवर्गेण यशस्विभिर्वा, कृतप्रवेशः स्थिरसन्निवेशः ॥ २९ ॥

अन्वय—सदेशस्थितिभृन्नरेश सुरार्चनाहूत महीसुरेश तपस्विवर्गेण यशस्विभिर्वा कृतप्रवेश. स्थिरसन्निवेश देश ( आसीत् )

व्याख्या—सम्प्रति दशभिः पद्यैः पूर्वोक्तान् देशान्वर्णयति–देश इति । देशः=जनपदः वक्ष्यमाणस्वरूप आसीदिति शेषः । सदेशस्थितिभृन्नरेशः=सदेशे=समीपे स्थितिं=मर्यादामवस्थितिं वा बिभ्रतीति सदेशस्थितिभृतो नरेशा=राजानो यस्मिन् सः यद्वा सदा=सर्वस्मिन्काले ईशस्थितिम्=ऐश्वर्यं बिभ्रति=धारयंतीति ते ईशस्थितिभृतो नरेशा यस्मिन् स तथोक्तः । सुरार्चनाहूतमहीसुरेशः–सुराणां देवानाम् अर्चनायां=पूजायाम् अर्चनार्थं वा आहूताः–आकारिता आमन्त्रिता इत्यर्थः महीसुरेशाः=ब्राह्मणश्रेष्ठाः ऋत्विगादय इत्यर्थः यस्मिन् स तथोक्तः । तपस्विवर्गेण–तपोधनैः यशस्विभिः–यशोधनैर्वा कृतः=संपादितः प्रवेशो यत्रासौ कृतप्रवेशः । स्थिरसन्निवेशः–स्थिरः–शाश्वतः सन्निवेशः–सम्यक्स्थितिर्वास इत्यर्थः यत्र सः यद्वा स्थिरः=निश्चितः सन्निवेशः–पुरादौ गृहादिरचनापरिच्छिन्नदेशो-यस्मिन् स तथोक्तः । स देशाऽभ्यास–सविध–समर्याद–सवेशवत् इत्यमरः । सन्निवेशो निकर्षण इति चामरः ॥ २९ ॥

सदागमानां फलितैर्द्विधापि, स संनिधानै र्बहुधा निधानैः ।
परोपकारादिलसद्विधानै, र्ध्यानेषु नेयः सुधियां प्रधानैः ॥ ३० ॥

अन्वय—सदागमाना द्विधापि फलितै. समनिधानै बहुधा निधानैः ( उपलक्षितैः ) परोपकारादिलसद्विधानैः सुधिया प्रधानै ध्यानेषु नेय. ॥ ३० ॥

व्याख्या—सदागमानां=सत्सिद्धान्ताना द्विधापि=द्विविधैरपि ज्ञानक्रियारूपैः फलितैः=फलैः, यद्वा सदागमानां=सन्-प्रशस्तः-आगमः-आयः येषा ते सदागमा स्तेषां न्यायोत्पन्नाना धनाना मित्यर्थः द्विधापि फलैः-दान-भोगरूपैः स संनिधानैः-सन्निधानेन-समीपवासेन सहितैः यद्वा सत्-प्रशस्तं निधानम्-आश्रयः, कार्यावसानं वा तेन सहितैः। बहुधा-बहुप्रकारकैः निधानैः-शङ्ख-पद्मादिनिधिभिः उपलक्षितैः। परोपकारादिलसद्विधानैः-परोपकरणप्रभृतिभि र्लसद्भिः-मनोहरैः विधानैः-कर्मभि रुपलक्षितैः। यद्वापरोपकारादीनि लसन्ति-शोभनानि विधानानि-कर्माणि येषां ते स्तथोक्तैः। सुधियां-सुबुद्धिशालिनां पण्डिताना वा मध्ये प्रधानैः-मुख्यैः उपलक्षितः असौ देशःध्यानेषु-चिन्तनेषु नेयः प्राप्यः सर्वदा ध्यातव्यः श्लाघ्यगुणत्वेनेति भावः उदात्तालंकारः ॥ ३० ॥

शैलाविभागै र्दृढसानुरागै, स्तपस्विपादोचित संविभागैः ।
भूपैः स्वरूपेण शचीशरूपै, र्योगीयते दिव्यसदस्सु देशः ॥ ३१ ॥

अन्वय—दिव्यसदस्सु शैलाविभागै दृढसानुरागै. तपस्विपादोचितसंविभागै. स्वरूपेण शचीशरूपैः भूपै. य. देशः गीयते ॥ ३१ ॥

व्याख्या—यः देशः दिव्यसदस्सु-स्वर्गीयसभासु सुधर्मादिष्वित्यर्थः भूपैः गीयते-स्तूयते वर्ण्यते इत्यर्थः। कीदृशै र्भूपैरित्याह-

शैलाविभागैः—शैलतःपर्वतात् अविभागो येषां ते तैः स्थैर्यं दाढर्यं च गिरिकल्पैरित्यर्थः। दृढसानुरागैः—दृढः सानुषु-कोविदेषु रागः—प्रीतिर्येषां तै स्तथोक्तैः। तपस्विपादोचितसंविभागैः—तपस्विपादाः पूज्यतपस्विनः तेषा मुचितः—योग्यः संविभागो येषां तैः स्तथोक्तैः। स्वरूपेण—आकृत्या शचीशरूपैः—शचीशः—इन्द्र स्तस्येव रूपं—स्वभावः सौन्दर्यं वा येषां ते, तैः इन्द्रात्मकै र्वा, भूपैरिति सम्बन्धस्तूक्त एव ॥ सानु स्त्री वने प्रस्थे वात्या—मार्गा—ऽग्र-कोविदे इति मेदिनी ॥ ३१ ॥

गम्यः सुहृद्भिर्न तथाऽसुहृद्भिः, कलाधराणां न कलाऽधराणाम् ।
परार्थहृद्भिर्न परार्थहृद्भिः, स चापरागै र्नतु चापराऽगैः ॥ ३२ ॥

अन्वय.—तथा स. (देश.) सुहृद्भि. गम्यः असुहृद्भि र्न. कलाधराणा (गम्य.) कलाऽधराणा न, परार्थहृद्भि. (गम्य) परार्थहृद्भि र्न, चापरागैः (गम्यः) अपरागैर्न ॥ ३२ ॥

व्याख्या—'तथा' इति पूर्वसन्दर्भसम्बन्धार्थम् । देश इति विशेष्यं पूर्वतोऽन्वेति, स सुहृद्भिः—मित्रैः गम्यः—प्राप्यः, (मित्रं सखा सुहृत् इति. प्राप्यं गम्यं समासाद्य मितिचाऽमरः।) न तु असुहृद्भिः शत्रुभि', असूनां—प्राणानां हृद्भिः—अपहारकै—र्वा हिंस्रैर्वा कलाधराणां कलाः चतुषष्टिप्रकारा गीतवाद्यादिरूपाः धरन्ति—दधति ते कलाधरा स्तेषां गम्यः। न तु कलासु—उक्तरूपासु विषये अधराः—नीचाः कलारहिता इत्यर्थ स्तेषां यद्वा दत्तधनस्याधिकलभ्यांशं वा धरन्तीति ते तथा तेषा तथोक्तानां गम्यः। परार्थहृद्भिः—परार्थम्—अन्यार्थं परोपकारपरायणमित्यर्थः हृत्—हृदय—मनो येषां ते परार्थहृद स्तै स्तथोक्तैः गम्यः, न तु परार्थहृद्भिः—परेषाम्—

अन्येषाम् अर्थ-धनं वस्तु वा ,रन्ति-मुष्णन्ति ते स्तथोक्तै श्चौरादिभिः गम्यः । चापरागैः-चापे-धनुषि रागः-प्रीतिर्येषा ते तै स्तथोक्तैः शूरैरित्यर्थः गम्यः-समासाद्यः तद्देशस्थजनाना धनुर्विद्याप्रियत्वात्तत्र तेषां प्रवेशसम्भवः न तु तत्रत्यानां भयशालितयेति बोद्धव्य मन्यथा देशनिन्दासंभवात् । न तु अपरागैः-अपगतो रागः-प्रीतिर्येषां तेऽपरागास्त स्तथोक्तैः गम्यः विरोध नामालंकारः ॥ ३२ ॥

**कुतूहलेनोद्वहनं सृजन्ति, कुतूहलेनोद्वहनं सृजन्ति ।**
**यद्देशवास्तव्यजनाः परोपजापे, प्रसक्ता न परोपजापे ॥ ३३ ॥**

अन्वय.-यद्देशवास्तव्यजना कुतूहलेन उद्वहनं सृजन्ति कुतूहलेन उद्वहन सृजन्ति परोपजापे प्रसक्ताः परोपजापे न (प्रसक्ता.) (आसन) ॥ ३३ ॥

व्याख्या—यद्देशवास्तव्यजनाः=यद्देशचतुष्टयनिवासिनो लोकाः कुतूहलेन=कौतुकेन उद्वहनम्=उद्वाहं परिणय मित्यर्थः सृजन्ति= कुर्वन्ति. कुतूहलेन=कौतुकेन=जनितः पुत्रः कदाचित्तीर्थङ्करगोत्रबन्धनेन संयमधारणादिना वाऽस्मत्कुलंतारयेदित्यभिलापेनेत्यर्थः उद्वहनम्=उद्वहति=ऊर्ध्वंनयति पितृ मातृ वंश्या नित्युद्वहनः=पुत्रस्तं सृजन्ति=उत्पादयन्ति । परोपजापे=परः=श्रेष्ठः उपजापः=उपांशुजपः तस्मिन् प्रसक्ताः=व्यापृताः लीनमनस इत्यर्थः, किन्तु परोपजापे=परेषाम्=अन्येषां, परः=उत्कृष्टो वा उपजापः=भेदः विच्छेदः संहतयोर्द्वैधीकरणमिति यावत् परोपजापः तस्मिन् तथोक्ते न प्रसक्ता इत्यर्थः । लाटानुप्रासः विरोधाभासश्च । भेदोपजापौ इत्यमरः ॥ ३३ ॥

शैलाविभागैः—शैलतःपर्वतात् अविभागो येषां ते तैः स्थैर्ये दार्ढ्ये च गिरिकल्पैरित्यर्थः। दृढसानुरागैः—दृढः सानुषु—कोविदेषु रागः—प्रीतिर्येषां तै स्तथोक्तैः। तपस्विपादोचितसंविभागैः—तपस्विपादाः पूज्यतपस्विनः तेषा मुचितः—योग्यः संविभागो येषां तैः स्तथोक्तैः। स्वरूपेण—आकृत्या शचीशरूपैः—शचीशः—इन्द्र स्तस्यैव रूपं—स्वभावः सौन्दर्यं वा येषां ते, तैः इन्द्रात्मकै र्वा, भूपैरिति सम्बन्धस्तूक्त एव ॥ सानु स्त्री वने प्रस्थे वात्या—मार्गा—ऽग्र—कोविदे इति मेदिनी ॥ ३१ ॥

**गम्यः सुहृद्भिर्न तथाऽसुहृद्भिः, कलाधराणां न कलाऽधराणाम् ।**
**परार्थहृद्भिर्न परार्थहृद्भिः, स चापरागै र्नतु चापराऽगैः ॥ ३२ ॥**

अन्वय.—तथा स. ( देश. ) सुहृद्भि. गम्यः असुहृद्भि र्न. कलाधराणा ( गम्य. ) कलाऽधराणां न, परार्थहृद्भि. ( गम्य. ) परार्थहृद्भि र्न, चापरागैः ( गम्य. ) अपरागैर्न ॥ ३२ ॥

व्याख्या—' तथा ' इति पूर्वसन्दर्भसम्बन्धार्थम् । देश इति विशेष्यं पूर्वतोऽन्वेति, स सुहृद्भिः—मित्रैः गम्यः—प्राप्यः, (मित्रं सखा सुहृद् इति. प्राप्यं गम्यं समासाद्य मितिचाऽमरः । ) न तु असुहृद्भिः शत्रुभि', असूनां—प्राणानां हृद्भिः—अपहारकै—र्वा हिंस्रैर्वा कलाधराणां कलाः चतुषष्टिप्रकारा गीतवाद्यादिरूपाः धरन्ति—दधति ते कलाधरा स्तेषां गम्यः । न तु कलासु—उक्तरूपासु विषये अधराः—नीचाः कलारहिता इत्यर्थ स्तेषां यद्वा दत्तधनस्याधिकलभ्यांशं वा धरन्तीति ते तथा तेषा तथोक्तानां गम्यः । परार्थहृद्भिः—परार्थम्—अन्यार्थं परोपकारपरायणमित्यर्थः हृत्—हृदय—मनो येषां ते परार्थहृद स्तै स्तथोक्तैः गम्यः, न तु परार्थहृद्भिः—परेषाम्—

शैलाविभागैः–शैलतःपर्वतात् अविभागो येषां ते तैः स्थैर्यं दार्ढ्यं च गिरिकल्पैरित्यर्थः। दृढसानुरागैः–दृढः सानुषु–कोविदेषु रागः–प्रीतिर्येषां ते स्तथोक्तैः । तपस्विपादोचितसंविभागैः–तपस्विपादाः पूज्यतपस्विनः तेषा मुचितः–योग्यः संविभागो येषां तैः स्तथोक्तैः । स्वरूपेण–आकृत्या शचीशरूपैः–शचीशः–इन्द्र स्तस्येव रूपं–स्वभावः सौन्दर्यं वा येषां ते, तैः इन्द्रात्मकै र्वा, भूपैरिति सम्बन्धस्तूक्त एव ॥ सानु रस्त्री वने प्रस्थे वात्या–मार्गा–ऽग्र–कोविदे इति मेदिनी ॥ ३१ ॥

गम्यः सुहृद्भिर्न तथाऽसुहृद्भिः, कलाधराणां न कलाऽधराणाम् ।
परार्थहृद्भिर्न परार्थहृद्भिः, स चापरागै र्नतु चापराऽगैः ॥ ३२ ॥

अन्वयः—तथा स (देशः) सुहृद्भि. गम्यः असुहृद्भि र्न. कलाधराणा (गम्य.) कलाऽधराणां न, परार्थहृद्भि. (गम्य.) परार्थहृद्भि र्न, चापरागैः (गम्यः) अपरागैर्न ॥ ३२ ॥

व्याख्या—' तथा ' इति पूर्वसन्दर्भसम्बन्धार्थम् । देश इति विशेष्यं पूर्वतोऽन्वेति, स सुहृद्भिः–मित्रैः गम्यः–प्राप्यः, (मित्रं [illegible] सुहृत् इति. प्राप्यं गम्यं समासाद्य मितिचाऽमरः । ) न तु असुहृद्भिः शत्रुभि', असूनां–प्राणानां हृद्भिः–अपहारकै–र्वा हिंस्रैर्वा [illegible]रूपाः धरन्ति–दधति ते कलाधरा स्तेषां गम्यः । न तु कलासु–उक्तरूपासु विषये [illegible]ध्यांश वा धरन्तीति ते तथा तेषा तथोक्तानां गम्यः । परार्थ- [illegible] स्तथोक्तैः गम्यः, न तु परार्थहृद्भिः–परेषाम्–

अन्येषाम् अर्थं-धनं वस्तु वा हरन्ति-मुष्णन्ति ते स्तथोक्ते श्चौरादिभिः गम्यः । चापरागैः-चापे-धनुषि रागः-प्रीतिर्येषां ते ते स्तथोक्तैः शूरैरित्यर्थः गम्यः-समासाद्यः तद्देशस्थजनाना धनुर्विद्याप्रियत्वात्तत्र तेषां प्रवेशसम्भवः न तु तत्रत्यानां भयशालितयेति बोद्धव्य मन्यथा देशनिन्दासंभवात् । न तु अपरागैः-अपगतो रागः-प्रीतिर्येषा तेऽपरागास्त स्तथोक्तैः गम्यः विरोध नामालकारः ॥ ३२ ॥

कुतूहलेनोद्वहनं सृजन्ति, कुतूहलेनोद्वहनं सृजन्ति ।
यद्देशवास्तव्यजनाः परोपजापे, प्रसक्ता न परोपजापे ॥ ३३ ॥

अन्वयः-यद्देशवास्तव्यजना कुतूहलेन उद्वहनं सृजन्ति कुतूहलेन उद्वहनं सृजन्ति परोपजापे प्रसक्ताः परोपजापे न (प्रसक्ताः) (आसन्) ॥ ३३ ॥

व्याख्या—यद्देशवास्तव्यजनाः=यद्देशचतुष्टयनिवासिनो लोकाः कुतूहलेन=कौतुकेन उद्वहनम्=उद्वाहं परिणय मित्यर्थः सृजन्ति= कुर्वन्ति, कुतूहलेन=कौतुकेन=जनितः पुत्रः कदाचित्तीर्थङ्करगोत्रबन्धनेन संयमधारणादिना वाऽसत्कुलंतारयेदित्यभिलापेनेत्यर्थः उद्वहनम्=उद्वहति=ऊर्ध्वंनयति पितृ मातृ वंश्या नित्युद्वहनः=पुत्रस्तं सृजन्ति=उत्पादयन्ति । परोपजापे=परः=श्रेष्ठः उपजापः=उपांशुजपः तस्मिन् प्रसक्ताः=व्यापृताः लीनमनस इत्यर्थः, किन्तु परोपजापे=परेषाम्=अन्येषां, परः=उत्कृष्टो वा उपजापः=भेदः विच्छेदः संहतयोर्द्वैधीकरणमिति यावत् परोपजापः तस्मिन् तथोक्ते न प्रसक्ता इत्यर्थः । लाटानुप्रासः विरोधाभासश्च । भेदोपजापौ इत्यमरः ॥ ३३ ॥

सदा नदेशः किमु दान देशः, समाश्रयत्सर्वरसाऽनुवेशः ।
तटी पटीयः शुकविप्रवेशः, पदेपदे प्राप्तवसूपदेशः ॥ ३४ ॥

अन्वय—(असौदेश.) नदेश' किमु ? दानदेश' समाश्रयत्सर्वरसाऽनुवेशः तटीपटीय. शुकविप्रवेशः पदे पदे प्राप्तवसूपदेश ॥ ३४ ॥

व्याख्या—असौ देशः=समुद्रः किमु वर्त्तते इति शेषः इत्युत्प्रेक्षा. उभयोः समान शब्दवाच्यत्वरूपसाधर्म्य मुत्प्रेक्षाबीजभूतमाह दानदेशः=दानं=वितरणीयार्थं ददाति=प्रयच्छन्तीति दानदाः=दानशीला ईशाः=अधिपतयो यत्र स तथोक्तः, समुद्रपक्षे–दानदः=धनदः कुबेरः ईशोयस्य सः, समुद्रस्य रत्नाकरत्वात्कुबेरस्य धनाधिपत्वात्कुबेरे समुद्रपतित्वमुपचर्यते । यद्वा दं=पर्वतं मैनाकलक्षणम् आनयति= सर्व पर्वतपक्षच्छेदनाग्रहिलपुरन्दरभिदुरप्रहारात् त्राणकरणेन जीवयतीति दान स्ताहशो देशः=प्रदेशो यस्य स तथोक्तः । समाश्रयत्सर्वरसानुवेशः=समाश्रयन् सर्वः=सकलः रसः माधुर्यादिरूपो यां सा समाश्रयत्सर्वरसा=पृथ्वी तस्याम् अनु=अनुक्रमेण व्याप्ता वा वेशाः गृहाणि यत्र सः, यद्वा समाश्रयताम्=आश्रयमन्विच्छतां सर्वरसानां=पण्डितानाम् अनुवेशः=प्रवेशो यत्र सः अथवा समाश्रयतां= निवस्तुमिच्छतां सर्वेषां=सकलानां जनानां रसायां=पृथिव्यां वास्त्वर्हभूमावित्यर्थः अनुवेशः=समावेशो यत्र स तथोक्तः तत्रत्यप्रदेशाना मतिविस्तीर्णत्वात्सर्वेषां तद्देशनिवासार्थिनां कृते तत्रावकाशस्य पर्याप्तत्वात् । समुद्रपक्षे–समाश्रयन्तीनां सर्वरसानां=नदीनाम् अनुवेशः=प्रवेशः समावेशो वा यत्र सः यद्वा समाश्रयतां सर्वेषां रसनां=जलानां अनुमर्यादानति क्रमेण समावेशो यत्र सं तथोक्तः । तटीपटीयः शुकविप्रवेशः=तट्यां पटीयसां सुनिपुणानां सुकवीनां प्रवेशो यत्र सः पक्षे तटयां=कूले वेलाया मित्यर्थः पटीयसां शुक-

र्गीनां=शुकपक्षिणां यद्वा सुष्ठु कायन्ति=शब्दायन्ते इति सुका स्तादृशा वयः=पक्षिण स्तेषां प्रवेशो यत्र सः रलयोर्डलयो श्चैव, श-षयोर्व-वयोस्थैतिवचनेन श-सयोरेकत्वस्मरणात् । पुनश्च पदे पदे=प्रतिपदं प्रतिस्थानमित्यर्थः प्राप्तवसूपदेशः प्राप्तः=उपस्थितः लोकै र्लब्धो वा वसुः=मधुरः मनोज्ञः उपदेशः=शास्त्रीय धार्मिक-राजनैतिकाद्यनुशासनं यत्र सः यद्वा समृद्धजनशालितया व्यापारिजनवर्गया वा प्रतिस्थलं प्राप्तः वसूनां=धनानां रत्नानां वा स्वर्णानां वा उपदेशः=योग-क्षेमाद्यनुशासनं यत्र स तथोक्तः । अथवा पदे पदे=प्रतिव्यवसायं=प्रत्युद्यमं प्राप्तः वसोः=धनाधिपस्य कुबेरस्य तद्विषयक इति तात्पर्यम् उपदेशः=अध्यवसायादिसहायेनाऽनन्तकोटिधनाधिपत्यशालित्वादेराख्यानं यत्र सः अथवा प्राप्तानि खानितोऽधिगतानि वसूनि रत्नानि स्वर्णानि यत्र तादृश उपदेशः=समीपदेशः स्थान्यादिप्रदेशो यत्र स तथोक्तः ।

समुद्रपक्षे प्रतिस्थानं=प्रतिकूलप्रदेशं प्राप्तानि=प्रोच्छलनेन गतानि वसूनि=जलानि यत्र तादृश उपदेशः=समीपदेशो वेलाप्रदेशो यस्य सः यद्वा समुद्रस्य रत्नाकरतया प्रतिपदं-प्रतिचरणन्यासदेशं प्राप्तानि-लोकैरधिगतानि वसूनि-रत्नानि यत्र तादृश उपदेशो वेला यस्य स तथोक्तः । अत्र श्लेषालंकारः ॥ ३४ ॥

यत्सूपदेशो बहुधान्यकार्यं, करोति लावण्यसुसंस्कृतार्थैः ।
विशालतातस्यसरोऽनुसारात्‌क्षुद्रस्ततोऽन्यस्यनुकूपदेशः ॥ ३५ ॥

अन्वयः—यत्सूपदेश लावण्यसुसंस्कृतार्थैं बहुधान्यकार्यं करोति तस्य विशालिता सरोऽनुसारात् ततोऽन्यस्य [प्रदेश.] कूपदेशः क्षुद्रः ॥ ३५ ॥

व्याख्या—यत्सूपदेशः–यस्य देशस्य सूपदेशः–शोभन उपदेशः समीपवर्त्तिदेशः प्रदेश इत्यर्थः लावण्यसुसंस्कृतार्थैः–लावण्येन सौन्दर्येण सुसंस्कृतैः–परिष्कृतैः अर्थैःवस्तुभिः करणैः बहुधान्यकार्यं–बहूनां धान्यानां–शालि–गोधूमादिव्रीहीणां कार्यं करोति–सम्पादयति । तस्य–देशस्य विशालता–वैपुल्यं विस्तार इत्यर्थः सरोऽनुसारात्–महासरःसदृशीत्यर्थः । ततोऽन्यस्य–तद्देशसम्बन्ध-रहितदेशस्य प्रदेशः कूपदेशः–कुत्सित उपदेशः=समीपदेशः तत्स्वरूप इत्यर्थ कूपऽन्वितो देशो वा अत एव क्षुद्रः—तुच्छः वासाऽनर्ह इत्यर्थः ॥

पद्यस्यास्याऽर्थान्तरमपि श्लेषमहिम्ना ध्वनितं भवति. तथाहि–यत्सूपदेशः–यस्य पण्डितस्य शोभन उपदेशः–हिताऽनुशासनम् लावण्यसुसंस्कृतार्थैं–लावण्येन प्रसादादिगुणसौन्दर्येण सुसंस्कृतैः–अतीव भूषितैः सुसम्पन्नैरित्यर्थः अर्थैं–वाच्यैः अभिधेयैरित्यर्थः बहुधा–बहुप्रकारेण अन्यकार्यम्–अन्यत्कृत्यम् उपदेशातिरिक्त माह्लादादिकार्यं करोति–जनयति । तस्य–उपदेशस्य विशालिता-विस्तारः सरोऽनुसारात् सरः ज्ञानं तदनुसारेण. ततः तस्मात् अन्यस्य उपदेशादिः कूपदेशः कुत्सित उपदेशः अत एव क्षुद्रः तुच्छत्वादग्राह्य इत्यर्थः ॥ ३९ ॥

सारस्य मावश्यकमेव तस्य, प्रशस्यते शस्यधिया जलस्य ।
यत् प्राणिनां जीवनमेतदन्यः, स जातवेदा अपि भस्मशेषः ॥ ३६ ॥

अन्वय.—(तत्रदेशे) यत् प्राणीनां जीवन (वर्तते) तस्य जलस्य सारस्यमावश्यकमेव इति कृत्वा शस्यधिया (तत्) प्रशस्यते एतदन्यः स जातवेदाऽपि भस्मशेषः । अथ च तस्य जल(ड)स्य सारस्यमावश्यकमेव यत् प्राणिना जीवनम् ( असौ सरसश्च ) शस्यधिया प्रशस्यते एतदन्यः सजातवेदा अपि भस्मशेषः ॥ ३६ ॥

व्याख्या–किंच तत्र देशे यत् प्राणिनां=जन्मिना जीवनं=प्राणधारणकारणं वर्त्तते इति शेषः तस्य जलस्य सारस्य=सरसता मधुरसमग्राहित्वं वा स्वादुत्वं वा आवश्यकमेव=अवश्यप्रयोजनीयमेव । इति कृत्वा शस्यधिया=शालि–गोधूमादिधान्यबुद्ध्या अनेन धान्योत्पत्ति रित्यनुमत्यायेत्यर्थः प्रशस्यते=श्लाघ्यते । एतदन्यः=जलाऽतिरिक्तः सः=प्रसिद्धः जातवेदाः=जातान्=प्राणिनो विन्दते जठराऽनलत्वेन इति जातं वेदो=धनं यस्मात् इति वा, जाते जाते विद्यते इति वा जातं वेत्ति, वेदयते वा, इति वा स तथोक्तः वह्निः अपि भस्मशेषः=भस्मपर्यवसान इति कृत्वा न प्रशस्यते । तत्र हि देशे जलातिरिक्तवस्तुना नोपकरणार्हता सर्वेषां सर्वसंमृद्धिसम्पन्नत्वात् । श्लेषमहिम्नाऽस्य पद्यस्याऽर्थान्तरमपि प्रतीयते, तथाहि–तस्य जलस्य=जडस्य मूर्खस्येत्यर्थः रलयो डलयोश्चैकत्वसरणात्, सारस्यम्=सरसस्य भावः रसिकता वैदग्ध्यमितियावत् आवश्यकमेव, यच्च प्राणिनां=सहृदयजनानाम् जीवनं=प्राणरूपम् अन्यथा सहृदयत्वाऽनुपपत्तेः । असौ (सरसः) शस्यधिया=प्रशंसनीयमतिना प्राज्ञेनेत्यर्थः प्रशस्यते=सबहुमानं श्लाघ्यते । एतदन्यः=विदग्ध (सरस) भिन्नः पुरुषः सजातवेदाः=जातवेदसा=हव्यादितर्पणीयवह्निना सहितः ऋत्विगादिः अपि भस्मशेषः=भस्मतुल्यः न गण्य इत्यर्थः । सरसजनाऽपेक्षया वैदिकानामनुत्तमत्वमिति साहित्यवासनावासिताऽन्तःकरणानां सहृदयताचणानां सुप्रसिद्धम् ॥ ३६ ॥

नित्यं समुद्रातिशयाशयेन, पिताम्बराः स्वीययशःप्रकाशैः ।

निवासिनोऽस्मिन् कमलानुषङ्गैः, स्वयंभुवः श्रीपुरुषोत्तमास्ते ॥ ३७ ॥

अन्वय—अस्मिन् निवासिन. ते श्रीपुरुषोत्तमा. समुद्रातिशयाशयेन नित्यम् [ उपलक्षिता. ] स्वीययशः प्रकाशै. पीताम्बरा. कमलाऽनुषङ्गैः ( उपलक्षिता ) स्वयंम्भुवः (सन्ति) ॥ ३७ ॥

व्याख्या—अस्मिन् देशे निवासिनः=वास्तव्याः ते=प्रसिद्धाः जनाः श्रीपुरुषोत्तमाः=पुरुषेषु उत्तमाः=श्रेष्ठाः । समुद्रातिशयाशयेन=समुद्रात्=रत्नाकरात् अतिशयः-अतिमात्रः तदतिक्रमणशीलो वा आशयः—विभवःरत्नादिसम्पत्, चित्तं वा गम्भीरहृदयत्वात्, अभिप्रायो वा गम्भीराशयत्वात् तेन तथोक्तेन उपलक्षिताः उपलक्षणे तृतीया, स्वीययशः प्रकाशैः=स्वीयानाम्=आत्मीयानां यशसां=कीर्तीनां प्रकाशैः=विस्तारैः पीताम्बराः=पीतं=व्याप्तम् अम्बरम्=आकाशो यैस्ते तथोक्ताः यशोभिः पिहिताऽऽकाशा इत्यर्थः । कमलानुषङ्गैः=कमलायाः=सम्पल्लक्ष्म्या वरस्त्रिया वा कमलानां=शालिधान्यानां लेखनीनां वा अनुषङ्गैः=सम्बन्धैः उपलक्षिताः स्वयंभुवः=स्वयम्=आत्मना भवन्ति=अन्तर्भावितण्यर्थतया भावयन्ति=उत्पादयन्ति स्वोपयोज्यवस्तुजातानि कलाकौशलेन इति ते तथोक्ताः सन्तीति शेषः । अत्र पद्ये 'पीताम्बराः' स्वयम्भुवः, श्रीपुरुषोत्तमाः " इत्येतैर्योगार्थेन प्रस्तुतदेशनिवासिजनविशेषणीभूतैरपि रूढ्या ब्रह्म–विष्णु–महेशानवाचकैस्त्रिभिः शब्दैः 'एतद्देशवास्तव्यालोकाः' 'ब्रह्म विष्णुमहेशरूपा एवेति श्लेषमहिम्ना ध्वन्यते, तथाहि 'पीताम्बराः, श्रीपुरुषोत्तमाः' इत्येतत्पदद्वयेन स्मर्यमाणो विष्णुः " नित्यं=निरन्तरं समुद्रातिशयाशयेन=समुद्रेऽतिशयः=सार्वदिकतयाऽतिमात्रः आशयः=शयनं तेन तथोक्तेन उपलक्षित इत्यर्थः । तथा कमलाऽनुषङ्गैः=कमलायाः=लक्ष्म्याः यद्वा कमलस्य=हस्तस्थपद्मस्य शयनाश्रयभूतजलस्य वा अनुषङ्गैरुपलक्षितः ॥ 'स्वयम्भुवः' इतिपदेन स्मर्यमाणो ब्रह्मा शिवश्च 'कमलाऽनुषङ्गैः=(ब्रह्मपक्षे)कमलस्य=

आसनीभूतपद्मस्य' ब्रह्मण कमलामनत्वात्, शिवपक्षे कमलस्य=हस्तलालनीयमृगविशेषस्य अनुपङ्गैः-सम्बन्धैरुपलक्षितः ॥ रूपकाऽलङ्कारः । कमलं सलिले ताम्रे क्लोम्नि-भैषज्य पद्मयोः । कमलो मृगभेदे तु, कमला श्रीवरस्त्रियोरिति मेदिनी ॥ ३७ ॥

**ये कामरूपा अपि नो विरूपाः, कृताऽपकारेऽपि न तापकाराः ।**
**सारस्वता नैव विकर्णिकास्ते, कास्तेजसां नो कलयन्ति राजीः ॥ ३८ ॥**

अन्वयः—ये कामरूपा अपि विरूपा नो कृतापकारेऽपि न तापकाराः । सारस्वता अपि विकर्णिका नैव ते कास्तेजसां राजी नो कलयन्ति. ॥ ३८ ॥

व्याख्या—ये जनाः कामरूपाः=कन्दर्पस्वरूपाः कामस्य अनङ्गत्वात् नीरूपा अपि विरूपाः=विगतं रूपं येषां ते तथोक्ताः इति विरोधः कामरूपाः=इच्छारूपिणः विरूपाः=विरुद्धं रूपं=स्वभावः वेशो वा येषां ते तथोक्ता न देशकालाऽनुरूपरहिता नो=न इति विरोधः कामरूपाः=इच्छारूपिणः विरूपाः=विरुद्धं रूपं=स्वभावः वेशो वा येषां ते तथोक्ता न देशकालाऽनुरूपरहिता नो=न इति परिहारः कृताऽपकारे-साऽपराधेऽपि जने विषये न ताऽपकाराः=नतानां=विनयादिनम्राणामपकारः=अनिगारवेगशालिन इत्यर्थः इति परिहारः कृताऽपकारे-साऽपराधेऽपि जने विषये न ताऽपकाराः=नतानां=विनयादिनम्राणामपकारः=अनिष्टोत्पादनं तद्धेतु द्वेषो वा येभ्यस्ते तथोक्ता इति विरोधः, तापकाराः=तापं सन्तापं कष्टं वा कुर्वन्ति=जनयन्तीति ते तथोक्ताः कष्टप्रदाः प्रत्यपचिकीर्षवइत्यर्थः न, इति परिहारः ॥ सारस्वताः=सरस्वती=वागधिष्ठात्री देवी देवता उपास्यतयाऽस्त्येषां ते तथोक्ताः पंडिता इत्यर्थः अपि विकर्णिकाः=विशिष्टा विविधा वा कर्णिका=लेखनी येषां ते तथोक्ताः नैवेति विरोधः विदुषां लेखनसाधनकलमादेर्लिप्या ना गहित्यस्य निरुद्धत्वात् । विगता कर्णिका=कर्णभूषणं येषां ते तथोक्ता नैव किन्तु सर्वे सकर्णिका इत्यर्थ इति परिहारः । तथा ते

श्रीपार्श्वनाथपक्षे–'शिवपूः' इति विशेष्यं सा च वाराणसी काशीपुरीत्यर्थः अत्रपक्षे वसुश्रिया–धनशोभया ज्ञः वीक्ष्यते इत्यर्थः ॥

श्रीमहावीरपक्षे 'श्रीमण्डनब्राह्मणकुण्डसंज्ञया-श्रियाः-लक्ष्म्या मण्डनं=भूषणभूतं यद् ब्राह्मणकुण्डं=तदाख्यं स्थानं तद्रूपसंज्ञया=नाम्ना सुप्रभाता–सुप्रसिद्धा ॥

श्रीकृष्णपक्षे—'मधुरा'–तदपरनाम्नी मथुरापुरीत्यर्थः रसाश्रयैः उपलक्षिता इति सम्बन्धः ॥

श्रीनेमिनाथपक्षे 'शौर्यपुरम्' इति विशेष्यं शेषविशेषण सम्बन्धः पूर्ववद्बोद्धव्यः । अर्थश्लेषः ।

रसो गन्धरसे स्वादे तिक्तादौ विष रागयोः । शृङ्गारादौ द्रवे वीर्ये देहधात्व-म्बु-पारदे । रसा तु सल्लकी-पाठा-जिह्वा-धरणि–कङ्गुषु इति विश्वः ॥ ४० ॥

**यद्विस्त्रसाभीरु रनङ्गराज, स्तन्मन्त्रविद्वीरुरतः प्रपन्नः ।**
**स्थानं परायोध्य सहाश्वसेनं, सहास्तिनं सन्मधुरं स शौर्यम् ॥ ४१ ॥**

अन्वयः—यद् विस्रसाभीरु· अनङ्गराज· तन्मन्त्रविद्वीरुः (अस्ति) अत· तत् स्थान प्रपन्न पराऽयोध्य सहाऽश्वसेनं सहास्तिन सन्मधुरं सशौर्यम् ॥ ४१ ॥

व्याख्या—यद्-यस्माद्धेतोः विस्रसाद्भीरुः-जरात्रस्तुः अनङ्गराजः-कामनरपतिः तन्मन्त्रविद्भीरुः-तस्याः-विस्रसायाः मन्त्रवित्-गुप्तचरः मन्त्रज्ञो तस्माद् भीरुः-भयशीलः अस्ति इति शेषः अतः कारणात् तत् स्थानं=देशं प्रपन्नः-प्राप्तः कीदृशं तत्स्थानमित्याह-परायोध्यं-परैः-शत्रुभिः अयोध्यं-योधनाऽनर्हम् सहाश्वसेनम्-अश्वानां-घोटकानां सेनया-सैन्येन समूहेनेत्यर्थः सहितं, महास्तिनं-हस्तिना समूहो हास्तिनं तेन सहितं, सन्मधुरं-मधु-मद्यं लक्षणया युद्धाय युद्धखेदाऽपनुत्तये वा सुरापानं रान्ति-कुर्वन्ति धातूनामनेकार्थत्वात् ते मधुराः-युद्धपरिश्रमाऽपनोदनार्थं संस्कृतसुरापानशीला वीराः 'वीरपानं तु यत्पानं, वृत्ते भाविनि वारणे, इत्यमरः। वीराणां संग्रामार्थे मद्यपानस्याऽऽचाराऽविरोधित्वात् सन्तः-प्रशस्ता मधुरा यत्र तत् तथोक्तम्। यद्वा सतां मधुरं-प्रियम्। स शौर्यम्-शौर्येण-पराक्रमेण सहितम् ॥ अनेन तीर्थंकरजन्माधिकरणीभूतनगराणामन्वर्थनामधेयत्वं, तत्रत्यानां च जनानां सान्द्रदर्प-कन्दर्पसौन्दर्यसोदर्यहृद्याऽनवद्यरूपशालित्वं सूचितं भवतीति सहृदयैर्विभावनीयम् ॥ ४१ ॥

सदारमण्याश्रितदुर्गशैलं, सक्षत्रियत्वाद्बहुलक्षणाढ्यम्।
सुराजराज्यादरविप्रयुक्तं, रम्यैर्गृहाणामुदयैर्विराजत् ॥ ४२ ॥

अन्वय—सदा रमण्याश्रितदुर्गशैलं सक्षत्रियत्वाद् बहुलक्षणाढ्यं। सुराजराज्यादरविप्रयुक्तं रम्यैर्गृहाणामुदयैर्विराजत् ॥ ४२ ॥

व्याख्या—पुनश्च तत्स्थानं कीदृशमित्याह—सदेति सदा-सर्वस्मिन् काले रमण्याश्रितदुर्गशैलं-दुःखेन गच्छति गम्यते यः सोऽतिदुर्गः-पर्वत-प्राकार-परिखादिदुर्गमकोट्टः स शैल इवेति दुर्गशैलः-रमणीभिः-स्त्रीभिः आश्रितो दुर्गशैलो यत्र तत्तथोक्तम्।

सक्षत्रियत्वात्–राजन्यसहितत्वात् सुशासकरक्षितत्वादितिभावः । बहुलक्षणाढयं–बहुलैः=बहुसंख्यैः प्रभूतैः क्षणैः–उत्सवः आढ्यम्–विशिष्टम्। यद्वा बहुभिः–अनेकैः लक्षणैः–पूर्वोत्तरप्लवत्वादिशुभचिह्नैः आढयं=युक्तम् । अथवा बहुलक्षणाः–प्रचुरोत्सवशालिनः आढ्याः–धनिनो यत्रतत्तथोक्तम् बहुभिःर्लक्षणैः–सारसपक्षिभिराढयं–युक्तमिति वा । तथा सुराजराज्यादरविप्रयुक्तम्–सुरा–मदिरा जरा–वार्द्धक्यं, ज्या मौर्वी चापरज्जुरित्यर्थः दरः–त्रासस्तैर्विप्रयुक्तं–विहीनम् । यद्वा सुरेभ्यः–देवेभ्यः अजाः–बल्यर्थमुपकल्पिता-श्छागा स्तेषां राजौ–श्रेण्यामादरोयेषां ते तादृशा ये विप्राः–वामोपचारितया काल्यादि देव्याराधका द्विजविशेषास्तैर्युक्तं=विशिष्टम् । अथवा शोभनो राजा सुराजा तस्य राज्ये आदरः–सम्मानः अदरः–त्रासाभावो वा येषां तादृशैर्विप्रैर्युक्तम् । सुराज्ञो राज्ये–राज-कर्मणि य आदरस्तेन विप्रयुक्तं–विशेषेण युक्तम् इति वा । गृहाणां–प्रासादादीनां रम्यैः–मनोहरै उदयैः–प्रथम दर्शनयोग्यभवनभागैः सिंहद्वारैरित्यर्थः समुन्नतिभिर्वा विराजत्–शोभमानम् ॥ ४२ ॥

इहाऽभवद्वैभवसंभवेन, पुरी पुरीणां गणने धुरीणा ।
निरीक्षणीया ह्यनिमेषनेत्रै–श्चित्रैर्विचित्रैरिव मेरुचूला ॥ ४३ ॥

अन्वय.—इह वैभवसभवेन पुरीणा गणने धुरीणा पुरी विचित्रै चित्रै. । मेरुचूला इव अनिमेषनेत्रैः निरीक्षणीया अभवत् ॥ ४३ ॥

व्याख्या—इह–अस्मिन् स्थाने वैभवसंभवेन–वैभवानां–विभूतीनां सम्भवेन–उत्पत्त्या वैभवकारणेन वा पुरीणां–गण्यनगरीणां

गणने=संख्याने एक-द्वि त्र्यादिसंख्यया गणनायामित्यर्थः धुरीणा=मुख्या अग्रगण्येत्यर्थः पुरी=नगरी विचित्रैः=विलक्षणै दिव्यरित्यर्थः आश्चर्यजनकैर्वा चित्रैः आलेख्यैः हेतुभिः मेरुचूला=मेरुपर्वतशिखरमिव अनिमेषनेत्रैः=स्पन्दनरहितलोचनैः करणैः यद्वा निःस्पन्दने-त्रशालिभिः जनै रितिशेषः (मेरुपक्षे) अनिमेषनेत्रैः=देवैः निरीक्षणीया=मस्पृहमवलोकनयोग्याऽभवत् ॥ ४३ ॥

अर्हद्विहारा विविधोपहाराद्युसद्विहाराद्दुरिताऽपहाराः ।
दिवो विमाना वसुधांवतेरु, स्तत्पूर्वदेवैरिव संगमाय ॥ ४४ ॥

(अन्वयः) (इह) द्युसद्विहाराद्-विविधोपहाराः दुरितोपहारा अर्हद्विहारा (शोभन्ते) तत्पूर्वदेवैः सङ्गमाय विमाना दिवः वसुधां वतेरुः इव ॥ ४४ ॥

(व्याख्या) इह द्युसद्विहारात्=दिवि=स्वर्गे सीदन्तीतिद्युसदः=देवा स्तेषां विहारः=विहरणं श्रीजिनेन्द्रसन्दर्शनार्थं भूयोगमना-गमनं तस्मात् विविधोपहाराः=विविधाः=नानाप्रकाराः उपहाराः=पूजोपकरणानि येषु ते तथोक्ताः, दुरितापहाराः=दुष्ट मितं=गमनं नरकादिस्थानप्राप्तिरनेनेतिदुरितं=पापं तस्याऽपहारः=अपचयो विनाश इत्यर्थो येभ्यस्ते तथोक्ताः पापनिवर्तका इत्यर्थः अर्हद्विहाराः=जिनायतनानि जिनमन्दिराणीत्यर्थः शोभन्ते इति शेषः । अत्रोत्प्रेक्षते—तत्पूर्वदेवैः=तेषां बुद्धिस्थपरामर्शकत्वात्तच्छब्दस्य विमानानां पूर्वं=प्राक्तना देवाइदानीम्मानवास्तैः सह संगमाय=मेलनाय विमानाः=व्योमयानानि देवप्रासादा वा दिवः=स्वर्गलोकात् वसुधां=पृथिवीम् अवतेरुः=अवतीर्णवन्तः इव । एतेन तत्रत्यजनानां दिव्यत्वं तत्रत्यजिनालयानामभ्रंकषशिखरत्व-सुरमणीयत्वादीनि च सूच्य-न्ते ॥ अत्रातिशयोक्तिरुत्प्रेक्षा चालंकृती ॥ ४४ ॥

चैत्येषु नित्याऽभयदातुरर्चा, प्रसङ्गतोऽनङ्गतयाऽभिधानात् ।
श्मशानवेश्मानमवेत्यरुद्रं, स्मरोऽभियात्पुरमध्युवास ॥ ४५ ॥

(अन्वय) स्मर चैत्येषु नित्याभयदातु अर्चाप्रसङ्गत· अनङ्गतयाऽभिधानात् रुद्र श्मशानवेश्मान मवेत्य चाभियातत्पुरमध्युवास ॥ ४५ ॥

(व्याख्या) स्मरः=कन्दर्पः चैत्ये=जिनायतनेषु नित्याभयदातुः=नित्यं=शाश्वतम् अभयं=वीशिष्टमात्मनः स्वास्थ्यं निःश्रेयसधर्मनिबन्धनभूमिकाभूत गुणप्रकर्षादचिन्त्यशक्तियुक्तत्वात् सर्वथा परार्थकारित्वात् ददातीति नित्याभयदाता तस्य तथोक्तस्य श्रीजिनेन्द्रभगवतः अर्चाप्रसङ्गतः=पूजाप्रस्तावे अनङ्गतया=शरीररहिततया कामस्य अभिधानात्=आख्यानात् पूजाद्युपक्रमे'ऽनङ्गजिदि'-त्यादिजिनेन्द्रनामस्मरणप्रसङ्गेन कामस्याऽङ्गरहितत्वेनाऽनुकम्पनीयतयाऽभयप्रदत्वेनाम्नातस्य श्रीजिनेशस्याभयदानपात्रतयानुग्रहणात्, रुद्रं=स्वप्राक्तनशत्रुभूतशिवमपि श्मशानवेश्मानं=श्मशानं=शवदाहस्थानमेव वेश्म=वासस्थानं यस्य स तं तथोक्तं श्मशानवासिनम् अवेत्य=विदित्वाचाऽभिया=भयरहिततया तत्पुर=व्यावर्ण्यमानस्वरूप नगरम् अध्युवास=अध्युषितवान् ॥ ४५ ॥

सूनोरनूनोदयमत्र धैर्याद्, रमाऽवधार्येव दधौ स्थिरत्वम् ।
बालश्चलत्वं विजहौ महौजा- स्तत्किमया धार्यमितिह्रियेव ॥ ४६ ॥

(अन्वय) रमा सूनो अत्र अनूनोदयम् अवधार्येव(स्थिरत्वदधौ)महौजा. बालः चलत्व विजहौ तत् मया किं धार्यमितिह्रियेव स्थिरत्व दधौ ॥ ४६ ॥

(व्याख्या) रमा=लक्ष्मीः सूनोः=स्वपुत्रस्य कामस्य अत्र नगरे अनूनोदयं=बहुतराऽभिवृद्धिम् अवधार्य=निश्चित्य इव श्रैयात्= अव्याकुलत्वात् स्थिरत्वं=निश्चलत्वं दधौ=धृतवती. अत्रोत्प्रेक्षान्तरं दर्शयति बालः=मत्पुत्रः कामः महौजाः=महाबलशाली प्रकृतिचप-लश्च सन्नपि यदा चलत्वं=चाञ्चल्यं विजहौ=परितत्याज इतिहेतोः तत्=चलत्वं मया=लक्ष्म्या किं धार्यं=धर्त्तव्यं तथा तु बालादपि न्यूना भवेयमिति ह्रिया=लज्जया इव स्थिरत्वं दधौ इति सम्बन्धः ॥ उत्प्रेक्षालङ्कारः ॥ ४६ ॥

अस्या व्यवस्येयमहं वयस्यां, द्यामेव पद्यां नयसंशयाब्धौ ।
पतिः सुधावज्जयवाहिनीशः, श्रेयान् निवासः सुमनोविलासः ॥ ४७ ॥

(अन्वय) नयसंशयाब्धौ (निमग्न) अहम् अस्या वयस्या द्याम् एव पद्या व्यवस्येयम् । पतिः सुधावज्जयवाहिनीशः निवासः श्रेयान् सुमनो विलास ॥४७॥

(व्याख्या) स्वर्गसादृश्यं दर्शयति अस्या इति । नयसंशयाब्धौ=नीति विषयक शङ्कासागरे निमग्न इति शेषः अहं=मेघविज-याऽभिधः कविः अस्याः=नगर्याः वयस्यां=सखीं सदृशीमित्यर्थः, द्या=स्वर्गपुरीम् एव पद्या=मार्गभूता व्यवस्येयं=निर्धारयेयम् । अस्या नगर्यां कीदृशी नीतिरितिविचारपारावारनिमग्नोऽहं स्वर्गं चेतसि निधाय स्वर्गसदृशी नीतिरितिनिश्चित्य शङ्काकलङ्कपङ्कसङ्करं दूरयामीतिभावः । साम्यमुद्भावयति पतिः=अधिपः प्रस्तुतनगर-स्वर्लोकयोः, सुधावज्जयवाहिनीशः=प्रथमपक्षे—सुधावतां मसत्वरं गच्छतां या जयवाहिनी=जयं वहतीत्येवंशीला सेना तस्या ईशः=शासकः, द्वितीयपक्षे—सुधावतां=सुधा=अमृतं तद्वतां=देवानां जय-वाहिनीशः इति पूर्ववत् पुनरनयोः नगर्योः निवासः=जातावेकवचनम् वसतिसंहतिः श्रेयान्=अतिशयेन प्रशस्यः, कथमित्याह यतः

सुमनोविलासः=सुमनसां-प्रशस्तचित्तानां जनानां विलासाः-आनन्दा यत्र सः यद्वा सुमनोभिः-पुष्पैः विलासोयत्रसः अथवा सुमनसां-कोविदानां विलासाः-विनोदा यत्रसः तथोक्तः। पक्षे-सुमनसां-देवानां विलासोयत्रस इत्यर्थः। सुमनाः पुष्प-मालत्यो स्त्रिदशे कोविदेऽपि चेति मोदिनी श्लेषः, उपमाध्वनिः।

**लक्षे जनोऽस्मिन् कृतहस्त एव, लक्षे पुनर्नो मनसा दधाति।**
**स्वं मन्यते दानविधौ परार्थं, परार्थ सङ्गे मनुते ह्यनर्थम् ॥ ४८ ॥**

(अन्वय:) अस्मिन् जन· लक्षे कृतहस्त एव पुन· लक्षे मनसा नो दधाति। दानविधौ स्व परार्थं मन्यते परार्थसङ्गे हि अनर्थं मनुते ॥ ४८ ॥

(व्याख्या) तत्रत्यजनानां शौर्यौ-दार्यादिगुणशालितां दर्शयति। अस्मिन्=प्रस्तुतनगरे जनः=लोकः लक्षे=लक्ष्ये तत्साधने इत्यर्थः कृतहस्तः=कृतः=अभ्यस्तो हस्तो यस्य स तथोक्तः सुशिक्षितशरविद्य इत्यर्थः एव पुनः=अन्यच्च लक्षं=दशायुतसंख्यां रूप्यकमुद्रादीनां मनसा=चेतसाऽपि नो दधाति=चिन्तयतीत्यर्थः अतिसमृद्धिशालित्वात् तेषां मनसि लक्षं न किञ्चिदितिभावः। दान विधौ=दानकर्मणि प्रवृत्तः स्वं=आत्मीयं सर्ववस्तु जातं, यद्वा स्वं=धनम् आत्मानं वा परार्थं=परोपकारफलकं मन्यते। परार्थसङ्गे=परार्थस्य=परकीयधनस्य परकीयवस्तुनो वा सङ्गे=सम्बन्धे अन्यदीयधनप्राप्तावित्यर्थः स्वं=धनम् आत्मानं वा अनर्थम्=अफलम् अनर्थकरं वा मनुते=बुध्यते। विरोधाभासोऽलङ्कारः। लक्षं लक्ष्यं शरव्यं च इत्यमरः ॥ ४८ ॥

**न वामनस्य प्रकृति द्विधापि, न संनिभं कोऽपि बिभर्तिरूपम्।**

नालीकनाम्नोऽस्त्रवरे प्रयोगो, भोगे च नालीकमनाजनोऽस्याम् ॥ ४९ ॥

(अन्वय) अस्यां कोऽपि द्विधापि आमनस्यप्रकृतिर्जनः (अस्ति), कोऽपि वामनस्य सनिभं रूपं न बिभर्त्ति । अस्त्रवरे नालीकनाम्नः प्रयोगः, भोगे च अलीकमना न(अस्ति) ॥ ४९ ॥

(व्याख्या) अस्यां=नगर्यां कोऽपिजनः द्विधापि=मनसा वाचाऽपिआमनस्यप्रकृतिः=आमनस्यं=दुःखं तन्मयी प्रकृतिः=स्वभावो यस्य स तथोक्तः नवा=नैव अस्तीति शेषः, किञ्च कोऽपि वामनस्य=खर्वस्य संनिभं=सदृशं रूपम्=आकृतिं न बिभर्त्ति=धारयति । अस्त्रवरे=श्रेष्ठऽस्त्रविशेषे नालीकनाम्नः=नालीक इत्येतच्छब्दस्य प्रयोगः लौह मयाऽन्तःसच्छिद्रशरविशेष एव नालीकशब्दस्य व्यवहार इत्यर्थः किन्तु भोगे=सुखे भोजनादौ अलीकमनाः=असत्यचित्तः निष्फलचित्तो वा जनो न अस्तीत्यध्याहृतक्रियासम्बन्धः । परिसंख्याऽलङ्कारः ॥ ४९ ॥

कलाविलासा मनसाऽवधार्याः, कला विलाशा न कदापि कार्या ।
सभाजनैः स्वैरसभाजनैर्वा, सदा नभोगैरिव दानभोगैः ॥ ५० ॥

(अन्वय) ( तत्रत्यानां ) कलाविलासा मनसाऽवधार्याः, रसभाजनैः सभाजनैः वा स्वैरं रसभाजनैः, नभोगैरिव, सभाजनैः स्वैरसभाजनैः सदानभोगैः (तत्रत्यानां)कलाविलाशा न कार्या (आसीत्) ॥ ५० ॥

(व्याख्या) तत्रत्यानां जनानां कलाविलासाः=कलाः=नृत्यगीत वादित्रादिचतुःषष्टिप्रकाराः विभूतयो वा तासु ताभिर्वा विला-

सा:=विनोदा: यद्वा कलाऽनुशीलनजनितदीप्तयः मनसा=चेतसा अवधार्या:=अवधारयितुं=निश्चेतुं शक्याः नतु वाचाऽपि तेषामवाग्गोचरकला कलापशालित्वादितिभावः । कैः सहेत्याह रसभाजनै=विभावा-ऽनुभावव्यभिचारिभावव्यङ्ग्यशमादिस्थायिभावकशान्तादिरसोद्बोधपात्रीभूतैः सभाजनैः=सभ्यैः वा=अथवा स्वैः=आत्मीयैः ज्ञातिभिरितियावत्, कैः करणैः? रसभाजनैः=मधुरादिरसान्वितभोजनपात्रैः । कैः सहेव? नभोगैः=नभश्चरैः विद्याधरादिभिः सहेव किञ्च सभाजनैः=सपात्रैः स्वैरसभाजनैः=स्वैराणां=स्वच्छन्दानां स्वेच्छाचारिणामित्यर्थः 'स्वैरः स्वच्छन्द-मन्दयोः' इत्यमरः सभा=समुदायस्तत्सम्बन्धिजनैः, सदा नभोगैः=वस्त्रादीनां दानैः=सत्पात्रे प्रतिपादनैः भोगैः=फलादीनामुपभोगैश्च सहितैः । किञ्च तद्देशीयजनानां कला विलाशा=कला=मूलविवृद्धिः दत्तधनस्याधिकलभ्यांश इत्यर्थ स्तयाऽऽविलस्य=मलिनस्य धनादेः आशा=तृष्णा न कार्या=करणीया आसीदितिशेषः । विरोधाभासोऽलङ्कारः । कला स्यान्मूलविवृद्धौ शिल्पादावंशमात्रके इति मेदिनी॥ ५० ॥

नासत्य लक्ष्मींवपुषाऽतिपुष्ण-न्नाऽसत्यलक्ष्मीं धरते स्वरूपात् ।
सत्यागमार्थं श्रयते यतेभ्यः, सत्यागमार्थं लभते फलं सः ॥ ५१ ॥

(अन्वयः) सः नासत्यलक्ष्मीं वपुषा अतिपुष्णन् असत्यलक्ष्मीं स्वरूपात् न धरते यतेभ्यः सत्यागमार्थं श्रयते (अतएव) सत्यागमार्थं फलं लभते ॥५१॥

(व्याख्या) तेजोविशेषादिकं दर्शयति–नासत्येति । सः=वर्ण नीयतया प्रक्रान्तो जनः (अत एवयच्छब्दाऽनपेक्षा 'प्रक्रान्त प्रसिद्धाऽनुभूतार्थकस्तच्छब्दो यच्छब्दोपादानं नापेक्षते इत्युक्तेः) नासत्यलक्ष्मीं=नासत्ययोः=अश्विनीकुमारयोः लक्ष्मीं=शोभां वपुषा=

शरीरेण अतिपुष्णन्=विशेषेण धारयन् सन् असत्यलक्ष्मीं=कृत्रिमशोभाम् आहार्यशोभामित्यर्थः यद्वा अन्यायोपार्जित धनं 'लक्ष्मीः सम्पत्तिशोभयोः । ऋद्ध्यौपधौ च पद्मायां' मितिमेदिनी । स्वरूपात्=स्वभावात् एव न धरते=गृह्णाति । 'स्वरूपं च स्वभावश्चे'-त्यमरः । किञ्च यतेभ्यः=संयमिभ्यः सकाशात् सत्यागमार्थं=सत्यानाम्= अवितथानां त्रिकालाबाधितस्वरूपाणामित्यर्थः अन्यभिचरितार्थप्रतिपादकानामिति यावत् आगमानां=सिद्धान्तानाम् अर्थम्=अभिधेयं यद्वा सत्याऽऽगमाऽर्थम्=सत्योपदेशरूपं वस्तु श्रयते=गृह्णाति । अतएव सत्यागं त्यागेन=दानेन सहितम् आर्थम्=अर्थ (धन) सम्बन्धि फलं=भोगरूपम् यद्वा सत्यः=वञ्चनारहितत्वान्न्याय्यः आगमः=आयो यस्यतादृशम् अर्थं=धनम् तद्रूपं फलं=लाभम् अथवा सत्यागा=त्यागेन=दाने न सहिता चासौ मा=लक्ष्मीः सम्पद्रूपा तदर्थं फलं=कार्यं, प्रयोजनं लाभं वा लभते=प्राप्नोति ॥ अर्थस्य तावत् दानभोग नाशरूपास्तिस्रो गतयो(ऽवस्थाः) भवन्ति तत्र न दान भोगावेव तत्रत्यानामास्ता मिति भावः । उक्तमन्यत्र–'दानं भोगो नाश स्तिस्रो गतयो भवन्ति वित्तस्य । यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति' इति । यमकम् श्लेषः काव्यलिङ्गम् उपमा विरोधाभासः, अतिशयोक्तिश्चाऽलङ्काराः । फलं जातीफलेशस्ये हेत्वर्थे व्युष्टि लाभयोः इतिमेदिनी । अर्थोऽभिधेय-रै-वस्तु-प्रयोजननिवृत्तिषु इत्यमरः ॥ ५१ ॥

नगौरवं ध्यायति विप्रमुक्तं, नगौरवं ध्यायति विप्रमुक्तम् ।
पुनर्नवाचारभसा नवार्थाऽपुनर्नवाचारभसानवार्थाः ॥ ५२ ॥

(अन्वय) विप्रमुक्तं गौरव न ध्यायति विप्रम् उक्तं गौरवं ध्यायति न? किन्तु ध्यायति पुनः रभसावाचानवार्थाः पुनर्न वाचा रभसा अनवार्था अपुनर्न ॥ ५२ ॥

(व्याख्या) विप्रमुक्तं त्यक्तं वस्तु प्रति गौरवं महार्घत्वं नध्यायति न चिन्तयति प्रदत्तवस्तुनो महत्वादिचिन्तां न करोतीत्यर्थः वि प्रम् विविधं प्राति पूरयतीति विप्रम् शास्त्रम् उक्तम् गुर्वादिजनोपदिष्टम् गौरवम् तदीयमहत्वम् न ध्यायतीति न किन्तु ध्यायत्येव, पुनः रभसापौर्वापर्याविचारेण हठादित्यर्थः वाचा वाक्येन नवार्थाः नवीनार्थाः न ध्याय्यन्ते न विचार्य्यन्ते वाचायाः रभसा औत्सुक्येन अनवार्थाः अभिधेयार्थाः अपुनर्न किन्तु पुनः पुनः तदीयार्था विचारिताः ॥ यमकालंकारः ॥ ५२ ॥

नये प्रसक्ता विनयेऽनुरक्ता, जयेन तद्वद्विजयेन पूर्णा।
नवा भयाप्ता बहुशोभयाऽऽप्ताः, अविक्रिया स्तेऽतिथिसत्क्रियाङ्गाः ॥ ५३ ॥

(अन्वय.) ते नये प्रसक्ताः, विनयेऽनुरक्ता, जयेन तद्वद्विजयेन पूर्णा., नवा भयाप्ता., बहुशोभयाऽऽप्ता., अविक्रिया अतिथिसत्क्रियाङ्गाः (आसन्)

(व्याख्या) ते–तत्रत्यजनाः नये–नीतौ, शुक्राचार्यादिप्रणीत नीतिशास्त्रे वा न्याय्ये वा प्रसक्ताः–आसक्तिमन्तः, विनये·नम्रतायां वन्दनीय जनप्रणामेवा शिक्षायां वा विनीतजने वा जितेन्द्रिये वा अनुरक्ताः–अनुरागिणः। जयेन–शत्रूणामभिभावनेन तद्वत्–तथा विजयेन–परिभवपूर्वकग्रहणेन च पूर्णाः–सहिताः अतिविक्रान्ता इत्यर्थः। नवा–नैव भयाप्ताः–भयैर्ग्रस्ताः यद्वा नवा भयाप्ता इत्येकम्पदम् नवेन–जिनेन्द्रादिस्तवेन अभयाः–निर्भीकाश्च ते आप्ताः–सत्याः विश्वस्ता वा रागद्वेषादिवर्जिता वा यथार्थज्ञातारोवा च ते तथोक्ताः। यद्वा नवा·

ऽमयाऽऽप्ताः-नवेन-रक्तपुनर्नवया तत्सेवनेनेत्यर्थः, अभयं-शोथादिरोगभयराहित्यम् आप्ताः प्राप्तवन्तः, आप्तं लब्धं यैरिति वा ते तथोक्ताः । बहुशोभया-सातिशयदीप्त्या आप्ताः-व्याप्ता यद्वा बहुशः-अनेकशः असकृदित्यर्थः अभयं-निर्भीकत्वम् अभयदानमित्यर्थः आप्तं-लब्धं येभ्यस्ते तथोक्ताः लोकेभ्योऽभयदायिन इत्यर्थः । बहुशः-बहुलया भया-प्रभया आप्ता इति वा । अविक्रियाः-विकार-रहिताः, यद्वा अविः=मेषस्तस्येव क्रिया-कर्म्म सद्धीभावादिकं येषां ते तथोक्ताः ।

अतिथिसत्क्रियाङ्गाः-अतिथीनां-प्राघूर्णकानां साधूनां सत्क्रियायै-सत्काराय सम्माननायेत्यर्थः अङ्गं-शरीरं येषां ते तथोक्ताः यद्वा अतिथिसत्क्रियायाम्=अतिथिपूजायाम् अङ्ग-मनो येषां ते तथोक्ताः अथवा अतिथिसत्क्रियाया अङ्गानि-उपायाः साधनानीत्यर्थः यद्वा 'तिथिसत्क्रियाङ्गाः' इतिच्छेदस्तस्य तिथीनां-तीर्थकर जन्मादि धर्म्मपर्वदिवसानां सत्क्रि-यायै=सम्माननार्थम् अङ्गं येषां ते तथोक्ताः इत्यर्थः । विनया तु वलायां स्त्री शिक्षायां प्रणतौ पुमान् इति मेदिनी । अनुप्रासः॥५३॥

अवनिपतिरिहासीद् विश्वसेनोऽश्वसेनोऽप्यथ दशरथ नाम्ना यः सनाभिः सुरेशः ।
बलिविजयिसमुद्रः प्रौढसिद्धार्थसंज्ञः, प्रसृतमरुणतेजस्तस्य भूकश्यपस्य ॥ ५४ ॥

(प्रगाम) इह विश्वसेन अवनिपति आसीत् य, अश्वसेन, दशरथनामा सुरेश सनाभि, बलिविजयिसमुद्र प्रौढसिद्धार्थसंज्ञ. तस्य भूकश्यपस्य अरुणतेज (प्रसृत) प्रसृतम् (आसीत् ॥ द्वि०पक्षे-अश्वसेन अवनिपतिरासीत् विश्वसेन दशरथनामा. शेषं पूर्ववत् ॥ तृ०प०-'दशरथनामाऽवनिपतिरासीत्, को विश्वसेन. अश्वसेन. शेष पू० ॥ च०प०-य नाभि अवनिपतिरासीत् स विश्वसेन अश्वसेन दशरथनामा सुरेश शे-पू० ॥ प०पक्षे-बलि-

विजगि समुद्र (विजय) अवनिपतिरासीत् शेष पू० ॥ प० प०–प्रौढ 'सिद्धार्थ' सञ. अवनिपतिरासीत् शे० पूर्ववत् ॥ सप्तमपक्षे–तस्य भूकश्यपस्य प्रसृतम् 'अरुणतेज.'=वसुदेव. अवनिपतिरासीत् शेष पूर्ववदन्वययोजनम् ॥ ५४ ॥

व्याख्या–नगराणि प्रदर्श्य सप्तार्थकेन पद्येन भूमिपालान् दर्शयति–अवनिपतिरिति । इह=अस्मिन् नगरे विश्वसेनः='विश्वसेन' इत्येतन्नामकः अवनिपतिः=राजा आसीत्=अभूत् । कीदृशः स इत्याह–अश्वसेनः=अश्वानां=जात्यतुरङ्गमाणां सेना यस्य स तथोक्तः । दशरथनामा=दशसु दिक्षु गतो रथः=कीर्तिरूपं वाहनं यस्य तद् दशरथं तादृशं नाम=अभिधानं यस्य स तथोक्तः कीर्त्यारूढं तदभिधानं दशदिक्षु व्याप्नोतीत्यर्थः । दशरथस्येव सुप्रसिद्धं नाम यस्य स इति वा, सुरेशः=सुरान्=देवान् सुरेषु वा ईष्टे=प्रभवतीति सुरेट्=इन्द्रस्तस्य सनाभिः=ऐश्वर्यादिना सदृशः, बलिविजयिसमुद्रः=बलिनः=पराक्रमिणो विजयते तच्छीलः बलिविजयी स चासौ समुद्रः=सह मुद्रया=प्रत्ययकारिण्या राजकीयत्वप्रमापक चिह्न विशेषेण, यद्वा अङ्गुलिधार्यमुद्राङ्कनयुक्ताऽङ्गुलीयकेन, अथवा सह मुद्राभिः=स्वर्ण–रौप्यादितङ्काभिः कोटीश्वरत्वात्. च इति स तथोक्तः, प्रौढसिद्धार्थ संज्ञः=प्रौढा=प्रवृद्धा प्रगल्भा वा निपुणा वा सिद्धार्था=सम्पादितोद्देश्या च संज्ञा=बुद्धिर्यस्य स तथोक्तः । 'अवनिपति रासीदि'–ति सम्पूर्णवाक्यम् । तस्य=निरुक्तस्य अवनिपतेः, भूकश्यपस्य=भुवि=भूतले कश्यप इव प्रजापतित्वात् इति भूकश्यपस्यपस्तस्य, अरुणतेजः=सूर्यवत्प्रतापः सर्वत्र प्रसृतं=व्याप्तम् आसीदिति शेषः ।

द्वितीयपक्षे–'अश्वसेन' इति विशेष्यम् 'विश्वसेन' इत्यस्य विश्वा=सम्पूर्णा सेना=चमूः यस्य स इत्यर्थः । शेषं पूर्ववत् ।

तृतीयपक्षे–'दशरथनामा' इति विशेष्यपदम् तस्य दशरथ इति नाम यस्य स इत्यर्थः शेषं पूर्ववत् ।

चतुर्थपक्षे-'नाभिः' इति विशेष्यम् 'यः, सः' इत्यनयोश्च 'यः नाभिः=तन्नामा अवनिपतिरासीत् स विश्वसेनः अश्वसेन इत्यादिरूप इत्येवं रीत्याऽन्वययोजना कर्त्तव्या । 'सुरेश' इत्यस्य इन्द्र सदृश इत्यर्थश्च बोद्धव्यः ॥

पञ्चमे-बलिविजयी चासौ समुद्रः=नामैक देशग्रहणेन नाम ग्रहणात् 'समुद्रविजयः' इत्येतन्नामकश्चेति स बलिविजयिसमुद्रः । शेषं पूर्ववत् ।

षष्ठपक्षे सिद्धार्थ इति संज्ञा=नाम यस्य स सिद्धार्थ संज्ञः प्रौढश्चासौ सिद्धार्थसंज्ञश्चेति स प्रौढ सिद्धार्थसंज्ञः अवनिपतिरासीदित्येवमन्वयः कार्यः । शे० पू०

सप्तमे-'अरुणतेज' इति विशेष्यपदम् तस्य च तस्य=प्रसिद्धस्य भूकपश्यस्य=भुवि स्वांशेनावतीर्णस्य कश्यपस्य=तदाख्यप्रजापतेः प्रसृतं=विस्तीर्णम् 'अरुणतेजः' सूर्यवद्दीप्ततेजोरूपः वसुदेव इत्यर्थः कश्यपतेज एव वसुदेव रूपेण परिणम्याऽवतीर्णमिति लोकप्रसिद्धिः एवंप्रकारेणार्थः कार्यः । अत्रक्रमेण शान्तिनाथ-पार्श्वनाथ-रामचन्द्रा-ऽऽदिनाथ-नेमिनाथ-वीरप्रभु-कृष्णवासुदेवानां पितरः ( विश्वसेनः, अश्वसेनः, दशरथः, नाभिः, समुद्रविजयः, सिद्धार्थः, वसुदेव इतिनामानः ) प्रदर्शिताः ॥ ५४ ॥

सनाभिभूतेः सुहृदुत्तमानां, सनाऽभिभूते-र्द्विषदुद्यमानाम् ।
सामान्यमासी-दुभयादरेण, नृपे मर्हांशासति तां चिरेण ॥ ५५ ॥

(अन्वय.) नृपे ता महीं शासति (सति) सनाभिभूते· सुहृदुत्तमानां, सनाऽभिभूते द्विपदुद्यमाना (च) सामान्यमासीत् उभयादरेण ॥ ५५ ॥

व्याख्या–सामादिराजनीतिमाह–सनाभीति । नृपे=विश्वसेन प्रभृतौ राज्ञि तां=पूर्वोक्तरूपां महीं=पृथ्वीं शासति सति=राज्यं पालयति सति, सनाभिभूतेः=सनाभिः=ज्ञातिस्तस्य भूतिः=भवनं तस्मात् तथा च ज्ञातिभवनात् बान्धववदनुकूलीभावात् सुहृदुत्तमानां=स्वविषयानन्तरितनृपभिन्नमहीपतिनाम् तथा सना=सदा अभिभूतेः=पराभवनात् द्विषदुद्यमानां=द्विषतां=शत्रूणां=स्वविषयाऽनन्तरित-नृपाणामुद्यमानां=प्रयत्नानां च चिरेण सामान्यं=साधारणं तुल्यरूपतेत्यर्थः उभयत्र सनाभिभूतित्वस्य सत्वात् आसीत् । अत एव उभयादरेण=उभयैः=शत्रुभिः भयात्कृतेन मित्रैश्च स्नेहात्कृतेन आदरेण=सम्माननेन, उभयेषामादरेण वा यद्वा उभयेषु=शत्रुषु मित्रेषु च आदरेण=शत्रुपक्षे आ=समन्तात् दरेण=भयेन तज्जननेनेतिभावः मित्रपक्षे सत्कार करणेन नृपे महींशासतीत्यनेन सम्बन्धः । तुल्य-योगीता श्लेषः विरोधाभासश्चालङ्काराः ॥ ५५ ॥

श्रीविश्वसेनाऽवनिपं तमाप्य–ज्योत्स्नेव तापं सहसाऽपजह्रे ॥
चलाचलानां च खलानलानां, सुधाऽभिषिक्ता वसुधातदाऽभूत् ॥५६॥

अन्वय·—तम् अवनिपम् आप्यश्रीविश्वसेना ज्योत्स्नेव चलाचलानां खलानलाना ताप सहसाऽपजह्रे वसुधाऽपि तदासुधाभिषिक्ताऽभूत ॥ ५६ ॥

(व्याख्या) तं=पूर्वोक्तं विश्वसेन प्रभृतिम् अवनिपं=राजानम् आप्य=लब्ध्वा श्रीविश्वसेना=श्रिया=शोभयायुक्ता विश्वा=समग्रा

सेना ज्योत्स्नेव=चन्द्रिकेव चलाचलानाम्=अत्यन्तचञ्चलस्वभावानां खलानलानां=खलाः=दुर्जनाः अनलाः=अग्नय इव खला एव अनला इति वा खलानलास्तेषां तज्जनितमित्यर्थः तापं=सन्तापं दौर्जन्यजनितोपद्रवमित्यर्थः सहसा=झटिति अपजह्रे=अपहृतवती । वसुधा=पृथ्वी अपि तदा=तस्मिन् काले राजप्रभाववशप्रशान्तदुर्जनादिजनिताऽशेषाऽशातजात समये इत्यर्थः सुधाऽभिषिक्ता=सुधा=अमृतमिव सुधा=जलं तया अमृतोपमजलेनेत्यर्थः अभिषिक्ता=जातसेका अभूत् ॥ उपमाऽतिशयोक्तिश्चालंकारौ ॥ ५६ ॥

> अभीतिनीतिः प्रसृताऽऽसमुद्र-प्राजाधिपत्याद् युगपत् प्रवृत्त्या ॥
> ततः समग्रं वसुदेवतेजो-न्यक्कृत्यरेजे रजसाऽञ्जसैव ॥ ५७ ॥

अन्वय.—ततः आसमुद्रप्राजाधिपत्यात् युगपत् प्रवृत्त्या (च) प्रसृता अभी तिनीति समग्र वसुदेव तेज अञ्जसा रजसान्यक्कृत्य रेजे ॥ ५७ ॥

व्याख्या—ततः=तदनन्तरम् आसमुद्रप्राजाधिपत्यात्=समुद्रावधिशासनकरणात् युगपत्=एकदैव प्रवृत्त्या=आज्ञादिप्रचारेण च प्रसृता=विस्तृता व्याप्तेत्यर्थः अभीतिनीतिः=कस्मा अपि भयं न देयमिति मयि दुर्विनीतानां शासितरि केनापि न भेतव्यमिति ताऽभयदानविषयिणी राजनीतिः समग्रं=सम्पूर्णं वसुदेवतेजः=वसूनां=धनानां रत्नानां वा देवाः=अधिपाः ' वसुना दीव्यन्तीति व्युत्पत्त्या ' धनिन इत्यर्थः तेषां तेजः=दुर्विध विविधबाधासंबाधजनकः प्रतापः तत् कर्म्मभूतं रजसा=राजसभावेन धूलीरूपेण वान्यक्कृत्य तिरस्कृत्य अधःकृत्येति वा अञ्जसा=झटिति रेजे=दिदीपे ॥ धनेरत्नेवसुस्मृतम इत्यमर इति कोषः ॥ ५७ ॥

श्रीकाशिराजस्य महाश्वसेना–ख्याने श्रुतेऽप्यागमनिश्चयेन ॥
क्षमापि दिङ्मोहविनाशनेन, पराऽभिघाताय विनाशनेन ॥ ५८ ॥

अन्वय —श्रीकाशिराजस्य महाश्वसेनाख्याने श्रुतेऽपि पराभिघाताय आगमनिश्चयेन अशनेऽपि क्षमा न आपि (शत्रुवर्गैः) दिङ्मोहविनाशनेन विना ॥५९॥

व्याख्या–श्रीकाशिराजस्य=श्रिया=राजलक्ष्म्या काशते=दीप्यते तच्छीलः श्रीकाशी स चासौ राजा च इति श्रीकाशिराजस्तस्य तथोक्तस्य महाश्वसेनाख्याने=महत्या स्तुरङ्गमसेनाया आख्याने=प्रसिद्धेतिवृत्तवर्णने श्रुतेऽपि=श्रवणगोचरी कृतेऽपि पराभिघाताय= शत्रूणां दलनाय आगमनिश्चयेन=इयमागच्छति सेना इत्येवं स्वप्रतीपक्षितिपसेनोपस्थितिनिर्णयेन अशनेऽपि=भोजनेऽपि क्षमा=शान्तिः चित्तैकाग्र्यमित्यर्थः न आपि=प्राप्ता शत्रुवर्गैरिति शेषः। किं सर्वथैव नेत्याह–दिङ्मोहविनाशनेन विना=दिशाभ्रान्ति विनाशो यावन्न तावदित्यर्थः। क्षमा भूमौ तितिक्षायां स्त्रियां युक्ते नपुंसकम् इति मेदिनी ॥ ५८ ॥

अजः सपक्षे सवितैव तावत्, तस्याऽधिपत्ये सुषमा जगत्याम्।
लोकस्य कस्यापि न दुःखलेशः, क्लेशः कुतोऽन्योन्ययुधायुधानाम् ॥५९॥

(अन्वय) यस्य सपक्षे सविता अज एव (नान्य) तस्य आधिपत्ये जगत्या सुषमा (सुषमा स्थिति., वृत्तिर्वा) (आसीत्)। कस्यापि लोकस्य दु खलेश. न (अभूत्) अन्योन्ययुधायुधाना क्लेश कुत (सम्भवति)।

(अन्वय) तमीश्वराभं तम् ईश्वरं आप्य धरा समर्थ सिद्धार्थ कृतार्थ भावात् कराग्रहात् स्वयम्भूदयनात् तुष्टमना. प्रियेव (प्रियेव) आसीत् ॥

(व्याख्या)–यथार्थपृथ्वीपतित्वं प्रकटयति–तमीति। तमीश्वराभं=तमी=रात्रिस्तस्या ईश्वरः=पतिः तमीश्वरः=चन्द्रस्तस्येव आभा=छविर्यस्य स तं तथोक्तं चन्द्रसदृशमित्यर्थः तं=पूर्वोक्तम् विश्वसेन प्रभृतिम् ईश्वरं=पतिं राजानमित्यर्थः आप्य=लब्ध्वा धरा=पृथ्वी समर्थ सिद्धार्थे कृतार्थभावात्=द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति न्यायादिहत्य भाव शब्दस्य प्रत्येकमन्वयः तथा च समर्थभावात्=कार्यसम्पादने समर्थत्वात्=शक्तिशालिजनाढ्यत्वादितिभावः यद्वा सर्वविधवस्तुप्रकटने क्षमत्वात् सिद्धार्थभावात्=लोकानां सर्वार्थसाधकत्वात्, कृतार्थभावात्=धान्यादिनिष्पादनेन चरितार्थत्वात्=सफलत्वात् इत्यर्थो बोद्धव्यः। कराग्रहात्=करस्य=राजग्राह्यभागस्य अग्रहात्=अनादानात् ग्रहणाभावादित्यर्थः. तथा स्वयम्भूदयनात्=स्वयम्भूः=विष्णुः तद्वद् दयनात्=रक्षणात् यद्वा स्वयम्=आत्मना नतु कर्मकरादिद्वारा भुवः=स्थानस्य आगन्तुकेभ्यः दयनात्=दानात् सत्कृत्यप्रतिपादनात्, अथवा स्वयं नत्वन्यद्वारैव भुवः=पृथिव्याः दयनात्=पालनात् प्रत्यवेक्षणादित्यर्थः, अतएव तुष्टमनाः=प्रसन्नचित्ताः प्रियैव=प्रीत्यावहैव हृद्यैवेत्यर्थः लोकानां नरपतेश्च, यद्वा प्रिया=भार्या तद्रूपेत्यर्थः एव. प्रियेवेति पाठे प्रियेव=भार्येव आसीत्। वनिताऽपि यथा शशाङ्ककान्तं कान्तमासाद्य समर्थ सिद्धार्थ–कृतार्थ भावात्=समर्थ–भावात्=सुरतादिक्षमत्वात् सिद्धार्थभावात्=सम्पन्नमनोरथत्वात् कृतार्थभावात् मदपत्यजननादिनाकृतकृत्यत्वात्, कराग्रहात्=योग्यपुरुषकर्तृकपाणिग्रहणात् स्वयम्भूदयानात्=स्वयम्भुवः=कामदेवस्य तद्विकारस्येतिभावः उदयनात्=आविर्भावात् यद्वा स्वयम्भुवोः=स्तनयोः उदयनात्=उत्थानात् यौवनोद्भेदादित्यर्थः तुष्टमनाः=सदाऽऽह्लादितान्तःकरणा पत्युः प्रिया=प्रीतिजनिका भवति. तथेयंधरापी-

व्याख्या—यस्य राज्ञः सपक्षे=सादृश्यकोटौ तुल्यरूपतायामित्यर्थः उपमानकक्षायामित्याशयः सविता=प्रजोत्पादयिता अजः=ब्रह्मा एव यद्वा सविता=सूर्यः तेजस्वित्वेन अजः=विष्णुः स्थिति ( लोकम र्यादा ) कारित्वेन, शिवश्च दुष्टसंहारकत्वेन एव नान्यः कश्चन यस्योपमानभूत इति भावः तस्य राज्ञः आधिपत्ये=प्रभुत्वे स्वामित्वे इत्यर्थः राजत्वकाल इति यावत् जगत्यां=पृथिव्यां लोकेवा सुपमा=शिष्टाऽनुग्रहदुष्टनिग्रहादिविधिविधानजनितसार्वात्रिकशान्तिसमुद्भूतपरमशोभा 'सुषमा परमाशोभा' इत्यमरः। यद्वा सुषमा=शोभना स्थितिरितिशेषः, अथवा सुषमा=समा=तुल्यरूपा वृति रितिशेषः आसीदितिक्रियाध्याहारः, अत एव कस्यापि लोकस्य=जनस्य दुःखलेशः=आध्यात्मिका—ऽऽधिदैविका—ऽऽधिभौतिकादिदुःखमात्राऽपि न अभूत्। अन्योन्ययुधायुधानाम्=अन्योन्यं=परस्परं युत्=युद्धम् आयुधानि=प्रहरणानि शस्त्राणीत्यर्थः तेषां तज्जनित इत्यर्थः क्लेशः=पीडा कुतः? नैव सम्भवतीत्यर्थः न्यायपरायणे प्रजारक्षणप्रवणान्तःकरणे धरणीरमणे राजसिंहासनमासीने प्रजानामकुतोभयत्वं राष्ट्रस्य च समस्तेति भीतिराहित्यमनुपमसुषमासाहित्यं च सर्वथैव सम्भावनाऽऽस्पदीभावमधिगच्छतीति नीतिवेदिनाम्मतिः। उपमा, काव्यलिङ्गम् अर्थापत्तिश्चाऽलङ्कृतयः॥ अजश्छागे हरि—ब्रह्मविधु—स्मर—नृपे हरे इति मेदिनी ॥ ५९ ॥

तमीश्वरं प्राप्य तमीश्वराभं समर्थ सिद्धार्थ कृतार्थभावात्।
कराग्रहात् तुष्टमनाधराऽऽसीत् स्वयंस्वयम्भूदयनात्प्रियैव ॥ ६० ॥

तिभावः। श्लेषेणानुप्राणितंरूपकमुपमा वा काव्यलिङ्गं समासोक्तिर्वा- ऽलङ्कारः। बलि-हस्तां-शवः करा इत्यमरः ॥ ६० ॥

वामाऽभिरामाङ्ग्यचिराऽर्थसिद्धौ, शिवाऽऽख्ययाऽस्य प्रियकारिणीस्त्री ।
श्रिया सुदेवी सहशीललीलाकौशल्यकान्ताम्बुजलोचनश्रीः ॥ ६१ ॥

(अन्वय.) अस्य वामा स्त्री अभिरामाङ्गी, अर्थसिद्धौ अचिरा, आख्ययाशिवा, प्रियकारिणी, श्रियासुदेवी सहशीललीला, कौशल्यकान्ता, अम्बुज लोचनश्रीः (आसीत्) ॥ द्वितीये-अस्य अचिराङ्गी, वामा,ऽभिरामाङ्गी, अर्थसिद्धौ आख्यया शिवा, शेष पूर्ववत् ॥ तृतीये-अस्य आख्यया शिवा स्त्री शे० पू० ॥ चतुर्थे-अस्य सुदेवी=मरुदेवी स्त्री शे० पू० ॥ पञ्चमे-अस्य सुदेवी=देवकी स्त्री श्रिया 'युक्ता' शेष पूर्ववत् ॥ षष्ठे-अस्य कौशल्यका=कौशल्या स्त्री वामाऽभिरामाङ्गी अर्थसिद्धौअचिरा आख्यया शिवा प्रियकारिणी, श्रिया सुदेवी, सहशीललीला, अन्ता,ऽम्बुजलोचनश्रीः ( आसीत् ) ॥ ६१ ॥

व्याख्या:-अस्य गतः अश्वसेन संज्ञस्य वामा=तदभिधाना स्त्री=भार्या आसीत् कीदृशीत्याह-अर्थसिद्धौ अचिरा=कार्यसम्पादने शैघ्र्यवती शीघ्रंकार्यसाधिकेत्यर्थः। आख्यया=नाम्ना शिवा=कल्याणावहा नाम [स्मरण] मात्रेणैव मङ्गलकारिणीत्यर्थः। अभिरामाङ्गी= अभिरामं=सुन्दरम् अङ्गं=शरीरं यस्याः सा तथोक्ता मनोहरगात्रीत्यर्थः। प्रियकारिणी=पत्युर्हितकारिणी। श्रिया=शोभया सौभाग्यलक्ष्म्या वा रूपसम्पदा वा सुदेवी=उत्तमा देवीव इति देवी. सहशीललीला=शीलं-सद्वृत्तं सत्स्वभावो वा लीला-विलासविशेषः गतिचेष्टिता

टि० १ समर्थ्यत्वादिपदे कर-स्वगम्भूपदयोश्च श्लेषात्। २-प्रियेचेतिपाठे। ३-तुष्ट मनस्त्वे पञ्चम्यन्तानां हेतुत्वेनोपादानात्। ४-समानविशेषणव-शात्प्रस्तुताधिकारव्यवहारारोपात् सङ्कुक 'समासोक्ति समैर्यत्रकार्यलिङ्गविशेषणैः। व्यवहारसमारोप प्रस्तुतेऽन्यस्य वस्तुनः' इति साहित्यदर्पणे ॥

दिभिःप्रियस्यानुकरणं 'प्रियस्यानुकृतिर्लीला' इति साहित्यदर्पणे ताभ्यां ( शील लीलाभ्यां ) सहवर्त्तमाना इति सा तथोक्ता कौशल्य-कान्ता-कौशलमेव कौशल्यं-क्रियानैपुण्यम् तेन कान्ता-कमनीया प्रशंसनीयेत्यर्थः । अम्बुजलोचनश्रीः-अम्बुजस्येव लोचनस्य श्री र्यस्याः सा तथोक्ता कमलसदृशनेत्रशोभाशालिनीत्यर्थः । शीलंस्वभावे सद्वृत्ते इति मेदिनी ॥

द्वितीयपक्षे-अस्य राज्ञः 'विश्वसेन' नामधेयस्य 'अचिरा' तदभिधाना स्त्री-भार्या पट्टराज्ञीतियावत् आसीत् सा कीदृशीत्याह-वामा-रम्या मनोहारिणीत्यर्थः, अर्थसिद्धौ-प्रयोजनसम्पादनविषये आख्यया-नाम्ना शिवा-क्षेमकारिणी। शेषं पूर्ववत् ॥ अर्थोऽभिधेय रै-वस्तु-प्रयोजन-निवृत्तिषु इत्यमरः ।

तृतीयपक्षे-अस्य राज्ञः 'समुद्रविजय' नाम्नः आख्यया नाम्ना 'शिवा' इतिलोके प्रसिद्धा स्त्री-पट्टमहिषी आसीत् । शेषं पूर्ववत् ॥

चतुर्थपक्षे-अस्य राज्ञः 'नाभिराज' संज्ञकस्य स्त्री-पत्नी पट्टराज्ञी सुदेवी-मरुदेवी इति प्रसिद्धा आसीत् नामैकदेशग्रहणेन नामग्रहणात् सत्या भामा इतिवत् । सा कीदृशीत्याह-श्रिया 'युक्ता' इति शेषः । शेषं पूर्ववत् ॥

पञ्चमपक्षे—अस्य वसुदेवस्य 'सुदेवी'-देवकी इत्यभिधया लोके विदिता स्त्री-भार्या आसीत् शेषं पूर्ववत् ।

षष्ठपक्षेच—अस्य राज्ञो 'दशरथ' नामधेयस्य 'कौशल्यका='कौशल्या' इत्येतन्नाम्नीत्यर्थः स्वार्थिकः कः "केऽण" इत्यापोह्रस्वः अभाषितपुंस्काच्चेत्यनेन नित्यस्त्रीलिङ्गशब्दाद्विहिताऽऽत्स्थानिकाऽतो वैकल्पिकेत्त्वविधानसामर्थ्याच्चदभावे नित्येत्वस्याऽप्यभावः । सा-

मीदशीत्याह-रामाऽभिरामाङ्गी=वामेन=कामदेवेन तद्विकारोदयेन कामनिवासावस्थोद्गमेन वेतिभावः यौवनोद्भेदेनेतियावत् अभिरामं=मनोहरम् अङ्गं यस्याः सा तथोक्ता यद्वा वामस्य=कामस्य अभिरामा=सुन्दरी यद्वा आभिरामा=आभाऽस्त्यस्या इत्याभिनी=सातिशयशोभाशालिनी रामा=रमणी रतिरित्यर्थस्तद्वदङ्गं यस्याः सा तथोक्ता । अन्ता=रम्या पत्युर्मनोहारिणी । वामं धने पुंसिहरे कामदेवे पयो धरे । वल्गु-प्रतीप-सव्येषु त्रिषु नार्यां स्त्रियामिति मेदिनी । मृत्या ववासितेरम्ये समाप्ता वन्त इष्यते इति शब्दार्णवः शेषविशेषणयोजनं पूर्ववत् । श्लेषः दीपकम् उपमाऽलङ्काराः ।

श्रीसिद्धार्थराजस्य भार्यानामधेयमग्रेऽभिधास्यते ॥ ६१ ॥

इन्दोररालापि कला द्वितीया, शुभायनूनं समयाऽनुसारात् ।
तथा सुदेव्यप्यचिराशिवैव, वामाध्वना सूरतमूर्तिसाधुः ॥६२॥

(अन्वय) इन्दोः द्वितीया कला अरालाऽपि समयानुसारात् नून शुभाय (भवति) तथा सुदेव्यपि अचिराशिवा वामाध्वना (वर्तनशीला) सूरतमूर्तिसाधु (अभूत्) ॥ ६२ ॥

यथा इन्दोः=चन्द्रमसः द्वितीया कला=षोडशभागैकभागः कलातु षोडशोभाग इत्यमरः, अराला=कुटिलाऽपि असुदृश्याऽपीतिभावः समयाऽनुसारात्=कालान्तरेण पौर्णमासीमासाद्येत्यर्थः नूनं=निश्चयेन शुभाय=मङ्गलाय पूर्णशशिरूपाय कल्याणायेत्यर्थः भवति तथा=तद्वत् सुदेवी=प्राग्वर्णितरूपा राज्ञी अपि अचिराऽशिवा=अचिरम्=अल्पकालपर्यन्तमेव अशिवं=पुत्रादिराहित्यादिरूपममङ्गलं तज्ज-

टि. १. समयानुसरणपापि,

नितदुःखमितिभावः यस्याः सा तथोक्ता अभूत् । कीदृशी सेत्याह—वामाध्वना=शिष्टसमष्ट्याचरितरुचिरमार्गेण वर्तनशीलेतिशेषः यद्वा वामः=रम्यः मधुर इत्यर्थः आ=समन्तात् ध्वनो भाषा यस्याः सा मधुरवादिनीत्यर्थः । सूरतमूर्तिसाधुः=सूरतया=दयावत्या मूर्त्या=स्वरूपेण साधुः=मनोहरा सभ्या=शिष्टावा यद्वा सूरता मूर्तिर्यस्याः साचासौ साधुः=कुलीना—महाकुलसमुद्भवा—चेति सा तथोक्ता । स्याद्दयालुः कारुणिकः कृपालुः सूरतः समा इति. महाकुलकुलीना-र्य-स भ्य—सज्जन—साधव इति चामरः । साधुर्वार्धुषिकेचारौ सज्जनेऽप्यभिधेयवत् इति मेदिनी ॥ ६२ ॥

सौरभ्यवित्तं जलजं प्रदाय, चन्द्रः कलाकौशल मुज्ज्वलत्वम् ।
जाने तदास्यानुगमाद् विभूतिं, प्राप्तौकजेन्दू समयं प्रपद्य ॥ ६३ ॥

(अन्वय) कजेन्दू समय प्रपद्य तदास्याऽनुगमात् विभूतिं प्राप्तौ (इति) मन्ये जलज सौरभ्यवित्त चन्द्र कलाकौशलमुज्ज्वलत्व प्रदाय ॥ ६३ ॥

कजेन्दू=कमल—चन्द्रमसौ समयं=क्रमेण दिवस-रात्रि रूपंकालं प्रपद्य=प्राप्य तदास्याऽनुगमात्=तस्या=अनुपदोक्त राज्याः आस्यस्य=मुखस्य अनुगमात्=अनुसरणात् सेवनादित्यर्थः तन्मुखसेवनाऽऽसादितप्रसादादितिभावः विभूतिं=मुपमानस्थानीयत्वादिमहिमानं प्राप्तौ=लब्धवन्तौ इत्यहं जाने=मन्ये उत्प्रेक्षे इत्यर्थः । ननुकिंदत्त्वा ताभ्यां प्रसादो लब्ध इत्याह—जलजं=कमलं सौगन्ध्यरूपं धनं, चन्द्रश्च कलाकौशलं=कलासु=चतुःषष्टिप्रकारासु कौशलं=नैपुण्यम् उज्ज्वलत्वम्=औज्ज्वल्यमनुपमकान्तिमत्त्वम् आह्लादकत्वं वा प्रदाय=दत्वेत्यर्थः । कमलगुणाः चन्द्रगुणाश्च तन्मुखेऽवर्त्तिषतेति भावः ॥ उत्प्रेक्षाकाव्यलिङ्गं च ॥ ६३ ॥

सौभाग्यमस्याः प्रवदेत् समस्याख्यानात् सुधा वा सकलार्थसिद्धिः ।
सुधाऽधरस्था करपद्मगाऽन्या तत्तुल्यता वास्तु न जीवलोके ॥ ६४ ॥

समस्य आख्यानात (सादृश्यरूपेण) सुधा सकलार्थ सिद्धिर्वा अस्या सौभाग्य प्रवदेत् तु सुधा ( अस्या ) अधरस्था अन्या करपद्मगा. ( अतएव ) जीवलोके तत्तुल्यता न अस्तु ॥ ६४ ॥

समस्य=संक्षिप्य आख्यानात्=कथनात् सादृश्य रूपेणेतिशेषः सुधा=अमृतं. सकलार्थ सिद्धिः=सकलानां=सम्पूर्णानाम् अर्थानां=धनानां प्रयोजनानां वा वस्तूनां वा सिद्धिः=निष्पत्तिर्वृद्धिर्वा वा शब्दः समुच्चायार्थः अस्याः=पूर्वोक्तराज्ञ्याः सौभाग्यं=भाग्यशालिनां पतिप्राप्त्यं वा कर्म्म प्रवदेत्=वक्तुं समर्था स्यात् । द्वितीयो 'वा' तु शब्दार्थकः तथा च वा=तु=किन्तु सुधा प्रक्रमादस्याः अधरस्था=ओष्ठवर्तिनी. अन्या=अपरा द्वितीया सकलार्थसिद्धिरित्यर्थः करपद्मगा=हस्तपद्मस्था हस्तस्थितकमलरेखामहिम्नभवेत्यर्थः पद्मरेखायुक्तहस्ते सर्वार्थसिद्धिरिति सामुद्रिकशास्त्र प्रसिद्धम् । अतएव जीवलोके=मर्त्यलोके तत्तुल्यता=तत्सादृश्यं न अस्तु=नाऽस्तीत्यर्थः । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं हि सादृश्यं तच्चाऽभिन्नवस्तुनि न सम्भवतीति कथं स्वस्था सुधा स्वंसादृश्येन वक्तुं प्रभवेदिति-भावः । अत्रातिशयोक्तिरलङ्कृतिः ॥ ६४ ॥

रूपेण कान्त्या चरणेनलक्ष्म्या, प्राप्ताशलाकां त्रिषु विष्टपेषु ।
ततः प्रसिद्धा त्रिशलाकनाम्ना—काराविकारा द्रमणी मणीव ॥ ६५ ॥

(अन्वय.) रूपेण कान्त्या आचरणेन लक्ष्म्या त्रिपु विष्टपेपु शलाकांप्राप्ता तत. आकाराविकाराद् त्रिशलाकनाम्ना प्रसिद्धा रमणी मणी व (अभूत्) ॥६५॥

व्याख्या–एकषष्टि ६१ मितश्लोकेऽनुक्तां सिद्धार्थराजस्य भार्या मिहिनामत आचष्टे। 'अस्ये'-ति पूर्वतोऽनुपज्यते. प्रकरणाद्वाऽनुसन्धेयः। तथा च अस्य=सिद्धार्थराजस्य, रूपेण=सौन्दर्येण सत्स्वभावेन वा 'रूपं स्वभावे सौन्दर्ये' इति मेदिनीः, कान्त्या=लावण्येन. आचरणेन=सदाचारेण सम्यक्चारित्रेणेत्यर्थः लक्ष्म्या=धनसम्पदा च त्रिषु विष्टपेषु=त्रिलोक्या शलाकाम्=सर्वोत्तमतां प्राप्ता=अधिगतवती ततः=तस्मात्कारणात् आकाराविकारात्=आकारस्य='त्रिशलाका' घटककारोत्तरवर्तिन आरूपस्वरवर्णस्य अविकारात्=संज्ञाशब्दतया 'ङ्यापोः संज्ञा-छन्दसोर्बहुलम्' इत्येतच्छास्त्रेण ह्रस्वविधानवशसञ्जाताद् अरूपवर्णविकारात् अन्यथा त्रिशलाका' इत्यापत्तेः, 'त्रिशलाक' नाम्ना=त्रिषुशलाका यस्य तत्रिशलाकं तादृशं नाम=अभिधानं तेन त्रिशलानाम्नेत्यर्थः प्रसिद्धा=शास्त्रे लोकेच विदिता भूपिता वा 'प्रसिद्धौ ख्यात-भूषितौ' इत्यमरः रमणी=स्त्रीरत्नम् अभूत् केव? मणीव=सद्रत्नमिव सापि रूपादिना प्रसिद्धा=भूषिता, शलाकां=वेधनास्त्रं प्राप्ता, आकार विकार रहिता भवति। श्लिष्टोपमा काव्य लिङ्गंचाऽलङ्कारौ ॥ ६५ ॥

**सुवर्णकूर्मप्रतिमाक्रमत्वा--त्तस्या मधोलोकसुरप्रणामम् ।**
**वराङ्गरत्ने न तदोर्ध्वलोक–प्रणम्रतां वक्तितदीयकायः ॥ ६६ ॥**

तदीयकाय. सुवर्णकूर्मप्रतिमाक्रमत्वात् तस्या मधोलोकसुर प्रणामम् तथा वराङ्गरत्नेन ऊर्ध्वलोकप्रणम्रता वक्ति ॥ ६६ ॥

व्याख्या—तदीयकायः=पूर्वोक्तराज्ञीशरीरं सुवर्णकूर्मप्रतिमाक्रमत्वात्=सुवर्णस्य=काञ्चनस्य तन्निर्मितस्येत्यर्थः कूर्मस्य=कमठस्य प्रतिमा=प्रतिकृतिर्मूर्तिरित्यर्थः तद्वत् क्रमौ=चरणौ यस्य यस्मिन् वा स सुवर्णकूर्मप्रतिमाक्रमस्तस्यभावस्तत्वं तस्मात्तथोक्तात् हेमरचितकच्छपप्रतिमापृष्ठदेशसदृशपदयुगलशालित्वादित्यर्थः 'शुभः कमठपृष्ठाभः' इति सामुद्रिकोक्तेः। तस्यां=राज्ञ्यां विषये अधोलोकसुरप्रणामम्=अधोलोकसुराणा=भूलोकाधस्ताद्वर्त्तिभुवनस्थदेवानां प्रणामं=प्रणतिम्। तथा वराङ्गरत्नेन=भाग्यशालित्वसूचकमस्तक श्रेष्ठेन 'वराङ्गं मूर्द्ध-गुह्ययोः' इति हैमः रत्न स्वजाति श्रेष्ठे स्यान्मणौ राजातुपार्थिवे ऊर्ध्वलोकप्रणम्रतां=ऊर्ध्वलोकाः=भूलोकादुपरिवर्तमानलोकाः तत्रत्यादेवा इति भावः प्रणम्राः=प्रणता यं स ऊर्ध्वलोकप्रणम्रस्तस्य भावस्तत्ता तां तीर्थङ्करजननक्षेत्रतया ऊर्ध्वाधोलोकवर्तीदेवादीनां प्रणम्यतामितिभावः वक्ति=कथयति ज्ञापयतीत्यर्थः ॥ ६६ ॥

मुक्ताकलापे स्तनयोर्विभूषा, केशेषु शोभा शिखिनां कलापे।
नितम्बशोभा रसनाकलापे, कलापरूपं तदिदं कवीनाम् ॥ ६७ ॥

(अन्वय) मुक्ताकलापे स्तनयोर्विभूषा शिखिनां कलापे केशेषु शोभा, रसना कलापे नितम्बशोभा तदिदं कवीनां कलाऽपरूपम् (अभिमतम्) ॥६७॥

व्याख्या—मुक्ताकलापे=मुक्तावल्यां हारे इत्यर्थः स्तनयोः=वक्षो जयोः विभूषा=भूषकत्वम् स्तनशोभासंवर्द्धकत्वकथनमितिभावः, शिखिनां=मयूराणां कलापे=बर्हे उपमानभूते उपमेयतयाऽभिमतेषु केशेषु=कुन्तलेषु शोभा, रसनाकलापे=काञ्चीदाम्नि सति नितम्ब-

शोभा=नितम्बस्य=कटिपश्चाद्देशस्य शोभा=छविस्तद्वर्णनमित्याशयः इदं=तत्तदभिधानं कवीनां=काव्यनिर्मातॄणां कलापरूपं=कलायाः= सामर्थ्यस्य कल्पनाशक्तेरित्यर्थः अपरूपम्=अपकृष्टस्वरूपम् विपरीतरूपंवाऽभिमतमितिशेषः । अनुपमानां प्रकृतिरमणीयानां रमणीरत्नानामुपमानपरिकल्पनमाहार्यसौन्दर्यसाधनोपसन्निधापनं च कविकल्पनाशक्तेर्दौर्बल्यं द्योतयतीतिभावः । कलापो भूषणे बर्हे तूणीरे संहतावपि इति मेदिनी । कला स्यान्मूलविवृधौ शिल्पादावंशमात्रकेषोडशांशे च चन्द्रस्य कलनाकालमानयोरितिमेदिनी । अपः स्यादपकृष्टार्थे वर्जनार्थ–वियोगयोः । विपर्ययेच विकृतौचौर्ये निर्देश–हर्षयोः इतिमेदिनी ।

अथ च कवीनां काव्यकर्तॄणां तत्तस्मात् इदं एतद्वर्णनीयस्वरूपं स्त्री रूपं वस्तु कलापरूपम् समूहरूपं. सर्ववर्णनीयवस्तु समष्टिरूपम् यद्वा कलारूपम् भूषणस्वरूपम् प्रसन्नताजनकम् एकत्रैव सर्वव्यावर्णनीयवस्तुमिलनात् किंवाकवीना मयूराणां कलापरूपम् बर्हस्वरूपम् अनेकरूपत्वादित्यर्थः ॥ ६७ ॥

नृपेन्द्रभावे जयवाहिनीयं, तद्वैष्णवे साकमलाऽवतीर्णा ।
तद्राजयोगे खलुरोहिणीव, व्यावर्णनीया बहुलब्धवर्णैः ॥ ६८ ॥

(अन्वयः) सा इय नृपेन्द्रभावे जयवाहिनी, तद्वैष्णवे कमलाऽवतीर्णा । तद्राजयोगे रोहिणीव बहुलब्धवर्णैः व्यावर्णनीया खलु ॥ ६८ ॥

व्याख्या–सा इयं=पूर्वोक्ता राज्ञी नृपेन्द्रभावे=नृपस्य=राज्ञः स्वभर्त्तुः इन्द्रभावे=इन्द्रत्वे देवराजत्वे इत्यर्थः अष्टानांलोकपालानां वपुधीरयतेनृपः इत्युक्ते रिन्द्रकलयाऽवतीर्णतयाऽभिमतत्वे जयवाहिनी= जयं=जयन्त=पाकशासनिं तदाख्यशक्रपुत्रमित्यर्थः वहति=धारयति

तद्भ्रूणवे=तस्य=राज्ञः स्वभर्तुः वैष्णवे=विष्णुत्वे 'ना विष्णुः पृथिवीपति' रित्युक्ते प्राप्नोति वा पुत्रत्वेन तच्छीला शचीमन्वेत्यर्थः क्रमला=लक्ष्मीस्तद्रूपेणे ति भावः अवतीर्णा=गृहीतावतारी। तद्राजयोगे=तस्य राज्ञः गतो विष्णुकलयाऽवतीर्णत्वेनाभिमताविल्यर्थः यद्वा राज्ञ:=चन्द्रस्य लोकपालान्यतमस्य योगे=कलयास-राजयोगे चन्द्रवाचकराजन् शब्देन योगे=नृपरूपेतरार्थवाचकतया सम्बन्धे, कविभिः व्यावर्णनीया=विशेषेण वर्णयितुं प्रशंसितुं योग्या. खलु मन्ये रोहिणी=चन्द्रभार्या इव बहुलब्धवर्णैः=बहुभिर्लब्धवर्णैः=कविभिः धीमान् सूरिः कृतिः कृष्टिर्लब्धवर्णोविचक्षण इत्यमरः उल्लेखा-त्मकालङ्कारः ॥ राजाप्रभौ च नृपतौ क्षत्रिये रजनीपतौ इति मेदिनी। जयवाहिनी जयंविजयंवहते प्राप्नोतीति तच्छीला जय-लङ्कारः ॥ अथ च नृपेन्द्रभावे नृपाणामिन्द्रः स्वामी तद्भावे सर्वराजस्वामिभावे "पतीन्द्रस्वामिनाथार्या इति हैमः" निदर्शनालङ्कारः वाहिनीवजयवाहिनीतिमध्यमपदलोपीसमासः संग्रामविजयसंपादिकासेनेवेतिभावः

धर्मः कवीनामुपमा नवीना--ऽऽधेयाऽभिधेयार्थसमानभावे ॥
अस्यास्त्वसामान्यतयैवदूरा-दालोक्यतां साम्यदशा त्रिलोक्याम् ॥६९॥

अन्वयः—अभिधेयार्थं समानभावे नवीना उपमा आधेया[इत्यय] कवीना धर्मे तु अस्या असामान्यतया त्रिलोक्य साम्यदशा दूरादालोक्यताम् ॥

व्याख्या—अभिधेयार्थसमानभावे=अभिधेयार्थस्य=वर्णनीय पदार्थस्य (वस्तुनः)समानभावे=तुल्यतायां=सादृश्ये कल्पयितव्ये नवीना=कल्पनाकल्पितयाऽभिनवा उपमा=सादृश्यम् आधेया=योजनीया स्वकाव्ये संघटनीयेत्यर्थः इत्ययं कवीनां धर्मः=आचारः स्व-भावो वा 'धर्माः पुण्य-यमा-न्याय-स्वभावा-ऽऽचार-सोमपा' इत्यमरः। तु=किन्तु अस्याः पूर्वोक्तराज्ञ्याः असामान्यतया=अनन्यसाधा-

रणतया त्रिलोक्यां=लोकत्रये साम्यदशा=सादृश्यं दूरादालोक्यतां=कविभि र्दुरतो दृश्यताम् भूयोभूयो विमृश्य यत्किञ्चित् सादृश्यं परिकल्पयन्तु किन्तु वास्तविकी समानता नास्तीति तत्र कविनां वाग्व्यापारणं विरुद्धमेवेति निष्टङ्कः ॥ सम्बन्धेऽसम्बन्धरूपातिशयोक्तिरलङ्कारः ॥ ६९ ॥

**गुणाधिरोहः परमस्तु कोटौ,तस्यास्तुलाकोटिरपि क्रमाब्जे ।**
**यस्माद् गुणानां शतकोटिरस्यां, मन्ये नतोऽस्मात् शतकोटिशाली॥७०॥**

अन्वय'—परमः गुणाधिरोहः कोटौ तस्याः क्रमाब्जेऽपि तुलाकोटिः (अस्ति) (इत्थं) यस्मात् अस्या गुणाना कोटि अस्मात् शतकोटिशाली नत इति मन्ये

व्याख्या—परमः=उत्कृष्टः गुणाधिरोहः=रज्जुसम्बन्धः कोटौ=अग्र भागे तुलादण्डस्य भवतीतिशेषः, तस्याः=पूर्वोक्तराज्याः क्रमाब्जे= पादकमले तुलाकोटिरपि=तुलाचिह्नस्य तत्र सत्वात् तदग्रभागोऽपि तस्मात्=तुलाकोटीनां तत्र सत्त्वात् अत्र कोटिशब्दः शतलक्षसंख्यावाची तथा च एकैकतुलायां कोटिद्वयस्य प्रत्येककोटौ गुणानां सत्त्वात् अस्यां=महापुरुषमातरि गुणानां=धैर्यादीनां शतकोटिः संख्याऽस्तीति मन्ये=जाने इति कविकल्पना तदेव द्रढयति अस्मात् कारणात् शतकोटिशाली=कोटीश्वरः नतः=प्रणतः नह्यशतकोटिशालिनं शतकोटिशाली नमस्करोतीति भावः ॥

अथवा तस्याः=पूर्वोक्तराज्याः परमः=अनन्यसाधारणः गुणाधिरोहः=गुणोत्कर्षः कोटौ=शतलक्षसंख्यायां संख्येयतयाऽस्तीतिशेषः यद्वा गुणाधिरोहः कोटौ वर्तते इति परं=दूरम् अस्तु=आस्तां नाम तस्याः=राज्याः क्रमाब्जे=चरणकमलेऽपि तुलाकोटिः=तुलानां साद-

गुणानां कोटिः संख्यावर्त्तते 'तुला सादृश्य-मानयोः' इति मेदिनी। अथ च तुलाकोटिः=मञ्जीरः चरणभूषणविशेषः अस्तीतिध्वनिः। पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियामित्यमरः। इत्थं यस्मात् कारणात् अस्यां राज्ञ्यां गुणानां सौशील्यादीनां शतकोटीरासीत् तस्मात् कारणात्। शतकोटिशाली=शतकोटिना=वज्रेण शालते=शोभते तच्छील इन्द्रः, यद्वा शतगुणितकोटिसंख्याकधनाऽधिपतिरपि निभृतान्यः नतः=प्रणतिप्रवणः अभूत् इति मन्ये=उत्प्रेक्षे। शतकोटिः स्वरुः शम्बो दम्भोलिरशनिद्वयोरित्यमरः। कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेद-प्रकर्षयोः इति मेदिनी। श्लेषः काव्यलिङ्गं च ॥ ७० ॥

उच्चैर्दशा स्यान्नु परोपकाराद्, युक्ता तदुच्चैस्तनतास्तनाङ्गे।

सतां न चात्मम्भरिताकदाचित्, तनु स्वमध्यं तत एव तस्याः ॥ ७१ ॥

अन्वयः—तस्याः स्तनाङ्गे उच्चैस्तनता युक्ता (यतः) परोपकारात् नु उच्चैर्दशा स्यात् (यतः) सतां कदाचिद् आत्मम्भरिता न भवति तत एव तस्याः स्वमध्यं तनु ॥

व्याख्याः—अवयवान् वर्णयति–तस्याः=राज्ञ्याः स्तनाङ्गे=वक्षोजयुगलरूपाऽवयवे उच्चैस्तनता=उच्चैर्भव उच्चैस्तनः भवार्थे तनुप्रत्ययः तस्य भावस्तत्ता उच्चता औन्नत्यमित्यर्थः युक्ता=समुचिता यतः परोपकारात्=दुग्धरूपस्वधनेन परस्य=स्वभिन्नस्य शिशोः उपकरणात्=शरीरपोषणरूपोपकारजननात् नु=निश्चयेन उच्चैर्दशा=उन्नतावस्था उन्नतिरित्यर्थः स्याद्=भवेत् लोकेऽपि परोपकारकरणात् उन्नत्यवस्था भवतीति प्रसिद्धैव। यतश्च सतां=सज्जनानां कदाचित् आत्मम्भरिता=स्वोदरमात्रपूरण प्रवणता स्वार्थितेतिभावः न भवति

तत एव हेतोः तस्याः स्वमध्यम्=उदरं तनु=कृशं जातमित्यर्थः। स्तनोन्नतत्वं परोपकारफलं तनूदरत्व सज्जनशिलश्चाशिक्षयतीतिभावः॥ उत्प्रेक्षा काव्यलिङ्गं चालङ्कारौ ॥ ७१ ॥

अनल्पतल्पे सुमनो विकल्पे, प्रसुप्तयाऽदर्शिषतोन्निशान्ते।
स्वप्ना मणिश्रेणिमये निशान्ते, तदा तया नर्तितया व्यवर्त्ति ॥ ७२ ॥

अन्वय —मणिश्रेणिमये निशान्ते सुमनो विकल्पे अनल्पतल्पे प्रसुप्तया तया उन्निशान्ते स्वप्ना अदर्शिषत तदा नर्तितया व्यवर्ति ॥

व्याख्या—मणिश्रेणिमये-समन्तान्मणिपंक्तिविराजिते निशान्ते प्रासादे सुमनोविकल्पे सुमनसा=पुष्पाणां विकल्पः विविधकल्पनं विविधा विशिष्टा वा रचनेत्यर्थः यस्मिन् स तस्मिन् तथोक्तरूपे अनल्पतल्पे=अनल्पं=महत् तल्पं शय्या तस्मिन् तल्पं=शय्याऽट्ट–दारेषु इत्यमरः प्रसुप्तया=शयितया तया प्राग्वर्णित राज्ञ्या उन्निशान्ते=उत्=ऊर्ध्वं निशान्तात्=रात्रिशेषात् इत्युन्निशान्तं तस्मिन् निशा शेषात्किञ्चिदूर्ध्वमित्यर्थः स्वप्नाः=प्रसुप्तविज्ञानविशेषाः अदर्शिषत दृष्टाः तदा=तस्मिन्काले तया राज्ञ्या नर्तितया=अभिनीतवत्या=कल्याणातिशयसंसूचिस्वप्नदर्शनजन्याऽनन्य सामान्यसान्द्राऽऽनन्दसन्दोहतुन्दिलाऽन्तः करणताऽभिनयं कुर्वत्या व्यवर्त्ति-अभाविपुष्परचितशयने-शयिता राज्ञी रात्रिशेषे स्वप्नानवलोक्य हर्षोत्कर्षनिर्भराऽवर्तिष्टेति सरलार्थः। निशान्त–पस्त्य–सदनमित्यमरः। स्वप्नः स्वापे प्रसुप्तस्वविज्ञाने दर्शने पुमानिति मेदिनी ॥ ७२ ॥

गजादिमश्रीवृषभादिसिंहा, द्विमेन्दिरा-दाम-मृगाङ्क-सूर्याः।

ध्वजोल्लसत्कुम्भसरःपयोधि-विमानरत्नोच्चयवह्नयोऽमी ॥ ७३ ॥

अन्वयः—गजादिम-श्रीवृषभादि-सिंहादिमे-न्दिरा-दाम-मृगाङ्क-सूर्याः ध्वजो-ल्लसत्कुम्भ-सर-पयोधि-विमान-रत्नोच्चय-वह्नय इत्यमी स्वप्ना ॥

व्याख्या- स्वप्नदृष्टपदार्थान् नामत आचष्टे-गजादिमः=गजेषु गजानां वा आदिमः=आद्यः प्रधानः हस्तिश्रेष्ठ इत्यर्थः, श्रीवृषभादिः=वृषभानामादिर्यस्मात्सवृषभादिः शोभायुक्तवृषभोत्तम इत्यर्थः एवं सिंहादिमः=श्रेष्ठकेसरी. इन्दिरा=लक्ष्मीदेवी. दाम=पुष्पमाला. मृगाङ्कः=चन्द्रः, सूर्यः=दिवाकरः, ध्वजः=केतनम्, उल्लसत्कुम्भः=पूर्णकुम्भः, सरः=तडागः, पयोधिः=समुद्रः, विमानं=देवरथः रत्नोच्चयः=रत्नराशिः, वह्निः=अग्निः इत्यमी १४ स्वप्नाः ॥ ७३ ॥

दृश्या अवश्यं भुवनैर्नमस्यया जने, जनन्यापि जिनस्य चक्रिणः ।

स्वप्नास्तु हर्यश्वमिताः पयोनिधे-र्बलस्यमात्रप्रथिता यथाविधि ॥ ७४ ॥

अन्वयः—जने भुवनैर्नमस्यया चक्रिण जिनस्य जनन्या (चतुर्दश) चक्रिणः जनन्या हर्यश्वमिता, बलस्यमात्रा पयोनिधे (मानेन) प्रथिता. स्वप्ना यथाविधि अवश्य दृश्या (नाना) ॥ ७४ ॥

व्याख्या—जने=लोके भुवनैः=विष्टपैः त्रिभुवनलोकैरित्यर्थः नमस्यया=नमस्करणीयया चक्रिणः=धर्मवरचातुरन्तचक्रवर्तिनः जिनस्य=अर्हद्देवस्य प्रस्तुतकाव्ये वर्णनीयतीर्थकृत्पञ्चकस्येत्यर्थः जननया=मात्रा उपर्युक्त चतुर्दश (स्वप्नाः) । चक्रिसामान्योपादानात् तन्त्रा-ऽऽवृत्त्यन्यतरेण अर्द्धचक्रिणोऽपिग्रहणम् तथा च-चक्रिणः=अर्द्धचक्रिणः=वासुदेवस्य श्रीकृष्णचन्द्रस्य जनन्या=देवकया हर्यश्व-

मिताः=हरेः=सूर्यस्य अश्वाः=घोटकास्तन्मिता.=परिच्छिन्नाः सप्तसंख्यका इत्यर्थः सूर्याश्वानां सप्तसंख्याकत्वात् । तथा बलस्य=रामचन्द्रबलदेवस्य मात्रा=जनन्या कौशल्यादेव्या पयोनिधेः=समुद्रस्य मानेनेति शेषः । चतुःसंख्ययेत्यर्थः प्रथिताः=प्रतीताः चत्वार इत्यर्थः स्वप्नाः यथाविधि=यथोचितरीत्या अवश्यं दृश्या जाता इति शेषः । दृश्यन्तेस्मेत्यर्थः ॥ ७४ ॥

स्वप्नान् विलोक्याऽम्बुनिधिप्रमाणान्, स्वच्छाशयैवद्विगुणान् यथार्हम् ।
असंशयानाऽप्यभृशंशयाना, राज्ञीस्मराज्ञीकृतविश्वरूपा ॥ ७५ ॥

अन्वय.—स्वच्छाशया स्मराज्ञीकृतविश्वरूपा राज्ञी द्विगुणान् अम्बुनिधिप्रमाणान् स्वप्नान् यथार्हं विलोक्य असंशयानाऽपि अभृशंशयाना आसीत् ॥७५॥

व्याख्या--स्वच्छाशया=स्वच्छः=निर्मलः आशयः=अभिप्रायः चित्तं वा वासना वा यस्याः सा तथोक्ता. स्मराज्ञीकृतविश्वरूपा अस्मराज्ञा स्मराज्ञा सम्पद्यते तथाकृतं विश्वं येन तत् यद्वा स्मरस्य=कामस्य आज्ञा=शासनं यत्र तत् स्मराज्ञम् अस्मराज्ञं स्मराज्ञं सम्पद्यमानं कृतं विश्वं=जगद् येन तत् स्मराज्ञीकृतविश्वं तादृशं रूपं=सौन्दर्यमाकारो वा यस्याः सा तादृशी सकलजगत्कामपारतन्त्र्यकार्यनुपमसौन्दर्येत्यर्थः अतिशयरूपवतीति यावत् राज्ञी=पूर्वोक्ता वामा प्रभृतिः पट्टमहिषी द्विगुणान्=द्विगुणितान् द्विरावृत्तानित्यर्थः अम्बुनिधि प्रमाणान्=सप्तसंख्यकान् द्विरावृत्त्या चतुर्दशसंख्याकानित्यर्थः वासुदेवमाता तु द्विगुणान्=प्रकृष्टान् अम्बुनिधिप्रमाणान्=कस्यचिन्मते समुद्रस्य सप्ततया तेन तत्प्रमाणान्=तत्परिमितान् सप्तसंख्याकानित्यर्थः । बलदेव मात्रा च अम्बुनिधिप्रमाणान्=अम्बुनिधिः प्रमाणं येषां तान् 'पयोधरीभूत चतुः समुद्रामित्याद्युक्तेः समुद्रस्य चतुःसंख्यतयाभिमतत्वेन तत्प्रमाणान् चतुःसंख्याकानित्यर्थः ।

स्वप्नान् यथार्हं=स्वम्वयोग्यान् विलोक्य=दृष्ट्वा असंशयाना=स्वप्नविषयक सफलीभवनसंशयरहिताऽऽपि अभृशंशयाना स्वप्नदर्शनानन्तरं भूयोऽप्यकृतशयना आसीदिति शेषः शुभशंसिस्वप्नावलोकनात्परं जागरणेन स्वप्नाऽनुरूपफललाभस्याऽवश्यम्भावाभिधानात् । समुद्रस्य सप्तपरिमितत्वे 'सोऽयं सप्तसमुद्रमुद्रितमहीपस्याऽर्जुनस्योद्धतं, क्षिप्त्वा भैरवसंगरेऽतिकठिनं कण्ठं कुठारेण यः' इति हनुमन्नाटकस्थपद्यमप्यनुकूलतामावहति ॥ अर्थश्लेषः, तृतीयचरणे यमकम् चतुर्थे छेकानुप्रासश्चालङ्काराः ॥ ७५ ॥

तत्राऽवतीर्णस्त्रिदशावतारी, सुरः प्रभाभासुर एव कश्चित् ।
आपन्नसत्वा मणिनेव भूमी, राज्ञी विरेजे गरभाऽनुभावात् ॥ ७६ ॥

अन्वयः—तत्र प्रभाभासुर त्रिदशाऽवतारी कश्चित् सुर अवतीर्णं (अभूत्) (तदनु) राज्ञी आपन्नसत्वा गरभाऽनुभावात् मणिनाभूमीव विरेजे ॥७६॥

व्याख्या–तत्र=तस्मिन्काले प्रभाभासुरः=कान्त्या देदीप्यमानः त्रिदशावतारी=त्र्यधिकास्त्रिरावृत्ताश्च दश परिमाणमस्य स त्रिदशः=त्रयस्त्रिंशन्मुख्यगणवान् देवस्तस्य तदंशेनेत्यर्थः अवतारी=अंशावेशवशेन प्रादुर्भवनशीलः कश्चित्=अनिर्दिष्टस्वरूपः सुरः=दिव्यजीवः अवतीर्णः पूर्वोक्तराज्ञी कुक्षौ प्रविष्टः अभूदितिशेषः । तदनु राज्ञी–पूर्वोक्ता वामा प्रभृतिर्नृपमहिषी आपन्नसत्वा–गर्भवती सती गरभानुभावात्–गर्भप्रभावात् मणिना–गर्भस्थरत्नेन भूमिः–वसुन्धरा इव विरेजे–दिदीपे उपमा काव्यलिङ्गं च ॥ आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी इत्यमरः ॥ गर्भस्तु गरभो भ्रूणो दोहदलक्षणं च स इत्यभिधानचिन्तामणिः ॥ ७६ ॥

राज्ञे निवेद्याऽऽशयसंशयाप्ति-मेषा निमेषाद्विनयाद्व्यनैषीत् ।
जहर्ष हर्षातिशयात्कदम्ब, कदम्बकश्रीर्वपुषानृपोऽपि ॥ ७७ ॥

अन्वय --एषा आशयसंशयाप्ति विनयात् राज्ञे निवेद्य निमेषात् (आशयसंशयाऽप्ति) व्यनैषीत् (तदनु) हर्षातिशयात् वपुषा कदम्ब कदम्बकश्री. नृप अपि जहर्ष ॥ ७७ ॥

व्याख्या-एषा=राज्ञी आशयसंशयाप्तिं=स्वप्नफलविषयकस्वहृदयस्थसन्देहप्राप्तिं 'किमेतेषां (स्वप्नानां) फलं भविष्यतीत्यादिरूप शङ्कामित्यर्थः विनयात्=नम्रतापूर्वकं राज्ञे निवेद्य=सूचयित्वा निमेषात्=अक्षिस्पन्दकालेन आशयसंशयाप्तिं=स्वाप्नफलविषयकशङ्कासम्ब न्धं व्यनैषीत्=अपनीतवती पुत्रप्राप्तिरेतेषां फलमितिनृपादाकर्ण्य विगतसंशयाऽभूदित्यर्थः । तदनु हर्षातिशयात्=पुत्रप्राप्तिसम्भावना-जन्याऽतिशयानन्दात् वपुषा=शरीरेण कदम्बकदम्बकश्रीः=कदम्बानां=नीपकुसुमाना कदम्बकस्य=समूहस्य इव श्रीः=शोभा यस्य स तथोक्तः हर्षोत्कर्षाद्रोमाञ्चाऽञ्चितकलेवर इत्यर्थः नृपः=विश्वसेनप्रभृतिमहीपालोऽपि अपिना राज्ञी च. तत्पक्षे 'कदम्बकदम्बकश्रीः' इत्यस्य कदम्बकदम्बकस्येव श्रीर्यस्याः सा तादृशीत्यर्थः । जहर्ष=मुमुदे प्रसन्नमना अभूदित्यर्थः उपमा, काव्यलिङ्गं दीपकं चाऽलङ्काराः । कदम्बं निकुरुम्बे स्यान्नीप-सर्षपयोः पुमान् इतिमेदिनी ॥ ७७ ॥

शुचौ स चैत्रेऽब्धितिथौ सभाद्रेऽ-सितेऽन्विषे पूर्णदिने सचन्द्रे।

## गुणप्रसिद्धेऽवततारदेव-श्च्युत्वा स्वमार्गोदयनेऽधिकाये ॥७८॥

अन्वयः—स. देव. स्वमार्गोदयने(सति)च्युत्वा पूर्णदिनेसचन्द्रे गुणप्रसिद्धे अधिकाये शुचौ असिते अब्धितिथौ (ऋ. जी.) । भाद्रे असिते अब्धितिथौ (शान्तिः) । अन्विषे असिते (द्वादश्याम्) (नेमिः) । सचैत्रे असिते अब्धितिथौ (पार्श्व.) । शुचौ असिते (षष्ठ्या) (वीर.) । अवततार ॥७८॥

व्याख्या—सः पूर्वोक्तः त्रिदशाऽवतारी देवः=द्योतनात्मकआत्मा प्रस्तुतकाव्ये वर्ण्यमानस्य तीर्थकृत्पञ्चकस्य जीवात्मा इत्यर्थः स्वमार्गोदयने स्वस्य आत्मनः मार्गस्य=शुद्धेः=सकल कर्मक्षयजनितात्मशुद्धेः उदयने=उदये. यद्वा स्वस्य=स्वकीयस्य मार्गस्य=पथः साधनस्य तीर्थकरनाम-कर्म्मरूपस्य उदयने तीर्थङ्करनामकर्मोदये इतिभावः सति च्युत्वा=दिव्यशरीरात् च्यवनं प्राप्य पूर्णदिने=पूर्णम्=अक्षीणं दिनं यस्मिन् तादृशे. 'एकस्मिन् सावने त्वह्नि तिथीनां त्रितयं यदा । तदा दिनक्षयः प्रोक्तः' इत्युक्तलक्षणैकसावनदिनवृत्ति तिथित्रयात्मकालवाचकदिनक्षयरहिते इति भावः । सचन्द्रे=अनुकूलचन्द्रग्रहशालिनि. यद्वा 'पूर्णदिनेसचन्द्रे' इति समस्तं तस्य 'पूर्णौ=स्वस्थानस्थिततयाऽविकलौ अनुकूलावितिभावः दिनेसचन्द्रौ=सूर्याचन्द्रमसौ यस्मिन् तादृशे. रलयोर्डलयोश्चैव श-सयो र्व-वयोस्तथेति शसयोरैक्यस्मरणात् । तथा गुणप्रसिद्धे=आध्यात्मिकादि सकलकलाकलापकलिततयाऽतिवृष्ट्यादिषड्विधेतिभीतिराहित्येन च शान्त्यादिगुणभूषिते. प्रसिद्धो ख्यात-भूषितो इत्यमरः । शुचौ=आषाढमासे असिते=कृष्णपक्षे, अब्धितिथौ=समुद्रप्रमिततिथौ=चतुर्थ्याम् आषाढ कृष्णचतुर्थ्यामित्यर्थः ( ऋषभजीवः ) । भाद्रे=भाद्रपदमासे असिते=कृष्णे. अब्धितिथौ=सप्तमी तिथौ भाद्रकृष्णसप्तम्यामित्यर्थः ( शान्ति० जीवः ) । अन्विषे=इषात्=आश्विन मासात् अनु=पश्चात् ( भवोमासः ) अन्विषं तस्मिन् कार्तिकमासीत्यर्थः असिते=कृष्णे. द्वादश्यामितिशेषः कार्तिककृष्णद्वादश्यामित्यर्थः ( नेमि० जी० ) । सचैत्रे=चैत्रान्विते असितेऽब्धितिथौ चैत्रकृष्णचतुर्थ्यामित्यर्थः

(पार्श्वजी०) शुचौ असिते 'षष्ठ्या'-मितिशेषः आषाढ़कृष्णषष्ठ्यामित्यर्थः (वीर जी०) अवततार=पूर्वोक्ततत्तद्राज्ञीकुक्षौ अवतीर्णः प्रविष्ट इत्यर्थः। पद्यघटकेषु 'शुचौ, असिते, अब्धितिथौ' इत्येषु पदेषु तन्त्रमावृत्तिर्वा तेन प्रोक्तार्थसङ्घटनम्। शुचिस्त्वयम्—आषाढे इति कृष्णे नीलाऽसित-श्याम० इति चामरः ॥ ७८ ॥

देवावतारं हरिणेक्षितं प्राग्--द्राग् नैगमेषी नृपधाम नीत्वा ॥
तं स्वादिवृध्या शुभवर्द्धमानं, सुरोऽप्यनंसीदपहृत्य मानम् ॥ ७९ ॥

अन्वय.—हरिणा प्रागईक्षितं देवावतार नैगमेषी द्राक् नृपधाम नीत्वा स्वादिवृध्या शुभवर्द्धमान तं सुरोऽपि मानम् अपहृत्य अनंसीत् ॥ ७९ ॥

व्याख्या—हरिणा-सुरेन्द्रेण प्राक्=पूर्वम् ईक्षितं=दृष्टं देवाऽवतारं=दिव्यांशेनाऽवतीर्णम् प्रस्तुतकाव्ये वर्णनीयं तीर्थकृत्पञ्चकं कृष्णवासुदेवं रामबलदेवं च नैगमेषी=तदभिधानादेवता नयविद्या-वणिग्वा द्राक्=शीघ्रं नृपधाम=पूर्वोक्ततत्तन्महीपसदनं नीत्वा=प्रापय्य स्वादिवृध्या=धनादिवृध्या शुभवर्द्धमानं=शुभं वर्द्धमानं यस्य यस्माद्वा तं यद्वा शुभेन=(तीर्थकृत्पक्षे)-श्रुतिमत्यवधिज्ञानलक्षण-कल्याणेन वर्द्धमानम्=वर्द्धिष्णुम्। शुभेन=उत्पत्तेरारभ्य ज्ञानादिलक्षणक्षेमेण वर्द्धते तादृशं तं=वर्णनीयतत्तन्महापुरुषं, मानम्=अहङ्कारम् अपहृत्य=परित्यज्य सुरोऽपि=नैगमेषी अपि ननाम=विनयप्रणतोऽभूत्।

महावीरपक्षेत्वियान् विशेषः—नैगमेषी हिरण्यनैगमेषी देवः नृपधाम=नीत्वा ऋषभदत्तगृहात् सिद्धार्थराजगृहं प्रापय्य स्वादिवृ-

स्या गर्भस्थे भगवति ज्ञातकुलस्य धनधान्यादिवर्द्धनेन हेतुना शुभवर्द्धमान शुभं जगतां ज्ञातकुलस्य वा कल्याणं वर्द्धते अन्तर्भावितण्यर्थतया वर्द्धयतीति शुभवर्द्धमानस्तं, यद्वा उत्पत्तेरारभ्य ज्ञानादिभिर्वर्द्धते इति. गर्भस्थेऽस्मिन् ज्ञातकुलं धनधान्यादिभिर्वर्द्धतेऽस्मादिति वा वर्द्धमानः=शुभः जगतांकल्याणावह सचासौ वर्द्धमानः–तदाख्यश्चेतिशुभवर्द्धमानस्तं तादृशं तं महावीरदेवमित्यर्थः ॥ ७९ ॥

येनाऽवतारा विहिता हितारा, मेयानते विंशतिभिर्नृपेन्द्रैः ॥
श्रद्धादिनासन्नदशाप्रधाना गुणाभिधानाः श्रुतिसंनिधानाः ॥ ८० ॥
सम्यग्दृशं प्राप्य यदङ्गभाजा । ये त्रित्रिकोणैकभवा अवाप्ताः ॥
त एव संख्यामुपयान्ति तेषां । यतस्तदन्ये गणनास्वगम्याः ॥ ८१ ॥

अन्वय —ये अवतारा हितारा न विहिता तेन मेया ( किन्तु ) यत् अङ्गभाजा सदृशं प्राप्य ये त्रित्रिकोणैकभवा अवाप्ता विंशतिभिः नृपेन्द्रैः ( अभिकाङ्क्षिता ) श्रद्धादिनासन्नदशाप्रधानाः गुणाभिधानाः श्रुतिसंनिधाना त एव तेषां भवाः संख्यामुपयान्ति यतस्तदन्ये गणनासु अगम्या. ॥ ८० ॥ ८१ ॥

व्याख्या—ये अवताराः=भवाः ताराः=आत्मानं जगन्ति च तारयितुं क्षमाः, यद्वा हिताराः=हितम्=आत्मनोमोक्षरूपकल्याणम् ऋच्छति=प्राप्नुवन्तीति ते तादृशा न विहिताः न संवृत्ताः ते=अवतारा न मेयाः=परिच्छेद्याः सख्येया इत्यर्थः संख्याकरयोग्या

नेतियावत् , यत्=किन्तु अङ्गभाजा=तत्तीर्थकृदात्मना सम्यग्दृशं=सम्यग्दर्शनं प्राप्य=उपलभ्य सम्यग्दर्शनप्राप्त्यनन्तरमित्यर्थः ये त्रित्रिकोणैकभवाः=( त्रिकोणं=ज्यौतिषशास्त्रोक्तं लग्नात् नवम पञ्चमस्थानं तेन चेह 'पञ्च, नव' च संख्या गृह्यते, कोणशब्दो विदिग्वाची तेन चतुः संख्याग्राह्या तथा च )-त्र्यधिकं त्रिसहितं वा त्रिकोणं=नव त्रित्रिकोणं=द्वादशः तत्सहितम् एकं=प्रथम संख्या त्रित्रिकोणैकं त्रयोदशेत्यर्थस्तन्मिताः भवाः=अवताराः इत्यादिनाथप्रभुणा । त्रायाणां संघ स्त्रिकं=त्रित्वसंख्या, त्रिगुणितं त्रिरावृत्तं वा त्रिकं त्रित्रिकं=नवेत्यर्थस्तन्मिताः=एके=श्रेष्ठा, भवाः नेमिनाथस्वामिना । त्र्यधिकं त्रियुक्तं वा त्रिकोणं=नवसंख्या त्रित्रिकोणं=द्वादशेत्यर्थ स्तत्प्रमिता एके=मुख्या भवाः श्रीशान्तिनाथस्वामिना । त्र्यधिकास्त्रिसहिता वा त्रयः त्रित्रयः=षट् तत्सहितः कोणः=चतुःसंख्या त्रित्रिकोणः=दशेत्यर्थस्तत्परिमिता एके श्रेष्ठा भवाः पार्श्वनाथः स्वामिना । त्रिगुणितं त्रिरावृत्तं वा त्रिकोणं नव संख्या त्रित्रिकोणं सप्तविंशतिरित्यर्थस्तत्परिच्छिन्ना एके=प्रधानभूता भवाः श्रीमहावीरस्वामिना च अवाप्ताः गृहीताः विंशतिभिः=बहुविंशतिसंख्याकैर्नृपेन्द्रैः-नृपैः-भूतलवर्त्तिमहीपालैः इन्द्रैः=शक्रेन्द्रादिभिश्च 'सादरमभिकाङ्क्षिता' इति शेषः कुसिद्धान्तिप्रचारितनानाविधाऽवद्यहिंसादिपापकर्म्माचरणमलीमसशेमुषीमुषितसज्ज्ञानानां जनानां देशनावचनैरात्महितसाधनज्ञानरत्नोद्बोधनार्थमभीप्सिता इत्यर्थः । श्रद्धादिनासन्नदशाप्रधानाः=श्रद्धादिनात्=सम्यग्दर्शनप्राप्तिदिवसात् आरभ्य आसन्नदशा=मोक्षदशा प्रधाना=श्रेष्ठा येषां ते यद्वा श्रद्धादिना=श्रद्धा=सम्यक्श्रद्धानं=सम्यग्दर्शनम् आदिर्यस्य तेन, सम्यग्दर्शनेन आदिपदग्राह्यसम्यग्ज्ञान-सम्यक्चारित्राभ्यां च, अथवा श्रद्धा=शुद्धिः=सम्यग्ज्ञानादिपरिशीलनजनिताऽऽत्मनैर्मल्यं तदादिना आसन्नदशा=मोक्षदशा आत्मनोमुक्ताऽवस्था प्रधानम्=उद्देश्यतया मुख्यभूता येषां ते, श्रद्धादिनात् आसन्नदशायां प्रधानं=बुद्धिर्येषां ते ताहशाः, गुणाभिधानाः=गुणाः सन्त्यस्मिन्निति गुणम्=अनन्त-

गुणशालि अभिधानं=कथनं=देशनावचनं येषां ते तथाविधाः श्रुतिसन्निधानाः=श्रुतौ=कर्णेन्द्रिये सन्निधानं=नैकट्यं श्रव्यचरित्रतया येषां ते यद्वा श्रुतौ=प्रवचने सन्निधानं=सामीप्यंवर्णनीयतया येषां ते तथोक्ताः श्रुतीनां=प्रवचनानां सन्निधानाः=शोभनाश्रया इति वा श्रुतीनाम्=आगमानां मतां=सज्जनानां च निधानाः=निधिरूपा इति वा ते=निरुक्तरूपा एव तेषां=प्रस्तुतकाव्यवर्ण्यमानतीर्थङ्कराणां भवाः संख्या=संख्येयता यद्वा संख्यां=विचारणां प्रस्तुतकाव्येवर्णनीयतया चर्चामित्यर्थ. उपयान्ति=आप्नुवन्ति. यतः=यस्माद्धेतोः तदन्ये=अनुपदगणितव्यतिरिक्ता भवाः गणनासु=संख्याने संख्याकरणे अगम्याः=दुरवबोधाः 'गणनास्वगम्याः' इति समस्तपाठ कल्पने गणनायां सुतरामगम्या इत्यर्थः । कालचक्रस्याऽनादिकालतो बम्भ्रम्यमाणशीलतया भवानामसंख्येयतया इयत्तयाऽवगन्तुं दुःशका इत्यर्थः ॥ ८० ॥ ८१ ॥

एवं श्री आदिदेवप्रमुख मुनिमितार्थाऽवतारैः प्रभाव्ये ।
काव्ये श्राव्ये सतां स्वे मनसिविहसतां वीक्ष्य दक्षप्रयत्नम् ॥
अर्हद्भक्तिं चिरायुर्विपुलमनुभवं वैभवं राज्यभाजाम् ।
दत्तां चित्राङ्गवार्त्ताऽप्युदयमपि चिरं सप्तधाऽऽविर्भवन्ती ॥

इति श्रीसप्तसंधाने महाकाव्ये राज्याङ्के महोपाध्यायमेघविजयगणिविरचिते " अवतारवर्णनोनाम " प्रथमः सर्गः ॥

अन्वय –एव श्रीआदिदेवप्रमुखमुनिमिताऽर्थाऽवतारैः प्रभाव्ये श्राव्ये काव्ये दक्षप्रयत्न वीक्ष्यविहसता सता स्वेमनसि सप्तधाऽऽविर्भवन्ती चित्राङ्गवार्ता अर्हद्भक्तिचिरायु विपुलमनुभव राज्यभाजा वैभवम् उदयमपि च चिरदत्ताम् ॥ ८२ ॥

व्याख्या–उपसंहरति–एवमिति–एवम्=अनेकप्रकारेण श्रीआदिदेवप्रमुखमुनिमिताऽर्थावतारैः श्रीआदिदेवप्रमुखानां=श्रीमदृषभस्वामिप्रभृतीनां मुनिमितानां सप्तसंख्यकानाम् अर्थानां=तत्तच्छलोकवाच्यार्थभूतानाम् अवतारैः आविर्भावैः यद्वा आदिदेवप्रमुखमुनिभिर्मिताः=वाच्यतया परिच्छिन्ना अर्थाः=अभिधेयानि तेषामवतारैः, श्रीआदिदेवप्रमुखैः कृत्वा मुनिमिताः=सप्त अर्थाः=वाच्यानि तेषामवतारैरितिवा प्रभाव्ये प्रभावार्हे प्रभावशालिनीत्यर्थः । श्राव्ये=व्युत्पित्सुकृते श्रावयितुं योग्ये काव्ये=श्रव्यकाव्ये 'सप्तसन्धाना'-भिधाने दक्षप्रयत्नं=सप्तार्थसङ्घटनविषयकनिपुणोद्यमं वीक्ष्य विहसतां=विस्मय हर्ष समुद्भूतस्मितशालिनां सतां=सभ्यानां स्वेमनसि=निजाऽन्तःकरणे सप्तधा सप्तकारेण आविर्भवन्ती=प्रकटी भवन्ती चित्राङ्गवार्त्ता=चित्रा अनेकविधा अङ्गवार्ता अवयवार्था अर्हद्भक्ति=जिनानुरागं, चिरायुः चिरजीविताम्, विपुलमनुभवं=विशालज्ञानं,राज्यभाजां वैभवं राजसम्पदमित्यर्थः । उदयम्=अभ्युदयम् उन्नतिमितियावत् चिरं बहुकालं दत्ताम् । अपिः समुच्चयार्थः ॥ ८२ ॥

अत्रश्लोकेस्रग्धरावृत्तं म्रभ्नैर्याणांत्रयेणत्रिमुनियतियुता स्रग्धराकीर्त्तितेयमितितल्लक्षणात् ।

इति शास्त्रविशारदकविरत्नभट्टारकाचार्यश्रीविजयामृतसूरीश्वर–प्रणीतायां सप्तसंधानमहाकाव्यीय "सरणी"टीकायां

प्रथमः सर्गः समाप्तः ॥ १ ॥

## द्वितीयः सर्गः

—:o—

सुधाशनानामशनान्यभूवं, स्तन्व्यास्तनूजाश्रयणेन सम्यक् ।
शय्याऽनुकूला प्रसरद्दुकूला, मूलात्सचूलाभरणादरेण ॥ १ ॥

अन्वय —सम्यक् तनूजाश्रयणेन तन्व्या सुधाशनानाम् अशनानि अभूवन् (अपरंच) प्रसरद्दुकूला आमूलात् सचूलाभरणा आदरेण (उपरचिता) शय्याऽनुकूला (आसीत्) ॥ १ ॥

व्याख्या-सम्यक्=आबाधाराहित्येन तनूजाश्रयणेन=बालस्य गर्भधारणेन तन्व्याः=कृशशरीराया राज्ञ्याः सुधाशनानां=सुधाभुजां देवानाम् अशनानि=आहारा अमृतोपमभोजनानीत्यर्थः अभूवन् । अपरं च प्रसरद्दुकूला=प्रसरत्=आस्तीर्णं दुकूलं=श्लक्ष्णवस्त्रं सूक्ष्मवस्त्रं वा प्रच्छदपटस्थानीयतया यस्यां सा तादृशी. आमूलात्=मूलात्=चरणात् चरणधार्यदेशादित्यर्थः आरभ्य मूलपर्यन्तं वा सचूलाभरणा=चूडाभूषणसहिता, अङ्घ्रिधार्यस्थानादारभ्य शिरःस्थान पर्यन्तं यथोचित शयनीयोपकरणकलितेतिभावः आदरेण=स्नेहेन पुत्ररत्नजननयोग्यताशालित्वहेतुकसम्माननेनेत्यर्थः उपरचितेति शेषः शय्या=शयनीयं पल्यङ्को वा अनुकूला=स्वाभिरुचिता आसीदिति शेषः. अभूवन्नित्यत्र विभक्तिविपरिणामेन अभूद्वा ॥

अस्मिन्सर्गे षोडशश्लोकपर्यन्तमिन्द्रवज्रावृत्तम् । स्यादिन्द्रवज्रायदितौजगौग इति तल्लक्षणात् ॥ १ ॥

शची सुचीराणि शुचीत्यमुष्यै, ददौ तदौचित्यपदं विचित्य ।
सेवातु देवातुलकामिनीभिश्चक्रे च शक्रेरणया तदीया ॥ २ ॥

अन्वय.—शची शुची इति (इमा) तदौचित्यपद विचिन्त्य अमुष्यै शुचीराणि ददौ (किञ्च) शक्रेरणया देवातुलकामिनीभिः तदीया सेवा चक्रे ॥ २ ॥

व्याख्या—शची=इन्द्राणी शुची=गर्भस्थाऽनुपमपुत्ररत्नशालितया पवित्रेयम् इति हेतोः इमां तदौचित्यपदं=तेषां=दित्सितसुचीरादीनाम् औचित्यं=न्याय्यं योग्यमित्यर्थः पदं=दानीयस्थान विचिन्त्य=विचार्य अमुष्यै=राज्यै सुचीराणि=मनोहरवस्त्राणि ददौ। किञ्च—शक्रेरणया=इन्द्रप्रेरणया देवातुलकामिनीभिः अनुपमदेवाङ्गनाभिः तदीया=राज्ञीसम्बन्धिनीसेवा परिचर्या कुमारभृत्या चक्रे=कृता यमकालंकारः ॥ २ ॥

अपौनरुक्त्याद् बहुमौनभाजा, राजा समाजात् सहसाऽभ्युपेत्य ।
तया समं प्रेमवचोऽपिचोद्यं, श्रद्धाविशुद्ध्यै निजगादसद्यः ॥ ३ ॥

अन्वयः—राजा समाजात् सहसा भभ्युपेत्य अपौनरुक्त्याद् बहुमौनभाजा तया समं श्रद्धा विशुद्ध्यै चोद्य प्रेमवचोऽपि सद्य. निजगाद ॥ ३ ॥

व्याख्या—राजा—पूर्वोक्तो विश्वसेनादिनृपतिः समाजात्—मन्त्रिसुधीसुहृदादिमण्डलीतः सहसा—अतर्कितम् अभ्येत्य—राज्या अभ्यर्णमागत्य अपौनरुक्त्यात्—पुनरुक्तस्यभावः पौनरुक्त्यं तथा न इत्यपौनरुक्त्यं तस्मात् अपुनरुक्तेरित्यर्थः दोहदपूरणेच्छया तदभीप्सित वस्तुनामाख्यातुं सकृदुक्तयाऽपीतिभावः बहुमौनभाजा—लज्जया बहु-चिरं मौनम्—अभाषणशीलतां भजतीति बहुमौनभाक् तया स्वदोहदप्रकटने ह्रिया तूष्णीम्भावमाश्रयन्त्येत्यर्थः तया—वामाप्रभृतिराज्ञ्यासमं—सह श्रद्धा विशुद्धे-श्रद्धा गर्भिणीमनोरथस्तस्या विशुद्धौ—यथा-

वडिज्ञाय तत्पूर्वं अन्यथा वैद्यकशास्त्रवचनानुसारेण सन्ततेर्वैगुण्यापत्तिसम्भवात् चोद्यम्=अनुयोज्यं दोहदविषयकप्रष्टव्यांशगर्भितं प्रेमवचनः=प्रीतिवचनं सद्यः=सपदि निजगाद। आधिकरणिकादिकार्याद्यथासमयं प्राप्तावकाशो नरेशः राज्ञीमुपेत्य सनिर्बन्धमनुयुक्तयापि त्रपाभरवशात् स्वदोहददुःखशीलतामभिव्यञ्जितुमपारयन्त्या राज्या मह तदीयदोहदवुभुत्सया चटुवचनैरालापमकार्षीदिति सरलार्थः। 'दोहदं दौर्हृदं श्रद्धा लालसा' इत्यभिधानचिन्तामणिः। अतर्किते तु सहसा इत्यमरः॥ ३॥

चान्द्रीं क्रियां चक्रिरुपेत्य चान्द्री, सौरी च गौरी दधिरात्मदर्शम् ॥
शैपी च योपाभरणाद्यनैपीत्, तस्या उपास्याविधिरेवमासीत् ॥ ४ ॥

अन्वय —चान्द्री उपेत्य चान्द्रीं क्रिया चक्रि गौरी गौरी च (उपेत्य) आत्मदर्शं दधि शैपी योपाऽऽभरणादि अनैपीत् एव तस्या उपास्याविधिरासीत् ॥ ४ ॥

व्याख्या—चान्द्री—चन्द्रशक्तिः उपेत्य-राज्ञीसमीपमागत्य चान्द्रीं—चन्द्रसम्बन्धिनीं क्रियां-कार्यम् दिनानुदिनशरीर-लावण्यानुपचयलक्षणं चक्रिः—कृतवती, गौरी गौरी च—तत्तन्नामिका देवी उपेत्य आत्मदर्शं—दर्पणं दधिः—धारितवती। शैपी—नागकन्या योपाभरणादि—स्त्रीजनधारणयोग्यभूषण-वसनादिकम् अनैपीत्—उपानीतवती। एवंरूपः तस्याः—राज्याः उपास्याविधिः—देवकन्या-नागकन्यादिकर्तृक परिचर्या प्रकार आसीत् अनुप्रासः॥ ४॥

उच्चामरीवाचमनेन चामरी—द्वयींदधानाभजतेस्म चामरीम् ।

सेवारसान्नाप्सरसस्तदन्तिकं, जहुर्मुहुर्भक्तिमुहूर्तभावनैः ॥ ५ ॥

अन्वय —उच्चामरीव अमरी चामरीं द्वयीं दधाना आचमनेन(तां) भजतेस्म अप्सरस. सेवारसात मुहुर्भक्तिमुहूर्तभावनैस्तदन्तिक न जहुः ॥ ५ ॥

व्याख्या—उच्चामरीव=चमरी-चामराख्यव्यजनोपयोगि पुच्छशालि महिषाकृतिकमृगविशेषस्त्रीजातिः सैव चामरी उत्-उत्कृष्टा चामरी उच्चामरी सेव अमरी-देवाङ्गना चामरीं-चामर-चमरपुच्छकृतव्यजनसम्बन्धिनीं द्वयीं-द्वितयीं द्वित्वसंख्यां चामरयुगल मित्यर्थः दधाना धारयन्ती आचमनेन-मुखादिप्रक्षालनेन वैधकर्मादिना वा लक्षणया आचमनक्रिया सम्पादनेनेत्यर्थः भजतेस्म-सेवतेस्म । अप्सरसश्च सेवारसात्-परिचर्याजनितानुरागात् मुहुः-अभीक्ष्णं भक्ति मुहूर्तभावनैः-भक्तीनां-गर्भिण्युचितोपचाराणां मुहूर्ते-अल्पकाले मुहूर्त्तं मुहूर्तमित्यर्थः भावनैः-चिन्तनैः प्रतिक्षणं गुर्विण्युचितोपचारचिन्तन-सम्पादनादिनेत्यर्थः तदन्तिकं-तस्याः-राज्ञ्या अन्तिकं-सदेशदेशं न जहुः-परितत्यजुः। अनुप्रासः ॥ ५ ॥

सांकर्य कार्यं प्रविचार्य वार्यं, विरोधमुत्सार्य समर्त्तवस्ते ॥
सामान्यमाधायसमा-धिसारा-धिकारमीयुर्भुविनिर्विकाराः ॥ ६ ॥

अन्वयः—ते समर्त्तवः सांकर्यकार्यं वार्यं विचार्य विरोधम् उत्सार्य सामन्यमाधाय भुविनिर्विकारा. समाधिसाराधिकारमीयु· ॥ ६ ॥

व्याख्या—ते=प्रसिद्धाः समर्त्तवः=समे=सर्वे ऋतवः='शिशिरः पुष्पसमयो ग्रीष्मो वर्षा शरद्धिमः । माघादिमासयुग्मैस्तु ऋतवः षट्क्रमादिमे' इत्युक्तरूपाः सांकर्यकार्यं=स्वस्वकार्यसांकर्यं, वसन्ते शिशिरकार्यं शिशिरे च वसन्तस्येत्यादिरूपं वार्यं=परित्याज्यं विचार्य

विमृश्य विरोधं न उत्मार्य=परिहृत्य सामान्यं=समानतां तुल्यवृत्तित्वामित्यर्थ आधाय=स्वीकृत्य समाधिसाराधिकारं=समाधिना नियमेनव्यवस्थया सारं=न्याय्यं स्वस्वोचितमित्यर्थः अधिकारं=कार्यकारित्वम् यद्वा–समाधिसारं=शान्तिप्रधानम् अधिकरं=नियोगम् ईयुः प्राप्तवन्तः । कतरः कीदृशाः ? भुवि=भूतले निर्विकारा=निः=न सन्ति विकाराः=व्याधयो येभ्यस्ते तथोक्ताः रोगाद्युपद्रवाऽजनकाः ॥ समाधिर्नियमे ध्याने नीवाके च समर्थने इति मेदिनी, सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु इत्यमरः ॥ ६ ॥

काचित्तु साचिव्यमलङ्क्रियायां, दधौ सुरी स्नानविधानतोऽन्या ।
काचित् समस्या धरणात्समस्याः, पप्रच्छ काप्यच्छधियाऽप्यतुच्छा ॥ ७ ॥

अन्वयः—काचित् सुरी अलक्रियायाम् अन्या (सुरी) स्नानविधानतः काचित् (सुरी) समस्या धरणात् (तस्याः) साचिव्य दधौ कापि अतुच्छा अच्छधिया समस्याः पप्रच्छ ॥ ७ ॥

व्याख्या—काचित्=अनिर्दिष्टनाम्नी सुरी=सुरीवाचरतीति सुरीयतीति सुरी देवांगनेव देवी परिचारिका अलङ्क्रियायां=प्रसाधनकर्मणि अन्या=अपरा स्नानविधानतः=स्नानादिकर्मसम्पादनविधौ सार्वविभक्तिकस्तसिः । काचित् सुरी समस्या धरणात्=गूढाभिप्रायधारणात् साचिव्यं=साहाय्यं दधौ 'तस्याः' इति शेषः कापि अतुच्छा अहीना=उत्कृष्टा गूढाशयेति यावत्=अच्छधिया=निर्मलाशयेन समस्याः=गूढाभिप्रायकविषयान् यद्वा राज्या विदुपितरत्वात् समस्याः=संक्षेपेणोक्तस्य श्लोकपादादेः परकृतेन स्वकृतेन वाऽवशेषेण भागान्तरेण सद्धटनारूपां गूढाभिप्रायप्रहेलिकादिरूपां वा कविक्रियां पप्रच्छ=अनुयुयोज ॥ ७ ॥

पात्राण्यमर्त्या ननृतुः पदे पदे, समुन्ननादाऽऽनकदुन्दुभिर्मुदे ।
घनाघनस्य भ्रमतो वदावदे, मयूरवर्गे नटनान्निसर्गतः ॥ ८ ॥

अन्वयः—आनकदुन्दुभि. मुदे समुन्ननाद अमर्त्या पात्राणि पदेपदे ननृतु., घनाघनस्य भ्रमत वदावदे मयूरवर्गे निसर्गतः नटनात् ॥ ८ ॥

व्याख्या—आनकदुन्दुभिः=आनकः=प्रोत्साहकः दुन्दुभिः=देववाद्यविशेषः मुदे=सुर-नरादीनां प्रीत्यै समुन्ननाद=दध्वान अत-
एव अमर्त्याः देवाः पात्राणि=नाट्यार्थाऽभिनयशीलनायकादिरूपाः सन्तः पदेपदे=प्रतिस्थानं ननृतुः=नृत्यंकृतवन्तः। यद्वा अमर्त्याः
पात्राणि=दिव्यनाट्यार्थाभिनेतॄन् गन्धर्वाद्यप्सरादीन् वा ननृतुः अन्तर्भावितण्यर्थतया नर्तयामासुरित्यर्थः तथाहि-घनाघनस्य=
वर्षुकमेघस्य 'वर्षकाब्दो घनाघनः' इत्यमरः भ्रमतः=प्रावृषि नभसि सञ्चरतः सतः वदावदे=मुहुः केकामातन्वाने मयूरवर्गे=मयूरसंहतो
निसर्गतः स्वभावादेव नटनात् नर्तनात् नृत्यप्रवणत्वदर्शनादित्यर्थः ननृतुरि त्यर्थः । अत्रोदात्तालंकारः ॥ ८ ॥

दिवानिशं केलिकलाकलापैः, रालीषु तालीविधिनोपजापैः ।
सत्याः सुदत्या दिवसाः सुखेन, सुर्यः सतूर्या गमयाम्बभूवुः ॥ ९ ॥

अन्वय—दिवानिशम् आलीषु केलिकलाकलापैः (तथा) तालीविधिना उपजापै. सुदत्या सत्या. (राज्ञ्या.) दिवसाः सतूर्या. सुर्य सुखेन गमयाम्बभूवुः ॥ ९ ॥

व्याख्या—दिवानिशं=रात्रिन्दिवम् आलीषु=सखीषु केलिकलाकलापैः=क्रीडाविधानैः नृत्यादिकलाविधानैश्च तथा तालीविधिना=

तालीदानेन उपजापैः=उपांशुजपैः रहस्याख्यानैर्वा मुदत्याः=शोभनदशन (दन्त) शालिन्याः सत्याः राज्याः दिवसाः=दिनानि मनूर्याः=वाद्यविशेषसहिताः मूर्याः=देव्यः तत्तुल्याः परिचारिका वा सुखेन=अक्लेशेन गमयाम्बभूवुः=यापयामासुः ॥ ९ ॥

निश्चक्रमुः शक्रमुदा तदेवं, मासा विलासाऽतिशयान्नवापि ।
समन्विताः सप्तदिनैः पुरोधः, प्रजप्तमन्त्रैर्मुदितावरोधम् ॥ १० ॥

अन्वय.—तदेवं शक्रमुदा ( उपलक्षिताः ) सप्तदिनैः समन्विताः नवापि मासा. विलासाऽतिशयात् पुरोधः प्रजप्तमन्त्रैर्मुदिताऽवरोधं (यथास्यात्तथा ) निश्चक्रमुः ॥ १० ॥

व्याख्या—तदेवं शक्रमुदा=इन्द्रदर्पेणोपलक्षिताः सप्तदिनैः समन्विताः समेताः नवापि मासाः विलासातिशयात्=आनन्दाऽतिरेकात् विविध विनोदातिरेकेण वा पुरोधसा=पुरोहितेन प्रजप्तानि=असकृदुच्चारितानि मन्त्राणि शान्तिमन्त्राणि तैः मुदितावरोधं=मुदितः=हृष्टः अवरोधः=अन्तः पुरजनो यस्मिन् कर्मणि तद्यथास्यात्तथा निश्चक्रमुः=निःक्रान्ताः व्यतीता इत्यर्थः ॥ १० ॥

शान्तासु सर्वासु दिशासु रेणु–र्न रेणुबाधां तु मनाग् व्यधासीत् ॥
दध्वान देवाध्वनि दुन्दुभीनां, नादः प्रसादो नभसोऽम्भसोऽभात् ॥ ११ ॥

अन्वय.—सर्वासु दिशासु शान्तासु रेणुः मनाक् रेणुबाधां न व्यधासीत् देवाध्वनि दुन्दुभीनां नादः दध्वान नभसः प्रसादः अम्भसः अभात्

( अम्भस. प्रसादो नभसोऽभात् । नभसो ऽम्भसश्च प्रसादोऽभात् ) ॥ ११ ॥

व्याख्या—सर्वासु प्राच्यादिषु दिशासु शान्तासु=प्रसन्नासु सतीषु रेणुः=धूलिः मनाक्=अल्पमात्रामपि रेणुबाधां=धूलीवर्षणादिजनितदुःस्थितिं न व्यधासीत्=नाऽकार्षीत् । किञ्च देवाध्वनि=आकाशे दुन्दुभीना=देववाद्यविशेषाणां नादः दध्वान ध्वनिरजनिष्ट नभसः आकाशस्य प्रसादः=निर्मलत्वादिरूपः अम्भसः अभात् जलस्याभूदित्यर्थः, अम्भसो वा प्रसादः नभसोऽभात् । यद्वा नभसः अम्भसश्च प्रसादोऽभात् उभे अपि प्रसन्ने अभूतामित्यर्थः । निदर्शनालंकारः ॥ ११ ॥

ग्रहेषु शुद्धोच्चकृताग्रहेषु, लोकम्पृणे प्राप्तघृणे ऽनृणे च ॥
लोके पुनश्चित्रकृताऽवलोके, भावस्तदाऽभूत् सुकृतानुभावः ॥ १२ ॥

अन्वय.—ग्रहेषु शुद्धोच्चकृताग्रहेषु (सत्सु) लोके (च) पुन. लोकम्पृणे प्राप्तघृणेऽनृणे च चित्रकृतावलोके च ( सति ) तदा सुकृतानुभाव. भाव ( लोकानाम् ) अभूत् ॥ १२ ॥

व्याख्या—ग्रहेषु=सूर्यादिसप्तग्रहेषु शुद्धोच्चकृताग्रहेषु=शुद्धे=निर्दोषे उच्चे=उच्चस्थाने मेषादितुङ्गस्थाने कृतः आग्रहः=सम्यक्स्थितिर्यैस्ते शुद्धोच्चकृताग्रहास्तेषु तादृशेषु यद्वा शुद्धाः=सूर्यगत्वादिवैगुण्यरहिताः ते च ते उच्चकृताग्रहाश्चेति शुद्धोच्चकृताग्रहास्तेषु तादृशेषु सत्सु अत्रेदंबोध्यम् 'अर्काद्युच्चान्यजवृषमृगकन्याकर्कमीन दिग्दहनार्ष्टाविंशतितिथीपुनक्षत्रविंशतिभिः ॥ ११ ॥ स्वोच्चतः सप्तमंनीचमिति आरम्भसिद्धौ राशिद्वारे । इति सूर्यादीनां सप्तानां ग्रहाणा मेष–वृषभादयोराशयो यथाक्रममुच्चस्थानानि. स्व स्व तुङ्गापेक्षया

परमोच्चा नीचेषु परमनीचा इति तदर्थः । अत्रांश सप्तमस्थानानि च नीचानि. तत्रोच्चेष्वपि दशमादयो राशित्रिंशांशा यथाक्रममुच्चेषु परमोच्चा नीचेषु परमनीचा इति तदर्थः ! अत्रांश सप्तमस्थानानि च नीचानि. तत्रोच्चेष्वपि दशमादयो राशित्रिंशांशा यथाक्रममुच्चेषु तदुक्तं लघुजातके—रविणाऽस्त-मितोभागः । यथाह नारदः—त्रिंशद्भागात्मकं लग्नम् इति । सूर्यप्रत्यासत्तिर्ग्रहाणामस्तमयो नाम । तदुक्तं राजमृगाङ्के—स्वोच्चे पूर्णं, स्वर्क्ष-मयो योगोवियोगस्तूदयोभवेत्' इति । तेच स्वोच्चस्थाः फलन्ति नास्तगा नापि नीचगाः । तदुक्तं राजमृगाङ्के—स्वोच्चे पूर्णं, स्वर्क्ष-केऽर्धं, सुहृद्भे पादं, द्विड्भेऽल्पं, शुभंखेचरेन्द्रः । नीचं स्थायी नास्तगो वा न किञ्चोत्पापं नूनं स्वत्रिकोणे ददाति । इति अत उक्तं 'शुद्धोच्चक्रनाग्रहंम्निति । एवं च सति यस्य जन्मसमये पञ्चादिकाग्रहाः स्वोच्चास्थाभवन्ति स एव तुङ्गोभवति । तदुक्तं कूटस्थीये—सुखिनः प्रकृष्टकार्या राजप्रतिरूपश्च राजानः । एक द्वि-त्रि चतुर्थां जायन्तेऽतः परं दिव्याः । इति' लोके=जने च लोकम्पृणे=जनता-नन्दविधायिनि, प्राप्तघृणे=दीनाऽनाथजनविषयकाऽनुग्रहशालिनि अधिगतावद्यकर्म्मकारुण्ये वा 'कारुण्यं करुणा घृणा इत्यमरः' । अनृणे=समृद्धिसम्पन्नतयाऽऽधमर्ण्यरहिते, चित्रकृताऽवलोके=सचित्रीकृतावलोके च सति सुकृताऽनुभावः=सुकृतं=पुण्यं तज्जनककर्म्मा-दीत्यर्थः अनुभावयति=चिन्तयतीति स तादृशः भावः=स्वभावः अभिप्रायो वा चेष्टा वा तदा लोकानामितिशेषः अभूत् । अन्त्यानु-प्रासः भावः सत्ता स्वभावाऽ-भिप्रायचेष्टा-त्म जन्मसु इत्यमरः ॥ १२ ॥

आरोग्य-भाग्या-ऽभ्युदया जनानां, प्रादुर्बभूवुर्विगतैजनानाम् ॥

वेपाविशेषान्मुदिताननानां, प्रफुल्लभावाद्भुवि काननानाम् ॥ १३ ॥

अन्वय —भुवि विगतैजनानां वेपाविशेषान्मुदिताननानां जनानां ( विगतजनानां ) प्रफुल्लभावात् काननानां (च) आरोग्य-भाग्या-

ऽभ्युदया' प्रादुर्बभूवुः ' ॥ १३ ॥

व्याख्या—भुवि=भूतले, विगतैजनानां=विगतं=निवृत्तम् एजनं=कम्पनं परिपन्थ्यादिजनितत्राससम्भूतगात्रादिकम्पो येषां ते यद्वा विशेषेण गतं=प्राप्तम् एजनं=कम्पः=शृङ्गारादिरसाऽनुगुणः सात्विकभावविशेषो यैस्ते तेषाम् तत्रत्यानां जनानां रसिकत्वा च्छृङ्गाररससमुद्भव एव कम्पो न वैरिप्रभवोऽपि समजनिष्ट। काननपक्षे—विगतम् एजनं=महावातादिजनितो महाकम्पो येषां ते तादृशानां यद्वा विभिः=पक्षिभिः गतं=प्राप्तम् एजनं=कम्पो यैस्ते तेषां तथोक्तानाम्। वेषाविशेषात्=वेषस्य=नेपथ्यस्य भूषणवसनादिभिरात्मप्रसाधनस्य आ=सर्वतोभावेन विशेषात्=अतिशयात् मुदिताननानाम्=प्रसन्नमुखानाम् यद्वा वेषस्य=वसनाऽलङ्कारणादिना निज· परिष्करणस्य अविशेषात्=साधारणात् मण्डनां-ऽशुकादिसामान्ये सत्यपि मुदिताननानाम्=प्राकृतसौन्दर्यसम्पन्नतया सदा प्रसन्नवदनानाम् जनाना=लोकानाम्। प्रफुल्लभावात्=मकरन्दविन्दमिलिन्दगुञ्जित-पुष्प-पल्लव-फलसमृद्धतया विकसितत्वात् काननानां=वनानां च आरोग्य-भाग्या-ऽभ्युदयाः=आरोग्य=नैरुज्यं, भाग्यम्=अनुकूलदैव (त्व)म् अभ्युदयः धनधान्यादिवृद्धिः, काननपक्षे च—आरोग्यं=(रुजनं) रोगः=भञ्जनमामर्दनम् स नास्त्यस्यासौ अरोगस्तस्यभावस्तथा ) हस्त्यादिकर्तृकशाखाभङ्गसमूलोन्मूलनादिराहित्यम्, भाग्यं=शोभनाधिपतिशालितया. अभ्युदयः=फलपुष्पादिसमृद्धिः प्रादुर्बभूवुः=प्रकटीबभूवुः । अन्त्याऽनुप्रासः तुल्पयोगिता श्लेषश्चालङ्काराः ॥ १३ ॥

**प्रीत्या विशिष्टा नगरेषु शिष्टाः, काराविकारा न कृताधिकाराः ।**

बाधा नचाऽधान्नरकेऽसुरोऽपि । परोऽपि नारोपितवान् प्रकोपम् ॥ १४ ॥

अन्वय—नगरेषु शिष्टा प्रीत्या विशिष्टाः, कृताधिकाराः कारात्रिकाराः न ( आगमन् ) नरके ( नैरयिकजीवेषु ) असुरोऽपि बाधा नाऽधात् । परोऽपि प्रकोपं ( कस्यापिविषये ) नारोपितवान् ॥ १४ ॥

व्याख्या—नगरेषु शिष्टाः=तत्तत्कर्मणि नियोजिता अधिकारिजनाः सज्जना वा प्रीत्या=हर्षेण विशिष्टाः=युक्ताः, कृताधिकाराः= कारागाराधिकृतपुरुषाः काराविकाराः=कारा=बन्धनालयः लक्षणया तद्रक्षपुरुषास्तद्विषये विकारः=प्रकृतेरन्यथाभावः क्रुद्धत्वचण्डत्वा- दिरूपो येषां ते तथाविधा न आगमन्निति शेषः । नरके=रत्नप्रभादौ 'नैरयिकजीवेषु' इति शेषः असुरोऽपि=परमाधार्मिकोऽपि बाधाः= नारकीयपीडाः न अधात् । परः=अन्यः शास्त्रवादिरपि प्रकोपं=प्राचण्ड्यं नारोपितवान् कस्यापिविषये नोपयोजितवान् सोऽपि प्रशा- न्तस्वभावोऽभूदितिभावः । वृत्त्यनुप्रासः, दीपकम्, अर्थापत्तिश्चालङ्काराः ॥ कारा स्याद्बन्धनालये इत्यमरः ॥ १४ ॥

मृगेऽङ्गसारेऽर्कविदोः प्रभादौ, कर्कोदये देवगुरोः सुधांशोः ।
शनेस्तुलाभे वृषभे सुकाव्ये, तमोव्ययेऽभूज्जिनदेवजन्म ॥ १५ ॥

अन्वय—अङ्गसारे मृगे अर्कविदोः प्रभादौ कर्कोदये देवगुरोः सुधांशोः शनेः तुलाभे सुकाव्ये वृषभे व्यये तमः जिनदेवजन्म अभूत् ॥१५॥

व्याख्या—अङ्गसारे तनुभावे मृगे मकरे अर्कविदोः सूर्यबुधयोः स्थितयोः प्रभादौ प्रकृष्टश्चासौभश्चेति प्रभः सआदिर्यस्य तस्मिन् प्रभादौ प्रकृष्टनक्षत्रादौ कर्कोदये कर्कराशौ देवगुरोः बृहस्पतेः सुधांशोश्चन्द्रस्य स्थितिसत्त्वे सतीतिशेषः तुलाभे तुलाराशौ

नक्षत्रे शनेः शनैश्चरस्य वृषभे वृषनक्षत्रे सुकाव्ये शुक्रे व्यये व्ययस्थाने तमः राहुः एतत्समये जिनदेवजन्म जिनेन्द्राणां जनिः अभूत् अजनिष्ट ॥ १५ ॥

ज्येष्ठेऽसिते विश्वहिते सुचैत्रे, वसुप्रमे शुद्धनभोऽर्थमेये ।
साङ्के दशाहे दिवसे सपोषे, जनिर्जिनस्याऽजनि वीतदोषे ॥ १६ ॥

अन्वयः—वीतदोषे, ज्येष्ठेऽसिते विश्वहिते (शान्ते)। सुचैत्रेऽसिते वसुप्रमे ( ऋषभस्य )। शुद्धनभोऽर्थमेये (नेमेः)। सपोषेऽसिते दशाहे (पार्श्वस्य)। सुचैत्रे सिते विश्वहिते ( वीरस्य ) सुचैत्रे सिते साङ्के ( रामस्य )। (भाद्रे) असिते वसुप्रमे (कृष्णस्य) जिनस्य जनिः अजनि ॥ १६ ॥

व्याख्या—वीतदोषे=वीताः=अपगताः दोषाः=ग्रहवैगुण्यादिरूपा यत्र तादृशे. ज्येष्ठेऽसिते=कृष्णपक्षे विश्वहिते=त्रयोदशीतिथौ ज्येष्ठकृष्णत्रयोदश्यामित्यर्थः श्रीशान्तिनाथाख्यस्य। सुचैत्रे=चैत्रमासे असिते, वसुप्रमे=अष्टमीतिथौ चैत्रकृष्णाष्टम्यामित्यर्थ ऋषभनाम्नः। शुद्धनभोऽर्थमेये=शुद्धस्य=शुभ्रस्य वर्द्धिष्णुचन्द्रचन्द्रिकाधवलितस्य नभसः=श्रावणमासस्य अर्थमेये=पञ्चमीतिथौ श्रावणशुक्लपञ्चम्यामित्यर्थः श्रीनेमिनाथाभिधानस्य। सपोषे=पौषमासेऽसिते, दशाहे=दशमीतिथौ पौषकृष्णदशम्यामित्यर्थः श्रीपार्श्वनाथनामधेयस्य। सुचैत्रे सिते=शुक्लपक्षे विश्वहिते चैत्रशुक्लत्रयोदश्यामित्यर्थः श्रीवीरविभुस्वामिनः। सुचैत्रे सिते=शुक्लपक्षे साङ्के=दिवसे अङ्कमिततिथौ नवमीतिथौ चैत्रशुक्लनवम्यामित्यर्थः श्रीरामचन्द्रबलदेवस्य। असिते वसुप्रमे 'भाद्रे' इति शेषः भाद्रकृष्णाष्टम्यामित्यर्थः कृष्णवासुदेवस्य। जिनस्य=रागादिजेतृत्वात् तच्छीलस्य जनिः=जन्म अजनि=अभूदित्यर्थः॥ अत्र 'असिते, विश्वहिते, सुचैत्रे वसुप्रमे'

इत्येतेषु पदेषु 'सिते' इतिच्छेदपक्षे तत्र च तन्त्रमावृत्तिर्वा तेनोक्तार्थ लाभः ॥ १६ ॥

उक्तार्थमेव व्यासेन स्पष्टमाह—

**मधावष्टम्यां तत्त्वमदिवसे विश्वमहिते-ऽसिते ज्येष्ठे पञ्चम्यहनिनभसो भाद्रबहुले ॥**

**मधावष्टम्यां तत्त्वमदिवसे विश्वमहिते-ऽसिते ज्येष्ठे पञ्चम्यहनिनभसो भाद्रबहुले ॥**

**तदष्टम्यां पोषे दशमदिवसे प्रौढविभवै-र्महोत्साहे पूर्वं प्रसरति विभोर्जन्मसमयः ॥ १७ ॥**

अन्वय — पूर्वं प्रौढविभवैः महोत्साहे प्रसरति सति मधौ असितेऽष्टम्याम् ( ऋषभस्य )। ज्येष्ठे असिते विश्वमहिते ( शान्तिनाथस्य )। नभसः पञ्चम्यहनि सिते ( नेमिनाथस्य )। पोषेऽसिते दशमदिवसे (पार्श्वस्य)। मधौ सिते विश्वमहिते (वीरस्य)। मधौ सिते तत्त्वमदिवसे (रामस्य)। भाद्रबहुले तदष्टम्या (श्रीकृष्णस्य)। विभोर्जन्मसमयः (आसीत्)

व्याख्या—पूर्वं=जननात्प्राक् प्रौढविभवैः=प्रौढैः गर्भवासादारभ्यानुदिनमुत्तरोत्तरं प्रवृद्धैः, यद्वा निपुणैः समस्तजनताभरणक्षमैरित्यर्थः विभवैः=धनधान्यसमृद्धिभिः महोत्साहे=प्रभूतोत्साहे सर्वजनानामिति शेषः प्रसरति=व्याप्नुवति सति। मधौ=चैत्रमासे असिते=कृष्णपक्षे अष्टम्याम्=अष्टमीतिथौ चैत्रकृष्णाष्टम्यामित्यर्थः ऋषभस्वामिनः। ज्येष्ठे=वैशाखमासाव्यवहितोत्तरवर्त्तिमासे, असिते, विश्वमहिते=त्रयोदशीतिथौ ज्येष्ठकृष्णत्रयोदश्यामित्यर्थः शान्तिनाथस्य। नभसः=श्रावणमासस्य सिते=शुक्लपक्षे पञ्चम्यहनि=पञ्चमीतिथौ श्रावणशुक्लपञ्चम्यामित्यर्थः नेमिनाथस्वामिनः. पोषे=सहस्यमासे मार्गशीर्षमासाव्यवहितोत्तरवर्त्तिमासे असिते=शुक्लेतरपक्षे, दशमदिवसे=दशमी तिथौ पौषकृष्णदशम्यामित्यर्थः पार्श्वनाथस्य। मधौ सिते=कृष्णेतर पक्षे विश्वमहिते चैत्रशुक्लत्रयोदश्यामित्यर्थः

श्रीवर्द्धमानस्वामिनः । मधौ सिते=शुभ्रपक्षे तन्नवमदिवसे=नवमीतिथौ चैत्रशुक्लनवम्या मित्यर्थः श्रीरामचन्द्रबलदेवस्य । भाद्रबहुले= भाद्रस्य=भाद्रपदमासस्य बहुले=कृष्णपक्षे तदष्टम्यां भाद्रकृष्णाष्टम्यामित्यर्थः श्रीकृष्णवासुदेवस्य । विभोः=प्रभोः जन्मसमयः=उत्पत्तिकालः आसीत् ॥ अत्रापि 'मधौ, विश्वमहिते, असिते' इत्येतेषु पदेषु 'सिते' इतिच्छेदकल्पने तत्पदे च तन्त्रमावृत्तिर्वा तेनोक्तार्थलाभः । स्याच्चैत्रे चैत्रिकोमधुः इति. श्रावणे तु स्यान्नभाः श्रावणिकश्च सः इति. कृष्णे नीला-ऽसित-श्याम-काल-श्यामल-मेचकाः इति. शुक्ल-शुभ्र-शुचिश्वेत-विशद-श्येत-पाण्डराः । अवदातः सितोगौर इति. स्युर्नभस्य प्रौष्ठपद-भाद्र-भाद्रपदाः समा इति. पौषे तैष-सहस्यौ द्वौ इति चामरः । बहुलः कृष्णपक्षेऽग्नौ ना. त्रिषु प्राज्य-कृष्णयोः ॥ मेदिनी ॥ अत्र श्लोके शिखरिणीवृत्तम् रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति लक्षणात ॥ १७ ॥

मधुशुचिपरभाद्रे, सन्नभस्संनियोगे वसुनवनिधिविश्वानन्दिपञ्चाङ्किते्ऽह्नि ।
सहपरदशमानाद्युत्सवे जायमाने-ऽजनि रजनिविरामे जन्म हर्षाज्जनन्याः ॥१८॥

अन्वयः—मधुशुचिपरभाद्रे सन्नभ. सन्नियोगे वसुनवनिधिविश्वानन्दिपंचाङ्किते्ऽह्नि सहपरदशमानाद्युत्सवे जायमाने सति जनन्याः हर्षात् रजनिविरामे जन्म अजनि ॥ १८ ॥

व्याख्या–मधुशुचिपरभाद्रे मधुश्चैत्रः शुचिपरः शुचिराषाढः परोऽग्रे यस्मात् स शुचिपरो ज्येष्ठः भाद्रः भाद्रमासः तस्मिन् सन्नभः सन्नियोगे सन् शोभनश्चासौ नभसः श्रावणस्य सन्नियोगः संबन्ध स्तस्मिन् तथोक्ते वसुनवनिधिविश्वानन्दिपंचांकितेऽह्नि तथा च मधो-

श्रेवम्य रम्यंकिते चैत्रकृष्णाष्टम्या श्रीमदृषभस्वामिनः एवं चैत्रशुक्ल नवसंख्यांकितेऽह्नि रामचन्द्रस्य शुचिपरे ज्येष्ठे विश्वानन्दि त्रयोदश्यंकिते ज्येष्ठकृष्णत्रयोदश्या शान्तिनाथस्य भाद्रे वस्वंकितेऽह्नि भाद्र कृष्णाष्टम्यां कृष्णस्य सन्नभः मन्नियोगेपञ्चांकिते श्रावणशुक्लपञ्चम्यां श्रीनेमिनाथस्य मधुविश्वानन्दयकितेऽह्नि चैत्रशुक्लत्रयोदश्यां श्रीवीरप्रभोः सहपरदशमानादौ सहसः सहपरः पौषस्तस्यदशमानादौ अङ्किते पौषकृष्णदशम्या श्रीपार्श्वनाथस्य जनन्यामातुः हर्षात्प्रमोदात् उत्सवे महोद्भवे जायमाने क्रियमाणे सति रजनि विरामे निशावसाने जनिरुत्पत्तिर्जन्मेत्यर्थः अजनि अभूव् ॥ १८ ॥ अत्रश्लोकेमालिनीच्छन्दः ननमयययुतेयंमालिनीभोगिलोकैरितितल्लक्षणात् ॥

यो लक्ष्मणासंगत एव देवो, गवाऽद्भुतत्विड् हरिणात्मनाऽयम् ।
सुरर्षभाऽर्च्यक्रमवारिजेन, रराज राजव्रज पूज्यमूर्त्तिः ॥ १९ ॥

अन्वयः—राजव्रजपूज्यमूर्त्तिः अद्भुतत्विट् हरिणात्मना ( उपलक्षित. ) य. देव गवालक्षणा संगत एव अयम् सुरर्षभार्च्य क्रमवारिजेन रराज ॥ १८ ॥

व्याख्या—राजव्रजपूज्यमूर्त्तिः=राज्ञां महीपतीनां व्रजेन=समूहेन पूज्या=अर्हणीया मूर्त्तिः=शरीरं स्वरूपं यस्य स तथोक्तः, अद्भुतत्विड्=अद्भुता=लोकातिशायितयाऽऽश्चर्यकारिणी त्विट्=कान्तिर्यस्य स तादृशः हरिणात्मना=हरिणस्य=विष्णोरिव शिवस्येव ना उदारः आत्मा=स्वभावः बुद्धिर्वा तेन यद्वा हरिणा=स्वर्णेन स्वर्णसच्छायेनेत्यर्थः अथवा हरिणा=पीतेन हरिद्राभच्छविच्छुरितेनेत्यर्थः आत्मना=देहेन । उपलक्षितः यः देवः=दीप्तिमान् घात्यन्तरायादिकर्मविजिगीषुर्वा श्रीमान् ऋषभदेवः गवा=वृषभेण तदाकृति-

सुरर्षभार्च्यक्रमवारिजेन=सुरर्षभैः=शक्रेन्द्रादिभिः अर्च्येन=पूजनीयेन केनेत्यर्थः लक्ष्मणा=लाञ्छनेन सगतः=युक्तः अयम्=असौ क्रमवारिजेन=चरणारविन्दद्वन्द्वेन रराज=शुशुभे । गोष्ठा-ऽध्व-निवहा व्रजाः इति. मूर्त्तिः काठिन्य-काययोरितिचामरः ।

शान्तिनाथपक्षे—गवाद्भुतत्विड्=गोः=सूर्यस्येव अद्भुता त्विड् यस्य सः, राजव्रजपूज्यमूर्त्तिः=वर्णितार्थः यः देवः शान्तिनाथस्वामी हरिणात्मना=मृगरूपेण लक्ष्मणा=चिह्नेन संगतः अयं सुरर्षभार्च्यक्रमवारिजेन रराज । गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयीदृग्बाणदिग्वाग्भूष्वप्सुभूम्नि चेतिमेदिनी । कलङ्का-ऽङ्कौ लाञ्छनं च चिह्नं लक्ष्म च लक्षणमित्यमरः ।

नेमिनाथपक्षे—गवाद्भुतत्विड्=गवोः=नेत्रयोः अद्भुतात्विट्=शोभायस्य सः यद्वा गोषु=इन्द्रियेषु विषयेअद्भुता=ऽसाधारणतया विस्मयजननी त्विड्=व्यवसायः=निग्रहोद्यमो जिगीषा वा यस्य स तथोक्तः । हरिणा=हरित्कान्तिशालिना अञ्जनाभेनेत्यर्थः आत्मना=शरीरेण उपलक्षितः राजव्रजपूज्यमूर्त्तिः यः देवः श्रीनेमिनाथप्रभुः सुरर्षभार्च्यक्रमवारिजेन=सुरर्षभैः=शक्रेन्द्रादिभिरर्च्ययोः क्रमयोः=चरणयोः वारिजेन=शङ्खेन तदाकृतिकेन लक्ष्मणा संगतः रराज । गौरुदके दृशि स्वर्गे दिशि पशौ रश्मौ वज्रे भूमाविषौगिरि रित्यनेकार्थसंग्रहः त्विट् शोभाया जिगीषायां व्यवसाये रुचौ गिरि इति हैमः । हरिर्दिवाकरसमीरयोः यमवासवसिंहांशुशशांककपिवाजिषुपिंगवर्णे हरिद्वर्णेभेकोपेन्द्रशुकाहिषु इत्यनेकार्थ संग्रहः । आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च इत्यमरः ।

पार्श्वनाथपक्षे—गवाद्भुतत्विट्=गवि=वाचि देशनावचने अद्भुता=सुरनरविस्मयजनिका त्विट्=छटा यस्य सः तीर्थकृतां वचनातिशयशालित्वात् । हरिणा=हरिद्वर्णेन इन्द्रनीलमणिमेचकच्छविनेत्यर्थः आत्मना=देहेन उपलक्षितः राजव्रजपूज्यमूर्त्तिः यः देवः

संगतः अयं सुरपभार्च्यक्रमवारिजेन=इन्द्रार्चनीयचरणकमलेन रराज ।

हरिणा=सर्पेण तदाकारेण लक्ष्मणा=लाञ्छनेन संगतः अयं सुरपभार्च्यक्रमवारिजेन=इन्द्रार्चनीयचरणकमलेन रराज । अद्भुता=विस्मयावहा त्विट्=प्रभा

महावीरस्वामीपक्षे—गवाद्भुतत्विट्=गवि=भूमौ देशना कालिकस्वाश्रय क्षेत्रे इत्यर्थः अद्भुता=विस्मयावहा त्विट्=प्रभा 'भामण्डल' रूपा यस्य सः । आत्मना=धृत्या सच्चित्तेन वा सद्बुध्या वा उपलक्षितः राजव्रजपूज्यमूर्त्तिः यः देवः श्रीवर्द्धमानस्वामी हरिणा=सिंहेनतदाकारकेण लक्ष्मणा संगतः अयं सुरपभार्च्य क्रमवारिजेन रराज । आत्मा चित्ते धृतौ यत्ने धिषणायां कलेवरे । परमात्मनि जीवेऽर्के हुताशनसमीरयोत्यनेकार्थसंग्रहः ॥

रामपक्षे—गवाद्भुतत्विट्=गवि=वाणेऽद्भुता वीरविस्मयकरी त्विट्=दीप्तिर्यस्य सः गवि=भूमौ अद्भुता त्विट्=जिगीषा यस्य सः राजव्रजपूज्यमूर्त्तिः यः देवः श्रीरामचन्द्रबलदेवः हरिणा-कपिना=हनूमता तथा लक्ष्मणासंगतः=लक्ष्मणेन=सौमित्रिणा आ=सर्वतोभावेन संगत=मिलितः अयं सुरपभार्च्यक्रमवारिजेन=देवेन्द्रसमभ्यर्च्य चरणकमलशालिना आत्मना शरीरेण रराज ।

कृष्णपक्षे—गवाद्भुतत्विट्=गवि=पृथिव्यां गोपु=धेनुषु वा विषये अद्भुता=सर्वाश्चर्यकारी त्विट्=व्यवसायो रक्षणात्मको यस्य सः गवोः=द्वयोः अद्भुता त्विट्=सर्वमोहिनी शोभा यस्य स इति वा राजव्रजपूज्यमूर्त्तिः, सुरपभार्च्यक्रमवारिजेन=शक्रसंपूज्य-पदाम्बुजशोभिना आत्मना=शरीरेण उपलक्षितः, यः देवः श्रीकृष्णचन्द्रनामा वासुदेवः अयं हरिणा=गरुडेन लक्ष्मणा=लाञ्छनेन भजनेन संगतः=वन्दनीयतया सम्बद्धः रराज=दिदीपे ॥

शब्दार्थोभयश्लेषः । तुल्ययोगिता—

गौः स्वर्गे च बलीवर्दे किरण-क्रतुभेदयोः । स्त्री तु स्याद्दिशिभारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्ग-वज्रा-ऽम्बु-रश्मि-

दृग्-वाण-लोमसु इतिमेदिनी ॥ १९ ॥

इन्द्रा-ऽश्वे-भ-शुक-प्लवा-ऽहि-पवन-स्वर्णा-ऽशु-लोकान्तरे ।
भा-ऽरि-ब्रुध्न-कपी-न्दु-पीत-गरुड़-श्री-शुक्र-विष्णव-कंजैः ॥
सूत-स्कन्द-शनी-श-वंश-वरुण-प्राणा-ऽग्नि-भीता-ऽसितैः ।
रथैस्त्वां हरिजैः क्रमाज्जिनपते त्रिंशन्मितैः स्तौम्यहम् ॥

सारूप्यमारोप्य दिशां कुमार्यः, स्मेराम्बुजाक्षीषु मनस्विनीषु ।
रम्भालयेषु त्रिषु देवदेवं-नीत्वा स्वरागात्स्नपयाम्बभूवुः ॥ २० ॥

अन्वय —दिशा कुमार्य स्मेराम्बुजाक्षीषु मनस्विनीषु सारूप्यमारोप्य (राम-कृष्णपक्षे-कुमार्यः स्मेराम्बुजाक्षीषु मनस्विनीषु=दिशा सारूप्यमारोप्य) त्रिषु रम्भालयेषु देवदेव नीत्वा स्वरागात्स्नपयाम्बभूवु' ॥ २० ॥

व्याख्या—दिशांकुमार्यः=अष्टौ दिक्कन्यकाः स्मेराम्बुजाक्षीषु=विकसितकमलसदृशलोचनशालिनीषु मनस्विनीषु=स्त्रीषु सारूप्यम्=समानरूपताम् एकरूप्यमित्यर्थः आरोप्य=कृत्वा स्त्रीणां रूपाणि विधायेत्यर्थः। राम=कृष्णपक्षे—कुमार्यः=कन्याकाः स्मेराम्बुजाक्षीषु मनस्विनीषु=स्त्रीषु दिशां सारूप्यं=भूषणवसनादिना समानरूपं विधाय । त्रिषु रम्भालयेषु=मङ्गलार्थन्यस्तकदलीस्तम्भशालिभवनेषु यद्वा रम्भास्तम्भादिसम्भारविरचितमाङ्गल्यगृहत्रितये देवदेवं=देवेषु मध्ये दीव्यति=द्योतते इतिदेवदेवस्तं नीत्वा=प्रापय्य स्वरागात्-स्वभक्त्या स्नपयाम्बभूवुः-स्नानक्रियां सम्पादयामासुः ॥ २० ॥

काश्चिद् भुवः शोधनमादधाना, जलानि पुर्यां ववृषुः सपुष्पम् ।
छत्रं दधुः काश्चन चामरेण, तं वीजयन्तिस्म शुचिस्मितास्याः ॥ २१ ॥

अन्वय —काश्चिद् (कन्यकाः) भुवः=शोधनम् आदधाना पुर्यां सपुष्प जलानि ववृषुः, शुचिस्मितास्याः काश्चन छत्रं दधुः (काश्चन) चामरेण तं वीजयन्तिस्म ॥ २१ ॥

व्याख्या—काश्चिद् कन्यकाः भुवः=स्थानस्य शोधनं=सम्मार्जन्या दिनाऽवकरनिकरनिरसनाद्यात्मकं संस्कारकर्म आदधानाः=कुर्वन्त्यः पुर्यां=नगर्यां सपुष्पं=पुष्पोपहारसहितं जलानि=केतकी-शतपत्र्याद्यधिवासितसुगन्धिसलिलानि ववृषुः=वृष्टवत्यः अभिषिषिचुरित्यर्थः । शुचिस्मितास्याः=शुचि=अनवद्यं स्मितं=मन्दहसितं यस्मिन् तादृशमास्यं=वदनं यासां तास्तथोक्ताः काश्चन कन्यकाः छत्रम्=आतपत्रं दधुः=धारितवत्यः । काश्चन चामरेण=चमरमृगपुच्छरचितव्यजनेन तं देवदेवं वीजयन्तिस्म=व्यजनसञ्चालनकर्म कुर्वन्तिस्मेत्यर्थः ॥ २१ ॥

उद्दीप्य दीपानपराः परेश-श्चक्रुश्च वालव्यजनेन वातम् ।
मणीमयादर्शकराः परास्ताः, पुरस्सरा गीतविधिं वितेनुः ॥ २२ ॥

अन्वय—अपरा (दिक्कन्यकाः) दीपान् उद्दीप्य परेशः वालव्यजनेन वात चक्रुः परा. ता. (दिक्कन्याः) मणीमयादर्शकरा, पुरस्सरा गीतविधिं वितेनुः ॥ २५ ॥

व्याख्या-अपराः दिक्कन्यकाः दीपान् उद्दीप्य=प्रज्वाल्य परेशः=परमेशितुः जिनस्य वालव्यजनेन=लघुतालवृन्तेन चामरेण वा

वातं=पवनं चक्रुः=चालयामासुरित्यर्थः । पराः=अन्याः ताः=पूर्वोक्ताः दिक्कन्याः मणीमयादर्शकराः=हस्तनिहितमणिखचितदर्पणाः सत्यः पुरस्सराः=अग्रेसराः गानक्रियायांअग्रीयाभूत्वा गीतविधिं=माङ्गलिकगानकर्म जिनगुणगानक्रियां वा वितेनुः=चक्रुरित्यर्थः॥२२॥

क्रुत्वैव होमं वरचन्दनाद्यै–र्ग्रन्थिबबन्धुः करयोर्विभूतेः ।
आस्यं सलास्यं प्रविलोक्य रम्भा, स्तस्थुः पुरो लोकविभोरदम्भाः ॥ २३ ॥

अन्वय—अदम्भाः रम्भा वरचन्दनाद्यै ( अरणिसंघर्षणोद्भववह्नौ ) होमं कृत्वैव ( जिनस्य ) करयोः विभूतेर्ग्रन्थि बबन्धुः (तदनु) लोकविभोः आस्यं प्रविलोक्य सलास्यं ( यथास्यात्तथा ) पुरः तस्थुः ॥ २३ ॥

व्याख्या—अदम्भाः=कैतववर्जिताः रम्भाः=देवकन्याः वरचन्दनाद्यैः=सुरभिदिव्यचन्दनप्रभृतीन्धनैः ‘ अरणिघर्षणोद्भववह्नौ ’ इति शेषः होमं=हवनं कृत्वैव=विधायैव करयोः=जिनहस्ताम्बुजयुगे विभूतेः=हुतचन्दनभस्मनः ग्रन्थिं=रक्षापोट्टलिकां बबन्धुः=बध्नन्तिस्म । तदनु लोकविभोः=जगत्प्रभोः आस्यं=मुखं प्रविलोक्य तदनुमता सलास्यं=स्त्रीनृत्येन सहितं यथास्यात्तथा पुरो=ऽग्रे तस्थुः= आसांचक्रिरे ॥ २३ ॥

जाते जिनेशे त्रिजगद्दिनेशे, लेभे भुवि स्वामिवरैश्चलत्वम् ।
चलाचलस्वासनभावनेन, जन्मावबोधे हृदि पावनेन ॥ २४ ॥

अन्वय.–त्रिजगद्दिनेशे जिनेशे भुवि जाते पावनेन चलाचलस्वासनभावनेन जन्मावबोधे सति स्वामिवरै हृदि चलत्व लेभे ॥ २४ ॥

व्याख्या—त्रिजगद्दिनेशे=त्रिभुवनविद्योतनसूर्यरूपे जिनेशे भुवि=भूतले जाते=अवतीर्णे सति. पावनेन=पवित्रतासम्पादकेन चलाचलस्वासनभावनेन=चलाचलं=कम्पनशील यत् स्वासनं=स्वीयसिंहासनं तस्य भावनेन विमर्शेन जन्मावबोधे=जिनजन्मज्ञाने सति स्वामिभिः=अच्युतादिदेवेन्द्रैः हृदि=मनसि चलत्वं=तरलता=संभ्रमं लेभे संभ्रान्तचित्तता प्राप्तेत्यर्थः। जिनप्रभौ जाते देवेन्द्रस्य सिंहासनं कम्पितं भवतीति जैनसमये सुप्रतीतम् ॥ २४ ॥

आकृष्टा भगवद्गुणैरिव दिवः श्रीअच्युताद्याः समे, देवेन्द्राः समुपेयुरत्र मनसा चित्रीयमाणश्रिया ॥
आलोक्याऽद्भुतधामधाम सुचिरं राज्यं त्रिलोक्या इह, न्याय्यं कर्तुमतोऽभिषेकमचले मेरौ पयोभिः प्रभोः॥२५॥

॥ इतिश्री सप्तसन्धाने महाकाव्ये जन्मवर्णनो नाम द्वितीय सर्गः ॥

---

अन्वय.—श्रीअच्युताद्या. समे देवेन्द्राः भगवद्गुणै. आकृष्टा इव चित्रीयमाणश्रिया मनसा दिवः अत्र आगत्य अद्भुतधामधाम सुचिरम् आलोक्य इह त्रिलोक्या राज्य न्याय्यम् अतो मेरौ अचले पयोभिः प्रभो अभिषेक कर्तुं समुपेयु ॥ २५ ॥

व्याख्या—श्रीअच्युताद्याः=अच्युतवासवप्रभृतयः समे=सर्वे देवेन्द्राः सुरेश्वराः भगवद्गुणैः=जिनदेवगुणैः आकृष्टाः इव=आकृष्याऽऽनीता इव चित्रीयमाणश्रिया=चित्रीयमाणा=विस्मयनीयतया प्रतिभाता श्री =जिनलक्ष्मीर्यस्मिन् तादृशेन मनसा उपलक्षिताः दिवः=द्युलोकात् अत्र आगत्येति शेषः अद्भुतधामधाम=अद्भुतानां विस्मयावहानां धाम्नां=तेजसां शक्तीनां वा प्रभावाणां वा त्विषां

वा धाम=आश्चर्यीभूतं जिनमिति शेषः यद्वा अद्भुतं=विस्मयनीयं धाम्नः=जिनप्रभुशरीरस्य धाम=स्वयंप्रकाशे त्विषं वा तेजो वा शक्तिं वा सुचिरं चिरकालपर्यन्तम् आलोकय=आलोक्य=निरीक्ष्य इह=अस्मिन् जिनदेवे त्रिलोक्याः=जगत्त्रयस्य राज्यं=राजत्वम् आधिपत्यमित्यर्थः न्याय्यं=समुचितं=योग्यं अतः=अस्मात् भगवतस्त्रिजगदधीशभवनार्हत्वाद्धेतोः मेरौ अचले=सुमेरुपर्वते पयोभिः=क्षीरार्णवाहृतनीरैः प्रभोः=जिनदेवस्य अभिषेकं=स्नात्रमहोत्सवं कर्तुं=सम्पादयितुं समुपेयुः=समुपेताः संगताः सम्मिलिता अभूवन् यद्वा समुपेयुः=सम्प्राप्ताः मेरुमिति शेषः विस्मयोऽद्भुतमाश्चर्य मित्यमरः । धाम शक्तौ प्रभावे तेजोमन्दिर–जन्मसु इति विश्वः ।

पयः क्षीरे च नीरे च इति हेमचन्द्रः । अत्र पद्ये शार्दूलविक्रीडितं वृत्तम् ॥

सूर्याश्वैर्मसजस्तताः सगुरवः । शार्दूलविक्रीडितमितिलक्षणात् ॥ २५ ॥

इति श्री शास्त्रविशारद कविरत्नभट्टारकाचार्य विजयामृतसूरीश्वर प्रणीतायां सप्तसंधान महाकाव्यसरणीटीकायां द्वितीयः सर्गः ॥

## ॥ तृतीयः सर्गः ॥

निन्युः सुरासुरगणा अथ देवगोत्रं, यत्राद्रयः सकलकालमपि प्रफुल्लाः ।
पुष्पैः फलैरविरलैः प्रवलै र्दलैश्च, प्रीणन्ति भूचर-नभश्चर चारुनारीः ॥ १ ॥

अन्वय.—अथ सुरासुरगणाः ( प्रभु ) देवगोत्रं निन्युः यत्र सकलकालमपि प्रफुल्लाः अद्रय. अविरलैः पुष्पैः फलैः प्रवलैर्दलैश्च भूचरनभश्चर-चारुनारीः प्रीणंति ॥ १ ॥

व्याख्या—अथ=दिक्कुमारीकृतप्रतिकर्माऽन्तरं सुरासुरगणाः=सुराणां=सौधर्मादिदेवलोकनिवासिदेवानाम् असुराणां=भुवनपत्यादीनां गणाः=संघाः 'प्रभु'—मितिशेषः देवगोत्रं=देवपर्वतम् तीर्थकृत्पक्षकपक्षे—सुमेरुशैलम् रामपक्षे—देवानां गोत्रं=पर्वतम् 'अष्टापद' संज्ञकम् अयोध्यापार्श्वे उत्सवेषु रमणीयस्थानत्वेन तस्याभिमतत्वात् कृष्णपक्षे—देवात्=मुसलधारां वृष्टिंकुर्वतो घनाघनात् इन्द्राद्वा गाः=सौरभेयीः गां=गोकुलं=व्रज वा नामैकदेशग्रहणेनामग्रहणात् सत्या भामेतिवत् त्रायते=रक्षति स तं 'गोवर्द्धन' नामानं व्रजपार्श्ववर्तमानपर्वतविशेषं निन्युः=नीतवन्तः । अधुना देवगोत्रं वर्णयति—यत्र=यस्मिन् देवगोत्रे सकलकालमपि=षट्स्वपि ऋतुषु प्रफुल्लाः=विकसिताः अद्रयः= वृक्षाः 'अद्रयो द्रुम-शैला-ऽर्काः' इत्यमरः । अविरलैः=निरन्तरैः पुष्पैः=चम्पकादिकुसुमैः फलैः=आम्रादिभिः प्रवलैः=अङ्कुरैः दलैः=किसलयैश्च यद्वा प्रवलैः=प्रवालैः=अभिनवपल्लवैः दलैः=निष्पन्नपत्रैश्च भूचरनभश्चरचारुनारीः=भूचराणां=मनुजतिरश्चां,

नभश्चराणां=देव-यक्ष-गन्धर्व-किन्नर-विद्याधरादीनां चार्वीः=मनोहराः नारीः रमणीजनान् प्रीणन्ति=आनन्दयन्ति ॥ अत्र सर्गे वसंततिलकं वृत्तम् । ज्ञेयं वसन्ततिलकं तभजाजगौग इति तल्लक्षणात् ॥ १ ॥

श्रीभद्रशालवनमप्यतिपावनं तद्, यत्रास्ति सौमनसमद्भुतशाखिजन्यम् ॥
सानन्दनन्दनवनं बहुसौरभाढ्यं, सापाण्डुकम्बलशिलाग्रमिला बिभर्त्ति ॥ २ ॥

अन्वय.—यत्र तद् अतिपावन श्रीभद्रशालवनम , अद्भुतशाखिजन्य सौमनसं (वन), सानन्दनन्दनवन, बहुसौरभाढ्य पाण्डुक (वनच) अस्ति सा इला बलशिलाग्र बिभर्त्ति (इति तीर्थंकृत्पञ्चकपक्षे) । (वासुदेवपक्षे-) यत्र सा इला (यत्र) अद्भुतशाखिजन्य (बहुसौरभाढ्य) सौमनसम् अस्ति तद् अतिपावन श्रीभद्रशालवन, सापाण्डुकम्बलशिलाग्र बहुसौरभाढ्य नन्दनन्दनवन (च) बिभर्त्ति । (श्रीरामबलदेवपक्षे तु) यत्र सा इला (यत्र) अद्भुतशाखिजन्य बहुसौरभाढ्य सौमनसम् अस्ति तद् अतिपावन श्रीभद्रशालवनं सापाण्डुकलशिलाग्र सानन्दनन्दनवन (च) बिभर्त्ति ॥ २ ॥

व्याख्या—तीर्थकृत्पञ्चकपक्षे-यत्र=यस्मिन् देवगोत्रे सुमेरुपर्वते तद्=प्रसिद्धम् अतिपावनम्=अतिपवित्रं सातिशयपावित्र्यजनकं वा 'श्रीभद्रशालवनं'=तदभिधानम् अस्ति=विद्यते एवम् अद्भुतशाखिजन्यम्=अद्भुतानि=चित्रविचित्राणि शाखिजन्यानि=वृक्षसंभवानि पुष्प-फलादीनि यस्मिस्तत् तादृशं 'सौमनसं'-तदाख्यवनम् अस्ति । तथा नन्दनन्दनवनम्=सानन्दम्-आनन्दकारित्वेन आनन्द-हर्ष-सहितं, यद्वा आनन्देन सहितः सानन्दस्तं करोति सानन्दयति सानन्दयतीति सानन्दम्-आनन्दयुक्तविधायकम् नन्दनवनं-देवोद्यानम् अस्ति । तथा बहुसौरभाढ्यं-साऽतिशयसौगन्ध्यशालि पाण्डुकं-तन्नामकवनम् अस्ति । सा-प्रसिद्धा स्नात्रशैलसम्बन्धिनी इला-पृथ्वी बलशिलाग्रं-बलानां-विशालानां शिलानां मध्ये अग्रं-प्रधानं स्नात्रसिंहासन बिभर्ति ॥

कृष्णवासुदेवपक्षे—यत्र देवगोत्रे गोवर्द्धनपर्वते सा–पर्वत सम्बन्धिनी इला यत्र अद्भुतशाखिजन्यं=चित्रविचित्रवृक्षसमुद्भवं बहुसौरभाढ्यं–प्रचुरसौरभ्ययुक्तसौमनसं–पुष्पसमूहः अस्ति तद् अति पावनं श्रीभद्रशालवनं=श्रीणां–बिल्ववृक्ष–सरलवृक्ष–लवङ्गाना भद्राणां देवदारु–कदम्बवृक्ष–स्नुहीवृक्षाणा शालाना–सर्जवृक्षाणां, यद्वाऽनुपदोक्त श्री–भद्रादीनां शालानां–वृक्षाणां वनं–काननम् अन्तर्वर्त्ति यस्मिन् तत तादृम् यद्वाश्रिया भद्र–मनोहरम् शालवनं यस्मिंस्तत्तादृशं, सापाण्डुकम्बलशिलाग्रम्–आ–सर्वतोभावेन पाण्डुकम्बलाः–प्रस्तरविशेषास्तदात्मिकाः शिलाः पाण्डुकम्बलशिलास्तासां तासु वा अग्राः–श्रेष्ठाः याः शिलाः ताभिः महितं, यद्वा पाण्डुकम्बलसदृश्यो याः शिलास्तासामग्राभिः–मुख्याभिः शिलाभिः महितं, बहुसौरभाढ्यं–प्रभूतसौगन्ध्यकलितं यद्वा सुरभीणां–स्त्रीगवीणां समूहः सौरभं बहुना सौरभेण आढ्यं–युक्तम् एवं विधं नन्दनन्दनवनं–नन्द–श्रीकृष्णपितरं नन्दयति–हर्षयतीतिनन्दनन्दनं तादृशं वनं विपिनं–बिभर्त्ति–धारयति ॥

श्रीरामचन्द्रबलदेवपक्षे—यत्र देवगोत्रे अष्टापदपर्वते सा इला यत्र हि अद्भुतशाखिजन्यं बहुसौरभाढ्यं सौमनसम् अस्ति तद् अति पावनं श्रीभद्रशालवन सा पाण्डुकम्बलशिलाग्रमेतादृशं सानन्दनन्दनवनं–सानन्दान्–आनन्दनिर्भरानपि किमुत सोद्वेगान् जनान् नन्दयति–प्रीणयतीति सानन्दनन्दनं तादृशं वनं बिभर्त्ति । विशेषणानामर्थश्च वासुदेवपक्षीयरीत्याऽवगमेलिमः ॥ २ ॥

यस्मिन्नलं फलललद्दलशालिशालवृन्दावनी सुरजनी रजनीश्वरास्या ॥
गीतस्वरैः सुरमणी रमणीप्रणीतै-स्तन्तन्यते तनुभृतामतनूदयं सा ॥ ३ ॥

अन्वयः—यस्मिन् अलं फलललद्दलशालिशालवृन्दाऽवनी. रजनीश्वरास्या सा सुरजनी च सुरमणी रमणीप्रणीतैः गीतस्वरैस्तनुभृतामतनूदयं तन्तन्यते । इति मेरुपक्षे । ( अन्यपक्षे ) यस्मिन् अल फलललद्दलशालिसालवृन्दा, सुरजनी रजनीश्वरास्या अवनी (यद्वावनी) सुरमणीरमणीप्रणीतैः गीतस्वरैः तनुभृताम् अतनूदयं तन्तन्यते ॥ ३ ॥

व्याख्या—यस्मिन् मेरौ तद्वने वा अलम्=अत्यर्थं फलललद्दलशालिसालवृन्दा=फलैः=सस्यैः ललद्भिः=वायुसंबन्धाच्चलद्भिः विलसद्भिर्वा दलैः पत्रैश्च शालन्ते=शोभन्ते तच्छीलानां शालानां=वृक्षाणां वृन्दं=समूहो यस्यां सा तादृशी अवनी=सौमेरवीभूमिः, तथा रजनीश्वरास्या=चन्द्रानना सा=प्रसिद्धा सुरजनी=दिव्याङ्गना च सुरमणीरमणीप्रणीतैः=सुष्ठु रमयन्ति शोभनं रम्यते आसु वा इति सुरमण्यस्तादृशीभिः रमणीभिः प्रणीतैः=विहितैः गीतस्वरैः=गानकालीनगेयपदसमूहवर्तिनिषादादिस्वरैः तनुभृतां=प्राणिनाम् अतनूदयम्—अतनोः अनङ्गस्य उदयम्=अभिवृद्धिं कामोद्रेकमित्यर्थः प्रचुराऽऽनन्दसमृद्धिं वा तन्तन्यते=पुनः पुनरतिशयेन वा तनोति=विस्तारयति जनयती त्यर्थः । इति सुमेरुपक्षीयोऽर्थः ॥

अष्टापदपक्षे गोवर्द्धनपक्षे च-यस्मिन् अष्टापदशैले गोवर्द्धने च अलम् फलललद्दलशालिनः-फलचलत्पत्रशोभिनः सालाः-वृक्षाः वृन्दाः-तुलस्यश्च यस्यां सा तादृशी, पुनः सुरजनी-सु-शोभना समृद्धा वाऽतिशयिता वा रजनी=हरिद्रा जतुका वा यस्यां सा तथा विधा रजनीश्वरास्या=रजनीश्वरस्य=चन्द्रस्य आस्या=स्थितिरस्यां सा तादृशी चन्द्रमस ओषधीपतित्वाद्वन्यौषधीषु तत्स्थितिकल्पनात् यद्वा सुरजनीरजनीश्वरास्या-सु=शोभना रजनी=रात्रिः सुरजनी=राका रात्रि रजनीश्वरः=चन्द्रः स एव आस्यम् आस्यमिव वा यस्याः

मा तथाविधा अवनी=अधित्यकादिरूपा पर्वतभूमिः यद्वा वनी=अटवी सुरमणीरमणीप्रणीतैः सुरमण्यः=सगीतपण्डितगन्धर्वभूता या रमण्यः=उत्कृष्टस्त्रीविशेषास्ताभिः प्रणीतैः=प्रयोजितैः गीतस्वरैः=निषादादिगानस्वरैः तनुभृतां=शरीरिणाम् अतनूदयं कामोद्रेकं प्रभूताऽऽनन्दसमृद्धिं वा तन्तन्यते=भृशोविस्तारयतीत्यर्थः ॥ ३ ॥

गोपाः स्फुरन्ति कुसुमायुधचापरोपात्, कोपादिवाऽम्बुजदृशः कृतमानलोपाः ॥
क्रीडन्ति लोलनयनानयनाच्च दोला–स्वान्दोलनेन विबुधाश्च सुधाशनेन ॥ ४ ॥

अन्वय—गोपा. विबुधा· कुसुमायुधचापरोपात् कोपादिव कृतमानलोपा स्फुरन्ति । लोलनयनानयनात् अम्बुजदृश सुधाशनेन दोलासु आन्दोलनेन च क्रीडन्ति ॥ ४ ॥

व्याख्या—गोपाः=गाः=किरणान् पान्तीति ते तथोक्ताः तेजस्विन इत्यर्थः यद्वा गां=स्वर्गं पान्ति=रक्षन्तीति ते तादृशाः विबुधाः= देवाः यद्वा गा=रश्मीन् पान्तीति ते गोपाः=शक्रेन्द्रादयः विबुधाः=देवसामान्याश्च कुसुमायुधचापरोपात्=कन्दर्पधनुर्मुक्तबाणात् तन्निपातादितिभावः हेतोः अत्रोत्प्रेक्षते=कोपादिव=कामस्य क्रोधादिव कृतमानलोपाः=कृतः मानस्य=स्वाभीष्टश्लेषवीक्षादिविरोधिकृत्रिमकोपस्य लोपः=विनाशो येषां ते तथोक्ताः स्फुरन्ति=प्रकाशन्ते । किञ्च लोलनयनानयनात्=लोलनयनानां=चञ्चलाक्षीणाम् आसन्नतोभावेन नयनात्=कर्षणात् आनयनात्=आकर्षणेन अम्बुजदृशः=पद्माक्ष्याः सुधाशनेन=अधरामृतपानेन. दोलासु=हिन्दोलादिदोलनयन्त्रविशेषेषु आन्दोलनेन=दोलनक्रियया च क्रीडन्ति=विहरन्ति आत्मानं विनोदयन्तीत्यर्थः । स्वाभीष्टश्लेषवीक्षादिविरोधी मान

उच्यते इति दशरूपके । अर्थश्लेषः उत्प्रेक्षा च । तीर्थकर-बलदेव वासुदेवैतत्रिकपक्षे समानोऽर्थः ॥ ४ ॥

अन्योन्यवन्यफलमाल्य विभाजनेन, का स्वर्वशा नहि वशीक्रियते जनेन ॥
यत्रोर्वशीजनकृतेन विमोहितेन, सोऽस्मिन् वशीभवति नाम वशीहितेन ॥ ५ ॥

अन्वय.—अस्मिन् अन्योन्यवन्यफलमाल्यविभाजनेन का स्वर्वशा जनेन न हि वशीक्रियते यत्र उर्वशीजनकृतेन ईहितेन विमोहितेन स वशी वशीभवति ॥ ५ ॥

व्याख्या—अस्मिन् गिरौ=वने वा अन्योन्यवन्यफलमाल्यविभाजनेन=अन्योन्यं=परस्परं यद् वन्यानां=वनभवानां फलानां=सस्यानां=माल्यानां पुष्पस्रजां विभाजनेन=वण्टनेन विनिमयेन वा का स्वर्वशा=दिव्यस्त्री " वशा वन्ध्या=सुता=योषा=स्त्रीगवीकरिणीषु चे-तिविश्वमेदिन्यौ " जनेन=कामिजनेन न वशीक्रियते=स्वायत्तीक्रियते सर्वापीत्यर्थः । यत्र उर्वशीजनकृतेन=अप्सरोभिर्विहितेन ईहितेन=चेष्टितेन चेष्टयेत्यर्थः करणेन विमोहितेन=विमोहनेन वश्यतापादनेन हेतुना सः=प्रसिद्धः वशी=जितेन्द्रयोऽपि वशीभवति=वश्यतां यातीत्यर्थः । अर्थश्लेषः अन्त्याऽनुप्रासः । काव्यलिङ्गं चाऽलङ्काराः ॥ ५ ॥

अष्टापदोन्नतगिरिर्विहते महत्त्वम्, गोवर्द्धनोऽपि धनवानिव दिक्प्रसारी ॥
तत्राऽऽनिनाय किल वासवनाम देव-स्तं जातमात्रमतिमात्रविबोधपात्रम् ॥ ६ ॥

अन्वयः—अष्टापदोन्नतगिरि महत्त्व वहते, गोवर्द्धन धनवानिव दिक्प्रसारी तत्र वासवनामदेव जातमात्रम् अतिमात्रविबोधपात्र तं किल आनिनाय ॥ ६ ॥

व्याख्या—स्नात्रमहोत्सवाधिकरणीभूतं पर्वतं नाम्ना निर्दिशति=( तीर्थकृत्पश्चक्रपक्षे ) अष्टापदोन्नतगिरि=अष्टौ धातवः पदानि=स्थानान्यस्य तत् अष्टसु धातुषु पदं=प्रतिष्ठाऽस्येति वा अष्टापदं=सुवर्णं तस्य तन्मयो वा उन्नतगिरिः=सर्वोच्चशैलः सुवर्णशैलः सुमेरुपर्वत इत्यर्थः महत्त्व=तीर्थङ्करस्नात्रमहोत्सवाधिकरणीभवनजनितमहिमान वहते, किञ्च गोवर्द्धनः=गाः=किरणान् स्व=स्वाश्रिततेजांसीत्यर्थः वर्द्धयतीति स तथोक्तः धनवानिव व्यवहारीवेत्यर्थः दिक्प्रसारो=अष्टसु दिक्षु प्रसरण=व्यापन=शीलः व्याप्तसर्वदिक इत्यर्थः । तत्र पर्वते वासवनाम देवः=शक्रेन्द्रः जातमात्रं=गर्भान्निर्गतमात्रं जन्माऽनन्तरक्षणएवेत्यर्थः अतिमात्रविबोधपात्रं=सातिशयज्ञानभाजनम् अवधिज्ञानस्य तदानीं सद्भावात् तं=पूर्वोक्तम् ऋषभादिम् किल=निश्चयेन आनिनाय ।

बलदेवपक्षे—अष्टापदोन्नतगिरिः=अष्टापदनामधेयः उन्नतपर्वतः महत्त्वं=श्रीरामचन्द्रबलदेवजन्मोत्सवाश्रयीभवनजनितमहनीयत्वं वहते शेषं पूर्ववत् ॥

वासुदेवपक्षे—अष्टापदोन्नतगिरि=अष्टापदः=कैलासपर्वत स इव उन्नतः=उच्चैः उच्छ्रितो गिरिः=शैलः यद्वा अष्टापदः=शरभाख्यवन्य पशुविशेषो यः सिंहमपि विराध्यति तद्युक्त उन्नतगिरिः=तुङ्गशैलः 'गोवर्द्धनः' तदाख्यः, महत्त्वं=श्रीकृष्णवासुदेवजन्मोत्सवाधारीभवनजन्यमहिमानं वहते, धनवानिव दिक्प्रसारी तत्र वासवनाम देवः जातमात्रमतिमात्रविबोधपात्रं तं=वासुदेवम् आनिनाय ॥ अष्टापदश्चन्द्रमाल्यां लूतायां शरभे गिरौ कनके शारिफलके इति अनेकार्थसंग्रहः । श्लेषोपमालंकारो ॥ ६ ॥

त्वं नन्द-नन्दनपदं सफलीकुरुष्व, कान्तापि वर्द्धयतु कान्तिरसो यशोदा ॥
स्नात्राभिषेकसविशेषसरेखभूषा-नेपथ्यतथ्यकरणात्सुभगाकृतित्वम् ॥ ७ ॥

अन्वयः—त्व नन्द (हे नन्द !) त्व नन्दनपद सफलीकुरुष्व यशोदा कान्ताऽसौ (तव) कान्ति. स्नात्राभिषेकसविशेषमरेखभूषानेपथ्यतथ्यकरणात् अन्वयः—त्व नन्द (हे नन्द !) त्व नन्दनपद सफलीकुरुष्व यशोदा कान्ताऽपि तव कान्ति-रसौ वर्द्धयतु । (तथा) स्नात्राभिषेक-सुभगाऽऽकृतित्व वर्धयतु । कृष्णपक्षे-( हे प्रभो ! त्वं नन्दनन्दनपदं सफलीकुरुष्व यशोदा कान्ताऽपि तव कान्ति-रसौ वर्द्धयतु । (तथा) स्नात्राभिषेक-तथ्यकरणात्सुभगाकृतित्व (व्रज) ॥ ७ ॥

व्याख्या-आनयनाऽनन्तरकालिकवृत्तवृत्तान्तमाह-हे प्रभो ! त्वं नन्द तीर्थकृल्लक्ष्मीसमृद्धो ज्ञानादिसमृद्धो वा भव यद्वा हे नन्द! =शाश्वताऽऽनन्दपरिपूर्ण ! त्वं नन्दनपदं=आनन्दरूप ! यद्वा नन्दिः=आनन्दोऽस्यास्तीति नन्दः अर्शआदित्वादच् तत्सम्बोधने हे नन्द!=शाश्वताऽऽनन्दपरिपूर्ण ! त्वं नन्दनपदं=देवोद्यानरूपस्थानं यद्वा नन्दयति=मोक्षलक्ष्मीप्राप्त्या हर्षयतीतिनन्दनं तादृशं पदं तीर्थकरपदं सफलीकुरुष्व=सार्थकं कुरु । यशोदा=कीर्तिजननी कान्ता=मनोहरा असौ तव कान्तिः=शोभा. स्नात्राभिषेकसविशेषसरेखभूषानेपथ्यतथ्यकरणात्=स्नात्राभिषेके तत्समय इत्यर्थः सविशेषाणां=सातिशयानामुत्तमानां वा सरेखाणां=साभोगानां परिपूर्णानामित्यर्थः श्रेणीबद्धानामिति वा भूषाणां=तीर्थकरो-चितालङ्करणानां नेपथ्येन=प्रसाधनकर्मणा तथ्यकरणात्=याथार्थ्यापादनात् यद्वा स्नात्राभिषेक-सविशेषसरेखभूषाभिः नेपथ्यस्य=तीर्थ-कृत्कर्मकमण्डनीकरणस्य तथ्येन=यथावद्रूपेण करणात्=निष्पादनात् सुभगाकृतित्वं सुभगा=सुदृश्या आकृतिः=स्वरूप यस्य स तद्भाव-स्तत्वं सुदृश्यरूपतां सौन्दर्यमित्यर्थः वर्द्धयतु इति तीर्थकरपञ्चकसाधारणोऽर्थः ।

श्रीरामचन्द्रपक्षे—हे प्रभो ! त्वं नन्द शौर्यादिगुणसमृद्धो भव। नन्दनपदं=पुत्रसम्पाद्यपित्राज्ञापालनादिकार्यस्थानं सफलीकुरुष्व । यशोदा कान्ताऽसौ तव कान्तिः स्नात्राभिषेकसविशेषसरेखभूषानेपथ्यतथ्यकरणात् सुभगाकृतित्वं वर्द्धयतु ।

श्रीकृष्णवासुदेवपक्षे—हे विभो ! त्वं नन्दनन्दनपदं=नन्दस्य=गोपाधिपविशेषस्य नन्दनपदं=पुत्रपदं सफलीकुरुष्व । यद्वा हे नन्दनन्दन !=नन्दपुत्र ! त्वं पदं=वासुदेवव्यवसितं शिष्टाऽनुग्रहदुष्टनिग्रहादिरूपं सफलीकुरुष्व । यशोदा=तदभिधाना कान्ता=नन्दगोपभार्याऽपि तव कान्ति=रमो=कान्ति=शोभा तेजो वा रसं=वीर्यं वर्द्धयतु । तथा स्नात्राभिषेकसविशेषसरेखभूषानेपथ्यतथ्यकरणात् सुभगाकृतित्वं व्रजेति शेषः ॥ ७ ॥

इत्युद्दिशन् सदसि संगमने गवेशां, शक्रः क्रमोपनतमच्युतमैक्ष्य भक्त्या ॥
तच्छासनेन विधिना सहितः सराममीशानमेव हरिमत्र पुरो व्यधत्त ॥ ८ ॥

अन्वयः—शक्रः इत्युद्दिशन् गवेशां संगमने सदसि क्रमोपनतम् अच्युतम् ऐक्ष्य भक्त्या तच्छासनेन विधिना सहितः सरामम् ईशानं हरिं पुरः व्यधत्त । रामपक्षे स शक्रः रामम् ईशानं हरिम् अत्र पुरो व्यधत्त । कृष्णपक्षे—स शक्रः इत्युद्दिशन् गवेशां संगमने सदसि क्रमोपनतम् अच्युतम् ऐक्ष्य भक्त्या तच्छासनेन सहितः सरामम्=अभिरामम् ईशानं हरिम् अत्र पुरो व्यधत्त ॥ ८ ॥

व्याख्या—शक्रः=सौधर्मेन्द्रः अनुपदोक्तनामवनामदेव इत्यर्थः इत्युद्दिशन्=इति=पूर्वोक्तप्रकारेण उद्दिशन्=उच्चैर्वदन् गवेशां=त्रिदिवेशानामिन्द्राणां संगमने=सम्मेलके सदसि=गोष्ठ्यां क्रमोपनतं=प्रभुचरणयोरानत तदन्तिकमुपस्थितं वा अच्युतम्=एकादश द्वादश

देवलोकाधिपम् ऐक्ष्य=सम्यङ्निभाल्य भक्त्या=अनुरागेण तच्छासनेन-अच्युताज्ञया विधिना=विधानेन सहितः विधानपूर्वकमित्यर्थः सरामं=तीर्थकरसहितम् ईशानं हरिम्=ईशानेन्द्रं पुरः=अग्रतः पूर्वाऽभिमुखं वा व्यधत्त=विहितवान्=अतिष्ठिपदित्यर्थः इति तीर्थङ्करपक्षकसाधारणोऽर्थः ॥

श्रीरामचन्द्रपक्षे—सः=प्रसिद्धः शक्रः=महीमहेन्द्रः इत्युद्दिशन् गवेशां=महीपतीनां संगमने सदसि क्रमोपनतम् अच्युतम् ऐक्ष्य भक्त्या तच्छासनात् विधिना सहितः रामं=तदाख्यम् ईशानम्=ईशितारं हरिं=बलदेवम् अत्र=अष्टापदपर्वतस्थस्नात्रासिंहासने पुरः=पूर्वाभिमुखमेव व्यधत्त ।

श्रीकृष्णवासुदेवपक्षे तु—स शक्रः इत्युद्दिशन् गवेशां=महीपतीनां गोपालाना वा संगमने सदसि क्रमोपनतम् अच्युतम् ऐक्ष्य भक्त्या तच्छासनात् विधिना सहितः रामम्=अभिरामम् ईशानं=द्वारकाया ईशितारं हरिं=वासुदेवम् अत्र=गोवर्धनपर्वतवर्त्तिस्नात्रसिंहासने पुरः=पूर्वाऽभिमुखं व्यधत्त । शब्दाऽर्थोभयश्लेषः । गौः स्वर्गे च बलीवर्दे रश्मौ च कुलिशे पुमान् । स्त्री सौरभेयी-दृग्-बाण-दिग्-वाग्-भूष्वप्सु भूम्नि च इति मेदिनी ॥ ८ ॥

क्षीराम्बुधेरिव पयोभिरिहाभिषेकं, चक्रे क्रमेण मणिकाञ्चनरूप्यकुम्भैः ॥
देवस्य तस्य वरचन्दनचन्द्रलेपा-दभ्यर्चनानि दधतेस्म शची सरूपाः ॥ ९ ॥

अन्वयः—शक्र इह क्षीराम्बुधेरिव पयोभिः ( भृतैः ) मणिकाञ्चनरूप्यकुम्भैः क्रमेण देवस्य अभिषेक चक्रे. सरूपा शची ( शचीशरूपाश्च ) तस्य वरचन्दनचन्द्रलेपात् अभ्यर्चनानि दधतेस्म ॥ ९ ॥

व्याख्या—शक्रः इह=अतिपाण्डुकम्बलशिलापीठे क्षीराम्बुधेरिव=क्षीरसागरस्येव पयोभिः=क्षीरैरम्बुभिः 'पयः क्षीरे च नीरे च' इत्यनेकार्थसंग्रहः भृतैरिति शेषः मणि-काञ्चन-रूप्यकुम्भैः=मणिमय-सौवर्ण-राजतकलशैः क्रमेण=परिपाट्या प्रथमं मणिमयेन ततः सौवर्णेन तदनु राजतेन कलशेनेत्येवं क्रमपूर्वकमित्यर्थः देवस्य=द्योतनशीलस्य प्रभोः जिनदेवस्य अभिषेकं=स्नात्रं चक्रे। तदनु शचीशाः=इन्द्राः शचीशरूपाश्च शचीसरुपा इत्यत्र तन्त्रम् तेनास्य भङ्गाभङ्गारूपा=रूप-सौन्दर्यशालिनी शची=इन्द्राणी प्रशस्ताः सुगन्धिवासमा सम्मृष्टवपुषः तस्य-देवस्य वरचन्दनचन्द्रलेपात्-वरं-कुङ्कुमं, चन्दन-तैलपर्णिक-गोशीर्ष-हरिचन्दनादिकं चन्द्रः-कर्पूरस्तैः लेपात्-विलेपनात् अभ्यर्चनानि पूजाः दधतेस्म-कुरुतेस्म। शचीपक्षे दधधातोः प्रथमपुरुषैकवचनं, शचीशरूपपक्षे च धाधातोः प्रथमपुरुषबहुवचनरूपम्। श्यामर्थद्वयपरत्वम् श-सयोश्चैकत्वात्।

बलदेवपक्षे—शक्रः-महीमहेन्द्रः इह-अष्टापदपर्वतस्थस्नात्रपीठे क्षीराम्बुधेः पयोभिरिव मणिकाञ्चन-रूप्यकुम्भैः क्रमेण अभिषेकं चक्रे ततः शचीसरूपाः-शच्याः समानं रूपं यासां ताः तथोक्ता राजमहिष्यः सुगन्धिनिर्णिक्तवसनेन प्रमृष्टगात्रस्य तस्य श्रीरामचन्द्रबलदेवस्य वर-चन्दन-चन्द्रलेपात् अभ्यर्चनानि दधतेस्म।

वासुदेवपक्षे—शक्रः इह=गोवर्द्धनपर्वतोपरिवर्त्तिस्नात्रपीठे क्षीराम्बुधेरिव पयोभिः=क्षीरैः भृतैः मणि-काञ्चनरूप्यकुम्भैः क्रमेण देवस्य=वासुदेवस्य श्रीकृष्णचन्द्रस्येत्यर्थः देवदत्तो दत्त इतिवत् नामैकदेशग्रहणे नामग्रहणात् अभिषेकं=स्नात्रविधिं चक्रे। तदनु सुगन्धिनिर्णिक्तां शक्रेण प्रमृष्टकलेवरस्य तस्य=श्रीकृष्णवासुदेवस्य वरचन्दन-चन्द्रलेपात् अभ्यर्चनानि-नानाविधपूजाः दधतेस्म॥ शब्दा-

र्थोभयश्लेषः, क्षीराम्बुधेरिवेत्यंशे उत्प्रेक्षा च. अथ कुङ्कुमम्। चन्द्रः कर्पूर-काम्पिल्ल-सुधांशु-स्वर्ण-वारिषु इति मेदिनी ॥ ९ ॥

सारात्रिकां प्रवरमङ्गलदीपयुक्तिं, सम्यग् विधाय सह गीतविनीतनृत्यैः ॥
साष्टोत्तरं शतमितैश्च नवीनकाव्यै-स्तुष्टाव तुष्टिभरपुष्टमना गवेन्द्रः ॥ १० ॥

अन्वय.—गवेन्द्र. गीतविनीतनृत्यै सह सारात्रिका प्रवरमङ्गलदीपयुक्ति विधाय तुष्टिभरपुष्टमना. सन् साष्टोत्तर शतमितै. नवीनकाव्यै· स्तुति चकार ॥ १० ॥

व्याख्या—गवेन्द्रः बृहस्पतिः स्वर्नायको वा । राम-कृष्णपक्षे गवेन्द्रः-भूमहेन्द्रः गीतविनीतनृत्यैः-गीतानि-गानानि विनीतनृत्यानि-उदारचरितयोग्यनर्तनानि तैः सह तत्पूर्वकमित्यर्थः सारात्रिकाम्-नीराजनक्रियया सहिता प्रवरमङ्गलदीपयुक्तिं-स्नेहदशासमृद्धिकलित-माङ्गलिकविशिष्टप्रदीपयोजनां सम्यग् विधाय-उत्तार्य तुष्टिभरपुष्टमनाः-सन्तोषातिशयनिर्भरचेताः सन् साष्टोत्तरशतमितैः अष्टोत्तरशतसंख्यकैः नवीनकाव्यैः-अभिनवस्तुत्यात्मककाव्यैः तुष्टाव स्तुतिंचकार ॥ १० ॥

एवं सुरासुरकृताऽभिषवोत्सवश्री- र्देवः प्रभावविभवाऽनुभवत्रयेण ॥
अङ्गुष्ठजामृतसमशानलब्धिपूर्ण-स्तूर्णं सनन्दभवने ववृधे शशीव ॥ ११ ॥

अन्वयः—एव सुरासुरकृताऽभिषवोत्सवश्रीः अगुष्ठजामृतसमाशनलब्धिपूर्णः प्रभाव-विभवाऽनुभवत्रयेण देव· स· नन्दभवने (सनन्दभवने) शशीव तूर्णं ववृधे ॥ ११ ॥

व्याख्या एवम् पूर्वोक्तप्रकारेण सुरासुरकृताऽभिषवोत्सवश्रीः=सुरैः=देवैः असुरैः=भुवनपतिविशेषैश्च कृता=सम्पादिता अभिषवोत्सवश्रीः=स्नात्रोत्सवशोभा यस्य सः। अङ्गुष्ठजामृतसमाशनलब्धिपूर्णः=अङ्गुष्ठजाऽमृतं-जिनेन्द्राः स्तन्यपायिनो न भवन्तीति क्रमं विजानता नाकनायकेन स्वभक्तिशक्तिवशतः प्रभोरतिनिर्मले हस्ताङ्गुष्ठतले सञ्चारितसुधा तस्य समाशनं=सम्=सम्यक्, आ=सर्वतो भावेन अशनं=भोजनं पानमिति भावः तद्रूपा लब्धिः=अतिशयविशेषस्तया पूर्णः=सम्पन्नः यद्वा अङ्गुष्ठजामृतरूपं यत् समाशनं=शोभनभोजनं तस्य लब्ध्या=लाभेन पूर्णः=भृतः पुष्ट इत्यर्थः जिनेन्द्रदेवः प्रभाव=विभवाऽनुभवत्रयेण=प्रभावः=तेजः शान्तिर्वा सामर्थ्यं वा विभवः=ऐश्वर्यम् अनुभवः=ज्ञानविशेषस्तेषां त्रयेण=त्रिकेण देवः=द्योतमानः सः—प्रसिद्धः सक्रान्तो वा जिनेन्द्रदेवः नन्दभवने=प्राग्दक्षिणद्वारप्रासादे=यद्वा सनन्दभवने=नन्दया=सम्पदा=त्रिदिवेशनिदेशेन तीर्थंगपितुर्वेश्मनि धनपतिमुक्तरूप्य-रत्ननन्दासनभद्रासनाऽनेककोटिमितकाञ्चनादिरूपसमृद्धि महिते भवने=प्रासादे शशी=चन्द्रमा इव तूर्णं-शीघ्रम् अल्पकालेनेत्यर्थः ववृधे=वृद्धिम्=अवयवोपचयं लेभे। नन्दासंपद्य लिङ्गरे इत्यनेकार्थसंग्रहः। इति तीर्थकृत्पक्षीयोऽर्थः ॥

बलदेवपक्षे-एवं सुरासुरकृताऽभिषवोत्सवश्रीः=सुरासुरकृतो योऽभिषवस्तद्वदुत्सवश्रीः=जन्मोत्सवशोभा यस्य सः अङ्गुष्ठजाऽमृतसमाशनलब्धिपूर्णः=अङ्गुष्ठजनितसुधापानोपलब्धिपरिपुष्टः देवः प्रभाव-विभवा-ऽनुभवत्रयेण सह सनन्दभवने-प्रभूतसम्पत्तिशालिसदने शशीव तूर्णं ववृधे।

वासुदेवपक्षे—तृतीयचरणपर्यन्तं रामपक्षवद्व्याख्याय स=प्रसिद्धो देवः=श्रीकृष्णवासुदेवः नन्दभवने=नन्दगोपवेश्मनि प्रभाव=विभवाऽनुभवत्रयेण सार्द्धं शशीव तूर्णं ववृधे ॥ १ ॥

नाम्नान्वयेन कलितः कलितन्त्रहारी, पित्रा दधे स्वजनभोजनरञ्जनाद्यैः ॥
निर्बाधसाधनविधिः शतशो जिनार्चा–निर्म्माणनर्मणि परं कृतकर्म्मणापि ॥ १२ ॥

अन्वय —कृतकर्मणा पित्रा स्वजनभोजनरञ्जनाद्यैः कलितन्त्रहारी ( स ) नाम्नाऽन्वयेन कलित आदधे । शतशः जिनार्चा निर्माणनर्मणि निर्बाधसाधनविधिः आपि ॥ १२ ॥

व्याख्या—कृतकर्म्मणा=पुण्यकर्मवता पित्रा=जनकेन 'द्वादशेऽह्नि पितानामकुर्यादितिशास्त्राज्ञानुसारेण द्वादशे दिने इति शेषः स्वजनभोजनरञ्जनाद्यैः–स्वजनेभ्यः बन्धुजनेभ्यः यद्वा स्वेभ्यः=बान्धवेभ्यः जनेभ्यः=साधारणलोकेभ्यः भोजनं=भोज्यदानं रञ्जनं=संगीतकादिना मनोविनोदनम् आदिना नगरमार्गसंस्कारादिस्तैस्तत्पूर्वकमित्यर्थः कलितन्त्रहारी=कलिविजृम्भितविनाशनशीलः सः इति शेषः प्रकृतपुत्रः नाम्ना=अभिधानेन अन्वयेन=वंशे च कलितः=अन्वितः आदधे=चक्रे । किञ्च शतशः बहुशः 'शतं सहस्रमयुतं सर्वमानन्त्यवाचकम् । इत्युक्तेः । जिनार्चानिर्म्माणनर्मणि=जिनपूजनविधानरूपेषत्करकार्यैनिर्बाधसाधनविधिः–निर्बाधः प्रतिबन्धरहितः साधनविधिः=सम्पादनक्रिया आराधनाप्रकारो वा आपि=प्रापि लब्ध इत्यर्थः ॥ १२ ॥

अभिधानान्येव सप्तार्थकेनाह—

सर्वज्ञराजिवृषभः कृतशान्तिकर्मा-नेमिर्व्रतानसि शशिद्युतिवर्धमानः ।
पार्श्वः स्वमातृशयने-क्षितदुर्जनाङ्ग-कृष्णः पयोदविभया प्रभया स रामः ॥ १३ ॥

अन्वयः—सः सर्वज्ञराजिवृषभः कृतशान्तिकर्मा, व्रतानसि नेमि, शशिद्युतिवर्धमान क्षितदुर्जनाङ्गे स्वमातृशयने पार्श्वः पयोदविभया प्रभयाऽकृष्ण· सरामः ( अभूत् ) । २ पक्षे-कृतशान्तिकर्मा ३ व्रतानसि नेमि, पयोदविभयाप्रभया कृष्ण. । ४ पक्षे-क्षितदुर्जनाङ्गे स्वमातृशयने पार्श्वः पयोदविभया प्रभया कृष्ण· । ५ पक्षे-शशिद्युति वर्धमान·, पयोदविभया प्रभया अकृष्ण । ६ पक्षे स राम सर्वज्ञराजिवृषभ·...पयोदविभया प्रभया कृष्ण· । ७ पक्षे—कृष्ण पयोदविभया प्रभया उपलक्षितः, स्वमातृशयनेक्षितदुर्जनाङ्गे पार्श्वः शेषं सर्वत्र पूर्ववत् ॥ १३ ॥

व्याख्या—सः=प्रकृतः सर्वज्ञराजिवृषभः=सर्वज्ञेषु=जिनेषु राजते शोभते तच्छीलः सर्वज्ञराजी वृषभो लक्ष्मरूपेणास्त्यस्येति वृषभः सर्वज्ञराजी चासौ वृषभश्चेति सः यद्वा सर्वज्ञानां राजौ=श्रेण्यां वृषभः=श्रेष्ठः सर्वप्रथमत्वात् स तथोक्तः अथवा सर्वज्ञराजी चासौ वृषभः=उर्ऋषभ (वलीवर्द) लाञ्छनमभूद्भगवतो जनन्या च चतुर्दशानां स्वप्नानामादौ वृषभोदृष्टस्तेन तदाख्यःप्रथमतीर्थकरः । कीदृशः कृतशान्तिकर्मा=कृतं जगतां शान्तिकर्म=सकलोपसर्गोपशमनलक्षणकृत्यं येन सः । व्रतानसि=अहिंसादिव्रतरूपशकटे नेमिः=चक्रधारारूपः । शशिद्युति वर्द्धमानः=शशिनः=चन्द्रस्येव द्युतिः=कान्तिर्वर्द्धमानाऽस्येति सः शशिवद् द्युत्या वर्द्धमान इति वा शशिद्युतिवर्द्धमान इति वा स तथोक्तः । क्षितदुर्जनाङ्गे=क्षितं=पीडितं दुर्जनानां=खलाना शत्रूणाम् अङ्गं येन तत् तस्मिन् राज्ञः पुत्रजनने वैरिणा पीडोत्पत्तेः तादृशे स्वमातृशयने=स्वस्य माता=जननी तस्याः शयने=शय्यायांपार्श्वः=पार्श्व =कक्षाधोभाग इव । पयोदविभया पयोदस्य=वृष्टजलमेघस्येव विभा=शोभा यस्याः सा तया तादृश्या प्रभया-दीप्त्या अकृष्णः=गौरः पयोदकथनात् पयोदानात्-वर्षणात्-परं मेघस्य शुभ्रत्वात् । पुनः स रामः रमणं रामः=आनन्दस्तेन सहितः अभूत् इति प्रथमपक्षीयोऽर्थः ।

शान्तिनाथपक्षे—'कृतशान्तिकर्म्मा' इति विशेष्यम् तस्य कृतं=जनितं शान्तिकर्म्म=अशिवोपशमनरूपकृत्यं गर्भस्थेनापि येन सः

अत एव पित्रा शान्तिः इति कृतनामधेयः श्रीशान्तिनाथप्रभुरित्यर्थः। सर्वज्ञराजिवृषभः=सर्वज्ञराजिषु=सामान्यकेवलिषु वृषभः=श्रेष्ठः। अन्यत् पूर्ववत्।

नेमिनाथपक्षे—नेमिरिति विशेष्यम्। तथा च—व्रतानसि=व्रतरूपरथे नेमिरिव नेमिः=तदाख्यः इत्यर्थः शशिद्युतिवर्द्धमानः—शशिद्युतिवत्=चन्द्रकलेव वर्द्धमानः=अनुदिनमुत्तरोत्तरमुपचीयमानः पयोदविभया प्रभया=हरित् कान्त्याऽञ्जनद्युत्या कृष्णः=श्यामलः अञ्जनाभ इत्यर्थः। शेषं पूर्ववत्।

पार्श्वनाथपक्षे—क्षितदुर्जनाङ्के स्वमातृशयने पार्श्व इव पार्श्वः=तदाख्य इत्यर्थः श्रीपार्श्वनाथ इति यावत्। पयोदविभया प्रभया=नीलिमकान्त्या कृष्णः=नीलः ऐन्द्रनीलमणिमेचकच्छविरित्यर्थः शशिद्युतिवर्द्धमानः चन्द्रकलेववर्धिष्णुः। शेषं पूर्ववत्।

श्रीमहावीरपक्षे—शशिद्युतिवर्धमानः=शशिन इव द्युतिर्यस्य स चासौ वर्द्धमानः=उत्पत्तेरारभ्यज्ञानादिभिर्वर्धते इति गर्भस्थे भगवति ज्ञातकुलु धनधान्यादिभिर्वर्धते इति वा सः वर्द्धमानस्तदाख्यः पयोदविभया प्रभया अकृष्णः=गौरः। शेषं पूर्ववत्।

श्रीरामपक्षे—सर्वज्ञराजिवृषभः=सर्वज्ञेषु जिनेषु राजते तच्छीलः सर्वज्ञराजी स चासौ वृषः=धर्म्मः आर्हतप्रवचनप्ररूपितलक्षणस्तेन भाति=शोभते इति सः यद्वा सर्वे ज्ञाः=पण्डितास्तेषां राजौ=श्रेण्यां वृषभः-श्रेष्ठः-पुरुषोत्तमत्वात्। शशिद्युतिवर्द्धमानः-चन्द्रकलेववृद्धिशीलः पयोदविभया प्रभया कृष्णः=श्यामलकान्तिः सः=प्रसिद्धः रामः=दाशरथिरामबलदेवः राम इत्येतन्नामक इत्यर्थः। अभूत् शेषं पूर्ववत्॥

श्रीकृष्णवासुदेवपक्षे—कृष्णः=इत्येतत्कृतनामधेयः पयोदविभया प्रभया उपलक्षितः नूतनजलधररुचिरित्यर्थः । स्वमातृशयनेक्षितदुर्जनाङ्गे=स्वमात्रा=देवक्या शयने ईक्षितं यद् दुर्जनस्य=दुष्टात्मनः कंसस्याङ्गं तस्मिन् पार्श्वे इव=पर्शुसमूहवान् इवच्छेदकत्वात् पर्शूनां समूहः पार्श्वं तदस्यास्तीति पार्श्वः अर्शआद्यच् शेषं गमवत् ॥ १३ ॥

आराम एव मरुतां तरुवन्नमेरो-रारात् स्थितः सपदिवृद्धिमियाय गोणीम् ।
आमोदिनां सुमनसां निकरैः परीतः, स्फीतोऽभिनन्दितसुपात्रविलासिगात्रः ॥ १४ ॥

अन्वयः—मरुताम् आरामे एव नमेरोः आरात् स्थितः ( कुमारः ) तरुवत् सपदि गौर्णीं वृद्धिम् इयाय । आमोदिना सुमनसा निकरैः परीतः स्फीतः अभिनन्दितसुपात्रविलासिगात्रः ॥ १४ ॥

व्याख्या—मरुतां=देवानाम् 'मरुतौ पवना-ऽमरौ' इत्यमरः । आरामे=लीलोपवने एव नमेरोः=छायावृक्षस्य 'छायावृक्षो' नमेरुः स्यादितिशब्दार्णवः यद्वा सुरपुन्नागवृक्षस्य नमेरुः सुरपुन्नाग इति वैजयन्ती । आरात्=समीपदेशे 'आराद्दूर-समीपयो'-रित्यमरः स्थितः कुमारः तरुवत् वृक्ष इव सपदि झगिति गौर्णीं=वृक्षपक्षे प्राथमिकीं, कुमारपक्षे गुणसंबन्धिनीं वृद्धिम्=उपचयम् इयाय=प्राप । आमोदिना=तीर्थकरजन्मोत्सवाभिनयनजनिततोषेण परमानन्दशालिनां सुमनसां=देवानां तरुपक्षे-आमोदिनाम्=अत्यन्तमनोहरपरिमलशालिनां सुमनसां=पुष्पाणां=निकरैः=समूहैः परीतः=सेवितः अन्यत्र व्याप्तः । स्फीतः=गुणैः समृद्धः अन्यत्र पुष्प-फलपल्लवादिसमुपनितः अभिनन्दितसुपात्रविलासिगात्रः=अभूदिति शेषः ॥ १४ ॥

क्रीडा महीशरुचिताह्युचिताः कुलीने-ऽप्यापीडधारिणि कुमारवरे न कापि ।
पीडाऽन्ववापि जनरञ्जनमेव जातं, स्वातन्त्र्यमस्य भुवि तत्पितुराज्ञयैव ॥ १५ ॥

अन्वय.—आपीडधारिणि कुलीने कुमारवरे महीशरुचिताः उचिता. क्रीडा. (कलयति सति) कापि पीडा न अन्ववापि (कुमारेण) अस्य स्वातन्त्र्य भुवि तत्पितुराज्ञयैव (प्राप्त) जनरञ्जनमेव जातम् ॥ १५ ॥

व्याख्या—आपीडधारिणि=शिरोभूषणशालिनि कुलीने=प्रशस्तकुलसंभवे कुमारवरे महीशरुचिताः=राज्ञोऽभिमताः उचिताः=शैशवावस्थायोग्याः तास्ता मनोविनोदनसाधनीभूताः क्रीडाः=क्रीडनानि बाललीला इत्यर्थः कलयति सतीतिशेषः कापि पीडा=आयासः न अन्ववापि=न प्राप्ता कुमारेणेत्यर्थः किञ्च अस्य=कुमारस्य स्वातन्त्र्यं तत्पितुराज्ञयैव-तज्जनकादेशेनैव प्राप्तं न तु स्वयमेव गृहीतं एवमपि जनरञ्जनं-लोकरञ्जकमेव जातं नत्वितरराजराजपुत्राणामिवापितृदत्तं स्वातन्त्र्यं जनपीडनाय जातमित्यर्थः ॥ १५ ॥

कौमारकीमपि कलां कलयन्नजस्त्रं, विस्रम्भमेव विदधे भुवि मुक्तरम्भः ।
तारुण्यमस्य निगमस्य शमस्य लब्धे-रब्धेरिवाऽजनि सदावधिसंनिधानात् ॥ १६ ॥

अन्वय —कौमारकीं कलाम् अजस्र कलयन् मुक्तरम्भः ( असौ ) भुवि विश्रम्भमेव विदधे । निगमस्य शमस्य च लब्धे. अस्य तारुण्यम् सदावधिसंनिधानात् अब्धेरिव अजनि ॥ १६ ॥

व्याख्या—कौमारकीं=कुमारः=पञ्चवर्षीयो बालकस्तत्सम्बन्धिनीं कलां=चेष्टाम् अजस्रम्=अनवरतं कलयन्=कुर्वन् मुक्तः रम्भः=

परित्यक्तगजमभावः त्यक्तारम्भो वा भावितीर्थकरत्वात् मुक्तदम्भ इति पाठान्तरे निष्कपटः असौ कुमारः भुविमहीतले विश्रम्भं=विश्वासं विदधे=प्रणयं वा जनयामास । किञ्च निगमस्य=शास्त्रस्य शमस्य-शान्तेश्च लब्धेः-लब्धिरूपस्य अस्य-कुमारस्य तारुण्यम्-यौवनम् अब्धेः-समुद्रस्येव जननानन्ददायकम् अजनि=अभूत् अत्र हेतुमाह—मदावधिसंनिधानात्-सदैव अवधिः-( कुमारपक्षे ) नीतिमर्यादा (अब्धिपक्षे) नीरमर्यादा तस्य संनिधानात्=सामीप्यात् समीपावस्थानात्। अथ च मुक्तरंभः मुक्तात्यक्ता रंभा तदाख्यदेवांगना येन सः कुमारावस्थायां प्रभोः सेवार्थमागच्छतिस्म सेति भावः यद्वा मुक्ता निवृत्ता रंभा गौरी अष्टवर्षावस्था यस्य सः अथवा रभ्यते उच्यते इतिरंभः अव्यक्त शब्दः मुक्तः परित्यक्तः रंभः बालावस्थाजनिताव्यक्तशब्दो येन सः। सदावधिसंनिधानात् सदा जन्मत एव अवधेऽवधिज्ञानस्य संनिधानादाश्रयादित्यर्थः ॥ १६ ॥

पोतस्तरत्यपि महाह्रदमध्यनीरं, गाम्भीर्यशालि वयसः पटुपक्षभाजः ।
किञ्चोच्यते नभसिसंगतिरेतदीया, तत्कारणेन महतः प्रतिपत्तिरुक्ता ॥ १७ ॥

अन्वय —पटुपक्षभाजः वयसः पोत अपि गाम्भीर्यशालि महाह्रदमध्यनीरं तरति । एतदीया नभसि संगतिः उच्यते ( जनैः ) तत्कारणेन महतः प्रतिपत्तिः उक्ता ॥ १७ ॥

व्याख्या-पटुपक्षभाजः=उड्डयनसमर्थपक्ष-गरुत-शालिनः वयसः=पक्षिणः पोतः=शिशुर्बालोऽपि गाम्भीर्यशालि—अतिगम्भीरं महाह्रदमध्यनीरं=नदीनदपानीयमध्यं दुस्तरमपीतिभावः तरति। किञ्च एतदीया=पक्षिशावकसंबन्धिनी नभसि=अनवलम्बने महाविशाले

आकाशेऽपि संगतिः=संगमः संबन्धस्थितिरिति यावत् उन्यते जनैः। एतत्सर्वं पटुपक्षभाजः पक्षिणः परिश्रमेणैव भवति। तत्कारणेन=तस्माद्धेतोः महतः=महीयसः प्रतिपत्तिः=सेवा आराधना संगतिर्वा उक्ता कर्त्तव्यत्वेन नीतिज्ञैः कथितेत्यर्थः। किञ्च गांभीर्यशालि अनौद्धत्यशोभिवयसः शरीरावस्थाविशेषस्य किञ्च पटुपक्षभाजः चतुरसहायस्य पोतः शिशुः महाह्रदमध्यनीरं समुद्रवद्दुरवगाहजलाशयमध्यजलमिव नितान्तकठिनमपि बुद्धिगम्यकार्यजातं तरत्यपि तरत्येव "एवार्थकोऽपिः" सदुस्तरमपि चिन्तनीय कार्यजातं बुद्धिप्रभावेण सरलयतीति भावः। अत्र=विषय इति शेषः एतदीया प्रभावशालिबालकसम्बन्धि नभसि संगतिः निर्मलगाम्भीर्य संगतिरेव करणत्वेनेति शेषः उन्यते अभिधीयते मनोरमहृदयावधानमेवहेतुत्वेनोत्प्रेक्ष्यते तत् कारणेन महतः सज्जनपुरुषस्य संगतिरुक्ता कथिता महतां संगतिः अवश्यमेवविधातव्येत्यर्थः ॥ १७ ॥

बाल्यं व्यतीत्य तरुणस्तरुणैव साम्यं, धत्ते फलैरपि कलैः किशलैर्दलै र्वा।
संपूर्णतामनुनयन् सुमनोभरेण, सामोद एव कृतया—वनसम्पदा स्यात् ॥ १८ ॥

अन्वय —(कुमारः) बाल्य व्यतीत्य तरुण· तरुणैव साम्य धत्ते। फलै. कलैः किशलैर्दलैश्च। सुमनोभरेण सपूर्णताम् अनुनयन् कृतया वनसम्पदा सामोद एव स्यात् ॥ १८ ॥

व्याख्या—महत्प्रतिपत्तिवान् कुमारः बाल्यं=शैशवावस्थां व्यतीत्य=अतिक्रम्य तरुणः=यौवनस्थः सन् तरुणा=वृक्षेण एव साम्यं=सादृश्यं धत्ते=धारयति कैरित्याह—फलैः=परोपकारादिकार्यैः पक्षे—सस्यैः प्रसवैरित्यर्थः। कलैः=कलाभिः पक्षे पक्षिणां मधुराव्यक्तशब्दैः।

किसलैर्दलैः=पल्लवनतमयनैः मैत्र्यैः पक्षे पल्लवैः पत्रैश्च । किञ्च सुम-नोभरेण पण्डितवर्गेण संपूर्णताम् अनुनयन्=प्राप्यमाणः कृतया सज्जनसम्पदा=रक्षणसम्पत्त्या सामोदः=सानन्द एव स्यात् वृक्षपक्षे=पुष्पसमृद्ध्या सम्पूर्णतां प्राप्यमाणः वनसम्पदा=वनलक्ष्म्या सामोदः= अत्यन्तजनमनोहरसुगन्धिसहितः स्यात् । किशलः पल्लव इति शब्दस्तोममहानिधिः । श्लिष्टोपमा ॥ १८ ॥

नम्रीभवेत् सविटपोऽपि वटो जनन्यां, भूमौ लता-परिवृतो निभृतः फलाद्यैः ।
कौ-लीनतामुपनतां निगदत्ययं किं, सम्यग्गुरोर्विनय एव महत्त्वहेतुः ॥ १९ ॥

अन्वय —लता-परिवृत फलाद्यैः निभृत सविटप अपि वटो जनन्यां भूमौ नम्रीभवेत् ( किन्तु ) अय उपनताम् आत्मनः कौलीनता किं निगदति गुरोः सम्यग् विनय एव महत्त्वहेतु ॥ १९ ॥

व्याख्या—लतापरिवृतः=वल्लीभिर्व्याप्तः फलाद्यैः=फल=पत्रादिभिः निभृतः=पूर्णः सविटपः=शाखादिसहितः अपि वटः=न्यग्रोधः वृक्षः जनन्या=स्वोत्पत्तिहेतुभूतायां भूमौ=पृथिव्यां नम्रीभवेत्=पृथ्वीमभिनतोभवतीत्यर्थः परम् अयं वटः उपनतां=प्राप्ताम् आत्मनः कौलीनताम्=आभिजात्यं कौ=पृथिव्यां लीनतां च किं निगदति स्वयं प्रकटयति नैव निगदतीत्यर्थः युक्तं चैतत् यतः गुरोः सम्यग् विनयः=शिक्षा एव महत्त्वहेतुः=महिम्नः कारणं भवति । अत्र समासोक्त्या-ऽप्रस्तुतप्रशंसया वा इदमर्थान्तरं ध्वन्यते यत् धनजनयौ-वनरूपसम्पन्नोऽपि जनो विनयाऽवनतो न स्वीयमहत्त्वं स्वयं प्रकटयति, किन्तु तदीयविनय एव तस्याऽऽभिजात्यं महत्त्वं च लोके ख्यापयति । कुमारोऽपि राजराजपुत्रस्तारुण्यमनोहरः सर्वगुणसम्पत्समृद्धः सन्नपि गुरुजनेषु विनयावनत आसीदित्यर्थः ॥ १९ ॥

तेजो वहन्नसहनो दहनः स्वजन्महेतून् ददाहतृणपुञ्जनिकुञ्जमुख्यान् ।
लेभे फलं त्वविकलं तदयं कुनीते-र्भस्मावशेषतनुरेष ततः कृशानुः ॥ २० ॥

अन्वय —दहन. असहन तेजो वहन् स्वजन्महेतून् तृणपुञ्जनिकुञ्जमुख्यान् ददाह तु अय कुनीते. अविकल तत् फलं लेभे यतः एष कृशानुः भस्मावशेषतनुः जातः ॥ २० ॥

व्याख्या— विनयफलमुक्त्वाऽविनयफलमाह— दहनः=अग्निः असहनः=असह्यः असहिष्णुश्च तेजः=तापकतालक्षणस्वभावं तीव्रतां च वहन्=धारयन् स्वजन्महेतून् स्वोद्भवनिमित्तभूतान् तृणपुञ्जनिकुञ्जमुख्यान्=तृणराशि=लतागृहादीन् ददाह=भस्मीचकार । तु=किन्तु अयं दहनः कुनीतेः=कृतघ्नतायाः अविकलं=सकलं तत् अनिर्वचनीयं फलं लेभे=लभतेस्म यतः एष कृशानुः=आश्रयाशः भस्मावशेषतनुः=भस्ममात्रावशिष्टरूपः जातः स्वयमपि नष्ट इत्यर्थः । समासोक्त्याचायमर्थो ध्वन्यते=असहिष्णुप्रकृतिस्तीव्रतां दधत् स्वोपजीव्यमपि विनाशयति ततश्च तत्कृतघ्नताविजृम्भितदुष्फलं लभमानोऽवसाने स्वयमपि समूलमुन्मूलितोभवति ॥ २० ॥

अस्याग्रजो न मुशली हलभृन्न किन्तु, ख्यातो नवाशबलधी--रथ--नेमिरूपः ।
श्रीनन्दिवर्धनमतिः स्फुरितोऽनुजन्मा, सौमित्रिलक्ष्मणकलाकुशलादिनामा ॥ २१ ॥

अन्वय.—अस्य अग्रज. मुशली हलभृत् न ( इति ) न, किन्तु ख्यात. नवाशबलधीः अथ नेमिरूपः श्रीनन्दिवर्द्धनमतिस्फुरितः सौमित्रलक्ष्म

कला-कुशलादिनामा अनुजन्माऽभूत् (इति कृष्णपक्षे)। अस्य रथनेमिरूप अग्रजः मुशली न हलभृत् न किन्तु ख्यात अशबलधी श्रीनन्दि'। सौमित्रलक्ष्मणकलाकुशलादिनामा अनुजन्मा न आसीत् अस्य श्रीनन्दिवर्द्धनमतिस्फुरित अग्रज (शेषं द्वितीयवत्)। अस्य अग्रजः न (आसीत्)। सौमित्रलक्ष्मणकलाकुशलादिनामाऽनुजन्माऽपि मुशली हलभृत् न किन्तु ख्यात नवाशबलधी' अथ नेमिरूपः श्रीनन्दिवर्धनमतिस्फुरितश्च ॥ २१ ॥

व्याख्या—अस्य श्रीकृष्णवासुदेवस्य अग्रजः=ज्येष्ठभ्राता मुशली=मुशलास्त्रभृत्, हलभृत्=हलास्त्रधारी न इति न किन्तु मुशल्येव हलभृदेव हलं मुशलं च बलदेवस्य चिह्नभूतमिति नाप्रसिद्धम् नवाशबलधीः नवा=नवीना नवनवोन्मेषशालिनीत्यर्थः अशबला=एकरूपाधीः प्रज्ञा यस्य सः प्रतिभाशालीत्यर्थः अथ च नेमिरूपः=नेमिषु=दुर्गवस्तु प्रशस्तः नेमिरूपः। श्रीनन्दिवर्द्धनमतिः=श्रियाः=शोभायाः कीर्तेर्वा, नन्देः=आनन्दस्य च वर्द्धने मतिर्यस्य सः श्रियं नन्दिं च वर्द्धयतीति श्रीनन्दिवर्द्धना तादृशी मतिर्यस्येतिवा, श्रीः=कल्याणी नन्दिवर्द्धने=मित्रे मतिर्यस्येति स तथोक्तः। स्फुरितः=स्फूर्त्तिशाली। अनुजन्मा=कनिष्ठभ्राता गदः 'अनुजो गद' इत्यमरः सौमित्रलक्ष्मणकलाकुशलादिनामा=शोभनं मित्रमस्यासौ सुमित्रः शोभनं मित्रं सुमित्रमिति वा स एव (तदेव) सौमित्रः (त्रं) लक्ष्मणः=लक्ष्मीवान्. कलाकुशल इत्यादिभिर्नाम्यते-ऽभ्यस्यते इति स तथाऽभूत्।

नेमिनाथपक्षे—अस्य=श्रीनेमिनाथप्रभोः रथनेमिरूपः=रथनेमिनामा अग्रजः मुशली=मुशलधारी न हलभृत्=हलधरो न किन्तु ख्यातः=लोके विदितः शबलधीः श्रीनन्दिवर्द्धनमतिः स्फुरितः। सौमित्रलक्ष्मणकलाकुशलादिनामाऽनुजन्मा नवा=नैव आसीत्।

श्रीवीरप्रभुपक्षे—अस्य=वर्द्धमानप्रभोः श्रीनन्दिवर्द्धनमतिस्फुरितः=मतिः=प्रज्ञा स्फुरिता=स्फूर्तिशालिनी यस्य स मतिस्फुरितः

श्रीनन्दिवर्द्धनः=तदाख्यश्चासौ मतिस्फुरितश्चेति स तथोक्तः नन्दिवर्द्धनसंज्ञ इत्यर्थः अग्रजः=ज्येष्ठभ्राता मुशली न हलभृत् न किन्तु ख्यातः नवा शबलधीः नेमिरूपश्च । सौमित्रलक्ष्मणकलाकुशलादिनामाऽनुजन्मा नवा=नैवाऽऽसीत् ।

श्रीरामपक्षे—अस्य श्रीरामचन्द्रबलदेवस्य अग्रजः=ज्येष्ठभ्राता न आसीदिति शेषः सौमित्रिलक्ष्मणकलाकुशलादिनामा अनुजन्मा=कनिष्ठभ्राताऽपि मुशलीहलभृत् च न किन्तु ख्यातः नवाशबलधीः नेमिरूपः श्रीनन्दिवर्द्धनमतिः स्फुरितश्च । सौमित्रिलक्ष्मणेत्यादेश्चायमर्थः सौमित्रिः (सुमित्रायांभवत्वात् लक्ष्मणः कलाकुशलः इत्यादीनि नामानि अस्य सः इत्यादिभिः म्नायते=अभ्यस्यते अभिधीयते इत्यर्थ इति वा स तथोक्तः ॥ २१ ॥

अस्य प्रिया न समभूत् कमलाऽनुरूपा, पूर्वा सुमङ्गलवचास्त्वपरा सुनन्दा ।

नाम्ना प्रभाति-रतिकृत्सुभगा च भैमी, शीतांशुपुर्णवदना सदया यशोदा ॥ २२ ॥

अन्वय.—अस्य प्रिया कमलाऽनुरूपा न समभूत्? नाम्ना च पूर्वा सुमगलवचाः । अपरा सुनन्दा ? प्रभाति रतिकृत् सुभगा भैमी शीतांशुपूर्णवदना सदया यशोदा । २ अस्य नाम्ना यशोदा यशोमतीप्रिया कमलानुरूपा न समभूत् । अपूर्वा सुमगलवचा. अपरा सुनन्दा शेष पूर्ववत् । ३ अस्य कमलाऽनुपूर्वा यशोदा प्रिया न समभूत् । ४ अस्य प्रिया नाम्ना प्रभा–प्रभावती कमलानुरूपा न समभूत् (शे. पू) ५ अस्य प्रिया नाम्ना यशोदा ६ अस्य प्रिया नाम्ना शीता अशुपूर्णवदना । ७ अस्य प्रिया भैमी नाम्ना ॥ २२ ॥

व्याख्या–अस्य=श्रीऋषभदेवस्य प्रिया=भार्या कमलाऽनुरूपा=लक्ष्मीसदृशी एव न समभूत् ततोऽप्यधिकरूपवतीत्यर्थः नाम्ना

न पूर्वा=प्रथमपरिणीता ज्येष्ठा सुमंगलवचाः=सुमङ्गल इति वचः=वाचकशब्दो यस्याः सा सुमङ्गलाभिधेयेत्यर्थः । अपरा=द्वितीया सुनन्दा=तन्नामिकेत्यर्थः । सा कीदृशीत्याह-प्रभाति-रतिकृत्=प्रभातिं=प्रकाशं रतिं=रागं च पत्यौ करोति या सा यद्वा प्रकर्षेण भातीतिप्रभा, अतिरतिं करोतीत्यतिरतिकृत् । अथवा=प्रभया=निजवपुःकान्त्या अति=अतिशयेन रतिं=कामभार्यां कृन्तति=धात्वनेकार्थत्वात् जयतीति सा तथोक्ता । सुभगा=पतिवल्लभा, सुदृश्या वा शोभनैश्वर्यशालिनी वा पुनश्च भैमी=भैमीवेति लुप्तोपमा दमयन्तीव रुक्मिणीव वा पतिव्रतेत्यर्थः शीतांशुपूर्णवदना=चन्द्रमुखी, सदया=निष्कारणपरदुःखप्रहाणेच्छावती यशोदा कीर्तिदायिनी ।

२ शान्तिनाथपक्षे—अस्य=श्रीशान्तिनाथप्रभोः नाम्ना यशोदा=यशोमती नाम्नी प्रिया कमलानुरूपा एव न ततोऽप्यधिकसौन्दर्यशालिनी समभूत् सा कीदृशीत्याह-अपूर्वा=लोकोत्तरशीलसौन्दर्यशालित्वेन विलक्षणा सुमङ्गलवचाः=सुमंगलं=हितावहत्वात् कल्याणं वचः=वचनं यस्याः सा पुनः अपरासु=सपत्नीषु नन्दा=नन्दयतीति नन्दा=आनन्दयित्री शेषं पूर्ववत् ।

३ नेमिनाथपक्षे—अस्य=श्रीनेमिनाथप्रभोः कमलानुरूपेत्यादिविशेषणविशिष्टा प्रिया=पाणिगृहीती न समभूत् किन्तु आजन्मब्रह्मचारितया निष्प्रिय एवायमवतस्थे ।

४ पार्श्वनाथपक्षे —अस्य श्रीपार्श्वनाथप्रभोः प्रिया=सहधर्मिणी नाम्ना प्रभा=प्रभावतीनाम्नी कमलानुरूपा एव न किन्तु तदधिकरूपवती समभूत् शेषं पूर्ववत् ।

५ वीरविभुपक्षे-अस्य=श्रीवर्द्धमानप्रभोः प्रिया=भार्या नाम्ना च यशोदा कमलानुरूपा एव न किन्तु ततोऽप्यधिकरूपशालिनी-

त्यर्थः समभूत् । शेषं प्राग्वत् ।

६ श्रीरामपक्षे—अस्य=श्रीरामचन्द्रबलदेवस्य प्रिया=पत्नी नाम्ना च शीता कमलानुरूपा=लक्ष्मीरूपिणी न समभूदिति काक्वा समभूदेवेत्यर्थः राघवत्वे भवेत् सीता रुक्मिणी कृष्णजन्मनीत्यन्यत्रोक्तेः । सा कीदृशीत्याह अपूर्वा, सुमङ्गलवचाः=सुमङ्गलसतीत्वेन प्रातःस्मरणीयतया कल्याणावहं वचः=उक्तिर्यस्याः । सा अपरासु=सपत्नीषु नन्दा=आनन्दकारिणी । जैनानां समये रामचन्द्रस्य बहुपत्नीकत्वात् सीतायाः सपत्नीजनहर्षकारित्वोपपत्तेः । प्रभातिरतिकृत् सुभगा भैमी, अंशुपूर्णवदना=अंशुभिः=प्रभाभिः=कान्तिभिः पूर्णं=भृतं वदनं मुखं यस्याः सा । सदया, यशोदा च विवरणं प्राग्वत् ।

श्रीकृष्णपक्षे—अस्य श्रीकृष्णवासुदेवस्य कमलानुरूपा लक्ष्मीरूपिणी " राघवत्वेभवेत्सीतारुक्मिणीकृष्णजन्मनीत्यन्यत्रोक्तेः " भैमी रुक्मिणी प्रिया=भार्या यद्वा भार्याणां मध्येऽतिशयप्रेमपात्रीभूता न समभूत् काक्वा समभूदेवेत्यर्थः शेषं पूर्ववत् ॥ २२ ॥

**तेना-हता वृषभ केशिखरा विरूपा, नऽव्याहताः समितिसंगतिगुप्तिकार्ये ।**
**वाग्नोदितासमिति संगतिगुप्तिकार्येऽ—लक्ष्यस्वरूपमत एव मतं हि तस्य ॥ २३ ॥**

अन्वयः—तेन वृषभ केशिखराविरूपा अहताः समिति संगति गुप्तकार्ये व्याहता, न समिति सगति गुप्तकार्ये वाग्नोदिता, अत एव तस्य मतं अलक्ष्यस्वरूपम् ॥ २३ ॥

व्याख्या—तेन तीर्थङ्करप्रभुणा वृषभकेशिखराविरूपाः वृषभः वृषः, केशी सिंहः, खरो मृगस्तेषान्द्वन्द्वस्ते, विरूपाश्च निरूपाश्चे-

न्येकशेषस्तेविरूपा विम्पक्षिणं रूपयन्ति अन्विपन्तीति विरूपाः सर्पाः अथ च विविशब्दं स्वच्छं रूपं वर्णो येषान्ते विरूपाः शंखास्ते, अहना नपरित्यक्ताः किन्तु स्वस्वलाञ्छनरूपेण स्वीकृता एव, यथा आदीश्वरस्य वृषः महावीरस्य केशी सिंहः शान्तेः खरः खे रमते प्लवतीति खरो मृगः पार्श्वस्य विरूपः सर्पः नेमे शंख एवं रूपा इत्यर्थः समितिसंगतिगुप्तिकार्ये समितेः सभायाः या संगतिः सम्मेलनम् तत्र यत् गुप्तिकार्ये रहोमंत्रणम् तस्मिन् न व्याहता न हता न प्रतिबद्धा इत्यर्थः किन्तु संगता एव तथा समितिसंगतिगुप्तिकार्ये सभासम्मेलनरहोमत्रणे वाग् वाणी नोदिता प्रेरिता प्रयोजिता न केवलं संख्यापूरणाय तत्र स्थिताः किन्तु स्वमतमपि तत्र प्रकाशयन्तः अत एव वाग्नोदनादेव स्वमतप्रकाशनादेवेत्यर्थःतस्य जिनेन्द्रस्य मतमभिप्रायः अलक्ष्यस्वरूपं पामरैरनधिगम्यंस्वरूपम् कार्यादेव तन्मन्त्रितं ज्ञायते न पूर्वमित्यर्थः ।

रामपक्षे—वृषभकेशिवराः तत्तदभिधाना राक्षसाः विरूपा सूर्पणखा च तेन रामेण आहता आसमन्ताद्विनाशिताः अन्यदुक्तस्वरूपम् कृष्णपक्षे-वृषभकेशिवराः विरूपाः वृषभासुरकेशिदानवगर्दभासुराः विरूपा अघासुरप्रभुतयश्च आहता विध्वंसिता हिंसिता अन्यत् पूर्ववत् ॥ अत्रश्लोकेयमकः श्लेषश्च ॥ २३ ॥

सम्यक्कलाकुशलताध्ययनं विनास्य, लोकेऽन्यगौरवधियाऽध्ययनं प्रपद्य ।
सूर्यः करोति भुवनं प्रकटं स्वतस्तत्, किं पाटवेऽस्यघटते परसंपरायः ॥ २४ ॥

अन्वय--लोकेऽन्यगौरवधियाऽध्ययन प्रपद्य सम्यक कलाकुशलता अस्य अध्ययन विनैव. सूर्य स्वतः तत् भुवनं प्रकट करोति अस्य पाटवे परसंपराय. किं घटते ॥ २४ ॥

व्याख्या—लोके जने जगति वाऽन्यगौरवधिया अन्यस्मिन् जने गुरुवद्बुद्ध्या अध्ययनं पठन प्रपद्य प्राप्य सम्यक् सर्वथा कलाकुशलता चतुःषष्टिकलानैपुण्यं भवतीति शेषः अस्य वर्णनीयमहापुरुषसप्तकस्य अध्ययनं विनैव अध्यापकाद्यालम्बनकपठनं विनैव कलाकुशलता अभूदित्यर्थः, अत्र दृष्टान्त प्रदर्शयति सूर्यः स्वत एव आत्मनैव तत् प्रसिद्ध भुवनं प्रकटं करोति प्रकाशयति किं च अस्य सूर्यस्य पाटवे जगत्प्रकाशनकौशले परसंपरायः अन्यसहायः अन्याश्रयणं किं घटते युज्यते न घटत इत्यर्थः। अथ च अस्य चरित्रनायकस्य सम्यक्कलाकुशलता सर्वथाकलानैपुण्यं अध्ययनं पठनम्विनैव गुरुकुलशुश्रूषणं विनैव किन्तु लोके जगति अन्यगौरवधिया अन्येऽप्येवं कुर्युरित्येवं बुद्ध्या अध्ययनं गुरुकुलनिवासं प्रपद्य सम्यक् कलाकुशलता अभूदित्यर्थः ॥ अत्र दृष्टान्तालंकारः ॥ २४ ॥

कं स प्रयोगमधिगत्यपरस्परेण, कं सं जहारकरणाय जने हितस्य ॥
नैपुण्यपुण्यवशतोऽतिशयाश्रयेण, निष्कण्टकत्वमजनिष्ट निजेष्टदेशे ॥ २५ ॥

अन्वयः—परस्परेण क स प्रयोगम् अधिगत्य जने हितस्य करणाय कं सं जहार नैपुण्यपुण्यवशतः अतिशयाश्रयेण निजेष्टदेशे निष्कण्टकत्वम् अजनिष्ट ॥ २५ ॥

व्याख्या-स प्रभुः आदीश्वरादिः कम् कमपि प्रयोगम् अनुष्ठानम् व्यापारम् परस्परेण क्रमेण अधिगत्य प्राप्य यद्वा कम् कमपि प्रयोगमश्वम् "प्रयोगः अनुष्ठाने निदर्शने अश्वे चेति शब्दस्तोमहानिधिः" परस्परेण अन्योन्यतः अधिगम्य प्राप्य जने लोके हितस्य पथ्यस्य मंगलस्येत्यर्थः करणाय विधानाय स्थापनाय कंसं पानभाजनं मद्यपानपात्रं "काम्यते कामिभिरिति" मावावद्यमित्यौणादिकः सः"

"मल्लिकाचपकः कंसः पारीसात्पानभाजनमिति हैमः" जहार हृतवान् सर्वत्रनिवारयामास नैपुण्यपुण्यवशतः नैपुण्यं सर्वसम्पत्समर्पकं यत्पुण्यं शुभादृष्टम् तस्यवशत आनुकूल्यात अतिशयाश्रयेण सर्वतोऽधिकत्वेन सर्वश्रेष्ठत्वेनेत्यर्थः निजेष्टदेशे स्वीयाभिमतप्रदेशे निष्कण्टकत्वम् निरापत्त्वम् निर्वैरत्वम् अजनिष्ट सर्वतो निरुपद्रवो जात इति भावः ।

कृष्णपक्षे—परम्परेण कर्णाकर्णितः जनवचनतः कंस प्रयोगं कसस्य स्वमातुलस्य व्यवहारं नीचाचार अधिगत्यश्रुत्वा जने स्वजने हितस्य क्षेमस्य करणाय क्षेमं कर्तुं कसं कसनामानं नृपं जहार जघान नैपुण्यपुण्यवशतः अत्यधिकपुण्यमाहात्म्यात् अतिशयाश्रयेण आतिशय्यमधिकृत्यनिजेष्टदेशे स्वाभिमतप्रदेशे निष्कन्टकत्वं निर्वैरत्वं शत्रुराहित्यं अजनिष्ट अजनि ॥ २५ ॥

सन्तोऽपि ये स्वसमयज्ञविधिं प्रपन्ना, दैत्योपरुद्धमनसो भुवि दुर्जना ये ॥
पूर्वेष्टसाधनविधानमनन्तरायं, कर्त्तुं ययौ स विपिनं परवारणेन ॥ २६ ॥

अन्वय.—ये सन्तस्ते स्वसमयज्ञविधिं प्रपन्नाः ते दुर्जनास्ते दैत्योपरुद्धमनसः पूर्वेष्टसाधनविधानम् अनन्तराय कर्तुं स परवारणेन विपिनं ययौ॥२६॥

व्याख्या—अथेन्द्रः प्रभोर्विवाहसमयमधिगम्य तदनुज्ञा जिघृक्षुर्व्यजिज्ञपत् प्रभुश्चमौनेन तदुत्तरन्ददावित्याह सन्तोऽपीति । ये सन्तः सत्पुरुषा कर्त्तव्याकर्त्तव्यविवेकिन स्वसमयज्ञविधिम् स्वसमयंस्वावशिष्टकर्मभोगसमयं ज्ञापयति बोधयतीति स्वसमयज्ञः स चासौ विधिश्च तन्तथोक्तम् अवधिज्ञानादिना तदुद्बुद्धा प्रपन्नाः स्वीकृताः अङ्गीकृता इत्यर्थ ये भुवि पृथिव्यां दुर्जना दुर्बुद्धयः ते दैत्योपरुद्धमनसः अज्ञानोपहततया कर्त्तव्याकर्त्तव्यनिर्धारणपराङ्मुखा भवन्तीति शेषः अनन्तरायं अन्तरायरहितं निर्बाधं पूर्वेष्टसाधनविधानं पूर्व-

पूर्वनिर्धारितं यदिष्टसाधनम् चतुर्थपुरुषार्थसाधनम् विपिनम् दुःसाध्यम् तत् कर्त्तुमनुष्ठातुम् परवारणेन अत्युत्कृष्टात्मबलेन मदोन्मतगजेन वा ययौ जगाम ॥

पार्श्वनाथपक्षे—दैत्योपरुद्धमनसः दैत्येन छेदनभेदनादिना उपरुद्धम् अभिभूतं व्याप्तं मनो येषान्ते सदसद्विवेकरहिता ये भुवि भूमौ दुर्जना, दुराचारिणो यवननृपप्रभृतयः सन्तीति शेषः पूर्वेष्टसाधनविधानं पूर्वं पूर्वकर्त्तव्यं यद् इष्टसाधनविधानम् प्रभावती परिणयरूपम् अनन्तरायम् निष्प्रत्यूहं कर्तुं प्रयोजितुं परवारणेन अत्युत्कृष्टहस्तिसाधनेन विपिनम् भयजनकम् यवननृपंप्रति ययौ इयाय ॥

रामपक्षे-ये सन्तः सत्पुरुषा महान्तस्ते स्वसमयज्ञविधिं स्वकीयसमयज्ञापकविधिं कर्त्तव्यं प्रपन्नाः कर्त्तव्योन्मुखाः भवन्ति ये दुर्जना दुश्चरित्रास्ते दैत्योपरुद्धमनसो जायन्त इति शेषः पूर्वेष्टसाधनविधानं सीतापरिणयरूपेष्टप्रथमकर्त्तव्यं अनन्तरायं निर्बाधं कर्तुं विधातुम् परवारणेन परेषां शत्रूणां वारणेन दैत्यजननिरोधेन विपिनं ययौ ॥

कृष्णपक्षे—रुक्मिणीविवाहरूपेष्टसाधन कर्तुं ययाविति, शेषं पूर्ववत् ॥ २६ ॥

**तीव्रव्रतानुचरणा नधिगम्य जानेः "जातेः" पूर्वेऽवशिष्टमपि तन्मनसा ननाम ॥**

**इत्याश्रयन्निव विधिन्तदगाधि जातं, ज्ञातं भजन् वनमियाय स गाधिजातं ॥ २७ ॥**

अन्वयः—जानेः "जाते." तीव्रव्रतानुचरणान् अधिगम्य पूर्वे भवशिष्टमपि तत् मनसा ननाम अगाधि जातम् विधिम् तदाश्रयन्निव स ज्ञानम् भजन् गाधिजातम् वनम् इयाय ॥ २७ ॥

व्याख्या—जानेः "जातेः" उत्पत्तेः जन्मनः फलानि हेतून् तीव्रव्रतानुचरणान् महत्पुण्यपरिपाकप्रभावसाध्यदुःसाध्यनियमपरि-

ग्पािलनरूपान् अधिगम्य ज्ञात्वा विचार्य "मदीयजन्मनस्तीव्रव्रताचरणमेवफलमिति" निश्चित्य पूर्वं पूर्वभवेऽवशिष्टम् अजीर्णतया कि- ञ्चित् स्थितम् अपि तत् कर्म मनसा हृदयेन ननाम ससार तत् तस्मात् अगाधिजातम् गाध्यते लिप्यते इति गाधिर्लिप्सा तस्माज्जातम् इति गाधिजातम् तन्न भवतीत्यगाधिजातम् अयत्नोपनतम् विधिम् अदृष्टम् कर्मेत्यर्थः "दैवन्दिष्टम्भागधेयं भाग्यं स्त्रीनियतिर्विधिरित्य- मरः" आश्रयन्निव इति ज्ञानम्भजन् सेवमानः स प्रभुर्जिनेन्द्रः गाधिजातम् प्रतिष्ठाजनकम् वनम् आलयम् अरण्यम् वा इयाय ययौ ॥

कृष्णपक्षे—ज्ञाने: जायतेऽस्मादिति जानिः तस्य जाने: समुद्रस्य जलरूपतया जलस्य च जीवनत्वेन समुद्रस्य तत्वमिति भावः स कृष्णः तीव्रव्रतानुचरणान् अष्टमतपःप्रभृतीन् अधिगम्य प्राप्य कृत्वेत्यर्थः पूर्वं प्रथमम् अवशिष्टम् अतिरिक्तम् अधिकम् तत् समुद्रम् जीवनत्वेन क्लीवनिर्देशः मनसा हृदयेन भक्त्या ननाम तत् समुद्रजलम् इति पूर्वोक्तरूपं विधिमनुष्ठानमाश्रयन्निव स्वीकुर्वन्निव ज्ञानम् कृष्णोऽयन्नमामान्य इति बुद्ध्या जानन् इति स्मरन् अगाधि जातम् अतिगम्भीरं स प्रतिष्ठमिति भावः वनं समुद्रजलम् स गाधिजातम् अनिम्नं सुप्रचारमियाय ययौ द्वारकाजनप्रचाराय किञ्चित् प्रसमागेति भावः ॥२७ ॥

कन्यान्यदाकृत सुमंगलका विदर्भे, प्रासाति शैशववयोऽभिधया सुनन्दा ॥
सीताप्रभा समधिकक्षमया विभूषा, सद्रुक्मिणा वरहिताहिकजा यशोदा ॥ २८ ॥

अन्वयः—अन्यदा कृतसुमंगलका अतिशैशववयःप्राप्ता अभिधयासुनन्दाकन्या सीता समधिकक्षमया विभूषासद्रुक्मिणी वरहिताहिकजा यशोदा भामीरिति शेषः ॥ २८ ॥

व्याख्या— आदीश्वरपक्षेअन्यदा कदाचित् विदर्भे विगतो दर्भः कुशोयत्रतस्मिन् यद्वा विशेषेणदर्भो यत्र युगलित्वाद्वनाधिवासतस्तस्मिन् विदर्भदेशे कृतसुमंगलका कृतम् विहितं सुमंगलं विवाहपूर्वकर्त्तव्यकुमारीकृत्यं यया सा कृतसुमंगलका अथ च सुमंगलाभिधाना अतिशैशववयः प्राप्ता शैशवादतिक्रान्तमतिशैशवम् " अत्यादयः क्रान्ताद्यर्थे पञ्चम्या " इति समासः अतिशैशवं च तद्वयश्चेति कर्मधारयस्तत् प्राप्ता अतिक्रान्तशैशवा प्राप्तयौवनेत्यर्थः अभिधया संज्ञया सुनन्दा सुनन्दाभिधाना सीता लक्ष्मीस्वरूपा समधिकक्षमया अत्यधिकक्षमाशीलतया विभूषा क्षमाभूषणभूषिता प्रभा कान्तिरूपा सद्रुक्मिणी शोभनस्वर्णभूषणचिता वरहिता वराय हिता वरणयोग्या अहिकजा नागकन्येव यशोदा यशोविधायिनी आसीदिति शेषः ॥

श्रीशान्तिनाथपक्षे—विदर्भे विगतः दर्भो भयो यत्र तस्मिन् विदर्भे भयरहिते कृतसुमंगलका विहितसुमङ्गका अतिशैशववयः प्राप्ता समधिगततरुणावस्था सीता प्रभा सीता इव लक्ष्मीरिव प्रभाकान्तिर्यस्याः सा समधिकक्षमया निरतिशयसहिष्णुतया विभूषाजगदवतंसभूता सद्रुक्मिणी सत् प्रशस्तं रुक्म स्वर्णं अस्ति अस्याः सा सद्रुक्मिणी यद्वा विभूषायां भूषणे सद्रुक्म यस्याःसा विभूषासद्रुक्मिणी वरहितावरस्य ग्रहण कर्त्तुः कल्याणप्रयोजिका अभिधया संज्ञया यशोदा यशोमती अभूदिति शेषः ॥

श्रीपार्श्वनाथपक्षे—उक्तविशेषणविशिष्टा अभिधया नाम्ना प्रभा प्रभावतीति शेषः ॥

श्रीवीरस्वामिपक्षे—अभिधया यशोदा यशोदा नाम्नीति विशेषोऽन्यत् वर्णितदिशावसेयम् ॥

रामपक्षे—यथोक्तविशेषणवती अभिधया सीता तन्नाम्नीतिनियोज्यम् ॥

कृष्णपक्षे—अभिधया सद्रुक्मिणी सती चासौ रुक्मिणीचेति सद्रुक्मिणी विदर्भे विदर्भजनपदे अन्यत्पूर्ववत् ॥

श्रीनेमिनाथपक्षे—अन्यदा कस्मिन् अपि समये विदर्भे विगतभये प्रभौ नेमिनाथे कन्यादीप्तिः अभूदिति शेषः कापिलोकातिशयकान्तिर्जातेति भावः कथभूता कृतसुमंगलका कृतं सुमंगलं यया विहितभव्या अतिशैशववयः प्राप्ता अतिशैशववयसि यौवनावस्थायां प्राप्ता संगता शैशवानन्तरमधिगता प्रभोर्युवत्वागमसूचिकेत्यर्थः सुनन्दा सुष्ठुनन्दयतिजनानिति सुनन्दा सर्वमोदप्रदात्री सीता प्रभा सीता लक्ष्मीरिव प्रभादीप्तिर्यस्याः सा समधिकक्षमया अतिसहनशीलया विभूषा विभूषणरूपा मण्डनायमाना सद्रुक्मिणी स्वर्णसदृशी स्वर्णकान्तिकमनीयेत्यर्थः वरहिता वरश्रेष्ठाचासौ हिताहितप्रयोजिका इति वरहिता अतिशयोपकारकारिणी अहिकजा अहिरेव अहिकः सूर्यस्तस्माज्जाता इवेति सूर्यकान्तिसदृशी यशोदा यशोविधायिनी सर्वाधिकदीप्तिमरेत्यर्थः ॥ २८ ॥

रागं पुपोषभगवद्वपुषागुणेन, रूपश्रियातिशयिनं जयिनं विमृश्य ॥
कन्यास्वयम्वरमहं सततो गवेशः, प्रारब्धवान् विहित संहित सन्निवेशः ॥ २९ ॥

अन्वय.—गवेशः भगवद्वपुषागुणेन रूपश्रियातिशयिन जयिनं विमृश्य रागं पुपोष विहित संहितसन्निवेशः सन् कन्यास्वयम्वरमहं प्रारब्धवान् ॥२९॥

व्याख्या—गवेशः गोः पृथिव्या ईशः पतिः गवेशः पृथ्वीशः भगवद्वपुषा भगवतां जिनेन्द्राणां वपुषा शरीरेण शारीरिकसौन्दर्यातिशयेन गुणेन दयादाक्षिण्यादि गुणमहिम्ना च रूपश्रियातिशयिनम् रूपस्य शरीरसन्निवेशस्य श्रीः रूपश्रीस्तया शरीर कान्त्या अति-

न्तरायकरण नीतिनिवारकं रणतः संग्रामात् निवार्य निराकृत्य धात्रीजिघृक्षु शिशुपालकराक्षसादि दुर्योधनम् धात्रीम् रुक्मिणीम् जिघृक्षुः यः शिशुपालस्तन्नामा नृपस्स एव शिशुपालकः स एव राक्षसादिः निशाचरप्रभृतिस्स च दुर्योधनश्च धार्त्तराष्ट्रस्तम् शिशुपालराक्षसादि प्रभृतिदुर्योधनभूपम् यवनभूपम् जरासन्धतनयम् अपाचकार निरासयामास अत्र श्लोके सभङ्गाभङ्गश्लेषालंकारः ॥ ३० ॥

भूमान् विचार्य जनकोऽपिकृतानुरागां, रुक्मीस्वसार मधिरोप्यधनुर्वृतांताम् ॥
युध्ध्वाबलेनहलिनावपनेकृतेऽदात्, देशे हरिः पुनरियायनिजे स कान्तः ॥ ३१ ॥

अन्वय'—भूमान् जनकः कृतानुरागाम् विचार्य रुक्मी धनुः अधिरोप्य वृताम् ताम् स्वसारम् हलिनाबलेन युध्ध्वावपनेकृतेऽदात् स कान्त हरिः निजेदेशे पुनः इयाय ॥ ३१ ॥

व्याख्या—आदीश्वरादिजिनेन्द्रपक्षे—भूमान् पृथ्वीपतिः रुक्मीस्वर्णवान् जनकः पिता नाभिराजादिः अन्यजिनेन्द्रपक्षे कन्यापिता स्वसारम् स्वस्सारम् सारभूतम् बलवत् धनुः कोदण्डम् अधिरोप्य अधिरोपयित्वा क्षत्रियाणामस्त्रधारणपूर्वकम्विवाहविधानमिति सम्प्रदायः अत एव धनुर्जिनेन्द्राणामावध्यबलेन हलिना आकर्षयता युध्ध्वा कृत्रिमयुद्धप्रक्रियाम्प्रदर्श्य वपने छेदने कृतें सति किमपिच्छेदादिसंप्रदाय संपादने सति कृतानुरागाम् संजातप्रेमातिशयाम् वृता पूर्वमेववरीतां तां कन्यां सुमंगलासुनन्दाप्रभृतिं अदात् जिनेश्वरायेति शेषः स कान्तः सदारः हरिः हरतिपापमिति हरिर्जिनेन्द्रः निजदेशे स्वकीयस्थाने अन्यजिनेन्द्रपक्षे निजदेशे इयाय आजगाम।

रामपक्षे—भूमान् पृथ्वीपतिः रुक्मी स्वर्णवान् जनकः जनकनृपः स्वसारं धनुः अधिरोप्य पणत्वेन निर्धार्य स्थित इति शेषः रामश्चधनुः अधिरोप्य आकृष्य समौर्विकमिवधायेत्यर्थः हलिना आकर्षयता कृत्रिमयुद्धं विधाय वपने कृते चन्द्रगतिभामण्डलादीनां विलक्षे कृते सति कृतानुरागाम् जातस्नेहाम् वृताम् पूर्वमेवकृतवरणाम् जानकीमिति शेषः अदात् रामाय आर्पिपत् सकान्तः सपत्नीकः हरिः रामः निजे स्वकीये देशे अयोध्या नगरे पुनः भूपः इयाय आययौ ॥

कृष्णपक्षे—भूमान् भूमीपतिः रुक्मी रुक्मिनामानरपतिः जनकः ज्येष्ठभ्रातृत्वात् पितृसमत्वेन जनकशब्दप्रयोगः कर्त्तव्याकर्त्तव्यशिक्षकः कृतानुरागाम् कृतप्रणयाम् स्वसारम् भगिनीम् रुक्मिणीम् विचार्य सम्यक् परिभाव्य धनुः आरोप्य अधिज्यम्विधाय हलिना सीरिणा बलदेवेन युध्वा युद्धं विधाय वपने केशच्छेदे कृते सति वृताम् शिशुपालेन पूर्वकृतवरणामपि ताम् रुक्मिणीम् अदात् कृष्णाय प्रायच्छत् सकान्तः सपत्नीकः हरिः कृष्णः पुनः निजे आत्मीये देशे द्वारकायाम् इयाय आजगाम ॥ ३१ ॥

एवं पुराणचरितान्यधिगत्य देवः, प्रीत्या व्युवाह ननु धर्मधियं विधाय ।
तस्थुः परःशतनृपा अपरे तथैव, साम्वत्सरे वितरणे कृतकर्मयोगः ॥ ३२ ॥

अन्वय—देवः एव पुराणचरितानि अधिगत्य ननु धर्मधियं विधाय प्रीत्या व्युवाह साम्वत्सरे वितरणे कृतकर्मयोगः अपरे परःशतनृपाः तथैव तस्थुः ॥ ३२ ॥

व्याख्या—देवः द्युतिमान् जिनेन्द्रश्च पुराणचरितानि पुरातनव्यवहाराणि अधिगत्य विचार्य ननु इति कोमलालापे निश्चये वा धर्मधियं धर्मबुद्धिं विधाय ननु धर्मबुद्धिं कृत्वैव खलु धर्मः स्ववंशस्थापनमिति निश्चित्य प्रीत्या पित्रोः प्रेम्णा इन्द्रस्य वा प्रणयेन

आव्युग्राह परिणिनाय, सांवत्सरे वितरणे कृतकर्मयोगः सम्वसति ऋतुः त्रैमासिकधर्मोऽत्र इति सम्वत्सरः स एव साम्वत्सरः तस्मिन् साम्वत्सरे वितरणे ऋतुदाने कृतकर्मयोगः कृतव्यापारः ऋतुदाने सावधानः ऋतौ भार्यामुपेयादित्यनुसृत्य तत्रैव कृतोपयोगः आसीदिति शेषः । अन्ये परःशतनृपा अनेकशो भूपाः तथैव तदनुसारेणैव तस्थुः यद्यदाचरति श्रेष्ठस्तत्तदेवेतरोजन इति मतमवलंव्य ततोऽर्वाक् तदीया चरणमेवप्रमाणत्वेन प्रचचारेति भावः पक्षान्तरे यथायोग्यमेतदिति ॥ ३२ ॥

धर्मं सतां (समधि) रोपयताऽग्रकोटौ (?) कौ–मोदकीमपि रुचिन्दधता भुजाग्रे ।
चक्रेऽर्हता सपदि चक्रभृताङ्गजेन, भावेन भूतलमलं कृतिभिः सशोभम् ॥ ३३ ॥

अन्वय.—कौ अग्रकोटौ सताधर्मं समधिरोपयता भुजाग्रे मोदकीं रुचिं दधता चक्रभृता अङ्गजेन अर्हता भावेन अलंकृतिभि. सशोभ भूतल सपदि चक्रे ॥ ३३ ॥

व्याख्या—कौ=पृथिव्यां अग्रकोटौ=अग्रभागे सर्वत उच्चप्रदेशे सतां=सत्पुरुषाणां धर्मं=सुकृतं पुण्यमिति यावत् समधिरोपयता स्थापयता भुजाग्रे=स्वबाहौ मोदकीं=मोदयति हर्षयतीति मोदकी हर्षदात्री तां सर्वसम्मोदसम्पादिकां रुचिं दीप्तिं शोभां दधता धारयता चक्रभृता=चक्रास्त्र चक्रचिह्नं वा बिभर्त्तीति तेन, अङ्गजेन=अंगान्मनसो जायते इति अङ्गजः कामः स इवाचरतीति तेन कामसदृशेन अर्हता=पूज्येन जिनेन्द्रेण भावेन विदुषा अलंकृतिभिः=शोभाधायकैः=स्वीयनिर्मलपवित्राचारैः सशोभं सालं कृतं भूतलं धरामण्डलं सपदि सद्यः चक्रे विदधे स्वजन्मना निर्मलाचरणेन च भूमितलं सालंकृतं कुरुतेस्मेति भावः यद्वा चक्रभृतांगजेन चक्रं बिभर्त्तीति चक्रभृत् स आङ्गजस्तनयो यस्य स चक्रभृतांस्ते गजति आदीश्वरपक्षे व्याख्येयम् ॥

रामकृष्णपक्षे—अग्रकोटौ सर्वमूर्धन्ये सतां=सत्पुरुषाणां पुण्यं समधिरोपयता संस्थापयता भुजाग्रे स्वहस्ताग्रे कौमोदकीं तदभिधानां गदां अस्त्रविशेषं दधता गृह्णता अर्हता योग्येन रामेण, कृष्णेन वा चक्रभृता चक्रास्त्रं दधता अङ्गजेन भावेन विलासादिना अलंकृतिभिरलंकारैः निजपवित्रसमुदाचारैः सालंकृत भूतलं भूमण्डलं सपदि सहसा चक्रे विदधे ॥ ३३ ॥

शंखध्वनिध्वनितदिग्वलयः प्रयोगं, सद्यो विभिद्य रिपुभूमिभुजां भुजायाः ।
मुक्तेषु-निश्चितधियां स्वधरादरेण, त्यागाय सर्वविषयस्य तदा बभूव ॥ ३४ ॥

अन्वयः—शंखध्वनिध्वनितदिग्वलयः रिपुभूमिभुजा भुजाया. प्रयोग सद्यः विभिद्य मुक्तेषु निश्चितधिया स्वधरादरेण सर्वविषयस्य त्यागाय तदा बभूव ॥ ३४ ॥

व्याख्या—जिनेन्द्रपक्षरूपक्षे-शंखध्वनिध्वनितदिग्वलयः शंखस्य कंबोर्यो ध्वनिरव्यक्तमधुरशब्दस्तेन ध्वनितं शब्दायितं दिग्वलयं दिग्विभागो येन स तथोक्तः रिपुभूमिभूजाम् भूमिं भुञ्जन्तीति भूमिभुजस्तेचते रिपवश्चेति रिपुभुमिभुजः शत्रुनृपतयस्तेषां महीभुजां भुजायाः बाह्वोः प्रयोगम् प्रसरम् गर्वमित्यर्थः सद्योविभिद्य तत्क्षणमेव निराकृत्य मुक्तेषु निश्चितधियां मोक्षेषु विषयेषु निश्चितधियां कृतनिश्चयबुद्धीनां जिनेन्द्राणामिति शेषः स्वधरादरेण स्वस्य धरः स्वधरः स्वकीयसंकल्पस्तस्यादरेण तस्याभिनिवेशेन यद्वा स्वस्ययोधरादरः भरस्य पर्वतादिनिर्जनस्थानस्य आदरः पर्वतादौ गत्वात् तपश्चर्याविधेयेतिनिश्चयेन आग्रहेण हेतुना सर्वविषयस्य सांसारिकमोहनीयवस्तुजातस्य त्यागाय तदा तस्मिन् काले बभूव तत्र प्रसक्तो जज्ञे ॥

रामपक्षे—शंखध्वनिध्वनितदिग्वलयः कम्बुनादविनादितदिग्विभागो राम इति शेषः रिपुभूमिभुजां विपक्षपक्षाश्रितक्षितिपालानां भुजायाः बाहोः प्रयोगम् प्रसरमहंकारं सद्योविभिद्य वियुज्य निराकृत्य मुक्तेपुनिश्चितधियां मुक्तश्वासात्रिपुत्राणश्चेति मुक्तेपुर्विसर्जितत्राणस्तत्र निश्चिता लग्ना श्रीर्बुद्धिर्येषा तेषां, शब्दवेधित्वाद्यवधानविधायकाना स्वधरादरेण धरतीति धरो निजोत्पादकः पिता यद्वा धरति गर्भे या सा धरा माता तस्य तस्या वा आदरेण पूज्यत्वेन तदीयाज्ञावश्यं पालनियेति कृताग्रहेण हेतुना सर्वविषयस्य राज्यादिभोगादेस्त्यागाय निराकरणाय तदा मतिरिति शेषः बभूव जज्ञे। अथवा स्वधरादरेण स्वस्य या धरा दायादत्वेन न्यायतः परिप्राप्ता पृथ्वी "भूर्या पितामहोपात्ता इत्यादि समं तत्र विभागःस्यात्पितुः पुत्रस्य चोभयोरिति दायविभागस्थयोगि याज्ञवल्क्यवचनात्" तस्या आदरेण स्वकीयत्वाभिनिवेशेन हेतुना सर्वविषयस्य स्वराज्यान्तर्गतसर्ववस्तुनस्त्यागाय कतिपयदिनावधिभरतसात् कर्तुं मतिर्बभूव बुद्धिर्जातेति भावः॥

कृष्णपक्षे—स्वधरादरेण स्वधरा स्व आत्मान धरति बिभर्त्तीति स्वधरा द्वारकाभूमिस्तस्या आदरेण तद्विषयकप्रेम्णा सर्वविषयस्य यावत्परिणाहस्वपुरिपरिसरस्य त्यागाय समुद्रजलरक्षिताय समुद्र इतो दूरं व्रजेत् मन्नगरपरिसरभूमिंपरित्यजेदिति मतिर्बभूव अन्यद्रामपक्षवदवगन्तव्यम् ॥ ३४ ॥

मोहोऽवमोहकरणं ककुभां शुभांशु–व्यावर्तनं नयननर्तनमेव जज्ञे।
क्षोभो मनस्सु सुमनस्सु हरेश्चरेण, चक्रे दरेण वसतिर्लसतिःप्रकम्पे ॥ ३५ ॥

अन्वय —मोह ककुभाम अवमोहकरणम् शुभाशुभ्यावर्त्तनं नयननर्त्तनमेव मन सु क्षोभ. सुमनःसु दरेश्चक्रे दरेण वसति. प्रकम्पे लसतिर्जगे ॥३५॥

व्याख्या—तेषु वर्णनीयचरित्रनायकेषु सत्सु मोहो भ्रान्तिर्मोहनीयकर्म ककुभां दिशामवमोहकारणम् दिग्भ्रान्तिविधायकम् केवलं दिग्भ्रान्तिविधायकमेव मोहोऽभवन्नाज्ञानजनितं कस्मिन्नपिविषये गाढ्यं जातम्, शुभाशुभ्यावर्त्तनं शुभसम्बन्धराहित्यं कल्याणयोगनि रोध इत्यर्थः नयननर्त्तनमेव नेत्रविलास एव प्रणयिनम्प्रत्येव मानवत्याः कान्ताया नयनविकारादयः सेर्ष्यन्नयननिरीक्षणम् न चान्यत्र शुभाशो मङ्गलांशस्य व्यावर्त्तनम् निवर्त्तनम्, सुमनःसु कुसुमेषु मनःसु क्षोभः मनोमालिन्यम् रात्रौ कमलादिपुष्पेषु विकाशविपर्यासो, न जातु लोकेषु मनःक्षोभः नोदुःखम्, मदरेः विष्णोः चक्रे चक्रास्त्रे चिरेण दरेणभयेन वसतिरधिष्ठानं कृता केवलं विष्णुचक्राने विष्णुचक्रविषयकभयसन्निवेशो जातो न च प्रजाजने कुतोऽपिभय सन्निवेशः लसतिः क्षेपः दाहः प्रकम्पे नरके न चान्यत्र यद्वा लसतिर्वेपनम् प्रकम्पे महावाते न च लोके क्वचनापि भयादिना लसतिर्वेपनम् न जज्ञे सुराज्यत्वात् सर्वन्निराबाधमासीत् अत्र श्लोके परिसंख्यालंकारो विलसति ॥ ३५ ॥

उद्दिश्य कार्यमधिजीवनमेवमर्हन्, रेमे वनेषु भवनेषु सभावनेषु ।
आश्चर्यमुच्चचरितं रचयञ्जनाना–मैश्वर्यमङ्ग–परमं बुभुजे भुजेन ॥ ३६ ॥

अन्वयः—अधिजीवनमुद्दिश्य कार्यम् अर्हन् वनेषु भवनेषु सभावनेषु रेमे जनानाम् आश्चर्यम् उच्चचरितम् रचयन् भुजेन अङ्गपरमम् ऐश्वर्यम् बुभुजे ॥ ३६ ॥

व्याख्या–जीवनम् प्राणधारणमुद्दिश्य प्राणयात्रामनुजीव्य लोकव्यवहारमनुसृत्य कार्यम् लौकिककर्त्तव्यम् अर्हन् कुर्वन् सांसारि-

कव्यवहारमनुभवन् वनेषु उपवनेषु भवनेषु क्रीड़ासदनेषु सभावनेषु सदौकःसु सभामण्डपेषु च रेमे तथा च जनानां लोकानां आश्चर्यं विस्मयजनकं उच्चचरितं निर्मलचरित्रम् रचयन् विदधत् अङ्ग इति संबोधने भुजेन बाहुबलेन परममत्युत्कृष्टम् ऐश्वर्यं विभवम् बुभुजे भुनक्तिस्म लोकोत्तरमैश्वर्यमनुबभूवेति भावः सर्वपक्षसाधारणमवगन्तव्यम् ॥ ३६ ॥

जाते विवाहसमये न मनाग्मनोऽन्त–र्लीनो मलीनविषयेषु महाकुलीनः ।
द्वेधा पुरन्दरबलाद् वसतिस्म येन, नारेः पुरन्दरबलाद्वसतिस्म येन ॥ ३७ ॥

अन्वयः—विवाहसमये जाते न मनाक् मलीनविषयेषु महाकुलीन. अन्तर्लीनोऽभूदिति शेष. न द्वेधापुरन्दरबलात् स्मये न वसति पुरन्दरबलात् अरे येन न वसतिस्म ॥ ३७ ॥

व्याख्या—विवाहसमये विवाहविधौ जातेऽपि सम्पन्नेऽपि कृतदारपरिग्रहोऽपि महाकुलीनो महद्वैर्यवान् सत्कुलप्रसूतिर्जिनेन्द्रादिर्मलीनविषयेषु कुत्सितव्यापारेषु सांसारिकविषयवासनादिदूषिताचारेषु मनाक् ईषदपि अन्तर्लीनः तदासक्तिप्रवणो न विषयानुभवग्लपित चित्तो, न द्वेधापुरन्दरबलात् पुरन्दारयतीति पुरन्दर इन्द्रः यद्वा पुरन्त्रि पुरासुरन्दारयतीति पुरन्दरः शिवः इति द्वेधा द्विविधपुरन्दरयोर्बलमिव बलं यस्य तस्मादेकत्र विलक्षणशक्तिमत्वादपरत्रवशीकृतमदनत्वाच्च स्मयेऽहकारे गर्वे न वसतिस्म सत्यपि गर्वसामर्थ्ये महाशयत्वाद् गर्विष्ठो न जात इति भावः " वर्त्तमानसामीप्ये लट् " अथ न इन्द्रवद् बलिष्ठत्वात् अरेः शत्रोः सकाशात् शत्रुजनमुद्दिश्य स्मयेऽहंकारे न वसतिस इति न किन्तु वसत्येव शत्रुसम्मुखे गर्विष्ठ एवासीत् इति भावः यमकालंकारः सर्वविषय साधारणमेतत ॥ ३७ ॥

कस्तेन संगतिमगान्न मनोरसेन, कस्तेन सङ्गतिमगान्नमना रसेनः।
द्वेधाप्यनीतिरगमद्र विभुविक्रमेण, नाशं-कयापि कलया न भुवि क्रमेण ॥ ३८ ॥

अन्वय—मनोरसेन कः संगतिम् न अगात्, कः मनोरसेन तेन संगतिम् न अगात् विभुविक्रमेण द्वेधा अपि अनीति अगमत भुवि कयापि कलया नाशं न क्रमेण ॥ ३८ ॥

व्याख्या—मनोरसेन मनसो हृदयस्य रसोरागः प्रवृत्तिस्तेन मानसयोगेन कः कोऽपि स्तेनसंगतिम् स्तेनेन चोरेण संगतिम् मैत्रीम् न अगात् नापत् पाठचरप्रेम, कोऽपि नाकार्षीत् कः मनोरसेनः मनश्च रमा चेत्यनयोः द्वन्द्व इति मनोरसे तयोरिनः स्वामी "इनः सूर्यप्रभौ राजा मृगाङ्के क्षत्रिये नृप इत्यमरः" प्रभुः संयमी भूपतिः तेन प्रभुणा संगतिम् प्रेम न अगात् नाकरोत् सर्वोऽपि तेन सह सौहार्द्रमरीरचन् तथा-विभुविक्रमेण विभोः प्रभोः विक्रमेणप्रभावेन तेजसा महिम्नेति यावत् द्वेधा द्विविधापि अनीतिः अन्यायम् दुराचारः अगमन् न्यवर्तिष्ट अन्यत्र अनीतिः "अतिवृष्टिरनावृष्टिः शलभामूषिकाः खगाः। अन्त्यासन्नाश्चराजानः षडेता ईतयः स्मृता" इत्युक्तप्रकारा ईतयो न भवन्तीति अनीतिरीत्यभावः अगमत् प्रापत् सर्वत्र प्रासरत् क्रमेण पर्यायेणापि भुवि पृथिव्याम् कयापि कलया केनाप्यंशेन नाशम् विपत्तिः न कस्यापि वस्तुनो लेशतोऽप्यभावो न जजृम्भे इति तत्त्वम् सर्वसाधारणम् अत्र यमकः ॥ ३८ ॥

विद्याधनं प्रसृमरं निधनं न लोके, स्तोके श्रमे सपदि वै-श्रमणत्वमासीत्।
तेजोभरात्प्रतिपदं मणयो नराणां, रेजुर्विभेजुरत एव महोन्नतिं ते ॥ ३९ ॥

अन्वयः—लोके प्रसृमर विद्याधनम् आसीत् निधनम् न आसीत् स्तोके श्रमे सपदिवैश्रमणत्वम् आसीत् नराणा तेजोभरात् प्रतिपदम् मणयो रेजु. अत एव ते महोन्नितिम् विभेजुः ॥ ३९ ॥

व्याख्या—लोके जने प्रसृमरं सर्वत्र प्रसरत् सर्वव्यापकम् विद्याधनम् विद्यासम्पत् आसीत् अखिलजना विद्यावन्तःस्तदानीमभवन्निति भावः तथा निधनम् विनाशः अकालमरणादिर्न यद्वा निधनन्निर्धनता दारिद्र्यन्न नैवासीत् स्तोके अल्पे लधीयसि श्रमे आयासे यत्न इति यावत् वैश्रमणत्वम् कुंबेरत्वम् धनपतित्वम् आसीत् अल्पायासेनैव महाढ्यत्वमजायतेत्यर्थः अथवा स्तोके तनीयसि श्रमे यत्ने वै इति रञ्जनार्थम् श्रमणत्वम् मुनित्वम् साधुत्वम् आसीत् सर्वेषान्निर्मलपवित्रचरित्रत्वात् सज्ज्ञानित्वाच्च चारित्र्यवेषग्रहणादेवमुनित्वं अजायत इति तत्वम् जनानां लोकानां तेजोभरात् पुण्यप्रभावात् प्रतिपदम् पदे पदे मणयो रत्नानि रेजुः शुशुभिरे अत एव असादेवपुण्यप्रभावात् ते जनाः महोन्नतिम् मम्यगभ्युदयम् विभेजुः बभ्रुः लभन्तेस्म सर्वत्रसाधारणम् ॥ ३९ ॥

तस्मिन् महीं जगति शासति सा सतीव, लक्ष्मीर्न तु व्यभिचचार नरोत्तमेभ्यः ।
जातं कदापि न जने व्यसनं ननन्दा-नन्दात् कलाव्यसनमेव निषेवणादेः ॥ ४० ॥

अन्वयः—जगति तस्मिन् महीं शासति सा लक्ष्मी सतीव नरोत्तमेभ्यः न तु व्यभिचचार जने व्यसनम् कदापि न जातम् आनन्दात् निषेवणात् कलाव्यसनमेव ननन्द ॥ ४० ॥

व्याख्या-जगति विष्टपे तस्मिन् प्रभौ महीं पृथ्वीं शासति योगक्षेमं विधायके सति अधिकुर्वतिसति सा प्रसिद्धा नितान्तचञ्चला

लक्ष्मीः श्रीः सतीव पतिव्रतास्त्रीव नरोत्तमेभ्यः सत्पुरुषेभ्यः न तु व्यभिचचार कदाचिदपि न जहौ कदापि कस्मिन्नपि समये जने लोके व्यसनम् विपद् न जातम् न बभूव "व्यसनं विपदि भ्रंशे दोषे कामजकोपजे इत्यमरः" आनन्दात् हर्षात् निषेवणादेः सेवनादेः कलाव्यसनमेव चतुःषष्टिकलाभ्यासाभिनिवेशमेव ननन्द जजृम्भे सर्वपक्षसामान्यम् ॥ ४० ॥

जज्ञे करव्यतिकरः किल भास्करादौ, दण्डग्रहाग्रहदशा नवमस्करादौ ।
नैपुण्यमिष्टजनमानसतस्करादौ, छेदः सुसूत्रधरणात् तदयस्करादौ ॥ ४१ ॥

अन्वय—करव्यतिकरः भास्करादौ किल दण्डमहाग्रहदशा नवमस्करादौ इष्टजनमानसतस्करादौ नैपुण्यम् सुसूत्रधरणात् तदयस्करादौ छेदः जज्ञे॥४१॥

व्याख्या—प्रभौ राज्ये शासति सतीति पूर्वश्लोकसम्बन्धमनुसृत्याह जज्ञ इति करव्यतिकरः करस्य किरणस्य व्यतिकरो व्यसनम् भास्करादौ सूर्यादिग्रहे न चान्यत्र लोके करस्य अंशोर्दीप्ते राजग्राह्यभागस्य वा व्यतिकरो व्यसनम् विपर्यासो जज्ञे उत्पेदे "बलिहस्तांशवः कराः इत्यमरः" दण्डग्रहाग्रहदशा दण्डस्य यष्टिकादेः ग्रहो ग्रहणम् तस्याग्रहदशा दण्डग्रहणस्य निश्चयाभिनिवेशः नवमस्करादौ नवे नूतने मस्करादौ वंशादौ नवीनवंशकरीरादौ दण्डग्रहणनिश्चयः "मस्करःशतपर्वाचेत्यमरोहैमश्च" जज्ञे बभूव न चान्यत्र जने दण्डस्य दमस्य राजादिकृतनिग्रहस्य यो ग्रहः ग्रहणन्तस्य आग्रहदशा अवश्यकर्त्तव्यदशा न जज्ञे न जाता इष्टजनमानसतस्करादौ इष्टजनस्य स्वाभीष्टनायकनायिकादिरूपजनस्य यो मानसो हृदयम् तस्य तस्करादौ चौर्यादौ किञ्चिदपि ग्रहणादौ नैपुण्यम् चातुर्यम् स्वप्रणयिहृदयग्रहणे कौशलम् न चान्यत्र वस्तुविषयकचौर्यनैपुण्यम् प्रभौ शासति कोऽपि पाटच्चरकौशल्यन्नकरोतिस्मेति भावः छेदश्छेदनम्

सुसूत्रधरणात् सूत्रधारत्वात् तदयस्कारादौ तदीयतक्षकादौ लौहकारादौ न च केषांश्चिदपिगुणच्छेदोऽङ्गच्छेदो वा जज्ञे अत्र परिसंख्या-लंकारः सर्वपक्षसाधारणम् ॥ ४१ ॥

व्यर्थीकृते सुकृतिना कृतिना स्वकामे, सोऽर्थी जनः पुनरनन्तधनः परार्थी ।
काठिन्यधीः कनकवत्यपि देवशैले, सिन्धोः परत्र विषये न सदर्णवत्त्वम् ॥ ४२ ॥

अन्वयः—सुकृतिना कृतिना स्वकामे व्यर्थीकृते सोऽर्थीजन. अनन्तधन पुन परार्थी काठिन्यधी. कनकवत्यपिदेवशैले सिन्धो. सदर्णवत्वम् परत्रविषये न ॥ ४२ ॥

व्याख्या—कृतिना कुशलेन विदुषेत्यर्थः सुकृतिना पुण्यशालिना स्वकामे स्वमनोरथे रत्नाभिलाषे व्यर्थीकृते सति परित्यक्ते सति सततसर्वसौख्यसान्निध्यान्मनोरथाभावे सति इति भावः स अर्थी अर्थेप्सुर्जनो याचकवर्गः अनन्तधनः अतुलितसम्पत् पुनः परार्थी परस्मै अर्थो धनं यस्य स परप्रयोजनदानार्थमेव धनसंग्रहो न स्वार्थमिति तत्वम् कनकवत्यपि स्वर्णवत्वेऽपि हिरण्मयत्वेऽपि देवशैले सुमेरुगिरौ काठिन्यधीः कार्कश्यमतिः अन्यत्र स्वर्णवति जने काठिन्यधीः कार्पण्यबुद्धिः मितम्पचित्वन्न सिन्धोः समुद्रस्य सदर्णवत्वम् सदाजलवत्वम् सर्वदैव सजलत्वम् तत इति शेषः परत्रविषये समुद्रादितरत्र जने सदर्णवत्वम् सदा=ऋणवत्वम् अधमर्णत्वम् नासीदिति शेषः प्रभौ शासति केऽपि ऋणिनो न जज्ञिरे इति भावः अत्र यमकः परिसंख्या चालंकारौ । सर्वत्रसमम् ॥ ४२ ॥

दानं ददत्सु जनवत्सलवत्सदित्सा-ह्वानेन मार्गणगणस्य महाशयेषु ।

निन्दन्ति देवतरवः स्वभवं विवर्णं,यन्नाम नः स्वरविधौ पटुतालवोऽपि ॥ ४३ ॥

अन्वयः—जनवत्सलवत् सर्वदयालुवत् मतिमाह्वानेन मार्गणगणस्य दानन्ददत्सु महाशयेषु देवतरवः विवर्णं स्वभवं निन्दन्ति यत् न नाम स्वरविधौ पटुतालवोऽपि न ॥ ४३ ॥

व्याख्या—जनवत्सलवत् सर्वदयालुवत् सर्वजनस्नेहपारवश्येनेव सदित्साह्वानेन दानेच्छया आकरणेन मार्गणगणस्य मार्गयति याचते इति मार्गणो याचकस्तस्य गणः संघस्तस्य दानम् ददत्सु दानंयच्छत्सु "शेषत्वविवक्षायां षष्ठी" महाशयेषु महानुभावेषु अतुच्छाशयेषु सत्सु इति भावः देवतरवः कल्पपादपाः विवर्णं मलिनं नितरान्निरुपयोगं स्वभवं निजजन्म निन्दन्ति विगर्हयन्ति यत् यस्मात् नः अस्माकम् नाम अभिधानम् स्वरविधौ शब्दप्रयोगविषये पटुतालवोऽपि दक्षत्वलेशोऽपि स्वकीयाऽभिधेयार्थकणिकाऽपि न लभत इति शेषः प्रस्तुकर्तृकृतादृशनिर्गलदानकालेऽस्माकन्नामलेशतोऽपि न सार्थकमिति कल्पवृक्षादयः स्वमनसि मन्यन्त इति भावः अतिशयोक्तिरलंकारः सर्वपक्षसदृशोऽयमर्थः ॥ ४३ ॥

दिव्या-गमाः पवनदुर्यवनावधूता, भूता इवातिविषमाकृतयः स्फुरन्ति ।
जाड्यान्न तत्समुचितं वहुपात्रयोगे, ऽप्येषां यतः फलवले रसभेद एव ॥ ४४ ॥

अन्वयः—पवनदुर्यवनावधूतादि व्यागमा भूता इव अतिविषमाकृतयः स्फुरन्ति वहुपात्रयोगेऽपि जाड्यात् तत् न समुचितं यतः एषां फलवले रसभेद एव ॥ ४४ ॥

व्याख्या—पवनदुर्यवनावधूताः पवनस्य वायोर्योदुर्यवनः असह्यवेगस्तेन अवधूता विलोकिताः कम्पिता इत्यर्थः दिव्यागमाः सुरपादपाः कल्पवृक्षादयः भूता इव व्यन्तरा इव विषमाकृतयः बीभत्सरूपा भयजनकाकृतयः स्फुरन्ति समुल्लसन्ति इति समुल्लसन्तु नाम किन्तु बहुपात्रयोगे अनेकसत्पात्रसमवधाने जाड्यात् स्थावरत्वेन बाह्यज्ञानवैमुख्यात् यत् विषमाकृतित्वम् वैमुख्यत्वम् अर्थिजनपराङ्मुखत्वम् तत् न समुचितम् न योग्यम् उत्तरपदगतस्तत् शब्दः पूर्वपदगतं यत् शब्दमपेक्षत इति भावः यतः वैमुख्याद्धेतो रसभेद एव भिन्नरसतैव तथाहि यत्तेषां कल्पपादपाना दानवीरता आसीत् तदिदानीम् वैमुख्यात् भूताभिनिवेशाच्च भयानकत्वं पर्यवसितम् भयानकत्वेन परिणमतीति भावः अतद्गुणालंकारः ॥ ४४ ॥

जानन्ति दानविधिमत्र न देववृक्षाः, शाखाश्रयं फलमलं दधते यदेते ॥
दृष्टं कदाचन सपक्षगणेन लभ्यं, नामीषु तत्फलबलं प्रतिपात्रमिष्टम् ॥ ४५ ॥

अन्वयः—देववृक्षा अत्रदानविधिन्नजानन्ति यदेते शाखाश्रय फलम् अलन्दधते सपक्षगणेन लभ्य कदाचनदृष्टम् यत् प्रतिपानम् इष्टम् तत्फलबलम् अमीषु न दृष्टम् ॥ ४५ ॥

व्याख्या—अत्र लोके देववृक्षाः सुरपादपाः दानविधिम् सत्पात्रार्पणव्यापारञ्च जानन्ति नावबुध्यन्ति यद्यस्मात् एते कल्पशाखिनः शाखाश्रयं स्कन्धशाखाश्रयं विटपाधीनमित्यर्थः फलम् स्वसंपत् अलम्पर्याप्तम् दधते धारयन्ति स्वाधीनफलाभावात् कस्मैचिदपिदातु कथं प्रभवेयुरिति भावः सपक्षगणेन पतत्रिसघेन अथ च स्वकीयवर्गेण आत्मीयजनेनेत्यर्थः लभ्यम् प्राप्यम् फलमिति शेषः

कदाचन कस्मिन्नपि समये दृष्टम् नावलोकितम् अतः संभावयामि अमीषु कल्पवृक्षेषु यत्फलबलम् फलसम्पत तत् प्रतिपात्रम् प्रतियोग्यपात्रजनम् दृष्टम् लभ्यन्त एते प्रतिपात्रन्दानसमर्था न भवन्तीति प्रभवस्तुप्रतिपात्र दान यच्छन्तीति व्यतिरेकालंकारो व्यङ्ग्यः ॥४५

चिन्तामणिर्जलधिमध्यमिवाध्युवास, कल्पद्रुमा दिवमिवारुरुहुर्ह्रियेव ।

नृणां तदाऽनृणकृतां भजनाज्जनानां, न्याय्ये परिस्फुरति राज्यबले तदीये ॥ ४६ ॥

अन्वयः—तदा अनृणकृतां नृणां जनानां भजनात् तदीये न्याय्ये राज्यबले परिस्फुरति ह्रियेव चिन्तामणिर्जलधिमध्यम् अध्युवास इव कल्पद्रुमा दिवम् आरुरुहुरिव ॥ ४६ ॥

व्याख्या-तदा तस्मिन् समये तदीये वर्णनीयनायकसम्बन्धिनि न्याय्ये न्यायानुगते नीतिमनुसृत्य प्रवर्त्तमाने राज्यबले साम्राज्ये परिस्फुरति जरीजृम्भमाणेसति अनृणकृतां ऋणं कुर्वन्तीति ऋणकृतः न ऋणकृतः अनृणकृतस्तेषामनधमर्णाना जनानाम् लोकानाम् भजनात् सेवनात् चिन्तामणिः चिन्तितार्थप्रदानप्रभविष्णुरत्नम् ह्रियेव लज्जयेव जलधिमध्यम् समुद्रान्तः अध्युवास निवसतिस्म इव यथाऽन्योऽपि लज्जापारवश्याज्जलमज्जनं करोति तथायमपि समुद्रे ममज्ज तथा च कल्पद्रुमाः कल्पवृक्षाः ह्रिया इव लज्जया इव कथमयं लोके स्वापमाननं सहामहे इति बुद्ध्यैव किमिति शेषः दिवम् स्वर्गम् आरुरुहुरिव रोहन्तिस्म किम् ॥ सतां माने म्लानेमरणमथवा दूरगमनमित्य भियुक्तोक्तिमवलम्ब्यैव स्वर्गयात्रामकुर्वन्निति भावः अत्र श्लोके क्रियोत्प्रेक्षालंकारः ॥ ४६ ॥

अस्मिन् प्रभौ विभवमाश्रयति प्रभावा, भावाः समीहितविधानकृतावधानाः ।

देवद्रुदेवमणिदेवलतादयोऽपि, मन्येऽवतेरुरिह देवचिरानुरागात् ॥ ४७ ॥

अन्वयः—अस्मिन् प्रभौ विभवम् आश्रयति प्रभावाभावा. समीहितविधानकृतावधाना. देवचिरानुरागात् देवद्रुदेवमणिदेवलतादयोऽपि इह अवतेरु इति मन्ये ॥ ४७ ॥

व्याख्या—अस्मिन् वर्णनीयनायके प्रभौ जिनेन्द्रेऽन्यत्र प्रभावशालिनि यद्वा अस्मिन् जगति प्रभौ स्वामिनि विद्यमाने सतीति शेषः तथा च विभवम् ऐश्वर्यम् आश्रयति अधिष्ठिते परमैश्वर्यसम्पन्ने सति प्रभवाः प्रकृष्टेन सर्वतोऽधिकेन भवन्तीति प्रभवाः श्रेष्ठा भावाः पदार्थाः पृथिव्यादयः समीहितविधानकृतावधानाः समीहितस्य अभिलषितस्य विधाने सम्पादने सौलभ्ये कृतावधानाः सयत्नाः आसन्निति शेषः प्रभौ विद्यमाने सर्वेऽपि स्थावरजङ्गमादयो भावाःस्वस्वसेवार्थन्तदीप्सितविधानदक्षा बभूवुरित्यर्थः तथा च देवचिरा नुरागात् देवस्य जिनेन्द्रस्य अन्यपक्षे द्योतनात्मकस्य चिरानुरागात् दृढप्रेमतः निरतिशयभक्तिपारवश्यादित्यर्थः देवद्रुदेवमणिदेवल-तादयः कल्पवृक्षचिन्तामणिकल्पलताप्रभृतयः इह प्रभुसनाथितभूप्रदेशे सेवार्थमिति शेषः अवतेरुः अवतीर्णाः स्वर्गादाजग्मुरिति मन्ये जाने उत्प्रेक्षालंकारः ॥ ४७ ॥

कौमारस्फारतेजोदहनमसहनाः प्राप्य निर्दग्धभूमौ, पादन्यासेऽप्यशक्ता नगनगरकरस्याग्रहे कैषु वार्ता ।
मुक्त्वा राज्यान्यवन्या उपवनपवनैः साहचर्यात् कदर्या,दर्या मध्ये मृगाक्षीक्षणविषयसुखं भुञ्जते भ्रान्तिभाजः॥४८

इतिश्री सप्तसंधाने महाकाव्ये श्रीराज्याङ्के कौमारवर्णनो नाम तृतीयः सर्गः ॥ ३ ॥

अन्वयः—कौमारस्फारतेजोदहनम् प्राप्य असहना निर्दग्धभूमौ पादन्यासेऽपि असक्ता, नगनगरकरस्य आग्रहे एषु कावार्त्ता अवन्त्या राज्यानि मुक्त्वा उपवनपवनैः माहचर्यात् कदर्याः भ्रान्तिभाज दर्यामध्ये मृगाक्षीक्षणविषयसुखम् भुञ्जते ॥ ४८ ॥

व्याख्या—कौमारस्फारतेजोदहनम् कुमारो युवराजः "जनको युवराजस्तुकुमारो भर्तृदारक इत्यमरः" यद्वा कुमारयति क्रीडयतीति कुमारः, कुत्सितः अप्राप्तयौवनत्वात् मारोयस्य स अथ च कुत्सितोनिन्दितोमारः कामदेवो यस्मात् स अथवा कौ पृथिव्यां मारइवेति कुमारः तस्मिन् भवम् कौमारं यत् स्फारम् विकटम् अत्युग्रम् तेजः प्रभावम् तदेव दहनो वह्निस्तम् कौमारीयविपुलप्रतापाग्निम् प्राप्य तमग्निमधिगम्य असहनाः असहिष्णवः तदीयप्रतापाग्निंसोढुमक्षमा निर्दग्धभूमौ तत् प्रतापाग्निप्लुष्टमेदिन्यां स्वकीयभूमौ पादन्यासेऽपि चरणन्यासेऽपि असक्ता अप्रभविष्णवः असमर्थाः नगनगरकरस्याग्रहे नगनगरस्याग्रहे नगस्य पर्वतस्य नगरस्य पुरस्य करस्य राजग्राह्यस्य राजस्वस्येत्यर्थः तेषां आग्रहे समन्तात् ग्रहणे विषये एषु नगनगरकरेषु का वार्त्ता का चर्चा पलायनमार्गोऽपि न पश्यन्तीति किमुपुनस्तेषां ग्रहणेषु प्रसक्तिरिति भावः ते पुनः अवन्त्या भूमेः राज्यानि स्वसाम्राज्यानि मुक्त्वा परित्यज्य उपवनपवनैः उद्यानवातैः साहचर्यात् संबन्धात् कदर्याः कदर्थीकृता भ्रान्तिभाजः विवेकविकलाः प्रतीपराजा न इति शेषः दर्याः कन्दरायाः गिरिगुहाया अन्तः मृगाक्षीक्षणविषयसुखम् मृगाक्ष्या मृगनयनायाः कामिन्याः क्षणम् क्षणमभिव्याप्यविषयसुखम् सांसारिकविषयैन्द्रियसुखं भुञ्जते अनुभवन्ति विपक्षपक्षाश्रिता नृपा स्तद्भयादितस्ततः पलायमानाः क्वचित्कन्दरादौ क्षणम् विषयसुखं चकितचकिता अनुभवन्तीति तात्पर्यम् ॥ अत्र श्लोके स्रग्धरावृत्तम् ॥ ४८ ॥

इति शास्त्रविशारद-कविरत्नभट्टारकाचार्य-श्रीविजयामृतसूरीश्वरप्रणीताया सप्तसन्धान महाकाव्य-सरणी टीकायां तृतीयः सर्गः ॥ ३ ॥

## ॥ चतुर्थः सर्गः ॥

देवावतारसमये सममेव देवाः,सेवार्थिनो भगवतः समुपेयुरुर्व्याम् ।
सर्वे ततः सुमनसो विबुधा विशिष्य, तद्दानवारिमतयः सततं प्रकृत्या ॥ १ ॥

अन्वयः—देवावतारसमये भगवतः सेवार्थिनः देवाः सममेव उर्व्यां समुपेयुः ततः सर्वे सुमनसः विबुधाः प्रकृत्या विशिष्य तद्दानवारिमतयः बभूवुः ॥ १ ॥

व्याख्या—देवावतारसमये=देवस्य=शक्रस्य अवतारसमये=प्रभो राज्याभिषेकार्थमागमनकाले भगवतः=ज्ञानादिमतः श्रीमदृषभदेवस्वामिनः सेवार्थिनः=उपासनाकाङ्क्षिणः देवाः सममेव=एकदेव इन्द्रेण सहैव वा उर्व्यां=श्रीमज्जिनेन्द्रपदपङ्कजाधिष्ठितभूतले समुपेयुः=समुपाजग्मुः । ततः=तदनन्तरं सर्वे=निखिलाः सुमनसः समुल्लसितचेतसः विबुधाः=देवाः देवसदृशयुगलिनश्च प्रकृत्या=स्वभावेन अन्यप्रेरणां विनैवेत्यर्थः विशिष्य=विशेषरूपेण तद्दानवारिमतयः=तद्दानवारिषु राज्यदानार्थजलेषु तदुपसंग्रहे इति भावः । मतिः=बुद्धिर्येषां ते तादृशाः बभूवुः ।

२-३-४-५-६ पक्षेषु-देवस्य=प्रभोः राज्ञो वा अवतारसमये भूम्यागमनसमये एव भगवतः=ऐश्वर्यादिमतः सेवार्थिनः=उपासिपवः केचिद् देवाः समम्=सहैव उर्व्यां=भगवदधिष्ठितभूमौ समुपेयुः अवतेरुः । ततः योग्यसमये सर्वे ते तद्दानवारिमतयः=तस्मै राज्यदानार्थं कृतबुद्धयः अथवा तस्मिन् (प्रभौ) दानवारिः-देवः अयम् इति मतिर्येषा ते तादृशाः बभूवुः ॥

७ पक्षे— ततः=तदनन्तरं राज्याभिषेकानन्तरं तद्दानवारिमतयः=दानवारिः=कृष्णस्तस्मिन्मतिः=सद्भावना येषां ते दानवारिमत यश्चे च ते दानवारिमतयश्चेति तद्दानवारिमतयः बभूवुः शेषं पूर्ववत् ॥ १ ॥

प्रीत्याशयं दधति भूरिजनास्तदुच्चं, त्यागं विधाय पुरतः सुरतानुषङ्गे ।
मित्त्रश्रियैव कलयन्त्यकलङ्कभावं, ते दक्षजातिरुचयो सुधाभुजोऽपि ॥ २ ॥

अन्वयः-भूरिजना प्रीत्याशय दधति तत् दक्षजातिरुचय ते वसुधाभुज. पुरत. सुरतानुषङ्गे उच्च त्याग विधाय मित्रश्रियैव अकलङ्कभाव कलयन्ति॥२॥

व्याख्या-भूरिजनाः=सर्वे लोकाः नृपविषये प्रीत्याशयं=प्रीतियुक्तम् आशयं=चित्तम् अभिप्रायं वा दधति=धारयन्ति प्रमुदित-चेतसो भवन्तीत्यर्थः तत्-तस्माद्धेतोः दक्षजातिरुचयः=दक्षा=पट्वी जातिः रुचिः=दीप्तिश्च येषा ते यद्वा दक्षजाः=अश्विनी प्रभृतितारा अतिक्रान्ता रुचिर्येषां ते तादृशाः ते=पूर्वोक्ताः वसुधाभुजः=पृथ्वीपतयः श्रीनाभिराजादयः पुरतः=अग्रतः नगरेषु वा गृहेषु वा सार्व-विभक्तिकस्तसि । स्यात्पुरः पुरतोऽग्रतः इत्यमरः । अगारे नगरे पुरमितिचामरः । सुरतानुषङ्गे=सुराणां समूहः सुरता तस्या अनुषङ्गे=सम्बन्धे देवानुद्दिश्येत्यर्थः उच्चं=महान्तं त्यागं=दानं विधाय मित्रश्रियैव=सुहृल्लक्ष्म्यैव साकं स्वसाम्राज्यश्रियः अकलङ्कभावं=व्यावर्तकचिह्नाभावेनाऽभिन्नभावं कलयन्ति=संपादयन्ति ॥ २ ॥

पूर्वानुरागकलया सकृदिन्द्ररूपा, भूपा जनुर्धनुरुपाश्रयणानुरूपाः ।
स्तूपा इवोदितमहोन्नतपुण्यकर्म-सौधर्मसंगतिभवद्विशदस्वरूपाः ॥ ३ ॥

अन्वय —पूर्वानुरागकलयाऽसकृदिन्द्ररूपा· जनुर्धनुरुपाश्रयणानुरूपाः भूपा स्तूपा इव उदितमहोन्नतपुण्यकर्म सौधर्मसगतिभवद्विशदस्वरूपाः आसन् ॥ ३ ॥

व्याख्या—पूर्वाऽनुरागकलया=पूर्वः=प्राग्भवीयः अनुरागः=स्नेहः तस्य कलया=अंशेन असकृदिन्द्ररूपाः वारंवारमिन्द्रस्वरूपाः जनुर्धनुरूपाश्रयणाऽनुरूपाः=जनुषः=जन्मत एव यद्धनुरूपाश्रयणं=धनुर्विद्याऽभ्यासस्तस्य अनुरूपाः अनुकूला योग्या इत्यर्थः शूरा इति यावत् भूपाः स्तूपाः=देवमन्दिराणीव उदितमहोन्नतपुण्यकर्मसौधर्मसंगतिभवद्विशदस्वरूपाः=उदितं प्राप्तोदयं महोन्नतम्=अतिप्रशस्तम् अत्युच्छ्रितं वा यत् पुण्यकर्म=धर्म्यकृत्यं तेन या सौधर्मसंगतिः=सुधर्म्मा=देवसभाऽस्त्यस्मिन्निति सौधर्मः=तदाख्यः कल्पस्तत्र भवोऽपि तात्स्थ्यात् सौधर्म =सौधर्मेन्द्र इत्यर्थः यद्वा सुधर्मैव सौधर्मस्तस्य संगत्या=संनिधानेन भवद् विशदं रूपं येषां ते तथोक्ता आसन् ॥३॥

साम्राज्यमस्य सुषमासुषमानुभावि-धर्मादरेण परिशीलयतः सलीलम् ।
यातेऽप्यनेहसि घनेऽथ सुमङ्गला स्त्री, साऽसूतकाशु-भरतं ननु सूनुरत्नम् ॥ ४ ॥

अन्वयः—सुषमासुषमाऽनुभाविधर्मादरेण साम्राज्यं सलील परिशीलयतः अस्य सा सुमगलास्त्री घनेऽनेहसि याते भरत सूनुरत्नम् आशु असूतक ॥ ४ ॥

व्याख्या—सुषमासुषमाऽनुभाविधर्मादरेण=सुषमासुषमायाः=एकान्तसुषमायाः चतुःसागरोपमकोटाकोटिप्रमाणक सुषमासुषमाख्यप्रथमारकस्य योऽनुभावः=अनीतिराहित्यादिरूपप्रभावः सोऽस्त्यस्मिन् स तादृशो धर्मः=राजधर्मस्तस्यादरेण=सत्कारेण अनतिक्रमेणेति भावः साम्राज्यं=सार्वभौमत्वं दशलक्षाधिपत्यं वा 'लक्षाधिपत्यं राज्यं स्यात् साम्राज्यं दशलक्षके' इत्युक्तेः । सलीलम्=लीलया सहित-

मनायासेनेत्यर्थः परिशीलयतः=समन्तात्पालयतः अस्य=श्रीमदृषभदेवस्य सा सुमंगला=तदभिधाना स्त्री घने=बहुतरे अनेहसि=काले याते=व्यतीते सति भरतं=तदाख्यं सूनुरत्नं=पुत्रश्रेष्ठम् आशु=शीघ्रम् असूतक=प्रासोष्ट ॥ ४ ॥

अन्यापि देववनिता सुकृतान्नितान्तं, चक्रायुधं प्रसुषुवे वपुषाभिरामम् ।
नाम्नापि बाहुबलिनं फलिनं द्रुमं भूः, प्राचीव भानुमुदितं च जयं शचीव ॥ ५ ॥

अन्वयः—अन्यापि देववनिता नितान्तं सुकृतात् नाम्नाऽपि बाहुबलिनं चक्रायुधं वपुषाऽभिरामम् भूः फलिनं द्रुममिव प्राची उदितं भानुमिव शचीजयमिव प्रसुषुवे ॥ ५ ॥

व्याख्या—अन्याऽपि=अपराऽपि द्वितीयापीत्यर्थः देववनिता=आदिदेवभार्या सुनन्दा नामधेया नितान्तं सुकृतात्=पुण्यातिशयमहिम्ना नाम्ना अपिना गुणेनापि बाहुबलिनं=तदाख्यं भुजबलशालिनं चक्रायुधं=चक्राख्यमायुधमस्त्यस्य हस्तादौ चिह्नरूपेणेति तं तादृशं वपुषा=शरीरेण अभिरामं=मनोहरं सूनुरत्नमित्यनुषज्यते प्रसुषुवे=प्रसूतवती । का कामिव भूः=पृथ्वी फलिनं=फलसमृद्धमनत्र फलिनमितिभावः द्रुमं=वृक्षमिव । प्राची=पूर्वदिशा उदितं=प्रकाशमानं भानुं=सूर्यमिव । शची=इन्द्राणी=जयन्तमिवेत्यर्थः । इत्याद्यपक्षीयोऽर्थः ।

द्वितीयपक्षे तु—अन्यापि देववनिता=श्रीशान्तिनाथप्रभोः पट्टराज्ञी श्रीयशोमती नाम्नी नितान्तं सुकृतात्=अतिशयपुण्यप्रभावात् वपुषाऽभिरामं=मनोहरकलेवरं बाहुबलिनं=भुजबलवलितं नाम्ना=आख्यया अपि शब्दात् अन्वर्थतागुणेन च चक्रायुधं=तदाख्यं सूनुरत्नं

प्रसुषुवे=अजीजनत् । तदुक्तं शान्तिनाथचरिते-गर्भाधानंभजति भगवत्यत्रमात्रा निरैक्षि, स्वप्ने चक्रं समुदितविभाचक्रकाष्ठावभासं । अस्माच्चक्रायुध इति सुतस्याऽस्य नामाऽभिधानं, श्रीमान् शान्तिर्व्यधितविधिवल्लोककल्पद्रुकल्पः । १४ । २०८ ।

अन्ये समाहितनया विनयाद्व विरेजुः, श्रीलक्ष्मणादिविदिता दितशात्रवास्ते ।
भूमीभुजां विहितशक्रपराक्रमेण,शत्रुघ्न इत्यभिधया सुधिया प्रशस्याः ॥ ६ ॥

अन्वयः—अन्ये ते समाः तनया. विनयात् विरेजु. श्रीलक्ष्मणादिविदिता.दितशात्रवाः भूमीभुजा विहितशक्रपराक्रमेण सुधिया शत्रुघ्न इत्यभिधया प्रशस्याः । रामपक्षे-अन्ये ते श्रीलक्ष्मणादिविदिता शत्रुघ्न इत्यभिधया ख्यात. कनिष्ठश्च सर्वे विनयाद्विरेजुः समाहितनया दितशात्रवाः भूमीभुजा विहितशक्रपराक्रमेण सुधिया प्रशस्या. ॥ ६ ॥

व्याख्या—अन्ये=अपरे ते समाः=तुलयाः अष्टनवतिसंख्यकाः तनयाः=भगवत आदिदेवस्य पुत्राः विनयात्=गुरुजनेषु नम्रभावात् विरेजुः=शुशुभिरे । कीदृशा इत्याह-श्रीलक्ष्मणादिविदिताः=श्रीः शोभा बुद्धिर्वा कीर्तिर्वा लक्ष्मण=नामधेयं तदादिभिर्विदिताः=जगतिप्रसिद्धाः । दितशात्रवाः=दितं=खण्डितं शात्रवं=शत्रुसमूहो यैस्ते यद्वा दिता=छिन्नाः शात्रवाः=वैरिणो यैस्ते शौर्यसम्पन्ना निष्कण्टकाश्चेति भावः भूमीभुजां=राज्ञां विषये मध्ये वा विहितशक्रपराक्रमेण=प्रकटी कृतेन्द्रतुल्यविक्रमेण हेतुना सुधिया=प्राज्ञजनेन शत्रुघ्न इत्यभिधया=इत्याख्यया प्रशस्याः=प्रशंसार्हाः ॥

सिंहावलोकनन्यायेन प्रागनुक्तान् श्रीरामबलदेवभ्रातॄन् इह नाम्ना निर्दिशति कविः-अन्ये=प्रागनुक्तशिष्टा अपरे ते=प्रसिद्धाः, श्रीलक्ष्मणादिविदिताः=श्रीलक्ष्मण आदिर्येषां ते श्रीलक्ष्मणादयस्ते च ते विदिताः=ज्ञातारश्चेति ते तथोक्ताः आदिना भरतः शत्रुघ्न

इत्यभिधया नाम्ना ख्यातः कनीयांश्च सर्वेविनयाद्विरेजुः कीदृशा इत्याह समाहितनयाः=समाहितः=समवलम्बितः सम्यक्स्थिरीकृतो वा नयः=नीतिर्यैस्ते दितशात्रवाः=खण्डितपरिपन्थिजनाः भूमीभुजां विहितशक्रपराक्रमेण सुधिया प्रशस्याः ।

सम्यक् चचाल जनता विनये नये च, जज्ञेऽस्य राज्यमहिमा विजये जये च ।
सारस्यमेव यशसो निनदेन देव, वृष्टेः सुखार्जनमनोमदनेऽदने च ॥ ७ ॥

अन्वय.—जनता विनये नये च सम्यक् चचाल । अस्य राज्ञः राज्यमहिमा विजये जये च जज्ञे । सुखार्जनमनोमदने ऽदने च अस्य राज्ञो यशसो निनदेन देववृष्टेः सारस्यम् (अभूत्) ॥ ७ ॥

व्याख्या—जनता=जनसमुदायः विनये=राजभक्तौ नये=राजनीतौ च सम्यक्=सुष्ठु चचाल=वर्तनशीलाऽभूत् । अस्य राज्ञः राज्यमहिमा=राजकर्मप्रशंसा शासनप्रभाव इति यावत् विजये=विशिष्टजये जये=सामान्यजये च जज्ञे=जातः । किञ्च सुखार्जन-मनोमदने=सुखार्जने=सुखेच्छायां मनोमदने=चित्तहर्षे अदने=भोजने च अस्य राज्ञः यशसो निनदेन=यशःप्रवादेन देववृष्टेः=मेघवृष्टितोऽपि सारस्यं=सरसता अभूत् । मेघवृष्टितः सुखार्जनादिकं भवति ततोऽप्यस्य राज्ञो विशेषेणाऽभूदित्यर्थः ॥ ७ ॥

नाभूद् भयं प्रसृमरे सबले बले च, व्यक्ते जवे सुकृतकर्मणि तेजनेन ।
लोके विरोकरुचिरे सुचिरं सतोके, जातं समाभिरसमाभिरलङ्घनेन ॥ ८ ॥

अन्वयः—सबले बले प्रसृमरे तजनन सुकृतकर्मणि जवे व्यक्ते भयं नाऽभूत् लोके विरोकरुचिरे सतोके च सुचिर समाभिः असमाभिः जातम् घनेन अलं जातम् ॥ ८ ॥

व्याख्या—सबले=बल-शक्ति-सहिते बले=सैन्ये प्रसृमरे=प्रसरणशीले सति तथा तेजनेन=उत्तेजनेन सुकृतकर्मणि=पुण्यकर्मणि जवे=वेगे व्यक्ते=स्पष्टे सति भयं=राजभयादिसप्तभेदवती भितिः नाभूत् । किञ्च विरोकरुचिरे=विशिष्टो रोकः=दीप्तिः विरोकस्तेनरुचिरस्तस्मिन् यद्वा विशिष्टो रोको दीप्तिर्यस्य सः अथ वा विगतो रोकः=छिद्रं दूपणमित्यर्थः यस्य स विरोकः स चासौ रुचिरश्चेति स तस्मिन्, सतोके=तोकैः=अपत्यैः सहिते च सति सुचिर चिरकालाय समाभिः=संवत्सरैः असमाभिः=असाधारणीभिः जातम्=अभावि। घनेन=मेघेन च अलं=कृष्याद्यनुकूलवर्षणसमर्थेन जातम्=समजनि ॥ ८ ॥

सम्यक्श्रिया विलसनैर्व्यसनैर्विनैव, निस्सामभीममहसा रिपुकम्पनैश्च ।
पुन्नागनागतुरगैः किमु-दारलब्ध्या, भूचक्रचङ्क्रमणकृद् नृप एष शक्रः ॥ ९ ॥

अन्वयः—एष नृप. भूचक्रचङ्क्रमणकृत् शक्रः किमु । (कैः ?) सम्यक् श्रिया विलसनैः व्यसनैर्विनैव निस्सीमभीममहसा रिपुकम्पनैश्च पुन्नागनागतुरगैः दारलब्ध्या (पक्षे उदारलब्ध्या) भूचक्रचङ्क्रमणकृत् अभूत् ॥ ९ ॥

व्याख्या—एष नृपः=श्रीविश्वसेनादिमहीपतिः, भूचक्रचङ्क्रमणकृत्=भूमण्डलविहरणशीलः शक्रः=इन्द्रः किमु इत्युत्प्रेक्षा तद्बीजमाह—सम्यक्=चारुरूपेण श्रिया=साम्राज्यलक्ष्म्या पक्षे स्वाराज्यलक्ष्म्या विलसनैः=विलासैः, व्यसनैर्विनैव=विपद्राहित्येन निःसीमभीममहसा=निःसीमं=मर्यादातीतं यद् भीममहः=शत्रुभयावहतेजस्तेन, रिपुकम्पनैः=शत्रुजनत्रासजननैश्च=पुनः पुन्नागनागतुरगैः=

पुन्नागाः=नरश्रेष्ठाः मन्त्र्यादयः नागाः=हस्तिनः तुरगाः=अश्वास्तैः इन्द्रपक्षे पुन्नागः=पाण्डुनागः=श्वेतहस्ती ऐरावत इति यावत् नागाः-मेघा वाहनीभूताः 'तुरगाणामेघवाहन' इतीन्द्रपर्यायेऽमरोक्तेः तुरगः-अश्वः उच्चैःश्रवास्तैश्च तथा दारलक्ष्म्या-स्त्रीरत्नप्राप्त्या, इन्द्रपक्षे उदारलक्ष्म्या-महत्या शक्त्येत्यर्थः उपलक्षितः भूचक्रचङ्क्रमणकृत्-विजयार्थं पृथ्वीमण्डले विहारकरणशीलोऽभूत् ॥ ९ ॥

एतत्प्रयाणसमये नमयन् शिरांसि, शेषो विशेषभृदशेषबलादुवाह ।
भूमिं चलाचलतयोच्छ्वसनैः शनैर्वा, श्वासप्रयासपवनैः कृतपारणार्थः ॥ १० ॥

अन्वय.—एतत्प्रयाणसमये शेषः विशेषभृत् शिरांसि नमयन् शनैः उच्छ्वसनैः श्वासप्रयासपवनैः कृतपारणार्थः चलाचलतया अशेषबलात् भूमिम् उवाह ॥ १० ॥

व्याख्या—एतत्प्रयाणसमये-एतस्य राज्ञः प्रयाणसमये-विजयार्थं प्रस्थानकाले शेषः-अनन्तनागः विशेषभृत्-पृथ्वीयथावद्धारणार्थसामर्थ्यातिशयमाश्रयन्नपि शिरांसि-फणासहस्रं नमयन्-प्रह्वीकुर्वन् अत एव शनैः-मन्दम् उच्छ्वसनैः-श्रमजनितदीर्घोच्छ्वासैः श्वासप्रयासपवनैः-श्वासग्रहणसंजातप्रयाससमुद्भूतमारुतैः कृतपारणार्थः-कृतभोजनेच्छः सन् चलाचलतया-संभ्रान्ततया ससंभ्रममित्यर्थः अशेषबलात्-यावच्छक्तिमवलम्ब्य भूमिम् उवाह-दधार ॥ १० ॥

बुध्या समृद्धमनसाऽप्यनसा श्रुतीनां, छन्दोऽनुचारिवचनै रचनैश्चमूनाम् ।
राज्ञः समाहितविधेः सविधे विधेयां, मन्त्रीजनस्तदुदधेर्विदधेऽस्य सीमाम् ॥ ११ ॥

अन्वय.—समाहितविधेः अस्य राज्ञः मन्त्रीजनः उदधेः समीपे विधेया सीमां विदधे । (कै. ?) बुध्या श्रुतीनामनसा मनसा छन्दोऽनुसारिवचनै चमूना रचनैश्च ॥ ११ ॥

व्याख्या—समाहितविधेः-अनुकूलदैवस्य भाग्यशालिन इत्यर्थः अस्य राज्ञः चक्रवर्तिनः वासुदेवस्य वा मन्त्रीजनः उदधेः सविधे समुद्रसमीपे विधेया करणीयां सीमां-विशेषेण शासनीय ( धारणीय ) देशमर्यादां विदधे-कृतवान् । कैः कैरुपायैरित्याह-बुद्ध्या- औत्पातिक्यादिभेदभिन्नया मत्या श्रुतीनाम् अनसा-शास्त्रोक्तनीतीनां शकटवद् वाहकेनेत्यर्थः श्रुति-शास्त्र-विज्ञेनेतियावत् समुद्रमनसा-उदारचित्तेन अपिश्चार्थे छन्दोऽनुसारिवचनैः-अभिप्रायानुगुणवाक्यैः, चमूनां-सेनाना रचनैश्च-यथोचितं सैन्यविभजनैः सैन्यविन्यासैर्वा ॥ ११ ॥

क्षोणीधवे जयिनि भूर्दिवमाजुहाव, वाद्यैर्गभीरनिनदैः स्वविभुप्रसाद्यैः ।
हित्वा सुधाशनरसान्नरसार्थगोष्ठ्यां. स्वास्थ्येन तस्थुरमराः क्रमरागिणोऽत्र ॥ १२ ॥

अन्वय —क्षोणीधवे जयिनि स्वविभुप्रसाद्यै. गभीरनिनदैः भूः दिवम् आजुहाव (इव) अमरा. सुधाशनरसान् हित्वा अत्र क्रमरागिण नरसार्थगोष्ठ्या स्वास्थ्येन तस्थु. ॥ १२ ॥

व्याख्या-जयिनि-विजयशालिनि क्षोणीधवे-पृथ्वीपतौ सति यद्वा क्षोणीधवे जयिनि-विजयमाने सति स्वविभुप्रसाद्यैःस्वः-निजः विभुः-राजा प्रसाद्यो येषां तैः गभीरनिनदैः-गम्भीरध्वनिशालिभिः वाद्यै-नानाविधवादित्रैः कृत्वा भूः-पृथ्वी दिवं-देवलोकं लक्षणया तत्स्थान् देवानित्यर्थः आजुहाव=आह्वयतिस्मेवेति लुप्तोत्प्रेक्षावाचिकोत्प्रेक्षा । अत एव अमराः-देवाः सुधाशनरसान्-अमृतभोजन-

जनितानन्दान् हित्वा—परिहाय अत्र चक्रवर्त्यधिष्ठितदेशे क्रमरागिणः—क्रमे—आचारे चलने वा रागिणः—कृतानुरागाः सन्तः नरसाधर्गोष्ठ्यां—जनसमुदायमण्डल्यां स्वास्थ्येन—सुखेन तस्थुः—स्थितवन्तः। चक्रवर्त्यादीनां चक्राद्यधिष्ठायकतया देवानामिहागमनं जैनसिद्धान्तप्रसिद्धम् ॥ १२ ॥

न्याये भुवि प्रसृमरे समरे न कोऽपि, स्थायी मिथःप्रतिघतोऽपि न चाततायी ।
तायी रसादसुमतां सुमताङ्कभाजां, तद्राजतेस्म तनयस्सनयस्स-राजः ॥ १३ ॥

अन्वयः—भुवि अस्य न्याये प्रसृमरे कोऽपि समरे मिथः न स्थायी। प्रतिघतोऽपि कोऽपि आततायी न [ आसीत् ] अस्य राज्ञः तनयः सुमताङ्कभाजामसुमतां रसात् तायी सनयः सराजः राजतेस्म ॥ १३ ॥

व्याख्या—भुवि—भूमण्डले अस्य राज्ञः न्याये—नीतौ प्रसृमरे—प्रसरति सति कोऽपि जनः समरे—संग्रामे मिथः—परस्परं न स्थायी—राजभयेन नाऽवतिष्ठते. प्रतिघतः—क्रोधादपि कोपाविष्टोऽपि सन्नित्याशयः कोऽपि आततायी—आततेन—विस्तीर्णेन शस्त्रादिनाऽयितुं शीलमस्य सः—वधोद्यतः अग्निदादिलक्षण इति यावत् तथा चोक्तम्—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्र—दारापहारी च षडेते आततायिनः ॥ इति ।

न आसीदिति शेषः। किञ्च अस्य राज्ञः तनयः—पुत्रोऽपि सुमताङ्कभाजां=सुमतानां—सज्जनानाम् अङ्कम्—उत्सङ्गं—क्रोडं—भजन्ते इति सुमताङ्कभाजस्तेषां तादृशानाम् असुमतां—प्राणिनां रसात् स्नेहात् वात्सल्यादिति यावत् तायी—रक्षणशीलः पुनः सनयः—नीतियुक्तः, सराजः—राजनं राजः—दीप्तिः तेन सहितः राजतेस्म शोभतेस्म ॥ १३ ॥

नृणां गणो निरवधिर्धनवर्धनेन, प्राप्तावधिर्भजनतो जिनराजिराजाम् ।
कार्पण्यमाश्रयतिनैव मनाक् स्पण्यः, प्रावीण्यपुण्यविधिनैव धुनोति पङ्कम् ॥ १४ ॥

अन्वय·—नृणांगणः धनवर्धनेन निरवधिः जिनराजिराजा भजनतः प्राप्तावधिः । सपण्य, मनाक् कार्पण्य नैवाश्रयति प्रावीण्यपुण्यविधिनैव पङ्कं धुनोति ॥ १४ ॥

व्याख्या—नृणांगण जनसमुदायः धनवर्द्धनेन–धनधान्यादि· समृद्धया निरवधिः–अनन्तः धनिकश्रेण्यां सर्वाग्रगण्य इति भावः अथ च अवधिरहितोऽपि जिनराजिराजां=जिनेन्द्रदेवानां भजनतः=आराधनायाः प्राप्तावधिः=अवधिं प्राप्तः सावधिरिति विरोधः प्राप्तः अवधिः=अवधानं=मनोयोगविशेषः ( यद्वशान्मनो विषयान्तरतो निवर्त्तते ) येन स इति परिहारः । अवधिस्त्ववधाने स्यात्सीम्निकाले बिले पुमानिति मेदिनी । एवं सपण्यः=पण्येन=स्तोतव्येन स्वेष्टदेवेन हृदि सहितः यद्वा पण्यैः=व्यवहार्यवस्तुभिः सहितः । किन्तु मनाक्=अल्पमपि कार्पण्यं=कृपणताम्=उचितव्ययविमुखतया धनसंचयेच्छां मितम्पचत्वमिति यावत् यद्वा कार्पण्यं=दैन्यं नैव आश्रयति=नावलम्बते । किञ्च प्रावीण्यपुण्यविधिनैव=प्रावीण्येन नैपुण्येन विज्ञतयेति यावत् पुण्यानां=धर्माणां विधिना=विधानेन=अनुष्ठानेनेति यावत् यद्वा पुण्येन=मनोज्ञेन विधिना=कर्मणा एव 'विधिर्विधाने दैवे चेत्यमरः पुण्यं धर्मे मनोज्ञेऽपीति विश्वः । पङ्कं=पापं दुष्कृतमिति यावत् पङ्कोऽस्त्रीकर्दमे पापे इति मेदिनी धुनोति=क्षालयति दूरयतीत्यर्थः ॥ १४ ॥

क्षेत्रं रराज कुरुनाम गुरुप्रसिद्धया, तत्रापि तद्गजपुरं वपुरश्वितेभ्यम् ।

श्रीशान्तनुर्नयवनप्लवनः सभीष्मः, स ग्रीष्मवद् वृषभसौररुचिस्तदीशः ॥ १५ ॥

अन्वय.—गुरुप्रसिद्ध्या कुरुनाम क्षेत्र ( कुरुनाम गुरुप्रसिद्ध्या उपलक्षित क्षेत्र ) रराज तत्रापि वपुरञ्चितेभ्य तत् गजपुरम् (अभूत्) तदीशः श्रीशान्तनु (आसीत्) नयवनप्लवन, सभीष्म ग्रीष्मवद् वृषभसौररुचि. । पक्षान्तरे कुरुनाम गुरुप्रसिद्ध्या उपलक्षित क्षेत्र रराज । तदीश. श्रीशान्त- नुर्नयवनप्लवन. ( शेष पूर्ववत् ) ॥ १५ ॥

व्याख्या—क्षेत्रमिति इतः परे श्लोकाः कृष्णचरितान्तर्गतपाण्डवचरित्रांशे स्पष्टार्थाः अन्येषु प्रकृतकाव्यवर्णनीयमहापुरुषसप्तकेषु मन्दं प्रकाशं पातयन्ति तत्र तावदापाततः प्रतीयमानस्पष्टार्थोऽभिलिख्यते, गुरुप्रसिद्ध्या=महत्याप्रसिद्ध्या=ख्यात्या यद्वा गुरोः= कौरववंशमूलभूत कुरुनामनृपश्रेष्ठस्य प्रसिद्ध्या कुरुनामक्षेत्रं=देशः यद्वा कुरुनामगुरुप्रसिद्ध्या इति समस्तं तस्य कुरु इति नाम्ना या गुर्वी=महती प्रसिद्धिः ख्यातिः प्रतिष्ठा वा तया उपलक्षितं क्षेत्रं=सिद्धस्थानं देश इति यावत् रराज=शुशुभे । तत्रापि=तस्मिन्नपिदेशे वपुरञ्चितेभ्यं=वपुषा=शरीरेण अञ्चिताः=प्रशस्ता इभ्या यत्र तत्तादृश तत्=प्रसिद्धम् गजपुरं=नागपुरं हस्तिनापुरमिति यावत् अभूत् । तदीशः=तस्य=गजपुरस्य ईशः=राजा सः प्रसिद्धः, श्रीशान्तनुः=तदाख्यः आसीदिति शेषः स कीदृश इत्याह—नयवनप्लवनः=नयः= न्यायः एव वनं=सलिलं तत्र प्लवते=स्नातीति सः न्यायजलस्नायीत्यर्थः । नीतिजलसंतरणशील इति यावत् सभीष्मः=भीष्मकुमारस हितः । ग्रीष्मवत्-निदाघर्तुरिव वृषभसौररुचिः=वृष=वृषसंक्रान्तौ भातीति वृषभा तादृशी सौरी=सूर्यसम्बन्धिनी रुचिः=कान्तिर्यत्रेति ग्रीष्मपक्षे । राजपक्षे तु वृषः=कामः स इव भातीति वृषभः सुवति=कर्मणिलोकान्प्रेरयंतीति सूराः=पण्डितास्तेषां समूहः सौरस्तस्मिन् रुचिः=प्रीतिर्यस्य स सौररुचिः वृषभश्चासौ सौररुचिश्चेति स तादृशः ।

अन्यपक्षे तु—कुरुनामवद्गुरुप्रसिद्धया उपलक्षितं क्षेत्रं=तत्तद्देशः रराज तत्रापि वपुरश्चितेभ्यं तत् गजपुरं=पुरेषु गज इवेति तत् पुरश्रेष्ठमित्यर्थः मुख्यनगरमिति यावत्। तदीशः श्रीशान्तनुन्नयवनप्लवनः=श्रीशान्तरसेन नुन्नं=स्फैटितं निराकृतमित्यर्थः यवनानां प्लवनं=ससंभ्रमागमनं येन स तथोक्तः। पुनः सभीष्मः=भीतिहेतुहेतितसहितः। वृषभमौररुचिः=वृषेण धर्मेण सौररुचिः सौरीचासौ रुचिश्चेति सौररुचिरिव रुचिर्यस्य स सौररुचिः सूर्यतुल्यकांतिः। शुक्रले मूषके श्रेष्ठे सुकृते वृषभे वृष इत्यमरः ॥ १५ ।

भूश्चित्रवीर्यमधिगत्य नृपं रसेन, प्रादुश्चकार कलधौतमुखेन्दुहासम् ।
कोशा बभुर्नवनवाः प्रकृतेः कुलेषु, न्याय्यं तदत्र हरिवंशभुवि क्षमापे ॥ १६ ॥

अन्वय —भू चित्रवीर्यं नृपम् अधिगत्य रसेन कलधौतमुखेन्दुहास प्रादुश्चकार प्रकृतेः कुलेषु नवनवा कोशा बभु. अत्र हरिवंशभुवि क्षमापे तत् न्याय्यम् ॥ १६ ॥

व्याख्या—भूः=पृथ्वी तात्स्थ्यलक्षणया भूतलस्थो लोकः चित्रवीर्यं=विस्मयावहपराक्रमशालित्वात्तदाख्यं नृपं=राजानम् अवाप्यरसेन=प्रेम्णा कलधौतमुखेन्दुहासं=कलधौतं=रजतं तत्सच्छायेन मुखेन=वदनेन इन्दोः=चन्द्रमसोऽपि हासं=परिहास प्रादुश्चकार=आविष्करोतिस्म। किञ्च प्रकृतेः=प्रजायाः कुलेषु=समुदायेषु नवनवाः=अपूर्वाः विलक्षणाः कोशाः=धान्यादीना प्रत्याकाराः बभुः=शुशुभिरे। अत्र=अस्मिन् क्षेत्रे हरिवंशभुवि=चन्द्रवंशसमुद्भवे क्षमापे=राज्ञि चित्रवीर्ये सति तत्=पूर्वोक्तं सर्वं न्याय्यं=न्यायादनपेतं युक्तमित्यर्थः उचितमिति यावत् चित्रवीर्ये राज्ञि सर्वं सम्भवतीति भावः।

अन्यपक्षेषु–यः चित्रवीर्यं=विस्मयनीयविक्रमशालिनं नृपं अधिगत्य रसेन=रागेण कलधौतमुखेन्दुहासं=कलधौतं=सुवर्णं रजतं च तन्मुखे यस्य स कलधौतमुखः स चासौ इन्दुहासः=खड्गस्तम् प्रादुश्चकार श्रीमद्वृषभपक्षे भरतस्य चक्रवर्तित्वात् शान्तिनाथस्यापि चक्रित्वात् वासुदेवाना च खड्गोत्पत्तिः प्रसिद्धैव । कलधौत सुवर्णे स्याद्रजते च नपुंसकमिति मेदिनी । खड्गे तु निस्त्रिंश–चन्द्रहासा–ऽसि–रिष्टयः इत्यमरः किञ्च– कूलेषु=जनपदेषु गंगा–सिन्ध्वोस्तीरदेशेषु वा प्रकृतेः=स्वभावत एव नवनवाः=नव=नवसंख्यकाः नवाः=नवीनाः कोशा =अर्थराशयो वसुः=विरेजिरे। तत्=एतत्सर्वं अत्रभरतं हरिवशभुवि=हरिः=सूर्यः नामैकदेशग्रहणे नामग्रहणात् सूर्यः=सूर्ययशाः=भरतपुत्रस्तस्यवंश इक्ष्वाकुवंशस्तस्मिन् जाते इति भरत–शान्त्योः । रामपक्षे सूर्यवंशसमुद्भूते । कृष्णपक्षे हरिवंशः=यादवकुलं तज्जाते इत्यर्थः क्षमापे=राजि सति न्याय्यं=युक्तम् । कुलं जनपदे गोत्रे सजातीयगणेऽपि चेति मेदिनी । हरिश्चन्द्रा ऽर्क-वाता-ऽश्व-शुक भेक-यमा ऽहिषु । कपौ सिंहे हरेऽजेंऽशौ शक्रे लोकान्तरे पुमान् वाच्यवत् पिङ्ग–हरिरिति मेदिनी ॥ १६ ।

पाण्डुर्यशोभिरभितः समशोभि कान्त्या, राजापि सोमवपुषा वृष–भासनाभः ।

प्रीत्याऽनुभाविविदुरेण दुरोदरेणा-नीत्यादिजन्मधृतराष्ट्रभुवा-रिरंसुः ॥ १७ ॥

अन्वयः—पाण्डुः राजापि यशोभिः कान्त्याऽभितः समशोभि । सोमवपुषावृषभासनाभ अनुभाविविदुरेण प्रीत्या रिरंसुः आदिजन्मधृतराष्ट्रभुवाऽनीत्या दुरोदरेणाऽरिरंसुः । राजापि अभितः यशोभिः पाण्डु कान्त्या सोमवपुषा च समशोभि । वृषभासनाभः, अनुभावि विदुरेण प्रीत्याः । अनीत्या आदिजन्मधृतराष्ट्रभुवा च रिरंसु दुरोदरेण अरिरंसुः ॥ १७ ॥

व्याख्या--पाण्डुः=तदाख्यः राजापि यशोभिः=कीर्तिभिः कान्त्या च अभितः सर्वतोभावेन समशोभि=अशोभिष्ट । स कीदृश इत्याह—सोमवपुषा=उमया=कीर्त्या शिवपक्षे पार्वत्या सहितं सोमं=सकीर्तिकं सपार्वतीकं च तादृशेन वपुषा=शरीरेण वृषभासनाभः=वृषभासनस्य=शिवस्येव आभा=शोभा यस्य सः । तथा अनुभाविविदुरेण=अनु=पश्चात् भवति=जायते इति भावः=जन्माऽस्यास्तीति वा अनुभावी=अनुजः तेन विदुरेण=तदाख्येन सह प्रीत्या=ऽनुरागेण रिरंसुः=रन्तुमिच्छुः किन्तु आदिजन्मधृतराष्ट्रभुवा=आदिजन्मनः=अग्रजात् धृतराष्ट्राद् भवति=जायते इत्यादिजन्मधृतराष्ट्रभूस्तया अनीत्या=अन्यायेन दुरोदरेण च अरिरंसुः=निविवर्तिषुरित्यर्थः ॥

अन्यपक्षेषु—राजापि=श्रीविश्वसेनादिनृपोऽपि अभितः=विश्वग्व्याधिभिः यशोभिः पाण्डुः=गौरः कान्त्या सोमवपुषा=चन्द्रवद्रमणीयशरीरेण च समशोभि। स कीदृगित्याह-वृषभासनाभः=वृषस्य=धर्मस्य भासनया=प्रतिभासनेन भाति=शोभते इति सः । किञ्चासौ अनुभाविविदुरेण=अनुभवशीलधीरेण प्रभावशालिनागरेण वा सह प्रीत्या=प्रेम्णा । अनीत्या=न सन्ति ईतयो यस्यां साऽनीतिस्तया तादृश्या आदिजन्मधृतराष्ट्रभुवा=आदिजन्मना=स्वपूर्वजेन धृतस्य=स्वायत्तीकृतस्य राष्ट्रस्य=देशस्य भुवा=पृथिव्या च रिरंसुः । दुरोदरेण=द्यूतकारेण द्यूतेन वा उपलक्षणमिदं व्यसनमात्रस्य अरिरंसुः ॥ १९ ॥

यस्यास्तनावतिगुरू स्वरूचा हिमाद्री, कान्ता पृथावतिशयेऽस्य मनोनुरागे !

दृष्ट्वा-धरा-सुरपतेरपि राज्यलक्ष्म्या, सर्वं सुपर्वभवगर्वमपाचकार ॥ १८ ॥

अन्वय.—यस्या. स्तनौ स्वरुचा अतिगुरू (स्तः) पृथा मात्री (च) अस्य कान्ता अतिशये मनोऽनुरागे ( वर्तमाना ) धरासुरपते. अस्य राज्य-

रश्मया दृष्टा (अस्य मनोऽनुरागेऽतिशये सति दृष्टाधरा सुरपते राज्यलक्ष्म्या) सर्वं सुपर्वभवगर्वम् अपाचकार । पक्षे यस्या अतिगुरू स्तनौ स्वरुचा हिमाद्री (अतिशयाते) साऽस्य कान्ता पृथौ अतिशये मनोऽनुरागे (शेषं पूर्ववत्) ॥ १८ ॥

व्याख्या—यस्याः स्तनौ=वक्षोजौ स्वरुचा=निजदीप्त्या अतिगुरू=अतिविशालौ गुरु=महत् (बिल्वफलादि) समतिक्रमणशीलौ वा तादृशी पृथा=कुन्ती माद्री च अस्य=पाण्डुराजस्य कान्ता=भार्या अतिशये=अतिमात्रे मनोऽनुरागे=पत्युश्चित्तप्रीतौ वर्त्तमाना धरासुरपतेः=महीमहेन्द्रस्य अस्य पाण्डुमहाराजस्य राज्यलक्ष्म्या=राजश्रिया दृष्टा सती कृताभिषेका सतीति भावः यद्वा यस्य=पाण्डोः मनोऽनुरागे=मनः प्रीतौ सति दृष्टाधरा=चुम्बितुं निरीक्षितोष्ठदेशा सती सुरपतेः=इन्द्रस्य राज्यलक्ष्म्याः=स्वाराज्यश्रियः सर्वं सुपर्वभवगर्वं=देवलोकाऽभिमानम् अपाचकार=दूरयामासेत्यर्थः ।

अन्यपक्षेषु—यस्याः राज्याः अतिगुरू=अतिपीवरौ स्तनौ स्वरुचा-स्वकीयच्छटया स्वीयौन्नत्यगुणेन निजकान्तिगुणेन वा हिमाद्री=हिमपर्वतौ अतिशयाते इति शेषः सा तादृशी अस्य-पूर्वोक्तस्य राज्ञः कान्ता-स्त्रीरत्नम् पृथौ-महति अतिशये मनोऽनुरागे—पतिविषयकनिकामस्नेहे सति शेषं पूर्ववत् ॥ १८ ॥

जाताः सुतास्तत इमे शरसंख्ययाप्त्या, शल्यारिपात्रनिनरान्वयिबन्धुरूपाः ।
तेऽपि स्वमानमपहाय विमानरत्ना-रूढाः समीयुरपरे वरिवस्ययाऽस्य ॥ १९ ॥

अन्वयः—ततः इमे शरसंख्ययाऽऽप्त्या शल्यारि-पात्रनि-नरा-ऽन्वयिबन्धुरूपाः सुताः जाताः । ते ऽपरे च स्वमानमपहाय विमानरत्नारूढाः

अस्य वरिवस्यया समीयुः । पक्षे—तत इमे सुता जाता अशरसख्ययाप्याः शल्यारि-पावनि नरान्वयिबन्धुरूपाः (शेष प्राग्वत्) ॥ १९ ॥

व्याख्या—ततः तदनन्तरं तस्मात् पाण्डुराजाद्वा इमे=वक्ष्यमाणाः शरसंख्यया-शराः पंच तत्संख्यया आप्याः-प्राप्याः पञ्चसंख्याका इत्यर्थः शल्यारि पावनि-नरा-ऽन्वयिबन्धुरूपाः शल्यारिः—युधिष्ठिरः, पवनस्यापत्यं पावनिः-भीमः, नरः-अर्जुनः, अन्वयिबन्धू-अन्वयिनोः-संबद्धरूपयोः-अश्विनीकुमारयोः बन्धू-पुत्रौ यद्वा अन्वयिनौ-यमजतया समानोदरसम्बद्धौ बन्धू-भ्रातरौ नकुल—सहदेवौ तद्रूपाः सुताः-पुत्राः जाताः-समजनिषत अपिश्चार्थो भिन्नक्रमश्च तथा ते-शल्यारिप्रमुखाः अपरे-अन्ये च जनाः स्वमानं-स्वमहत्त्वाभिमानम् अपहाय-परित्यज्य विमानरत्नारूढाः-श्रेष्ठविमानमारूढाः सन्तः अस्य-वासुदेवस्य नेमिनाथस्य वा पाण्डोरेव वा वरिवस्यया-परिचर्यया हेतुना शुश्रूषार्थमित्यर्थः समीयुः सम्यग्गतवन्तः नरोऽजे मनुजेऽर्जुने इति मेदिनी. बन्धुशब्दस्य भातृ-पुत्रेत्येतदुभयवाचकत्वं शब्दस्तोभमहानिधौ द्रष्टव्यम् ।

अन्यपक्षेपु—ततः-तस्मात् श्रीविश्वसेनादिनृपात् इमे-वक्ष्यमाणगुणाः सुताः जाताः कीदृशा इत्याह-अशरसंख्ययाप्याः-न शरैः बाणैः संख्ये-युद्धे याप्याः-विद्राव्याः पलायनार्हाः बाणयुद्धेऽधमा वा इति ते तथोक्ताः । शल्यारिपावनिनरान्वयिबन्धुरूपाः-शल्यानि-बाणान् तोमरान् वा इयति ऋच्छन्ति वा-प्राप्नुवन्ति तच्छीलाः शल्यारिणः शराभ्यासिन इत्यर्थः शूरा इति यावत् । पावयतीति पावनः-जगत्पावित्र्यकारकः यद्वा पं-पातारमपि अवति-रक्षतीति पावनः-शरण्यस्यापि शरण्य इत्यर्थः श्रीविश्वसेनादिस्तस्यापत्यानि पावनयः नरान्वयिबन्धुरूपाः-नराणां-मानवानाम् अन्वयिबन्धुरूपाः सोदरभ्रातृकल्पास्तथाऽनुग्राहिणोऽनुरागिणश्चेत्यर्थः शल्यारि पावनि

नगन्धयिनन्धुरूढाणां विशेषणानामयं क्रमश्चाग्यः शल्य तु न स्त्रियां शङ्कौ क्लीबं क्ष्वेडे-पु-तोमरे इति. पा ना वातान्ड-पूतेषु पाने पारकिर्तितः इति न मेदिनी। नेऽपरे च स्वमानमपहाय विमानरत्नारूढाः अस्य श्रीविश्वसेनादेः वग्विस्या ममीयुरित्यर्थः। १९॥

या वेदिजातिरुचिता कृतकर्मयोगा-ल्लेभे प्रपञ्चरमणैर्विषयोपभोगम्।

स-प्राप्तरूपमहिमा न हि माननेति, प्रज्ञा-विशेषवशतो दधतां स्म-राज्ञाम्॥ २०॥

अन्वय —या वेदिजातिरुचिता कृतकर्मयोगात् प्रपञ्चरमणैः विषयोपभोगं लेभे सप्राप्तरूपमहिमा सा स्मराज्ञा दधता राज्ञां प्रज्ञाविशेषवशात मान न एति। पक्षे या वेदिजाति उचिता प्रपञ्चरमणैः विषयोपभोगं लेभे कृतकर्मयोगात् सप्राप्तरूपमहिमा प्रज्ञां दधता राज्ञा मान न एतिस्मेति हार.॥ २०॥

व्याख्या—या वेदिजा=द्रौपदी वेद्याः=होमवेदितो जायते इति व्युत्पत्तेः अतिरुचिता=शोभिता असीमशोभाशालिनीति यावत् कृतकर्मयोगात् प्राक्कृतकर्मवशात् प्रपञ्चरमणैः-प्रकृष्टाः पञ्चपञ्चसंख्यकाः रमणाः-पतयस्तैः विषयोपभोगं-सांसारिकविषयानुशीलन-जन्यसुखानुभवरूपं भोगं लेभे-प्राप्तवती सप्राप्तरूपमहिमा-प्राप्तो यो रूपस्य-सौन्दर्यस्य महिमा-आतिशय्य धारयतां राज्ञां-नृपाणां विषये प्रज्ञाविशेषवशतः बुद्धिविशेषवशात् मानं-विनयाभावं न एति-प्राप्नोति नम्रतया वर्तत इत्यर्थः॥

अन्यपक्षेषु—या वेदिजातिः-वेदयः-पण्डिताः तेषां जातिः—सामान्यम् उचिता—सत्कारयोग्या प्रपञ्चरमणैः-विस्तृतक्रीडाभिः अनायासेनेति भावः विषयोपभोगं-देशकार्यं स्वामित्वं लेभे। कृतकर्मयोगात्-मिलनात् संगमादित्यर्थः सप्राप्तरूपमहिमा-प्राप्तरूपाणां-

बुधानां—पण्डितानां महिम्ना—महत्वेन सहितः यद्वा प्राप्तरूपेण—मनोज्ञेन रम्येनेत्यर्थः महिम्ना—उत्कर्षेण सहितः प्रज्ञाः=बुद्धीर्दधतां राज्ञां मानं—सन्मानं न एतिस्मेति काका एतिस्मैवेत्यर्थः। वेदिःस्यात्पण्डिते पुमान् इति प्राप्तरूपो ज्ञरम्ययोरिति च मेदिनी प्राप्तरूप—स्वरूपाऽभिरूपा बुधमनोज्ञयोरित्यमरः ॥ २० ॥

या नित्ययौवनतया वसुधा-प्रतीता, पुष्पान्विताऽऽशु फलिता सुतरत्नजात्या।
व्यूढा भूजाबलवशादवशाऽमुनासौ, सेवे स्वतः स्वरसतः पुरुषोत्तमं तम् ॥ २१ ॥

अन्वयः—या नित्ययौवनतया वसुधाप्रतीता अवशाऽमुनाभुजाबलवशात् व्यूढा ततः पुष्पान्विता सुतरत्नजात्या आशुफलिताऽसौ स्वतः स्वरसतः स पुरुषोत्तम सेवे। पक्षे—या वसुधा नित्ययौवनतया प्रतीता पुष्पान्विता सुतरत्नजात्याऽऽशुफलिताऽवशाऽसौ अमुना भुजाबलवशात् व्यूढा स्वतः स्वरसतः त पुरुषोत्तम सेवे ॥ २१ ॥

व्याख्या—या द्रौपदी नित्ययौवनतया—नित्यं—चिरस्थायि यौवनं=तारुण्यं यस्याः सा नित्ययौवना तद्भावस्तत्ता तया सदातनतारुण्यशालितयेत्यर्थः वसुधाप्रतीता=भूतलेप्रसिद्धा अवशा=स्वयंवरा सती अमुना=पाण्डवेन भुजाबलवशात्=स्वबाहुवीर्यप्रभावात् व्यूढा=परिणीता=विवाहिता इति यावत् ततः पुष्पान्विता=पुष्पम्=आर्तवं स्त्रीधर्म इति यावत् तत्सहितो सती सुतरत्नजात्या=नृपरत्नजन्मना आशु फलिता=फलवती असौ द्रौपदी स्वतः=स्वयमेव स्वरसतः=अकृत्रिमनिजानुरागात् तं=प्रसिद्ध पुरुषोत्तमं=नरसत्तमं पाण्डवं सेवे=भेजे।

अन्यपक्षेषु—या वसुधा=पृथ्वी नित्ययौवनतया=शस्याद्युत्पादने सर्वदैव युवतीवसमर्थतयेत्यर्थः प्रतीता=विश्रुता पुष्पाऽन्विता=

पुष्पेन=पार्थिवपदार्थमात्राणां विकाशेन अन्विता=युक्ता पुष्पैः=नानाविधकुसुमैरन्वितेति वा गुतरत्नजाल्या=खन्यादिसमुद्भूत रत्नजाल्या फलिता=सफला अवशा=सर्वदा कस्याऽप्यनायत्तासत्यपि असौ वसुधा अमुना=श्रीविश्वसेनादिमहीपतिना भुजाबलवशात्=निजभुजवीर्यमहिम्ना व्यूढा विधृता स्वायत्तीकृता सती स्वतः स्वयं स्वरसतः=निजरसैः मधुरादि षड्भीः तं पुरुषोत्तमं=श्रीविश्वसेनादिनरेशमेव ॥ २१ ॥

कृष्णावतार-समये त्रिदशावतारे, राज्ञि स्फुरत्यपि न धर्मभुवाऽत्यवाहि ।
या-याज्ञिकी-ह-तनया कलिभृत्क्रियासौ, यस्मात्कृतं सुकृतमेव युगं नृपेण ॥ २२ ॥

अन्वय —कृष्णावतारसमये त्रिदशावतारे राज्ञि स्फुरति सति धर्मभुवा या अयाज्ञिकीहतनया कलिभृत् क्रिया असौ क्रिया न अत्यवाहि यस्मान्नृपेण युगं सुकृतमेव कृतम् ॥ २२ ॥

व्याख्या—कृष्णावतारसमये=कृष्णस्य=विष्णोरष्टमावतारकाले त्रिदशावतारि=देवांशेनावतीर्णे राज्ञि=युधिष्ठिरमहीपतौ स्फुरति=विजयमाने सति धर्मभुवा=विप्रेण या अयाज्ञिकी=यज्ञाय=देवपूजायै हिता यज्ञमर्हति वा यज्ञः प्रयोजनमस्या इति वा यज्ञस्येयमिति वा याज्ञिकी तद्भिन्ना हतनया=हतो=भग्नो नयो=मार्गो यस्याः सा तादृशी अत एव कलिभृत्=कलिं=क्लेशं कलियुगं वा कलहं वा रणं वा बिभर्ति धारयति पोषयति वा इति सा तथाविधा क्रिया=कर्म असौ न अत्यवाहि=न आदृता न कृतेत्यर्थः पूजा विना न तपोमुखं धर्मकृत्य बभूवेति भावः। यस्मात्कारणात् नृपेण युगं=द्वापरकालः कृतं=कृतयुगमेव तत्सदृशमेवेति भावः सुकृतं=सुविहितम् ॥

ऋषभदेवपक्षे-त्रिदशावतारे=त्र्यधिकास्त्र्युत्तरास्त्रिसहिता वा दश त्रिदश=त्रयोदशेत्यर्थः अवताराः=भवा यस्य स तस्मिन्। शान्तिनाथादिपक्षे। त्रिदशावतारे=देवावतारे देवरूपे इत्यर्थः। यस्मात् नृपेण कृतं नाम प्रथमं युगं सुकृतं=सुसम्पादितम् 'ऋषभशान्त्योः।' शेषेषु युगं स्वाविर्भावाधिकरणीभूतकालः कृतं=कृतयुगमेव सत्ययुगमेवेत्यर्थः सुकृतम् ॥

किञ्च रसमये=सुरनरयक्ष--गन्धर्वकिन्नरादीनां हर्षमये आनन्दप्रचुरे यद्वा अरसमये=दैत्य-दानवादीनां केशि-कंसवृषभादीनां मृत्युहेतुत्वादहर्षमये दुःखबहुले अथवा आरसमये=अरीणां समूहः आरं तस्य समये=बहुशत्रुकण्टकाकीर्णकाले इत्यर्थः त्रिदशावतारे=देवस्य विष्णोः पूर्णावताररूपे राज्ञि=कृष्णवासुदेवे स्फुरति=विजयमानेऽपि सति या याज्ञिकी=यज्ञः=यज्ञसेनः नामैकदेशग्रहणे नामग्रहणात् भीमः भीमसेन इतिवत् तस्येयं याज्ञिकी=यज्ञसेनसम्बन्धिनी तनया=पुत्री द्रौपदी यद्वा याज्ञिकी=याज्ञसेनी द्रौपदी असौ हतनया=हतः=भग्नो नयः=नीतिर्यस्यै सा तथा कलिभृत्क्रिया=कलि विवादं राज्यप्रत्यर्पणादिविषयककलह बिभर्तीतिकलिभृत्=दुर्योधनस्तस्य क्रिया=वस्त्राकर्षणादेरूपकर्म यस्यां सा तादृशी सत्यपि कृष्णावता=कृष्णा=द्रौपदी साऽस्त्यस्यासौ कृष्णावान् तेन द्रौपदीपतिनेत्यर्थः धर्मभुवा=धर्मात्मजेन युधिष्ठिरेण धर्म इति शेषः न अत्यवाहि=नात्यक्रामि नातिक्रान्त इत्यर्थः। दुरवग्रहदुष्टनिग्रहाग्रहिले श्रीमनिवासुदेवेऽवतीर्यभूतले विराजमानेऽपि सति दुष्टदुर्योधनेन परिषत्समक्षं द्रौपदीं विवस्त्रीकर्तुं चेष्टिते द्यूतहारितसर्वस्वेन धर्मराजेन तदानीं तद्विरुद्धं किमपि नाचेष्टितमिति भावः। रसः स्वादे जले वीर्ये शृगारादौ विषे द्रवे इत्यनेकार्थसंग्रहः। कृष्णा स्याद्द्रौपदी-नीली-कणा-द्राक्षासु योषिति इति मेदिनी। कलिशूरे विवादेऽन्त्ययुगे युधीति हैमः क्रिया कर्मणि चेष्टायां करणे सम्प्रधारणे,

आरम्भोपाय-शिशा-ऽर्ना-चिकित्सा निष्कृतिर्वपीति विश्वः। 'आरममये' इत्यस्य आरम्=अरिसमूहं मस्यगयने=अभियातीति स नाष्ट्र इति वार्थः ॥ २२ ॥

यो वा-सुयाधननृपः कृपया समेतः, काङ्क्षावशेन मनसा विदधे क्षमा-याः ।

जाताऽत्र तस्य विषमा-न-दशाननस्य, तत्राप्यभाग्यभवनं निरणायि देवैः ॥ २३ ॥

अन्वय —यः सुयोधननृपः कृपयाऽसमेतः काङ्क्षावशेन मनसा याः अक्षमाः ( काङ्क्षावशेन मनसा अक्षमायाः विदधे, वशेन मनसा क्षमायाः राज्ञः, आशेन तेन अमाया राज्ञः ) विदधे तस्य अत्र आननस्य विषमा दशा न जाता ( तत्रापि देवैः अभाग्यभवनं निरणायि । ऋषभादिपक्षे—यः सुयोधननृपः कृपया समेतः काङ्क्षावशेन मनसा याः क्षमाः विदधे तस्यात्र आननस्य दशा विषमा न जाता तत्र देवैः आप्यभाग्यभवनं निरणायि ॥२३॥

व्याख्या—यः सुयोधननृपः=दुर्योधननृपतिः कृपया=अनुग्रहेण असमेतः=रहितः द्यूतपणीकृतं द्वादशसमाः प्रकाशं वर्षमेकञ्चा प्रकाशं वनवासमतीत्यागतपाण्डवविषये तदीयराज्यप्रत्यर्पणानिच्छुतया निर्दयहृदयः इत्यर्थः । काङ्क्षावशेन=लोभपरवशेन 'इन्द्रप्रस्थं कुरुप्रस्थं जयन्तं वारणावतम् । देहि मे चतुरो ग्रामान् पञ्चमं किञ्चिदेव तु' इत्येवं सानुनयमभ्यर्थनेऽपि कृते समग्रराज्यलिप्साविवशेन मनसा=चेतसा याः अक्षमाः=अशान्तीः विदधे=कृतवान् । यद्वा काङ्क्षावशेन=समग्रसाम्राज्यजिघृक्षापरवशेन मनसा अक्षमायाः=पाशकक्रीडनरूपद्यूतानि छलभूतानीत्यर्थः विदधे । अथ वा वशेन मनसा=वशे=आयत्ततायां वशाः=अधीना वा इनाः=नृपतयो यस्य

तादृशेन मनसा क्षमायाः=सर्वभूमेः काङ्क्षा=लिप्सा गर्धेति यावत् विदधे। अथ वा अवशेन=अस्वतन्त्रेण ईर्ष्यापरवशेनेत्यर्थः अप्रशस्तं विरुद्धं=न्यायविरोधि अन्याय्यमिति यावद् वा वशम्=इच्छा यस्य तेन दुर्योधनेन मनसा क्षमायाः=सर्वभूमेः काङ्क्षा विदधे=चक्रे कृता तस्य=दुर्योधनस्य अत्र=अत्युत्कटपाप-पुण्याना मिहैवफलमश्नुते, इति कतिपयैरेव दिवसैः फलप्रत्यक्षीकरणप्रवणाधिकरणे संसरणे (संसारे) आननस्य=मुखस्य विषमा=मानिजनसुदुः सहा दारुणा संकटा वा दशा=अवस्था स्थितिरित्यर्थः न जाता काका जातैवेत्यर्थः। यद्वा विषमानदशा=विषवत्=गरलवत् मानदशा=मानस्य=अहंकारस्य दशा=अवस्था विषतुल्यगर्वाऽवस्थेत्यर्थः जाता=अभूत्। तत्रापि=तस्य तादृगवस्थत्वविषयेऽपि देवैः=अघटितघटन-घटितविघटनपटीयःपाटवपरिपाटीशालिभाग्याधिष्ठातृभिः अभाग्यभवनं=भाग्यराहित्यं दैवाननुकूलत्वं-दैवप्रातिकूल्यमिति यावत् निरणायि=निर्णीतम् निश्चितमित्यर्थः॥ क्षमा क्षान्तौ क्षितौ इति हेमचन्द्रः। वशा वन्ध्या-सुता-योषा-स्त्रीगवी-करिणीषु च। त्रिष्वायत्ते, क्लीबमायत्तत्त्वे चेच्छा-प्रभुत्वयोरिति मेदिनी। तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः। विषमः दारुणे संकटे चेति शब्दस्तोममहानिधिः।

ऋषभादिपक्षे—यः सुयोधननृपः=सुखेन युध्यतेऽसौ सुयोधनः सुयुध् युच् स चासौ नृपः=नाभिराजादिः कृपया=निष्कारणपरदुःखप्रहाणेच्छालक्षणदययासमेतः=सहितः जीवाऽनुकम्पीत्यर्थः काङ्क्षावशेन=मोक्षेच्छाशालिना मनसा याः क्षमाः शान्तीः विदधे तस्य=राज्ञः अत्र आननदशा विषमा-प्रतिकूला न जाता विषये देवैः आप्यभाग्यभवनम्=आप्यं=प्राप्यं यद्भाग्यं=भागधेय तस्य भवनम्=उत्पादनं निरणायि=निश्चितम् भाग्योत्पत्तावेवेदृशी तीर्थकृज्जनकत्व-लोकोत्तरसाम्राज्यादिसम्भवा मुखप्रसन्नावस्थासम्भवतीति भावः ॥ ७३ ॥

वृत्त्या-जितः कुहनया-न-तयाजितः स-पाञ्चालिकामवसनां परिषत्समक्षम् ।
चक्रेऽत्र-पावनविधौ हरिजः प्रमीलां, नश्यत्समस्तसुदृशं च विमोहलीलाम् ॥ २४ ॥

अन्वय कुहनया वृत्त्या जितः तया (ऽनतया) अजित स परिषत्समक्ष पाञ्चालिकाम् अवसना चक्रे, त्रपावनविधौ (अत्र पावनविधौ) हरिजः नश्यत्समस्तसुदृश प्रमीलां विमोहलीला च चक्रे । यद्वा यः अनतया कुहनया जितः स वृत्त्याजितः स परिषत्समक्षं पाञ्चालिकाम् अवसना चक्रे ( तया ... कुहनया भावितः वृत्त्या जितः स पाञ्चालिकाम् अवसनां न चक्रे ) इति विचार्य हरिज अत्र पावनविधौ नश्यत्समस्तसुदृश प्रमीला विमोहलीलां च ... । ...—हरिः अत्र पावनविधौ नश्यत्समस्तसुदृश प्रमीला विमोहलीला च न चक्रे ॥ २४ ॥

व्याख्या— कुहनया=दम्भचर्यालक्षणया वृत्त्या=वर्तनेन जितः=वशीकृतः दाम्भिक इत्यर्थः तया=पुण्येन=पुण्यकर्मणा च न जितः अधार्मिक इत्यर्थः यद्वा नतया=नास्ति तः=गर्वोयस्यां सा नता=अनहंकृतिः नम्रतेत्यर्थः तया अजितः अवशीकृतः उद्धत इति यावत् स=दुर्योधनः परिषत्समक्षं=सभा ( सदा ) प्रत्यक्ष एव पाञ्चालिकां=द्रौपदीम् अवसना=नञोऽल्पार्थकत्वेन आकृष्टबहुतरांशुकांशतया अल्पवस्त्रां नग्नप्रायामिति भावः चक्रे अस्मिंश्च त्रपावनविधौ=त्रपां=लज्जाम्,आवयति=गमयति=प्रापयति ग्राहयति वाऽसौ यद्वा त्रपाया= अवनं=प्राप्तिर्यस्मात्स त्रपावनः=लज्जाजनकः अवतेर्ण्यन्ताच्छुद्धाद्वाल्युः स चासौ विधिः=विधानं तस्मिन् यद्वा अत्र पावनविधौ=अकीर्तिप्रापककर्मणि । वस्त्राकर्षणलक्षणाऽसद्व्यवहारे इत्यर्थः जायमाने हरिजः-जातावेकवचनं युधिष्ठिर-भीमाऽर्जुनाः नश्यत्समस्तसुदृशं= निमीलितसर्वजनलोचना प्रमीलां=अशक्योपायतया नितान्तासह्यदर्शनतया च तन्द्राभावना दृङ्निमीलनमिति यावत् विमोहलीलां=

मूढ़भावं च चक्रे। कुहना दम्भचर्यायामिति. तश्चौरा–मृत–पृच्छेषु क्रोडे म्लेच्छे च कुत्रचित् अपुमांस्तरणे पुण्ये कथितः शब्दवेदिभिः इति च मेदिनी. तकारश्चौर्य–गर्वयोरित्येकाक्षरकोशः। तत्सादृश्यमभावश्च तदल्पत्वं तदन्यता. अप्राशस्त्यं विरोधश्च नञर्थाः षट्प्रकीर्तिताः। अथ वा यः नरः अनतया=सञ्जया तया=प्रसिद्धया कुहनया=दम्भचर्यया=लोभान्मिथ्येर्यापथसंपादनयेत्यर्थः अर्थलिप्सया मिथ्याधर्माश्रयणेनेति यावत् जितः=वशीकृतः सः नरः वृत्त्याजितः=वृत् वर्त्तनं=चिरस्थितिर्जीवनोपायो वा तेन त्याजितः=परिहापितः स्यात्। स परिषत्समक्षं=जनतासमक्षं पाञ्चालिका=पुत्रिकांवस्त्र–दन्तादिरचितपुत्तलिकाम् अवसनां–नग्नां चक्रे सनरः व्यर्थप्रयास इत्यर्थः धनवत्त्वेऽप्यधनत्वमिति भावः।

यद्वा तया—प्रतीत्या न कुहनया–दम्भचर्यया सम्पादितयेति शेषः दम्भरहितयेत्यर्थः आजितः संग्रामात् वृत्त्या=आजीविकया जितः स पाञ्चालिकामवसना न चक्रे नकारस्योभयत्रयोगात् सफलप्रयासोऽयं पुरुषः इति विचार्य हरिजः इन्द्रजोऽर्जुनः यद्वा हरिः= अनिलस्तस्माज्जातो भीमसेनः अथ वा हरिः–यमः तज्जातो युधिष्ठिरः अत्र–अस्मिन् पावनविधौ–न्यायकार्ये नश्यत्समस्तसुदृशः नश्यन्त्यः–अनिमिषन्त्यः समस्ताः समस्तानां वा सुदृशः नेत्राणि यस्यां सा तां तादृशीं प्रमीलां–तन्द्रां विमोहलीला–मूढ़भावं च चक्रे। कुहनालोभान्मिथ्येर्यापथकल्पनेत्यमरः। पाञ्चालिका पुत्रिकास्याद्वस्त्रदन्तादिभिः कृतेति चामरः। यमा–ऽनिले–न्द्र–चन्द्रा–ऽर्क–विष्णुसिंहां–ऽशु—वाजिषु। शुका–ऽहि–कपि–भेकेषु हरिर्नाकपिलेत्रिषु इति. तन्द्री प्रमीला इति चामरः।

अन्यपक्षेषु–हरिः–सूर्यः–सूर्ययशा भरतचक्रीवर्तिसुतस्तस्माज्जातः हरिजः–ऋषभप्रपौत्रः। अथ वा हरिजः–हरिः–हरिवंशः नामैकदेश

ग्रहणे नामग्रहणात् पदैकदेशे पदसमुदायोपचाराद्वा हरिवंशे=सूर्यवंशे इक्ष्वाकुवंशे इत्यर्थः जातः नाभिः विश्वसेनः अश्वसेनः सिद्धार्थराजो दशरथश्च, तथा हरिवंशे-यादवकुले जातः समुद्रविजयो वसुदेवश्च अत्रपंस्पष्टम् यथा तथाऽवनविधौ-जीवरक्षाकरणे नश्यत्समस्तसुदृशं प्रमीलां-तन्द्रां प्रमादमिति भावः विमोहलीलां मूढभावमविवेकित्वमिति यावत् च न चक्रे ॥ २४ ॥

साम्ना प्रभावितरणेन विभेदनेन, नो वश्यतामुपगता नरपाः क्षितिं ते ।
प्रापुः स्वतस्तुरगहस्तिरथाद्यभावैः, स्वापुण्यलब्धजननाज्जननादयोग्याम् ॥ २५ ॥

अन्वय—ये नरपाः साम्ना प्रभावितरणेन विभेदनेन वश्यता नो उपगता ते तुरगहस्तिरथाद्यभावैः स्वापुण्यलब्धजननात् जननादयोग्या क्षितिं प्रापुः । अथवा ये नरपाः साम्ना प्रभावितरणेन विभेदनेन वश्यामुपगताः ते तुरगहस्तिरथाद्यभावैः ( सह ) स्वापुण्यलब्धजननात् जननादयोग्यां क्षितिं स्वतः नो प्रापुः ॥ २५ ॥

व्याख्या—ये नरपाः-सुयोधनादयस्तत्पक्षवर्तिनोऽन्ये च नृपाः साम्ना-परस्परोपकारप्रदर्शनादिना पञ्चविधेन सान्त्वेन प्रभावितरणेन-प्रतिदानादिना पञ्चविधेन दानेन-विभेदनेन-भेदेन स्नेहरागापनयनादिना त्रिविधेनोपजापेन इत्येतदुपायत्रितयेन यदा वश्यताम्-वशवर्तितां विधेयतामित्यर्थः अनुकूलतामिति यावत् नो-नैव उपगताः तदा ते प्रतीपावनिपाः तुरगहस्तिरथाद्यभावैः-अश्वगज-रथाद्यायोधनसाधनविनाभावेन. द्वन्द्वान्तेश्रूयमाणस्य रथशब्दस्य तुरग-हस्तिभ्यां संबन्धेन अश्वरथ-गजरथादीनां राहित्येनेत्यर्थः तन्त्रेणावृत्या वोक्त.पदम्योभयार्थपरताविदेलिमा। स्वापुण्यलब्धजननात्-जननादयोग्यां=जननादः=जनरवः कौलीनमित्यर्थः लोकापवाद इति यावत् तस्य योग्यां=तदर्हाम् क्षितिं=क्षयं=नाशमित्यर्थः यद्वा क्षितिं-भूमिं स्वतः=स्वयमेव प्रापुः=लेभिरे पञ्चत्वमापन्ना इत्यर्थः

भूमिलाभस्यापि लोकेशास्त्रे च मरणवाचित्वेन प्रसिद्धिः तथा च भूमिं प्रापुरित्यस्य मृता इत्यर्थः ॥ यद्वा सामाद्युपायत्रितयेन ये राजानो वश्यतामुपगतास्ते तुरग–हस्तिरथादीनामभावैः सहैव स्वापुण्यलब्धजननात्=जननादयोग्यां क्षितिं=क्षयं नो प्रापुः । अथवा ये सामादित्रिकेण वशवर्त्तितामुपगतास्ते तुरग–हस्ति–रथाद्यानां भावैः=सद्भावैरुदयैर्वा सह स्वापुण्यलब्धजननात्=जननादयोग्यां=जननादः=साधुवादः–धन्यवादलक्षणलोकवादस्तद्योग्या=तदर्हां क्षितिं=निजगेहं स्वभुवं=निजशास्त्रराष्ट्रमिति भावः नो प्रापुः काका प्रापुरेवेत्यर्थः अन्यपक्षेऽप्ययमर्थः साधारणतयैव प्रतिभाति केवलं 'ये नरपाः'=इत्यस्य 'श्रीविश्वसेनादिराजानां ये प्रत्यर्थिपृथ्वीपतयः' इत्यर्थो विदेलिमः । अत्र प्रसङ्गात् सामादिभेदा उच्यन्ते । 'परस्परोपकाराणां दर्शनं गुणकीर्त्तनम् । सम्बन्धस्य समाख्यानमायत्या संप्रकाशनम् ॥ वाचां पेशलया साधुस्तवाहमिति चार्पणम् । इति साम विधानज्ञैः सामपञ्चविधं स्मृतम्' ॥ प्रतिदानं तथा तस्य गृहीतस्यानुमोचनम् । द्रव्यादानमपूर्वं च स्वयंग्राहप्रवर्तनम् देयस्यप्रतिमोक्षश्च दानं पञ्चविधं स्मृतम् ॥ स्नेहरागापनयनं संहर्षोत्पादनं तथा । संतर्जनं च भेदज्ञैर्भेदस्तु त्रिविधः स्मृतः ॥ क्षितिर्गेहे भुवि क्षये इति हैमः ॥ पुंस्यादिः पूर्व–पौरस्त्य–प्रथमा–ऽऽद्याः इत्यमरः ॥ २५ ॥

**सोऽयं प्रभावविभवस्तव वास्तवोऽभू–दित्याह मागधगणः प्रभया प्रभाते ।**
**नान्यायवर्तनमनास्तु मनाग् जनोघ–स्त्वच्छासने नरपते ! भुवि वर्तमाने ॥ २६ ॥**

अन्वय.—हे नरपते ! प्रभया प्रभाते त्वच्छासने भुवि वर्तमाने जनौघ मनाक् तु अन्यायवर्त्तनमनाः न ( अस्ति ) सोऽयं तव वास्तव' प्रभावविभव' अभूत् इति मागधगण आह ॥ २६ ॥

व्याख्या—हे नृपते !=युधिष्ठिरमहाराज ! पक्षे विश्वसेनादिनृपते ! प्रभया=प्रभावादिजनितदीप्त्या प्रभाते=भातुं प्रवृत्ते तवच्छासने=तव शास्तिकर्मणि भुवि=भूतले वर्त्तमाने=विद्यमाने सति जनौघः=लोकसमूहः मनाक्=अल्पम् तु=अपि अन्यायवर्त्तनमनाः=अन्यायेन=असमञ्जस-अनुचित-विधिना अनीत्या वा वर्तने=आजीविकाकरणे यद्वा अन्याये=असमञ्जसे अन्याय्ये. इत्यर्थः अनुचिते इति यावत् वर्तने जीवनोपाये मनो यस्य स तादृशः न अस्तीति शेषः सोऽयं वास्तवः=यथार्थः तव=भवतः=प्रभावविभवः=प्रतापमहिमाऽभूत् इति मागधगणः=वन्दिजनसमूहः आह ॥ २६ ॥

भीष्मोऽग्रतो-यमविधिः स्वगुरोरनिष्टः, कृष्णालकग्रहणकर्म सभासमक्षम् ।
वैराग्यहेतुरभवद् भविनो न कस्य, दैवस्य वश्यमखिलं यदवश्यभावि ॥ २७ ॥

अन्वयः—स्वगुरोरनिष्टः अग्रतः ( स्वगुरोरग्रतः अनिष्टः ) भीष्मः सभासमक्षं कृष्णालकग्रहणकर्म अयमविधिः कस्य भविनो वैराग्यहेतुर्नाऽभवत् यत् अवश्यभावि तत् अखिलं दैवस्य वश्यम्। कौरवादिपक्षेषु—स्वगुरोरनिष्टः अग्रतः भीष्मः सभासमक्षं कृष्णालकग्रहणकर्म यमविधिः कस्य भविनः वैराग्यहेतुर्नाभवत् ॥ २७ ॥

व्याख्या—पाण्डवपक्षे-स्वगुरोः=( स्वस्य=आत्मनो गुरोः=पितुः ) निजजनकस्य धृतराष्ट्रस्य यद्वा स्वगुरोः=स्वोपदेष्टुर्द्रोणाचार्यादेः स्वगुरुजनस्य=भीष्मादेर्वाऽपि अनिष्टः=अनभीप्सितः अप्रिय इति यावत् अग्रतः=पत्यादिबन्धुजनानां पुरत एव यद्वा स्वगुरोः=स्वपत्यु-

युधिष्ठिरादेः अग्रतः=पुरस्तादेव अनिष्टः=अत्यन्ताप्रियः भीष्मः=दारुणः असह्यतमः सभासमक्षं=परिषत्प्रत्यक्षे कृष्णालकग्रहणकर्म=द्रौपदीकेशाकर्षणव्यापाररूपः अयम् अविधिः=अप्रशस्त–गर्हित–विधानं कस्य भविनः भावुकजनस्य वैराग्यहेतुः=विशिष्टो रागः=मात्सर्यं विरागः स एव वैराग्यं=अत्यन्तमात्सर्यम् (स्वार्थेष्यञ्) यद्वा विगतो रागः=अनुरागः स्नेहो यस्य स विरागस्तस्य भावो वैराग्यं=(दुर्योधनविषये) स्नेहरहितीभावः (स्नेहराहित्य) तस्य हेतुः=कारण नाऽभवत् सर्वस्यैवाऽभवदित्यर्थः । 'भीष्मोदितो–यमविधिः' इति पाठे भीष्मम्=दारुणं दुःसहमित्यर्थ उदितम्=उदय उक्तिर्वा यत्र स इति भीष्मेण=शान्तनुपुत्रेण कौरव–पाण्डवपितामहेनेत्यर्थः उदितः=कथित इति वा भीष्मोदितः । अन्यपक्षे–भीष्मः=दारुणः अदितः=अखण्डित इत्यर्थो बोध्यः । यत्=घटनादिकम् अवश्यभावि=निश्चितभवितव्यताकं तत्सर्वं दैवस्य=अदृष्टस्य वश्यम्=अधीनम् । अवश्यंभाविभावानामप्रतीकार्यत्वात् ।

ऋषभ–शान्ति–राम–कृष्णपक्षेपु–स्वगुरोः=पित्रादिस्वगुरुजनस्य अनिष्टः–अप्रियः भीष्मः=दारुणः अग्रतः=पुरा=यौवराज्यकाल एवेत्यर्थः सभासमक्षं कृष्णालकग्रहणकर्म=रलयोरेकत्वस्मरणात् कृष्णं=श्यामं पराजयजन्यदैन्यमलीमसमित्यर्थः यत् आलकम्=आरकम्=अरीणां समूह आरं तदेवारकं तस्य ग्रहणकर्म्म=निग्रहव्यापार इत्ययम् अविधिः=अनुचिताचरणं यद्वा यमविधिः=यमस्य=दण्डधरस्येव विधानं कस्यभविनः=दुष्टनिग्रहाकाङ्क्षिणो जनस्य वैराग्यहेतुः=विशिष्टो रागः=अनुरागः स्नेहः विरागः स एव वैराग्यं तस्य हेतुर्नाभवत् । दैवस्येत्यादिपूर्ववत् ।

नेमि–पार्श्ववीरपक्षेपु–स्वगुरोरनिष्टः भीष्मः=दुष्करत्वाद्दारुणः अग्रतः=प्रथममेव वार्द्धक्यावस्थाप्राप्तितः पूर्वमेवेत्यर्थः नेमि–पार्श्व-

पक्षयोस्तु स्वगुरोः=स्वपितुः अग्रतः=अग्रे एव अत एव अनिष्टः=स्वपितुरप्रियश्चेति विशेषः । महावीरपक्षे तु स्वगुरोः=स्वज्येष्ठभ्रातुः अग्रतः=अत एव । यमविधिः=अहिंसादिपञ्चमहाव्रतविधानं संयमधारणमित्यर्थः दीक्षाग्रहणमिति यावत् सभासमक्षं=गोष्ठीसांमुख्य एव कृष्णालकग्रहणकर्म=कृष्णाना–तारुण्यविजृम्भितश्यामलिमशालिनाम् अलकाना=निजशिरःकेशानां ग्रहणकर्म–पञ्चमुष्टिलोचकर्म न कस्य भविनः–विवेकिजनस्य वैराग्यहेतुः–विगतो रागः–स्रक्–चन्दन–वनितादिविषयेष्वभिषङ्गो येषां ते विरागास्तेषां भावः कर्म वा वैराग्यं तस्य हेतुर्नाभवत् सर्वस्यैवाभवदित्यर्थः । महेन्द्रमहैश्वर्यातिशायिसाम्राज्यशालिकुलसंभवोऽप्येष साम्राज्यविजृम्भितानुपमभोगसमुदयजातं तृणमिव निरस्य राजकुमारादिसुदुष्कराऽरुष्करमुष्टिपञ्चकमितकेशलुञ्चनपूर्वकं दीक्षाग्रहणमकरोत् इति धिङ् न आपातरमणीयपर्यन्तपरितापिविविध कटुविषयाटवीलग्नदावानलविस्मरशिखावलीविकलितचेतस्कान् इत्येवं सर्वस्यैव वैराग्यं प्रादुरभूत् । शेषं पूर्ववत् ऋषभ-शान्त्योरप्ययमर्थो विदंलिमः । अहिंसा सत्यवचनं ब्रह्मचर्यमकल्कता । अस्तेयमिति पञ्चैते यमाख्यानि व्रतानि च' । रागस्तु मात्सर्ये लोहितादिषु. क्लेशादावनुरागे च गान्धारादौ नृपेऽपि चेति मेदिनी ।

श्रीरामपक्षेऽपीत्थंविधोऽप्यर्थः सम्भवति तथाहि—स्वगुरोः–स्वपितुर्दशरथस्य अग्रतः अनिष्टः–अत्यन्ताप्रियः भीष्मः–अतिसुकुमारराजकुमार ( राम ) दुष्करतया पुत्रवियोगजन्यशोकातिरेकसंभावितराजमरणहेतुना वा सुदारुणः यमविधिः–संयमग्रहणं चतुर्दशवर्षावधिकृतापसव्रतधारणमिति यावत् तथा सभासमक्षं–सर्वसमक्षमित्यर्थः कृष्णालकग्रहणकर्म–कृष्णानां–भृङ्गवदतिश्यामलानाम् अलकानां=चूर्णकुन्तलाना ग्रहणकर्म–तापसधार्यजटावत्संहत्यबन्धनमित्यर्थः कस्य भविनः–सहृदयहृदयस्य वैराग्यहेतुः–विषयरागराहित्यकारणं केकयिविषयकस्नेहराहित्यकारणं वा नाभवत् सर्वस्यैवाभूदित्यर्थः ॥ २७ ॥

भीमेऽपि पश्यति सुरे यदि-वा-नरेऽपि, नम्रत्वमाश्रयदहीनकुले कुलीने ।
वन्यव्रताचरणतः सह–देव एव, राजापि मौनमदधाद् धृतधर्मजन्मा ॥ २८ ॥

अन्वय.—अहीनकुले कुलीने सुरे पश्यति भीमे यदि वा नरे सहदेवे अपि नकुले च नम्रत्वम् आश्रयत् धृतधर्म्मजन्मा राजापि वन्यव्रताचरणत मौनमदधात्। ऋषभादिपक्षे–धृतधर्मजन्मा देव, राजापि भीमेऽपि पश्यति सुरे यदि वा नरे रामपक्षे यदि वानरे अहीनकुले कुलीने नम्रत्वमाश्रयत वन्यव्रताचरणत सह मौनमदधात् ॥ २८ ॥

व्याख्या–पाण्डवपक्षे–अहीनकुले=महाकुलसंभवे कुलीने=सज्जने भूमिस्थिते वा निर्वासितत्वात्. सुरे=पण्डिते विवेकिनि पश्यति=सर्वसमक्षं संवृत्तघटनां साम्राज्यहरण–द्रौपदीकेशाऽशुकाकर्षण–द्वादशवर्षावधिकप्रकाशवनवास–वर्षैकावधिकगुप्तवासादिरूपा साक्षात्कुर्वति भीमे=वृकोदरे भीमसेने इति यावत् यदि वा नरे=अर्जुने देवे=सहदेवे नामैकदेशग्रहणे नामग्रहणात् अपि शब्दसंगृहीते नकुले च नम्रत्वं= विनम्रभावः नम्रतेति यावत् आश्रयत्=अवालम्बत न ते व्यक्रियन्तेति भावः तदनु धृतधर्मजन्मा=धृतं=गृहीतं धर्मात्=यमात् जन्म येन स धर्मात्मजो युधिष्ठिरः राजाऽपि वन्यव्रताचरणतः=वन्यानां=वनेवासितपस्विनां व्रतस्य=नियमस्य आचरणतः=सार्वविभक्तिकस्तसिः आचरणेनेत्यर्थः यद्वा वनेभवानि वन्यानि तैर्व्रताचरणं=भोजनक्रियासम्पादनं तेनेति ततः सह=सार्द्ध मौनं मुनित्वं दधौ ।

ऋषभ–नेमि–पार्श्व–वीरपक्षे–धृतधर्मजन्मा–धृतं=गृहीतं धर्मरूप जन्म येन सः यद्वा धृतं धर्माय=पुण्याचरणाय जन्म येन सः देवः=ऋषभदेवः नेमिः पार्श्वनाथः वर्द्धमानश्च भीमे=रौद्रेऽपि पश्यति सुरे देवे यदि वा नरे=मानवे अहीनकुले=महोच्चकुलजे कुलीने=

कूलवति भूमिस्थिते वा नम्रत्वम् आश्रयत् किञ्च राजापि वन्यव्रताचरणतः=वनिनां=वननायकानां भिल्लादीनाम् अव्रताचरणतः=भोजनाभावात् मौनं मुनित्वं अदधात=अपुष्यत् ।

शान्तिपक्षे कृष्णपक्षे—भीमेऽपि पश्यति सुरे अहीनकुले यदि वा कुलीने नरे नम्रत्वं=नम्रभावः आश्रयत् नम्रताऽऽश्रितेत्यर्थः धृतधर्मजन्मा=गृहीतपुण्यार्थजनुः धृतं धर्माय=न्यायाय जन्म येन स इति वा देवः=श्रीशान्तिनाथप्रभुः=राजापि=प्राज्यसाम्राज्यसंजातगानजातानुभवितापीतिभावः वन्यव्रताचरणतः=वानप्रस्थाचर्यनियमात् मौनं धर्मम् अदधात् ।

रामपक्षे—धृतधर्मजन्मा=गृहीतन्यायावतारः देवः=बलदेवः श्रीरामचन्द्रः राजापि=क्षणकतिपयाऽनन्तरमेव सम्भावितराज्याभिषेकोऽपि वन्यव्रताचरणतः वन्यः=वनभवः कन्द-फलादिभिर्व्रताचरणतः=अशनक्रियानिष्पादनेन सह मौनं=मुनित्वं तापसत्वमदधात् भीमेऽपि पश्यति सुरे यदि=अथ वा वानरे अहीनकुले ऽकुलीने वा नम्रत्वं आश्रीय वासुदेवधृतधर्मजन्मा=गृहीतधर्मावतारः देवः राजापि ॥ २८ ॥

प्राप्तं जयाढ्यविजयैः किमुदारनीत्या, निर्मीयमाणसुकृतैस्तु युगं कृतं तत् ।
लोकैः पथश्च कलितश्चलितं न किञ्चि-न्नातिक्रमः स्खलितमीश्वरराज्ययोगे ॥ २९ ॥

अन्वयः—जयाढ्यविजयैः उदारनीत्या निर्मीयमाणसुकृतैः तत् युगं कृतं प्राप्तं किमु ( यतः जयाढ्यविजयैः निर्मीयमाणसुकृतैश्च ) लोकैः पथः किञ्चित् न चलितं, अपि तु कलितः ( चलितमपि ) लोकैः पथ कलित किञ्चित् न चलितम् । ( यतः ) ईश्वरराज्ययोगे अतिक्रम स्खलित ( च न) लोकानामिति ॥ २९ ॥

व्याख्या—जयाढ्यविजयैः=जयसंवलितविजयैः उदारनीत्या=असाधारणनीत्या दातृनीत्या वा निर्म्मीयमाणसुकृतैः=विधीयमानपुण्यकार्यैश्च साधनैः; तत् कृतं युगं=सत्ययुगं प्राप्तं किम्? यतः ( जयाढ्यविजयैः=जयसहितविजयशालिभिः, निर्मीयमाणसुकृतैः=पुण्यकार्यविधायिभिः ) लोकैः पथः=सन्मार्गात् किञ्चित्=अल्पमपि न चलितं=स्खलितम् नापि कलितः=कलिना=कलहेन क्लेशेन वा कलियुगेन वा चालितैरभावीति शेषः यद्वा लोकैः=जनैः पथः=सन्मार्गः कलितः=गृहीतः आश्रितः ततश्च किञ्चित्=मनागपि न चलितम्। युक्तं चैतत् यतः ईश्वरराज्ययोगे=अतिक्रमः=धर्माद्युल्लङ्घनम् क्रम-परिपाटी-समुल्लङ्घनं वास्खलितं=स्खलनं=कूटयुद्धादौ प्रवृत्त्या वीरमर्यादातः पतनं मर्यादाभ्रंशो वा सन्मार्गादिश्चलनं वाऽपि न अजनि लोकेषु। वर्त्म-मार्गा-ऽध्व-पन्थानः पदवी सृतिरित्यमरः। पथ इत्यकारान्तत्वे च 'वाटः पथश्च मार्गश्चे'तित्रिकाण्डशेषः प्रमाणम् ॥ २९ ॥

धर्मात्मनाप्यवनलीनतया वनानि, संसेविरे विहितकैतवसेवनेन।
मात्रासमं द्रुपदजातिशये-न शीता-संतापमाप हत-कीचकनीचवृत्त्या ॥ ३० ॥

अन्वय—विहितकैतवसेवनेन धर्मात्मना आप्यवनलीनतया वनानि ससेविरे. अतिशयेन शीता द्रुपदजा हतकीचकनीचवृत्त्या। मात्राऽसमसन्तापमाप। ऋषभादिपक्षेपु—विहितकैतवसेवनेन धर्मात्मना आप्यवनलीनतया ( अवनलीनतया च ) वनानि ( अवनानिच ) ससेविरे द्रुपदजातिशयेन कीचकनीचवृत्त्या च मात्रासम शीताऽऽसन्तापमाप हत ॥ ३० ॥

व्याख्या—विहितकैतवसेवनेन=विहित=कृतं क्षात्रधर्मानुरोधेन द्यूतक्रीडनार्थमाह्वाने कैतवस्य=द्यूतस्य सेवनं येन सः तेन, आहितो.

न निवर्तन द्यूतादपि रणादपीत्युक्ते रणार्थं द्यूतार्थं वाऽऽहूतेन क्षत्रियेण रणद्यूतविधानस्य च क्षात्रधर्मोचितत्वात् । धर्मात्मना=धर्मे=पुण्ये आचारे वा न्याये वा आत्मा=बुद्धिश्चित्तं वा यस्य तेन धर्मात्मजेन युधिष्ठिरेण आप्यवनलीनतया=आप्या=स्वीकृता वनवास-गुप्तवास-रूपद्यूतपणनिर्वाहार्थं प्राप्यावने=द्वैतवने या लीनता=श्लिष्टता आश्रयाश्रयिभावेन सम्बद्धता निवसतिरित्यर्थः निवास इति यावत् तया हेतुना वनानि-द्वैतवनानि संसेविरे-निषेवितानि । तदनु कदाचित् गुप्तवासयापनीयवर्षावधिककालाभ्यन्तरे विराटगृहे पाण्डवैः साकं निवसन्ती द्रुपदजा-द्रौपदी हतकीचकनीचवृत्त्या-हतस्य-दुर्विदग्धस्य कीचकस्य-तदाख्यस्य विराटराजश्यालकस्य द्रौपदीरूपदर्शनच-लितनेतसमन्दर्पणार्थं चेष्टमानस्य नीचवृत्त्या-सुरतप्रार्थनालक्षणाऽसदाचरणेन मात्रामम-प्रमाणेनातुल्यम् अतिमात्रमित्यर्थः सन्तापं-खेदमाप-लेभे पतिव्रतात्वात् सा कीदृशी? अतिशयेन सीता-अतिशयेन-अतिमात्रम् इने पत्यौ पाण्डवे शीता-अनुष्णा अतीक्ष्णा इति या शान्तप्रकृतिकेत्यर्थः । यद्वा सीता-सीता इवेति लुप्तोपमा । अतिशयेनेत्यस्य आपेति क्रिययान्वयः ।

ऋषभ-नेमि-पार्श्व-वीरपक्षेषु—विहितकैतवसेवनेन-हितं-मित्रादि कैतवं-छलं द्यूतं वा यद्वा कैतवः-शत्रुः तयोस्सेवनं-भजनं सम्बन्ध इतिभावः विगतं हित-कैतवसेवनं यस्मात् सः तेन राग-द्वेषविनिर्मुक्तेनेत्यर्थः । धर्मात्मना-पुण्यशीलेन जिनदेवेन आप्यवन-लीनतया-तपश्चरणार्थं प्राप्यवननिवासतया यद्वा अवनलीनतया-जीवरक्षणपरायणतया हेतुना वनानि-तपोवनानि अवनानि-जीवर-क्षणकर्माणि वा संसेविरे-भेजिरे ।

अत एव द्रुपदजातिशयेन=द्रूणां=वृक्षाणां पदं=स्थानं द्रुपदं=वनं तत्र जातोऽतिशयः=शयनं तेन यथा कीचकनीचवृत्त्या=कीच-

कानां=वशानां कीचकेषु वा नीचवृत्त्या=निम्नावस्थित्या च वंशाधोऽवस्थाने नेत्यर्थः मात्रासमं=प्रमाणेनाऽतुल्यं यथास्यात्तथा शीतासन्तापं=शीतं च आसन्तापश्चाऽनयोः समाहारः हेमन्तादित्रिके शैत्यं ग्रीष्मादित्रिके औष्ण्यं च आप=प्रापेत्यर्थः । हत इति कोमलामन्त्रणे ।

शान्तिनाथ-कृष्णवासुदेवपक्षे-धर्मात्मना=धर्मे=धनुषि न्याये वा आत्मा=मनो यस्य स तेन अत एव विहितकैतवसेवनेन=विहितं कैतवैः=रिपुभिरपि सेवन यस्य स तेन विशिष्टं हित-कैतवयोः=मित्रशत्र्वोः सेवनं यस्मिन् स तेनेति वा अवनलीनतया=जगद्रक्षणपरायणतयाऽवनानि=रक्षाकर्माणि संसेविरे=आश्रितानि ।

श्रीरामपक्षे धर्मात्मना=धर्मे=शिष्टाचारे आत्मा=मनो यस्य तेन मर्यादापुरुषोत्तमेन विहितकैतवसेवनेन=विगतं हिते=जगदिष्टसाधने कैतवस्य=छलस्य सेवन यस्मादिति. विशेषेण हितं=गतं कैतवस्य=छलस्य सेवनं यस्मादिति. विशेषेण हितं=गतं कैतवस्य=छलस्य द्यूतस्य वा सेवनं यस्मादिति वा. विहितं कैतवेन=रिपुणा=क्षणकतिपयशात्रवीभूतेन परशुरामेण शत्रुपक्षीयेण रावणानुजबिभीषणेन सेवनं=भक्तिभावो यस्य स तेन तथाविधेन श्रीरामबलदेवेन आप्यवनलीनतया=आप्या=समासाद्या वने या लीनता=चतुर्दशवर्षावधिकनिवसतिस्तया हेतुना वनानि=दण्डकारण्यानि संसेविरे । अथ शीता=श्रीराममनुगच्छन्ती जानकी द्रुपदजातिशयेन=वनस्थलीशयनेन कदाचित् कीचकनीचवृत्त्या=वंशाधोऽस्थित्या मात्रा समं=प्रमाणेनातुल्यम् अतिमात्रं सन्तापं=खेदम् आप=आससाद प्राप्तवतीत्यर्थः । कैतवं द्यूत-दम्भयोः । कैतवः कितवे शत्रौ इति हैमः । शीता नभस्सरिति लांगलपद्धतौ च सीता दशाननरिपोः सहधर्मिणी चेति तालव्यादौ धरणिः । कीचको दैत्यभिद्-वाताहतिसस्वनवंशयोः, विराटराजश्याले चेति शब्दार्णवः ॥ ३० ॥

नारायणः पशुधियो क्रुतकं स नाशा-न्नासादयन्नगवनभ्रमणेन दुःखम् ॥
भ्रंशेन पैतृकपदस्य दशामशासीद्, वारांनिधेश्च सविधेशरणे हरीणाम् ॥ ३१ ॥

अन्वय —नारायण. नाशात् स पशुधिया उपलक्षित· नगवनभ्रमणेन कृतक दु ख नामादयत पैतृकपदस्य भ्रंशेन वारानिधे सविधे हरीणां शरणे दशामशासीत्। रामपक्षे—स नारायणः कृतक पशुधिया नाशात् नगनवनभ्रमणे दुख नामादयत इति च न पैतृकपदस्य भ्रंशेन वारानिधे. पूर्ववत् ॥३१॥

व्याख्या-नारायणः=नृणां समूहो नार तत् अयते=जानाति इति नारम् आययति=प्रवर्त्तयति स्वेष्टकर्मणीति वा नुः इदं नारम्=अज्ञान तत् आपयति=गमयति निवर्तयतीति वा सः । नाशात्=न आशां=लोभं परिग्रहविषयकम् अततीति सः नाऽऽशात् नैकधेत्यादाविवेहापि नञतिरिक्तनशब्दसद्भावान्नलोपाभावः सः=ऋषभः पशुधिया=मम्यग्बुद्ध्या उपलक्षितः अतएव नगवनभ्रमणेन=पर्वत=काननप्रभृतिषु विहरणेन कृतकं=कृत्रिम दुःखं न आमादयत् न प्राप्तवान् किञ्च पैतृकपदस्य=कुलपरम्परागतराजपदलक्षणपितृसम्बन्धिस्थानस्य भ्रंशेन=अधःपातनेन अवहेलनेन परित्यागेनेति यावत् वारांनिधेः=समुद्रस्य सविधे=समीपदेशे हरीणां=सिंहाना शरणे=आश्रयस्थाने वने इति यावत् दशां=चरमावस्थाम् अशासीत्=तपश्चर्यया तनूकरोतिस्मेत्यर्थः प्रापयामासेति यावत् ॥

श्रीरामपक्षे—सः=प्रसिद्धः नारायणः=नारायण इव विष्णुसदृश इत्यर्थः श्रीरामबलदेवः कृतकं=कृत्रिमं मायया हेममृगरूपधारिणं मारीचमिति यावत् पशुधिया=मृगलक्षणः पशुरयमिति बुद्ध्यैवेत्यर्थः न अशात्=अशातयत् इति नगवनभ्रमणे=रावणाऽपहृतसीतान्वे-

षणार्थं गिरिकाननेषु भ्रमणे तज्जन्यमित्यर्थः दुख=खेदं नासादयत् इति च न किन्तु अशादेव दुःखमासादेवेत्यर्थः। पैतृकपदस्य पितृ-सम्बन्धिराजपदस्य भ्रंशेन=कैकेयीवचनपरवशेन राज्ञा दशरथेन भरताय राज्यं दत्त्वा गमश्च वनवासार्थं पित्राज्ञप्ततया सामाज्यपदस्य राहित्येन वारांनिधेः=समुद्रस्य सविधे हरीणां=वानराणां सुग्रीवादीना शरणे=गृहे स्थाने इति यावत् दशां=किञ्चित्कालिकस्थितिम् अशामीत्। शब्दशक्तिमहिम्ना रामपक्षीयोऽर्थः प्रदर्शितो न तु स पक्ष इहाश्रयणीयः श्री कौशलाधिपतिनेत्यादि चतुस्त्रिंत्तमश्लोके तदर्थस्य स्पष्टमभिहितत्वात् ॥ ३१ ॥

कालोऽप्यमुष्य चरणेऽनुचरोदयेच्छु-र्देव्या-नले-न निहतश्छलमाकलय्य ।
तन्मानवो भजतु कोऽपि नवोदयाघं,क्रीडारसेऽभ्यसनतो व्यसनासनानि ॥ ३२ ॥

अन्वय —कालोऽपि अमुष्यचरणे अनुचरोदयेच्छु देव्या अनले न निहत. छलम् आकलय्य क्रीडारसे अभ्यसनत व्यसनासनानि नवः कोऽपि नवोदयाघम् तत माभजतु ॥ ३२ ॥

व्याख्या—कालोऽपि समयोऽपि अमुष्य जिनेन्द्रस्य चरणे चारित्र्ये अथवा चरणे पदे अनुचरोदयेच्छुः अनुचरस्य सेवकस्य य उदयः समृद्धिस्तदिच्छुस्तदभिलाषुकः देव्या देवाङ्गनया अप्सरसा अथवा देव्या देवमायया रचितम् उद्भावितमिति शेषः छलम् कपटम् आकलय्य बुद्ध्वाविमृश्येति यावत् अनले अग्नौ यथा वह्निः सर्वं भस्मसात् करोति स्पृष्टस्तथा मामप्ययं कुर्यादिति न निहतः न प्रयोजितः निवृत्तिमकरोदिति भावः क्रीडारसे खेलारसे अभ्यसनतः अभ्यासात् व्यसनासनानि व्यसने दुराग्रहे आसनम् उपवेशनम् तदभिनिवेशः

नानि नवोदयाघम् नवोदयः अघः पापम् यत्र तद्यथास्यात्तथा नवः नूतनः कोऽपि मा भजतु न सेवताम् नास्मिन् प्रसक्तो भवत्विति भावः ॥

अन्यपक्षेऽप्येवमेवेति ॥ अथ च अमुष्य नलस्य चरणे आचरणे अनुचरोदयेच्छुः अनुचरस्य किंकरस्य दासस्येत्यर्थः य उदयः प्राप्तिः दासभावनाम् तदिच्छुः अथ राज्याद् भ्रष्टो दासतां भजेदित्यभिलाषुकः कालः कलियुगः देव्या दिव्यते इति देवी भावेऽप् गौरादित्वान्ङीप् तया देव्या देवनक्रियया द्यूतव्यापारेण छलम् कपटम् आकलय्य अभिसन्धाय आश्रित्येत्यर्थः नले नैषधनृपे न निहितः छल इति शेष इति न किन्तु निहित एवेति काका व्यज्यते नले द्यूतव्याजेन कपटो निहित इति भावः तस्मात् तत्कारणात् कोऽपि मानवः नवोदयायं अभिनवसमृद्धकिल्बिषं माभजतु मासेवताम् तथाहि क्रीडारसे क्रीडनकौतुके अभ्यसनतः अभ्यासात् पौनःपौन्येनासेवनात् व्यसनासनानि व्यसनस्य विपत्तेः आसनानि उपवेशनानि स्थापनानीति यावत् विपत्तिप्राप्तयो भवन्तीति शेषः । अत्र श्लेषोऽर्थान्तरन्यासश्च ॥ ३२ ॥

साम्राज्यमित्थमनुनीय निजप्रजानां, नित्योदयेन बुभुजे मनुजेश्वरेण ॥
लोकाग्रजेषु ऋणभेण महाभुजेन, धर्मोन्नतिं विदधताऽननुजेऽनुजे वा ॥ ३३ ॥

अन्वय —निजप्रजानां साम्राज्यम् इत्थम् अनुनीय नित्योदयेन मनुजेश्वरेण लोकाग्रजेषु ऋणभेन महाभुजेन अननुजे अनुजे वा धर्मोन्नतिं विदधता बुभुजे ॥ ३३ ॥

व्याख्या—निजप्रजानां स्वकीयजनानाम् अथवा स्वकीयसन्ततीनाम् "प्रजास्यात्सन्ततौ जने इत्यमरः" इत्थम् पूर्वोक्तप्रकारेण साम्राज्यम् आधिपत्यम् अनुनीय स्वानुकूल्यम् विधाय अथवा इत्थम् पूर्वोक्तप्रकारेण प्रजानाम् जनानाम् अनुनीय स्वाधीनम्विधाय

"प्रजानामिति शेषत्वविवक्षया षष्ठी" नित्योदयेन नित्यमहरहः उदयः समृद्धिर्यस्य स नित्योदयस्तेन मनुजेश्वरेण मनुजानाम्मानवानाम् अथ वा मनुजेषु ईश्वरः स्वामी प्रभुः मनुजेश्वरः तेन लोकाग्रजेषु ऋषभेन लोकानाम् जनानाम् अग्रजः श्रेष्ठः तेषु ऋषभेन श्रेष्ठेन महत्स्वपि महत्तरेण अथ वा ऋषभेन ऋषभस्वामिना आदीश्वरेणेत्यर्थः " स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः ॥ सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचरा इत्यमरः " महाभुजेन दीर्घबाहुना अनेन भाग्यशालित्वं प्रच्यते अननुजे अननुचरे अनुजे अनुचरे अननुरोधिनि अनुरोधिनि च धर्मोन्नतिम् पुण्यसमृद्धिम् विदधता कुर्वता प्रचारयता साम्राज्यम् आधिपत्यम् समृद्धिमिति यावत् बुभुजे भुज्यतेस्म सर्वपक्षसाधारणमेतत् अनुप्रासालंकारः ॥ ३३ ॥

श्रीकौशलाधिपतिना यतिनामधर्तुं मुख्ये सुते नियमतः पद्वीनिधेया ।
कान्तावरिष्ठवचसा भरते न्यधायि स्वासाग्रजन्मनि परे वनवासवृत्तिः ॥ ३४ ॥

अन्वय:—यतिनामधर्तुं श्रीकौशलाधिपतिना नियमतः मुख्ये सुते पदवीनिधेया कान्तावरिष्ठवचसा भरते न्यधायि परे स्वासाग्रजन्मनि वनवासवृत्तिः न्यधायि ॥ ३४ ॥

व्याख्या—यतिनामधर्त्तुं यतिसंज्ञामनुभवितुम् यतित्वमाकाङ्क्षन् श्रीकौशलाधिपतिना कुशलायामयोध्यायां भवः कौशलः ऋषभदेवः "इतिकल्पसूत्रसुबोधिकावृत्तौ" अथवा कुशलस्वभावः कौशलम् तद्युक्तः अधिपतिः कौशलाधिपतिः श्रियायुक्तः कौशलाधिपतिः श्रीकौशलाधिपतिः तेन ऋषभस्वामिना नियमतः निश्चयतः गुणतः क्रियातः धर्मतः नीतितः कुलाम्नायतः राजव्यवहारतः मुख्ये प्रधा

नेजन्मत इत्यर्थः सुते पुत्रे पदवी राजपदवी राज्यभारः निधेया स्थापनीयाअवलम्बनीया इति विचार्येतिशेषः भरते भरताभिधेये ज्येष्ठतनये न्यधायि प्रास्थापि कान्तावरिष्ठवचसा कान्तानाम् कमनीयस्वरूपाणाम् सारस्वतादिरिष्टान्तब्रह्मलोकनिवासिदेवानाम् वचसा तेषां वचनेन स्वतोऽपि तेषां वचनेन च परे चरमे अपुनर्भाविनीत्यर्थः स्वाप्ताग्रजन्मनि स्वस्य आप्तम् कल्याणाभिमुखम् अग्रम् श्रेष्ठम् यत् जन्म तस्मिन् स्वकीयश्रेयोमुखप्रशस्तशरीरं वनवासवृतिः मुनिवृत्तिः न्यधायि अधारि ॥

अथ च स्वाप्ताग्रजन्मनि स्वस्मात् स्वतः आप्ताग्रजन्मनि प्राप्तप्रथमजन्मनि परे उत्कृष्टे पूर्वे वा वनवासवृत्तिः युगलिकधर्मप्रवृत्तिः न्यधायि प्राप्यापि स्वतो युगलिकधर्मो न्यवर्त्ततेति द्वितीयार्थो व्यज्यते ॥

श्रीशान्तिनाथ नेमिनाथ पार्श्वनाथ वीरवक्षेषु । श्रीकौशलाधिपतिना कुशलस्य भावः कौशलम् कुशलता क्रियानैपुण्यम् तस्मिन् अधिपतिः चतुरः कौशलाधिपतिः श्रियायुक्तः कौशलाधिपतिः श्रीकौशलाधिपतिः तेन यतिनामधर्त्तुं यतिसंज्ञामनुभवितुं मुख्ये श्रेष्ठे चरमे इत्यर्थः सुते सूयते उत्पद्यते इति सुतम् शरीरम् तस्मिन् पदवी मुनिपदवी निधेया स्थापनीया आश्रेया इति विचार्येतिशेषः कान्तावरिष्ठवचसा आसमन्ताद्वरिष्ठः आवरिष्ठः कान्तानां देवानाम् आवरिष्ठम् वचः स्वसंयमग्रहणप्रयोजकम् तेन तेषां वचनेन स्वतश्च स्वाप्ताग्रजन्मनि स्वस्य स्वकीयस्य आप्तम् श्लाघ्यम् यत् अग्रजन्म श्रेष्ठजन्म तस्मिन् परे चरमे अथवा स्वः स्वर्गात् आप्तम् प्राप्तं यत् अग्रजन्म तस्मिन् भरते भरति पुण्येन लोकमिति भरते अथवा बिभर्ति पुण्यातिशयमितिभरतस्तस्मिन् वनवासवृत्तिः मुनिवृत्तिः पुण्यारण्यसेवनविधिः न्यधायि आस्थापि अग्राहीत्यर्थः ॥

रामपक्षे—कोशले देशविशेषे भवाकौशला तस्या अधिपतिः कौशलाधिपति तेन कौशल्यापतिना दशरथनृपेन यतिनामधर्त्तुम् मुनित्वमाश्रयितुम् प्रव्रजितुमिति भावः मुख्ये सुते सर्वतो ज्येष्ठे दयादाक्षिण्यादितः श्रेष्ठ रामे नियमतः स्ववंशपरम्पराम्नायतः पदवी राजपदवी निधेया स्थापनीया इति कृतनिश्चयेऽपि कान्तावरिष्ठवचसा कान्तायाः कामिन्याः कैकेय्याः वरिष्ठवचसा वरिष्ठम् अत्याज्यम् पूर्वदत्तवरतया अवश्यग्राह्यम् यद्वचः वचनम् तेन अथवा कान्तायाः स्वार्थान्धायाः कैकेय्याः अवरिष्ठम् उभयलोकविरुद्धम् अथवैतल्लोकविरुद्धम् वद्वचस्तेन भरते कैकेयीतनये स्वमध्यमतनये न्यधायि राजपदवी अस्थापि परे उत्कृष्टे स्वाप्राप्ताग्रजन्मनि स्वस्य आप्तः अत्यन्तानुगतोवल्लभ इत्यर्थ यः अग्रजन्मा ज्येष्ठतनयः तस्मिन् रामे वनवासवृत्तिः न्यधायि न्यक्षेपि वनवासीन्यधायीत्यर्थः ॥

कृष्णपक्षे--कौशलायाः मित्रविन्दायाः स्वेष्टाष्टपट्टमहिषीणामन्यतमाया अधिपतिः स्वामी तेन कृष्णेण यतिनामधर्तुम् यतते स्वाघर्षणायदुर्गादिकम्निद्यते इति यतिः अथवा यतिः अथ वा यतिर्विष्णुस्तस्य नाम ख्यातिम् धर्तुमाश्रयितुम् "यतिर्विष्णुरितिशब्दस्तोममहानिधिः" "कृष्णस्तु भगवान स्वयमिति पौराणिकाः" मुख्ये प्रधाने निरुपद्रवे शत्रुभिरलङ्घ्ये सुते सुते अस्मिन् इति सुतः अधिकरणे क्तः भूमौ पदवी स्थितिः विधेया निर्मापनीया क्वचिन्निर्वाहस्थाने स्वनगरी निवेशयितव्येति भावः कान्तावरिष्ठवचसा आसन्ताद्वरिष्ठः श्रेष्ठः आवरिष्ठः कान्तम् मनोहरम् यत् आवरिष्ठस्येन्द्रादेर्वचः वचनम् तेन देवेन्द्रादिवचनेन भरते भ्रियते धनधान्यादिसमृद्धिभिर्लोकैर्वा इति भरतस्तस्मिन् स्वाप्ताग्रजन्मनि स्वस्य आप्तम् श्लाघ्यम् अग्रजन्म पूर्वजन्म यस्मिन् तस्मिन् आपोनारा इति प्रोक्ताआपो वै नरसूनव इति मनूक्तेः कृष्णस्य जलप्रसूतत्वात् परे उत्कर्षे द्वारकायामित्यर्थः वनवासवृत्तिः वने समुद्रजले वासवृत्तिःजलवासित्वम् अथवा वनमेव वासवृत्तिः

आकाशे यत्र सा अथवा तने जले वासः वृत्तिराजीविका च यस्य स, न्यधायि अस्थापि अत्र श्लोके श्लेषालंकारः ॥ ३४ ॥

श्रीविश्वसेनकृतकर्मनिवृत्तिभावे, लोकोऽनुगामुकमना नयविक्रमेण ॥
शान्तिप्रधानवचसैव तमाश्वसेनो, वैदेहिवृत्तिपरिभावनया जुगोप ॥ ३५ ॥

अन्वय.—श्रीविश्वसेनकृतकर्मनिवृत्तिभावे नयविक्रमेण अनुगामुकमना लोकः तम् आश्वसेनः शान्तिप्रधानवचसैव वै देहिवृत्तिपरिभावनया जुगोप ॥ ३५ ॥

व्याख्या—श्रीविश्वसेनकृतकर्मनिवृत्तिभावे-विश्वस्मिन् चतुर्दिग्विभागे सेना यस्य अथवा विश्वस्मिन् सेनया यातीति सेनयतीति सेनः सर्वत्र सेनासहितगमनः नाभिः आदिनाथपिता तेन कृतः सम्पादितः कर्मणो निवृत्तिभावः पित्रादिनियतकर्त्तव्यलौकिकसंस्कारादिकर्मसमाप्तिर्यस्मिन् तस्मिन् अथ वा श्रीविश्वसेनात् निजसाम्प्रतिकपितुः सकाशात् कृतः जातः कर्मणः शरीरारम्भकदुरदृष्टनिवृत्तिभावः यत्र तस्मिन् नयविक्रमेण नयेन नीत्या विक्रमेण पराक्रमेण अनुगामुकमनाः अनुसरणचित्तो जनः लोकः आसीदिति शेषः आश्वसेनः अश्वप्रधाना सेना यस्य स आश्वसेनः शान्तिप्रधानवचसैव शान्तिप्रयोजकवचनेन वैदेहिवृत्तिपरिभावनया वै इतिपादपूरणेऽनुनयेऽव्ययम्, देही आत्मा तस्य वृत्तिर्व्यवहारः आत्मव्यवहारस्तस्याः भावनया विचारेण तम् जनम् अथवा वैदेह्याः जनकनन्दिन्या या वृत्तिर्जीवनम् सुखदुःखसहिष्णुत्वम् धर्मपरतन्त्रत्वम् तस्य परिभावनया विचारेण जुगोप ररक्ष।

श्रीशान्तिनाथपक्षे—विश्वसेनेन तदभिधानेन स्वजनकेन कृतः सम्पादितः कर्मनिवृत्तिभावः जन्मत आरभ्य विवाहादिसंस्कार-

पर्यन्त कर्मनिवृत्तिभाव' परिसमाप्तिर्यत्र तस्मिन् अथवा विश्वसेनात् कृतः कर्मणः शरीरान्तगरम्भककर्मनिवृत्तिभावः समाप्तिर्यत्र तस्मिन् अन्यत् पूर्वव्याख्यानवत् ॥

श्रीपार्श्वनाथपक्षे--विश्वस्मिन् सेना यस्य स विश्वसेनस्तेन कृतकर्मनिवृत्तिभावे आश्वसेनः एतदभिधानकः पार्श्वनाथपिता वैदेहिवृत्तिपरिभावनया जुगोप अन्यत्पूर्ववत् ॥

श्रीनेमिनाथवर्द्धमानरामकृष्णपक्षे पूर्वपक्षवद्योज्यम् ॥ ३५ ॥

देवस्तथा नृपतिभिः सह पूर्वदेवैः, प्राप्ते प्रमोदनिवहे महता महेन ।
धर्तुं क्षणाद् विषयतो विमुखः स दीक्षां, स्वामी स्वमद्भुतरसाद् वनमाससाद ॥३६॥

अन्वयः—महता महेन प्राप्ते प्रमोदनिवहे पूर्वदेवैर्नृपतिभि सह विषयत विमुख' स देव दीक्षाम् धर्तुम् स्वामी स्वम् अद्भुतरसाद् वनम् आससाद ॥ ३६ ॥

व्याख्या—पूर्वदेवैः पूर्वोक्तैरिन्द्रादिदेवैः अथवा पूर्वाश्चतेदेवा श्च तैः पूर्वदेवैः प्रधानदेवैः अथवा पूर्वम् शरीरधारणात् प्रथमम् देवैः देवभूतैः इदानीं प्रभुसेवार्थन्नृपतिताङ्गतैः अथ च सामन्तराजभिः सह सार्धम् महता लोकातिशयेन महेन उत्सवेन प्रमोदनिवहे आनन्दसंभारे प्राप्ते अधिगते सतीत्यर्थः स प्रभुः जिनेश्वरः देवः विषयतः सांसारिकविषयकामिनीकाञ्चनादितः विमुखः पराङ्मुखः स्वामी सर्वशक्तिमान् स्वम् स्वयमेव क्षणात् तत्क्षणमेव दीक्षाम् प्रव्रज्यां धर्तुम् ग्रहीतुम् अद्भुतरसात् विलक्षणशान्तिरसात् वनम् सिद्धार्थनामोद्यानम् आससाद प्राप गतवानित्यर्थः ॥

श्रीपार्श्वनाथपक्षे—आश्रमपदनामानम्वनम अन्यत्पूर्ववत् ।

श्रीनेमिनाथ-शान्तिनाथ-वर्द्धमानपक्षे—महस्राम्रवणनामानं म्वनमन्यत् समानम् ॥

श्रीरामचन्द्रपक्षे—देवः स्वामीत्यादिशब्दैर्दशरथो ग्राह्यः स च पूर्वदेवैर्दीप्यमाननृपतिभिः सह भूयसा परिवारेण दीक्षान्धर्तुं महा मुनेः मत्य भूतेः सकाशात् वनमाससाद प्राप ॥

कृष्णपक्षे-पूर्वदेवैः ज्येष्ठभ्रातृभिः नृपतिभिः सामन्तगजैः सह प्रमोदनिवहे अमन्दानन्दे प्राप्ते अधिगते सति विषयतोऽविमुखः विषयासक्तचित्तः सांसारिकविषयवासनाधिकृतमनाः महता विपुलेन महेन उत्सवेन स कृष्णः देवः द्योतनात्मा दीक्षाम् विवाहविधिन्धर्तुन्निर्वर्तितुम् "वीवाहदीक्षान्निरवर्त्तयद्गुरुरितिरघुकाव्ये" विवाहविधेरपि दीक्षाशब्दवाच्यत्वमुक्तमन्यैः स्वामी नृपः अद्भुतरसात् अत्युत्कण्ठातः वनम् आलयम आवासम् आससाद प्राप अरण्ये जले निवासे आलये च वनमिति शब्दस्तोममहानिधिः ॥ ३६ ॥

निष्कोपयामिकविधिं दधताऽत्र राज्ञा, सांवत्सरावसरदानकृता यथार्हम् ।
यागाभियोगकलया मलयानुलिप्तालंकारितेन वनपावनता वितेने ॥ ३७ ॥

अन्वय —अत्र निष्कोपयामिकविधिन्दधता मलयानुलिप्ताऽलङ्कारितेन राज्ञा यथार्हं सांवत्सरावसरदानकृता योगाभियोगकलया वनपावनता वितेने ॥ ३७ ॥

व्याख्या—अत्र भुवने निष्कोपयामिकविधिन्दधता निर्गताः कोपात् इति निष्कोपाः शान्तक्रोधा ये यामिका यामे यामे भवा यामिकाः द्वारपालास्तेषाम् विधिविधानन्दधता आश्रयता अर्थात् अवारितद्वारता कुर्वता यथायोग्यम् रूपानुरूपं साम्वत्सरावसरदानकृता

सम्वत्सरे भवम् साम्वत्सरम् तस्य अवसरः समयः तत्र यद्दानम् तत् करोतीति साम्वत्सरावसरद्दानकृता मलयानुलिप्तालंकारितेन मलयानुलिप्तेन मलयचन्दनानुलेपेन तात्स्थ्यात्ताच्छब्दमित्यनुसृत्य अलङ्कारितः कृतालंकारस्तेन राज्ञा राजमानेन योगाभियोगकलया योगस्य ये केचन जिघृक्षवस्ते समायान्त्विति रूपस्य योऽभियोगः ख्यापन तस्य कलया विधानेन वनपावनता वनस्यारण्यस्य पावनता पूतता महत्वमित्यर्थः वितेने विस्तारयामास ॥

अन्येषामपि चतुर्णामर्हतां समानमेतत् ॥

श्रीरामपक्षे—निष्कोपयामिकविधिम् निष्क्रोधद्वारपालक्रियाम् दधता धारयता राज्ञा भरतेन अत्र अयोध्यायाम् साम्वत्सराव-सरदा नकृता सम्वत्सरे भवः साम्वत्सरः चतुर्दशवर्षव्यापकः योऽवसरः समयस्तस्मिन् यत् दानम् पालनम् "दानम्मदजले च्छेदे पालने चेति शब्दस्तोममहानिधिः" तत् करोतीति तेन यथार्हम् यथायोग्यम् क्रममनुसृत्येत्यर्थः योगाभियोगकलया योगस्य कवचादिधारणस्य अथ वा कर्मकौशलस्य योऽभियोगः उद्योगः तस्य कलया तदाश्रयेण अथवा योगः परराजकृतधर्षणस्तस्य अभियोगः विज्ञानम् तम् कलयति जानातीति कला तया तथोक्तया मलयानुलिप्तालंकारितेन मलयचन्द नानुलेपनकृतालंकारेण वनपावनता वनति हिनस्ति जनानितिवनः तम् पायतिशोषयतीति "पैल्युः" वनपावनस्तस्यभावस्तत्ता वितेने अथ च वनस्य नगरस्य पावनता पवित्रता वितेने विस्तारयामास ॥

कृष्णपक्षे—साम्वत्सरावसरदानकृता श्रीनेमिनाथस्य यत्साम्वत्सरावसरदानम् तत् कारयति सम्पादयतीति अन्तर्भावितण्यर्थः तेन अथवा सम्वसन्ति ऋतवो यत्र तत् सम्वत्सरम् उपवनम् रैवतकवनम् तस्य अवसरःअवकाशः तत्र दानकृता रक्षणकृता वृन्दा-

वनाकाशपालनकृता या वनस्य समुद्रजलस्य पावनता पवित्रता अथवा स्वालयस्य द्वारकापुरः पावनता पवित्रता वितेने विस्तारयामास अन्यद्विशेषणं रामपक्षवद्योज्यम् शेषः ॥ ३७ ॥

रेजे रजंश्च विषये ननु राजराजां, लोकान्तकान्तवसतिप्रतिपन्नदेवैः ।

विज्ञापितः स्वसमयं चिकुरार्थराग-मुत्पाट्य तुष्टसुमनाः सवनानुकूल्ये ॥३८॥

अन्वय — ननु राजराजा विषये रजन् लोकान्तकान्तवसतिप्रतिपन्नदेवैः स्वसमयं विज्ञापितः चिकुरार्थरागमुत्पाट्य तुष्टसुमनाः स वनानुकूल्ये रेजे ॥३८॥

व्याख्या—ननु इति कोमलालापे राजराजा विषये राजसु नृपसमूहेषु राजते शोभते इति राजराट् तेषां विषये मध्ये तत्सघे रजन् विलसन् स जिनेन्द्रः लोकान्तकान्तवसतिप्रतिपन्नदेवैः ब्रह्मसदननिवासिभिर्देवैः स्वसमयं दीक्षाग्रहणकालम् विज्ञापितः निवेदितः स्मारित इति यावत चिकुरार्थरागम् चिकुरे कचे अर्थे सम्पत्तौ यो रागः ममत्वबुद्धिः प्रीतिरिति यावत् तमुत्पाट्य उन्मूल्य निरस्य तुष्टसुमना तुष्टम् हृष्टम् सुष्ठु मनो हृदयं यस्य स वनानुकूल्ये वने न निर्जनतया आनु कूल्ये तपो योग्ये रेजे रेमे विललास ॥ अथवा स वनस्य आभ्यन्तरमलक्षालनरूपश्रेयस्स्नानस्य आनुकूल्ये सौलभ्ये रेजे ॥ पञ्चार्हत्पक्षसाधारणमेतदिति ॥

कृष्णपक्षे—राजसु राजन्ते इति राजराजस्तेषा विषये समुदाये रजन् शोभमानः लोकान्तकान्तवसतिप्रतिपन्नदेवैः लोकान्तं लोकेषु अन्तः मनोहरः "अन्तो मनोहरेऽभ्यासे इति शब्दस्तोममहानिधिः" कान्तः कमनीयः तत्र वसतिर्निवासः प्रतिपन्नः स्वीकृतः यो देवः दीप्तिमान् तैः अतिमुक्तनाममुनिभिः स्वसमयम् स्वस्य कंसस्य समयम् जीवनदिनम् "यन्निमित्तोऽयमुत्सवस्तद्गर्भः सप्तमो हन्ता पतिपित्रो स्त्वदीययोरिति" देवकीविवाहोत्सवे विज्ञापितः कृतनिवेदनः कंसः तां कचे गृहीत्वा हन्तुमुद्यतः सा एनां

हंसि अस्मास्तनय त्वां ममर्पयिष्यामीति चिकुरार्थरागम् कचग्रहणप्रपञ्चम् अथवा चक्यन्ते प्रतिहन्यन्ते इति चिकुरा "औणाक उरः प्रत्ययः" प्रतिहननानि तदर्थं यो रागोऽभिनिवेशः तमुत्पाट्य निरस्य स कंसः वनानुकूल्ये आलयस्य आनुकूल्ये सौलभ्ये रेजे शुशुभे ॥

रामपक्षे—राजराजां विषये सूर्य्यवंशे रजन् शोभमानः लोकान्तकान्तवसतिप्रतिपन्नदेवैः लोकान्ते वने या कान्तवसतिः मनोहर निवासस्तत्प्रतिपन्ना तत्र गता ये देवा दीप्यमानास्तैः विज्ञापितः निवेदितः सन् चिकुरार्थरागम् संग्रामरागम् स्वसमयम् स्वनिश्चयम् उत्पाद्य दूरीकृत्य सन्धिम्विधायेत्यर्थः तुष्टसुमनाः प्रसन्नचित्तः स रामः वनानुकूल्ये रेजे रमतेस्म ॥

कदाचिद्वने पर्यटन् रामो निर्जनकमपिप्रदेशम्विलोक्य यावच्चिन्तयति तावत् कोऽपि श्रावकः सिंहोदरवज्रकर्णयोर्वृत्तान्तं व्यजिज्ञपत् तयोश्चसन्धिम्विधाय तत्र वने रेजे इति रामायणे पञ्चमसर्गे आदितः ७६ सर्ग यावद्वर्णनमनुसन्धेयम् ॥ ३८ ॥

**जातेर्महाव्रतमधत्त जिनेषु मुख्य-स्तस्मात्परेऽहनि स-शान्ति-समुद्रभूर्वा ।**
**श्रीपार्श्व एव परमोऽचरमस्तु मार्गे, रामेऽक्रमेण ककुभामनुभावनीये ॥ ३९ ॥**

अन्वय—जिनेषु मुख्यः स शान्तिः समुद्रभूः अचरमः परमः जातेर्महाव्रतम् अधत्त तस्मात् परेऽहनि श्रीपार्श्व एव ककुभामनुभावनीये रामे क्रमेण मार्गे महाव्रतम् अधत्त ॥ ३९ ॥

व्याख्या-जिनेषु अवधिज्ञानवत्सु मुख्यः प्रथमः श्रेष्ठः आदीश्वरः ऋषभदेवः अव्रतम् तुर्यगुणस्थानकम् अधत्त अथ च

जातेः जन्मनः परे उत्कृष्टे अहनि दिवसे चैत्रकृष्णनवम्यां महाव्रतम् चारित्र्यलक्षणम् अधत्त धृतः स कथंभूतः शान्तिसमुद्रभूः शान्तेरुपशमस्य यः समुद्रः आकरस्तस्य भूः उत्पत्तिस्थानम् परमः श्रेष्ठः अचरमः चरमो न भवतीति तथा रामे मनोहरे मार्गे पथि ककुभां दिशामनुभावनीये प्रकाशकारके श्रीपार्श्वे एव श्रियाः मोक्षलक्ष्म्याः पार्श्वे सन्निधौ आसन्नमुक्तिलक्ष्म्या एव क्रमेण रीतिमनुसृत्येत्यर्थः ॥

श्रीशान्तिनाथपक्षे—श्रीशान्तिः शान्तिनाथः जातेर्जन्मनः परे द्वितीये अहनि दिवसे ज्येष्ठकृष्णत्रयोदश्यां महाव्रतम् संयमं अधत्त अन्यद्विशेषणम्पूर्ववदवसेयम् ॥

श्रीनेमिनाथपक्षे—शान्तिसमुद्रभूः शान्तेः समुद्र इव समुद्रः समुद्रविजयः तस्मात् भूः उत्पत्तिर्यस्य स नेमिनाथः जातेः जन्मनः परे द्वितीयेऽहनि दिवसे श्रावणशुक्लषष्ठ्यां महाव्रतम् अधत्त ॥

श्रीपार्श्वनाथपक्षे—श्रीपार्श्वः पार्श्वनाथः जातेर्जन्मदिनात् परे द्वितीयेऽहनि पौषकृष्णैकादश्यां महाव्रतमधत्त ॥

श्रीमहावीरपक्षे—चरमः अन्तिमः श्रीवर्धमानस्वामी जातेः परे भिन्ने दिवसे मार्गकृष्णैकादश्यां महाव्रतम् अधत्त अग्रहीत् ॥

रामकृष्णपक्षे—स मुख्यः प्रथमः श्रेष्ठः शान्तिसमुद्रभूः शान्ते रुपशमस्य समुद्रः तस्य भूरुत्पत्तिस्थानम् अथवा शान्तिसमुद्रः दशरथो वसुदेवश्च तस्मात् भवतीति शान्तिसमुद्रभूः परमः उत्कृष्टः चरमो न भवतीति अचरमः सर्वतोऽधिकः परे उत्कृष्टे रामे मोक्षसाधनभूते क्रमेण क्रमतः ककुभान्दिशामनुभावनीये सर्वप्रकाशकारके अहनि न कदाचित् जहाति संसारमिति अहनि निश्चले मार्गे जिनशासने विषये जिनेषु अर्हत्सु महाव्रतम् महानियमम् अधत्त अग्रहीत् ॥ ३९ ॥

देवर्षभे-जनि-पवित्रदिने-व्रतश्रीशान्तेः पुनर्बहुलशुक्लपरद्युसत्त्वे ।
अत्रोदिताम्बुधिशिवाङ्गभवे रसाढ्ये, सम्यक्तिथौ हरिवरस्य तथैव पार्श्वे ॥ ४० ॥

अन्वय —देवर्षभे जनिपवित्रदिने व्रतश्रीः शान्ते. पुनः बहुलशुक्लपरद्युसत्वे उदिताम्बुधिशिवाङ्गभवे रसाढ्ये तथैव पार्श्वे हरिवरस्य सम्यक्तिथौ ॥४०॥

व्याख्या—देवर्षभे देवश्चासौ ऋषभश्चेतिदेवर्षभस्तस्मिन् ऋषभस्वामिनि जनि पवित्रदिने जनेः जन्मतः पवित्रम् पूतम् तस्मिन् दिने चैत्रकृष्णनवम्यां व्रतश्रीः व्रतलक्ष्मीः अजनि अभूत् शान्तेः शान्ति नाथस्य भगवतः बहुलशुक्लपरद्युसत्वे बहुम् लाति गृह्णातीति बहुलो ज्येष्ठः सर्वतः श्रेष्ठत्वात् तस्य शुक्लपरद्युः शुक्लपक्षपरदिनम् तस्य सत्वे विद्यमाने ज्येष्ठकृष्णत्रयोदशीदिने इत्यर्थः उदिताम्बुधिशिवाङ्गभवे उदितः प्राप्तोदयः य अम्बुधिः समुद्रः समुद्रविजयः स च शिवा च तत्पत्नी ते उदिताम्बुधिशिवे तयोः अङ्गभवस्तनयस्तस्मिन् नेमिनाथे रसाढ्ये षष्ठीतिथौ तथैव पार्श्वे पार्श्वनाथे हरिवरस्य विष्णोः सम्यक्तिथौ एकादश्याम् हरिवरस्य महावीरस्वामिनः सिंहाकितत्वेन तथा निर्देशः तथैव एकादश्यामित्यर्थः व्रतश्रीरजनीति पूर्वेण सम्बन्धः ॥ ४० ॥

मार्गेऽसिते सदशमे हि सुपर्वसङ्गे, तीर्थेश्वरोऽप्यचरमः परमो निवृत्तः ।
आलोचनाद्विकचचारुमुखारविन्द स्तुर्यावबोधनधनी स मनीषिपूज्यः ॥ ४१ ॥

अन्वय —परम.-अचरमस्तीर्थेश्वर आलोचनाद्विकचचारुमुखारविन्द तुर्यावबोधनधनी मनीषिपूज्य स मार्गेऽसिते सदशमे सुपर्वसगे निवृत्त ॥ ४१ ॥

व्याख्या—अचरमः चरमोऽन्तिमो न भवतीति अचरमः आदीश्वरनाथः परमः श्रेष्ठः तीर्थेश्वरः तीर्थकृत् आलोचनात्=ज्ञानतः पर्यालोचनात् विचारात् विकचचारुमुखारविन्दः विकच विकसितं सुप्रसन्नमित्यर्थः चारु मनोज्ञं मुखारविन्दम् आननपंकजम् यस्य स तथोक्तः तुर्यावबोधनधनीतुर्यावबोधनम् तुर्यज्ञानमेव धनम् संपद्यस्य स मनीषिपूज्यः विद्वज्जनाराधनीयः स सदशमे सादयति आमाद यति शमः शान्तिर्यत्र तस्मिन् सुपर्वसङ्गे देवसङ्गे सिते निर्मले मार्गे साधुमार्गेऽध्वनि निवृत्तः जातः यतित्वमासादेत्यर्थः ॥

श्रीमहावीरपक्षे—असिते कृष्णे सदशमे दशमेन सहितः सदशमः पूर्वोपस्थितत्वादेकादशो जातस्तत्र मार्गे मार्गशीर्षे मार्गशीर्षकादश्यां चरमोऽन्तिमस्तीर्थेश्वरः वर्धमानप्रभुः निवृत्तः सांसारिकविषयवासनात इति शेषः ॥

अन्यतीर्थकृतामपक्षेऽप्येवमेवावसेयम् ॥

रामकृष्णपक्षे—तीर्थेश्वरः "सत्यं तीर्थं क्षमातीर्थं तीर्थमिन्द्रियनिग्रहः सर्वभूतदयातीर्थं सर्वत्रार्जवमेव चे"ति निरुक्ततीर्थानामीश्वरः अधिष्ठाता अन्यत्र तीर्थस्य उपकूपजलाशयस्य द्वारकाया ईश्वरः प्रभुः चरमो जघन्यो न भवतीति अचरम उत्कृष्टः निवृत्तः राज्यादिति शेषः अन्यत्र नितरां व्रियते इति निवृत्तः सामन्तराजपरिवृत्तः आलोचनात् प्रेमतो दर्शनात् विकचचारुमुखारविन्दः प्रसन्नमनोहराननः आलोचनादित्यनेन प्रेमावलोकनत इत्यर्थः शत्रूणां तु अकालकालकरालवदनएवासीदिति ध्वनिः तुर्यावबोधनधनी तुर्यम् तूरम् तेन यदवबोधनमस्य तज्जागरणन्तेन धनी भाग्यवान् "वाद्यं वादित्रमातोद्यं तुर्यं तूरं सरध्वज इति हैमः" मनीषिपूज्यः मनीषिभिर्विद्वद्भिः पूज्य आदरणीयः स रामः कृष्णश्च असिते निर्मले सदशमे प्राप्तशमे सुपर्वसङ्गे सुपर्वणा देवाना सङ्गः संगतिर्यत्र तस्मिन् मार्गे स्याद्वादमार्गे निवृत्तः निश्चयेन प्रतिपन्नः ॥ ४२ ॥

अर्थाः सप्त समर्थिताः कणभुजामाभासनेशासने, सप्त श्रीजिनसन्मते ह्यभिमते प्रामाणिकानामपि ।
राज्याङ्गानि तथैव दैवरसतः स्युभूर्भुजः सिद्धये, काव्येऽस्मिन्नत एव सप्त कथिता अर्थाः समर्थाःश्रियै॥४२॥

इति श्रीमत्सप्तसंधाने महाकाव्ये महोपाध्याय-श्रीमेघविजयगणिविरचिते पूज्यराज्यवर्णनो नाम-चतुर्थः सर्गः ॥५॥

अन्वय —कणभुजामाभासने शासने सप्त अर्थाः समर्थिता प्रामाणिकानामपि ह्यभिमते श्रीजिनसन्मते सप्त तथैव दैवरसतः भूर्भुज सिद्धये राज्याङ्गानि स्युः अत एव अस्मिन् काव्ये श्रियै समर्था सप्त अर्थाः कथिताः ॥ ४२ ॥

व्याख्या—कणभुजां कणादानान्नैयायिकसमानतंत्राणाम्वैशेषिकानाम् आभासने प्रकाशमाने शासने तन्त्रे सप्त अर्थाः द्रव्यगुणादयः समर्थिताः प्रमाणेन सिद्धान्तिताः सन्तीति शेषः तथा प्रामाणिकानां प्रमाणतो वस्तुपरिच्छेदकानामभिमते इष्टे श्रीजिनसन्मते श्रीजिनानां सन्मते शुद्धेमते जैनदर्शने सप्त जीवादयोऽर्थाः पदार्थाः समार्थिताः प्ररूपिताः तथैव भूर्भुजः नृपस्य सिद्धये विजयाय दैवरमतः सप्तसंख्यातः राज्यांगानि स्वाम्यमात्यसुहृत्कोशादीनि समार्थितानि सन्निवेशितानि अत एव शास्त्रे व्यवहारे च निर्णीतत्वादेव अस्मिन् काव्ये सप्तसंधानाभिधाने श्रियै मङ्गलाय समर्थाः अभिधावृत्तिबोध्याः सप्त अर्थाः सप्तसंख्यकाः अभिधेयाः समार्थिता वाच्यत्वेन स्थापिताः ॥ ४२ ॥

इति शास्त्रविशारद-कविरत्नभट्टारकाचार्य-श्रीविजयामृतसूरीश्वर-प्रणीतायां सप्तसंधान-महाकाव्य-सरणी-टीकायां चतुर्थः सर्ग. ॥

## ॥ पञ्चमः सर्गः ॥

अथ कुवलयोद्भासी राशीभवद्गुणसेवधिः, परिणतहृदारामः कामं जगाम न वामधीः ।
जिनपवृषभः स्वैरं वैरं त्यजन्नपरे परे, सितरुचिरिवोदीचीमञ्चन् दिशं हरिणाश्रिताम् ॥ १ ॥

अन्वयः—अथ कुवलयोद्भासी राशीभवद्गुणसेवधिः परिणतहृदारामः न वामधीः अपरे परे वैरं त्यजन् जिनपवृषभः उदीचीमञ्चन् सितरुचिरिव स्वैरं कामम् हरिणाश्रिताम् दिशम् जगाम ॥ १ ॥

व्याख्या—अथ अथानन्तरम् दीक्षाग्रहणानन्तरमित्यर्थः कुवलयोद्भासी कुवलये भूमण्डले भासते दीप्यतीत्येवं शीलः पृथ्वीमण्डलमण्डनः राशीभवद्गुणसेवधिः राशीभवन्तः सर्वतो मिलन्तः ये गुणाः दयादाक्षिण्यादयस्तेषां सेवधिः निधिः खानिरितियावत् परिणतहृदारामः परिणतम् कषायादिरहितन्निर्मलमित्यर्थः यत् हृद् हृदयम् तत्र आरमते विहरतीति तथा अथवा परिणतः पुष्टः हृदारामो हृदुपवनं यस्य स तथा स्वात्मसंतुष्टः दयादिगुणयुक्तः इति यावत् न वामधीः नारुन्तुदबुद्धिः ऋजुप्रकृतिः अपरे स्वीये परे अन्ये च वैरम्विरोधं त्यजन् परिहरन् स्वीयपारक्यबुद्धिरहितः उदीचीमुत्तरान्दिशम् अञ्चन् गच्छन् सितरुचिरिव शीतांशुरिव चन्द्र इवेत्यर्थः जिनपवृषभः जिनश्रेष्ठः स्वैरं यथेष्टम् कामं यथास्यात्तथा हरिणाश्रितान्दिशम् ऐन्द्रीम् दिशम् प्राचीम् जगाम विचचार अथवा असितरुचिः तीक्ष्णकरः सूर्य इव उदीचिम् दिशम् उत्तरायनम् अञ्चन् गच्छन् स इवेति । सितरुचिरिव असितरुचिरिवेतिवोपमालंकारेण निरतिशयमृदुत्व धर्ममाङ्गलिकप्रयोजकत्व च वस्तु व्यज्यते इत्यलंकारेण वस्तुध्वनिः ॥

रामपक्षे=रामः परिणतहृदा परिपक्कबुद्ध्या वामधीः कुटिलबुद्धिर्न जिनपवृषभः जयति संसारमिति जिनः मुनिः तं पातीति जिनपः स श्रेष्ठः आराध्यतया मुख्यो यस्य स अथवा जयति शत्रुमिति जिनः नृपः तम्पाति रक्षति इति जिनपस्तेषु वृषभः श्रेष्ठः हरिणाश्रिताम् सुग्रीवाधिष्ठिताम् दिशम् कामम् जगाम निर्ययौ अन्यत् पूर्ववद्योज्यम् ॥

कृष्णपक्षे—कुवलयोद्भासी कुवलये भूवलये उद्भासी शोभमानः अथवा कुवलयेन हस्तस्थितकमललाञ्छनेन उद्भासते इति तथा अथवा कुवलयमिवउद्भासी कुवलयोद्भासी अथवा कुवलये कुवलयनामा कंसस्य गजरूपोऽसुरः तत्र तद्धिंसनेन उद्भासते इति कुवलयोद्भासी राशीभवद्गुणसेवधिः सर्वगुणनिधिः परिणतहृदारामः आसमन्तात् सर्वभावेन रामे बलरामे परिणतम् प्रह्वम् हृद् हृदयं यस्य स वामधीर्विप्रतिपन्नबुद्धिर्न अन्यद्विशेषणम्पूर्ववद्योज्यम् ॥ सर्गोऽयंहरिणीच्छन्दो बद्धोभाति न संशयः । तल्लक्षणन्तु रसयुगहयैन्सौम्रौस्लौगो यदाहरिणी तदा ॥ १ ॥

**क्वचन वचनैर्गोपालीनां तपोधनिनां क्वचिद्, द्रुवनरचनैर्यक्षादीनां पुरः सुरशासनैः ।**
**कृतवसुधनोत्पातैर्वा-तैः पराक्रमसंगमैः, स हि दृढमनाः सेहे देहे प्रतिग्रहनिग्रहम् ॥ २ ॥**

अन्वय—क्वचन गोपालीनाम् वचनैः तपोधनिनाम् यक्षादीनाम् पुरः सुरशासनैः द्रुवनरचनैः पराक्रमसंगमैः कृतवसुधनोत्पातैर्वातैः स हि दृढमनाः देहे प्रतिग्रहनिग्रहम् सेहे ॥ २ ॥

व्याख्या—क्वचन कुत्रापि गोपालीनां गोपश्रेणीनाम् गोपाङ्गनानां वा वचनैः यदृच्छाप्रयोजितैर्ग्राम्यभाषाभिः अथवा गांपृथ्वीं पान्तीति गोपाः नृपास्तेषां आलीनां श्रेणीनां वचनैः स्तुतिप्रयोजकैः क्वचित् क्वचन तपोधनिनाम् तपस्विजनानाम् पुरः अग्रे सुरशा-

मनैः महेन्द्रादिदेवनियोगैर्यक्षादीनां विद्याधरादीनां द्रुवनरचनैः द्रूणां वृक्षाणाम् वनानाम्विपिनानां वा रचनैः विधानैः पराक्रमसंगमैः पराक्रमिभिः बलवद्भिः कृतवसुधनोत्पातैः कृतोविहितः वसुधनानाम् रत्नबहुलानाम् उत्पातः वृष्टिः यैस्तैः अथवा वसुधनानां वह्निसमूहानामुत्पातः उपद्रवः तैः वातैः पवनैः यत् प्रतिग्रहं प्रत्युपकारं माहात्म्यमित्यर्थः अथवा प्रतिग्रहमुपद्रवम् निग्रहम् भर्त्सनादिकम् तत् दृढमनाः अविचलितबुद्धिः देहे निजकाये स जिनेश्वरः हीति निश्चये सेहे सोढवान् कथञ्चिदपि स्वनिश्चयान्नविचचालेति भावः ॥

अथ च पराक्रमः संगतैः पराक्रमस्य निजदृढसंयमस्य संगमैः संबन्धैः करणभूतैरित्यर्थः हीति निश्चये दृढमनाः सहनशीलप्रकृतिः स सेहे ततो विकृतिं न ययौ ॥

रामपक्षे—क्वचन कुत्रापि गोपालीनां राजश्रेणीनां गोपश्रेणीनां तपोधनिनां मुनीनाम् वचनैः कथनैः शिक्षाप्रयोजकैः सुरशासनैः गोकर्णाभिधयक्षरचनैः यक्षादीनाम् इभकर्णाभिधानादीनां द्रुवनरचनैः वृक्षाटव्यादिविधानैः पुरः नगरस्य च रचनैरित्यर्थः कृतवसुधनोत्पातैः कृतो विहितः वसुधनानां द्रव्यबहुलानां उत्पातः उत्पत्तिर्यैस्तैः वा इति पादपूरणे तैर्यक्षैः पराक्रमसंगतैर्बलवद्भिःसहेति शेषः देहे शरीरे प्रतिग्रहनिग्रहम् प्रतिग्रहस्य अदृष्टार्थदत्तद्रव्यस्य निग्रहं निवर्त्तनं सेहे प्रतिपालयामास तदानीं राज्यच्युतत्वात् प्रतिग्रहस्यापाततः स्वीकारः सम्भोक्तव्यःक्षत्रियाणाद्धर्ममितियक्षकृतसुवर्णादिवृष्ट्या तन्निग्रहो जात इति भावः ॥ २ ॥

कृष्णपक्षे–क्वचन गोपालीनां गोपराजीनां तपोधनिनां चारणर्षीणां वचनैः कथनैः पुरः प्रथमम् सुराणां रामकृष्णाभिरक्षकदेवानां शासनैर्निर्देशैर्यक्षादीनां द्रुवनरचनैः पर्वतवनादिविधानैः कृतवसुधनोत्पातैः अनेकविधसमृद्धिसम्पादनैः पराक्रमसंगतैः बलवद्भिः सहे-

तिशेषः देहे शरीरे प्रतिग्रहनिग्रहम् जरासन्धादिकृतोपद्रवादिक दृढमनाः स्थिरचित्तः कालम्प्रतीक्षन् सेहे सोढवान् ॥ २ ॥

अनुपदमगात् सीतात्युष्णातपादिपराभवो, द्रुपदतनुजाबाधा-व्याधात् प्रभोर्विषमाश्रयम् ।
व्यहरदवनीपीठे देवः सहान्वयिलक्ष्मणो, विशिखशिरसा धर्माधानाद्वराशयनाग्रही ॥ ३ ॥

अन्वय:—सीतात्युष्णातपादिपराभव प्रभो अनुपदमगात् द्रुपदतनुजाबाधा विपमाश्रय व्याधात् विशिखशिरसा धर्माधानात् वराशयनाग्रही सहान्वयिलक्ष्मण देवः अवनीपीठे व्यवहरत् ॥ ३ ॥

व्याख्या—सीतात्युष्णातपादिपराभवः शीतश्च अत्युष्णश्च आतपश्च इति सीतात्युष्णातपानि शसयोः साम्यात् तानि आदिर्यस्मिन् स चासौ पराभवश्चेतितथोक्तः हिमग्रीष्मरौद्रादिपराभवः प्रभोः सर्वशक्तिमतो जिनेन्द्रस्य प्रतिपदम् अनुपदम् पदेपदे इत्यर्थः अगात् अभूत् द्रुपदतनुजाबाधा-द्रूणां पदानां तनूनां द्वन्द्वः तेभ्यो जायते इति जा तस्याः द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकतः संबन्धः तथा च द्रुजा पदजा तनुजाया बाधा गमनबाधा विहारप्रतिबन्धिका मा प्रभोः जिनेन्द्रस्य विषमाश्रय वैरुच्यं अव्याधात् न अकृत अथवा तनुजा तनुजः कामः सैव तनुजा कामजनिता बाधा अव्याधात् न अकार्षीत्, किञ्च विशिखशिरसा शिखारहितशिरसा उपलक्षितः सहान्वयिलक्ष्मणः सहान्वयी सहचरो लक्ष्मणः लक्ष्मीवान् नृपो यस्य स अथवा लक्ष्म चिह्नं साधुवेषो यस्य स लक्ष्मणः सहान्वयी यस्येत्यर्थः धर्माधानात् धर्मस्य सुकृतेः आधानात् स्थापनात् आकलनाद्वा रात्रिन्दिवं धर्मचिन्तनात् हेतोः वराशयनाग्रही वरः श्रेष्ठः अनन्यसाधारणः आशयोऽभिप्रायो यस्य स वराशयः स चासौ नाग्रही चेति आग्रही वृथाविवादनिरतो न भवतीति वराशयनाग्रही

अथवा आममन्नान गृह्णातीति आग्रही शयनस्य स्वापस्य आग्रही शयनाग्रही स न भवतीति अशयनाग्रही वरश्चासौ अशयनाग्रही वरा शयनाग्रही देवः दीप्यमानः अवनीपीठे पृथ्वीतले व्यहरत् व्यचरत् ॥

रामपक्षे—सीता जनकनन्दिनी अत्युष्णातपादिपराभवम् अनुपदम् अगात् अलभत पराभव इति विभक्तिविपरिणामेनान्वयः महान्वयिलक्ष्मणः महान्वयी सहचरो लक्ष्मणो यस्य सः अवनीपीठे व्यहरत् वने व्यचरत् अन्यद्विशेषणं पूर्ववत् विशिखशिरसेत्यस्य विशिखः बाणः शिरः प्रधानं यस्य तेन उपलक्षितः " शिरः मस्तके प्रधाने सेनाग्रे चेती शब्दस्तोममहानिधिः ॥ "

कृष्णपक्षे—सीतात्युष्णातपादिपराभवः सीतायाः मदिरायाः य अत्युष्णातपादिः अतितीक्ष्णत्वादिः तेन पराभवः अनुपदम् प्रतिस्थानम् अगात् बलरामस्य तत् प्रियत्वात् द्रुपदतनुजाबाधा द्रुपदतनुजायाः द्रौपद्याः बाधा दुःशासनकर्तृकवस्त्राकर्षणादिः प्रभोः कृष्णस्य विषमाश्रयम् वैकल्यम् व्याधात् अकरोत् महान्वयिलक्ष्मणः महान्वयी सह सम्बन्धः लक्ष्म शंखचक्रादिर्यस्य स अन्यत् पूर्ववदासेयम् ॥ ३ ॥

स्मरसमसितिभाग् गुप्त्याधायी द्विषां विजयं ययौ, वलिकरिवरस्तादृग्वेलाबलादबलाश्रयः ।
अधिगतमहायोगात् संयोगवान् विरतिश्रिया, (श्रिया) विहितमनसा मुक्तेर्मुक्ते शिवे ह्यशिवद्रुहा ॥ ४ ॥

अन्वयः—स्मरसमसितिभाग् गुप्त्याधायी वलिकरिवर तादृग् वेलाबलात् अबलाश्रयः अधिगतमहायोगात् विरतिश्रिया संयोगवान् मुक्ते शिवे अशिवद्रुहा विहितमनसा मुक्तेर्द्विषां विजयं ययौ ४ ॥

व्याख्या–शरसमितिभाग् इर्यासमित्यादिपञ्चसमितिधारकः गुप्त्याधायी गुप्तित्रयधारणशीलः बलिकरिवरः बलिषु आत्मबलवत्सु करिवरो महागज इवेतिलुप्तोपमा संयमिषु मातङ्गः तादृग् तथाभूतः वेलाबलात् वेलायाः सीमाया भूमेः मर्यादाया इत्यर्थः साधुजनोचितक्षमतायाः आश्रयादितिभावः अबलाश्रयः अबलम् असामर्थ्यं आश्रयति धारयतीति तथा सत्यपि त्रिजगद्विपरिवर्तनसामर्थ्ये क्षमित्वान्नोपयुञ्जत इतिभावः अधिगतमहायोगात् अधिगत आश्रितो यो महायोगश्चित्तवृत्तिनिरोधो येन तस्मात् विरतिश्रिया वैराग्य लक्ष्म्या संयोगवान् संयुक्तः विरक्त इत्यर्थ आमुक्तेः मुक्तिसाधनपर्य्यन्तम् अशिवद्रुहा शिवम् कल्याणम् मोक्षमितियावत् नद्रोग्धि न हिनस्तीति अशिवद्रुहा विहितमनसा सावधानचेतसा मुक्ते मोक्षरूपे शिवे आत्यन्तिककल्याणे विषये द्विषाम्प्रतिबन्धकानां बाह्याभ्यन्तरशत्रूणां विजयं ययौ प्राप ॥ विरोधाभासः ॥

रामकृष्णपक्षे—शरसमितिभाग् शराणाम्बाणानां समितिम् संहतिम् भजतीति तथा बाणपुञ्जधारकः गुप्त्याधायी गुप्तिर्गोपनम् रक्षणम् ताम् आदधातीति तच्छीलः युद्धमार्गविशेषनिष्णातः बलिकरिवरः बलिषु बलशालिषु विपक्षेषु करिवर इव मत्तमातङ्ग इव अबलाश्रयः अबलां स्त्रियम् सीताम् सत्यभामाम्वा आश्रयति सहचरितया संगृह्णातीति तथोक्तः " स्त्रीयोषिदबलेत्यमरः " वेलाबलात् वेलायाः मर्यादायाः बलात् आश्रयणात् अन्यत्र समुद्रोपकूलस्य आश्रयणात् रामस्य मर्यादापुरुषत्वात् अधिगतमहायोगात् अधिगतः आसादितो यो महान् अयोगः राज्यनिवृत्तिर्येन तस्मात् अथवा अधिगतः महायोगः कवच संबन्धो येन तस्मात् अथवा अधिगतः महायोगः प्रभूतराज सम्मेलो येन तस्मात् विरतिश्रिया वनवासितया वैराग्यलक्ष्म्याः अथवा

विशेषेण गतिरिव श्रीश्शोभा यस्याः तया सीतया सत्यभामया च संयोगवान् सयुक्तः आमुक्तेः मुक्तिमभिव्याप्य. मुक्ते मोक्षंगते शिवे कल्याणजनके देवे जिनेन्द्रे इत्यर्थः निहितमनसा सावधानचेतसा अशिवद्रुहा शत्रुदमनेन द्विषा शत्रूणांविजयं जयम् विशेषतः ययौ नेमे ॥ ४ ॥

उपहृतिपदप्राप्तं नागादिमं वसु चाश्रयत्, तदुपरिगतः कायोत्सर्गे जिगाय पुराद्विपम् ।
स्वयमपि मनःशुद्ध्या बुद्ध्या जुगोप स गाः समा, रहसि सुदृशा क्रीडन्नानागमाश्रमवद्धधीः ॥ ५ ॥

अन्वय —स उपहृतिपदप्राप्तम् इमम् नागान् वसु चाश्रयत् तदुपरिगत. कायोत्सर्गे पुराद्विपम् जिगाय अनागमाश्रमवद्धधीर्न रहसि सुदृशा क्रीडन् स्वयमपि मनःशुद्ध्या बुद्ध्या समा गाः जुगोप ॥ ५ ॥

व्याख्या—स जिनेश्वरः भगवान् उपहृतिपदप्राप्तम् उपहारीकृतम् साधुदशायामप्युपढौकितम् इमम् नागादिमम् हस्त्यश्वादिकम् नागान् नस्वीचकार अथवा उपहृतिपदप्राप्तम् त्यक्तपदप्राप्तम् त्यक्तम् इमम् गजादिकम् वहुतरदुःखेऽपि न अगात् नालभत वसु तेजः अलौकिक मित्यर्थः आश्रयत् अधिकृतम् तदुपरिगतः तत्पश्चात् कायोत्सर्गे तदभिधानप्रणिधानक्रियाया पुराद्विपम् पूर्वशत्रुम् कामक्रोधादिकम् जिगाय जितवान नानागमाश्रमवद्धधीः आगमश्च आश्रमश्च इति आगमाश्रमे न आगमाश्रमे अनागमाश्रमे न अनागमाश्रमे वद्धधीर्यस्य स तथोक्तः आगमाश्रमश्रद्धालुः शास्त्राश्रमवद्धमनाः रहसि सुदृशा एकान्ते निर्जने इत्यर्थः सुदृशा सम्यक्दृष्ट्या तात्विकदृष्ट्या क्रीडन आत्मानन्दमनुभवन स्वयमपि मनःशुद्ध्या निसर्गतो निर्मलया बुद्ध्या विवेकेन समाःकृत्स्नाः गाः वाणीः जुगोप ररक्ष प्रयोजनातिरिक्तांवानवोचत वाचंयमो वभूवेत्यर्थः ॥ ५ ॥

श्रीमहावीरजिनेश्वरपक्षे—उपहृतिपदप्राप्तम् उपह्रियते प्राणादिर्यस्मिन् इति उपहृतिः बाहुलकात् क्तिः तत्पदमाप्तम् प्राणहारकपदप्राप्तम् नागादिमम् अतिशयजीवारुन्तुदम् कमपिनागम् सर्पम् प्रतिबोधायेति शेषः आश्रयत् तदुपकण्ठं ययौ तदुपरिगतः तत्समीपमुपगतः कायोत्सर्गे कायोत्सर्गमुद्रामालम्ब्य पुराद्विषम् पूर्वं सर्वशत्रुम् तं जिगाय तं प्रतिबोध्य सर्वद्विट्त्वं निवर्त्तयामास अन्यत्पूर्ववदवसेयम् ॥

रामकृष्णपक्षे–उपहृतिपदप्राप्तम् उपहारीभूतम् प्रत्यन्तनृपतिभिरुपढौकितम् नागादिमम् हस्त्यश्वादिकं वसु धनम् आश्रयत् आत्मसादकरोत् तदुपरि तत्पश्चात् गतः द्विषाम् रिपूणाम् कायोत्सर्गे शरीरत्यागे सति जिगाय विजितवान् मरणान्तानि वैराणीत्यनुसृत्येतिभावः रहसि विजने सुदृशा शोभननयनया सह क्रीडन् रममाणः नानागमाश्रमबद्धधीः नाना अगमे अनेकपर्वते आश्रमे गार्हस्थ्यादौ च बद्धधीः जाताभिनिवेशः, रामपक्षे नानाअगमे पर्वते–वृक्षे–वृक्षतले वा "सामीप्ये सप्तमी" आश्रमे कृतगृहबुद्धिः स्वयमपिमनःशुद्ध्या बुद्ध्या निर्मलान्तःकरणेन स रामः कृष्णश्च गाः पृथ्वीः समा अनेकवर्षं यावत् जुगोप ररक्ष पालितवान् ॥ ५ ॥

व्यसनरहितः कन्दुगाद्यं वशीकृतवान् वशी, विषयमपि न प्रौढाद् यत्नात् स्वनिश्रितमादधे ।
बहुपरिचितं शास्त्रं मात्राधिकं भुवि चालयँ–ल्लयमुपगता देवाः सेवारसेऽस्य विमृश्य तत् ॥ ६ ॥

अन्वय.—वशी व्यसनरहितः कन्दुगाद्यम् वशीकृतवान् प्रौढाद्यत्नात् स्वनिश्रितम् विषयमपि नादधे बहुपरिचितम् शास्त्रम् मात्राधिकम् भुवि चालयन् तत् विमृश्य देवाः अस्य सेवारसे लयमुपगता ॥ ६ ॥

व्याख्या—वशी जितेन्द्रियः विषयपराङ्मुखः कन्दुगाख्यम् तदाख्यशत्रुविशेषम् व्यसनरहितः सांसारिकभावकर्मजदोषरहितः वशीकृतवान् विजितवान अथवा कन्दुगाख्यम् गेन्दादिकं क्रीडाविशेषं वशीकृतवान त्यक्तवान् प्रौढाद्यत्नात् बहुतरमनः समाधानात् स्वनिश्चितम् स्वस्य साधोः निश्चितं निरवद्यभिक्षान्नादिकमपि विषयम् न आदधे जग्राह यावता कथमपि प्राणयात्रानिर्वहणं तावदेव जग्राहेति भावः बहुपरिचितम् नित्यमभ्यसितम् शास्त्रम् मात्राधिकम् अतिशयम् इयत्तारहितं यथा स्यात्तथा भुवि–भुवने चालयन् प्रथयन् तत् विमृश्य लोकोत्तरमहिमास्येति विचार्य अस्य जिनेन्द्रस्य सेवारसे परिचर्यायां रसिका इति शेषः देवा लयमुपगता स्वात्मानं प्रच्छाद्य वृक्षादिरूपेण शिष्यादिरूपेण च तिरोभूय सिषेविरे इति भावः ॥

रामकृष्णपक्षे–वशी जितेन्द्रियः स्वतंत्रः व्यसनरहितः अव्यसनासक्तः कन्दुगाख्यम् तदाख्यमान्तरशत्रुविशेषम् वशीकृतवान् स्वायत्तं विदधे स्वनिश्चितम् स्वनिर्धारितम् विषयमपि कार्यमपि पराष्ट्रादिकमपि न प्रौढाद्यत्नात् अनायासेनैव आदधे स्वानुकूलं विदधे बहुपरिचितम् शास्त्रम् शासनम् स्वकीयमित्यर्थः मात्राधिकम् सर्वतः स्वपरमण्डले च भुवि चालयन् प्रसारयन् तत् विमृश्य विचार्य देवा मुनिमन्तो नृपाः अस्य रामस्य कृष्णस्य च सेवारसे सेवायाम् लयम् तदधीनत्वम् उपगताः प्राप्नुवन्तो वशवर्त्तिनो बभूवुरितिभावः ॥ ६ ॥

सहचरतया ये संजातास्तदा च–रणादिपु, निरशनतया तेऽपि प्रापुर्भुवं हरशेखराम् ।
सुरसमुदितां सिन्धोः पारे भवस्य परम्परा- क्रमणवशतो-लङ्कारागं प्रतीत्य महापदम् ॥ ७ ॥

अन्वयः—तदा च रणादिषु सहचरतया ये सजातास्तेऽपि सिन्धोः पारे सुरसमुदिताम् भवस्य परम्पराक्रमणवशात् महापदं कारागं प्रतीत्य निरशनतया हरशेखराम् भुवम् प्रापुः ॥ ७ ॥

व्याख्या—तदा च रणादिषु तस्य जिनेश्वरस्यादिनाथस्य आचरणादिषु तदीयालौकिकचमत्कारकारिव्यापारेषु सहचरतया अनुगामितया ये संजाताः संगता अनुसृताः तेऽपि निरशनतया उपवासतया प्रभुस्तु निरवद्यभिक्षाऽलाभेन कतिचिद्दिनानि उपवसतिस्म एते पुनस्तथाविधसामर्थ्यविरहेण तथाकर्तुमशक्नुवन्तस्तत्परिजह्नुरितिकथासन्दर्भः । सुरसमुदितां देवताकृताधिष्ठानाम् हरशेखराम् भुवम् गंगातटम् प्रापुः जग्मुः किंकृत्य सिन्धोः संसारसागरस्य पारे तटे भवस्य जन्मनः परम्पराक्रमणवशतः अनेकजन्मकृतपुण्यपुञ्जप्रभावतः समासादिते महापदम् आत्यन्तिकसुखजनकम् पुनरावृत्तिरहितम् कारागम् आसमन्ताद्रागः आरागः कस्य आत्मनः स्वस्वरूपस्य ब्रह्मणः मोक्षस्येति यावत् रागमनुरागम् अलमतिशयं प्रतीत्य परित्यज्य विहाय, संसारसागरपारगताऽपि किञ्चित् क्लेशमसहमाना पुनरागता इति तात्पर्यम् ॥

अन्येषामर्हतापक्षे-तदा व्रतग्रहणसमये सहचरतया अनुचरतया ये नृपतयःतदाचरणादिषु तेषां जिनेन्द्राणाम् आचरणादिषु व्रतादिग्रहणेषु संजाताः सगताः व्रतं जुगृहुः तेऽपि निरसनतया सांसारिकभोगादिपरित्यागतया "शसयोरैक्यात्" हरशेखराम् हरत्यघमितिहरः पवित्रम् तस्य शेखराम् मूर्धन्यामतिशयपवित्राम् भुवम् प्रापुः लेभिरे किंकृत्य सुरसमुदिता सुष्ठुरातिददातीति सुरः देवः तेन समुदिताम् सहिताम् सप्रसन्नाम् भुवमित्यर्थः भवस्य ससारसमुद्रस्य पारे परम्पराक्रमणवशतः पुनर्पुनर्गमनागमनतः महापदम् महत्संकष्टजनकम् कारागम् कस्यशरीरस्य के शरीरे वा रागमनुरागम् प्रीतिमित्यर्थः प्रतीत्य परित्यज्य ॥

रामपक्षे—सहचरतया अनुचरतया तदा वनगमनकाले चरणादिषु रामगमनादिषु ये संजाताः अनुसृतास्तेऽपि रामेण परित्यक्ततया निर्गमनतया हरशेखरां भुवम् अतिशयपवित्रामयोध्यापुरम् प्रापुर्गच्छन्तिस्म किं कृत्वा सुरसमुदिताम् सुरन्ति ऐश्वर्यदीप्तिम् प्राप्नुवन्तीति सुराः भनिनस्तैः समुदिताम् समिलितामयोध्याम् सिन्धोः समुद्रस्य पारे तटे भवस्य भवत्यस्मिन्निति भवः पृथ्वीतलस्तस्य परम्पराक्रमण वशतः सततगमनवशतः लङ्कारागम् लंकाया तन्नामपुर्यां रागोऽनुरागो यस्य तम् महापदम् भयङ्करम् रावणमित्यर्थः प्रतीत्य बुध्वा तत्र वने लङ्कापतिर्भ्रमतीति भयमुत्प्रेक्ष्य निवृत्ता इति भावः ॥

तदा चरणादिषु तस्य श्रीमदादिनाथस्य आचरणादिषु दीक्षाग्रहणादिव्यापारेषु सहचरतया अनुगामितया ये सजाताः संगता, तदानीं दीक्षा जगृहुः कच्छमहाकच्छादयः तेऽपि निर्गमनतया निरवद्यभिक्षालाभात् उपवासतया, भवस्य संसारस्य सिन्धो सागरस्य संसारसागरस्येत्यर्थः पारे प्रान्ते सन्निधौ परपराक्रमणवशतः सततगमनागमनतः कारागं इन्द्रियसुख सांसारिकवैषयिकसुखं अलम् अतिशयम महापदम् महद्दुःखजनक प्रतीत्य बुद्ध्वा सुरसमुदिता देवाधिष्ठिताम् हरशेखरा भुवं गंगाप्रदेशं प्रापुः ते जटिलास्तापसा भूत्वा तत्रतस्थुरित्यर्थः। पार प्रान्ते परतटे पारीपूरपरागयोरित्यनेकार्थसंग्रहः ॥

कृष्णपक्षे—तदा युद्धादिसमये सहचरतया सहायकतया तदा चरणादिषु तस्य जरासंधस्य आचरणादिषु युद्धादिषु संजाताः संगतास्तेपि निर्गमनतया कृष्णकृतोपजापतया भेदप्रयोगेण सुरसमुदिताम् महर्द्धिजनसंकुलाम् देवाधिष्टितां वा सिन्धोः समुद्रस्य पारे स्थितामिति शेषः हरशेखरामतिपवित्रां द्वारकां प्रापुः किंकृत्य भवस्य मंगलस्य परम्पराक्रमणवशतः उत्तरोत्तरसंपादनवशतः कृष्णाश्रयेण दिनानुदिनं मङ्गलमवश्यम्भावीति निश्चित्य अलमतिशयं के कृष्णे भगवति ऐश्वर्य शालिनि आरागं समन्ततोऽनुरागं प्रतीत्य

ज्ञात्वा विचार्येत्यर्थः श्लेषः ॥ ७ ॥

गिरिश इव योऽशेताद्रीणां वनेऽनवनेऽप्ययं, तमपि विदधद् दृश्यं वश्यं गिरीशमिवापरम् ।
दिनकर इवोद्दामं धाम प्रपद्य भुजाबले, परिजनगणव्यावृत्त्याऽग्रे चचाल विशालधीः ॥ ८ ॥

अन्वय.—योऽयम् अनवनेऽपि अद्रीणा वने गिरिश इव अशेत तमपि अपर गिरीशमिव वश्य दृश्यम् विदधत् भुजाबले दिनकर इव उद्दामम् धाम प्रपद्य परजनगणव्यावृत्त्या विशालधी. अग्रे चचाल ॥ ८ ॥

व्याख्या—योऽयं जिनेश्वरः अनवने अपि अवनम् रक्षणम् नभवतीति अनवनम् अरक्षणम् तस्मिन् रक्षारहितस्थाने निर्जने इत्यर्थः अद्रीणां पर्वतानां वनेऽरण्ये गिरिश इव गिरौ शेते इति गिरिशः वनीयो भिल्लादिः स इव अथवा गिरिम् श्यति उपभोगेन तनूकरोतीति गिरिशः " लोमादित्वाच्छः " शिवः स इव शेते स्वपिति यः सर्वदा गिरिशो भवति स कदाचिदपि दृश्यो न भवति तमपि गिरिशमपि स्वमितिशेषः अपरम् द्वितीयम् गिरीशम् शिवम् इव अथ वा गिरीणामीशः हिमालयस्तमिव दृश्यम् दर्शनयोग्यम् वश्यम् प्रसादसुमुखम् सेवायोग्यम् विदधत् कुर्वत् उद्दामधाम उद्रिक्तं तेजः भुजाबले बाहौ दिनकर इव प्रपद्य प्राप्य परिजनगणव्यावृत्त्या परिचारकजनपरित्यागेन विशालधीः महानुभावः अग्रे ततोप्यग्रतः चचाल वव्राज ॥ ८ ॥ सर्वपक्षसामान्यमेतद्व्याख्यानम् ॥

कमपि मनसा नाधान्नाथः प्रियं यदिवाऽप्रियं, कलिमलमपि त्यक्तुं व्यक्तः क्वचित्प्रययौ रहः ॥

क्वचनविजने तस्थौ स्वस्थो ररक्ष न रक्षकं, न खलु परतो रक्षापेक्षा प्रभौ हरिणाश्रिते ॥ ९ ॥

अन्वय —नाथः प्रियं यदि वाऽप्रियं किमपि मनसा नाधात् कलिमलमपि व्यक्तः त्यक्तु क्वचिद्रहः प्रययौ स्वस्थः क्वचनविजने तस्थौ रक्षकं न ररक्ष हरिणाश्रिते प्रभौ परतो रक्षापेक्षा न खलु ॥ ९ ॥

व्याख्या—नाथः प्रभुः मनसा बुद्ध्या कमपि प्रियं शरीरसुखकरं दुःखजनकं वा नाधात् नाविन्दत प्रियं प्राप्य सुखाभिमानी अप्रियं प्राप्य दुःखाभिमानी न बभूवेति तत्त्वं व्यक्तः स्फुटं कलिमलमपि कलेः कर्मणः मलमपि परिणाममपि " प्रभौ पापस्य दुर्लक्षणात् कलिशब्देन कर्म एव लक्ष्यते" त्यक्तुन्निराकर्तुम् क्वचित् कुत्रापि रहः विजनमेकान्तस्थानम् प्रययौ जगाम स्वस्थः निराकुलः निर्भीकः सन् क्वचनविजने निर्मनुष्यके स्थले तस्थौ स्थितवान् रक्षकम् शरीरपरिपालकम् कमपि न ररक्ष नापेक्षितवान् तथाहि प्रभौ हरिणाश्रिते प्रभौ जिनेश्वरे हरिणाश्रिते संयमाश्रिते सति अथवा इन्द्राश्रिते सति इन्द्राधिष्ठिते सति दिशाश्रिते विहरमाणे सतीति वा परतः अन्यतः स्वभिन्नात् रक्षापेक्षापालनापेक्षा न खलु नैवभवतीत्यर्थः स्ववीर्यगुप्ता एते भवन्तीति भावः अर्थान्तरन्यासालंकारः ॥

रामपक्षे कृष्णे च—कमपि प्रियम् मित्रं यदिवा अथवा अप्रियं शत्रुम् मनसा चित्तेन न अधात् न धृतवान् कलिमलमपि विरोधपरिणाम युद्धमपि त्यक्तु परित्यक्तुं क्वचित् कुत्रापि व्यक्तः स्पष्टः सन् रहः एकान्तं प्रययौ विजने निर्जने स्वस्थः अकुतश्चनभयः तस्थौ रक्षकं न ररक्ष नापेक्षितवान् हरिणाश्रिते लक्ष्मणाधिष्ठिते समुद्राश्रिते च प्रभौ प्रभावशालिनि रामे कृष्णे च परतः अन्यतः शत्र्वादिमित्रपुरुषात् रक्षापेक्षा पालनाभियोगः न नैव भवतीति ॥ ९ ॥

अशितममुना यावद् वर्षं न तादृशयोगतो, बहुमहिमवान् शान्तिप्रेम्णा स्थिरो हिमवानिव ॥
अभजत परच्छायामायासतः श्रमवान् नवा, वपुषि समतां बिभ्राणः स्वैः स वै-श्रमणोचितास् ॥ १० ॥

अन्वय.—अमुना तादृशयोगत यावद्वर्षंन्न अशितम् शान्तिप्रेम्णा बहुमहिमवान् हिमवान् इव स्थिरः आयासत. श्रमवान् न वा स वै स्वैः वपुषि श्रमणोचिताम् समताम् बिभ्राण परच्छाया अभजत ॥ १० ॥

व्याख्या—अमुना जिनेश्वरेण न तादृशयोगतः तादृशयोगस्य निरवद्यभिक्षालाभजनकयोगस्य अभावात् यावद्वर्षं वर्षपर्यन्तं न अशितं न भुक्त शान्तिप्रेम्णा शमाभिनिवेशेन बहुमहिमवान् महतोभावो महिमा बहु अतिशयं महिमा महत्वं यस्य स अतिशयगौरवान्वितः हिमवानिव हिमालय इव स्थिरः शान्तः यथा हिमवान् निश्चलस्तथायं शान्त्याश्रयनेन भूरिमहिमतया दुर्जनादिकृतोपजापेऽपि निराकुल इति तात्पर्यं आयासतः गमनागमनादिपरिश्रमतोऽपि श्रमवान्न वा नैवश्रान्तः स वै प्रभुः स्वैः स्वत एव वपुषि शरीरे श्रमणोचितां यतिविहितां मुनिप्रचलिता समतां सामरस्य बिभ्राणः धारयन् परच्छायामुत्कृष्टकान्ति सर्वतोऽधिका दीप्तिं अभजत आश्रयत लोकोत्तरकान्तिरभवत् ॥ १० ॥

रामकृष्णपक्षे—यावद्वर्ष जम्बूद्वीपांशभेदं यावत् भरतक्षेत्रखण्डत्रयमितियावत् अमुना रामेण कृष्णेन वा अशितं व्याप्तं अधिकृतस्वशासनं "अशेः आदिकर्मणि क्तः सेटकत्वं च" नतादृशयोगतः नतानां स्वशरणमुपगतानामासमन्तात् सर्वतोभावेन दृशयोगतो नेत्रपाततः दयावलोकनतः बहुमहिमवान् अतिशयमहिमासम्पन्नः शान्तिप्रेम्णा शान्तिवात्सल्येन हिमवान् हिमालय इव स्थिरः अप्रकम्पः

आयामतः वनभ्रमणतः प्रजारक्षणतः श्रमवानपि नैव श्रान्तः स्वैः स्वत एव स्वप्रभावादेव वपुषि शरीरे समतां बिभ्राणः वैश्रमणोचितां कुबेरतुल्यां परच्छायामत्युत्कटकान्तिं अभजत समाश्रयत ॥ १० ॥

पथि कथमपि श्रान्तः कान्तानुयायिविलम्बितस्तपसि रसिकस्तस्थौ मार्गेऽभयः स्वयमप्ययम् ।
वनचरधने दृष्टे दृष्टेर्दधौ न विपर्ययं, मनसि समयस्यैवं न्यायं विचिन्त्य सपर्ययम् ॥ ११ ॥

अन्वय —पथि कथमपि श्रान्तः कान्तानुयायिविलम्बितः तपसि रसिकः अयम् स्वयमपि मार्गे अभयस्तस्थौ मनसि समयस्यैव सपर्ययं न्यायं विचिन्त्य वनचरधने दृष्टे दृष्टेः विपर्ययं न दधौ ॥ ११ ॥

व्याख्या—पथि मार्गे कथमपि यथातथा श्रान्तः जातश्रमः कान्तानुयायिविलम्बितः कान्तो मनोरमो योऽनुयायी अनुसरणशील स्तेन विलम्बितः आश्रितः कृतधर्मकथानकः तपसि तपश्चर्यायां रसिकः निरतः अयम् जिनेश्वरः स्वयम् आत्मनापि अभयः निर्भीकः मार्गे पथि तस्थौ स्थितः समयस्य कालस्य अवस्थायाः वा सपर्ययम् पर्ययो वैपरीत्यम् तेन सहितम् सपर्ययम् सवैपरीत्य न्यायं नीतिं मनसि हृदये विचिन्त्य विचार्य निश्चित्य वनचरधने वनचराणाम् विपिनवासिना धने रिक्थे पर्वतीयमण्यादौ निर्मायिको योगिति न दृष्टे नयनगोचरे सत्यपि दृष्टेर्नेत्रस्य विपर्ययम् विपर्यासम् तद्विषयाभिलापं न दधौ न धृतवान् दृष्टेऽपि विषये विषयाभिलापो न जात इति भावः ॥ विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा इत्यपि सङ्गच्छते ॥ ११ ॥

समवसरणपक्षे-पथि मार्गे वनमार्गे अन्यत्र रैवतकादौ विहारमार्गे कथमपि श्रान्तः जातायासः कान्तानुयायिविलम्बितः कान्ता

स्वप्रिया सीता सत्या वा सैव अनुगायिनी यस्य तेन विलम्बितः कृतविलम्बः तदनुरोधेन कृतविश्रामः तपसि तपोविषये तपोवने वा रसिकः कृतादरः अन्यत्र तपसि फाल्गुनेऽर्जुने वा रसिकः माघमासे वा रसिकः शृङ्गारिजनप्रियत्वात् वनच दृष्टे इत्यादि धरने पूर्ववद्योज्यम् ॥ ११ ॥

कतिपयदिनैरीशः श्रेयानकारयदञ्जसा, विनयनयभाग् भिक्षोरिक्षोः प्रियां रसपारणाम् ।
सपदि सदने वृष्टिश्चासीत् तदाशु हिरणमयी, त्रिदशललनाश्चक्रुर्नृत्यं रसादवशाः शुचि ॥ १२ ॥

अन्वय.—कतिपयदिनै अञ्जसा विनयनयभाग् ईश. श्रेयान् भिक्षो प्रिया इक्षो रसपारणाम् अकारयत् तदा आशु सदने सपदि हिरण्यमयी वृष्टि आसीत् अवशा. त्रिदशललना. शुचि नृत्यम् चक्रु ॥ १२ ॥

व्याख्या—कतिपयदिनैः कतिचिद्दिवसैः विनयनयभाक् विनयम् विनीतताम् नयम् नीतिञ्च भजति सेवते इति तथा सारल्यनय-निपुणः ईशो युवराजः श्रेयान् श्रेयांसकुमारः अञ्जसा झटिति भिक्षोः भिक्षाचरणशीलस्य जिनेश्वरस्य आदीश्वरस्य प्रियां मनोज्ञां पवित्रां निरवद्यामिति यावत् इक्षोः रसालस्य रसालइक्षुरित्यमरः रसपारणाम् रसप्रचुरां पारणां व्रतान्तभोजनम् अकारयत् तदा प्रभुपारणानन्तरम् सपदि सहसा सदने गृहे हिरण्मयी सुवर्णमयी वृष्टिर्वर्षणम् आसीत् अभूत् आशु शीघ्रम् त्रिदशललनाः देवाङ्गना अप्सरस इत्यर्थः रसात् प्रभुभक्तिरसतः अनुरागाद्वा अवशा भक्तिपरतंत्राः शुचि शोभनम् नृत्यम् चक्रुर्विदधुः ॥

श्रीशान्तिनाथ पार्श्वनाथ नेमिनाथ वर्धमानस्वामिनां पक्षे—कतिपयदिनैः कतिचिद्व्यतीतैर्दिवसः ईशः श्रेष्ठः नृपो वा श्रेयान्

अनियमेन प्रशस्य शुभयुः विनयनयभाग् दाक्षिण्यनययुक्तः इक्षोः इः कामस्तं क्षौति नाशयतीक्षुः तस्य जितमदनस्य भिक्षोः भिक्षाचारिणो जिनेन्द्रस्य प्रियाम् रुचिरामनवद्याम् रसपारणाम् मधुररसप्रधाना पारणा व्रतान्तभोजनम् अकारयत् व्यधापयत् तथा च श्रीशान्तिनाथस्य सुमित्रनृपमन्दिरे परमान्नेन पारणा जाता श्रीपार्श्वनाथस्य कोपकनामनगरे धन्यकगृहे पायसेन पारणा जाता नेमिनाथस्य वरदद्विजगृहे परमान्नेन पारणा जाता महावीरस्वामिनः बहुलब्राह्मणगृहे परमान्नेन पारणा जाता सपदि सदने इत्यादि पूर्ववत् ॥

रामपक्षे-ईशः राजा श्रेयान् कल्याणवान् विनयनयभाग् इक्षोः जितकामस्य भिक्षोः चारणर्षेः त्रिगुप्तस्य सुगुप्तस्य च कतिपयदिनैर्मासानन्तरम् अञ्जसा झटिति प्रियां निरवद्याम् रसपारणाम् अकारयत् रामः शेषं पूर्ववत् ॥

कृष्णपक्षे-कतिपयदिनैः कतिपयदिनपर्यन्तं इक्षोः कामजयिनः भिक्षोर्जिनेन्द्रस्य प्रीयाम् प्रीतिसम्पादिकाम् रसपारणाम् अष्टाह्निकतपश्चर्याम् द्वारकानिर्माणाय अकारयत् व्यचरयत् सपदि हिरण्मयीत्या दिपूर्ववदवसेयम् ॥ १२ ॥

प्रकृतिसुभगः श्रेयोलिप्सुः सुमित्रपवित्रवाक्, शुचिरसमयं मत्वाऽदत्त प्रभोर्बहुरोचितः ।
सपदि मुदितो धन्यो जन्योज्झितः प्रतिलम्भनादरिपरिभवाद् दूरे दूरे यशः स्वमकारयत् ॥१३॥

अन्वय—प्रकृतिसुभगः श्रेयोलिप्सुः सुमित्रपवित्रवाक् प्रभोर्बहुरोचितः शुचि. असमयं मत्वा अदत्त मुदित धन्यः जन्योज्झित प्रतिलम्भनात् अरिपरिभवात् दूरे दूरे स्व यशः अकारयत् ॥ १३ ॥

व्याख्या—प्रकृतिसुभगः स्वभावसुन्दरः श्रेयोलिप्सुः कल्याणाभिलाषुकः सुमित्रपवित्रवाक् सुमित्रेण शोभनसुहृदा तत्संगेनेत्यर्थः

प्रभावेन पवित्रवाक् सत्यवचनः प्रभाजिनेन्द्रस्य बहुरोचितः अत्यन्तभक्तः ''चतुर्थी चाशिष्यायुष्येति विकल्पेन षष्ठी शुचिः पूतः असमयम् भिक्षायाः कालातिक्रमो जात इति अनवसरं मत्वा बुध्वा निवृत्तेषु भिक्षाचरेषु सत्सु अदत्त प्रभवे भिक्षामिति शेषः सपदि तत्क्षणे मुदितः जिनेश्वररूपसत्पात्रदानादतिशयहृष्टमनाः धन्यः अत एव कृतकृत्यः जन्योज्झितः कलिरहितः प्रतिलम्भनात् भिक्षा-दानात् कथंभूतात् अरिपरिभवात् अरिम् बाह्याभ्यन्तरशत्रुं परिभवति पराकरोतीति तस्मात् दूरे दूरे त्रिलोक्यां स्वम् यशः स्वकीयकीर्तिम् अकारयत् प्राख्यापयत् ॥

रामकृष्णपक्षे—प्रभोः स्वामिनः साधोः प्रतिलम्भनात् भिक्षाप्रदानात् अन्यत् यथापूर्वम् ॥ १३ ॥

**वनमुपगतं सेवे देवं नमिर्विनमिर्नृपः, श्रुतिदृगपि च प्रादात्ताभ्यां बलं बहुविद्यया ।**
**रजतशिखरिस्थाने राज्यश्रिया परिवारितौ, सुखमनुपमं भुञ्जाते तौ खगामिषु कामितम् ॥१४॥**

अन्वयः—नमिर्विनमिर्नृप वनमुपगतम् देवम् सेवे श्रुतिदृगपि च बहुविद्यया बलम् ताभ्याम् प्रादात् रजतशिखरिस्थाने राज्यश्रिया परिवारितौ तौ खगामिषु कामितम् अनुपमम् सुखम् भुञ्जाते ॥ १४ ॥

व्याख्या—नमिः विनमिः नृपः तदभिधानकौ आदीश्वरभगवतः कुलजौ वनमुपगतम् वनस्थम् दीक्षितमित्यर्थः देवम् आदीश्वरम् सेवे भेजे ततः श्रुतिदृगपि धरणेन्द्राभिधो नागोऽपि तपो राज्याभिलापं ज्ञात्वेतिशेषः ताभ्याम् नृपाभ्याम् बहुविद्यया अनेकविधतिर-स्करिण्यादिविद्यया सहेतिशेषः बलम् बहुविधसामर्थ्यम् प्रादात् अर्पयत् रजतशिखरिस्थाने वैताढ्यपर्वते राज्यश्रिया राज्यलक्ष्म्या

परिवारितौ युक्तौ तौ नमिविनमिभूपौ खगाभिपु आकाशचारिपु अनुपमम् निरुपमम् कामितम् यथेष्टम् सुखम् भोगम् भुञ्जाते भोगम् कृतः अचिन्त्यप्रभावो जिनेश्वरो येन ताभ्याममर्त्यदुर्लभ सुखसद्यः दीयतेस्मेति भावः ॥ १४ ॥

अन्यपक्षे—नमते इति नमिः विशेषेण नमते इति विनमिः तौ वनमुपगतम् वनस्थम् देवम् प्रभु सेवे श्रुतिः शास्त्रम् दृग् नेत्रं न यस्य स श्रुतिदृग् अथवा श्रूयते प्रख्यायते इति श्रुतिः श्रुतिः प्रख्याता अनन्यसाधारण्येन विख्याता दृग् नेत्रं यस्य स श्रुतिदृग् तत्सकाशः ताभ्याम् सेवकाभ्याम् बहुविद्यया अनेकविधविद्यया बलम् निरुपमसामर्थ्यम् प्रभुसेवासुमुखः मन्त्रित्यर्थः प्रादात् ददातिस्म शेषं पूर्ववत् ॥

कृष्णपक्षे—नमिर्विनमिर्नृपः वनमुपगतंसमुद्रजलान्तर्द्वारिकास्थं देवम् दीप्तिमन्तम् कृष्णम् सेवे श्रुतिदृग् शास्त्रदृष्वा कृष्णस्ताभ्यां सेवकाभ्याम् बहुविद्यया समम विदन्त्यनया वैषयिकसुखमिति विद्या कन्या तया सह बलम् सैन्यम प्रादात् प्रायच्छन् तौ रजतशिखरिस्थाने रैवतकपर्वते राज्यश्रिया राज्यश्रीरिवश्रीः शोभा सम्पत् तया परिवारितौ युक्तौ खगाभिपु आकाशगामिपु कामिन्तमनोभिलषितमनुपममनन्यसाधारणम् सुखमानन्दमुपभुञ्जाते अनुभवतः ॥ १४ ॥ रामपक्षे द्वितीयपक्षवज्ज्ञेयम् ।

मगधविषये राजा गेहे रुषा प्रतिमाधवं, विशदसिचयं भूषायोगाच्चचाल बलं नमत् ।
समरसहितं पत्यादेशादतिक्रमकृत् समं, बहलनिनदैस्तूर्यैरापूरयद्व्वलयं दिशाम् ॥ १५ ॥

अन्वय —मगधविषये राजा गेहे रुषा प्रतिमाधवं भूषायोगात् विशदसिचय नमत् बलम् चचाल समरसहितम् पत्यादेशादतिक्रमकृत् समम्

बहलनिनदैः तूरैः दिशाम् वलयम् आपूरयत् ॥ १५ ॥

व्याख्या—मगधविषये मगधदेशे राजां गेहे राजन्ते इति राजस्तेषां गेहे साम्प्रतं राजगृहनाम्नाप्रसिद्धे प्रतिमाधवं प्रतिवासुदेवम् जरासन्धमुद्दिश्यरुषा विशदसिचयम् विशदाः देदीप्यमानाः असिचयाः खड्गसमूहा यस्मिन् तत्तथोक्तम् अथवा विशदास्तीक्ष्णाः असिचयाः यत्र तद् अथवा विशन्तः प्रविशन्तः संकुलीभवन्तः असिचयाः खड्गाः यत्र तद् भूषायो गात् सांग्रामिककवचाद्याभरणसंबन्धात् नमत् आकुञ्चत् समरसहितम् समरे संग्रामे सहितम् हितविधायकम् नतूपजापादिनापराङ्मुखम् अथवा समरसे शान्तियुक्तेहितम् अबाधकम् पत्त्यादेशात् पत्तेः सेनापतिविशेषस्य "एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका इत्यमरः" इत्युक्तलक्षणस्य आदेशात् आज्ञातः अतिक्रमकृत् "अहितान् प्रत्यभीतस्य रणे यानमतिक्रम इत्यमरः" इति निर्भीकतया शत्रुसन्मुखगमनकारकम् बलम् सैन्यम् बहलनिनदैः भूरिनिनदमानैः तूरैस्तूर्यैः दिशाम् वलयम् दिग्विभागम् आपूरयत् स्थगयत् चचाल ययौ ॥

अर्हतांपक्षे—विभक्तिविपरिणामेन सर्वत्रान्वयः तथा च मगधविषये मगधदेशे राजां गेहे राजगृहादिपुण्यस्थाने अरुषा अक्रोधेन प्रतिमाधवः प्रतिमा कायोत्सर्गं धन्वति प्राप्नोतीति प्रतिमाधवः कायोत्सर्गकृत् धन्वतेः पचादित्वादच् विशदसिचय विशेषण सद्गतः त्यक्तशातनो लोकपीडा येन स विशद्, असिचयः सिचयो वस्त्रं नास्ति यस्य स तथोक्तः भूषाया अलंकारस्य अयोगात् असंबन्धाद्राहित्येन चालवलः चाले गमने तस्करादिसम्बाधसंबाधितेऽपि अप्रतिहतगमनः नमन् नमन्ति जना यम् स अथवा नमन् सर्वत्र प्रह्वः निरहंकारः सम रसहितः शमरसे शान्तरसे हितः युक्तः शान्तिरसयुक्तः अतिक्रमकृत् अतिशयं क्रमं पादविक्षेपम् गमनम्

करोतीति स पाति जगदिति पतिः सूर्यस्तस्यादेशात् दर्शनात् सूर्यदर्शनान्तरम् समम् मुनिभिः महित बहलनिनदैः बहलं यथास्यात्तथा निर्गतः नदः शब्दः येषु तैः शब्दरहितैः तूर्यैर्गमनैः दिशांवलयम् दिग्विभागम् आपूरयत् पूरयतिस्म ॥

कदाचित् सुगुप्तनामाचारणर्षिर्जटायुपूर्वभववृत्तान्तं कथयन् पालकब्राह्मणकथा कथयति मगधेति। मगं पापं दधातीति मगधः तस्य विषयस्तस्मिन् राजा गेहे कुंभकारकटे नगरे माधवं प्रतिरुपा मायाः चन्द्रः भर्ता लक्ष्मीपतिः जितशत्रुनृपनन्दनस्कन्दककुमारस्तं प्रति रुपा क्रोधेन पूर्ववैरं स्मरन् पालकः अनेकान्यस्त्राणि स्कन्दकाचार्यनिवासस्थाने रात्रौ भूमौ निचखान प्रातः नृपतिर्मुक्तविशेषणविशिष्टमनाय तत्रानयत् नासौ साधुः कपटयुद्धाय समागत इति युद्धोद्योगमकारयदिति भावः ॥ १५ ॥

बलमविरलाश्वीयं स्वीयं विलोक्य पुरा जरा-परिगतमहासन्धो गन्धोत्तमापरिणामतः।
प्रतिहरिधिया तुष्टः स्पष्टं जगर्ज स गर्जवत्, क्षणमपि कदा प्रेक्ष्ये कंसापराधिविनाशनम् ॥ १६ ॥

अन्वय—पुरा जरापरिगतमहासन्ध गन्धोत्तमापरिणामत अविरलाश्वीय स्वीय बलं विलोक्य प्रतिहरिधिया तुष्टः स गर्जवत् स्पष्ट जगर्ज क्षणमपि कदा कंसापराधिविनाशनम् प्रेक्ष्ये ॥ १६ ॥

व्याख्या—पुरा जरापरिगतमहासंधः जरया तन्नामकोपमात्रा परिगतः प्राप्तः महासंधः महासंघट्टनः सम्मेलनो येन स जन्मकाले द्वेधा कृतस्तत्तदोपमाता संघट्टयामासेतिसन्दर्भः जरासंधनामानृपः प्रतिहरिधिया कृष्णप्रतिस्पर्द्धितया अविरलाश्वीयं अविरलम् निरन्तरम् अश्वीयम् अश्वानामसमूहो यत्र तम् अश्वप्रधानकम् स्वीयम् नैजम् बलम् सैन्यम् विलोक्य निरीक्ष्य गन्धोत्तमापरिणामतः

गन्धोत्तमायाः मदिरायाः परिणामतः परिपाकतः सेवनतः तुष्टः प्रसन्नः सन् गर्जवत् मत्तमातङ्ग इव स्पष्टम् प्रकाशं यथास्यात्तथा जगर्ज ननर्द तथाहि क्षणमपि मुहूर्तमात्रमपि कंसापराधिविनाशनम् कंसम् अपराध्नोतीति कंसापराधी वासुदेवः तस्य विनाशनम् मरणम् कदा कस्मिन् समये प्रेक्ष्ये अवलोकयिष्ये इति दध्याविति शेषः ॥

अर्हतांपक्षे—स महाप्रभुर्जिनेश्वरः जरापरिगतमहासंधः आसर्वतः परिगता आपरिगता जरा जीर्णा आपरिगता आपरिणमिता महासन्धा महती प्रतिज्ञा संयमपालनरूपा यस्य स अवान्तरतत्पुरुषो बहुव्रीहिः दृढसंयमी अविरलाश्वीयम् असुवते विषयमित्यश्वाः इन्द्रियाणि तेभ्यो हितम् रोधकमिति अश्वीयं स्वीयम् इन्द्रियदमनयोग्यं नैजंबलं सामर्थ्यं अविरलम् विलोक्य दृष्ट्वा गंधोत्तमापरिणामतः गधोत्तमायाः पद्मिन्यादिकामिन्याः परिणामतः त्यागतः अथवा गंध एव उत्तमो यस्यां सा गन्धोत्तमा इन्द्रियविषया तस्याः परिणामतः वर्जनतः जितेन्द्रियत्वात्तद्विषयमपि परिजिहीते प्रतिहरिधिया शिवबुद्ध्या यथा स स्मरहरस्तथाहमपीतिबुद्ध्या गर्जवत् गजवत् स्पष्टं प्रकाशं जगर्ज ननाद कंसापराधिविनाशनम् कामयते जयमितिकसः कामः स एवापराधी दुर्जनस्तस्यविनाशनम् निराकरणम् क्षणमपि कदा प्रेक्ष्ये अवलोकयिष्ये इति दध्याविति शेषः ॥

रामपक्षे--कश्चिन्म्लेच्छसेनापतिस्सीतां जिहीर्षुः प्रतिरामं समागमदिति ॥ अविरलाश्वीयं अश्वबहुलं स्वीयं बलं विलोक्य गन्धोत्तमापरिणामतः मद्यविकारतः जरापरिगतमहासंधः दृढप्रतिज्ञः म्लेच्छसेनापतिः प्रतिहरिधिया प्रतिहियते इति प्रतिहरिः भावे प्रत्ययः तस्य धिया सीतामवश्यमेवप्रतिहरिष्यामीतिबुद्ध्याहृष्टः सीतासौन्दयदर्शनेन तुष्टः स गर्जवत् मदोन्मत्तमात्तङ्ग इव जगर्ज रामत्रासाय स्पष्टं ननर्द

कथमित्याह कंसापराधिविनाशनम् कामयते कामिनमिति कं मा कामिनी सीता तां पराध्नोति स्वीकरोतीति कंमापराधी तस्य विनाशनम् क्षणमपि कदा प्रेक्ष्ये द्रक्ष्ये. अत्रानुप्रासः विरोधाभासश्चालंकारः ॥ १६ ॥

मम समधिकं पापं भेत्तुं प्रवर्तनमर्हति, नयनविषयीभूते तस्मिन् मनोरसमेष्यति ।
इति मतिमता सेना तेनाहिता विनिशम्यतां, क्रमिकचलनात् सैन्यं प्रापद्धरेश्च तटं गिरेः ॥ १७ ॥

(अन्वय) पापं भेत्तुम् प्रवर्तनमर्हति नयनविषयीभूते तस्मिन् मम समधिकम् मनोरसमेष्यति इतिमतिमता तेन सेना आहिता ताम् विनिशम्य हरेः सैन्यम् क्रमिकचलनात् गिरेस्तटम् प्रापत ॥ १७ ॥

व्याख्या—पापमस्यास्तीति पापः अपराधी वासुदेवस्तं समधिकं वर्धमानं अतएवात्याज्यम् भेत्तुं छेत्तुं प्रवर्त्तनम्प्रवृत्तिः अर्हति अवश्यकर्तव्यत्वेनारतरति अनुपेक्षणीयो भवतीत्यर्थः नयनविषयीभूते लोचनपथपथिकायमाने तस्मिन् अपराधिनि कृष्णे मम जरासंधस्य मनोरसम् मनसः रसम् शत्रुदर्शनजन्याह्लादविशेषं एष्यति भविष्यति अथवा मनः स्वान्तं कर्तृ रसम् रौद्ररसं एष्यति प्राप्स्यति इतिमतिमता एवं विचारयता तेन सेना पृतना आहिता सञ्चिता सम्मेलिता ताम् आहितसेनाम् सैन्यस्थितिम् विनिशम्य चारादिद्वारागत्य हरेः कृष्णस्य सैन्यम् क्रमिकचलनात् शनैः शनैर्गमनतः गिरेः पर्वतस्य तटम् सन्निधिम् प्रापत् अयासीत् ॥

अर्हतांपक्षे—मम समधिकं यत्किञ्चिदवशिष्टम् पापं कर्म भेत्तुं क्षपयितुं प्रवर्त्तनं विचरणम् अर्हति अवश्यमेव कर्त्तव्यं भवति अथवा पापं पात्यतेऽस्मादिति पापम् दुरदृष्टम् तत् भेत्तुम् छेत्तुं अर्हति साक्षाद्गमने प्रवर्त्तनम् गमनमनुसरणं योग्यमिति शेषः नयनविष-

यीभूते नीयते क्षीयते इति नयनम् तस्य विषयीभूते क्षयत्वमुपगते तस्मिन् कर्मणि मनोरसम् मनोरथम् मोक्षम् एष्यति प्राप्स्यति इति मतिमता एवं कृतविचारेण तेन जिनेन्द्रेण सेना सिनोति बध्नातीति सेना इन्द्रियसंयमना निग्रहणा आहिता संचिता कर्मक्षयायेन्द्रियरोधना कृतेति भावः तां सेनां संयमितां निशम्यालोच्य हरेः जिनेन्द्रस्य सैन्यम् सेना समवयतीति सैन्यं गमनम् इन्द्रियसंयमप्रगुणं विचरणम् क्रमिकचलनात् शनैः शनैर्विचरणात् अथवा हरेरिन्द्रिस्य सैन्यं प्रच्छनप्रयुक्तं जिनेन्द्राङ्गरक्षकम् अथ च जिनेन्द्रस्य सैन्यम् साधुपरिवारः गिरेः कस्यचित्पर्वतस्य तटम् समीपम् अगात् अव्राजीत् ॥

रामपक्षे—ममाधिकमतिशयबलवन्तं पापम् सीतापहारजन्यपापकारकं म्लेच्छसेनापतिं च्छेत्तुमुन्मूलयितुं मम प्रवर्त्तनम् प्रवृत्तिः अर्हति करणीयंभवति तस्मिन् शत्रौ नयनविषयी भूते दृष्टिपथावतीर्णे मनः रसं संग्रामरसं युद्धकौतुकम् एष्यति प्राप्स्यति इति मतिमता एव विचारयता तेन रामेण सेना उद्योगमुत्साहमित्यर्थः आहिता संचिता तां रामकृतरणोत्साहशक्तिं निशम्य श्रुत्वा क्रमिकचलनात् पादचारतःहरेः रामस्य गिरेः पर्वतस्येव तटम् सन्निकर्षपादमूलसैन्यम् म्लेच्छसेनापतिसहितम् प्रापत् अपराधक्षमापनाय तत्समीपमयासीत् ॥ १७ ॥

समयमनया वृत्त्यारण्येऽनरण्यजवन्मनो-रथमथ परे न्यस्यन्नुच्चैर्निनाय सनायकः ।
उदधिरधिकप्रीत्यादित्यस्थितावपि सुस्थिता, व्यधित नगरीं तत्र द्वारावतीं किमु काञ्चन ॥ १८ ॥

अन्वय —अथ स नायक अनया वृत्त्या अरण्ये अनरण्यजवत् उच्चैर्मनोरथं परे न्यस्यन् समय निनाय उदधि. अधिकप्रीत्या आदित्यस्थितावपि

तत्र काञ्चन द्वारवतीं नगरीं सुस्थिता न्यधित ॥ १८ ॥

व्याख्या—अथ स नायकः वर्णनीयप्रभुर्जिनेन्द्रः अरण्ये वने अनरण्यजवत् नागरवत् अथवा अरण्ये जायते भवतीति अरण्यजः पशुपक्ष्यादिर्विवेकविकलः स न भवतीति अनरण्यजः सदसद्विवेकी स इव अनया पूर्वोक्तया वृत्त्या आचारेण अथवा बुद्धिवृत्तिचिदाभासरूपया वृत्त्या उच्चैर्मनोरथं कैवल्यपदप्राप्त्यभिलाषं परे किञ्चित् कालानन्तरं न्यसन् अथवा परे निर्मले कर्मक्षयकारके शुभादृष्टे न्यस्यन् परिणमयन् समयं कालं निनाय यापयामास अथ च उदधिः ज्ञानसमुद्रः क्षमासागरः अधिकप्रीत्या प्राणिजातप्रेम्णा मा केषाञ्चिदुपरोधो भवेदिति बुद्ध्या आदित्यस्थितावपि किञ्चिदवशिष्टदिने तत्र किमु काञ्चन कामपि द्वारावतीं आगमननिर्गमनप्रचारवतीं नगरीम् नगाः वृक्षाः सन्त्यस्या वृक्षाश्रया सुस्थितां सुस्थितिं निवसतिम् तत्र वने न्यधित न्यरचयत् वृक्षतलस्थितिमकरोदिति भावः ॥

रामपक्षे—अनरण्यजवत् दशरथवत् निजजनकवत् अनया वृत्त्या व्यवहारेण अरण्ये वने उच्चैर्मनोरथम्, राज्यपालनरूपं संयमग्रहणरूप वा परे पश्चात् व्यवस्थापयन् स नायकः रामः समयं वनवासरूपं स्वकीयमर्यादारूपं निनाय व्यतीतयामास उदधिः गाम्भीर्याद्विगुणसमुद्रः अधिकप्रीत्या सीताविषयकादरातिशयेन आदित्यस्थितावपि दिवसद्वारावतीं द्वारयुक्तां काञ्चन कामपि नगरीं वृक्षाश्रया सुस्थिता निवसतिम् न्यधित अकृत ॥

कृष्णपक्षे—अथ गिरितटप्राप्त्यनन्तरं स नायकः वासुदेवः अनरण्यजवत् दशरथ नृप इव यथा स दशसु दिक्षु रथम् स्वसैन्यं निवेश्य स्थितः तथा सर्वतः स्वकीयरक्षासावधानः अनया एवंभूतया सावधानतया वृत्त्या उपचारेण अथवा अनया सव्यसनया जरा

संधरूपप्रबलशत्रुकृतया वृत्या विधया उच्चैर्मनोरथम् शत्रुपराजयरूप परं परमेश्वरे न्यस्यन् ईश्वराधान कुर्वन् समय कालं निनाय व्यतीतयामास अथ च उदधिः समुद्रः अधिकप्रीत्या कृष्णविषयकनिरतिशयप्रेम्णा आदित्यस्थितावपि दिवापि रात्रौ किमुतवक्तव्यम् काञ्चन द्वारावतींद्वारकां नगरीं पुरीम् सुस्थिताम् सुरक्षिताम् व्यधित अकृत मा कदाचित् कोऽपि कृष्णासन्निधाने द्वारकां धर्षयेदिति समुद्र एव परिखारूपेण ता ररक्षेति तात्पर्यम् ॥ १८ ॥

अजनि विषये तत्राटव्यां स्थितिः प्रभुरागिणा-मनिशगमनाशक्तेर्व्यक्तेतराश्रयधारणात् ।
अरमत मनो नृणां मार्गे वने ननु दण्डके·प्यभयदृशाऽन्यत्र भ्रान्त्या विमोहविवेकतः ॥ १९ ॥

अन्वयः—व्यक्तेतराश्रयधारणादनिशगमनाशक्तेः प्रभुरागिणां तत्राटव्या विषये स्थितिरजनि नृणा मन· ननु दण्डके वने भ्रान्त्या विमोहविवेकतः अभयदृशा अन्यत्र मार्गे मनः अरमत ॥ १९ ॥

व्याख्या—व्यक्तेतराश्रयधारणात् व्यक्तिः स्वप्रकाशस्तस्मादितरोऽप्रकाशस्तदाश्रयधारणात् कर्माधीनत्वात् अनिशगमनाशक्तेः नास्तिनिशा अन्धकारोऽज्ञानं यत्र तदनिशम् तत्र गमनाशक्तेः स्वप्रकाशज्ञानमार्गप्रवर्त्तनविरहात् अत एव व्यक्तेतराश्रयधारणं सगच्छते विमोहविवेकतः विमोहज्ञानतः अन्यत्र भ्रान्त्या अन्यत्र भ्रान्तिकारकेण अभयदृशा ज्ञानदृष्ट्या प्रभुरागिणां जिनेन्द्रानुगामिनाम् नृणां मनः ननु दण्डके दण्डकानाम्नि वने मार्गे अरमत अलगत स्थितिश्च अजनि अभूत् ॥

रामपक्षे—प्रभुरागिणां रामासक्तचेतसां तत्राटव्यां विषये दण्डकाभिधाने वनेऽरण्ये स्थितिः स्थानम् अजनि कुत इत्याकांक्षायामाह

अनिशगमनाशक्तेः निरन्तरव्रजनसामर्थ्यविरहात् व्यक्तेतराश्रयधारणात् चारणर्षिस्पर्शप्रभावेन गन्धामिधपक्षिणः स्वरूपपरावर्त्तनजटायुरूपधारणात् अन्यत्र भ्रान्त्या भ्रान्तिकारकेण अत्र अभयदद्दृशाज्ञानचक्षुषा विमोहविवेकतः विमोहत्यागतः नृणाम् ज्ञानवता मार्गे तत्र मनः अरमत अतुष्यत् ॥

कृष्णपक्षे—तत्राटव्या रैवतकगिरिवने प्रभुरागिणा कृष्णासक्तचेतस्कानां स्थितिः अजनि जाता कुतः अनिशगमनाशक्तेः व्यक्तेतराश्रयधारणात् अन्यवेशपरिवर्त्तनात् दण्डके दण्ड एव दण्डकस्तस्मिन् अश्वगमनयोग्ये मार्गे वने नृणाम् मनः अरमत व्यहरत ॥१९॥

समुदितगणे क्रीडालीनो हरिः शतपर्वणि, भगवति परामेदं चक्रे स्फुरत्करवारतः ।
प्रतिपदजपेऽस्यान्तःशीर्णस्तदैव खरात्मजोऽवचनविरतो भावो लोके भवेन्नियतेर्वली ॥ २० ॥

अन्वय —शतपर्वणि समुदितगणे क्रीडालीनो हरिः भगवति परामेदं स्फुरत्करवारत चक्रे अस्य प्रतिपदजपे अन्तःशीर्ण तदैव खरात्मज, वचनविरतो भावो (भगवत) लोके नियतेर्वली भवेत् ॥ २० ॥

व्याख्या —शतपर्वणि शतमनेकं पर्व उत्सवो यस्य तस्मिन् अनेकोत्सवशालिनि समुदितगणे गण्यते दिव्यपदप्राप्तया इति गणः देवादिः, समुदितः स प्रमोदः यद्वा प्राप्तोदयः तयोः कर्मधारय इति तस्मिन् अथवा समुदित एकत्रीभूतश्चासौ गणश्चेति तस्मिन् क्रीडालीनः परिहासासक्तः हरिरिन्द्रः स्फुरत् दीप्यत् करवारतः खङ्गतः भगवति जिनेश्वरे परामेदं सर्वतोरक्षणं चक्रे अन्तर्भूय सदा रक्षां चक्रे इति भावः अस्य विहरमाणस्य जिनेन्द्रस्य प्रतिपदजपे आत्मगुणस्मरणे तदैव तदानीमेव खरात्मजः कामः खरश्चासौ आत्मजश्चेति

मनोजत्वात् अन्तःशीर्णः अन्तः हृदयं शीर्णो विदीर्णो यस्य स वचनविरतो भावः अवाच्यभावः अभूदिति शेषः तथाहि लोके जगति नियतेरदृष्टस्य विधेरिति शेषः उत्कृष्ट इति तत्त्वम् ॥

श्रीमहावीरजिनेन्द्रपक्षे–तदीयशिष्यो गोशालो नियतिवादी तेन विहरन् प्रभुः कदाचित् सिंहनाम्ना ग्रामाधिकारितनयेन गोशालः पराभूत इत्युपक्रम्याह समुदितेति । शतपर्वणि शारदपूर्णिमारात्रौ समुदितगणे नक्षत्रोदये स्फुरत्करवारतः विजृम्भत्खड्गतः भगवति वैराग्यशालिनि गोशाले यत्र मन्दिरे गोशालेन सह भगवानासीत्तत्रैव निर्जनतयाऽवधार्य कयाचिद् भुजिष्यया क्रीडालीनो रममाणः हरिः सिंहनामा ग्रामाधिकारितनयः पराभेदं चक्रे खड्गाघात विदधे प्रतिपदजपे मंत्रोच्चारणपरायणे अस्य तदीयव्यापारं दृष्ट्वा विहस-मानस्य गोशालस्य अन्तः शीर्णः विदीर्णो जातः खड्गप्रहारतस्तदैव खरात्मजः गोशालः लोके जगति नियतेर्वचनविरतो भावः अवाग्गोचरः बली सर्वोत्कर्षो भवेत् इति अमन्यत इति शेषः ॥

रामपक्षे—यदा वनस्थो रामस्तदा कदाचिल्लक्ष्मणः परिभ्रमन् दण्डके अन्तर्वंशगह्वरे वटशाखानिबद्धचरणतयाऽधोमुखं कमपि शम्बूकनामानं खरात्मजं सूर्यहासखड्गसाधनतत्परमसिनाऽवधीदित्यनुसंधायाह समुदितेति ।

हरिः लक्ष्मणः समुदितगणे सीतारामजटायुसमन्विते निजसमाजे क्रीडालीनः विहरमाणः भगवति समृद्धिशालिनि शतपर्वणि वंशे स्फुरत् करवारतः सूर्यहासखड्गतः पराभेदं आत्यन्तिकच्छेदं चक्रे प्रतिपदजपे मंत्रोच्चार्यमाण अस्य खरात्मजस्य शम्बूकस्य अन्तः हृदयं शीर्णः विदीर्णः तदैव तदानीमेव खरात्मजः शम्बूकः लोके जगति वचनविरतो भावः आवाच्यभावः अन्तः जात इति शेषः

तथाहि लोके नियते विधेर्बली सर्वतः श्रेष्ठः ॥

कृष्णपक्षे-रुक्मिणा प्रथमपुत्रे प्रद्युम्ने जातमात्रेऽपहृते नारदः केनचिन्मुनिना कथ्यमाने तदुदन्ते रुक्मिणीप्राग्भवजन्मवृत्तान्तं कृष्णसन्निधौ व्यावर्णयति समुदितेति । शतपर्वणि दूर्वायां समुदितगणे स्वसमाजे क्रीडालीनः खेलन् हरिः मयूरशिशुः आसीदिति शेषः तदा रुक्मिणी स्फुरत् विजृम्भित् करवारतः हस्तमुद्राविशेषतः भगवति केकि निपराभेदं मातृवियोगं चक्रे तं शिशुं गृहीत्वा स्वगृहमनयत प्रतिदिनञ्च तन्नयतिस्मेति प्रतिपदजपे प्रतिपादोत्थाने अस्य मातृभूतस्य अन्तः हृदयं शीर्णः विदलितः शिशुवियोगात् नात इति शेषः तदैव खरात्मजः खगात्मजः खे रमते इति खरस्तस्यात्मजः मयूरशिशुः लोके वचनविरतो भावः मृतः भवेत् म्रियेत नियतेर्बलीन मृतस्तदा मातृपितृवचनेन तथा विसर्जितः पोडशवर्षं त्वयापि शिशुविरहः सोढव्य इति मयूरीनिदानात्प्रद्युम्नवियोगो जात इति भावः ॥ २० ॥

रिपुरनिवशो व्यासः पुत्रैरिभाश्वपदातिना, विदलितमतिः पुर्यां धुर्यां गृहे जगृहे रुषम् ।
अनयचलनात् कंसध्वंसं प्रपद्य न पीडये-दितिगुरुगिरा वन्यैः सिन्धुर्धिया स तु शिश्रिये ॥ २१ ॥

अन्वयः—रिपुरनिवशः पुत्रैः इभाश्वपदातिना व्यासः विदलितमतिः पुर्यां धुर्यां गृहे रुषं जगृहे अनयचलनात् कंसध्वंसं प्रपद्य न प्रपीडयेदिति-गुरुगिरा सिन्धुर्धिया शिश्रिये ॥ २१ ॥

व्याख्या—रिपुरतिवशः रिपुषु कामक्रोधादिषु या रतिर्विरतिस्तस्या वशः परतन्त्रः कामक्रोधादिविषयकविरक्तिपरवशः अथवा

रिपुः कामादिः अतिवशः अकिञ्चित्करः पुत्रैः तनयादिभिः अव्याप्तस्तद्विषयकप्रीत्यभाववान् इभाश्वपदातिना विदलितमतिः गजतुरगपदातिसैन्येन विदलितमतिः विदलिता दोषभूयस्त्वदर्शनेन विरक्ता निर्विण्णा मतिर्बुद्धिर्यस्य स धुर्यां श्रेष्ठायां पुर्यां नगर्य्यां गृहे चन्द्रशालादिमन्दिरे यद्वा गृहे कलत्रे " न गृहं गृहमित्याहुर्गृहणीगृहमुच्यते " इत्यभियुक्तोक्तेस्तत्र रुषमप्रीतिम् विरुचिं जगृहे दधार तमेवद्रढयति अनयचलनादिति अनयचलनात् नयो नीतिस्तदभावोऽनयस्तस्मिन् चलनात् प्रवृत्तितः सध्वंसं सन्निहिताधःपतनं अमार्गगामिनामवश्यम्भावीध्वंस इति स्वत एव ध्वंसोन्मुखम् कम् कमपि जनम् प्रपद्य न पीडयेत् न तम्प्रतिरोषं विदध्यात् दैवोपहतत्वादित्यर्थ इति गुरुगिरा महज्जनवचनेन स तीर्थङ्करः स्वयमेव ततो निववृते स तु जिनेश्वरः सिन्धुर्धिया गुणादिरत्नाकरतया अवन्यैः बुद्धिमद्भिर्जनैरिति शेषैः शिश्रिये आश्रितः ये केचनमतिमन्तस्ते गुणसमुद्रमेनम्मत्वा तदनुयायिनो बभूवुरिति तत्त्वम् ॥ २१ ॥

रामपक्षे—रिपुरतिवशः रिपौ शत्रौ या रतिः स्थायिभावः क्रोध इत्यर्थः तस्या वशः पराधीनः क्रोधपरवश इति यावत् पुत्रैर्मेघनादादिभिः इभाश्वपदातिना गजतुरगपत्तिना च व्याप्तः परिवृतः विदलितमतिः शत्रुकृतपराभवस्मरणेन शम्बूकादिवधेनेतिभावः विचलितचित्तः धुर्यां श्रेष्ठायां पुर्यां लंकायां गृहे रुषम् रोषम् सूर्पणखावाक्यात् जगृहे दधार अनयचलनात् अनपराधशम्बूकादिवधकारकात् स ध्वंसं आसन्नमृत्युम् प्रपद्य एवभूतं जनमासाद्य न पीडयेदिति न किन्तु अवश्यमेव पीडयेत् इति गुरुगिरा वृद्धजनवचनेन रिपुविशेषं न कारयेदिति सूक्त्या सावधानोऽभवदिति शेषः स रावणः वन्यैः वनीयैराक्षसादिभिः सिन्धुर्धिया मदोन्मत्तमतङ्गजबुद्ध्या शिश्रिये अन्यथा अनेनैव विनाशः स्यादिति कृत्वेति भावः ॥

कृष्णपक्षे—रिपुरतिवशः शत्रुविषयकमन्युपरतंत्रः पुत्रैः यवनादिभिः इभाश्वपदातिना गजतुरगादिसेनया च व्याप्तः परिवृतः विदलितमतिः शत्रुकृतापराधस्मरणात् क्षुब्धचित्तः धुर्यां शत्रुजनितवर्षणसहनयोग्यायां पुर्यां रुपं मान जगृहे गृहीतः अनयचलनात् अनपराधकृतागस्काद्वेनोः कंसध्वंसं कंसं कंसनामानं नृपं ध्वंसयति स कंसध्वंसस्तम् कृष्णं प्रपद्य न पीडयेदिति न किन्तु अवश्यमेव पीडयेत् यथा तथा तमामात्र वैर निर्यापयेदिति गुरुगिरा नृपाज्ञया जरासंधादेशेन स सिन्धुः तात्स्थ्यात्तच्छब्दम्, समुद्रान्ततः कृष्णः शिश्रिये सैन्यैरिति शेषः सैन्यमावृणोत्तमिति भावः ॥ २१ ॥

खरविशरणात् कंसागस्कृन्नरं हतदूषणं, पुनरपि तथा कुर्वाणं कस्त्यजेद् वलवान्नृपः ।
इति विमृशताऽनेनाधायि क्रियाव्यपदेशता, भवति यदपां सर्वासामप्यपांनिधिरेव दिक् ॥२२ ॥

अन्वयः—कः बलवान्नृपः खरविशरणात् कंसागस्कृन्नरं हतदूषणं पुनरपि तथा कुर्वाणं कं परित्यजेत् इति विमृशता अनेन क्रियाव्यपदेशता अधायि सर्वासामपाम् अपांनिधिरेव दिक् भवति ॥ २२ ॥

व्याख्या—खरविशरणात् खरस्य कामस्य विशरणात् विजयात् हतदूषणम् दोषरहितम् अत एव कंसागस्कृन्नरम् कंसात् अगति कुटिलं व्रजति परित्यजतीति कंसागाः कृत् नरो येन स कंसागस्कृन्नरः पानपात्रत्याजितनरः तदाश्रयात् पानभाजनग्रहणमपि नरैस्त्यक्त इति भावः पुनरपि तथा कामादिविजयं कुर्वाणमाचरन्तम् एवम्भूतमलौकिकक्रियानिष्णातं जनं बलवान् ज्ञानवान् नृपः भूपः अन्यो वा नरः त्यजेत् परिहरेत् न संगृह्णीयात् इति विमृशता विचारयता क्रियाव्यपदेशता क्रियातत्परता तदनुसरता अधायि अकारि

तदनुसारको जनो बभूवेत्यर्थः तदेवार्थान्तरेण दृढयति सर्वासाम् अपाम् जलानाम् अपान्निधिरेव समुद्र एव दिग् गमनदिग् भवति समुद्रे गत्वा नितान्तसुखिनो गमनागमनादिशोषणबन्धनादिदोषरहिताःस्याम इति आपस्तदुन्मुखा गच्छन्ति एवं बुद्धिमन्तः सत्पुरुषपरिपूतम्मोक्षमार्गमेव तथाभूतमनुमरन्तीति तत्वमर्थान्तरन्यासेन प्रकटितम् कविना ॥

रामपक्षे—खरविशरणात् खरस्य स्वभगिनीपतेर्विशरणात् हननात् सागस्कृन्नरं अपराधकारिणं मनुष्यं हतदूषणम् दूषणनिहन्तारम् पुनरपि भूयोऽपि तथा कुर्वाणं विराधयन्तं कः बलवान् नृपः प्रभुत्वसम्पन्नो नराधिपः त्यजेत् परिहरेत् मुञ्चेत् न कोऽपीत्यर्थः इति इत्थ विमृशता विचारयता अनेन रावणेन क्रियाव्यपदेशता क्रियायाः व्यापारस्य व्यपदेशता छद्मनता अधायि कापट्यं अप्रयोजि तथाहि सर्वासामपा अपां पतिः निधिरेव दिग् भवति यथा जडप्रकृतिरपान्निधिर्नीचैर्गच्छति तथा मन्दबुद्धिरपि नीचवृत्तिं कापट्यं आश्रयतीति भावः ॥ दृष्टान्तालंकारः ॥ २२ ॥

कृष्णपक्षे—खरविशरणात् रलयोरैक्यात् खलविशरणात् खलनिग्रहणात् बलवान् नृपः जरासंधः कंसागस्कृन्नरम् कंसे स्वजामातरि आगः अपराधम् पापम् वा करोतीति कसागस्कृत कंसापराधी स चासौ नरश्चेति कंसागस्कृन्नरम् नरमात्रोपादानेन तस्मिन् तुच्छत्वं सूचितम् हतदूषणम् प्राप्तदूषणम् हन्तेर्गमनार्थत्वेन प्राप्त्यर्थत्वात् स दोषम् पुनरपि भूयोऽपि तथा कुर्वाणम् अपराधमाचरन्तम् न च शरणागतमितिध्वनिः कः त्यजेत् परिसहेत् उपेक्षेत इति विमृशता विचारयता अनेन जरासंधेन क्रियाव्यपदेशता युद्धोद्योगता अधायि व्यरचि अपाम् सर्वासामपि अपान्निधिरेव दिग् भवति न कोऽपि सामान्य स्वकीयशत्रुं परिहरति एकान्तविश्रामकामुकत्वादिति भावः ॥ २२ ॥

प्रतिहरिजरासन्धादेशाद्‌ गृहाणि जहुर्जना, दशमुखभिया शत्रोर्ग्रामात् परे जगृहुर्व्रतम् ।
स्वजनविरहादन्येऽवन्यां मुहुर्मुमुहुस्तथा, मुनिगुरुगिरादाय स्वीयान् समारुरुहुर्दरम् ॥ २३ ॥

अन्वय —जना. प्रतिहरिजरासन्धादेशात् गृहाणि जहु परदेशमुखभियाशत्रोर्ग्रामात् व्रत जगृहु. अन्ये स्वजनविरहात् अवन्याम् मुहुर्मुमुहु. ॥२३॥

व्याख्या—हरति पापमिति हरिर्जिनेन्द्रः तम् इति प्रतिहरिंजिनेन्द्रम्प्रति जनाः भव्यलोकाः जरासंधादेशात् दृढप्रतिज्ञाबलतः गृहाणि वेश्मानि जहुः तत्यजुः दशमुखभिया दशसु इन्द्रियेषु मुखं प्रवृत्तिर्यस्य स कामः अथवा दशसु अवस्थापरिणामेषु मुखं प्रवृत्तिर्यस्य तत् कर्म तस्य भिया भयेन कर्मभयेन च शत्रोः तस्यैव ग्रामात् आयत्तात् व्रतम् चारित्रम् परे केचन जगृहुः गृह्णन्तिस्म अन्ये अवन्याम् भूमौ स्वजनविरहात् मुमुहुर्मोहमुपगताः मुनिगुरुगिरा मुनिरेवगुरुरुपदेशकस्तस्य गिरा वचनेन स्वीयान् स्वकीयान् आदाय गृहीत्वादरम् कन्दराम् आरुरुहु मर्गं विहरन्ति स्मेति भावः ॥

कृष्णपक्षे—जनाः लोकाः प्रतिहरिजरासधादेशात् प्रतिहरिश्चासौ जरासंधश्चेति तस्य आदेशात् आज्ञातः गृहाणि स्ववेश्मानि जहुस्तत्यजुः रणायसज्जा बभूवुरित्यर्थः दशमुखभिया दशसु मुखनिर्गमनं यस्य तस्य बाणस्य भिया भयेन शत्रोर्ग्रामात् शत्रुग्राममभिव्याप्य व्रतम् यावत्र शत्रुग्रामं गमिष्यामि तावन्नमोक्ष्ये न विश्रमिष्ये वेति नियमं जगृहुर्धारिताः स्वजनविरहात् युद्धाय गतपतिपुत्रादिविरहात् विलापात् अवन्या भूमौ मुहुर्मुमुहुर्मोहमुपगताः इतश्च ये भीरवस्ते मुनिगुरुगिरा सद्‌बुद्धिवदुपदेशकवाक्येन स्वकीयान् शीवालवृद्धादीन् आदाय दरम् पर्वतकन्दरम् आरुरुहुस्तत्र जग्मुः ॥

रामपक्षे-प्रतिहरिः प्रतिवासुदेवोस्तस्य जरासंधादेशात् दृढप्रतिज्ञानुरोधात् जना राक्षसलोकाः गृहाणि स्ववेश्मानि युद्धार्थमुद्युक्ताः, सन्तः स्वकीयग्रामस्थानानि जहुस्तत्यजुः परे केचन विभीषणादयः दशमुखभिया दशकण्ठभयेन रावणकृतानादरभयतः शत्रोः ग्रामात् शत्रुभूतरावणनगरात् बहिर्निःसृत्येति शेषः व्रतम् नियमम् रावणपरित्यागरूपम् जगृहुः स्वीचक्रुः स्वजनविरहात् स्वजनस्य विभीषणादेर्विरहाद्वियोगात् अन्ये विभीषणदारादयः मुहुः पुनः पुनः मुमुहुः मुह्यन्तिस्म तथा च ते विभीषणादयः मुनिगुरुगिरा मुने रामस्य तदानीम्वनवासकाले कतिचिद्व्रतधारकत्वेन तथा निर्देशः यद्वा मनुते स्वकीयत्वेन स्वीकरोतीति मुनिः स चासौ गुरुश्चेति मुनिगुरुस्तस्य गिरा वचनेन अथवा गुर्वी चासौ गीश्चेति गुरुगीः मुनेर्गुरुगीरिति मुनिगुरुगीस्तया अत्यादरणीयरामवचनेन स्वीयान् स्वकीयान् परिजनान् आदाय गृहीत्वा दरम् पर्वतकन्दराम् यद्वा दरम् श्वभ्रम् रक्षणस्थानम् समारुरुहुः संगताः दरोऽस्त्रियां भवे श्वभ्र इत्यमरः'। श्लेषालंकारः ॥ २३ ॥

प्रतिहरिवचोयोगाद् दुर्योधनादिनिमन्त्रितः, सवितुरचिरात्तारासक्तः सुतो नवसाहसः ।
किमु नयति नो सेनानाशं विभोर्दृढसंयति, कृतमतितरां योधात्सोऽधात् पुरो रिपुवारणम् ॥ २४ ॥

अन्वय.—प्रतिहरिवचोयोगात् दुर्योधनादिनिमन्त्रित: सवितुर्विभो. तारासक्त. नवसाहस सुतः दृढसयति सेनानाशं किमु नयति रिपुनिवारणम् अतितरांकृतम् योधात् स पुरोऽधात् ॥ २४ ॥

व्याख्या—सवितुर्नाभ्यादेर्जनकस्य तारासक्तः तारासु कनीनिकासु आसक्तः अत्यन्तलोचनप्रियः "तत्तारा तु कनीनिकेति हैमः"

सूनः तनयः कर्णादिः प्रतिहरिवचोयोगात् प्रतिहरेर्ब्रह्मलोकान्तवासिदेवादेः वचोयोगात् दीक्षाग्रहणसमयस्मारकवाक्यात् दुर्योधनादि-निमन्त्रितः दुर्योधनादिः कामक्रोधादिर्निमन्त्रितो निरुद्धो येन स अत एव नवसाहसः नूतनसाहसिकः अभूदिति शेषः कामश्चिन्तयति विभोरिति विभोर्जिनेन्द्रप्रभोः सेना आभ्यन्तरसंयमादिदृढबलम् अस्माकं इति शेषः नाशं नयति नो किम् नो नयति किन्तु अवश्यमेव नेष्यतीति भावः वर्तमानसामीप्ये लट् अतः दृढसंयति स्थिरसंयमे जिनेन्द्रे इत्यर्थः पुरः प्रथममेव योधात् संग्रामात् पूर्वमेव सोधात् योगात् रिपुवारणम् सैन्यनिवारणम् अतितराम् कृतम् ॥

कृष्णपक्षे—प्रतिहरिवचोयोगात् जरासंधवचनप्रयोगात् दुर्योधनादिनिमन्त्रितः कृतनिमन्त्रणकः कृतः कर्मधारयः सवितुः सूर्यस्य सूनः तनयः तारासक्तः तरति शत्रुपारं गच्छत्यस्मिन्निति तारो युद्धम् तत्रासक्तः संग्रामप्रियः अत एव नवसाहसः नूतनसाहसी कर्णः विभोः कृष्णस्य दृढसंयति संग्रामे सेनानाशं कृष्णसेनाक्षयं किमु नो नयति नेष्यति अवश्यमेव नेष्यतीत्यर्थः सोधात् सोद्योगात् योधात् संग्रामात् पुरः प्रथमं रिपुवारणम् शत्रुरोधम् अतितराम् कृतम् विरचितम् ॥

रामपक्षे—प्रतिहरि हरिम् कपिम् प्रति यो वचनयोगः सन्देशप्रेषणम् तस्मात् प्रतिहरिवचोयोगात् कपिद्वारा संदेशप्रेषणात् दुर्योधनादिनिमन्त्रितः दुर्योधनादौ कष्टयुद्धादौ निमन्त्रितः कृताह्वानः सवितुः सूर्यस्य सुतः सूर्यवंशीयत्वात् तत्तनयः तारासक्तः संग्राम-प्रियः नवसाहसः रामः विभोः मायासुग्रीवस्य दृढसंयति महत्संग्रामे तस्य सेनानाशं किमु नो नेष्यतीत्यादि पूर्ववद्योज्यम् ॥ २४ ॥

कमनजनकं जित्वा बाणाहवेन ससाहसं, सहितमकरोच्चन्द्रं साक्षादिवोद्यततारया ।

खचरमचिराद् भानोः सूनुं निजाङ्गनया ततः, सकलनगरे द्वारावत्याः प्रभा भवनेष्वभात् ॥ २५ ॥

अन्वय —स साहस कमनजनक बाणाहवेन जित्वा उद्यततारया सहितं साक्षाच्चन्द्रमिव भानोः सूनु खचर निजाङ्गनया सहितम् तत सकलनगरे भवनेषु द्वारावत्या प्रभा अभात् ॥ २५ ॥

व्याख्या—उद्यततारया उद्यता प्राप्तोदया या तारा तया सहितम् संगतम् साक्षाच्चन्द्रमिव कमनजनकम् कम्यते इति कमनम् अभिलाषः तज्जनयतीति कमनजनकः संभोगेच्छोत्पादकस्तम् चन्द्रस्यापि कामोद्दीपकत्वात् तत्सहचरत्वाच्च अथवा अनजनकम् नास्ति जनको यस्य स अजनकस्तन्न भवतीति अनजनकः अनेकजनकः असंख्यातपितृकःतम् कम् कमपि कामम् ससाहसम् साहसेन सहितम् अबाणाहवेन बाणयुद्धं विना आभ्यन्तरिकसंयमबलेन जित्वा पराजित्य अथवा उद्यततारया देदीप्यमानरजतेन रौप्येन सहितम् चन्द्रम् काञ्चनञ्चजित्वा "स्याद्रूपं कलधौततारराजतश्वेतानिदुर्वर्णकम् इति तपनीयचामीकरचन्द्रभर्मेत्युभयत्र हैमः" खचरम् ख सुखमानन्दश्चरति अनुभवतीति अथवा खे परमात्मनि स्वात्मानन्दानुभवे चरति विचरतीतितम् आत्मज्ञानिनम् भानोः प्रभायाः सूयते इति सूनुः तम् प्रभोत्पादकम् स्वस्वरूपमित्यर्थः निजाङ्गनया निजस्य स्वीयस्य या अङ्गना बुद्धिस्तया निजबुद्ध्या सहितम् अकरोत् स्वस्वरूपन्निजप्रवृत्त्यधीनमकरोदित्यर्थः सकलनगरे नगम् पर्वतम् रातीति नगरम् वनम् कलेन मधुराव्यक्तशब्देन सहितम् सकलम् तच्च नगरञ्चेति तस्मिन् अथवा सकलनगरे यत्र यत्र प्रभुर्विहरति तस्मिन् भवने गृहे द्वारावत्याः द्वारकायाः प्रभा शोभा अभात् भातिस्म ॥

कृष्णपक्षे—कमनजनकम् कमनः कामः प्रद्युम्न इत्यर्थः जनकः पिता यस्य स कमनजनकः अनिरुद्धः तं ससाहसं बाणासुरक-

न्यानर्गगरूपं साहसकारकं बाणाहवेन बाणासुरसंग्रामेन जित्वा बाणं पराजित्य तं लब्ध्वा उद्यततारया चन्द्रमिव उषया नवपरिणीतया सहितं अकरोत् भानोरित्यत्र विभक्तिविपरिणामेनान्वयः भानुं भानुनामानं सत्यभामातनयं निजाङ्गनया दुर्योधनकन्यया सहितं अकरोत् देहलीदीपन्यायाद्भयत्रान्वयः द्वारावत्याः द्वारकायाः सकलनगरे प्रधानाप्रधाननगरे भवनेषु सद्मसु प्रभा कान्तिः अभात् प्रदीप्यत ॥ २५ ॥

रामपक्षे —समादरं सुग्रीवरूपं विधाय तारामिलापरूपसाहसयुक्तं कमनजनकं कामपरतन्त्र बाणाहवेन जित्वा शरसंग्रामेन पराजित्य उन्नततारया सहितं साक्षाचन्द्रमिव खचरं आकाशगामिनं भानोः सूर्यस्य तनयं सुग्रीवं निजाङ्गनया तारया सहितं अकरोत् तथात् सकलनगरे किष्किन्धापुरे भवनेषु गृहेषु द्वारावत्याः द्वारकायाः प्रभा कान्तिः अभात् शोभतेस्म ॥ २५ ॥

परपरिचयादन्योऽप्यापत्कृताहवनाशनः, शुचिपरिगतं नाथं कान्त्या गुणेन च संनिभम् ॥
तमपि भगवान् भित्त्वा पूर्वं पदं ह्युपलम्भयन्, कतिपयदिनांस्तत्रैवास्थादसुस्थितमानसः ॥ २६ ॥

अन्वय -आहवनाशन, अन्योऽपि परपरिचयात् आपत्कृत शुचिपरिगत कान्त्या गुणेन च सन्निभम् नाथम् तमपि भित्वा भगवान् पूर्वं पद सुप-लम्भयन् असुस्थितमानस कतिपयदिनान् तत्रैवास्थात् ॥ २६ ॥

व्याख्या—परपरिचयात् परस्य श्रेष्ठजनस्य परिचयात् संगात् अन्योऽपि अज्ञोऽपि सदसद्विवेकरहितोऽपि आपत्कृताहवनाशनः आपद् करोतीति आपत्कृत् स चासौ आहवश्चेति आपत्कृताहवः तन्नाशयति परित्यजतीति तथोक्तः ज्ञानिजनसंसर्गान्मूढोऽपि हिंसा-

दिकं परित्यजति इति भावः शुचिपरिगतं अत एव शुद्धतामुपगतं कान्त्या गुणेन च सन्निभं सज्जनजनसदृशं नाथं नाथते याचते इति नाथस्तं याचमानं तमपि भगवान् जिनेश्वरः भित्वा अज्ञता परिहृत्य पूर्वं पदं श्रावकत्वं उपलम्भयन् अनुमोदयन् असुस्थितमानसः स्वात्मानुभव स्थितचित्तः कतिपयदिनान् कतिचिद्वासरान् तत्रैवास्थात् तत्रैवस्थितोऽभूदित्यर्थः ॥ २६ ॥

श्रीपार्श्वनाथपक्षे—परपरिचयात् परे पूर्वजन्मनि यः परिचयः संबन्धः तस्मात् अन्योऽपि साम्प्रतमन्यशरीरगतोऽपि आपत्कृत् उपसर्गप्रयोजकः अत एव आहवनाशनः आहूयन्ते आत्मा अत्र सं आहवः आत्मचिन्तनं तस्य नाशनः विराधकः शुचिपरिगतं अतिनिर्मलं कान्त्या गुणेन च सन्निभं सदृशं यत्राकृतिस्तत्र गुणा वसन्तीति आकृत्या गुणेन च कृतार्थं नाथं पार्श्वनाथं आपत्कृत् उपसर्गजनको जात इति शेषः तमपि विराध्यंतमपि मेघमालिकुमारकृतोपसर्गं भित्वा निश्चलचित्तेन सहित्वा पूर्वं पदं स्वकीयदेवस्थानं उपलम्भयत् न च विराधिनं प्रतिविरोधबुद्धिरभवत् अन्यत् पूर्ववद्व्याख्येयं ॥

श्रीमहावीरपक्षे—परपरिचयात् परेण अन्येन कृतो यो परिचयो यथार्थस्तवस्तस्मात् इन्द्रप्रयुक्तश्रीमहावीरतपोवर्णनं श्रुत्वा संगमदेवस्तं परीक्षितुमुपसर्गं विदधौ अन्योऽपि निरपेक्षोऽपि आपत्कृत् आहवनाशन इत्यादि पार्श्वनाथपक्षवद् व्याख्येयं ॥

रामपक्षे–कदाचित्सुन्दसहिता चन्द्रणखा पाताललंकायां राज्यं पालयन्ती रामसाहाय्येन पूर्ववैरीविराधो युद्धं विधाय निष्कासयतां सपुत्रां सा च लंकां गत्वा रावणाय व्यजिज्ञपदित्याक्षिप्याह परपरिचयादिति। आहवनाशनः आहवे संग्रामे शत्रु नाशयति हिनस्तीति स परपरिचयात् स्वीयशत्रुपरिचयात् तत् कृतोपजापात् अन्योऽपि उदासीनोऽपि आपत्कृत् विपन्निजनको भवतीति शेषः शुचिपरिगतं

शुद्धं कान्त्या गुणेन च सन्निभम् सद्योग्यम् नायं खरं तमपि प्रसिद्धं तत्र भगिनीपतिं भित्वा विनाश्य विराधाय पूर्वं पदम् खराधिकृतं नदीयपैतृकपदमुपलम्भयन् मां निष्काश्य तद्राज्यं तस्मै ददौ कतिपयदिनान् असुस्थितमानसः सीताविरहविषण्णचेतास्तत्रैवास्थात् अस्थात् ॥ २६ ॥

कृष्णपक्षे—परपरिचयात् परः शत्रुः तदीयपरिचयात् शत्रुव्यवहारात् अन्योऽपि यौनसंबन्धसंबद्धोऽपि आपत्कृत् विपत्तिजनको भवतीति शेषः यथा कंसः स्वतरपि कारागारे निरुध्य राज्यमाच्छिद्य स्वयम् बुभूजे. आहवनाशनः कृष्णः भगवान् ऐश्वर्यसम्पन्नः तमपि पितृविरोधकारक कंसं भित्वा विनाश्य शुचिपरिगतम् हृदयतः आचारतश्चशुद्धनिर्मलं कान्त्या गुणेन च सन्निभम् समानम् उग्रसेनम् पूर्वं पदम् पूर्वोपभुक्तराज्यसिंहासनम् उपलम्भयन्प्रापयन् असुस्थितमानसः जरासंधविग्रहात् चलच्चितः यद्वा वृन्दावनीयसहचरविश्लेपविधुरः कतिपयदिनान् कतिचिद्वासरान् तत्रैवमथुरायाम् अस्थात् आसीत् ॥ २६ ॥

पवनजनुषा धर्माज्जन्ये नरोऽभिनवोत्सवः, प्रणयवशतो वाहिन्यागात् सुखेन चलन् पथि ।
तदनु जगति श्रद्धापूर्णो हरेः प्रियवंशजे, लघुरपि परां प्रीतिं भेजे तदा सुहृदां पदे ॥ २७ ॥

अन्वय—धर्मात् अभिनवोत्सवो नरः जन्ये प्रणयवशात पथि सुखेन चलन् अगात् पवनजनुषा वाहिनी च आगात् तदनु हरेः प्रियवंशजे श्रद्धापूर्णः तदा जगति लघुरपि सुहृदां पदे परां प्रीतिम्भेजे ॥ २७ ॥

व्याख्या-धर्मात् पवनजनुषा पूयते अनेनेति पवनम् तच्च जनुश्चेति पवनजनुः मनुष्यशरीरम् तेन धर्मतो लब्धेन मनुष्यशरीरेण

जन्ये लभ्ये वाहिनि अनादिकालतः प्रवर्त्तमाने पथि मार्गे हरेर्जिनेन्द्रस्य प्रियवंशजे कुलपरम्परागते स्याद्वादे प्रणयवशतः प्रेमवशतः धर्मविषयकातिशयानुरागतः सुखेन आगात् अन्वसरत् तदनु तत्पश्चात् चलन् तस्मिन् प्रवर्त्तमानो जनः श्रद्धापूर्णः भक्तिपूर्णः अभवदिति शेषः तथाहि जगति संसारे लोके धर्मे प्रवर्त्तमानः लघुरपि नीचोऽपि सुहृदां पदे महतां मित्रमण्डले परां प्रीतिम् अत्यधिकसत्क्रियां साधर्मिकतया भेजे लेभे ॥ २७ ॥

रामपक्षे—धर्मात् सुकृतेः अभिनवोत्सवः धर्मप्रभावादिनानुदिनं नूतनोत्वशाली नरः जन्ये संग्रामे रावणेन सह रणे प्रणयवशः प्रेमवशतः अभीरुत्वात् रामगतप्रेमातिशयात् त्रैलोक्यकंटकरावणहननोत्साहाद्वा सुखेन केषाञ्चिदप्यरुन्तुदाभावेन चलन् गच्छन् पवनजनुषा पवनंजयपुत्रेण सह वाहिन्या सेनया च समम् आगात् अगमत् तदनु तत्पश्चात् हरेः सूर्यस्य प्रियवंशजे सूर्यवंशीयरामे श्रद्धापूर्णः विशेषश्रद्धालुर्जात इति शेषः तथाहि जगति लोके लघुरपि सुहृदां पदे मित्रतायां तदा मित्रत्वकाले परामतिशयितां प्रीतिम् अनुरागम् भेजे भजतिस्म ॥ २७ ॥

कृष्णपक्षे—धर्माज्जन्ये धर्मयुद्धे पवनजनुषा वायुतनयेन भीमसेनेन सह नरः सैन्यगतलोकः अभिनवोत्सवः नित्यनवीनोत्सवेनोऽपलक्षितः वाहिन्या सह सेनया सार्धम् च प्रणयवशतः कृष्णगतप्रेमतः पथि मार्गे सुखेन अनायासेन चलन् अगात् हरेः वायोः इन्द्रस्य वा प्रियवंशजे भीमे अर्जुने वा हरेः चन्द्रस्य प्रियवंशजे कृष्णे कृष्णस्य चन्द्रवंशीयत्वात् श्रद्धापूर्णः भक्तियुक्तः अभवदिति शेषः तथाहि जगति लोके सुहृदां पदे मित्रवर्गे लघुरपि कनीयानपि तदा मित्रताया परामतिशयिताम् प्रीतिम् भेजे मित्रमार्गे नीचोच्चैर्विभागो न गण्यत इति भावः ॥ २७ ॥

अरिपरिणतिर्येषां पूर्वा नवा सहजातिगा, बलवति पुनः कर्णेऽभ्यर्णे समीयुषि वाग्भरे ।
प्रगुणितमहामन्त्रैस्तन्त्रैर्ययुः प्रतिमाधवं, मलिनहृदया गान्धारेया निधाय कथाश्रुताः ॥ २८ ॥

अन्वयः—येषाम् अरिपरिणति पूर्वा नवा सहजातिगा बलवति वाग्भरे कर्णे अभ्यर्णे समीयुषि प्रगुणितमहामन्त्रै तंत्रैः कथाश्रुता निधाय मलिनहृदया गान्धारेया प्रतिमाधवम् ययु. ॥ २८ ॥

व्याख्या—येषा जिनेन्द्रप्रभूणा अरिपरिणतिःशत्रुसंमुखगमनम् पूर्वा एव "दीक्षाग्रहणात् पूर्वं यथा शत्रुषु परिणमतिस्म तथेदानीमपि कामक्रोधादिशत्रौ परिणमत इति भावः" न वा नैव सहजातिगा स्वाभाविकीतो भिन्ना किन्तु स्वाभाविकी बलवति दुःप्रधर्षे कामादौ वाग्भरे शब्दग्राहके कर्णे श्रोत्रेऽभ्यर्णे सन्निधौ समेयुषि समागते सति कामस्यानङ्गत्वात् दृष्टिगोचराभावेन पिकादिमधुरशब्दद्वारा श्रावणप्रत्यक्षे सति प्रगुणितमहामंत्रैः प्रगुणिताः प्रयोजिता ये महामंत्राः आत्मसंयमास्तैः तन्त्रैः स्थैर्यैः मलिनहृदयाः मोघप्रयत्नाः गान्धारेयाः गंधमृच्छतीति गंधारः तेषां समूहः तेभ्यो हिता वा गंधप्रयोजकाः कामादयः कथाश्रुताः निधाय तदीयतपोमहिमवर्णनं यथा इन्द्रादिभ्यः श्रुतन्तथानुभूतमिति श्रुताः आकर्णिताः कथाः प्रभावातिशयद्योतकाः निधाय कर्णे इति शेषः माधवम्प्रति वसन्तम्प्रति ययुः वसन्तसन्निधिं गत्वा ययुर्निववृतुः ॥ २८ ॥

कृष्णपक्षे—येषां दुर्योधनादीनां अरिपरणतिः शत्रुभावता पूर्वापुरातनी पूर्वत एव युधिष्ठिरादिनिमित्तीकृत्य कृष्णेऽपि शत्रुबुद्धिः चिरंतनी नवा नैव सहजातिगा स्वाभाविकी भिन्ना किन्तु सहजैव पुनः किन्तु वाग्भरे सत्यवादिनि बलवति सामर्थ्यशालिनि कर्णे

कर्णोभिधाने नृपे अभ्यर्णे सन्निधौ समेयुषि जरासंधसहाय्याय प्राप्ते सति प्रगुणितमहामंत्रैः प्रयोजितकर्तव्यावधारणजनकरहस्यविचारैः तंत्रैः इति कर्तव्यताप्रयोजकव्यापारैः कथाश्रुताः स्वपरम्परायौनसंबन्धिनः कृष्णादय इति श्रुताः कैश्चिज्जनैः कथिताः निधाय मुक्त्वा परित्यज्य मलिनहृदया कृष्णसंबन्धेन युधिष्ठिरराज्यं प्रत्यर्पणीय भवेदिति कलुषितान्तःकरणाः गांधारेयाः धार्तराष्ट्राः प्रतिमाधवं जरासंधं ययुः संश्रिताः ॥ २८ ॥

रामपक्षे—येषां रामादीनाम् अरिपरिणतिः पूर्वा न वा सहजातिगा तस्मिन् रामे वाग्भरे वाङ्मात्रेण कर्णेऽभ्यर्णे समीयुषि समागतेः समुद्रपारे स्थिते प्रगुणितमहामंत्रैः तंत्रैः प्रयोजितस्वपरराष्ट्रविज्ञानविचक्षणैः स्पशैः सद्भिः गांधारेयाः वार्ताहारकाः मलिनहृदयाः छद्मनापरराष्ट्रविचारधारकाः चाराः कथाश्रुताः आकर्णिताः परराष्ट्रीयाः कथानिधाय कर्णे कृत्वा प्रतिमाधव रावणं ययुः यदा रामः समुद्रतटासन्न आसीत्तदा रावणः स्वारान् प्रेष्य सर्ववृत्तान्तमज्ञासीदिति तात्पर्यम् ॥ २८ ॥

मधुरबहलीभागस्थायी न बाहुबलीक्षितः, प्रभुरनुपदं प्रातर्भ्रान्त्या न लक्ष्मणलक्षितः।
अवनिधनिकस्याच्चैः क्रामन् शुचेः स्वरुचेरभूत्, खरसुतहरः काप्येवं स्यात्प्रमादपरः सुधीः ॥ २९ ॥

अन्वयः—मधुरबहली भागस्थायी बाहुबलीक्षित. न प्रातः अनुपद भ्रान्त्या लक्ष्मणलक्षितो अवनिधनिकस्य शुचे. स्वरुचेः उच्चैः क्रामन् खरसुतहर. अभूत् सुधीः क्वाप्येव प्रमादपर स्यात् ॥ २९ ॥

व्याख्या—मधुरबहलीभागस्थायी मधुरो मनोज्ञो यो बहलीभागः नगरबाह्योद्यानभूभागः तत्र स्थायी प्रभुर्जिनेन्द्रः आदीश्वरः

प्रातः प्रभाते अनुपदं भ्रान्त्या तत्क्षणगमनेन न बाहुबलीक्षितः बाहुबलिना न दृष्टः लक्ष्मणलक्षितश्चलक्ष्मणेन राज्ञा न लक्षितः नयनगोचरी कृतः अभूत् जातः स्वरुचेः स्वतो रोचमानस्य शुचेः परिशुद्धस्य अवनिधनिकस्य पृथ्वीपतेः बाहुबलिनः उच्चैः क्रामन् अधिकं गच्छन् खरसुतहरः कामविनाशकः सुधीः तत्वज्ञः क्वाप्येवं प्रमादपरः स्यात् न स्यादित्यर्थः सायं प्रभुर्बाह्योद्यानमागत इति उद्यानपालेन निवेदितः प्रातर्यावता सपरिवारो गच्छति बाहुबली तावता प्रभुर्विजहारेति राज्ञः प्रमादपरत्वं, न कदाचिदपि प्रभुः प्रमाद्यतीति भावः । अर्थान्तरन्यासः ॥ २९ ॥

अन्यजिनेन्द्रपक्षे—मधुरवदलीमागस्थायी मनोज्ञनिर्मलदेशस्थः बाहुबली संयमसामर्थ्यवान् न क्षितः स्वसंयमात् न स्खलितः प्रातः परिपूर्णः भ्रान्त्या भ्रमणेन लक्ष्मणेन स्वचिन्हेन लक्षितः न इति न किन्तु लक्षित एव खरसुतहरः पराजितकामः प्रमादपरः प्रमादात् अनवधानात् परः दूरवर्ती अप्रमादी सुधीः सुष्ठु आत्मानुभववान् क्वाप्येवं स्यात् कश्चिदेवं भवेत् अवनिधनिकस्य अवनमेवावनिः स एव धनं यस्य तस्य दयाधनिकस्येत्यर्थः शुचेः शुद्धस्य स्वरुचेः स्वस्मिन् आत्मनि रुचिर्यस्य तस्य सम्बन्धी क्रामन् गच्छन् उच्चैरभूत् ॥ एवं कृष्णपक्षेऽप्यवसेयम् ॥ २९ ॥

रामपक्षे—मधुरवहलमागस्थायी निर्मलपरिस्कृतप्रदेशस्थः बाहुली न क्षितः न केनापि हतः अनुपदं रामस्य अनुसरणम् भ्रान्त्या भ्रमणेन लक्ष्मणलक्षितः न लक्ष्मण इति यथार्थनामा यथा लक्ष्म कदाचिदपि न व्यभिचरति तथायमपि रामस्यानुचर इति भावः अवनिधनिकस्य पृथ्वीपतेः शुचेः परिशुद्धस्य स्वरुचेः स्वतः शोभमानस्य उच्चैः क्रामन् अतिशयमनुसरन् अभूत् खरसुतहरः शम्बूकनिहन्ता सुधीः बुद्धिमान् क्वाप्येवम् कुतोप्येवं प्रमादपरः स्यान्नैव स्यादित्यर्थः ॥ २९ ॥

अथ विधिवशात् स्थित्याः पूर्तौ वने हत-दण्डके, सबलहरिणा विद्यासिद्धे खरात्मनि निष्ठिते ।
भवति समरे जह्रे रक्षःप्रभुर्वसुधाङ्गजां, स्वमनुजमिते रामे मिथ्यामतिं स्वविमानधीः ॥ ३० ॥

अन्वयः—अथहतदण्डके वने सबलहरिणा विधिवशात् स्थित्या पूर्तौ विद्यासिद्धे खरात्मनि निष्ठिते समरे भवति स्वमनुजमिते रामे रक्षःप्रभुः स्वविमानधीः अमिथ्यामतिं वसुधागजाम् जह्रे ॥ ३० ॥

व्याख्या—अथ अथानन्तरं हतदण्डके दण्डयति विभीषति इति दण्डकः भयकारकः हतः निरस्तः दण्डको यत्र तस्मिन् जिनेन्द्रागमनप्रभावात् पारस्परिकविरोधोऽपि शान्त इति भावः निर्भये वनेऽरण्ये विधिवशात् विधिपूर्वकं स्थित्याः धारणायाः मुक्तेरित्यर्थः "मर्यादाधारणास्थितिरिति हैमः" पूर्तौ पूर्तिनिमित्ताय मुक्तिनिमित्तायेति तत्वम् सबलहरिणा हरति पापमिति हरिः सबलश्चासौ हरिश्चेति सबलहरिस्तेन विद्यासिद्धे अध्यात्मज्ञानसिद्धे सम्पन्ने सति अत एव खरात्मनि निष्ठिते कामे प्रतिहते वसुधांगजाम् वसु कृष्णान्दधातीति वसुधा चासौ "वसुरयामे इति शब्दस्तोममहानिधिः" कृष्णा अङ्गना कबरी चेति वसुधाङ्गजा तां जह्रे हतवान् लुलुचे समरे समम् समतां राति अर्पयति सर्वत इति समरस्तस्मिन् समरे समभावे भवति प्रसरति रक्षःप्रभुः रक्षतीति रक्षाः तत्र प्रभुः रक्षणे कम्रवणः स्वविमानधीः विगतः मानोऽहंकारो यस्यां सा विमाना सा चासौ धीश्चेति विमानधीः स्वस्मिन् स्वशरीरे विमानधीर्यस्य स तथोक्तः देहाभिमानरहितः स्वमनुजमिते रामे स्वस्य मनुर्मन्त्रं विचारशक्तिः तस्माजातः स्वमनुजः स्वस्वविचारजातः तेन मिते अनुमिते रामे आत्मानन्दानुभवे अमिथ्यामतिम् निर्मलां दृढां बुद्धिम् चक्रे इति शेषः ॥

रामपक्षे—अथ अनन्तरम् हतः निहतो दण्डको यत्र तस्मिन् हतदण्डके वने विपिने सबलहरिणा बलवता हरिणा लक्ष्मणेन विधिवशात् अदृष्टवशतः स्थित्याः स्थानम् स्थितिरायुः तस्याः पूर्तौ पूर्णे सति आयुषः पूर्णे सति विद्यासिद्धे सूर्यहासखड्गसाधकविद्याभिगते सति खरात्मनि खरपुत्रे "आत्मा वैजायते पुत्र इति श्रुतेः" शम्बूके निहिते मृते सति समरे खरादिभिः सहेति शेषः संग्रामे सति प्रवर्तमाने स्वमनुजमिते रामे स्वं स्वकीयम् अनुजम् कनिष्ठभ्रातरम् इते गते रामे रामस्याविद्यमानदशायां रक्षःप्रभुः रक्षसा पतिः रावणः स्वविमानधीः स्वस्मिन् विमाने रथे धीर्यस्य सः अमिथ्यामतिम् न मिथ्यामतिर्बुद्धिर्यस्यास्ता शुद्धमनस्कां वसुधाङ्गजाम् सीताम् जह्रे हृतवान् अथवा मिथ्यामतिम् इयं मे भार्या भविष्यतीति बुद्धिमास्थायेति जह्रे हरतिस्म ॥

कृष्णपक्षे—सबलहरिणा सबलो बलवान् हरति धैर्यमिति हरिः कामः सबलश्चासौ हरिश्चेति सबलहरिस्तेन बलवता कामेन प्रद्युम्नेन विद्यासिद्धे कनकमालाप्रदत्तगौरीप्रज्ञप्तिविद्याद्वयलब्धे सति विधिवशात् दैवाधीनतः स्थित्याः समयस्य पूर्तौ पूर्णे सति स्वकीयषोडशवर्षपर्यन्तं मातृपितृवियोगरूपशापस्य अथवा समयस्य आयुषः पूर्तौ खरात्मनि खरः दुष्टः आत्मा यस्य तस्मिन् शम्बरे निहिते मृते सति रक्षःप्रभुः रक्षःसु राक्षसेषु प्रभवति इति रक्षःप्रभुः प्रद्युम्नः समरे समः गीतवाद्ययोरेककालभवो गायकहस्तादिचालनरूपस्तालस्तं राति गृह्णातीति तस्मिन् गीतवाद्यादिमहोत्सवे भवति विद्यमाने वसुधाङ्गजाम् वसु तेजो दधातीति वसुधो दुर्योधनस्तस्याङ्गजा तनया जह्रे हृतवान् स्वविमानधीः स्वविमाने आकाशगमनादौ धीः यस्य स रामे बलरामे अनुजम् कृष्णमिते गते स्वम् स्वयमेव अमिथ्यामतिं रामकृष्णौ प्रति पुत्रबुद्धिम् विदधे इति शेषः ॥ ३० ॥

पथि गमनतो-लङ्काधीशा जटायुरवध्यत, समितिसमये ध्वंसं भेजे दशाननकाण्डतः ।
अनुकृतिकरो विद्याभ्रंशं जटी निकटीभव-न्ननुशयमयाद् रत्नाद् यत्नादरक्षपिताहितः ॥ ३१ ॥

अन्वय –पथि गमनतो लंकाधीशा जटायुः अवध्यत समिति समये दशाननकाण्डत. ध्वंस भेजे अनुकृतिकरो निकटीभवन् जटी अनुशयमयात् अयत्नाद् रत्नात् अरक्षपिताहितः विद्याध्वंस भेजे ॥ ३१ ॥

व्याख्या—काधीशा के आत्मनि अधीष्टे इति काधीट् आत्मज्ञानी तेन जिनेन्द्रेण अलम् अतिशयम् पथि गमनतः मार्गे विहारतः जटायुर्जटां संघतिं याति प्राप्नोतीति तथा संघातः अवध्यत नित्यविहारे कैश्चिन्मुनिभिः संघातः प्रेमाऽक्रियत समिति समये इर्यासमित्यादिकाले दशाननकाण्डतः कामदेवबाणतः अध्वंसं भेजे अप्रतिहतो जातः यत्नात् संयमतः अरक्षपिताहितः अरम् शीघ्रम् क्षपितः निराकृतः अहितः शत्रुयन स कामक्रोधादिजेता अनुशयमयाद्यत्नात् शयमनुगतम् अनुशयम् हस्तगतम् अयमेवानुशयमयस्तस्मात् हस्तगतसंयमरूपरत्नात् अविद्यायाः ममतायाः भ्रंशं विनाशं लब्ध्वेति शेषः अनुकृतिकरः कायोत्सर्गविधायकः जटी निकटीभवन् वृक्ष इव सुखासुखस्पर्शनिवारणाक्षमो भवतीति शेषः ॥

रामपक्षे–पथि गमनतः सीतामादाय मार्गे प्रसरतः समितिसमये संग्रामसमये लंकाधीशा रावणेन जटायुः अवध्यत सीतांप्रतिहर्त्तुं विक्रमन् पक्षी अहन्यतेतिभावः कुत इत्याह दशाननकाण्डतः रावणबाणतः यत्नात् अरक्षपिताहितः लघुप्रतिहतरिपुः अनुकृतिकरः जटायुरिव-

सीतामोचनप्रवृत्तः अनुशयमयात् दीर्घद्वेषरूपात् रत्नात् रत्नभूतात् निकटीभवन् रावणसमीपं गच्छन् जटी रत्नजटीनामविद्याधरः विद्याभ्रंशं खेचरत्वादिनिजशक्तिभ्रंशं विनाशं भेजे लेभे ॥

कृष्णपक्षे—काधीशा के शरीरे अधीष्टे इति काधीट् तेन काधीशा अत्यन्तसुन्दरेण प्रद्युम्नेन पथि गमनतः [illegible] रुक्मिणी[illegible]समये युद्धमार्गावतरणतः जटायुः दरयोः साम्यात् जरायुः जगत्कुमारे सत्यभामातनये आयुर्जीवनम् प्रेम यस्य स कृष्णः [illegible] निरुध्यत समितिसमय दशाननकाण्डतः प्रद्युम्नबाणतः ध्वंस पराभवं भेजे लब्धवान् अरक्षपिताहितः क्षिप्रविनाशितारिः अनुकृतिपर[illegible] स्वरूपं विहाय विजातीयरूपवान् प्रद्युम्नः विद्याभ्रंशं मायाभ्रंशं कृत्वा जटी सन् निकटीभवन् कृष्णसमीपं गतः—सन् अनुशयमयात् पश्चात्तापरूपात् रत्नात् शत्रुमिव किमेनमयुध्य इति चिन्तया यत्नात् प्रेमात् अरक्षदित्यर्थः । ३१ ॥

शिरसि चिकुरश्रेणी वेणीलतेव गुरोर्गिरे-स्तदनु सुभगा रेजे स्कन्धे पटीव पटीयसी ।
दिवमिव सखीं कर्तुं प्रोच्चैः स्थितांह्विनिनंसया, जलदपटलीवागाद्रागात्फणीवान[न्]नुरुचिः ॥ ३२ ॥

अन्वय—गुरो शिरसि वेणीलतेव चिकुरश्रेणी तदनु सुभगा पटीयसी पटीव स्कन्धे रेजे दिवम् [illegible] ॥ [illegible] नुरुचि जलदपटलीव फणीव [illegible] ॥ ३२ ॥

व्याख्या—गुरोः आदीश्वरस्य भगवतः शिरसि मूर्ध्नि चिकुरश्रेणी कुन्तलश्रेणी रेजे शुशुभे तामुत्प्रेक्षते वर्णाति गिरेः शिरसिव वेणीलतेव जलदपटलीव 'वेणी केशरचना जलदपटलीति शब्दस्तोममहानिधिः' तदनु तदधोभागे स्कन्धे स्कन्धप्रदेशे सुभगा मनोज्ञा

पथि गमनतो-लङ्काधीशा जटायुरवध्यत, समितिसमये ध्वंसं भेजे दशाननकाण्डतः ।
अनुकृतिकरो विद्याभ्रंशं जटी निकटीभव-न्ननुशयमयाद् रत्नाद् यत्नादरक्षपिताहितः ॥ ३१ ॥

अन्वय –पथि गमनतो लकाधीशा जटायुः अवध्यत समिति समये दशाननकाण्डत. ध्वस भेजे अनुकृतिकरो निकटीभवन् जटी अनुशयमयात् अयत्नाद् रत्नात् अरक्षपिताहित' विद्याध्वस भेजे ॥ ३१ ॥

व्याख्या—काधीशा के आत्मनि अधीष्टे इति काधीट् आत्मज्ञानी तेन जिनेन्द्रेण अलम् अतिशयम् पथि गमनतः मार्गे विहारतः जटायुर्जटां संघतिं याति प्राप्नोतीति तथा संघातः अवध्यत नित्यविहारे कैश्चिन्मुनिभिः संघातः प्रेमाऽक्रियत समिति समये इर्यासमित्यादिकाले दशाननकाण्डतः कामदेवबाणतः अध्वंसं भेजे अप्रतिहतो जातः यत्नात् संयमतः अरक्षपिताहितः अरम् शीघ्रम् क्षपितः निराकृतः अहितः शत्रुयन स कामक्रोधादिजेता अनुशयमयाद्यत्नात् शयमनुगतम् अनुशयम् हस्तगतम् अयमेवानुशयमयस्तस्मात् हस्तगतसंयमरूपरत्नात् अविद्यायाः ममतायाः भ्रंशं विनाशं लब्ध्वेति शेषः अनुकृतिकरः कायोत्सर्गविधायकः जटी निकटीभवन् वृक्ष इव सुखासुखस्पर्शनिवारणाक्षमो भवतीति शेषः ॥

रामपक्षे–पथि गमनतः सीतामादाय मार्गे प्रसरतः समितिसमये संग्रामसमये लंकाधीशा रावणेन जटायुः अवध्यत सीतांप्रतिहर्तुं विक्रमन् पक्षी अहन्यतेतिभावः कुत इत्याह दशाननकाण्डतः रावणबाणतः यत्नात् अरक्षपिताहितः लघुप्रतिहतरिपुः अनुकृतिकरः जटायुरवि-

सीतामोचनप्रवृत्तः अनुशयमयात् दीर्घच्छेपरूपात् रवात् रवभूतात् निकटीभवन् रावणसमीपं गच्छन् जटी रवजटीनामविद्याधरः विद्या-भ्रंशं रोषगत्यादिनिजशक्तिभ्रंशं विनाशं भेजे लेभे ॥

कृष्णपक्षे–काधीशा के शरीरे अधीष्टे इति काधीट् तेन काधीशा अत्यन्तसुन्दरेण प्रद्युम्नेन पथि गमननः छलेन रुक्मिणीहरण-समये गृध्रमार्गाग्रगतः जटायुः इत्ययोः साम्यात् जरायुः जराकुमारे सत्यभामातनये आयुर्जीवनम् प्रेम यस्य स कृष्णः अत्रव्यत निरु पर समितिसमर दशाननकाण्डतः प्रद्युम्नबाणतः ध्वंसं पराभवं भेजे लब्धवान् अरक्षपिताहितः क्षिप्रविनाशितारिः अनुकृतिकरः नरूपं विधाय विजातीयरूपात् प्रद्युम्नः विद्याभ्रंशं मायाभ्रंशं कृत्वा जटी सन् निकटीभवन् कृष्णसमीपं गतः–सन् अनुशयमयात् पश्चात्तापरूपात् रवात् मत्सुमित किमेतदवृत्तम् इति चिन्तया यत्नात् प्रेमात् अरक्षदित्यर्थः । ३१ ॥

शिरसि चिकुरश्रेणी वेणीलतेव गुरोर्गिरे-स्तदनु सुभगा रेजे स्कन्धे पटीव पटीयसी ।

द्विषमिव सखीं हर्तुं प्रोच्चैः स्थितांह्निनिर्नम्रया, जलदपटलीवागात् रागात्फणीवात[नू]नुरुचिः ॥ ३२ ॥

अन्वयः–शिरसि वेणीलतेव चिकुरश्रेणी तदनु सुभगा पटीयसी पटीव स्कन्धे रेजे द्विषम् सखीं हर्तुमिव उच्चैः स्थिता अहिनिनम्रया अतनुरुचिः फणीव जलदपटली आगात् ॥ ३२ ॥

व्याख्या–गरोः गादीशस्य भगवतः शिरसि मूर्ध्नि चिकुरश्रेणी कुन्तलश्रेणी रेजे शुशुभे तामुत्प्रेक्षते वेणीति गिरेः शिखरिणः वेणीलतेव जलदपटलीव 'वेणी केशरचना जलदपटलीति शब्दस्तोममहानिधिः' तदनु तदधोभागे स्कन्धे स्कन्धप्रदेशे सुभगा मनोज्ञा

पथि गमनतो-लङ्काधीशा जटायुरवध्यत, समितिसमये ध्वंसं भेजे दशाननकाण्डतः ।
अनुकृतिकरो विद्याभ्रंशं जटी निकटीभव-न्ननुशयमयाद् रत्नाद् यत्नादरक्षपिताहितः ॥ ३१ ॥

अन्वय.-पथि गमनतो लंकाधीशा जटायुः अवध्यत समिति समये दशाननकाण्डत ध्वसं भेजे अनुकृतिकरो निकटीभवन् जटी अनुशयमयात् अयत्नाद् रत्नात् अरक्षपिताहितः विद्याध्वसं भेजे ॥ ३१ ॥

व्याख्या—काधीशा के आत्मनि अधीष्टे इति काधीट् आत्मज्ञानी तेन जिनेन्द्रेण अलम् अतिशयम् पथि गमनतः मार्गे विहारतः जटायुर्जटां संघर्ति याति प्राप्नोतीति तथा संघातः अवध्यत नित्यविहारे कैश्चिन्मुनिभिः संघातः प्रेमाऽक्रियत समिति समये इर्यासमित्यादिकाले दशाननकाण्डतः कामदेवबाणतः अध्वंसं भेजे अप्रतिहतो जातः यत्नात् संयमतः अरक्षपिताहितः अरम् शीघ्रम् क्षपितः निराकृतः अहितः शत्रुयन स कामक्रोधादिजेता अनुशयमयाद्यत्नात् शयमनुगतम् अनुशयम् हस्तगतम् अयमेवानुशयमयस्तस्मात् हस्तगतसंयमरूपरत्नात् अविद्यायाः ममतायाः भ्रंशं विनाशं लब्ध्वेति शेषः अनुकृतिकरः कायोत्सर्गविधायकः जटी निकटीभवन् वृक्ष इव सुखासुखस्पर्शनिवारणाक्षमो भवतीति शेषः ॥

रामपक्षे-पथि गमनतः सीतामादाय मार्गे प्रसरतः समितिसमये संग्रामसमये लंकाधीशा रावणेन जटायुः अवध्यत सीतांप्रतिहर्तुं विक्रमन् पक्षी अहन्यतेतिभावः कुत इत्याह दशाननकाण्डतः रावणबाणतः यत्नात् अरक्षपिताहितः लघुप्रतिहतरिपुः अनुकृतिकरः जटायुरिव-

सीतापीनलघुत्तः अनुशयमयात् दीर्घद्वेषरूपात् रसात् रसभूतात् निकटीभवन् रावणसमीपं गच्छन् जटी रत्नजटीनामविद्याधरः विद्याभ्रंश रोगस्तादिलिखशक्तिभ्रंशं विनाशं भेजे लेभे ॥

कृष्णपक्षे–काचीशः के शरीरे अभीष्ट इति कामीर् तेन काचीशा अत्यन्तसुन्दरेण प्रद्युम्नेन पथि गमनतः छलेन रुक्मिणीहरणसमये वृद्धमार्गावारणतः जटायुः द्वयोः साम्यात जरायुः जगत्कुमारे सत्यभामातनये आयुर्जीवनम् प्रेम यस्य स कृष्णः अवच्यत निकृष्यन समितिसमर दशाननकाण्डतः प्रद्युम्नबाणतः ध्वंस पराभवं भेजे लब्धवान् अरक्षपिताहितः क्षिप्रविनाशितारिः अनुकृतिकरः नम्यं विशाय निजानीयरूपवान प्रद्युम्नः विद्याभ्रंश मायाभ्रंशं कृत्वा जटी सन् निकटीभवन् कृष्णसमीपं गतः–सन् अनुशयमयात् पश्चातापरूपात् रसात् पत्रुमिव किमेनपयुज्य इति चिन्तया पस्नात् प्रेमात् अरक्षदित्यर्थः । ३१ ॥

शिरसि चिकुरश्रेणी वेणीलतेव गुरोर्गिरे-स्तदनु सुभगा रेजे स्कन्धे पटीव पटीयसी ।
दिवमिव सर्वां कर्तुं प्रोच्चैः स्थिताहिनिनसया. जलदपटलोवागात् रागात्फणीवात[नू]नुरुचिः ॥ ३२ ॥

अन्वय –गुरो गिरेः शिरसि वेणीलता चिकुरश्रेणी तदनु सुभगा पटीयसी पटीव स्कन्धे रेजे दिवम् सर्वोत्कृष्टमिव उच्चैः शिरसा अहिनिनसया अत सुरो नालपटल इव फणी अगात् ॥ ३२ ॥

व्याख्या–गुरोः आदीश्वरस्य भगवतः शिरसि मूर्ध्नि चिकुरश्रेणी कुन्तलश्रेणी रेजे शुशुभे तामुत्प्रेक्षते वेणीति गिरेः शिखरिणः वेणीलता जलदपटलीव 'वेणी केशरचना जलदपटलीति शब्दस्तोममहानिधिः'' तदनु तदधोभागे स्कन्धे स्कन्धप्रदेशे सुभगा मनोज्ञा

पटीयसीव पटुतरेव पटी पटभेदः रेजे दिवमिव सखीं कर्तुं प्रोच्चैः स्थिता स्वर्गमग्र्यमुपगन्तुमिव उन्नतस्थानस्थिता अंह्रिनिनंसया चरणनमनेच्छया अतनुरुचिः अतिशयकान्तिः निबिडच्छविः जलदपटलीव घनसंहतिरिव वा अथवा फणीव कृष्णसर्पसंहतिरिव अगात् अयासीत् उत्प्रेक्षालङ्कारः स्फुटं प्रतिभातीति ॥

रामकृष्णपक्षसाधारणमेतद् ॥

अन्यतीर्थकृता पक्षे–गुरोः जिनेन्द्रस्य गिरेः प्रव्रजितपर्वतस्य शिरसि उर्ध्वप्रदेशे चिकुरश्रेणीव कचपंक्तिरिव वेणीलता कुटिलनदी रेजे भातिस्म तामेवोत्प्रेक्षते स्कन्धे स्कन्धप्रदेशे सुभगा मनोहरा पटीयसी पट्वी पटीव अन्यत् पूर्ववत् ॥ ३२ ॥

**हरिचरसुरास्थाने नागः सशम्बलकम्बलः, प्रभुमनुचरन्नावि-स्थित्या सुखं चक्रवान् भृशम् ।**
**स्थितमुपवने सौभद्रेयोऽप्यविक्रियायान्वयात्, कतिचन समास्तेन स्वामी विहारमचीकरत् ॥ ३३ ॥**

अन्वय —हरिचरसुरास्थाने स शम्बलकम्बलः नागः प्रभुमनुचरन् नावि स्थित्या भृश सुखं चक्रवान् उपवने स्थितं अविक्रियया सौभद्रेयः अपि अन्वयात् तेन स्वामी कतिचनसमाः विहारमचीकरत् ॥ ३३ ॥

व्याख्या–स प्रसिद्धः नागः शम्बलकम्बलः श कल्याणम् वलयति वर्धयतीति शम्बलः कम् सुखं च वलयतीति कम्बलः स्वकीयकल्याणसुखकारकः नागः श्रेष्ठः स्वात्मकल्याणविधायकत्वात् सौभद्रेयः सुभद्रायाः कल्याणगुणविशिष्टाया अपत्यम् सौभद्रेयः सुभद्रातनयः हरिचरसुरास्थाने चर्यते इति चरः हरेर्जिनेन्द्रस्य चरः चरणम् विहरणमित्यर्थः तदेव सुरास्थानम् तीर्थस्थानम् तस्मिन् तीर्थभूते

उपवने बाह्योद्याने अपि मनोहरे अथवा स्वभुद्रौ स्वकीयाभ्युदये स्थित्वा स्वाभ्युदयकामनयेत्यर्थः स्थितम् समागतम् प्रभुं जिनेन्द्रमनुगच्छन् सोमानः भृशमतिशयम् सुखम् प्रीतिम् चकृवान चकार अविक्रियया विकाररहित्येन निर्मायिकतयेति भावः अन्वयात् प्रभुमन्वगमत् तेन सह कतिचनसमाः कतिवर्षाणि यावत् स्वामी प्रभुः विहारम् विचरणम् अचीकरत् व्यदधत् ॥

श्रीमहावीरजिनेन्द्रपक्षे–हरिचरसुरस्थाने चरत्यनेनेति चरश्चरणः हरेः विष्णोश्चरः हरिचरः सुनोतीति सुरा सुधातोरौणादिकोरक्, नदी हरिचरस्य सुरा हरिचरसुरा गंगानदी तस्या विष्णोः पादप्रसूतत्वात् तस्याः स्थाने गंगानदीस्थाने स प्रसिद्धः शम्बलकम्बलः नागः नागकुमारः नावि स्थित्वा प्रभुम् महावीरस्वामिनम् भृशमतिशयम् सुखं चकृवान् पूर्वभवसिंहजीवः साम्प्रतं सुदष्टनामा नागकुमारः पूर्ववैरमनुस्मरन् भगवन्तं व्यराध्यत तस्मादुपसर्गात् शम्बलकम्बलनामा नागः प्रभुमुपाकृतेति कथासन्दर्भः उपवने स्थितम् बाह्योद्यानस्थं प्रभुम सौभद्रेयः सुभद्रातनयो गोशालः अविक्रियया विकाररहित्येन अन्वयात् अनुगमोऽभवत् तेन सौभद्रेयेन गोशालेन सहेति शेषः स्वामी महावीरस्वामी कतिचनसमाः कतिवर्षपर्यन्तम् विचरणम् अचीकरत् व्यदधत् ॥

कृष्णपक्षे—हरिचरसुरास्थाने चरत्यस्मिन्निति चरः हरेः कृष्णस्य चरः हरिचरः कृष्णनिवासस्थानम् तदेव सुरस्थानम् देवस्थानम् तीर्थभूतमित्यर्थः स प्रसिद्धः तस्मिन् शम्बलकम्बलः कल्याणसुखवान् नागः श्रेष्ठः सौभद्रेयः सुभद्रातनयः अभिमन्युः प्रभुं कृष्णम् अनुगच्छन् नावि स्थित्वा नौकाया स्थित्वा समुद्रजलक्रीडया भृशमतिशयं सुखं प्रीतिम् चकृवान् अकृत उपवने रैवतकाद्रौ स्थितम् कृष्णम् अविक्रियया आनुकूल्येन अन्वयात अन्वसरत स्वामी कृष्णः तेन सौभद्रेयेण सह कतिचित्समाः कतिवर्षाणि विहारम् क्रीडाम् अचीकरत अकरोत् ॥ ३३ ॥

रामपक्षे—सौभद्रेयो लक्ष्मणः, अन्यत्पूर्ववद्योज्यम् ॥ ३३ ॥

कृतगुरुतपा भूरीशानैः प्रतिस्थलसत्कृतो, लघु वसुमतीं धात्रीं पात्रीचकार महासुदः ।
रजतसहितैर्माषैः स्वं चातुषत् तुषवर्जितै—र्वनमपि घनं पुष्पासारैः ससौरभमादधे ॥ ३४ ॥

अन्वय.—कृतगुरुतपा ईशानैः भूरि प्रतिस्थलसत्कृत. महासुदः लघु वसुमतीं धात्रीं पात्रीचकार रजतसहितैर्माषै तुषवर्जितै. स्वम् अतुषत् घनम् वनमपि पुष्पासारैः ससौरभमादधे ॥ ३४ ॥

—: व्याख्या :—

वर्द्धमानपक्षे—कृतगुरुतपाः कृतं गुरु महत्तपोऽभिग्रहरूपो नियमो येन स कृतगुरुतपा ईशानैर्देवैर्नृपैर्वा भूरि बहुशः प्रतिस्थलसत्कृतः सर्वत्रप्राप्तसत्कारः महासुदः असुम् जीवन ददातीति असुदः जीवरक्षकः महांश्चासौ असुदश्चेति महासुदः निरतिशयजीवरक्षापरः लघु क्षिप्रम् वसुमतीं सुसमृद्धा धात्रीं पृथ्वीं पात्रीचकार विहारस्येति शेषः तुषवर्जितैर्निर्दुष्टैः द्रव्यादिचतुर्विधशुद्धैः रजतसहितैः रज्यते निस्तुषीक्रियतेऽनेनेति रजतः सूर्पः तेन सहितैः सूर्पस्थैरित्यर्थः अथवा अत्यन्तस्वच्छैः माषैर्मापान्नैःस्वम् स्वयम् अतुषयत् यथाभिग्रहलाभेन पूर्णव्रतत्वात्तुतोष घनं निविडम् वनम् आलयम् यद्वा वनरमण्यम् पुष्पासारैः पुष्पवृष्टिभिः ससौरभम् सुगन्धिमत् ससौगन्धिकं आदधे चक्रे प्रभोस्तथाविधभिक्षादानेन परितुष्टो देवस्तत्रपुष्पवृष्टिम् विदधौ ॥

अन्यतीर्थकृतापक्षे—रजतसहितैः अतिस्वच्छैः माषैः मषति क्षुधान्निवारयती माषः ''मषेः संज्ञाया घञ्'' तैः क्षुन्निवारकैः तुषवर्जितैर्निर्मलैः निर्दोषैरन्यत् पूर्ववदवसेयम् ॥

रामपक्षे—कृतगुरुतपाः कृतम् विरचितम् गुरोः पितुर्वचनादिति शेषः तपश्चतुर्दशवर्ष यावद्वनवासरूपं येन स भूरीशानैः प्रतिस्थलमस्कृतः ईशानैः गजभिः भूरि बहुशः प्रतिस्थलमस्कृतः स्थाने स्थाने कृतादरः महासुदः महद्भिरराजमानः रजतमहितैरतिस्वच्छैर्मा-परनैःस्यम् स्वगम् अतुपत् वनम् वनमपि पुष्पासारैरित्यर्थः ससौरभम् ससौगन्धिकम् आदध्ये आचक्रे ॥

कृष्णपक्षे—कृतमाचरितम् गुरुषु पित्रादिषु तपः तदीयसेवारूपं नियमं येन स कृतगुरुतपा भूरि बहुशः ईशानैः नृपैः प्रतिस्थलमस्कृतः कृतादरः महासुदः शोभमानः वसुमतीं यशोमतीं नन्दगोपपत्नीं धात्रीं पात्रीञ्चकार पिबत्यस्याः स्तन्यमिति पात्री "पातेष्टन् ततो ङीप्" ताम् स्तन्यदात्रीञ्चकार वनम् समुद्रजलम् पुष्पासारैः कुसुमवृष्टिभिः सौगन्ध्यवत् आदध्ये चक्रे ॥ ३४ ॥

हरिपतिरतेः खेटात् सीताविशुद्धिरजायत, रुचिरभवने--लङ्कालाभे सपुण्यजने वने ।
अधृत न हरेर्लोकः कं कं बलं विभवं गुणैः, कपिकवणिजामास्यादेव स्थितिर्विदिताऽप्यतः ॥ ३५ ॥

अन्वयः—हरिपतिरतेः खेटात् लङ्कालाभे सपुण्यजने वने रुचिरभवने सीताविशुद्धिरजायत हरेर्लोकः गुणैः कं कं बलं विभवं न अधृत अतः कपिकवणिजामास्यादेव स्थितिर्विदिता ॥ ३५ ॥

व्याख्या—हरति पापमिति हरिः संयमध्यानं वा स एव पतिः तत्र रतिरनुरागो यस्य तस्य हरिपतिरतेः संयमैकचित्तस्य ध्यानैकमनसो वा जिनेन्द्रस्य खेटात् मुद्रातः कायोत्सर्गमुद्राधारणतः सीतायाः मोक्षलक्ष्म्याः विशुद्धिः शोधनम् अजायत अलम् अत्यर्थम् कालाभे कस्य आत्मनः आलाभे सर्वतः प्राप्तौ सर्वत आत्मज्ञाने लब्धे अभवने अगृहे स पुण्यजने पवित्रजनमहिते वनेऽरण्ये रुचिः

प्रीतिः अजायत इति शेषः हरेर्जिनेन्द्रस्य लोकः लोकते पश्यतीति लोकः दर्शनकर्त्ता गुणैः प्रभुदर्शनजन्यमहिमभिः कं कं बलम् आत्मबलं विभवं समृद्धिश्च न अधृत नालभत अतः जिनेन्द्रस्य "सार्वविभक्तिकस्तसिल्" आस्यादेवमुखदर्शनादेव स्थितिर्मर्यादा विदिता क्रयिकवणिजाम् क्रयविक्रयव्यापारवता वणिजाम् आस्यादेव इवार्थकोऽत्र एव शब्दः यथा तेषां मुखादेव केषाञ्चिन्महार्घता केषाञ्चित् समर्घता विज्ञायते तथा प्रभुमुखदर्शनादर्शनाभ्यां भवतीति भावः ॥

रामपक्षे—हरिपतिरतेः खेटात् हरीणां पतिः हरिपतिः सुग्रीवः तस्मिन् रतिः अनुरागो यस्य तस्मात् खेटात् खे आकाशे अटती तस्मादाकाशचारितः हनूमतेः लंकालाभे लंकानाम्नि सपुण्यजने सयातुधाने "यातुधानः पुण्यजनो नैर्ऋतो यातु रक्षसीत्यमरः" वने अशोकवाटिकाख्ये रुचिरभवने मनोहरमंदिरे सीताविशुद्धिः सीताया रामपत्न्या विशुद्धिर्मार्गणम् अजायत हरेः सुग्रीवस्य लोकः रामस्यानुचरो वा गुणैः शौर्यादिगुणैः क कं बलं सामर्थ्यं विभवं प्रकाशं न अधृत न धारितवान् तथाहि क्रयिकवणिजां आस्यादेव मुखादेव हनुमन्मुखाद् स्थितिः जानकीस्थितिर्विदिता ज्ञातेति भावः ॥

कृष्णपक्षे—हरिपतिरतेः हरेः कृष्णस्य पतिः ज्येष्ठत्वेनाधिपतिः बलरामः तत्र रतिः गजविषयिका प्रीतिर्यस्य तस्मात् खेटात् आकाशचारितो दूतात् सीतायाः मदिरायाः विशुद्धिःशोधनम् अजायत अभवत् क इत्याह कम् जलम् आलभ्यते इति कालाभे जलप्राये सपुण्यजने पवित्रजनसहिते अवने सुरक्षिते रुचिरभवने मनोहरगृहे हरेः कृष्णस्य बलस्य वा लोकः गुणैः शौर्यादिभिः कं कं गुणं विभवञ्च न अधृत न धृतवान् अतः कृष्णस्य स्थितिः क्रयिकवणिजामास्यादेव विदिता ज्ञाता ॥ ३५ ॥

निश्रुमुपगता दीव्यद्रूपा सुलक्षणलक्षिता, सुरवलभृताम्भोधावद्रौपदीरितसद्गवी ।
सुररववशाद्भिन्नाद्द्वीपान्नतेन समाहृता, हरिपवनयोर्धर्मस्यात्रात्मजेषु-पराजये ॥ ३६ ॥

अन्वय —श्रुतिमुपगता दीव्यद्रूपा सुलक्षणलक्षिता सुरवलभृता अम्भोधौ अद्रौ पदीरितसद्गवी सुररववशात् भिन्नात् द्वीपात् न तेन समाहृता हरिपवनयोर्धर्मस्य आत्मजेषु पराजये ॥ ३६ ॥

व्याख्या—श्रुतिमुपगता श्रुतिम् विख्यातिमुपगता प्राप्ता दीव्यद्रूपा प्रकाशस्वरूपा स्वच्छेति यावत् सुलक्षणलक्षिता सल्लक्षणलक्ष्या सुरवलभृता सुराणामिन्द्राणां यद्बलं तत् सुरबलं भरयतीति अन्तर्भावितण्यर्थः देवबद्बलप्रयोजिका अद्रौपदी अद्रौ पर्वते पद्यते उत्पद्यते इति अद्रौपदी गंगा या अम्भोधौ इव समुद्रे इव ईरितसद्गवी ईरिता गतिविषयीकृता या सद्गवी सती शोभना चासौ गौः पृथ्वी चेति तथा जिनेन्द्रविहारप्रचारपरिपूता भूमिः सुरववशात् सुष्ठु राजन्ते इति सुराः नृपास्तेषां रवः प्रार्थनाशब्दः तस्य वशात् तदनुरोधात् भिन्नात् अन्यस्मात् द्वीपात् प्रदेशात् नतेन नम्रेण समाहृता समानीता कस्मिन् इत्याह हरीति हरिः लक्ष्मीः पवन पतिस्तयोः लक्ष्मीशुद्धयोः धर्मस्य सुकृतेश्च आत्मजेषु प्रजावर्गेषु परं अत्युत्कृष्टं यज्जयं तस्मिन् अत्युत्तमत्कटविस्तारायेत्यर्थः निमित्ते सप्तमी ॥ यद्वा हरिपवनयोर्धर्मस्य पराजये अतिशयजयसंपादनाय आत्मजेषु कामेषु विषये पराजये निराकरणाय चेत्यर्थोऽपि श्लेषमहिम्ना लभ्यते ॥ ३६ ॥

रामपक्षे—श्रुति श्रवणं उपगता लंकाया वर्तते इति विदितसमाचारा दीव्यद्रूपा प्रद्योतमानस्वरूपा सुलक्षणलक्षिता सौभाग्यल

क्षणवती असुग्बलभृताम्भोधौ असुराणां राक्षसानाम्बलमेवाम्भोधिर्दुस्तारः सागरस्तस्मिन् अद्रौ पर्वते पदीव नदीव ईरितसद्‌गवी गमनविपयी भूता भूमिः यथा पर्वतनदी समुद्रगता सती पुनर्निर्गमनाऽयोग्या भवति तथेयमपि सीता राक्षससमुद्रगता पुनरावृत्तिदुर्लभैव जातेति भावः ॥ सुर इति सुरः ऐश्वर्यं तस्य रववशात् गर्वतः ऐश्वर्यगर्वतः भिन्नात् द्वीपात् नतेन कौटिल्येन "नतमाविद्धं कुटिलमिति हैमः" भिन्नात् द्वीपात् समाहृता आनीता हरिपवनयोः धर्मस्य आत्मजेषु हरिः सूर्यः पवनो वायुः तयोः आत्मजः सुग्रीवो हनूमांश्च धर्मस्य आत्मजो रामः तेषु सुग्रीवहनुमद्रामेषु विषये पराजये परामवायेत्यर्थः ॥

कृष्णपक्षे—श्रुतिमुपगता श्रवणपथपथिकायमाना यद्वा श्रुतिम् नीतिशास्त्रमुपगताऽनुसृता दीव्यद्रूपा दीप्तिदात्री ओजोगुणान्विता सुलक्षणेन शब्दानुशासनलक्षणेन लक्षिता कृतानुसंधाना अथ च शब्दाल्पत्वेऽपि अर्थगरीयसी सुरबलभृताम्भोधा सुराणां देवांशभूतानां पाण्डवानां बलभृते प्रोत्साहने अम्भोधा मेघरूपा वेति वाक्यालंकारे द्रौपदीरितसद्‌गवी द्रौपदीकथितसद्वाणी सुररववशात् पाण्डववेगवशात् देवांशपाण्डवसंबन्धात् यद्वा तदनुसारतः भिन्नात् अन्यस्माद्द्वीपात् प्रदेशात् समाहृता तदानीं दुःखावस्थायामपि वीरमहितेव प्रोक्ता हरिपवनयोः धर्मस्य आत्मजेषु अर्जुनभीमयुधिष्ठिरेषु पराजये उत्कृष्टजयनिमित्ताय तेषु प्रोत्साहनमाधातुमित्यर्थः ॥ ३६ ॥

सवितृतनयेरामासक्के हरेस्तनुजे भुजे, प्रसरति परे दौत्येऽदित्याः सुता भयभङ्गुराः ।
श्रुतिगतमहानादा-देवं जगुर्निजमग्रजं, रणविरमणं लोभक्षोभाद्विभीषणकायतः ॥ ३७ ॥

अन्वय —हरेर्भुजे तनुजे सति कृतनये रामासक्ते परे दौत्ये प्रसरति दित्याः सुताभयभगुरा श्रुतिगतमहानादा लोभक्षोभाद्विभीषणकायतः स्तिमितं दैवम् निजमग्रजम् जगुः ॥ ३७ ॥

व्याख्या—हरेर्जिनेन्द्रस्य भुजे भुज्यते इति भुजम् कर्म तस्य भोगादेव क्षयत्वात् तस्मिन् भोग्यकर्मणि तनुजे अल्पीभूते कृशीभूते "तनुर्देहे मूर्त्तौ अल्पे विरले कृशे चेतिशब्दस्तोममहानिधिः" सवितृतनये सूयते प्रकाश्यते इति सविता भावे तृच् तम् तनोति विस्तारयतीति तस्मिन् प्रकाशविस्तारकारके विशेषत आत्मप्रकाशविस्तारके जिनेन्द्रे रामे आत्मध्याने आसक्ते निमग्ने अत एव परे अत्युत्कृष्टे मोक्षे इत्यर्थः दौत्ये दूतकर्मणि प्रसरति ध्यानमेव मोक्षाय दूतकर्मकृदितिभावः दित्याः दातुं छेत्तु योग्याः दित्याः सुताः मनसिजाः कामाः कामादयः भयभगुराः भयभीता जाताः लोभक्षोभाद्विभीषणकायतः विभीषणकायतः भयोत्पादककायोत्सर्गविधायकात् जिनेन्द्रात् लोभक्षोभात् लोभस्य तद्विषयकजयाशारूपस्य क्षोभात् आघातात् जयाशात्यागात् प्रत्युत निजपराजयभीतेः श्रुतिगतमहानादा भयादेव महाशब्दकारका दीर्घविराविणः रणविरमणम् जिनेन्द्रतो विग्रहनिवर्तनम् निजमग्रजमग्रेसरं देवं द्योतनात्मकं मोहराजम् जगुः निवेदयामासुः जिनेन्द्रेण सह संग्रामनिवर्त्तनाय प्रार्थनां चक्रुरित्यर्थः ॥ ३७ ॥

अर्थनिवन्धनेयं सप्तमीति दैवस्याप्यकथितकर्मत्वाद्द्वितीया ।

रामपक्षे—सवितृतनये सूर्यपुत्रे सुग्रीवे रामासक्ते रामाधीने रामपक्षाश्रिते हरेर्वायोस्तनये पवनञ्जयपुत्रे हनुमति भुजे बाहौ परे सति दौत्ये दूतकर्मणि प्रसरति विलसति दित्याः सुताः दैतेयाः राक्षसाः भयभगुराः त्रासभुग्नाः श्रुतिगतमहानादाः आकर्णितमहानादाः हनुमत इति शेषः वाः वृद्धाय सञ्जीभूताना श्रुतिगतमहाशब्दाः विभीषणकायतः विभीषणस्य कायतः वाक्यतः लोभक्षोभात्

लोभस्य स्वात्मनि पुत्रादौ योऽभिनिवेशस्तस्य क्षोभात् प्रसरतः अथवा लोभः ममता क्षोभः भयादस्थैर्यचित्तचाञ्चल्य तयोर्द्वन्द्वः तस्मात् रणविरमणम् संग्रामनिवर्त्तनम् निजम् स्वीयम् अग्रजम् अग्रगण्यम् प्रभु मित्यर्थः देवं रावणम् जगुः निवेदयामासुः रामाद्युद्धं न विधातव्यमिति विभीषणमुखात् कथयामासुरित्यर्थः ॥ ३७ ॥

कृष्णपक्षे—युद्धाय समागतं जरासंधं हंसको मन्त्री प्राप्तकालं निवेदयति सवितृतनय इत्यादि । सवितृतनये सूर्यपुत्रे कर्णे रामे बलरामे असक्ते असमर्थे अप्रभवति रामसन्निधौ कर्णो न किञ्चित्कर इति भावः यद्वा रामेण परशुरामेण गुरुणा असक्ते युद्ध-समये विद्याविस्मरणरूपदत्तशापे सति एतेन स कथंचिदपि युद्धाय न सक्त इति व्यज्यते परे महति हरेः कृष्णस्य तनुजे पुत्रे भुजे भुनक्तीति भुजस्तस्मिन् भोगशालिनि अथवा भुजे बले प्रसरति विलसति दौत्ये शोमकराजकर्तृकदूतक्रियाया अदित्याः देवक्याः सुताः कृष्णादयः भयभङ्गुराः भय जरासन्धजन्यं त्रासं भङ्गुरयन्ति प्रतिनिवर्त्तयन्तीति तथा निर्भयाः सन्तीतिशेषः श्रुतिगतमहा-नादाः आकर्णितकृष्णसैन्यसिंहनादाः लोभक्षोभात् लोभात् शरीरमोहात् क्षोभात् कृष्णेन सह संग्रामो मया कथं विधेय इति मनोदौर्बल्यात् यद्वा अवश्यंभावी पराजय इति क्षोभात् विभीषणका यतः अतिकृष्णत्वेन यद्वा भयजनकत्वेन कृष्णतः संग्राम-विरमणम् युद्धनिवर्त्तनम् निजम् स्वकीयम् अग्रजम् अग्रगम् देवम् राजानम् जरासंधम् जगुः व्यजिज्ञपन् कथयामासुरित्यर्थः ॥ ३७ ॥

हरिरपि परावृत्त्या बद्धस्तदेन्द्रजितात्मना शिरसि चरणाधानद् वाताङ्गजः प्रतिवासवम् ।
सपदि सभयं चक्रे वक्रे विधौ दिनशङ्कया लघुरपि गिरा वैदेह्यङ्के समुद्रहशोक्षितः ॥ ३८ ॥

अन्वय.—इन्द्रजितात्मना तदा परावृत्त्या हरिरपि बद्ध शिरसि चरणाधानात् प्रतिवासवम् वाताङ्गज वक्रे विधौ दिनशङ्कया सपदि सभयं चक्रे समुद्रदृशा गिरा वैदेह्यंगे लघुरपीक्षितः ॥ ३८ ॥

व्याख्या—इन्द्रजितात्मना इन्द्रं परमैश्वर्यम् जितः आत्मा यस्य स इन्द्रजितात्मा तेन जिनेन्द्रेण तदा परावृत्त्या पौनःपौन्येन हरिरपि कामोऽपि बद्धः निरुद्धः यदा यदा स प्रभवति तदा तदा प्रतिहतः कृत इति भावः शिरसि चरणाधानात् शिरसि मूर्ध्नि चरणस्य चारित्र्यस्य आधानात् स्वीकारात् "चरित्रं चरिताचारौ चारित्र्यचरणे ह्यपीति हैमः" प्रतिवासवम् प्रतीन्द्रम् वाताङ्गजः आसनकम्पद्वारा देहकम्पः सपदि तदानीमेव सभयम् भयभीतम् चक्रे विदधे वक्रे विधौ दिनशङ्कया यदीयप्रभावेनासनकंपो वातस्तस्य वक्रे विधौ सति दिनशङ्कया छेदनशङ्कया तमवश्यं छेत्स्यामीति शङ्कया वै इति वाक्यालंकारे देह्यङ्गे देहिनामङ्गे लघुरपि शीघ्रमेव समुद्रदृशा अवधिज्ञानेन ईक्षितः दृष्टः कम्पनहेतुः अवधिज्ञानेन ज्ञात इत्यर्थः ॥

रामपक्षे—प्रतिवासवम् रावणंप्रति शिरसि चरणाधानात् रावणमस्तके पादप्रक्षेपात् विजगीषुणा शत्रुनगरप्रवेशे प्रथमं दक्षिणपादन्यासो विधीयते स च शत्रुमूर्ध्नि पादन्यासो भवतीति युद्धशास्त्रवेदिनः, कृत्वा मूर्ध्नि पदन्यासं, रावणस्य दुरात्मन इति वाल्मीकीयरामायणे" हरिरपि कपिरपि वाताङ्गजः हनुमान् इन्द्रजितात्मना मेघनादेन परावृत्त्या भूयो भूयःबद्धः संयमितः वैदेह्यंगे सीताङ्गे समुद्रदृशेक्षितः दीनदृष्ट्या दृष्टः लघुरपि तुच्छोऽपि दिनशङ्कया भयशङ्कया वक्रे विधौ सपदि सभय लङ्कावासिनं चक्रे विदधे ॥

कृष्णपक्षे—इन्द्रजितात्मना परमैश्वर्यमधिकृत्वा कृष्णेन हरिरपि कालीयोऽपि कंससखा नागः परावृत्त्या बद्धः संयमितः

वाताङ्गजः भीमसेनः प्रतिवासवम् वसु अस्यास्तीति वासवो नृपः तम् प्रति विपक्षनृपं प्रति दुर्योधनादिकमुद्दिश्येत्यर्थः शिरसि चरणाधानात् मूर्ध्नि पदन्यासात् वक्रे विधौ वामे विधौ अदृष्टे सति वै इति वाक्यालंकारे देह्यङ्क समुद्रदृशा समुद्रविजयवात्सल्यदृशा ईक्षितः अवलोकितः लघुरपि कनीयानपि भीमः गिरा वाचा सभयं भयभीतम् दुर्योधनादिकम् चक्रे विदधे ॥ ३८ ॥

सुमनसि मनोवृत्तिर्नव्योपकारविधौ भवेत् तदितरमनोवृत्तिर्नव्यापकारविधौ भवेत् ।
परसुरगतिं लब्ध्वा पूर्वः सुखं विलसत्यहः परशुरगतिं लब्ध्वा पूर्वः सुखं विलसत्यहः(?) ॥३९॥

अन्वयः—नव्योपकारविधौ सुमनसि मनोवृत्तिर्भवेत् नव्यापकारविधौ तदितरमनोवृत्तिर्भवेत् पूर्व. परसुरगतिं लब्ध्वा अहः सुखं विलसति अपूर्व. परशुरगतिं लब्ध्वा अह. सुखम् विलसति ॥ ३९ ॥

व्याख्या—नव्योपकारविधौ नव एव नव्यः स्वार्थे यत् स चासौ उपकारश्चेति नव्योपकारः तस्य विधौ विधाने नूतनोपकारकरणे सुमनसि सुष्ठु मनो यस्मिन् तस्मिन् निर्मलान्तःकरणे मनोवृत्तिर्व्यापारो भवेत् निर्मलहृदय एव उपकारविधिः प्रवर्त्तत इति भावः नव्यापकारविधौ नूत्नाऽपकारविधौ विरोधविधौ तदितरमनोवृत्तिः तदितरस्मिन् कलुषितान्तःकरणे वृत्तिरभिनिवेशो भवेत् जायेत तथाहि पूर्वः सुमनसि मनोवृत्तिः परसुरगतिं लब्ध्वा परा अत्युन्नता या सुर गतिर्देवगतिस्तां लब्ध्वा देवगति प्राप्य सुखम् निरुपद्रवं यथास्यात्तथा अहः दिनम् विलसति गमयति अपूर्वः परः तदितरमनोवृत्तिः कलुषितान्तःकरणः परशुरगतिम् परस्मात्

मृत्वे पुनि पुनः भावेन तस्य गतिं मरणं लब्ध्वा आसाद्य अह इति खेदे सुखम् तुच्छ स्वस्थविषयेन्द्रियम् वैषयिकेन्द्रियवैधुर्यम् गिलगति विषयसुखादिकमपि न लभते मृत्वा दुःखमापद्यन इति भावः ॥ ३९ ॥

॥ सर्वविपर्यीन्द्रियमितिर्देशः साधारणाभिधेयतया सर्वपक्षसाधारणमदो व्याख्यानम् ॥

अतुलबलवान् मौनी वृत्त्या पराजितयाजनि जनितजनतानन्दो मन्दोदरीरमणे रते ।
किमुत महसा दीनं हीनं मलीनविधेर्वशात् सबलमबलं कर्ता रक्षोगणे शरणे रणे ॥ ४० ॥

अन्वय — अतुलबलवान् मौनी जनितजनतानन्दः अमन्दः दरीरमणे रते रक्षोगणे शरणे रणे मलीनविधेर्वशात् महसा दीनं हीनम् अबलम् सबलम् कर्त्ता अजनि ॥ ४० ॥

व्याख्या—अतुलबलवान् निरतिशयाध्यात्मिकशक्तिशाली मौनी मौनव्रतधारकः जनितजनतानन्दः जनित उत्पादितः जनतायाः जनसमूहस्य आनन्दः सुखं येन स अमन्दः अनलसः स्वाचारपरिपालनपटुः अपराजितया सर्वसहिष्णुतया वृत्त्या सर्वहितकारिक्रियेत्यर्थः दरीरमणे गिरिकन्दरारमणे रते अनुरक्त रक्षोगणे शरणे राक्षसजने गृहे "शरणं गृहरक्षित्रोरित्यमरः" अरणे शब्दरहिते विषये पशुपक्ष्यादिविषये अनुकूलेऽननुकूले वा विधिनिषेधरहिते किमुत किञ्च महसा तेजसा हीन तेजोहीनमत एव दीनं दुर्बलम् कुत इत्याकाङ्क्षायामाह मलीनविधेर्दुरदृष्टस्य वशात् अधीनतः अबलम् निर्बलम् सबलम् रक्षाविधायकत्वात् बलवन्त कर्त्ता अजनि अभूत् प्रभोः प्रभावात् परस्पर- विरोधपरिहारेण निर्बलोऽपि सबलो भवतीति भावः ॥ ४० ॥

रामपक्षे—मन्दोदरीरमणे मन्दोदर्या रमणे रावणे रते अनुरक्ते रक्षोगणे राक्षससमूहे शरणे गृहे समीपे रणे संग्रामे मलीनविधेर्दुरदृष्टस्य वशात् प्रभावात् महसा हीनम् निस्तेजस्कम् अत एव दीनम् दैन्य- मुपगत सबलम् ससैन्यम् रावणम् अतुलबलवान् अपरिमितप- राक्रमशाली मौनी मुनिव्रतवान् जनितजनतानन्दः विरचितलोकसमुदायसुखः रामः अबलम् दुर्बलम् कर्त्ता अजनि दुर्बलविधायकोऽभूत् कयेत्याह अपराजितया अपराङ्मुखया वृत्त्या अच्छलेनेतिभावः ॥ ४० ॥

कृष्णपक्षे—रक्षोगणे शरणे राक्षसजनावलम्बेऽरणे असंग्रामे मन्दोदरीरमणे मन्दम् कृशम् उदरं यस्याः सा मन्दोदरी जीवयशा जरासंधदुहिता तस्या रमणे वल्लभे कंसे रते विरते मृते सति जनितजनतानन्दः कृतलोकाह्लादः मौनी मौनव्रतवान् अतुलबलवान् विपुल- पराक्रमशाली कृष्णः अपराजितया वृत्त्या कदाचिदप्यपराङ्मुखवृत्त्या मलीनविधेर्वशात् महासा हीनं दीनम् अबलम् दुर्बलम् यादवम् कंसभयादितस्ततो भ्रमन्तम् सबलम् बलसहितम् कर्त्ता अजनि सबलवि धायको जात इत्यर्थः ॥ ४० ॥

अमृतमपि तन्मन्योर्दूरादभूदमृतव्रता–दमृतमदधात् स्वस्मिन्नेवं परात्मनि तुष्टये ।
अमृतरुचिवद्देवोऽपूर्वो यशोऽनुदिशं नय–दमृतनिधिना यन्मर्यादा ययौ ससुतां भुवम् ॥४१॥

अन्वयः—मन्योः अमृतव्रतात् तत् अमृतमपि दूरात् अभूत् अमृतम् स्वस्मिन् परात्मनि तुष्टये अधात् अपूर्वो देव. अमृतरुचिवत् यशः अनुदिशम् नयत् स अमृतनिधिना यन्मर्यादा ता भुवम् सु ययौ ॥ ४१ ॥

व्याख्या—मन्योः मन्यते जनैरितिमन्युः मन्यतेरौणादिको युः तस्मात् जगन्मान्यात् अमृतव्रतात् अमृते मोक्षे व्रतं नियमो

यस्य तस्मादमृतव्रतात् अमृतम् अयाचितं वस्तु दूरादभूत् दूरङ्गतम् अयाचितस्यादत्तादानत्वेन पापजनकत्वात्सर्वथा तं जहावित्यर्थः स्वस्मिन् परात्मनि तुष्टये अमृतम् जलम् अधात् धृतवान् अमृतरुचिवद् चन्द्र इव अपूर्वो देवः सर्वोत्कृष्टो देवो जिनेन्द्रः यश अनुदिशम् प्रतिदिशम् नयत् स जिनेन्द्रः अमृतनिधिना समुद्रेण यन्मर्यादा आश्रितेतिशेषः सु इति पादपूर्त्तौ तां मर्यादाम् भुवमतिशयात् ययौ प्राप समुद्र इव गांभीर्ये आसीदिति भावः ॥ ४१ ॥

रामपक्षे—तन्मन्योः तस्य रावणस्य मन्योः क्रोधात् अमृत व्रतात् अमृत व्रनयतीति अमृतव्रतः अमृतभोजी देवस्तस्मात् दूरात् अभूत् पृथक् अभूत् रावणभयात्तेषाममृतं दुर्लभ ययौ स्वस्मिन् स्वशरीरे एवम् परात्मनि पुत्रादौ तुष्टये सुखेन जीवनाय अमृतम् अमरणम् अधात् कदाचिदपि न म्रिये इत्येवं निश्चयमकृत नाधिकारः कृतान्तस्य दशकंधरमन्दिरे इत्यभियुक्तोक्तेः अपूर्वः ... देवो रावणः अमृतरुचिरिव चन्द्र इव अनुदिशं प्रतिदिशं यशः नयत् प्राख्यापयत् स रावणः सु सुष्ठु यथास्यात्तथा अमृतनिधिना सागरेण यन्मर्यादा यस्या मर्यादा सीमा ता भुवम् तादृशीं भूमिम् लंकां ययौ तत्र तस्थौ ॥ ४१ ॥

कृष्णपक्षे—अमृतव्रतात् अमृतमयाचितं व्रतयति निवर्त्तते इति अमृतव्रतस्तस्मात् मन्योः मान्यात कृष्णात् अमृतं जलम् दूरात् अभूत् ... निर्माणाय ... दूरङ्गतम् अमृतम् देवम् स्वस्मिन् एवम् परात्मनि तुष्टये अधात् अस्थापयत् "अष्टोत्तरशतेनोच्चैः ...निर्मितिम् ... मेरुशृङ्गमिवोत्तुङ्गमणिरत्नहिरण्मयमितिनचरित्रे" अमृतरुचिवत् अमृतांशुरिव अपूर्वो देवः कृष्णः यशः अनुदिशम् नयत् यन्मर्यादा यदीयनगरसीमा अमृतनिधिना सागरेण अकृतेति शेषः सु सुष्ठु ता भुवम् द्वारका ययौ अध्युवास ॥४१॥

बलमविरलं तेनोद्योगात् तदा विरलं कृतं विविधविषयव्यामोहस्य व्यपासनतापसात् ।
प्रकृतिशिशिरं दृष्ट्वा स्वस्योपदेशविधिं ततो जनपदमपि प्राहुस्तीर्थं तदा कलिकुण्डिनम् ॥ ४२ ॥

अन्वयः—विविधविषयव्यामोहस्य व्यपासनतापसात् तेन उद्योगात् अविरलं बलं विरलं कृतम् स्वस्य प्रकृतिशिशिरम् उपदेशविधिं दृष्ट्वा तदा कलिकुण्डिनं जनपदमपि तीर्थं प्राहुः ॥ ४२ ॥

व्याख्या—विविधविषयव्यामोहस्य विविधविषये अनेकविषये वस्तुनि यो व्यामोहः प्रेमा अभिरुचिरित्यर्थः तस्य यद्व्यपासनम् दूरीकरणम् परित्याग इति यावत् तस्मै व्यपासनाय यस्तापसस्तपश्चरणम् तस्मात् मोहनिवारकतपोऽनुष्ठात् तेन जिनेन्द्रेण प्रभुणा तदा साधुत्वदशायां अविरलं निबिडम् बलम् सैन्यम् राज्यावस्थानुकूलं सैन्यादिकम् कामक्रोधादिविषयबलम् वा विरलम् कृशम् कृतम् तनूकृतम् स्वस्य आत्मनः प्रकृतशिशिरम् स्वभावशीतलम् उपदेशविधि प्रवृत्तिविधिमाचारमित्यर्थः दृष्ट्वा विलोक्य तदा जिनेन्द्रसमा- गमदशायाम् जनपदमपि यस्मिन् प्रभुस्समेति तन्नगरमपि कलिकुण्डनम् कलिनिवारकम् कलिदाहकं वा तीर्थम् तीर्थभूतमतिशयपावन- मित्यर्थः प्राहुः प्रोचुः जना इति शेषः ॥ ४२ ॥

रामपक्षे—विविधविषये राज्यकालिकानेकस्रक्चन्दनादिविलासहस्त्यश्वादिपदार्थ यो व्यामोहो ममत्वबुद्धिस्तत्तद्विषयकाभिनिवेशस्तस्य यद्व्यपासनं निरसनम् तदेव तपः व्रतम् तत्र साधुः तापसस्तस्मात् अनेकमनोहरवस्तुनिरसनतपोयोगात् तेन रामेण उद्योगात् उद्यमात् विरलम् विच्छिन्नम् असंचितमित्यर्थः बलम् वानरीयसैन्यम्अविरलम् निबिडं घनीभूतं संचितमितियावत् कृतं विरचितम्

मनस्य स्वकीयस्य उपदेशविधिम् विधीयते यत्र स विधिः देशस्य समी पमुपदेशम् तयोः कर्मधारय इति विधियमानदेशम् स्वशासनशासितभूप्रदेशम् प्रकृतिशिशिरम् स्वाभाविकनिर्मलं दृष्ट्वा तदा दर्शनदशायां कलिकुण्डिनम् कलिनिवर्त्तकं जनपदमपि नगरमपि तीर्थम् तीर्थभवनम् प्राहुर्जनाः ॥ ४२ ॥

कृष्णपक्षे—विविधविषयव्यामोहस्य अचिरममावेसितनिजनगरवरतुजातसंपादनरूपचिन्तनस्य व्यपासनम् व्यापनमेव तपश्चित्तैकाग्रता तदेव तापमस्तस्मात् हेतोः तेन कृष्णेन उद्योगात् प्रयामात् व्यापारविशेषात् विरलम् छिन्नभिन्नम् चलम् यादवसैन्यम् आरोप्य तस्य दुःप्रधर्षं कृतम् विधापितम् स्वस्य स्वकीयस्य उपदेशविधम् निवासभूमिम् प्रकृतिशिशिरम् स्वतो निर्मल दृष्ट्वा कलिकुण्डिनम् पापनिवारकम् जनपदम् द्वारकापुरम् तीर्थम् पूतम् प्राहुः कथयन्तिस्म ॥ ४२ ॥

तदनु जनपे क्षित्या हत्या न-मेऽस्तु हरेररेस्तदपि वचसा वक्रं चक्रं विमोक्ष्यति का गतिः ।
हतनिगरणात् तेनास्तेनाऽमुनाऽनलके मते दिवि सुमनसां वृष्टिर्भाविन्यहो शिरसो नतेः ॥४३॥

अन्वय—जनपेक्षित्या हरे अरेः मे हत्या न अस्तु वचसा तदपि वक्रं चक्रं विमोक्ष्यति का गतिः हतनिगरणात् अस्तेन तेन अमुना अनलकेन शिरस उपरि नते दिवि सुमनसां वृष्टिर्भाविनी ॥ ४३ ॥

व्याख्या—तदनु तदपश्चात् जनपेक्षित्या जनान् पाति रक्षतीति जनपः जनरक्षकः तस्य ईक्षितिरीक्षणम् तया जनरक्षकदृष्ट्या हरेः कामस्य अरेः विनाशकस्य जितकामस्य मे मम हत्या जीवहिंसा न अस्तु नैवभवतु वचसा तदपि वचनेनापि तद् हिंसनम् नास्तु न च

कायेन न च वाचेत्यर्थः वचसापि तद् वचनेनापि हिंसनम् कर्तुं वक्रं कुटिलम् चक्रम् विमोक्ष्यति चक्रप्रहारं करोतीति भावः "संभावनायां लट्" अत्र विषये का गतिः क उपायः अनिवार्यमेतदित्यर्थः अत इति शेषः हतनिगरणात् हतस्य हतशब्दस्य निगरणात् निगालात् सर्वथा अभ्यवहारात् अस्तेन अस्तभूतेन अदर्शनेनेत्यर्थः अमुना हतशब्दनिगरणेन तेन हेतुना अनलके मते अनल एवानलकस्तस्मिन् अग्निरूपे मते यथाऽनिच्छयापि स्पृष्टोऽग्निर्दहति तथा हतशब्दप्रयोगोऽपि रदृष्टम् जनयतीति भावः अत एव नतेर्नम्रस्य सर्वत्र कृतमैत्रस्य शिरसो मूर्ध्न उपरीतिशेषः दिविसुमनसां देवकुसुमानां अहो इत्याश्चर्ये वृष्टिः वर्षणम् भाविनी संभाविता सर्वत्र नतान् देवा अप्यनुगृह्णन्तीतिभावः ॥ ४३ ॥

रामकृष्णपक्षे—हरेः मे हरिनाम्नो मम जनपेक्षित्या जनरक्षकदृष्ट्या लोकपालकत्वेन अरेः शत्रोः हत्या हिंसा न अस्तु नैव स्तात् शेषं पूर्ववत् ॥ ४३ ॥

**शृणु मम वचो राजन्! मुञ्चारुचिं वसुधासुतां कुरु गुरुकुलं नानीतावाकुलं धनसंकुलम्।**
**इति लघुगिरा क्रुद्धे युद्धे स्थिरे स-दशानने बलमलभताऽस्योपास्यार्थे गणेण विभीषणः ॥ ४४ ॥**

अन्वय.—हे राजन्? वसुधासुताम् अरुचिं मुञ्च ना नीतौ आकुलम् धनसंकुलम् कुलम् कुरु इतिलघुगिरा स दशानने क्रुधे युद्धे स्थिरे सति अस्योपास्यार्थे गणेन विभीषणः बलम् अलभत ॥ ४४ ॥

व्याख्या—हे राजन्? देदीप्यमानप्रभो? जिनेन्द्र? वसुधासु वसु रश्मिं धारयतीति वसुधा तीक्ष्णतेजोधारणशक्तिः तासु तीक्ष्णतेजोधारणासु ताम् प्रसिद्धामतिशयितामित्यर्थः अरुचिम् अप्रीतिम् मुञ्च त्यज अन्यथाऽतिमृदोस्ते मोहादिः पराभवं कुर्यादितिभावः

अत एव भवसंकुलम् तपोधनत्यागं गुरुकुलम् चारित्र्यम् अनीतौ मोहराज्यनीतौ मोहादावित्यर्थः न कुरु न विदधीहि इति लघुगिरा ब्रह्मचारकर्तार मदशानने सर्वतो भावे क्रुद्धे युद्धे मोहराजेन सह युद्धे स्थिरे निश्चले वीरायिते प्रभौ गणेन स्वीयधैर्यादिगणेन विभीषणः मोहराजं प्रतिभयानकः बलम् आभ्यन्तरिकबलम् अलभत अप्राप्नुत ॥ ४४ ॥

रामपक्षे—हे राजन्! नृप! भ्रातः! राजते मदसद्ग्रहणेन शोभते इति राजा तत्संबुद्धौ अनेन उपदेशताऽर्हता तस्मिन् व्यज्यते मम पौलस्त्यवंशेन न तु मन्त्रिण एव ते च भयादितः कदाचिन्न सदुपदिशन्ति अहन्तु न तथेति गर्वः वचः वचनम् सदुपदेशं शृणु समाकर्णय किमित्याशङ्क्याह मुञ्चेति अरुचिम् नास्ति रुचिः रावणविषयकाभिलाषो यस्या सा अरुचिस्ताम् यद्वा न रोचते जनेभ्यः परस्त्रीत्वात् ताम् परगताम् अननुरागिणीमित्यर्थः वसुधासुताम् भूमितनयाम् जानकीम् मुञ्च त्यज तद्विषयकाभिलाषं मा कुरु तथाहि भवसंकुलम् भवेन सांसारिकतया सकुलं समृद्धम् गुरुकुलम् सर्वतोऽवदात्तं निजवंशम् अनीतौ परस्त्रीधर्षणरूपान्याये आकुलमस्तव्यस्तम् विपर्यस्तम् न कुरु न विदधीहि इति उक्तरूपम् लघुगिरा लघोः कनिष्ठभ्रातुः गिरा वचनेन यद्वा लघुगिरा क्षुद्रवचनेन कायरजनोचितवचनेन क्रुद्धे सद्यः कोपसमाविष्टे युद्धे संग्रामविषये स्थिरे निश्चले दशानने रावणे सति यावत् प्राणं न दास्यामि मैथिलीं नार्पयिष्यामीति कृतनिश्चये न विभीषणः अस्य रामस्य उपास्त्यै सेवायै अवलम्बनाय गणेन स्वीयपरिवारेण अस्य रामस्य बलम् सैन्यम् अलभत अप्राप्नोत् रामसंगतोऽभवत् ॥ ४४ ॥

कृष्णपक्षे—कंसवधसंतप्तो जरासंधः कृष्णानयनाय सोमकं राजानं समुद्रविजयादिकं प्रति प्रैषीत स च तं प्रत्याह "शृण्विति" ।

हे राजन्! समुद्रविजय? अस्य मम वचः जरासंधसंदेशरूपम् शृणु अवधारय मुञ्च कृष्णमिति शेषः जरासंधं प्रति कृष्णं प्रहिणु अथ च अरुचिं कृष्णत्यागरूपं वैमनस्यं मुञ्च त्यज वसुधासु स्वकीयराज्यभूमिषु ता कृष्णप्रीतिम् कुरु कृष्णाऽत्यागात् राज्यहरणमवश्यम्भावीतिभावः गुरुकुलम् महद्यादववंशं धनसकुलं धनधान्यसमृद्धं अनीतौ कृष्णाऽप्रेषणरूपापराधे आकुलम् विपर्यस्तम् विपद्ग्रस्तम् न कुरु न विधेहि इति लघुगिरा नीचवाक्येन स समुद्रविजयादिः दशानने दशदिशि सर्वतः क्रुद्धे युद्धे स्थिरे गणेन सैन्येन विभीषणः भयानकः अस्य जरासंधस्याऽपास्यै निरसनाय बलं सैन्यम् अलभत अचिन्तत ॥ ४४ ॥

अवगमनतः पुत्री जीवद्यशा अवशाऽवदद् मनसि चरितं मत्वा भूपः प्रयाणमधात् पुरः।
त्रिभुवनगुरोः स्मृत्या दूष्यैर्विभूष्य हयद्विपं सपदि पदिकानग्रे कृत्वा ययौ विजयाशयः ॥ ४५ ॥

अन्वयः—अवगमनत. पुत्री जीवद्यशा अवदत् अवसा भूपः मनसि चरित मत्वा पुर. प्रयाणम् अधात् त्रिभुवनगुरो स्मृत्वा हयद्विप दूष्यैर्विभूष्य विजयाशय पदिकान् अग्रे कृत्वा ययौ ॥ ४५ ॥

व्याख्या—अवगमनतः अवगम्यतेऽनेनेति अवगमम् ज्ञानम् तस्मिन्नतो लग्नः इति अवगमनतः ज्ञानसंलग्नः पुत्री पुनात्यात्मानमिति तथोक्तः आत्मकल्याणकारकः जीवत् त्रिकालवर्त्तमानं यशः कीर्त्तिर्यस्य स जीवद्यशा स्थिरकीर्त्तिः अवसा नास्ति वसो वसनं यस्य स शसयोरैक्यात्, अवदत् प्रयोजनातिरिक्तवचनरहितः भूपः भुवम् भूमिस्थजीवम् पातीति भूपः जीवजातरक्षकः मनसि चित्ते चरित व्रतकर्मचेष्टितं मत्वा बुध्वा "चरितमनुष्ठाने संचारे व्रतकर्मादौ चेष्ठिते लीलादाविति शब्दस्तोममहानिधिः"

प्रयाण विहारम् पुरः अग्रे अधात् अकृत हयद्विपम् हये मार्गे "हयो घोटके पथि चेति शब्दस्तोममहानिधिः" द्विपम् द्वाभ्यां कराभ्यां पिबतीति तम् जिनेन्द्रस्य कृपात्रत्वात् हये मार्गे स्थितं द्विपम् हयद्विपम् दूष्यैर्देवदूष्यैर्देवपटैर्विभूष्य विभूषितमित्यर्थः त्रिभुवनगुरोः स्मृत्वा कर्णोऽविरक्षया पद्मी त्रिभुवनगुरुं स्मृत्वा विजयाशयः कामादिविजयेच्छुः पदिकान् पादचारकान् मुनीन् अग्रे कृत्वा अग्रेसरं विधाय ययौ चचाल ॥ ४५ ॥

रामपक्षे—पुत्री जनकपुत्री जीवयशा जीवत् सफलीभवत् यत्नः प्रयत्नो यस्याः सा प्रयत्नलभ्या इति अवगमनतः ज्ञानतः कर्पभूता सीता परयशा इति मनसि हृदये चरित तदीयचेष्टितं मत्वा बुध्वा पुरः अग्रे प्रयाणम् अधात् अकरोत् त्रिभुवनगुरोः स्मृत्वा त्रिभुवनगुरुं स्मृत्वेत्यर्थः जिनेन्द्रं संस्मृत्य हयद्विपं हये मार्गे द्विपमिवेति गजसन्निभं अदूष्यैः शोभनैर्विभूष्य अलंकृत्य सपदि शीघ्र पदिकान् पादचारान् अग्रे कृत्वा अग्रेसरं विधाय विजयाशयः जयाभिलाषी सन् ययौ जगाम ॥ ४५ ॥

कृष्णपक्षे—अवगमनतः यादवीपादागतैः कैश्चिद्वणिग्भिर्द्वारिकापुर्यां मम पत्युर्विनाशकारी कृष्णो जीवतीति ज्ञानतः अवगा शोकागमा निजभर्तृजीवनश्रवणेन समधिकशोकमग्ना पुत्री मगधराजकन्यका जीवयशा तदभिधाना अवदत् कृष्णवृत्तान्तं स्वपित्रे न्यवेदयत् ततः विजयाशयः विजयाभिलाषी भूपो जरासंधः मनसि चरितं मत्वा मनसि स्वहृदये चरितं निजजामातृहननरूपं कृष्ण-वृत्तान्तं मत्वा विचार्य पुरः अग्रे तत्क्षणमेव प्रयाणम् यात्रामधात् अकृत त्रिभुवनगुरोः जिनेन्द्रस्य स्मृत्या स्मरणेन दूष्यैर्वस्त्रनिर्मितगृहैः हयद्विपम् हयाश्च द्विपाश्चेति हयद्विपम् सेनाङ्गत्वादेकवद्भावः विभूष्य मण्डयित्वा सपदि शीघ्रम् पदिकान् पादचारिसैन्यान्

अग्रेकृत्वा पुरतो विधाय ययौ द्वारका प्रति चचाल ॥ ४५ ॥

क्वचन फलितारामे रामे विराममना रिपोर्विनतशिरसां राज्ञां जैनोपहारविधिं दधत् ।
चलति तु रजश्चक्रे केतुं श्रिया हरिदम्बरा- वरणकरणैः साक्षाद्रेजे क्षमाधनदर्शने ॥ ४६ ॥

अन्वय --क्वचन फलितारामे रामे रिपोर्विराममना विनतशिरसा राज्ञा जैनोपहारविधिं दधत् चलति तु रज हरिदम्बरावरणकरणै. श्रिया केतु चक्रे क्षमाधनदर्शने साक्षाद्रेजे ॥ ४६ ॥

व्याख्या—रिपोः शत्रोः विराममनाः विरामे विजये मनो यस्य स शत्रुरूपकर्मादिविजयकामुकः क्वचन कुत्रापि रामे मनोहारिणि फलितारामे फलितः संजातफलो य आरामः उपवनम् तस्मिन् फलान्वितबाह्योद्याने विनतशिरसां विशेषेण प्रभुगत भक्त्या नतानि नम्राणि शिरांसि येषांतेषा राज्ञां नृपाना जैनोपहारविधिं जैने जैनशासने य उपहारा उपढौकनानि वन्दनानि वासाद्युपयुक्तान्यनुमत्या-दयस्तेषांविधिं विधानं दधत् धारयत् स्वीकुर्वन् चलति विहरति सति विहारकाले रजः पादोत्थितरजः हरिदम्बरावरणकरणैः हरिश्च अम्बरश्च हरि दम्बरे तयोरावरणकरणैः आच्छादनकारकैः दिगाकाशावरकैः हेतुभिः श्रिया शोभासंपत्त्या केतुं चक्रे पताकां विदधौ प्रभोः सार्धं अनेकेषां साधूनां विहरणात् रजोबाहुल्येन दिगन्छादकत्व-मिति भावः क्षमाधनदर्शने मुनिजनदर्शने साक्षात् सद्यः रेजे शुशुभे तुतोष ॥ ४६ ॥

रामकृष्णपक्षे—विराममना रिपोः रिपुदमनेच्छस्य कृष्णस्य च क्वचन फलितारामे रामे फलान्विते मनोरमे उपवने विनतशिरसा

नतकमलगणाम् नताम् भूपानाम् सकाशात् जैनोपहारविधिम् जैनसपर्याविधिम् दधत् विधापयत् अथवा विनतशिरसां राज्ञां जैनोपहारविधिम् जैनप्रशस्तोपहारविधिम् उपढौकनानि दधत् धारयत् क्षमा- धनदर्शने साधुसमागमे साक्षात् सर्वात्मनो रेजे चलति तु सैन्येन सह प्रचलति सति रजः सैन्यपदोत्थितधूली हरिदम्बरावरणकरणैः दिगाकाशाच्छादकैः श्रिया केतु चक्रे केतु विदधौ ॥ ४६ ॥

क्वचन रचयन् वन्यान् धन्यान् वदान्यधिया धनै रनुपदभुजि स्थाने वृष्टैर्हिरण्मयसाधनैः ।
जनपदगतं स्वैरं वैरं हरन् विहरन्निति प्रभुरनुपमच्छायं कायं दधौ कलधौतरुक् ॥ ४७ ॥

अन्वयः— क्वचन अनुपदभुजि स्थाने हिरण्मयसाधनैः वृष्टैः धनैः वदान्यधिया वन्यान् धन्यान् रचयन् विहरन् जनपदगतं स्वैरं वैरं हरन् प्रभुः अनुपमच्छायं कायं दधौ ॥ ४७ ॥

व्याख्या— क्वचन कुत्रापि अनुपदभुजिस्थाने भुज्यते इति भुजिर्भोज्यम् तस्य स्थाने भिक्षालाभस्थाने यत्र प्रभोर्भिक्षा मिलति तत्र स्थाने हिरण्मयसाधनैः स्वर्णमयकृतैः काञ्चनप्रचुरैः वृष्टैः वृष्टिभूतैः देवेन्द्रकृतस्वर्णरत्नादिवृष्टिभिः धनैः अन्नप्रचुरैश्च संपद्भिः वन्यान् वने वदालये भवान् वदालयगतान् यत्र जिनेन्द्राणां भिक्षा मिलति तदालयगतानित्यर्थः "वनम् वृक्षसमुदाये जले निवासे आलये इति नवःकोससङ्गतिनिधिः" अथ च वन्यान् आरण्यकान् वदान्यधिया अत्युदारमत्या धन्यान् श्रेष्ठान् भाग्यवत्त्वादिगुणविशिष्टान् कृतकृत्यान् रचयन् विदधत् कुर्वन्नित्यर्थः विहरन् विहारं कुर्वन् जनपदगतम् नगरस्थं यत्र जिनेन्द्रो गच्छति तन्नगरगतवैरम् विरोधं नाकोलकृतं प्राणिनि कमपि वैमनस्यम् स्वैरम् यथेच्छम् अनायासेन स्वचङ्क्रमणप्रभावेनेति तात्पर्यम् हरन् परिहरन् त्याजयन् प्रभु-

राजनश्वरः कलधौतरुक् काञ्चनवर्णः अनुपमच्छायम् अनुपमा उपमातुमयोग्या निरुपमेत्यर्थः छाया कान्तिर्यस्य तं कायं देहं शरीरं दधौ दधातिस्म माधुदशायामनियतविहाराहाराभ्यामपि रुक्षदेहसम्भवे तपोमहिम्ना स्वर्णवर्णदेहं प्रभोर्बभूवेति तात्पर्यम् ॥ ४७ ॥

रामकृष्णपक्षे—वदान्यधिया अत्युदारमत्या वन्यान् वनेभवान् क्वचन क्वापि धन्यान् धनसहितान् यद्वा कृतार्थान् विदधत् विरचयन् किञ्च अनुपदभुजिस्थाने पदे पदे इति अनुपदम् भुजेः भोग्यस्य स्थानम् भुजिस्थानम् अनुपदञ्च तत् भुजिस्थानञ्चेति तस्मिन् हिरण्मयसाधनैः स्वर्णमयोपकरणैः वृष्टैः निसृष्टैरुपलक्षितः जनपदगतं स्वाभिमुखनगर- स्थितं वैरं विद्वेषं हरन् परिहरन् विहरन् निर्गच्छन् प्रभुः रामः कृष्णश्च कलधौतरुक् स्वर्णकान्तिः अनुपमच्छायं निरुपमकान्तिम् कायम् शरीरम् दधौ अवाललम्बे ॥ ४७ ॥

**विहगविरुतैर्नुन्नो भिन्नक्रमरतिविक्रमः क्रमपरिचिते भूमीभागे सुभोगिजनागमे ।**
**विहतकलहा-देशे देशे कृतस्थितिमाश्रयेपरिजनगणे नागस्थाने नृपो ध्रुवमुन्मनाः ॥ ४८ ॥**

अन्वय —विहगविरुतैर्नुन्नः भिन्नक्रमरतिविक्रमः उन्मनाः नृपः क्रमपरि- चिते सुभोगिजनागमे भूमीभागे विहतकलहादेशे देशे परिजनगणे नागस्थाने आश्रये ध्रुवम् स्थितिम् अकृत ॥ ४८ ॥

व्याख्या—विहगविरुतैः विहायसा गच्छतीति विहगः पक्षी तस्य तेषां वा विरुतैः प्रातःकालिकमधुरकूजनैः नुन्नः त्यक्तनिद्रः अथ वा विहगाना बाणानां विरुतैः शब्दैः नुन्नः खिन्नः यद्वा विहगानां कोकिलादिकामोद्दी पकपक्षिणां विरुतैः नुन्नः उद्वेजितः

क्रमगतिविक्रमः यस्मिन्नः अविच्छिन्नः क्रमरतौ विहारव्यापारे विहारविधौ विक्रम उत्साहो यस्य स सन्ततविहारप्रेमवान् उन्मनाः उत् उच्चैः मोक्षादौ मनश्चित्तं यस्य स उच्चाभिलाषी नृपः नॄन् पातीति नृपः जीवेषु प्राधान्यात् तन्निर्देशः प्राणिमात्ररक्षकः जिनेश्वर इत्यर्थः ॥ क्रमपरिचिते क्रमेण गमनेन परिचिते जातपरिचये अथवा क्रमात् क्रमशः परिचिते जातविश्रंभे सुभोगिजनागमे समृद्धशालिजनशालिन भूमीभागे भूविभागे विहतकलहादेशे सर्वथाशान्तकलहे देशे स्थाने परिजनगणे परिजनाना गणः समुदायो यत्र नागस्थाने पर्वताश्रये यद्वा वृक्षागमे वृक्षाश्रये स्थितिम् स्थानम् सन्निवेशम् अकृत व्यधात् अत्रानुप्रासालंकारः ॥

रामपक्षे—विहगविरुतैः पक्षिशब्दैः नुन्नः कृतत्वरः त्यक्तनिद्रो वा भिन्नक्रमः अन्यक्रमः रतिविक्रमः अनुरागक्रमः यस्य स सीताविरहात विप्रलंभरूपः क्रमपरिचिते क्रमेण गमनेन परिचिते जातपरिचये सुभोगिजनागमे सुखसौभाग्यवति अनाश्रये भूमीभागे भूप्रदेशे विहतकलहादेशे विनष्टकलहके देशे परिजनगणे परिचारकजनसहिते नागस्थाने पर्वतप्रदेशे आश्रये आश्रमे उन्मनाः सीताविरहखिन्नमनाः नृपः रामः कृतस्थितिमा कृतनिवास आसीदिति शेषः ॥ ४८ ॥

कृष्णपक्षे—जरासन्धस्य संग्रामाय कृष्णं प्रति गमनवर्णन विहगेति । विहगविरुतैः अशुभसूचकपक्षिशब्दैः नुन्नः खिन्नः विमनस्कः " प्रतिकूलः समीरोऽभूद्गृध्राश्चभ्रमुरम्बरे इति तच्चरित्रे " भिन्नक्रमो रतिविक्रमः भिन्नक्रमो विच्छिन्नक्रमो रतिविक्रमो यस्य स प्राग् शृङ्गारस्य स्थायीभाव आसीदिदानीं वीरस्य उत्साहस्थायीभावो जात इति भिन्नक्रमेति उन्मनाः शत्रुकृतापराधस्मरणेन क्षुब्धचित्तः नृपः प्रति वासुदेवो जरासंधः क्रमपरिचिते सुभोगिजनागमे शुभोगिजनानां नृपानामागमः माहात्म्यसम्मेलनं यत्र तस्मिन्

विहतकलहादेशे पारस्परिककलहरहिते परिजनगणे परिजनाश्रितभूमौ सुरक्षित इत्यर्थः ॥ नागस्थाने पर्वतसमीपे स्थितिम् अकृत व्यदधात् ॥ ४८ ॥

त्यजत मनुजा रागं द्वेषं धृतिं दृढसज्जने, भजत सततं धर्मं यस्मादजिह्मगतारुचिः ।
प्रकुरुत गुणारोपं पापं पराकुरुताचिराद्, मतिरतितरां न व्याधेया परव्यसनादिषु ॥ ४९ ॥

अन्वय —हेमनुजा ! राग द्वेष त्यजत दृढसज्जने धृतिं सतत धर्मं च भजत यस्माद् अजिह्मगतारुचिः गुणारोप प्रकुरुत अचिरात् पाप निराकुरुत परव्यसनादिषु मतिः अतितरा न व्याधेया ॥ ४९ ॥

व्याख्या —हे मनुजाः ? मानवाः ? तेशामेवज्ञानाश्रयत्वाद्विशिष्योक्तम् रागं अनुराग विषयाभिनिवेश द्वेषं विरोध अनिष्टसाधनताज्ञानजन्यं रागप्रतिबधिचित्तवृत्तिभेदं त्यजत निराकुरुतदृढसज्जने सुस्थिरसज्जने जने कषायाद्यनभिनिविष्टचित्तवृत्तिशालिनि धृतिं धैर्य भजत सेवत धारयतेति यावत् सततं निरन्तरं धर्मं सुकृतं भजत संचिनुत यस्मात् धर्मसेवनात् अजिह्मगता अकौटिल्यगता ऋज्वी रुचिः बुद्धिः भवतीति शेषः गुणारोपं गुणस्य दयादाक्षिण्यादिरूपस्य आरोपः आधानं प्रकुरुत गुणसंचयं विधत्त अचिरात् सद्यः तत्क्षणमेव पापं किल्मिषं निराकुरुत पृथक् कुरुत दूरतस्त्यजत परव्यसनादिषु परेषु निकृष्टेषु व्यसनादिषु परस्त्रीसंग-मद्यपानस्तेयादिषु यद्वा परेषां अन्येषां व्यसनादिषु दुःखजनकव्यापारेषु मतिः बुद्धिः अतितराम् अत्यन्तमेव किञ्चिदपीत्यर्थः न व्याधेया न योजनीया यथा परबाधा भवेत्तथा किमपि नैवविधेयमितिभावः ॥

सर्वपक्षसाधारणमेतद्व्याख्यानम् ॥ ४९ ॥

भवति स महानक्रोधस्त्यागतो गतिमानये, दशमबहुधादाने शत्रुञ्जये स्तुततीर्थराट् ।
त्वमसि चलतः पूर्णस्तूर्णं नवा-जिनमाश्रितः, प्रभवसि कथं नागारोहे न-राजरयावृतः ? ॥ ५० ॥

अन्वय — अये प्र. अक्रोधः स महान् भवति त्यागतः गतिमान् दशमबहुधादाने शत्रुञ्जये स्तुततीर्थराट् त्वमसि चलतः पूर्णः तूर्णं न वा जिनमाश्रितः नागारोहे नराजरयावृतः कथं प्रभवसि ॥ ५० ॥

व्याख्या—अये इति सम्बोधने हे प्रभो ? शक्तिमन् ? अक्रोधः क्रोधरहितः जनः यः स महान् भवति महत्त्वमाप्नोतीति भावः ॥ त्यागतः सांसारिकविषयवासनापरित्यागात् गतिमान् ज्ञानवान् भवति त्यागस्य ज्ञानपुरःसरत्वात् सैव यथार्थज्ञानवान् सर्वथा यः सर्वान् परित्यजतीति भावः अथवा त्यागतः संसारत्यागतः गतिमान् प्रशस्तगमनशीलः देवत्वे मोक्षत्वे च गन्ता भवति यद्वा त्यागतः अग-तिमान् पुनः पुनर्गमनागमनरहितः जन्ममरणरहितो भवति दशमबहुधादाने दशमस्य तन्नामकतपोविशेषस्य बहुधा आदाने ग्रहणे अनेकधा दशमतपोऽनुष्ठानात् शत्रुजये आभ्यन्तरिककामादिशत्रुविजये विषये स्तुततीर्थराट् स्तुतम् प्रशंसितम् यत्तीर्थम् शास्त्रम् तत्र राजते इति तथा यथार्थ—शास्त्रज्ञानवान् यद्वा स्तुतं प्रशंसितं यत्तीर्थं विद्यादिगुणयुतपात्रं तत्र राजते यः स तथोक्तः अथवा " सत्यं तीर्थं क्षमातीर्थं तीर्थमिन्द्रियनिग्रहः सर्वभूतदयातीर्थं सर्वत्रार्जवमेव च" इत्युक्तप्रकारस्य तीर्थस्य ग्रहणाद्राजते यः स अथवा दशमस्य अव-सानशिखरस्य बहुधा आदानात् ग्रहणात् तस्मिन् सति शत्रुञ्जये विमलाद्रौ स्तुतः स्तुतिविषयीकृतः तीर्थराट् जिनेश्वरो येन स तथोक्तः

वृद्धत्वेऽपि शत्रुंजये कृततीर्थकरस्तुतिः अथवा दशानां " दानशीलक्षमावीर्यध्यानप्रज्ञाबलानि च । उपायः प्रणधिर्ज्ञानं दशबुद्धबलानि-वै " इत्युक्तलक्षणाना पूर्णः दशमः तस्य बहुधा आदानात् संग्रहात् शत्रुजये शत्रूणा बाह्याभ्यन्तररिपूणां जये विजये स्तुततीर्थराट् स्तुतः स्तुतिविपयीकृतः यः तीर्थः पूतदेशः तत्र राजते इति तथोक्तः त्वं बलतः आत्मबलतः पूर्णः असि भवसि वाजिनम् अश्वम् आश्रितो न तथा न वा नैव जिनम् आश्रितः नागारोहेण पर्वतारोहेण पर्वताधिष्ठानेन राजरयावृतः राज्ञश्चन्द्रस्य यो रयः वेगस्तेजस्तेन आवृतः आयुक्तः युक्त इति भावः ॥ कथं न प्रभवसि किन्तु प्रभवस्येव यथा चन्द्र उदयाद्रिसमारूढः विद्योतते तथा भवानपि नागा-रोहेन दीप्यते इति भावः ॥ ९० ॥

रामपक्षे—अक्रोधः क्रोधरहितः यः स महान् गुरुर्भवति त्यागतः सीतात्यागतः सीतार्पणतः गतिमान् अत्यधिकसमुन्नतिपदगामी भवतीत्यर्थः दशमबहुधादाने ददातीति दः पर्वतः स इव यः शमः शान्तिः पर्वतो यथा सर्वाश्रयस्तथा शमाश्रितोऽपीति भावः स दशमः दः पर्वते दत्ते खण्डने चेति शब्दस्तोममहानिधिः तस्य बहुधा अनेकशः सर्वदेत्यर्थः आदाने ग्रहणे शत्रुञ्जय आभ्यन्तरिकानां बाह्यानां शत्रूणां जये पराजये स्तुततीर्थराट् सत्पात्रश्रेष्ठो भवति. त्वं रावणः बलतः सैन्यतः सामर्थ्यतश्च पूर्णः युक्तोऽसि जिनमाश्रितः न वा जिनाश्रयणं विना नागारोहेण राजरयावृतः राजतेजोयुक्तः कथं प्रभवसि नैव प्रभवसि अतो जिनाश्रयणमवश्यं कर्त्तव्यं तस्मिंश्च सुतरामेव युद्धनिवृत्तिः परदाराऽसंग्रहश्च भविष्यतीति भावः ॥ ९० ॥

एवं कृष्णपक्षेऽपि ज्ञेयम् ॥ ९० ॥

जलनिधिगतं सर्वं स्वं वा परं कुरु संयतं, स्मितवति मयि प्रोच्चैः स्थाने तपोबलशालिनि ।
यदनलसता सूरे दूरे करोति न किल्बिष–मसहनजने लीने रक्षा न-दीनबलात् क्वचित् ॥ ५१ ॥

अन्वयः—प्रोच्चैः स्थाने तपोबलशालिनि मयि स्मितवति जलनिधिगतं परं सर्वं स्वं वा संयतं कुरु यदनलसता असहनजने दूरे सूरे किल्बिषं न करोति लीने दीनबलात् रक्षा क्वचित् न भवतीति ॥ ५१ ॥

व्याख्या—प्रोच्चैः स्थाने अत्युन्नतप्रदेशे तपोबलशालिनि तपोबलयुक्ते मयि स्मितवति जातहासे अहोऽज्ञानविलसितं कथमेतेऽकार्यमपि कार्यमिव कुर्वन्तीति जातपरिहासे इतिभावः स्थिते सतीति शेषः यदि ते धनजिघृक्षा महती वर्त्तते तर्हि जलनिधिगतं रत्नाकरसंस्थितं सर्वं निखिलम् परमुत् कृष्ट स्वम् धनम् संयत एकत्रीकृत कुरु स्वगृहे निचितं कुरु किमित्यल्पधनिनं पीडयसीतिभावः ॥ यदनलसता यदि तेऽनलसता वीररसस्य स्थायी समुत्साहो वर्त्तते तदेतिशेषः असहनजने अक्षमे जनेऽदूरे पुरोदृश्यमाने सूरे सूर्यधाम निधौ किमिति किल्बिषं अपराधं न करोति नाचरति सर्वेषां वीर्यनिषकोऽसाविति तं प्रत्येव निजसामर्थ्यं प्रदर्शयेतिभावः तथाहि लीने शरणापन्ने असामर्थ्यशालिनि रक्षागहनं दीनबलात् दैन्यादेव क्वचिन्न सामर्थ्यशालिनि जने यदि रक्षाभवेत् सैव रक्षा दीनस्य रक्षा तु गुरुगमेव समाप्यतेऽसामर्थ्यादिति तत्वम् ॥

समपक्षे—जलनिधिगतं समुद्रसमीपवर्त्तमानं अत्र सामीप्ये सप्तमी यथा कूपे गार्ग्य इति सर्वं निखिलं स्वं स्वकीयसैन्यम् संयतं सुरक्षितं सर्वतोभयरहितं कुरु विधेहि तथापरं शत्रुञ्च संयतं बद्धं स्वाधीनं कुरु यदि कश्चित् गुप्तचरः समागच्छेत्तं संगृहाणेति भावः ॥

तपोबलशालिनि बलयति वर्द्धयतीति बलम् तपः बलम् तेन शालितुं शीलमस्मिन् तस्मिन् प्रोच्चैः स्थाने अत्युन्नतप्रदेशे स्थिते मयि सितवति विकस्वरे सोत्साहेऽदूरे सन्निधौ सूरे सूर्यवंशोद्भवे सति तथा च यत् यतः सेना संयमतः किल्बिषमपराध छलमित्यर्थः न करोति सावधाने कोऽपि साहसं न कुर्यात् एवच असहनजने सामर्थ्यशालिनि जने लीने शरणापन्ने सत्यपि दीनबलात् दैन्यात् रक्षा तदीयाभय दानम् कचिदपि कुत्रापि न बहुच्छला हि राक्षसाः शरगताः सन्तो विश्वासमुत्पाद्य सतिरन्ध्रेऽवश्यमेव विराध्येरन्निति न तत्र विश्वासो विधेय इतितत्त्वम् ॥ ५१ ॥

कृष्णपक्षे—जलनिधिगतं समुद्रसमीपवर्तिनं द्वारकापुरस्थितम् सर्वं परमन्य वा स्वं धनं संयतं सम्यक्चितं कुरु तपोबलशालिनि तप आलोचनम् "तपः माधे शिशिरे ऋतौ आलोचने स्वाश्रमविहितधर्मे चेति शब्दस्तोममहानिधिः" सम्यक् पर्यवेक्षणम् तस्य बलेन उपयोगेन शालिनि विराजमाने प्रोच्चैः स्थाने उन्नतप्रदेशे सितवति सावधाने सूरे सामर्थ्यशालिनि मयि सति यदनलसता आलस्याभावः तेन दूरे परोक्षेऽपि किल्बिषं पापमपराधं न करोति नाचरति असहनजने अक्षमिणि जनेऽलीने अस्वाधीने दीनबलात् अयं दीन इति बलात् इति कृत्वेति भावः न रक्षा न पालना विधेयेति शेषः दीने बलवतां शोभापराक्रमशालिनि पराक्रमो विधेय इति ॥ तात्पर्यम् ॥ ५१ ॥

समितिरसकृत् कार्या वार्या न गोपनता-स्थिति-र्दृढतरमनो वीर्यं कार्यं विचार्य सहस्रशः ।
नियतिवशतः कायोत्सर्गेऽप्ययं हतिमाप्नुयाद् , व्रजतु यदि वा मन्योः पक्षो रसातलमञ्जसा ॥ ५२ ॥

अन्वयः—समिति असकृत् कार्या गोपनता स्थितिः न वार्या सहस्रशः विचार्य दृढतरमनोवीर्यं कार्यम् कायोत्सर्गेऽपि नियतिवशात् हतिमाप्नुयात् यदि वा मन्योः पक्षः अञ्जसा रसातलं व्रजतु ॥ ५२ ॥

व्याख्या—असकृत् भूयोभूयः समितिः ईर्यासमित्यादयः विधातव्या गोपनता स्थितिः गुप्तित्रयविधिः न वार्या न हेया किन्तु सर्वथैव सहस्रशः अनेकधा विचार्य परिचिन्त्य दृढतरमनोवीर्यं प्रबलमात्मबलं कार्यं विधातव्यम् मनोबलं न कदाचिदपि परिहार्यमिति भावः अयम् साधुजनः नियतिवशतः दैववशतः कायोत्सर्गेऽपि कायोत्सर्गे क्रियारूपध्यानेऽपि हतिं विघ्नम् आप्नुयात् लभेत तथापि मनश्चाञ्चल्यं नाश्रयेदिति भावः मन्योः क्रोधस्य अहंकारस्य वा पक्षः सहायः अञ्जसा झटिति रसातलम् अधोलोक व्रजतु गच्छतु सर्वथाहंकारप्रशमोऽस्तु ॥ ५२ ॥

अथवा—समितिः संग्रामः कामक्रोधादिभिः सह युद्धम् असकृत् भूयोभूयः कार्या विधेया गोपनतास्थितिः स्वसंयमरक्षणविधिः न वार्या न त्याज्या स्वव्रतरक्षणं सर्वथा विधेयमेव नियतिवशतः दैवाधीनतः कायोत्सर्गेऽपि देहपरित्यागेऽपि अयं कामादिः हतिम् हानिम् आप्नुयात् लभेत तथापि न त्यजेत् कायोत्सर्गो यदि भवेत्स विधेयः परन्तु कामादेर्वशो न भवेदित्यर्थः अन्यत् पूर्ववत् ॥

रामकृष्णादिपक्षे—समितिः संग्रामः असकृत् पुनः पुनः कार्या विधातव्या गोपनता पृथ्वीपालनता स्थितिर्मर्यादा न वार्या न परिहर्तव्या सर्वथैव भूपालना विधेया सहस्रशः अनेकधा विचार्य विविच्य दृढतरमनोवीर्यं सुदृढस्वात्मशक्ति कार्यं विधातव्यम् नियतिवशतः विधिवशतः अयम् आत्मशक्तिवान् कायोत्सर्गेऽपि हतिम् बाधामाप्नुयात् लभेत चेत् यदि तथापि मन्योरहंकारस्य पक्षः स्वाभिमानरूप अञ्जसा रसातलम् अधोभुवनम् वा व्रजतु नैव गच्छतु ॥ ५२ ॥

प्रचलति मिथस्तत्तेनागोऽनुगेऽभिमुखागते, नभसि रभसाक्रान्ते कान्तेर्भराद् बहुदीप्तितः ।
कतिपयदिनैर्धामारामः स-दाश-रथी-रसाद्, गिरितटमगाद् राजा व्याजादृते मगधाश्रयः ॥ ५३ ॥

अन्वयः--कान्तेर्भरात् बहुदीप्तित. रभसाक्रान्ते अभिमुखागतेऽनुगे मिथ नभसि प्रचलति तेन अग. धामाराम सदाशरथि· रसात् कतिपयदिनैः मगधाश्रय. व्याजादृते गिरितटमगात् ॥ ५३ ॥

व्याख्या—मिथः परस्परम् प्रचलति प्रसरति अनुगे अनुगामिनि पश्चादागच्छति जने तथा अभिमुखागते गन्तव्यदेशात् संमुखागते लोके च तेन अनुगतेन अभिमुखागतेन च आगः आसमंतात् गम्यते इति आगः गमेः कर्मणि डः अनुगतः बहुदीप्तितः अतिप्रभातः कान्तेर्भरात् कांत्याधिक्यात् नभसि आकाशे रभसा वेगेन आक्रान्ते व्याप्ते सति आकाशमण्डलव्यापकतेजःपुञ्जे सति धामारामः धाम तेजः आरमते यस्मिन् स धामारामः धामनिधिः दाश्यते इति दाशः रम्यते अनेनेति रथः इन्द्रियः दाशः हतः रथ इन्द्रियो यस्य स दाशरथी विजितेन्द्रियः अमगधाश्रयः मगं पापं दधातीति मगधः न मगधः अमगधस्तमाश्रयते इति तथोक्तः निर्मलः राजा दीप्तिमान् स जिनेन्द्रप्रभुः व्याजादृते निर्व्याजम् गिरितटम् गिरिसन्निधिम् अगात् अयासीत् ॥ ५३ ॥

रामपक्षे—कान्तेर्दीप्तेस्तेजस इत्यर्थः अतिशयात् अत एव रभसाक्रान्ते वेगवति अभिमुखागते स्वसान्निध्यमुपागते अनुगेऽनुगामिनिजने मिथः परस्परं नभसि आकाशे आकाशवर्त्मना प्रचलति गच्छति सति तेन प्रचलता सैन्येन सहेत्यर्थः अगः गन्तुमशक्यः शत्रुभिरिति

रोधः. रामो नामवान् "गुणवचनेभ्यो मतुपो लुगिष्टः" रामः स दाशरथी दशरथापत्यः रसात् वीररसात् मगधाश्रयः मगधानां स्तुतिपाठकानामाश्रयः स्तोतव्यः व्याजात् व्याजं विना निष्कपटमित्यर्थः गिरितटम् वेलन्धरपर्वतसमीपम् अगात् अगमत् ॥

कृष्णपक्ष—सदाशरथी दामेन सहितः सदामः रामयोः साम्यात् सदामो रथो यस्य सदाशरथी सारथी सहितरथवान् रसात् वीररसान्वितप्रकृष्टवीभावरूपोत्साहात् मगधाश्रयः जरासंधाभिमुखः अगात् अन्यत्पूर्ववद्योज्यम् ॥ ५३ ॥

प्रभुवचनतः सेतुर्भूपः सरूपसमुद्रभाग्, युधि रुधिरतोऽत्यागान्नागादिनीकृतसंगरः ।
नुकृतभरतः श्रेयोमार्गस्तदङ्गनिबन्धनात्, भुवनजलधेर्मध्ये जज्ञे स्थिरान्तरभूभृता ॥ ५४ ॥

अन्वय – प्रभुवचनतः सेतुः भूपः सरूपसमुद्रभाक् युधिरुधिरतः त्यागात् नागादिनीकृतसंगरः श्रेयोमार्गः तदङ्गनिबन्धनात् सुकृतभरतः भुवनजलधेः मध्ये स्थिरान्तरभूभृता जज्ञे ॥ ५४ ॥

व्याख्या—प्रभुवचनतः उच्यते इति वचः प्रभुश्चासौ वचश्चेति प्रभुवचः प्रभुवचे प्रभुशब्दवाच्ये नतः परिणतः प्रभुवचनतः प्रभुरिति जनैः कथ्यमानः प्रभुरिति यावत् सेतुः मर्यादारूपः लोकमर्यादाधर्ममर्यादाश्रयीभूतः भूपः भुवम् भूस्थं जनमिति शेषः पाति रक्षतीति तथा नरेश्वाकारः सरूपसमुद्रभाग् सरूपः रूपवान् यः समुद्रः स सरूपसमुद्रः साक्षात्समुद्रः तं भजतीति तथा तच्छब्देन तस्यो गणो लक्ष्यते इति साक्षात्समुद्र इव दुर्धर्षः अगाधः सर्वसद्गुणरत्नाकरश्चेति भावः युधिरुधिरतः युधेः संग्रामस्य रुधिर्निरोधस्तत्र

रतः परिणतः सर्वथाहिंसात्मकयुद्धनिवारकः त्यागात् संसारिकविषयवासनापरित्यागात् नागादिनीकृतसंगरः न गच्छति भोगमन्तरा इति नाग कर्म तत् आदिर्यस्य स नागादिः कर्मादिशत्रुः तस्य नीकृतः नीचैः कृतः संगरः प्रसरो येन स कर्मादिप्रसक्तिप्रतिरोधकः श्रेयोमार्गः श्रेयो मोक्ष मार्गते अन्वेषते इति तथोक्तः तदङ्गनिबंधनात् तस्य श्रेयसो मोक्षस्य अङ्गम् प्रधानकारणं संयमं चारित्र्यमित्यर्थः तत्र निबन्धनं प्रवृत्तिरभिनिवेशस्तस्मात् मोक्षमार्गानुसरणात् सुकृतभरतः पुण्यप्रभावात् भुवनजलधेः संसारसमुद्रस्य मध्ये संसारसमुद्रे स्थिरान्तरभूभृता स्थिरान्तरः अतिनिश्चलो यो भूभृत् मैनाकगिरिः कदाचिदपि ततो न चापल्यस्तेन सममिति शेषः जज्ञे यथा स निश्चलस्तथायमपि लोकभजनीयत्वेन स्थिरः "कीर्त्तिर्यस्य स जीवतीत्यभियुक्तोक्तेः" सोऽद्यादिस्मरणीयत्वेनाराध्यत्वेन च स्थित इति भावः ॥ ५४ ॥

रामपक्षे—सरूपसमुद्रभाक् रूपेण समानः सरूपः तुल्यरूपः स चासौ समुद्रश्चेति सरूपसमुद्रः तम् भजति अनुसरतीति सरूपसमुद्रभाग् समानरूपसमुद्रभूपसहितः सेतुर्भूपः सेतुनामानृपः "यदा लंकां गच्छन् रामो वेलन्धरपर्वतसमीपं गतस्तदा समुद्रसेतुनामानौ नृपौ योऽधुमागताविति रामायणकथा" नागादिनीकृतसंगरः नगे भवः नागः कपिः स आदिर्यस्य स नागादिः तेन नीकृतः अधःकृतः संगरः संग्रामो यस्य सः वानरादिनिवारितयुद्धः अत एव युधिरुधिरतः युधेः संग्रामस्य यो रुधिर्निवर्त्तनं तत्र रतः प्रसक्तः अथवा युधि संग्रामे यो रुधिः रोधनं बन्धनमित्यर्थः तत्र रतः वानरादिभिर्जीवग्राहं गृहीतः सन् प्रभुवचनतः प्रभो रामस्य वचनतः आदेशतः त्यागात् मोचनात् श्रेयोमार्गः श्रेयः कल्याणं शुभादृष्टं वा मार्गते इति तथा सुकृतभरतः पुण्यप्रभावात् " निजकल्याणाय रामभ्रात्रे

लक्ष्मणाय तिस्रः कन्या ददौ" इति तदङ्गनिबन्धनात् तस्य रामस्य अङ्गनिबन्धनात् कन्यार्पणेन कुटुम्बसम्बन्धात् भुवनजलधेर्मध्ये स्थिरान्तरभूभृता समं जज्ञे रामसंबन्धान्निर्भयो जात इति भावः ॥

कृष्णपक्षे—प्रभुवचनतः शक्रेन्द्रवचनतः सेतुः समुद्रः मुद्रया सहितः समुद्रः रूपेण सहितः सरूपः सरूपश्च समुद्रश्चेति सरूपसमुद्रौ तौ भजतीति सरूपसमुद्रभाग् स्वीयदेवचिह्नचिह्नितविशिष्टरूपवान् जलधिः त्यागात् स्वजनसंकोचेन वासयोग्यभूमित्यागात् युधिष्ठिरतः परिखारूपेण द्वारकायाश्चतुर्दिक्षु स्थितत्वेन संग्रामवारणे समर्थः जलदुर्गमयः अत एव नागादिनीकृतसंगरः गजादियुद्धनिवारकः जलदुर्गादौ गजादिना प्रवेशो भवति परन्त्वत्रागाधत्वेन न संभाव्यते तत् आसीदिति शेषः सुकृतभरतः पुण्यप्रभावतः तदङ्गनिबन्धनात् समुद्रसबन्धात् श्रेयोमार्गः कल्याणेच्छुः भुवनजलधेः अदसीयभुवनसमुद्रस्यमध्ये स्थिरान्तरभूभृता जज्ञे ॥ ५४ ॥

तदनु दनुजे रक्षोलक्षैः समं मनुजैर्भुजै-र्हरिचरणतश्चित्ते दूने दशास्य-महीपतेः ।
प्रतिहरिरवात् सैन्यस्यान्तश्चलाचलताबलात्, स्वयमभिययावुर्व्यां गर्वं वहन्निव पर्वतः ॥ ५५ ॥

अन्वयः—तदनु दनुजे रक्षोलक्षैर्मनुजैर्भुजैः समं हरिचरणतः दशास्य महीपतेः चित्ते दूने प्रतिहरिरवात् सैन्यस्यान्तश्चलाचलताबलात् स्वयम् पर्वत इव गर्वं वहन् उर्व्याम् अभिययौ ॥ ५५ ॥

व्याख्या—तदनु तत्पश्चात् दनुजैर्दानवैः रक्षोलक्षैः राक्षसानां लक्षैरनेकराक्षसैर्मनुजैर्मनुष्यैः भुजैः भुनक्ति भुवमिति भुजो नृपास्तैः समं सार्धम् हरिचरणतः हरेर्जिनेन्द्रस्य चरणतः निर्गलविहारतः दशास्यमहीपतेः कामनृपस्य चित्ते मनसि दूने विह्वले सति विचरति

जिनेन्द्रे कामो विह्वलो जात इति भावः प्रतिहरिरवात् प्रतिहरेः कामस्य रवात् भयचीत्कारात् भयजनितसाध्वसरवात् सैन्यस्य तदीय· सहायकस्य वसंतादेः चलाचलताबलात् चाञ्चल्यतः इतस्ततः पलायनतः स्वयम् प्रभुर्जिनेन्द्रः उर्व्याम् भूमौ पर्वत इव गिरिरिव गर्वं कामविजयोत्कर्षम् वहन् मनसि धारयन् अभियर्यो विजहार ॥ अत्र पर्वतोपमानेन प्रभौ दुर्धर्षत्वम् स्थिरत्वं च वस्तु उपमालंकारव्यंग्यम् ॥ ५५ ॥

रामपक्षे—तदनु तत्पश्चात् लंकाधिष्ठिते रामे सति भुजैः भुञ्जन्ती भुजाभोग्यवन्तः तैर्महाभाग्यवद्भिर्मनुजैर्मनुष्यैः समं सह हरि· चरणतः हरेः कपेश्चरणतः पादतः इतस्ततः सर्वत्रनिर्भीकप्रचारतो वा दशास्यमहीपते रावणनृपस्य चित्ते दूने चित्ते हृदये दूने खिन्ने क्लिष्टे सति दनुजैर्दानवै रक्षोलक्षैरनेकराक्षसैः समम् सह प्रतिहरिरवात् प्रतिहरित्वाभिमानकृतादेशात् चलाचलताबलात् चलाचलस्य भावश्चलाचलता अत्यन्तचंचलता तस्या बलात् तदाश्रयणात् पर्वत इव गर्वमहंकारं वहन् धारयन् बहुगर्विष्ठः सैन्यस्यान्तः सैन्यमध्ये स्वयम् स्वयमेव रावणः उर्व्याम् रणभूमौ अभियर्यो अभिजगाम स्वयमेव रामेण योद्धुं संग्रामभूमिमवततारेतिभावः ॥

कृष्णपक्षे—हरिचरणतः हरेः कृष्णस्य चरणतः आचरणतः अविवेकाचारतः कंसादिवधत इत्यर्थः दशास्यमहीपतेर्जरासंधनृपस्य चित्ते मनसि दूने खिन्ने सति प्रतिहरिरवात् जरासधाज्ञातः सैन्यस्यान्तः चलाचलताबलात् चाञ्चल्यतः स्वयम् स्वयमेव पर्वत इव गर्वं वहन् उर्व्याम् संग्रामाङ्गणभूमौ ययौ कृष्णेन योद्धुमभिससारेति भावः ॥ ५५ ॥

सुतनयवरैः सत्रा कृत्याविपाकविमर्शनात्, सहपदपुरो देवादेशैः सरुक्मिनृपोद्यमैः ।

यदि भुवि चरश्चेदीशोऽगान्न शिघ्रमनः स्थित–मिति बहुजनोऽवादीत् सादी परोऽपि हिरण्यवान् ॥ ५६ ॥

अन्वयः—अकृत्या विपाकविमर्शनात् सुतनयवरैः सरुक्मिनृपोद्यमैः सत्रा देवादेशैः सह पदपुरः हिरण्यवान् सादी परोऽपि यदि भुविचरः ईशः अगात् चेत् अतः शिघ्रं न स्थितमिति बहुजनः अवादीत् ॥ ५६ ॥

व्याख्या—अकृत्या विपाकविमर्शनात् अकृत्याः अकर्त्तव्यतायाः यो विपाकः परिणामः तस्य विमर्शनात् विचारात् सांसारिकविषयाननोपभोगविपाकविवेकतः सुतनयवरैः सुष्ठु तनोत्यात्मकल्याणमिति सुतनयः तेषु वरः श्रेष्ठस्तैः सरुक्मिनृपोद्यमैः रुक्मं स्वर्णमस्यास्तीति रुक्मी रुक्मिणा सहितः सरुक्मी सचासौ नृपश्चेति तस्योद्यमः उत्साहस्तैः सत्रा सह ससुवर्णनृपोत्साहैः सह देवादेशैः प्रव्रज्याग्रहणसमयसमागतदेवादेशैः सह तत्क्षणमेव पदपुरः पद्यतेऽस्मिन्निति पदं अक्षयस्थानम् तत्र पुरति अग्रे गच्छतीति तथोक्तः ईशः जिनेन्द्रः हिरण्यवान् यत्नवान् सादी परोऽपि गजाश्वादिवाहनोऽपि यदि भुविचरः पादचारस्सन् अगात् संसारात् विरक्तोऽभवत् अतः शिघ्रम् न स्थितम् इति एव बहुजनः अवादीत् अकथयत् ॥ ५६ ॥

रामपक्षे—अकृत्या विपाकविमर्शनात् अकृत्यायाः सीताहरणरूपाकार्यकृत्याया यो विपाकः संग्रामप्रवर्त्तनं प्रत्यर्पणं चेति परिणामस्तस्य विमर्शनात् विचारात् हेतोः देवादेशैः रावणनृपशासनैः सरुक्मिनृपोद्यमैः ससुवर्णराजोत्साहैः सुतनयवरैः सुष्ठुतनयः पुत्रः सुतनयः तत्र वरः श्रेष्ठः तैः मेघनादादिभिः सत्रा सह पद्यते गम्यतेऽस्मिन्निति पदम् रणस्थानम् तत्र पुरति अग्रे गच्छतीति सहपदपुरः आगामिकालमेव कृताग्रगमनः यदि भुविचरः रणभूमिगतः चेत् तदा ईशः रावणोऽपि हिरण्यवान् स्वर्णमुकुटादिभूपितः सादीपरः

गजाश्वादिवाहनसहितः अगात् संग्रामाङ्गणं प्रत्यचालीत् अतः सतनयरावणगमनात् शिष्टम् अत्रशिष्टम् न स्थितम् इति बहुजनः बालवृद्धादिः अवादीत् परस्परमवोचत् ॥

कृष्णपक्षे—अकृत्यायाः कृष्णकृतस्वजामातृवधरूपाक्रियायाः विपाकस्य विमर्शनात् विवेकात् सुतनयवरैः सत्रा सह देवादिपुत्रैः सह देवादेशैः जरासंधभूपाज्ञाभिः सरुक्मिनृपोद्यमैः रुक्मिनामकभूपोत्साहैः सह पदपुरः सोद्यमः " पदं व्यवसितत्राणमित्यमरः " बहुजनः अनेकजनः भुविचरः पादचारः यदि यदा तदा चेदीशः चेदिराजः शिशुपालः हिरण्यवान् सौवर्णकटककुण्डलवान् सादीपरः गजाश्वादिवाहनसहितः अगात् जरासंधेन सह कृष्णयुद्धाय रणभूमिं प्रत्यगच्छत् अतः शिष्टं न स्थितमित्यवादीत् ॥ ५६ ॥

**प्रभुविहरणे लोकः स्वौकः सतीव्रतया-जना–ऽवनघनमतिर्दाने शैलग्रहे–हितचिन्तकः ।**
**अपि समरसीमानं प्रापत् स-वासवभूपति–र्हृदयदयितारागात् पञ्चाननः सदशाननः ॥ ५७ ॥**

अन्वयः - प्रभुविहरणे लोकः जनावनघनमतिः स्वौकः दाने सतीव्रतया शैलग्रहे हितचिन्तकः स वासवभूपतिः हृदयदयितारागात् पचानन स दशानन अपि समरसीमानम् प्रापत् ॥ ५७ ॥

व्याख्या—प्रभुविहरणे प्रभोर्जिनेन्द्रस्य विहरणे विहारे जनावनघनमतिः जनानाम् अवनम् रक्षणम् तत्र घना निविडा निरवच्छिन्ना निरंतरेत्यर्थः मतिर्बुद्धिर्यस्य स लोको जनः स्वौको दाने प्रभोर्निवासायस्ववासभूमिसमर्पणे सतीव्रतया सत्वरेण अहमहमिकया उपर्युपरि इतिभावः शैलग्रहे शैलानां तोरणानां जिनेन्द्रणामागमनजन्यहर्षोत्कर्षसूचकमहोत्सवानां ग्रहे ग्रहणे विधाने " तोरणोर्ध्वे तु

माङ्गल्यं दामवन्दनमालिका स्तम्भादेः स्यादधो दारौ शिलेतिहैमः" यद्वा शैलानां जिनेन्द्राणामधिष्ठानेन पवित्रितानां ग्रहणे तत्र गमने तद्दर्शनार्थमितिशेषः हितचिन्तकः स्वात्मानुकूलविचारपरःसवासवभूपतिः वसु अस्यास्तीति वासवः स चासौ भूपतिश्चेति स वासवभूपतिः अनेकविधधनधान्यसमृद्धनृपः हृदये स्वमनसि दयितस्य मोक्षस्य प्रभोर्वा आसमंतात् रागोऽनुरागो यः स हृदयदयितारागस्तस्मात् निरागतश्च विषयकप्रीतितः अत एव पञ्चाननः पंचसु महाव्रतेषु आननः लक्ष्यो यस्य स यद्वा पञ्चसु पंचेन्द्रियेषु आननः संगमलक्ष्यो यस्य, सदशाननः दशया कालकृतविशेषरूपया गर्भवासजन्माद्यवस्थया सहितम् सदशम् आसमन्तादन्यते जीव्यते इति आननम् जीवनम् सदशं आननं यस्य स तथोक्तःगर्भादिवासजीवनकः समरसीमानम् सम् सम्यक्त्वेच्छति गच्छति संसारादिति समरः विरक्तो जिनेन्द्रः तस्य सीमानं समीपम् प्रापत् अगमत् ॥ ५७ ॥

रामपक्षे—प्रभुविहरणे प्रभो रामस्य विहरणे रावणं प्रति युद्धायगमने अथवा प्रभोः सीताया विहरणे विशेषतो हरणे जनावनघनमतिः जनरक्षणदृढबुद्धिः लोकः सुग्रीवादिः स्वौकः स्वस्य ओकः आश्रयं दाने अर्पणे आश्रयदाने शैलग्रहे तदधिष्ठितपर्वतस्थितौ, हितचिन्तकः समर्थः रामहितसाधकः समरसीमानम् रावणयुद्धभूमिं प्रापत् अगमत् सवासवभूपतिः सवासवानां देवानामपि भूपतिः रामकः हृदयदयितारागात् हृदये मनसि दयितायाः सीतायाः रागात् प्रेमतः हेतोः पञ्चाननः सिंह इव लुप्तोपमा सदशाननः रावणः समरसीमानं रामरणभूमिं प्रापत् अयासीत् ॥ ५७ ॥

कृष्णपक्षे—प्रभुविहरणे प्रभोर्जरासंधस्य विहरणे साक्षात् गमने सति स्वौकः शोभनगृहवान् जनावनघनमतिः जनानां संग्रामग

तशत्रुपक्षीयलोकानां आसमन्तात् वने हिंसने मारणे घना निबिडा मति बुद्धिर्यस्य स दाने द्यत्यसिन्निति दानम् तस्मिन् युद्धे शैलग्रहे व्यूहग्रहे च हितचिन्तकः हितानुबन्धी लोकसैन्यजनः सतीव्रतया सत्वरतया समरसीमानं रणभूमिं प्रापत् अगमत् वासवभूपतिः सुसमृद्धनृपतिः सदशाननः शत्रुच्छिद्रान्वेषणाय दशसु दिक्षु आनन मुखं लक्ष्यं यस्य सदशाननस्तेन सहितः सदशाननः पंचाननः सिंह इवेति लुप्तोपमा सिंह इव सजरासंधः समरसीमान रणभूमिप्रदेशम् प्रापत् अयासीत् ॥ अत्र लुप्तोपमा विरोधाभासश्चालंकारः ॥५७ ॥

एवं राज्यादिवारे स्फुरति मतिमतां संनियोगे नियोगे,
स्वामिन्याशु-प्रकाशे जयनि समभवत् सप्रभावोऽनुभावः ।
सर्वे गान्धर्वदेवाः पटुतरतरसा तूरमापूरयन्तः,
स्वस्था रागं वितेनुर्धनुषि धृतगुणे सैन्धवं प्राप्य तीरम् ॥ ५८ ॥

इति श्रीसप्तसंधाने महाकाव्ये राज्याङ्के महोपाध्यायश्रीमेघविजयगणिविरचिते श्रीभगवद्विहारवर्णने पञ्चमः सर्गः ॥

अन्वय.—एव राज्यादिवारे मतिमता सन्नियोगे नियोगे स्फुरति आशुप्रकाशे जयिनि स्वामिनि सप्रभावोऽनुभावः समभवत् धृतगुणे धनुषि सैन्धव तीर प्राप्य आसाद्य सर्वे गान्धर्वदेवा· पटुतरतरसा तूरमापूरयन्त. स्वस्था. राग वितेनु. ॥ ५८ ॥

व्याख्या–एवमुक्तप्रकारेण राज्यादिवारे राज्यांके मतिमतां बुद्धिशालिनां सन्नियोगे सत्सु नियोगे नियोजनं प्रेरणं तस्मिन् नियोगे व्यापारे स्फुरति प्रकाशमाने सति आशुप्रकाशे आशु झटिति प्रकाशो नैर्मल्यं यस्य तस्मिन् जयिनि सर्वोत्कर्षेण विद्यमाने स्वामिनि जिनेन्द्रे सप्रभावः प्रभावेन सहितः समहिमा अनुभावस्तेजोविशेषः समभवत् धृतगुणे धृतः गुणो दयादाक्षिण्यादिर्येन तस्मिन् धनुषि धन्यते

ग्रन्दायते इति यनुः अन्तर्गोकाराद्युच्चारकः तस्मिन् अन्तर्ध्यानमग्ने प्रभाविति शेषः गान्धर्वदेवा गंधर्वा एव गान्धर्वा सर्वे गांधर्वाश्च ते देवाश्चेति गान्धर्वदेवाः पटुतरतरसा पटुतरेण कौशलेन तरसा झटिति स्वस्था निरुपद्रवाः तूरम् तूर्यम् आपूरयन्तः वादयन्तः सैन्धवं तीरं सिन्धुतटम् प्राप्य संगत्य गगं गानं वितेनुः सर्वे प्रभुगगेण गायन्तिस्म ॥

रामकृष्णपक्षे—स्वामिनि रामे कृष्णे वा धृतगुणे धृतमौर्वीके धनुषि कोदण्डे सति अन्यत् सर्वं पूर्ववदवसेयम् ॥ ५८ ॥

अत्र श्लोके स्रग्धरावृत्तम् "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेय"मिति तल्लक्षणात् ॥

इतिश्री शासनसम्राट्–कविरत्न–भट्टारकाचार्य–श्रीविजयामृतसूरीश्वरप्रणीतायां सप्तसंधानमहाकाव्य–सरणीटीकायां पंचमः सर्गः ॥ ५ ॥

## ॥ अथ षष्ठः सर्गः ॥

**अथ श्रीमद्नेकान्त–कवचं कान्तमुद्वहन् । उदियाय जयश्रीमान् कामस्यारेर्भिदे विभुः ॥ १ ॥**

अन्वय.—अथ कान्तं श्रीमदनेकान्वकवचमुद्वहन् जयश्रीमान् विभुः अरेः कामस्य भिदे उदियाय ॥ १ ॥

व्याख्या—अथानन्तरं कान्तं मनोज्ञं श्रीमदनेकांतकवच श्रीः शोभासम्पत्तिः वैराग्यसंपत्तिर्वा यस्मिन् तत् अनेकान्तः स्याद्वाद एव कवचः वर्म तम् उद्वहन् धारयन् उद्वहमानः जयश्रीमान् जयाय श्रीमान् नृप इवेत्यर्थः विभुः प्रभुर्जिनेन्द्रः अरेः शत्रुभूतस्य कामस्य मनसिजस्य भिदे नाशाय निरासाय उदियाय उदयमभ्युदयं प्राप उद्युक्तो बभूवेति भावः ॥ १ ॥ श्लेषः ।

रामकृष्णपक्षे—अन्तयाते शत्रुमिति अन्तः अनेकेषामन्तः अनेकान्तः स चासौ कवचश्चेति अनेकान्तकवचस्तमुद्वहन् धारयन् कामस्यारेः कामप्रधानस्य अरे रावणस्य अन्यत्र कामस्य प्रद्युम्नस्य शत्रोर्जरासधस्येत्यर्थः अन्यत्पूर्ववत् ॥ १ ॥

**क्षितिः प्रिया सर्वराज्ञां तस्याः प्रियतमा-सुताः । यस्याः कृते क्षतिः पुंसां सा वै-देही-रणोचिता ॥ २ ॥**

अन्वयः—सर्वराज्ञां क्षितिः प्रिया तस्या. सुता प्रियतमा यस्या. कृते पुंसां क्षतिः सा वैदेहीरणोचिता ॥ २ ॥

व्याख्या—सर्वराज्ञाम् राजन्ते राजः सर्वेषां सर्वेषु वा राजः सर्वराजस्तेषाम् सर्वत्रविराजमानानां क्षितिः क्षिणोति कामवासनां या सा क्षितिः योषित् प्रिया प्रियत्वेनाभिमता तस्याः क्षितेर्योषितः सुता दुहिता प्रियतमा अतिशयेन प्रिया यस्याः दुहितुर्योषितो वा

कृते निमित्तम् पुंसां पुरुषाणां क्षतिः सर्वतः इहलोकतः परलोकतश्च हानिः सा क्षितिः योषित् देहिनाम् देहवतां ईरणोचिता त्यागोचिता यस्याः कृते एव सर्वतोऽनर्थनं भवति साऽवश्यमेवत्यागार्हेति भावः ॥

रामपक्षे-सर्वराज्ञां सर्वेषां नृपानां क्षितिः पृथ्वी प्रिया प्रेयसी राज्ञां पृथ्वीपतितत्वात तस्याः क्षितेः प्रियतमा अतिशयस्नेहपात्रा सुता कन्यका भवतीति शेषः यस्याः कृते दुहितुर्निमित्तं पुंसां पुरुषार्थानां क्षतिः ' स्वसुताधर्षणन्न केऽपि सहन्त इत्यर्थः'' सा वैदेही विदेहराजकन्यका पृथ्वीतनया रणोचिता रणाय तन्मोचनार्थं संग्रामाय उचिता अवश्यसंग्रामयोग्येति भावः ॥

कृष्णपक्षे—सर्वराज्ञां समस्तभूपतीनां क्षितिर्हिंसा प्रिया सर्वदा विजिगीषुतया हिंसाबद्धरुचिः चित्ताः तस्याः प्रियतमाः सुताः तस्या हिंसायाः प्रियतमा अत्यन्तप्रिया सुता सम्पदः यस्याः सम्पदः कृते पुंसां क्षतिर्हानिः सा वै हिंसा देहीरणोचिता देहिनाम् ईरणोचिता त्यागयोग्या ॥ २ ॥

राजानकीकृते यस्या राजा न कीर्तिराददे । सा नीता जानकी ये न तस्य श्रीर्जातकी स्थिरा ॥ ३ ॥

अन्वयः—यस्याः कृते राजानकी स्थिरा कीर्तिःराजा न आददे सा जानकी येन नीता तस्य श्रीर्जातकी ॥ ३ ॥

व्याख्या— यस्याः क्षितेः कृते निमित्तम् राजा राजते इति राट् तेन राजा नृपेण राजानकी राजमंडलोद्भवा कीर्त्तिः प्रशस्तिः स्थिरा निश्चला चिरस्थायिनी न आददे न जगृहे परस्परविवदमानास्सन्तो नष्टा इत्यर्थः सा जानकी लक्ष्मीर्येन नीता तदर्थमतिप्रसक्तिः प्रदर्शिता तस्य प्रसक्तस्य श्रीः सम्पत् जातकी दुहितेव किं वंशपरम्परा कर्त्री नैवेत्यर्थः ॥ ३ ॥

रामपक्षे—यस्याः जानक्याः कृते जानकीलाभाय जानकीस्वयंवरकाले कीर्तिःधनुरारोपेण जन्या समाख्या राजसमूहसंबन्धिनी राजा नृपेन न आददे नासादितवती अत्र राजेत्यकवचनेन केनापि रामव्यतिरेकेण न गृहीतेति वस्तुव्यज्यते सा जानकी येन रावणेन आनीता अपहृता तस्य रावणस्य श्री सम्पत् स्थिरा जातकी निश्चलामवित्री किम् नैव निश्चलेत्यर्थः ॥

कृष्णपक्षे पूर्वपक्षवदवसेयम् ॥ ३ ॥

अहो ! मोहोऽवमोहानां हानाङ्गं पुरकामिनी । कामिनीत्या निषिद्धापि स्वबुद्ध्याङ्के निधीयते ॥ ४ ॥

अन्वय.—अवमोहाना अहो मोह पुरकामिनी हानाङ्गम् कामिनीत्या निषिद्धाऽपि स्वबुद्ध्या अङ्के निधीयते ॥ ४ ॥

व्याख्या—अवमोहानाम् अवमुहयंति वैचित्यमुपगच्छंतीति अवमोहाः मोहिताः तेषाम् कर्त्तव्याकर्त्तव्यविवेकशून्यानां अहो मोहः अहो अविवेकिता यतः पुरकामिनी पुरं शरीरं कामयते न तद्धर्मादिकं किमप्यन्यदिति सा योषित् यद्वा पुरकामिनी पुरस्य कामिनी साधारणस्त्रीवारवधूरित्यर्थः हानाङ्गम् हानस्य त्यागस्य अङ्गम् प्रधानाङ्गम् त्याज्यम् तथा च कामिनीत्या कामिनां कामुकानां या नीतिः कामशास्त्रम् तया निषिद्धापि वर्जनीयत्वेन परिगणितापि "रक्तायां वा विरक्तायां रतिस्तस्यान्न विद्यत" इति निन्दाश्रुत्यापि स्वबुद्ध्या स्वकीयकामपरतन्त्रविचारशून्यमत्या अङ्के क्रोडे निधीयते स्थाप्यते कामिजनैरित्यहो मोहविलसितम् ॥

सर्वसाधारणत्वेनोपदेशगर्भवचनमेतत् ॥ ४ ॥

स्थानत्रयीं स्वतो मुक्त्वा तुर्यं मण्डलमानयत् । उपघातात् पराघाताज्जिगाम यावनं स्थलम् ॥ ५ ॥

अन्वयः—स्वः स्थानत्रयीं मुक्त्वा तुर्यं मण्डलम् आनयत् उपघातात् पराघातात् यावनं स्थलम् जिगाय ॥ ५ ॥

व्याख्या—स्वतः स्वयमेव स्थानत्रयीं चतुर्थपञ्चमषष्ठगुणस्थानाना त्रयी स्थानत्रयी तां मुक्त्वा परित्यज्य तुर्यं मण्डलं अप्रमत्तगुण स्थानं यानयत् आश्रयत् उपघातात् अपकारात् पराघातात् तिरस्कारात् अथवा गमनात् विचरणादिति भावः यावनं यावनसंबन्धिनं स्थलम् यवनप्रायभूमिम् जिगाय विजितवान् मौनव्रतधारणाद्यवनाऽडम्बरादिम्लेच्छस्थानादिषु विहारेण तेभ्यो दर्शनन्दत्त्वा पावयाञ्चकार पावनानिति तत्त्वम् ॥ ५ ॥

रामकृष्णपक्षे—स्वतः स्वयमेव स्थानत्रयीम् स्थानानामुपचया पचयहीनानां त्रयीम् मुक्त्वा परित्यज्य तुर्यं मण्डलं चतुर्थोपायम् विग्रहमित्यर्थः आनयत् स्वीकारमकरोत् उपघातात् अपकारात् पराघातात् तिरस्कारात् यावनं स्थलम् तौरुष्कम् जिगाय विजिग्ये ॥५॥

एवं भावनया देवश्छेत्तुं मोहमहाद्रुहम् । समारुह्य गुणस्थानमारेभे क्षपकोद्यमम् ॥ ६ ॥

अन्वयः—देवः एवं भावनया मोहमहाद्रुहं छेत्तुम् गुणस्थानं समारुह्य क्षपकोद्यमम् आरेभे ॥ ६ ॥

व्याख्या—देवः जिनेन्द्रप्रभुः एवं पूर्वोक्तप्रकारं भावनया विचारेण मोहमहाद्रुहम् द्रुह्यतीति ध्रुक् महांश्चासौ ध्रुक् महाध्रुक् मोह एव महाध्रुक् मोहमहाध्रुक् तम् मोहरूपमहावैरिणं छेत्तुम् भेत्तुम् निराकर्त्तुम् गुणस्थानम् अष्टमम् अनिवृत्तिबादरगुणस्थानम् समारुह्य समवलम्ब्य क्षपकोद्यमम् कर्मक्षयजनकोद्यमम् आरेभे मोहक्षयविधौ प्रसक्तो बभूव तन्निराकरणैकमना अजनि ॥

रामकृष्णपक्षे—देवः दीप्तिमान् रामः कृष्णश्च मोहमहाद्रुहम् मोहयति स्वपराक्रमेण अधीरयतीति मोहः शत्रुः स एव महाद्रुहः द्रोहकारकः तम् छेत्तुम् उन्मूलयितुम् भावनया निराकरिष्णुमनसा गुणस्थानम् राज्ञां संधिविग्रहादिषट्स्थानम् समारुह्य स्वीकृत्य क्षपकोद्यमम् क्षपयतीति क्षपकः निवारकस्तस्य उद्यमम् उद्योगम् आरभे प्रारब्धवान् ॥ ६ ॥

जीवा-स्थानं चापरागं मनस्याधाय तत्पदम् । गुणाधिरोहे प्रबलं बलं स्वं समधारयत् ॥ ७ ॥

अन्वयः—जीवास्थानम् अपरागम् च तत्पदम् मनसि आधाय गुणा- धिरोहे प्रबलम् स्वम् बलम् समधारयत् ॥ ७ ॥

व्याख्या—जीवास्थानम् आसमंतात्तिष्ठत्यस्मिन्निति आस्थानम् अजीवानाम् आत्मनाम् आस्थानम् जीवास्थानम् द्वादशमं स्थानम् परागम् अपगतो रागो यस्मात् तत् अपरागम् क्षीणमोहम् रागादिरहितम् तत्पदम् रागरहितम् पदम् क्षपणकपदम् यद्वा जीवानां वास्तविकं स्थानम् गुणाधिरोहे गुणस्थानाधिष्ठाने प्रबलम् प्रधानम् स्वम् स्वकीयम् बलम् तपोबलम् समधारयत् धृतः ॥

रामकृष्णपक्षे—जीवानाम् धनुर्गुणानाम् आस्थानम् चापरागम् चापस्य धनुषः रागम तत्पदं गुणे पदम् आधाय विचार्य गुणाधिरोहे गुणारोपणे प्रबलम् प्रकृष्टम् स्वम् आत्मीयम् बलम् ओजः समधारयत् समाचिनोत् ॥ ७ ॥

अजिह्मगधिया लक्ष्यं किञ्चिदादाय धीरधीः । विव्याध बाधकं क्रोधाद् योधं सम-र-सं-गतः ॥ ८ ॥

अन्वय.— धीरधी समरसगतः अजिह्मगधिया किंचिल्लक्ष्यम् आदाय क्रोधात् बाधक योधम् विव्याध ॥ ८ ॥

व्याख्या—धीरधीः धीरा अनुद्धता स्थिरेत्यर्थः धीर्बुद्धिर्यस्य स निश्चलमतिः शमरसं शान्तिरसं गतः शान्तिरसप्रधानः अजिह्मगधिया जिह्मं कापट्ये गच्छतीति जिह्मगा न जिह्मगा अजिह्मगा अकुटिला सा चासौ धीश्चेति अजिह्मगधीः कापट्यरहितबुद्धिः तया किञ्चित् किमपि मोक्षमिति शेषः लक्ष्यम् उद्देश्यम् आदाय गृहीत्वा क्रोधात् कोपात् बाधकम् तपोविघ्नकारकम् अथवा बाधकं मोक्षबाधकं युध्यतीति योधस्तम् कामादिकम् कर्म वा विव्याध निवर्त्तयामास ॥

रामकृष्णपक्षे—समरसंगतः संग्रामाङ्गणगतः धीरधीः निश्चलमतिः रामः कृष्णश्च अजिह्मगधिया कापट्यरहितबुद्ध्या किंचित् किमपि विजयादिरूप लक्ष्यमुद्देश्यम् आदाय गृहीत्वा क्रोधात् कोपात् बाधकं अपकारिणम् योधम् सैन्यम् विव्याध विध्यतिस्म ॥ ८ ॥

**पञ्चाननक्रियावीर्याद् वारये दुर्मनं गजम् । कारये-दानपयसा ससौरभं धरातलम् ॥ ९ ॥ युग्मम् ।**

अन्वयः—पञ्चाननक्रियावीर्यात् दुर्मनं गजम् वारये दानपयसा ससौरभं धरातलं कारये ॥ ९ ॥

व्याख्या—पंचाननक्रियावीर्यात् पंचाननस्य सिंहस्य या क्रिया गजमर्दनादिः तत्र यद्वीर्यम् शक्तिः तस्मात् "पञ्चास्यः केसरी-हरिरित्यमरः" दुर्मनम् गजम् वारये दुःखेन मनुते इति दुर्मनस्तम् दुःसाध्यम् गजम् गजतीति गजः मदनस्तम् मदनम् वारये निरुन्धे अथवा पञ्चाननस्य शिवस्य या क्रिया मदनदहनादिरूपा तस्या वीर्यात् पराक्रमात् दुर्मनम दुःसाध्यम् गजम् मदनम् वारये निवारये दानजलेन उत्सर्गपयसा अथवा दानपयसा हस्तिमदजलेन "मदो दानमित्यमरः" ससौरभम् सौरभेन सुगन्धिना सहितम् सामोदम् धरातलम् श्रोणीतलम् कारये विधापये "मृत्युञ्जयः पञ्चमुखोऽष्टमूर्त्तिरिति हैमः ॥

रामकृष्णपक्षे—दुर्मनम् दुःसाल्यम् गजम् शत्रुहस्तिनम् वारये संग्रामभूमौ निवारये अन्यत् पूर्ववज्ज्ञेयम् ॥ ९ ॥

**सदोपदेशनोद्देशात् स्फुरति स्वानगर्जिते । घटा गजानामगजा समजायत साप्यजा ॥ १० ॥**

अन्वयः—मदोपदेशनोद्देशात् स्वानगर्जिते स्फुरति अगजा गजाना घटा सापि अजा समजायत ॥ १० ॥

व्याख्या—मदोपदेशनोद्देशात् देंशस्य समीपमुपदेशं सन्निहितप्रदेशं तत्र नुदति गच्छतीति नोदः "कर्त्तरिविच्" तस्य देंशः शानं तस्मात् सर्वदा सन्निहितप्रदेशगमनस्थानात् हेतोः स्वानगर्जिते सुष्ठु आनस्य अन्तस्थितप्राणवायोः गर्जिते नासिकोच्छ्वासे स्फुरति गमनपरिश्रमेणोच्छ्वासपवनप्रचलिते सति अगजानां पार्वतीयानां अगजा वृक्षजा वार्क्षीघटा पंक्तिः सापि अजा निम्ना प्रभोश्छायाहेतोर्नीचैः समजायत अभवत् ॥

अन्यपक्षे—सदोपदेशनोद्देशात् सदा सर्वदा यत् उपदेशनं अनुशासनं हितकथनं तस्य उद्देशात् अनुसंधानात् स्वानगर्जिते निर्घोषस्तनिते स्फुरति स्फुरमाणे सति गजाना गजन्ति माद्यन्तीति गजाः मदोन्मत्ताः तेषां घटा संहतिरपि गजानां हस्तिनां अगजा पर्वतोद्भवा एतेन मदोन्मत्तत्वं सूच्यते घटा पंक्तिरिव स्वानगर्जिते सारमेयबुक्के स्फुरति सति अजा छागी समजायत रामकृष्णयोः सच्छासनश्रवणान्मदोद्धतानामपि जनानां संहतिः स्वानगर्जिते यथा गजपंक्तिः छागीव भयभीता भवति तथा भीता भवत् न च दुर्विनयमकार्षीत् गजानां स्वानभीरुत्वं प्रसिद्धमेवेति भावः ॥ १० ॥

**इन्द्रः कामस्य कामस्य मीलां छेत्तुं न सोद्यमः । कन्दर्पः कं वहेद्दर्पं रोधने मनसोऽनसः ॥ ११ ॥**

अन्वयः—इन्द्र कामस्य कामपि मीलां छेत्तुं न सोद्यमः अनसः कन्दर्पः मनसः रोधने कन्दर्पं वहेत् ॥ ११ ॥

व्याख्या—इन्द्रः परमैश्वर्यसम्पन्नो देवेन्द्रः कामस्य मदनस्य कामपि मीलां तन्द्रां सर्वविजयित्वान्निर्भयत्वाच्च सुखसुप्तिकाम् " तन्द्री निद्राप्रमीलयोरिति तन्द्री प्रमीलेति चोभयत्रामरः " छेत्तुं भेत्तुं निराकर्तुमित्यर्थः न सोद्यमः न सव्यापारः तदीयतन्द्राभङ्गे सोद्यमोऽपि कोऽपि नास्ति किम्पुनः समर्थ इति भावः अनसः न सः असः न असः अनसः साक्षात् कन्दर्पः मदनः तस्यानङ्गत्वेन तदाकारं गुरुरमित्याश्रित्य अनस इति पदेन स एव शरीरभृदेवेति कवेस्तात्पर्यम् मनसः वीतरागस्य जिनेन्द्रस्येति शेषः रोधने स्वाधीने करणे कन्दर्पमहंकारं वहेत् धारयेत् जिनेन्द्राणां मनोऽन्यथा कर्तुन्न तस्य कोऽपि प्रभावस्तेषां मारजितत्वादिति भावः अत्र संभावनायां लिङ् ॥ ११ ॥

रामकृष्णपक्षे—इन्द्रः परमैश्वर्यवान् " राजा पतीन्द्रस्वामिना थार्या इति हैमः " कामस्य स्वीयाभिलापस्य " कामोऽभिलापस्तर्षश्चेत्यमरः " कामपि मीलां मील्यते इति मीला " भावे गुरोश्च हल इत्यकार प्रत्ययस्ततष्टाप् " तां मीलां प्रसक्तिं विषयप्रवृत्तिं छेत्तुं पृथक्कर्तुं न सोद्यमः न सावधानः कन्दर्पः कं सुखं तेन तत्र वा दृप्यतीति " कर्त्तरि अच् " स सुखमग्नः अनसः स्वयं मनसो रोधने मनःप्रसक्तिनिवारणे क दर्पमहंकारं वहेत् न कमपि यः विषयप्रसक्तिं न रुणद्धि स मनसो रोधने कथं प्रभवेदिति भावः ॥ ११ ॥

प्रहीतुमार्जुनी काङ्क्षा प्रवृत्ताङ्गाधिपस्थितिम् । वकवृत्तिं पराकृत्य भीमवृत्तेर्जयोऽभवत् ॥ १२ ॥

अन्वयः-अङ्ग अधिपस्थितिम् प्रहीतुम् आर्जुनी कांक्षा प्रवृत्ता वकवृत्तिम् पराकृत्य भीमवृत्तेः जयः अभवत् ॥ १२ ॥

व्याख्या—अङ्ग इति संबोधने " संबोधनेऽङ्गभोःप्याडिति हैमः " अधिपस्थितिम् अभिपाति सर्वतो जीवान् रक्षतीति अधिपः जिनेन्द्रः प्रभुः तस्य स्थितिः स्थीयतेऽस्यामिति स्थितिः प्रवृत्तिः प्रव्रज्यारूपा मर्यादा वा तदधिष्ठितभूमिर्वा तां ग्रहीतुं प्राप्तुं अधिष्ठातुम्वा आर्जुनीपरिशुद्धा "वलक्षो धवलोऽर्जुन इत्यमरः" कांक्षा वाञ्छा प्रवृत्ता कथिता जिनेन्द्राधिष्ठिताम्प्रवृत्तिमुपलब्धुं शुद्धभावना विधेया तथाहि बकवृत्तिं बकस्य पक्षिविशेषस्य या वृत्तिः स्थितिः बको जलाशये मत्स्यादिजलचरजन्तुं ग्रहीतुं ध्यानमग्न इव तिष्ठति निश्चलतया परन्तु तस्य हृदये हिंसैव गरीयसी प्रवृत्तिरिति ता वृत्तिम् छद्मप्रवृत्तिम् पराकृत्य निवार्य भीमवृत्तेः भीमस्य शिवस्य वृत्तिर्निश्चलशुद्धध्यानस्य वृत्तिरिववृत्तिर्यस्य तस्य शुद्धाचारस्य जयोऽभवत् शुद्धाचारस्यैव जिनेन्द्राधिष्ठितस्थितौ प्रवृत्तिरूपा विजयप्राप्तिर्जातेति भावः । अर्वाग्दृष्टिर्नैकृतिकः स्वार्थसाधनतत्परः ॥ शठो मिथ्याविनीतश्च बकवृत्तिरुदाहृतः' इति शब्दस्तोममहानिधिः ॥

रामपक्षे—अधिपस्य रावणस्य स्थितिम् स्थानम् ग्रहीतुम् प्राप्तुम् आर्जुनी अर्जुनस्येयमार्जुनी अर्जुनसम्बधिनी प्रभुत्वप्रचुरा कांक्षा वांछा विधेयत्वेन प्रवृत्ता प्रवृत्तिविषयीकृता बकवृत्तिम् शैथिल्यप्रवृत्तिम् पराकृत्य निवर्त्य भीमवृत्तेः उद्धतवृत्तेर्जयोऽभवत् शत्रुषु शिथिलस्य नैव जयः किन्तु भीमवृत्तस्यैवेति तामाश्रयेदिति भावः ॥

कृष्णपक्षे—अङ्गाधिपस्य कर्णनृपतेः स्थितिम् स्थानम् अधिष्ठानं ग्रहीतुम् आसादितुम् आर्जुनी अर्जुनसम्बन्धिनी कांक्षा स्पृहा प्रवृत्ता जाता "जरासंधकृष्णसंग्रामे कर्णमन्वेष्टुम् अर्जुनस्य कांक्षाऽभवदित्यर्थः" बकस्य राक्षसविशेषस्य या वृत्तिः सत्ता तां पराकृत्य पृथक्कृत्य भीमवृत्तेः भीमस्य वृकोदरस्य वृत्तिर्व्यापारस्तस्याः भीमव्यापारस्य जयोऽभवत् विजयो जातः बकासुरन्निहत्य भीमसेनस्य जयो जात इत्यर्थः ॥ १२ ॥

धर्मात्मजः स्वभावेन शल्यमुच्छेत्तुमादृतः । पुन्नागान् मनसोद्दिश्य न-कुलस्य पराक्रमः ॥ १३ ॥

अन्वयः धर्मात्मजः स्वभावेन शल्यम् उच्छेत्तुम् आदृतः पुन्नागान् मनसा उद्दिश्य नकुलस्य पराक्रमः ॥ १३ ॥

व्याख्या—धर्मात्मजः साक्षाद्धर्मतनूजः यद्वा धर्मप्रवर्त्तकत्वात् साक्षाद्धर्मावतारः स्वभावेन निसर्गत एव शल्यम् पापम् उच्छेत्तुम् उद्धर्त्तुम् आदृतः कृतादरः उद्युक्तः नकुलस्य कुलाभिमानरहितस्य जिनेन्द्रस्य पुन्नागान् पुंसु नाग इवेति पुन्नागास्तान् पुरुषश्रेष्ठान् सर्वे-नोऽभिक्रान् मनसा उद्दिश्य अभिलक्ष्य प्राप्यत्वेन स्थिरीकृत्य पराक्रमः वीरता सर्वोच्चतालाभायप्रक्रमत इत्यर्थः ॥

रामपक्षे—धर्मात्मजः पुण्यात्मजः रामः स्वभावेन प्रकृत्या शल्यम् शल्यभूतं रावणरूपशत्रुम् उच्छेत्तुमुद्धर्त्तुम् आदृतः कृतादरः सावधानः नकुलस्य नास्तिकुलम् गृहं यस्य तस्य “ कुलं वंशे देशे गृहे इति शब्दस्तोममहानिधिः ” तदानीं रामस्य वनवासितया गृहाभावः पुन्नागान् पुरुषश्रेष्ठान् रावणादीन् उद्दिश्य अभिलक्ष्य पराक्रमः वीरता स्वभावमेव महतां यन्महता विरोधः शल्योद्धारे प्रवृत्तिश्चेति तत्त्वम् ॥ १३ ॥

कृष्णपक्षे—धर्मात्मजः युधिष्ठिरः स्वभावेन स्वत एव शल्यम् शल्यनामानम् विपक्षनृपम् उच्छेत्तुम् निराकर्तुम् प्रहर्तुमित्यर्थः आदृतः कृतनिश्चयः स्वयमेव तद्धनने सादराभिनिवेशवान् नकुलस्य तन्नामकचतुर्थपाण्डवस्य पुन्नागान् पुमान्नाग इव इति पुन्नागः पुरुषश्रेष्ठस्तान् मनसा उद्दिश्य हृदयेनाभिलक्ष्य पराक्रमः वीरत्वम् पुरुषश्रेष्ठेन सह योद्धुं नकुलः पराक्रामतीति भावः ॥ १३ ॥

चिदंशं वेद दुर्भेदं मुख्यं तस्य विभेदने । शौचधर्मं पुरस्कृत्यादधात् सन्मार्गणैषणम् ॥ १४ ॥

अन्वयः—चिदंशं दुर्भेदं वेद तस्य विभेदने मुख्य शौचधर्मम् पुरस्कृत्य सन्मार्गैणपणम् अदधात ॥ १४ ॥

व्याख्या—चिदंशं अंशयति समाघातयतीति अंशः समाघातकः चिदः अशः चिदंशः तम् ज्ञानावरणम् सज्ज्ञानप्रतिबंधकमित्यर्थः दुर्भेदम् दुःखेन भिद्यते इति दुर्भेदम् कष्टभेदनसाध्यम् वेद जानाति तस्य चिदंशस्य ज्ञानावरणस्य विभेदने छेदने मुख्यम् प्रधानम् शौचधर्मम् पवित्रधर्मम् निर्मलाचारम् पुरस्कृत्य अग्रे विधाय सन्मार्गैषणम् सत्पथान्वेषणम् अदधात् अकृत ॥

रामकृष्णपक्षे—चिदंशं चेतनाशं दुर्भेदम् कठिनसाध्यम् रावणरूपसामर्थ्यशालि जाग्रच्चैतन्यवदित्यर्थः एवं जरासंधरूपमित्यर्थः तस्य विभेदने शौचधर्मम् निर्मलधर्मं स्याद्वादरूपम् पुरस्कृत्य स्वीकृत्य सन्मार्गणैषणम् सद्व्राणशोधनम् अधात् अकृत ॥ १४ ॥

त्यक्त्वाऽनुबन्धिनो लोके मिथ्याबोधस्थमानसान्। क्लीबान् स्त्रीसंप्रयोगेषु लीनांस्तस्थौ स सुस्थिरः ॥१५॥

अन्वयः—लोके मिथ्याबोधस्थमानमान् अनुबन्धिन क्लीबान् स्त्रीसप्रयोगेषु लीनान् त्यक्त्वा सुस्थिर. तस्थौ ॥ १५ ॥

व्याख्या—स जिनेन्द्रः लोके संसारे मिथ्याबोधस्थमानसान् मिथ्याबोधे असज्ज्ञाने तिष्ठतीति मिथ्याबोधस्थः स मानसो येषां तान् असज्ज्ञाननिरतान् क्लीबान् पुरुषार्थशून्यान् अथवा सज्ज्ञानेऽपि श्रद्धाभक्तिविरहितान् स्त्रीसंप्रयोगेषु स्त्रीसंगेषु लीनान् रतान् स्त्रीपरवशान् अनुबन्धिन अनुगतान् त्यक्त्वा विसृज्य सुस्थिरः स्वसंकल्पे दृढः तस्थौ स्थितवान् ॥ १५ ॥

स्त्रीभेदं नपुंसकभेदं च क्षयं कृत्वा सुस्थिरस्तस्थौ ॥

रामकृष्णपक्षे—मिथ्याबोधस्थमानसान् मिथ्याबोधे शत्रुकृतोपजापेन विपर्यज्ञानस्थितमानसान् अनुबन्धिनः केवलं मुखप्रेक्षित-

याऽनुगतान न च प्रीत्येति भावः क्लीबान् तृतीयाप्रकृतीन् स्त्रीसंप्रयोगेषु लीना स्त्रीपराधीनान् यद्वा स्त्रीसंगतान् पुरुषार्थविरहितान् त्यक्त्वा निरस्य सुस्थिरः कैनाप्यकंप्यस्तस्थौ स्थितः ॥ १५ ॥

हास्यादिषट्कव्यावृत्त्या प्रकृत्यास्थानयोग्यधीः । सपौरुषं रुषं मानं मायां प्रक्षिप्य मार्गभाक् ॥ १६ ॥

अन्वय —हास्यादिषट्कव्यावृत्त्या प्रकृत्यास्थानयोग्यधीः, स पौरुषम् रुषम् मानम् मायाम् प्रक्षिप्य मार्गभाक् ॥ १६ ॥

व्याख्या—स जिनेन्द्रः हास्यादिषट्कव्यावृत्त्या हासो रत्यरती भीतिर्जुगुप्सा शोक एव चेति निरुक्तषट्कस्य व्यावृत्त्या परित्यागेन प्रकृत्यास्थानयोग्यधीः प्रकृतिः कर्मस्वभावः तस्या आस्थाने गुणस्थाने योग्या निरन्तरा धीर्यस्य स तत्स्थानार्हबुद्धिः पौरुषम् वा- सशौर्यम् रुषम् क्रोधम् मानम् अहंकारम् मायाम् कापट्यम् मिथ्याबुद्धिमित्यर्थः प्रक्षिप्य क्षयं कृत्वा मार्गभाक् मोक्षमार्गभाक् जात इति शेषः पूर्वश्लोके स्त्रीभेदश्च नपुंसकभेदश्च त्यक्तवेत्युक्तम् इदानीम्पुरुषभेदश्च तत्याजेत्युक्तम्भवतीति भावः ॥

रामकृष्णपक्षे—हास्यादिषट्काना हासक्रोधशोकभयजुगुप्साविस्मयरूपाणां स्थायीभावाना व्यावृत्त्या निवारणेन प्रकृत्या स्वभावेन स्थाने प्रशमस्थाने योग्या निर्मला धीर्यस्य स योग्यस्थानाभिनिवेशनिर्मलचेतस्कः रामः कृष्णो वा सपौरुषम् सबल यथास्यात्तथा रुषम् मन्युम् मानम् " स्वाभीष्टश्लेषवीक्षादिविरोधी मान उच्यते " इत्युक्तलक्षणम्, मायाम् कापट्यं च प्रक्षिप्य निराकृत्य मार्गभाक् नीतिमार्गभाक् युद्धशास्त्राम्नातपथप्रवृत्तो बभूवेति शेषः ॥ १६ ॥

**दृष्टोऽन्यैः क्वापि गूढात्मा सर्वाशाजयकर्मणा । गणाश्रितः स्वभावैक—सपृथक्त्ववितर्ककृत् ॥ १७ ॥**

अन्वय — सर्वाशाजयकर्मणा गूढात्मा क्वापि अन्यैः दृष्ट गणाश्रितः स्वभावैकसपृथक्त्ववितर्ककृत् ॥ १७ ॥

व्याख्या—सर्वाशा जयकर्मणा सर्वाश्च ता आशा मनोरथाः तासां जयकर्मणा विजयेन विजितत्वेन परित्यागेनेत्यर्थः “ कांक्षा शंसा गर्धवाञ्छाशेच्छेहातृण्मनोरथा इति हैमः ” यद्वा सर्वाशानां समस्तदिशानां जयकर्मणा स्वविशुद्धाचारेण कैश्चिदपि विषयजालैरपराजितेनेति भावः “ काष्ठाशादिक् हरित् ककुबिति हैमः ” गूढात्मा गूढः गुप्त आत्मा यस्य स केनापि तत्त्वेनाग्रहीतः अलक्षितः क्वापि कुत्रापि अन्यैः कैश्चिन्महाभाग्यशालिभिः दृष्टः तत्स्वरूपेण विज्ञातः गणाश्रितः गणैः साधुसंघैराश्रितः कृताश्रयः स्वभावैकसपृथक्त्ववितर्ककृत् स्वभावेन स्वप्रकृत्या एकः अनाश्रित इति स्वभावैकः स चासौ सपृथक्त्ववितर्ककृच्चेति स तथोक्तः अपूर्वकरणमारुह्य सविचारपृथक्त्ववितर्कयुक्तशुक्लध्यानं प्रापेति भावः लोभस्य जयाय पृथक्त्वस्य खण्डं खण्ड विधाय सपृथक्त्ववितर्कनामकशुक्लध्यानविशेषकृत् बभूवेति तत्त्वम् ॥ १७ ॥

रामकृष्णपक्षे—गूढात्मा अप्रकटितस्वसामर्थ्यः शत्रुभिः क्वापि युद्धसमये दृष्टः अवलोकितः सर्वाशाजयकर्मणा सर्वदिग्विजयेन अथवा युद्धसमये सर्वदिक्षु प्रहारविधानेन जयकर्मणा गणेन सैन्येन आश्रितोऽधिष्ठितः स्वभावैकसपृथक्त्ववितर्ककृत् स्वभावेनैव शत्रूणां पृथक्त्वस्य परस्परभेदस्य वितर्ककृत् विचारकारकः आसीदिति शेषः ॥ १७ ॥

**क्वचिदात्मैषणपरं द्रव्यमेकं क्वचिद्विदन् । गुणं विभावयन् धैर्यात् पर्याये रमतेस्म सः ॥ १८ ॥**

अन्वयः—कचिदात्मैषणपरम् कचित् एकं द्रव्य विदन् धैर्यात् गुणं विभावयन् स पर्याये रमतेस्म ॥ १८ ॥

व्याख्या—स जिनेन्द्रः कचित् कुत्रापि आत्मैषणपरम् आत्मनः स्वस्वरूपस्य यदेषणम् गवेषणम् तत्परम् तदधीनम् कचित् क्वापि एकम् द्रव्यम् द्रव्यपदार्थम् विदन् जानन् धैर्यात् धीरतातः गुणम् द्रव्यगुणम् विभावयन् विचारयन् पर्याये साधुधर्मे च रमतेस्म विहरतिस्म ॥ १८ ॥

रामकृष्णपक्षे—आत्मनः देहस्य "आत्मस्वरूपे यत्ने देहे मानसे बुद्धाविति शब्दस्तोममहानिधिः" रुषणमन्वेषणम् सर्वतोरक्षणम् तत्परः शरीररक्षासावधानः यद्वा आत्मनः स्वस्य यदेषणः लोहमयो बाणस्तत्परः बाणप्रियः कचनापि एकं द्रव्यम् प्रधानभूतं तद्द्रव्यम् धनादिकम् विदन् लभमानः धैर्यात् गुणम् धनुर्मौर्वीम् विभावयन् विचारयन् पर्यालोचयन् पर्याये अवसरे "पर्यायोऽनुक्रमे प्रकारे अवसरे निर्माणे इति शब्दस्तोममहानिधिः" रमतेस्म क्रीडतिस्म ॥ १८ ॥

अपृथक्त्वमवी(वि)चारं सवितर्कगुणान्वितम्। पुरस्कृत्य तिरस्कृत्य तदधःस्थायिभावनाम् ॥ १९ ॥

अन्वयः—अपृथक्त्वम् अविचारम् सवितर्कगुणान्वितम् पुरस्कृत्य तदधःस्थायिभावनाम् तिरस्कृत्य धीराः किन्नकुर्युरित्यग्रेणान्वयः ॥ १९ ॥

व्याख्या—अपृथक्त्वम् अविचारम् अविचारशुक्लध्यानविशेषः तम् सवितर्कगुणान्वितम् सवितर्कगुणसहितम् पुरस्कृत्य अग्रे कृत्वा तदधः स्थायिभावनाम् तन्नीचस्थबुद्धिम् तिरस्कृत्य निवार्य धीराः किन्नकुर्य्युरित्युत्तरेणान्वयः ॥

रामकृष्णपक्षे—अपृथक्त्वम् अभिन्नत्वम् अविचारम् विचाररा‍हित्यम् सवितर्कगुणान्वितम् सवितर्कगुणेन सदनुमीतगुणेन

अन्वितं युक्तम् पुरस्कृत्य अग्र विधाय तदधः स्थायिभावनाम् तद्भिन्नरूपविचारणाम् तिरस्कृत्य निरस्य धीराः किन्नकुर्युरित्युत्तरेण सम्बन्धः ॥ १९ ॥

**यत् सूक्ष्मसंपरायस्य स्थाने बादरसंगते । संजाते-नवमस्थाने धीराः कुर्युर्न किं पुनः ॥ २० ॥**

अन्वयः—यत् सूक्ष्मसंपरायस्य बादरसंगते स्थाने नवमस्थाने संजाते धीराः पुनः किन्न कुर्युः ॥ २० ॥

व्याख्या—यत् तत्पश्चात् बादरसंगते नवमगुणस्थाने जाते बादरसंपरायाभिधाने नवमगुणस्थानसहिते सूक्ष्मसंपरायस्य स्थाने तन्नामके दशमे गुणस्थानके संजाते प्राप्ते सति धीराः विज्ञाः किम्पुनः किं किं न कुर्युः तत्स्थानं प्राप्य कॉस्कान् मोहनीयकर्मभेदान् न हन्युः सर्वानेव विजितान् विदध्युरिति भावः ॥

रामकृष्णपक्षे—अदरसंगते भयरहिते सूक्ष्मसंपरायस्य गुप्तयुद्धस्य "युद्धायत्योः संपराय इत्यमरः" स्थाने अनवमस्थाने अरक्षके स्थाने संजाते प्राप्ते सति धीराः युद्धकौशलिनः किन्न कुर्युः सर्वम् संपादयेरन् ॥ २० ॥

**मुक्तेऽमुक्ते विमृश्यैव बलमायोजयञ्जयम् । लभेत चेतःप्रसरं प्राप्य जाप्यस्थिराशयः ॥ २१ ॥**

अन्वयः—मुक्ते अमुक्ते विमृश्यैव बलम् आयोजयन् स्थिराशयः चेतः प्रसरम् प्राप्य जयम् लभेत ॥ २१ ॥

व्याख्या—मुक्ते परित्यक्ते अमुक्ते अपरित्यक्ते संगृहीते विमृश्य विचार्य अयं त्याज्योऽयं संग्राह्य इति सम्यग् विविच्य बलम् स्वशक्तिम् आयोजयन् संचिन्वन् जाप्यस्थिराशयः जापे जपनीये निजमनने स्थिराशयः चेतः प्रसरम् चित्तप्रकाशम् प्राप्य लब्ध्वा जयं विजयम् लभेत प्राप्नुयात् ॥ २१ ॥

रामकृष्णपक्षे-मुक्ते अविश्वास्येन परित्यक्ते अमुक्ते संग्राह्ये विषये विमृश्यैव पुनःपुनर्विचार्यैव बलम् सैन्यम् आयोजयन् संगृह्णन् ज्ञाप्यस्थिराशयः ज्ञाप्ये मननीये स्थिराशयः निश्चलचित्तः सुनिश्चलविचारवान् चेतः प्रसरम् स्वमनोबलम् प्राप्य अधिगत्य जयमौत्कर्ष्यम् लभेत आसादयेत ॥ २१ ॥

वीतरागः सदशमा–दादित्यरुचिरुद्गतः। जितकाशी सुनासीर–संगमात समदीप्यत ॥ २२ ॥

अन्वयः—वीतराग सदशमात् आदित्यरुचिः उद्गत जितकाशी सुनासीरसंगमात् समदीप्यत ॥ २२ ॥

व्याख्या—वीतरागः विशेषेण इतः गतः रागः सांसारिकविषयवासनाभिलाषो यस्मात् स रागरहितः सदशमात् दशमगुणस्थानमतस्य आदित्यरुचिः दिवाकरकांतिः उद्गतः प्रोद्भूतः दिवाकर इव सर्वप्रकाशकारकः सर्वपर्यवेक्षक इति भावः अत एव जितकाशी जितेन जयेन काशते दीप्यते इति जितकाशी प्राप्तोत्कर्षः सुनासीरसंगमात महेन्द्रसंगात् तदानीमिन्द्रः समभ्येति इति तत्संगमात् समदीप्यत प्रदीप्तो जात इत्यर्थः ॥

रामकृष्णे यथा शृणु। विशेषेण इतः प्राप्तः रागः शत्रुविषयकाप्रीतिर्येन स वीतरागः सदशमात् सीदन्त्यस्मिन्निति सद् युद्धम् तस्य अशमात् अशान्तेः अनिवर्त्तनात् आदित्यरुचिः सूर्यकांतिः उद्गतः उद्भूतः सूर्य इवामहततेजा अभवत् जितकाशी जयाभिलाषी सुनासीरसंगमात् सुष्ठु नासीरम् अग्रगमनं यस्य स सुनासीरः "नासीरम् अग्रसरे सेनामुखे चेति शब्दस्तोममहानिधिः" तस्य संगमात् संमेलनात समदीप्यत अरोचत ॥ २२ ॥

**येन स्वयं संबोधेन स्वामिनश्च—रणाश्रयः। कृतस्तेनाद्वैतभावोऽन्वभाव्यत स्वनन्दनात् ॥ २३ ॥**

अन्वयः—येन स्वयं सम्बोधेन स्वामिनः चरणाश्रयः तेनाद्वैतभावः कृत स्वनन्दनात् अन्वभाव्यत ॥ २३ ॥

व्याख्या—येन स्वयं सम्बोधेन येन यद्रूपेण स्वयमात्मनैव न तु कस्याप्युपदेशेन सम्बोधेन सम्यक्ज्ञानेन स्वामिनः जिनेन्द्रस्य चरणाश्रयः चरणस्य चारित्र्यस्य आश्रयः ग्रहणम् तेन तद्रूपणैव अद्वैतभावः द्विधा इतं भेदं गतं द्वीतम् तस्य भावः द्वैतम् तन्नास्ति यस्मिन् स अद्वैतः स चासौ भावश्चेति अद्वैतभावः सजातीयादिभेदशून्यके बलस्वात्मानुभवः कृतः विहितः स्वनन्दनात् स्वम् आत्मानम् नन्दयति कृतार्थयतीति स्वनन्दनस्तस्मात् यद्वा स्वस्मिन् आत्मनि नन्दति स्वात्मानुभवेन तुष्यतीति स्वनन्दनस्तस्मात् अन्वभाव्यत अयुज्यत ॥ २३ ॥

रामपक्षे—येन सम्बोधेन येन हनुमदौत्येन सीतास्थितिसंबोधेन सीता रावणगृहे तिष्ठतीति ज्ञानेन स्वामिनो रामस्य च रणाश्रयः रणस्य संग्रामाङ्गणस्य आश्रयः आश्रयणम् युद्धभूमिगमनम् तेन युद्धभूमिगमनेन अद्वैतभावः तथा सर्वतः स युयुधे यथा रणे रामाद्वैतभावः कृतः प्रतिपक्षिभिः यत्र तत्र राममेवाक्षैष्ट इति रामाद्वैतमभूदिति भावः स्वनन्दनात् स्वम् आत्मानन्नन्दयति हर्षयतीति स्वनन्दनो लक्ष्मणस्तस्मात् अन्वभाव्यत अन्वसर्यत लक्ष्मणस्तदान्वसरदिति भावः ॥

यद्वा येन संबोधेन कामपरतंत्रेण स्वामिनो राक्षसराजस्य रावणस्य च रणाश्रयः रणगमनम् तेन रावणेन आ समंतात् द्वैतभावः रामेण सह विपक्षभावः कृतः रामेण सहयोद्धुम् प्रवव्रुते स्वनन्दनात् स्वस्यात्मनो नन्दनस्तनयः "नन्दनः पुनः उद्वहोऽङ्गात्मजः सूनुस्तनयोदारकः सुत इति हैमः" तस्मान्मेघनादात् अन्वभाव्यत अनुगतः ॥

कृष्णपक्षे—येन कृष्णेण सम्बोधेन सम्यक् ज्ञानेन स्वामिनः मतोऽपि रणाश्रयः रणस्य संग्रामस्य आश्रयः गमनम् तेन कृष्णेन आसमन्तात् कृतभावः भेदबुद्धिः एते मम शत्रव इति मतिः कृतः विहितः स्वनन्दनात् स्वतनयात् प्रद्युम्नादितः अन्वभान्यत अनुगतो ज्ञात इत्यर्थः ॥ २३ ॥

यो वैपरीत्यादीशोऽपि कृतकैतवसंगरः । तं मनोरथतो दूरान्मेने व्यसनिनं प्रभुः ॥ २४ ॥

अन्वयः—यः वैपरीत्यात् ईशोऽपि कृतकैतवसंगरः तम् व्यसनिनम् प्रभुः मनोरथतो दूरात् मेने ॥ २४ ॥

व्याख्या—यो मोहादिर्व्यसनः ईशोऽपि जिनेन्द्रेऽपि वैपरीत्यात् अयोग्यत्वात् कृतकैतवसंगरः कृतो विरचितः कैतवसगरः कपटयुद्धो येन स सर्वपूज्ये तस्मिन् छद्मयुद्धमकृतेति भावः, विहितछद्मयुद्धः तम् व्यसनिनम् व्यसनासक्तम् मोहादिकम् प्रभुर्जिनेन्द्रः मनोरथतो मनोरथादपि दूरात् पृथक् मेने बुबुधे मोहादिर्न कदाचित् प्रभोर्मनोरथ पथपथिको बभूवेति भावः ॥

रामपक्षे—यः रावणः ईशे राजनि रामे वैपरीत्यात् अनपराधादपि कृतकैतवसंगरः विरचितान्तर्धानादियुद्धः तम् रावणम् व्यसनिनं व्यसनासक्तम् प्रभुः रामः मनोरथतः मनोरथादपि सीतालाभरूपाभिलापात् दूरात् पृथक् मेने मन्यतेस्म ॥

कृष्णपक्षे—यः नराधमः ईशेऽपि कृष्णेऽपि कृतकैतवसंगरः विहितकपटयुद्धः तम् व्यसनिम् व्यसनाधीनम् मनोरथतः अभिलाषात् कृष्णपराजयरूपात् दूरात् मेने बहुदूरम्मनुतेस्म ॥ २४ ॥

आप्तः पुरिमतालाख्यसख्योपवनधारणाम् । काञ्चनाद्रिक्रियामाधात् समाधानोपदेशतः ॥ २५ ॥

अन्वयः—पुरिमतालाख्यसख्योपवनधारणाम् आप्तः समाधानोपदेशतः काञ्चनाद्रिक्रियाम् आधात् ॥ २५ ॥

व्याख्या—आदीश्वरपक्षे । पुरिमतालाख्यसख्योपवनधारणां पुरिमतालाख्यस्य पुरिमतालनाम्नः अयोध्यायाः शाखानगरस्य सख्यम् मित्रम् सन्निहितमित्यर्थः यदुपवनम् उद्यानम् तत्तथोक्तम् आप्तः प्राप्तः तदुपवनस्थः समाधानोपदेशतः समाधानस्य समाधेः य उपदेशः महिमा तस्मात् अथवा शमस्य शान्तेः यदाधानम् स्वस्मिन्नाश्रयणम् तस्य य उपदेशः प्रभावस्तस्मात् काञ्चनाद्रिक्रियाम् काञ्चनाद्रेः स्वर्णपर्वतस्य सुमेरोर्या क्रिया निश्चलता तां स्थिरताम् अधात् अदीधरत् ॥ २५ ॥

जिनेन्द्रचतुष्टयपक्षे । आप्तः पुरिमतालाख्यसख्योपवनधारणाम् पुरिमताम् नगरवासिनाम् आसमन्तादलति भूषयति आत्मानं यत्र यद्वाऽऽलति खेलति यत्र सा आला खेला सा ख्यायते यत्र तत् पुरिमतालाख्यम् नागरजनमनोरमस्थानम् तस्य सख्योपवनन् सदृश-मुद्यानम् तत्र धारणाम् स्थितिम् आप्तः प्राप्तः समाधानस्य उपदेशतः समाधेः शमाश्रयस्य वा उपदेशतः प्रभावतः काञ्चनाद्रिक्रियाम् सुमेरुदृढताम् अगात् आश्रयत् ॥ २५ ॥

रामकृष्णयोः पक्षेप्येवमेवावसेयम् ॥ पार्श्वनाथस्य वारणस्या धातकीतरुतले केवलज्ञानमुत्पन्नम् नेमिनाथस्य रैवतेऽद्रौ वेतसतरुतले शान्तिनाथस्य हस्तिनापुरे सहस्राम्रवणे नन्दिवृक्षतले ॥ ऋजुवालुकानदीतटे शालवृक्षतले महावीरस्य केवलज्ञानम् ॥ २५ ॥

**संपन्ने सकलेऽध्यक्षे लोकालोकप्रकाशिनि । देवदुन्दुभयो नेदुर्दिवि दुर्नयवारकाः ॥ २६ ॥**

अन्वयः—लोकालोकप्रकाशिनि सकलेऽध्यक्षे सम्पन्ने सति दुर्नयवारका, देवदुंदुभयः दिवि नेदु. ॥ २६ ॥

व्याख्या—लोकालोकप्रकाशिनि लोक्यते दृश्यते सर्वैरिति लोकः सर्वप्रत्यक्षः न लोक्यते प्रत्यक्षतया न गृह्यते जनैरित्यलोकः तयोर्द्वन्द्वः लोकालोकम् प्रकाशितुशीलमस्येति लोकालोकप्रकाशी तस्मिन् करामलकवत् परोक्षापरोक्षसकलप्रकाशकारके सकलज्ञाने केवलज्ञाने सम्पन्ने प्राप्ते सति प्रभोः केवलज्ञाने समापन्ने सति दिवि देवलोके आकाशे वा दुर्नयवारकाः दुर्नीतिनिवारकाः देवदुन्दुभयः देवतूर्याणि नेदुः सस्वनुः प्रभौ केवलज्ञानोत्पन्ने सति हर्षाद्देवानाम् वाद्यानि वदन्तिस्मेति भावः ॥

रामकृष्णपक्षे—सकले समग्रे अध्यक्षे नृपस्य छत्रधारणादिव्यवहारेऽधिकृते अधिष्ठिते सति कथंभूते लोकालोकप्रकाशिनि सन्निहितासन्निहितप्रदेशोद्योतकारके सर्वत्र व्यापकशासनशासिते दुर्नयवारका दुराचारनिवारका देवदुन्दुभयः राजतूर्याणि दिवि आकाशे नेदुः शब्द स्याकाशाश्रयत्वादाकाशे सस्वनुः ॥ २६ ॥

सकलीश्वरतां प्राप्तोऽलङ्कारवशमाश्रितः । स्वामी जगाद स्याद्वादपद्धत्या मधुरं वचः ॥ २७ ॥

अन्वयः—सकलीश्वरतां प्राप्त. अलङ्कारवशमाश्रितः स्वामी स्याद्वादपद्धत्या मधुर वच जगाद ॥ २७ ॥

व्याख्या—सकलीश्वरता प्राप्तः सकलम् समस्तमस्त्यस्मिन्निति सकली सकलिनामीश्वरः सकलीश्वरस्तस्य भावस्तत्ता ताम् समग्रप्रभुताम् प्राप्तः अधिगतः समस्तविश्वप्रभुः अलंकारवशमाश्रितः अलंकाराणि भूषणानि वसन्ति अधितिष्ठन्त्यस्मिन्निति इत्यलंकारवशस्तम् अनेकशोऽलंकृतसमवसरणभूमिमाश्रितः समधिष्ठितः स्वामी जिनेन्द्रप्रभुः स्याद्वादपद्धत्या अनेकान्तवादसरण्या मार्गेण जैनशासनानु-

सारेणेत्यर्थः मधुरम् सर्वसाधारणरोचकम् वचः वचनम् जगाद उपदिदेश ॥

रामकृष्णपक्षे—कलीश्वरताम् कलेर्युद्धस्य ईश्वरतां विजयतां मुख्यतां वा प्राप्तः स रामः कृष्णो वा लंकारवसमाश्रितः लंकायाः रावणराज्यधान्याः यो रवः शब्दस्तमाश्रयतीति तथा लंकाशब्दश्रोता अथवा लंका इति रवः अभिधानं यस्य तन्नगरसमाश्रितः लंकाधिष्ठितः सन् अन्यत्र अलंकारवशमाश्रितः अनेककौस्तुभादिभूषणवशगः स्वामी पृथ्वीपतिः स्याद्वादपद्धत्या अनेकान्तवादरीत्या मधुरं वचः श्लक्ष्लं वचनं जगाद उचे ॥ २७ ॥

**विशालशालरचना व्यूहरक्षाविशेषिताः । चैत्यपादपसंपन्ना दक्षा यक्षा वितेनिरे ॥ २८ ॥**

अन्वयः—दक्षा यक्षाः चैत्यपादपसम्पन्ना· व्यूहरक्षाविशेषिता. विशालशालरचना· वितेनिरे ॥ २८ ॥

व्याख्या—दक्षाः प्रवीणाः पटवः यक्षाः देवविशेषाः चैत्यपादपसम्पन्नाः चैत्यपादपेन महावृक्षेण देवाधिष्ठानवृक्षेण वा यद्वा जिनसभास्थपादपविशेषेण अथवा चैत्येन देवस्थानेन पादपेन च सम्पन्नाः' सहिताः व्यूहरक्षाविशेषिताः व्यूहस्य जनसमूहस्य या रक्षा निर्बाधस्थितिस्तया विशेषिताः शोभिताः जनानामसंकीर्णस्थितिविशेषमण्डिता इत्यर्थः विशालसालरचना विशालः प्रकाण्डो यः शालः गेहः तस्य रचना निर्माणं अथवा विशेषेण शालते शोभते यत् शालम् गृहम् तस्य रचना अथवा विशालो महान् यः शालः प्राकारः तस्य रचना यद्वा विशालः यः शालः वृक्षस्तस्य रचना विधानानि वितेनिरे विस्तारयामासुः यक्षास्तत्र देवा देवस्थितियोग्यां सभां वितेनिरे ॥ रामकृष्णपक्षेऽपि साधारणम् ॥

यत्र दक्षाः जिनेन्द्रविषयकातिशयभक्तिमन्तः यक्षाः देवविशेषाः विशालशालरचनाः विशालानां शालानां रत्नस्वर्णरूप्यमयानां प्राकारत्रयाणां या रचनानिर्मितिः ताः चैत्यपादपसम्पन्नाः चैत्याभिधानो यः पादपः अशोकवृक्षः तेन सम्पन्ना सहिता सभा इति शेषः विनेनिरे निस्तारयामासुः ॥ २८ ॥

नीराजनक्रियाप्यर्चानुरागेण विधीयताम् । विधेयास्त्राद्युपास्यायेत्यूचे वाग् विजयैषिभिः ॥ २९ ॥

अन्वय—विधेय ! अस्त्राद्युपास्याय अनुरागेण नीराजनक्रियाप्यर्चा विधीयताम् इति विजयैषिभिः वाग् उचे ॥ २९ ॥

व्याख्या—हे विधेय ! विधानकारक ! अस्त्राद्युपास्याय अस्त्रादिनिराकृत्य अनुरागेण प्रेम्णा नीराजनक्रिया आरात्रिकक्रिया अर्चा पूजापि भवतोरिति शेषः विधीयताम् क्रियताम् इति एवं प्रकारेण विजयैषिभिः विजयेच्छुभिर्देवैरिति शेषः वाग् उचे जगदे ॥ २९ ॥

रामकृष्णपक्षेऽप्येवमेव ।

विपक्षपक्षे विक्षिप्तैः करणैर्बहुहेतिभिः । प्रपन्नेऽप्यवधिमानं वर्षाः सुमनसो व्यधुः ॥ ३० ॥

अन्वय—बहुहेतिभिः करणैः विपक्षपक्षे विक्षिप्तैः अवधिमानम् प्रपन्ने अपि सुमनसो वर्षाः व्यधुः ॥ ३० ॥

व्याख्या—प्रथम पक्षे विपक्षपक्षे समवसरणभूमौ विघ्नभूते तृणकण्टकशर्करादिरूपे विद्यमाने सति बहुहेतिभिः विपुलतेजस्कैः विक्षिप्तैः निःसारकैः निःसारकैः करणैः करोतीति करणो वायुः तैः वायुकुमारैः अवधिमानम् सर्वत एकयोजनम् पृथ्वीतलम् निर्मले कृते सतीति शेषः सुमनसः सुष्ठु मनो येषान्ते सुमनसः देवाः मेघकुमाराः वर्षाः सुगन्धिजलवृष्टीः व्यधुः चक्रुः यद्वा सुमन अधोमुख सः

वृन्तस्य कुसुमस्य वर्षाः व्यधुः विदधतिस्म ॥

रामकृष्णपक्षे । बहुहेतिभिरस्त्रैः विक्षिप्तैः प्रयोजितैः करणैरनेकशस्त्रप्रयोगैः विपक्षपक्षे शत्रुपक्षे अवधिमानम् अन्तम् विनाशमित्यर्थः प्रपन्ने गते प्राप्ते सति सुमनसः पुष्पस्य वर्षाः वृष्टीः व्यधुः अकार्षुः देवा इति शेषः ॥ ३० ॥

ये दीक्षिता वीक्षितास्ते मण्डलाग्रविशारदाः । नारदा अप्युपाजग्मुः स्वामिनं द्रष्टुमुत्सुकाः ॥ ३१ ॥

अन्वय —ये मण्डलाग्रविशारदाः वीक्षिताः ते दीक्षिता स्वामिनं द्रष्टुमुत्सुका नारदा अपि उपाजग्मुः ॥ ३१ ॥

व्याख्या—ये दीक्षिताः लब्धदीक्षाः वीक्षिताः विशेषेण ईक्षिताः अवलोकिताः अथवा वीक्षम् विस्मयम् इताः प्राप्ताः जातविस्मया ते स्वामिनम् प्रभुम् जिनेन्द्रम् द्रष्टुम् दर्शनाय उत्सुका उत्कण्ठिताः मण्डलाग्रविशारदाः मंडलाग्रे राजमण्डलाग्रभागे विशारदाः प्रगल्भाः यद्वा मण्डलाग्रे समवसरणमण्डले विशारदा विचक्षणाः नारदाः मुनिविशेषाः अथवा नारम् जलम् ददातीति नारदस्ते मेघकुमाराः अथवा नरम् अज्ञानम् द्यति खण्डयतीति नरदस्स एव नारदस्ते अज्ञाननाशका मुनिविशेषाः यद्वा नरं ज्ञानं ददतीति नरदास्त एव नारदा ज्ञानदायिनः तेऽपि उपाजग्मुः आययुः ॥

रामकृष्णपक्षे—ये दीक्षिताः संग्रामदीक्षामाप्ताः रणाङ्गणगताः ते वीक्षिताः दृष्टाः मण्डलाग्रविशारदाः मण्डलस्य समूहस्य अग्रः श्रेष्ठः तस्मिन् विशारदाः श्रेष्ठाः प्रगल्भाः नारदाः स्वनामख्यातविशेषाः ॥ स्वामिनम् रामम् कृष्णञ्च द्रष्टुमवलोकयितुमुत्सुकाः उत्कंठिताः उपा जग्मुरागतवन्तः ॥ ३१ ॥

भरां के--बलिनश्चक्रुः परां विकृतिवर्जिताम्। पुण्यप्रवृत्तिं सत्कीर्ति-धवलां सकलां किल ॥ ३२ ॥

अन्वयः—केवलिनः पराम् विकृतिवर्जिताम् पुण्यप्रवृत्तिम् सत्कीर्तिधवलां सकलां धराम् किल चक्रुः ॥ ३२ ॥

व्याख्या—केवलिनः केवलज्ञानशालिनः जिनेन्द्राः पराम् अतिशयिताम् विकृतिवर्जिताम् विकाररहिताम् निर्विकाराम् पुण्यप्रवृत्तिं पुण्यस्य सुकृतेः प्रवृत्तिः प्रवर्त्तनं यत्र ताम् सत्कीर्तिधवलां सती शोभना चासौ कीर्तिः सत्कीर्त्तिस्तया धवलामवलक्षाम् अथवा सतां सज्जनानां या कीर्तिः तया धवलाम् प्राप्तप्रकाशाम् सकलाम् निखिलाम् धराम् पृथ्वीम् चक्रुर्विदधुः किल निश्चयेन विदधन्तिस्म। अत्र केवलिनः इत्यस्य भिन्नार्थोऽपि, यथा केवलिनः केवलज्ञानवतो जिनेन्द्रस्य धराम् तदधिष्ठानभूमिम् के केऽपि बलिनः वायव इत्यर्थः॥ अथवा के आत्मनि बलवन्तः आत्मज्ञानवन्तः अथवा के कामतंत्रे बलिनः कामजयिनः यद्वा के शरीरे बलिनः शारीरिकममत्वरहिताः "अनादरे सप्तमी" यद्वा के मनसि बलिनः जितेन्द्रियाः मनोजयेन सर्वेन्द्रियजयो भवति यद्वा इन्द्रियाणां मनसः प्राधान्यादिति भावः "क इति ब्रह्मणि वायौ आत्मनि कामतंत्रे देहे मनसि चेति शब्दस्तोममहानिधिः" ॥ ३२ ॥

रामकृष्णपक्षे—के केऽपि बलिनो बलवन्तो रामादयः कृष्णादयो वा परामुत्कृष्टां विकृतिवर्जितां निर्विकाराम् पुण्यप्रवृत्तिं पुण्यप्रचाराम् पवित्राचाराम सत्कीर्तिधवलाम् सत्कीर्तिस्फीतां सकलां कृत्स्नाम् धराम् पृथ्वीम् चक्रुः विरचन्तिस्म; श्लेषः ॥ ३२ ॥

नानाविद्याधरास्तत्र विविधायुधभूषिताः। विदधुर्मधुरां भक्तिं परपक्षविनाशनैः ॥ ३३ ॥

अन्वय —तत्र विविधायुधभूषिता नानाविद्याधराः परपक्षविनाशनैः मधुरा भक्तिम् विदधुः ॥ ३३ ॥

व्याख्या—तत्र जिनेन्द्रस्य समवसरणस्थाने विविधायुधभूषिता आयुध्यते यैस्तान्यायुधानि विविधानि अनेकप्रकाराणि च तानि इति विविधायुधानि तैर्भूषिताः कृतमंडनाः नानाविद्याधराः अनेकदेवयोनि विशेषाः परपक्षविनाशनैः परपक्षाणां विपक्षपक्षाणां विघ्न-विधायकानाम् पापाना वा विनाशनैः विघातैर्निराकरणैर्मधुराम् निर्मलाम् निश्छद्मा मित्यर्थः भक्तिम् सेवाम् प्रीतिम् विदधुः चक्रुः ॥

रामकृष्णपक्षे—नानाविद्याधराः अनेकशास्त्रपरिशीलनपटिष्ठाः यद्वा नानाविद्याः शिल्पविद्या–गानविद्या–अस्त्रविद्या–शास्त्रविद्या–नीति–विद्या–कलाविद्याः ताः धरन्तीति नानाविद्याधराः विविधायुधभूषिता विविधानि अनेकप्रकाराणि यान्यायुधानि तैर्भूषिताः मण्डिताः यद्वा विविधानि यानि आयुधानि सुवर्णविशेषाणि तैर्भूषिताः शोभिताः " अलङ्कारसुवर्ण तु शृङ्गीकनकमायुधमिति हैमः " परपक्षविनाशनैः परपक्षाणा शत्रुपक्षाणां विनाशनैः निराकरणैः मधुरां मनोहरां भक्तिं प्रीतिं विदधुः कुर्वन्तिस्म ॥ ३३ ॥

**समुद्रविजयं मेघनादं सानकदुन्दुभिः । गर्जितैस्तर्जयामास बृहद्रथमतङ्गजम् ॥ ३४ ॥**

अन्वयः—सानकदुन्दुभिः समुद्रविजयम् मेघनादम् बृहद्रथमतङ्गजम् गर्जितैस्तर्जयामास ॥ ३४ ॥

व्याख्या—आनयति जिनेन्द्रदर्शनाय सोत्साहं करोतीति आनकः स चासौ दुन्दुभिः वाद्यविशेषश्चेति आनकदुन्दुभिः तेन सहितः इति सानकदुन्दुभिः आनकदुन्दुभिसहितवाद्यसमूहः मुद्रया सहितो विजयो यस्य स समुद्रविजयो मकरकेतनः काम इत्यर्थस्तम्

मेघनादम् मेघ इव नादो यस्य तम् सर्वविजयित्वात् यद्वा मेहनम् सिञ्चनम् मेघः तस्मै नदति गर्जतीति मेघनादः स्त्रीसंगमाय कृतगर्जनम् बृहद्रथमतङ्गजम् रमन्ते अनेनेति रथः बृहत् महान् चासौ रथश्चेति बृहद्रथः तस्मिन् मतङ्गजः श्रेष्ठः इति तथोक्तः महद्रमणसाधकः कामसूत्रादेव स्त्रीविलासप्रवृत्तिरिति भावः तम् यद्वा बृहन्महान् रथो यस्य स बृहद्रथः स चासौ मतङ्गजश्चेति तथा मदोन्मत्तहस्तिनमाह्वयम् तं गर्जितैः स्वीयशब्दैः तर्जयामास विद्रावयामास ॥ जिनेन्द्रसमवसरणवाद्यानि विपक्षान् क्षोभयन्तिस्मेति भावः ॥

रामपक्षे—सानकदुन्दुभिः दुन्दु इति शब्देन भापयति भीपयति दिशो विद्रावयति शत्रूनिति दुन्दुभिः आनकेन सहितः दुन्दुभिः इति सानकदुन्दुभिः प्रोत्साहितवानरसैन्यम् समुद्रविजयम् समुद्रेण परिखाभूतेन विजयो रिपुकृतानभिभवो यस्य तम् दुस्तरसमुद्रपरिखत्वात् कैरपि पराजयितुमशक्यम् बृहद्रथमतंगजम् बृहद्रथे महद्रथे—मतंगजो यस्य तम् हस्तिरथस्थम् मेघनादम् तदभिधानम् रावणतनयं गर्जितैःसिंहगर्जनाभिलज्जयामास निर्भर्त्सयांचक्रे ॥

कृष्णपक्षे—सानकदुन्दुभिः आनकदुन्दुभिर्वसुदेवः तेन सहितः इति सानकदुन्दुभि' वसुदेवसहितयादवसैन्यम् समुद्रविजयम् समुद्रन्ति आर्द्रीभवन्ति रुधिरेण शत्रवो यस्मात् स समुद्रः यद्वा मुद्रया सहितः समुद्रः विजयते इति विजयः समुद्रश्चासौ विजयश्चेति समुद्रविजयस्तम् मेघनादम् मेघ इव घन इव नदतीति मेघनादस्तम् बृहद्रथमतंगजम् बृहद्रथस्यापत्यम् बृहद्रथः अपत्यप्रत्ययस्य लुक् स मतङ्गज इति जरासंधं गर्जितैः स्वीयवीरशब्दैः तर्जयामास क्षोभयामास ॥ बृहन्महान् रथो यस्य स बृहद्रथः स मतंगज इवेति बृहद्रथमतंगजस्तमित्यर्थो वा सामने । श्लेषः ॥ ३४ ॥

वसुदेवः साङ्गजन्मा साम्बाग्रजजयध्वनिः । नरो विद्याधराञ्जेतुं प्रतस्थे नेमिरक्षितः ॥ ३५ ॥

अन्वय.—साङ्गजन्मा वसुदेव. साम्बाग्रजजयध्वनिः नेमिरक्षित नर विद्याधरान् जेतुम् प्रतस्थे ॥ ३५ ॥

व्याख्या—वसुदेवः वसुना दीप्त्या दीव्यति प्रकाशते इति वसुदेवः कान्तिमान् अद्भुततेजस्कः अंगयतीत्यङ्गः तेन अङ्गेन चिह्नेन सहितं जन्म यस्य स साङ्गजन्मा तीर्थङ्कराणां पृथक् पृथक् लाञ्छनं जन्मत एव भवतीति ज्ञेयम् सलाञ्छनः अम्बया सहितः साम्बः तस्य अग्रजः प्रथम जातः जयध्वनिः जयजयारावो यस्य साम्बाग्रजजयध्वनिः तीर्थङ्कराणा जननी जन्मनि स्वजन्मनि च देवै-र्जयशब्दः क्रियते इति समुदाचारः नरः ना यद्वा रः कामानलो नास्ति यस्य स नरः कामानलरहितः जिनेन्द्रः विद्याधरान् मारणमोहनवशीकरणविद्वेषणोच्चाटनस्तम्भनादिषड्विधविद्योपजीविनो जेतुम् पराजयितुम् यद्वा अविद्याधरान् अज्ञान् सावद्यज्ञानवतो वा जेतुम् उपदेष्टुम् अनेमिरक्षितः नेमिः रथोपकरणविशेषस्तेन रक्षितो न भवतीति तथा पादचारः प्रतस्थे विजहार ॥

रामपक्षे—वसुदेवः कान्तिभृत् समानादेकस्मादङ्गजन्म शरीरधारणं यस्य स एकपितृकः सलक्ष्मण इत्यर्थः अमति वात्सल्यं यातीति अम्बः अम्बते स्नेहेन जल्पतीति वा अम्बः स्नेहकर्त्ता तेन सहितः अग्रजो यस्य स साम्बाग्रजः तस्मिन् जयध्वनिर्विजयशब्दो यस्य स साम्बाग्रजजयध्वनिः नरः लक्ष्मणः नेमिरक्षितः चक्रपालितः विद्याधरान् अन्तर्धानादिविद्यायुक्तान् जेतुम् प्रतस्थे चचाल ।

कृष्णपक्षे—साङ्गजन्मा अंगात् जन्म यस्य स साङ्गजन्मा तनूजः तेन सहितः अक्रूरः क्रूरः ज्वलनवेग इत्यादयस्तत्सुतास्तैः सह

वसुदेवः साम्बाग्रजजयध्वनिः प्रद्युम्नसाम्बप्रभृतिः नेमिरक्षितः नेमिनाथेन कृतरक्षाविधिः नरः विद्याधरान् जेतुम् पराजयितुम् प्रतस्थे चचाल ॥ अत्रांक जगसंधर्मन्या–दागुर्विद्याधरोत्तमाः। वैताढ्याद्रौ जरासंध-गृह्या ये संति खेचराः। तेषां जयार्थं सेनानी–र्वसुदेवोऽस्तु तेऽनुज इत्यादि नेमिनाथचरित्रे कथा सन्दर्भः ॥ ३५ ॥

ज्योतिर्वैमानिका देवा भावनाश्च वनेचराः। नन्वीयुः के-वलोत्पत्तिमहिमानं दिदृक्षवः ॥ ३६ ॥

अन्वय—ज्योतिर्वैमानिकाः देवाः भावनाः च वनेचराः केवलोत्पत्तिमहिमानम् दिदृक्षवः नन्वीयुः ॥ ३६ ॥

व्याख्या—केवलोत्पत्तिमहिमानम् केवलस्य केवलज्ञानस्य उत्पत्तिरुद्भवः तस्याः महिमानम् अनुभावम् दिदृक्षवः द्रष्टुमिच्छवः प्रेक्षकाः ज्योतिः ज्योतिष्कदेवाः वैमानिकदेवाः भावनाः भुवनपतिदेवाः वनेचराः व्यंतरदेवा ननु इति कोमलालापे ईयुः आजग्मुः ॥

रामकृष्णपक्षे-के राजनि राक्षसराजे रावणे जरासंधे नृपे वा "कः राजनि-ब्रह्मणि-आत्मनि-देहे-मनसीत्यादिशब्दस्तोममहानिधिः" विषये वलोत्पत्तिमहिमानम् प्रभावोत्पत्तिविशेषौत्कर्ष्यम् दिदृक्षवः प्रेक्षकाः ज्योतिः ज्योतिष्कदेवाः वैमानिका देवाः भावनाः भुवनपतिदेवाः वनेचराः ननु ईयुः आययुः लोकोत्तरवीरद्वयोः प्रभावदर्शनाय समापेतुः ॥ ३६ ॥

जज्ञे समवसरणं लग्नवध्वा दशाश्रयम्। स्वान्ययोर्भूभुजोर्योगे सुरासुराङ्गसंगतेः ॥ ३७ ॥

अन्वय—सुरासुरांगसंगते स्वान्ययोर्भूभुजोर्योगे लग्नवध्वा दशाश्रयम् समवसरणम् जज्ञे ॥ ३७ ॥

व्याख्या—सुरासुराङ्गसंगतेः सुराः देवाः असुराः दानवाः तयोर्द्वन्द्वः इति सुरासुरे तयोरङ्गसङ्गतिः अवयवसम्मेलनमिति सुरासुराङ्गसङ्गतिः अवयवसम्मेलनमिति सुरासुराङ्गसंगतिः देवासुरसम्मेलन तस्मात् देवासुरसङ्गतेः सकाशात् यद्वा देवासुरसंगतिमाश्रित्येत्यर्थः ॥ "ल्यब्लोपे पंचमी" स्वान्ययोर्भूभुजोर्योगे स्वे च अन्ये च इति तयोः स्वान्ययोः भूभुजोः नरराजदेवराजयोः योगे सम्बन्धे । यद्वा देवराजासुरराजयोर्योगे लग्नवध्वाः परिणयागतवध्वाः दशां वस्त्राञ्चलम् आश्रयते यस्मिन् तत् इव यथास्यात्तथा वा समवसरणम् केवलज्ञानोत्सवम् वरमुक्तिवध्वा दशाश्रयमिवेत्यर्थः जज्ञे समुत्पेदे ॥

रामकृष्णपक्षे—सुरासुराङ्गसंगतेः सुराणाम् दवानाम् दैत्यानाम् राक्षसाना वा अङ्गसङ्गतिः शरीरसम्बन्धस्तस्मात् प्रेक्षकतया देवासुरसङ्गतेः पश्चात् लग्नवध्वाः सग्रामलक्ष्म्याः विजयलक्ष्म्याः दशाम् वस्त्राञ्चलमाश्रयते उद्देश्यत्वेन अभिलक्ष्यते यत्र तत् स्वान्यभूभुजोर्योगे स्वकीयपरकीयराजसम्बन्धे उभयपक्षनृपतिसमायोगे समवसरणम् समानयुद्धम् एकतरपक्षजयपराजयशून्यम् जज्ञे बभूव ॥ ३७ ॥

**सुराः सुरपदे लग्ना मग्नास्तत्र नरा नरैः । भूपा भूपालमासाद्य तुल्यस्थानप्रयत्नकाः ॥ ३८ ॥**

अन्वयः—तत्र सुरा सुरपदे लग्ना नरा नरैः मग्नाः भूपा भूपालमासाद्य तुल्यस्थानप्रयत्नका. ॥ ३७ ॥

व्याख्या —तत्र समवसरणे सुराः देवाः सुरपदे देवस्थाने लग्नाः स्थिता उपविष्टा इत्यर्थः नराः मनुष्याः नरैः मनुष्यैः सहेति शेषः मग्नाः निमग्नाः सगताः भूपाः पृथ्वीपतयः भूपालम् नृपम् आसाद्य प्राप्य भूपतिश्रेणिमाश्रित्य तुल्यस्थानप्रयत्नकाः तुल्यस्थाने स्वसमानस्थाने योग्यस्थाने इति तत्त्वम् प्रयत्नो येषा ते तथोक्ताः असंकीर्णा आसन्निति शेषः स्वस्वयोग्यस्थाने समुपविष्टा इति भावः ॥

रामकृष्णपक्षे तत्र रामकृष्णगणे समानयुद्धे स्वस्वसमाजे प्रेक्षकास्ते तमभ्युन्नयत् पूर्ववत् ॥ ३८ ॥

**पत्तीनां समितौ पत्ति–योगः सादिषु सादिनाम् । रथिनां रथिसंसर्गाद् मर्यादातिक्रमो न तत् ॥ ३९ ॥**

अन्वयः —पत्तीनां समितौ पत्तियोगः, सादिनाम् सादिषु रथिनाम् रथिसंसर्गात् तत् मर्यादातिक्रमो न ॥ ३९ ॥

व्याख्या—पत्तीनाम् सेनानाम् " एकोरथो गजोऽप्येकस्त्रयोऽश्वाः पञ्च सैनिकाः पत्तयस्ते समाख्याता युद्धशास्त्रविशारदैः " इत्युक्तप्रकाराणां समितौ समुदाये पत्तियोगः उक्तप्रकाराणां योगः सम्बन्धः सादिषु अश्वगजारोहणकर्तृषु जनेषु सादिनाम् अश्वारोहिणाम् गजारोहिणाम् योगः सम्बन्धः रथिनाम् रथारोहिणाम् रथिसंसर्गात् रथिभिः सम्बन्धात् तत् मर्यादातिक्रमः श्रेणीभङ्गः न, क्रमस्खलना न जातेति भावः ॥

योगिनाम् नयान्वेन–द्व्याख्यानं रामकृष्णयोः ॥ ३९ ॥

**प्रभोरादेशमासाद्य योगिसेनाग्रणीर्गणी । कृतहस्ततयारोपत्यागाच्चक्रे हिते–रणम् ॥ ४० ॥**

अन्वयः - प्रभोः आदेशम् आसाद्य योगिसेनाग्रणी, गणी कृतहस्ततया आरोपत्यागात् हितेरणम् चक्रे ॥ ४० ॥

व्याख्या-प्रभोः जिनेन्द्रस्य आदेशम् अनुज्ञाम् आसाद्य लब्ध्वा योगोऽस्यास्तीति योगी "अस्य स्व तपोयोगसमाधय इति हैमः" योगिनां सेना समुदायः तत्र अग्रणीः श्रेष्ठः इति योगिसेनाग्रणीः योगिसमुदायाग्रेसरः गणी–" अनूचानः प्रवचने साङ्गेऽधीती गणश्च स इति हैमः" गणधरः गौतमादिः कृतहस्ततया सुशिक्षिततया आरोपत्यागात् आरोपस्य भ्रमस्य त्यागात् निरसनात् यथास्थितवस्तुस्वरूपतः हितेरणम् सदुपदेशम् चक्रे विदधे ॥

रामकृष्णपक्षे–प्रभोः रामस्य कृष्णस्य च आदेशमाज्ञाम् आसाद्य प्राप्य योगिसेनाग्रणीः युज्यते नियुज्यते संग्रामायेति योगिनी सा चासौ सेना चेति योगिसेना तासु अग्रणीः श्रेष्ठः अग्रेसर इत्यर्थः गणी वीरेषु गण्यते संख्यायते इति गणी संख्यावान् सेनापतिरितिभावः कृतहस्ततया सुशिक्षिततया क्षिप्रहस्ततया आरोपत्यागात् भ्रमराहित्येन अहिते शत्रौ रणम् युद्धम् चक्रे विदधे ॥ "निष्णातो निपुणो दक्षः कर्महस्तमुखाः कृतादिति हैमः" ॥ ४० ॥

**कश्चित् सारसनाभिस्पृग्व्यवच्छेदविधौ पटुः । दीप्तिभागन्वयं मत्वा चक्रे ज्याघातवारणम् ॥ ४१ ॥**

अन्वय.–कश्चित् सारसनाभिस्पृक् व्यवच्छेदवधौ पटुः दीप्तिभाक् अन्वय मत्वा ज्याघातवारण चक्रे ॥ ४१ ॥

व्याख्या—कश्चित् कोऽपि सारसनाभिस्पृक् सारसेनयुक्तो नाभिः सारसनाभिः काञ्चीयुक्तनाभिः तम् स्पृशतीति तथा स्त्रीकट्याभरणसहितनाभिस्पर्शकर्त्ता व्यवच्छेदविधौ तत्परित्यागविधौ पटुः कुशलः यद्वा सारसनाभिस्पृशः व्यवच्छेदविधिः परिवर्जनविधिस्तत्रपटुः दक्षः । स्त्रीसंभोगरहितो जातः अत एव दीप्तिभाग् कान्तिमान् जात इति शेषः अन्वयम् सम्बन्धं सर्वत्रजीवसम्बन्धं बुध्वा ज्याघातवारण ज्यया मौर्व्या धनुर्गुणेन यो घातः प्राणिवधस्तस्य वारणं निषेधं हिंसानिवृत्तिं चक्रे गणधरोपदिष्टवचनं श्रुत्वा कश्चिद्योषित्संगान्निवृत्ते कश्चिद्धिंसातश्चेति तत्वम् ॥ ४१ ॥

रामकृष्णपक्षे–आरसति शब्दं करोतीति आरसः आरसेन सहितः सारसः स चासौ नाभिः रथचक्रवामपिण्डी चेति सारसनाभिस्तं स्पृशति स्वस्थं करोतीति सारसनाभिस्पृक् "नाभिर्नाभौ रथचक्रस्य वामपिंड्यां क्षत्रिये मृगमदे इति शब्दस्तोममहानिधिः" व्यवच्छेदविधौ

बाणमोचने शत्रुच्छेदनविधौ न पटुः दक्षः दीप्तिमान् अतितेजस्कः अन्वयं निजपितृमातृकुलावदातत्वं महद्वंशप्रसूतोऽहमितिमत्वा विनार्थं उपागाः मौर्व्या यो घातः हस्ते स्पर्शजनितः क्षतिः तस्य वारणं निवारणं हस्ते चर्मबन्धनम् चक्रे विदधे युद्धाय सन्नद्धत इति भावः ॥ ४१ ॥

न केवलं परामृश्य पुरतः पदमादधुः । अश्रद्धया केवलिनां परे मीमांमकाः श्रुतेः ॥ ४२ ॥

अन्वयः—केवल परामृश्य पुरतः पदम् न आदधुः किन्तु परे मीमामका. केवलिनाम् अश्रद्धया श्रुते. पदमादधुः ॥ ४२ ॥

व्याख्या—केचन केवलम् प्रभोरिति शेषः केवलज्ञानं जातमिति परामृश्य विचार्य पुरतः अग्रतः समवसरणस्थप्रभुदर्शनार्थमुपदे-शश्रवणार्थं वा पदम् आदधुः तत्र गमनाय प्रचक्रमिरे न किन्तु केवलिनाम् केवलज्ञानवतां प्रभूणा प्रभुमित्यर्थः " अनादरे षष्ठी " अश्रद्धया तद्विषयकालीकबुद्धया श्रुतेः श्रवणस्य केवलज्ञानमुत्पन्नमिति विश्वासराहित्येन मीमांसकाः परे केऽपि कर्मवादिनोऽपि पदम् तत्र तद्दर्शनाय चरणप्रचारमादधुः चक्रुः ॥ यद्वा केवलिनाम् केवलज्ञानवताम् अश्रद्धया अभक्त्या श्रुतेः शास्त्रस्य अमीमामकाः शास्त्र-ज्ञानरहिताः परे केचन परामृश्य विचार्य अस्माकमत्राकाशो न भवेदिति विचार्य पुरतः अग्रतः स्वस्थानादग्रे केवलम् पदम् एकपदमपि न आदधुः स्वस्थानादेकक्रममपि न चेलुः ॥

यद्वा श्रुतेः शास्त्रस्य मीमांसकाः विचारकाः शास्त्रविचारदक्षाः बलिनाम् बलवताम् परे श्रेष्ठाः आत्मज्ञानवतां धुर्याः के कामतंत्रे नेह वा अश्रद्धया अनभिनिवेशतया बलम् स्वीयसामर्थ्यं परामृश्य विचार्य पुरतः अग्रतः देशनाश्रवणार्थं के पदं गमनम् न आदधुः न चक्रुः किन्तु सर्वे तत्र पदमादधुर्जग्मुरिति भावः ॥ ४२ ॥

रामकृष्णपक्षे—प्रभोः रामस्य कृष्णस्य च आदेशमाज्ञाम् आसाद्य प्राप्य योगिसेनाग्रणीः युज्यते नियुज्यते संग्रामायेति योगिनी सा चासौ सेना चेति योगिसेना तासु अग्रणीः श्रेष्ठः अग्रेसर इत्यर्थः गणी वीरेषु गण्यते संख्यायते इति गणी संख्यावान् सेनापतिरितिभावः कृतहस्ततया सुशिक्षिततया क्षिप्रहस्ततया आरोपत्यागात् भ्रमराहित्येन अहिते शत्रौ रणम् युद्धम् चक्रे विदधे ॥ "निष्णातो निपुणो दक्षः कर्महस्तमुखाः कृतादिति हैमः" ॥ ४० ॥

कश्चित् सारसनाभिस्पृग्व्यवच्छेदविधौ पटुः । दीप्तिभागन्वयं मत्वा चक्रे ज्याघातवारणम् ॥ ४१ ॥

अन्वय.—कश्चित् सारसनाभिस्पृक् व्यवच्छेदवधौ पटुः दीप्तिभाक् अन्वयं मत्वा ज्याघातवारण चक्रे ॥ ४१ ॥

व्याख्या—कश्चित् कोऽपि सारसनाभिस्पृक् सारसेनयुक्तो नाभिः सारसनाभिः काञ्चीयुक्तनाभिः तम् स्पृशतीति तथा स्त्रीकट्याभरणसहितनाभिस्पर्शकर्त्ता व्यवच्छेदविधौ तत्परित्यागविधौ पटुः कुशलः यद्वा सारसनाभिस्पृशः व्यवच्छेदविधिः परिवर्जनविधिस्तत्रपटुः दक्षः । स्त्रीसंभोगरहितो जातः अत एव दीप्तिभाग् कान्तिमान् जात इति शेषः अन्वयम् सम्बन्धं सर्वत्रजीवसम्बन्धं बुध्वा ज्याघातवारण ज्यया मौर्व्या धनुर्गुणेन यो घातः प्राणिवधस्तस्य वारणं निषेधं हिंसानिवृत्तिं चक्रे गणधरोपदिष्टवचनं श्रुत्वा कश्चिद्योषित्संगान्निवृत्ते कश्चिद्धिंसातश्चेति तत्वम् ॥ ४१ ॥

रामकृष्णपक्षे—आरसति शब्दं करोतीति आरसः आरसेन सहितः सारसः स चासौ नाभिः रथचक्रवामपिण्डी चेति सारसनाभिस्त स्पृशति स्वस्थं करोतीति सारसनाभिस्पृक् "नाभिर्नाभौ रथचक्रस्य वामपिण्ड्यां क्षत्रिये मृगमदे इति शब्दस्तोममहानिधिः" व्यवच्छेदविधौ

बाणमोचने शत्रुच्छेदनविधौ न पटुः दक्षः दीप्तिमान् अतितेजस्कः अन्वयं निजपितृमातृकुलावदातत्वं महद्वंशप्रसूतोऽहमितिमत्वा विचार्य ज्यायाः मौर्व्या यो घातः हस्ते स्पर्शजनितः क्षतिः तस्य वारणं निवारणं हस्ते चर्मबन्धनम् चक्रे विदधे युद्धाय सन्नद्धत इति भावः ॥ ४१ ॥

न केवलं परामृश्य पुरतः पदमादधुः । अश्रद्धया केवलिनां परे मीमांसकाः श्रुतेः ॥ ४२ ॥

अन्वय—केचन परामृश्य पुरः पदम् न आदधुः किन्तु परे मीमांसकाः केवलिनाम् अश्रद्धया श्रुतेः पदमादधुः ॥ ४२ ॥

व्याख्या—केचन केवलम् प्रभोरिति शेषः केवलज्ञानं जातमिति परामृश्य विचार्य पुरतः अग्रतः समवसरणस्थप्रभुदर्शनार्थमुपदेशश्रवणार्थं वा पदम् आदधुः तत्र गमनाय प्रचक्रमिरे न किन्तु केवलिनाम् केवलज्ञानवतां प्रभूणा प्रभुमित्यर्थः " अनादरे षष्ठी " अश्रद्धया तद्विषयकालीकबुद्ध्या श्रुतेः श्रवणस्य केवलज्ञानमुत्पन्नमिति विश्वासराहित्येन मीमांसकाः परे केऽपि कर्मवादिनोऽपि पदम् तत्र तद्दर्शनाय चरणप्रचारमादधुः चक्रुः ॥ यद्वा केवलिनाम् केवलज्ञानवताम् अश्रद्धया अभक्त्या श्रुतेः शास्त्रस्य अमीमांसकाः शास्त्रज्ञानरहिताः परे केचन परामृश्य विचार्य अस्माकमत्रावकाशो न भवेदिति विचार्य पुरतः अग्रतः स्वस्थानादग्रे केवलम् पदम् एकपदमपि न आदधुः स्वस्थानादेकक्रममपि न चेलुः ॥

यद्वा श्रुतेः शास्त्रस्य मीमांसकाः विचारकाः शास्त्रविचारदक्षाः बलिनाम् बलवताम् परे श्रेष्ठाः आत्मज्ञानवतां धुर्याः के कामतंत्रे वेदे वा अश्रद्धया अनभिनिवेशतया बलम् स्वीयसामर्थ्यं परामृश्य विचार्य पुरतः अग्रतः देशनाश्रवणार्थं के पदं गमनम् न आदधुः न चक्रुः किन्तु सर्वे तत्र पदमादधुरिति भावः ॥ ४२ ॥

रामकृष्णपक्षे—के केऽपि बलम् स्वसामर्थ्यं परामृश्य विचार्य पुरतः अग्रतः संग्रामभूमौ पदं चरणं न आदधुः न धृताः संग्रामभूमौ न गताः परे केचन के शरीरे अश्रद्धया किमिद क्षणभङ्गुरं शरीरं रक्ष्यते इति शारीरिकममरहिताः श्रूयते इति श्रुतिः शब्दः तस्याः मीमांसकाः विचारवन्तः धिग् धिग् किमिति पलायन्ते नेयं वीरपद्धतिरिति शत्रुवचनविचारकाः वीराभिमानिन इत्यर्थः पुरतः संग्रामायाग्रतः पदं चरणं आदधुः संग्रामाय जग्मुरिति भावः ॥ ४२ ॥

**धन्याः केऽपीश्वरम्मन्या यथेच्छाचारकारिणः । स्वका-रणे कार्यकृतः सभ्या वाल्लभ्यमैयरुः ॥ ४३ ॥**

अन्वय.—केऽपि ईश्वरम्मन्याः यथेच्छाचारकारिणः स्वकाःरणे अकार्यकृत. सभ्या वाल्लभ्यम् ऐयरु ॥ ४३ ॥

व्याख्या—ईश्वरम्मन्याः जिनेन्द्रे ईश्वरबुद्धिमन्तः यथेच्छाचारकारिणः जिनेन्द्रस्य या इच्छा आचारश्च तयोः कारिणः जिनेन्द्राज्ञानुवर्त्तिनः स्वकाः स्वाधीनाः न तु पुत्रकलत्रादिपरतंत्राः रणे संग्रामे कार्यं हिंसनादिकम् न कुर्वन्तीति अकार्यकृतः हिंसादिव्यापारपराङ्मुखाः धन्याः कृतकृत्याः श्रेष्ठाः सभ्याः सभार्हाः योग्याः वाल्लभ्यम् प्रागल्भ्यम् ऐयरुः अलभन्त ॥

रामकृष्णपक्षे—केऽपि केचन ईश्वरम्मन्या आत्मानम् ईश्वरम्मन्यन्ते इति तथोक्ता अत एव यथेच्छाचारकारिणः स्वाभिमतकार्यकारिणः निष्प्रतिबंधा धन्याः श्रेष्ठाः स्वकाः स्वाधीनाः रणे सग्रामे कार्यकृतः संग्रामकार्यदक्षाः सभ्याः सभार्हाः वाल्लभ्यम् वल्लभताम् प्रगल्भतां ऐयरुः आप्राप्नुयुः ॥ ४३ ॥

**मार्गणान्वेषणाज्जीवाजीवाश्रयदृशः परे । वारबाणभृतो वारबाणाद्विरतिमादधुः ॥ ४४ ॥**

अन्वय.—परे मार्गणान्वेषणात् जीवाजीवाश्रयदृशः वारबाणभृतः वारबाणात् विरतिम् आदधुः ॥ ४४ ॥

व्याख्या—मार्गणान्वेषणात् मार्ग्यतेऽनेनेति मार्गणम् शास्त्रम् ज्ञानं वा "करणे ल्युः" तस्य अन्वेषणात् पर्यालोचनात् परे केऽपि जीवाजीवाश्रयदृशः जीवाश्च अजीवाश्चेति जीवाजीवम् तत् आश्रयति विचारयतीति जीवाजीवाश्रयदृक् येषां ते जीवाजीवविचारचणाः वारबाणभृतः वारबाणम् कवचम् बिभ्रति धारयंति इति वारबाणभृतः कवचधारिणः "निचोलकः स्यात् कूपासो वारबाणश्च कंचुक इति हैमः" अथवा व्रियते जनैरिति वारः संसारः तम् बाणयति रुणद्धीति प्रेरयति विक्षिपतीति वारबाणः संसारनिवर्त्तकस्तं बिभ्रतीति वारबाणभृतः चारित्र्यवन्तः समारनिवर्त्तकाध्यवसायवन्तो वा वारबाणात् वारम् जनसमूहम् बाणयति आह्वयति स्वसानिध्यं कारयतीति वारबाणः वेश्याजनः तस्मात् यद्वा बाणम् शरम् वृणोतीति वारबाणः राजदन्तादित्वात् परनिपातः तस्मात् हिंसार्थबाणधारणात् विरतिम् विरामम् आदधुः स्वीचक्रुः अत्र गम्यो विरोधाभासोऽलंकारः ॥

रामकृष्णपक्षे—मार्गणान्वेषणात् मार्गणस्य बाणस्य अन्वेषणात् सधानात् जीवाजीवाश्रयदृशः जीवन्मृतज्ञानवन्तः एते जीवन्ति एते मृता इति विवेकवन्तः वारबाणभृतः कवचिनः बाणवारात् बाणावसरात् बाणाघातात् विरतिम् निवृत्तिम् आदधुः कृतवन्तः कवचधारणेन बाणवेधस्य निवृत्तिः कृतेति भावः ॥ "वेलावारावसरः प्रस्तावः ॥ प्रक्रमोऽन्तरमिति हैमः" ॥ ४४ ॥

**शुद्धेपणानवच्छेदाद्वैयावृत्त्यं वियोगिनाम् । स्वतन्त्राशु वितन्वानाः प्रायश्चित्तं समादधुः ॥ ४५ ॥**

अन्वयः-वियोगिनाम् शुद्धेपणानवच्छेदात् वैयावृत्त्यं स्वतन्त्रा वितन्वाना आशु प्रायश्चित्तं समादधुः ॥ ४५ ॥

व्याख्या—वियोगिनाम् विगतः योगः सांसारिकविषयसंबन्धो येषां ते वियोगिनस्तेषाम् निर्ग्रन्थिनां मुनीनाम् शुद्धैषणानवच्छेदात् शुद्धैषणायाः पवित्रैषणायाः निरवद्यभिक्षायाः अनवच्छेदात् नैरन्तर्यात् वैयावृत्यम् साधुसेवाविशेषम् स्वतन्वा स्वशरीरेण वितन्वानाः कुर्वाणाः मुनयः इति शेषः, आशु झटिति प्रायश्चित्तम् प्रायस्य पापस्य चित्तम् शोधनम् यस्मात् तम् 'प्रायो नाम तपः प्रोक्तं चित्त निश्चय उच्यते । तपोनिश्चय संयुक्तं प्रायश्चित्तमिति स्मृत'मित्युक्तस्वरूपं वा समादधुः चक्रुः ॥

रामकृष्णविषये—शुद्धैषणानवच्छेदात् शुद्धः निशातो य एषणो बाणः तस्य अनवच्छेदात् सातत्यात् अनवरतबाणप्रयोगात् वियोगिनाम् वि असहनेऽक्षमायां योगोऽभिनिवेशो येषां ते वियोगिनस्तेषामसहिष्णूनां वैयावृत्यम् व्यावृत्तेर्भवम् वैयावृत्यम् निवारणम् आशु शीघ्रम् वितन्वानाः विस्तारयन्तः स्वतन्वा शरीरेण प्रायः बाहुल्येन चित्तं मनः समादधुः समादधतिस्म चित्तैकाग्र्यं चक्रुरित्यर्थः ॥ ४५ ॥

**उद्यते-रावणौ दीर्घे सर्वत्राभयविस्मयः । कौशल्यानन्दनोद्योगे कौशल्यानन्दनो न कः? ॥ ४६ ॥**

अन्वय—दीर्घे रावणौ उद्यते सर्वत्र अभयविस्मय. कौशल्यानन्दनोद्योगे क कौशल्यानन्दनो न ॥ ४६ ॥

व्याख्या—रावयति निवारयति कर्म दुःखं यः स रावणः तस्यायं रावणिः उपदेशः तस्मिन् रावणौ उपदेशे दीर्घे महति उद्यते प्रभवति सति प्रभूतजिनेन्द्रव्याख्याने प्रसरति सतीति भावः सर्वत्र सर्वतोभावेन अभयस्य निराबाधस्य परस्परविद्वेषशान्तभावस्य विस्मयः आश्चर्यः अजनीति शेषः कौशल्येन निजालौकिकनैपुण्येन आनन्दयतीति कौशल्यानन्दनः निजनिर्मलदाक्ष्येणानन्दयिता तस्य उद्योगे उपदेशविधौ कः संसारी कौशल्यानन्दनः कौशल्येन कुशलतया नन्दनः सुखवान् न सर्व एव कुशलवान् जात इति तत्त्वम् ॥

रामपक्षे-दीर्घे महति रावणौ रावणपुत्रे मेघनादे उद्यते संग्रामाय उद्युक्ते सति सर्वत्राभयविसयः सर्वत्र सर्वेषु स्वसैन्येषु अभयस्य निर्भयस्य विस्मयः अजनि इति शेषः अथवा सर्वत्र सर्वेषु रामसैन्येषु आसमन्तात् भयस्य भीतेर्विस्मयः आभयेन विस्मय इति वा अजनीति शेषः कौशल्यानन्दनस्य रामस्य उद्योगः रणगमनम् तस्मिन् कः सैन्यपरिगतः कः कौशल्येन कुशलस्य भावः कौशल्यम् मांगल्यम् तेन नन्दनः आनन्दयुक्तः न सर्वे आनन्दिता अभवन्निति भावः ॥

श्रीकृष्णपक्षे जिनेन्द्रपक्षश्चज्ञेयम् ॥ ४६ ॥

## प्राप्ते मार्गे दशमुखेऽभिमुखे संयतीशिताम् । न कोऽपि निरतः स्थातुं पुरतो विनतात्मना ॥ ४७ ॥

अन्वयः—संयतीशिताम् प्राप्ते दशमुखे अभिमुखे मार्गे कोऽपि विनतात्मना पुरतः स्थातुम् न निरतः ॥ ४७ ॥

व्याख्या—संयतन्ते इति संयतिनः साधवः तेषु ईशिता ईशित्वम् इति संयतीशिताम् प्राप्ते लब्धे दशमुखे दशसु दिक्षु मुखं यस्य स दशमुखस्तस्मिन् 'यदा जिनेन्द्रो देशना ददाति तदा सर्वदिगुपविष्टानां स्वाभिमुखमेव लक्ष्यते दीपशिखावदिति' दशमुखे जिनेन्द्रे अभिमुखे संमुखे मार्गे तद्दृष्टिपातभूमौ कोऽपि कश्चिदपि विनतात्मना विशेषेण नत आत्मा यस्य तेन विनतात्मना नतकन्धरेण पुरतः अग्रतः स्थातुम् उपवेष्टुम् न निरतः न समर्थः सर्वतः सर्वे एव नता आसन्नित्यर्थः ॥

रामपक्षे—ईशिताम् प्रभुताम् प्राप्ते सर्वराक्षसेश्वरतामुपगते दशमुखे रावणे अभिमुखे संमुखे मार्गे तत्संमुखीने सति पुरतः अग्रतः सगति संग्रामे विनतात्मना शरपातभयात् विना नम्रतया स्थातुम न कोऽपि निरतः समर्थः रावणबाणभिन्नमर्माणः सर्वे एव नीचैर्मुखा

अभवन्निति तात्पर्यम् ॥ ४७ ॥

कृष्णपक्षे—संयति संग्रामे ईशिताम् प्रगल्भतां प्राप्ते दशमुखे सर्वतो दत्तलक्ष्ये कृष्णे सति मार्गे रणमार्गे अभिमुखे समक्षे विन-
तात्मना विना नम्रतया कोऽपि पुरतः अग्रतः स्थातुं न निरतः न समर्थः अभवत् ॥ ४७ ॥

दृष्टे पुण्यजनाधीशे बृहद्रथभुवि स्वतः। सर्वे नरा वानरा वा चलाचलदशां दधुः ॥ ४८ ॥

अन्वयः—पुण्यजनाधीशे बृहद्रथभुवि दृष्टे स्वत. सर्वे नरा वानरा वा चलाचलदशाम् दधु ॥ ४८ ॥

व्याख्या—रम्यतेऽनेनेति रथः "रमेः कथन्" रम्यस्थानम् बृहन्महांश्चासौ रथश्चेति बृहद्रथः तस्य भूः तस्मिन् बृहद्रथभुवि मह-
द्रम्यभूमौ मोक्षमार्गे पुण्यजनाधीशे पुण्यजनाः पवित्रजना अधीशते यत्र तस्मिन् पवित्रजनाधिष्ठिते वर्त्तमाने जिनेन्द्रे दृष्टे नयनगोचरे
सति 'सर्वे नराः मनुष्याः अनराः देवाश्च यक्षगन्धर्वादयश्च स्वतः अकारणात् चलाचलदशाम् तत्तेजोधर्षितत्वात् चञ्चलताम् उत्सुक-
ताम् दधुः जग्मुः ॥ ४८ ॥

रामपक्षे—बृहन्महांश्चासौ रथश्चेति बृहद्रथः महत्स्यन्दनः तत्र भवतीति बृहद्रथभूस्तस्मिन् महद्रथस्थे पुण्यजनाधीशे पुण्यजना-
नाम् राक्षसानाम् अधीशे नृपे "यातुधानः पुण्यजनो नैर्ऋतो जातु रक्षसीत्यमरः" रावणे दृष्टे समरभूमिगोचरे सति सर्वे नराः
मनुष्याः वानराः कपयश्च स्वतः स्वयमेव चलाचलदशाम् साध्वसा चञ्चलताम् अस्थिरताम् दधुः अनुभवन्तिस्म रावणभयात् सर्वे इत-
स्ततोऽभवन्नित्यर्थः ॥ ४८ ॥

कृष्णपक्षे—पुण्यजनाधीशे पुण्यजनम् अधीष्टे शास्तीति पुण्यजनाधीशस्तस्मिन् यद्वा अपुण्यजनाधीशे अपुण्यजनान् पापिष्ठान् अधीष्टे तस्मिन् कलुषितजनाधीशे बृहद्रथभुवि बृहद्रथराजपुत्रे बार्हद्रथे जरासंधे दृष्टे संग्रामाङ्गणगोचरे सति सर्वे कृष्णपक्षीयाः नराः मनुष्याः अनराः देवयक्षगन्धर्वराक्षसादयः अचलाचलदशां स्थैर्यताम् अकिञ्चित्करोऽयमस्माकमिति निर्भीकताम् दधुः धारयन्तिस्म ॥४८॥

**तदा मुक्ते जरायोगे शक्तिशल्यानुभाविनि । सुमित्रासंभवे व्यग्रे बले व्यापद् विना जिनम् ॥ ४९ ॥**

अन्वयः—तदा शक्तिशल्यानुभाविनि जरायोगे मुक्ते सुमित्रासम्भवे बले व्यग्रे जिन विना व्यापत् ॥ ४९ ॥

व्याख्या—तदा केवलज्ञानानन्तरं शक्तिशल्यानुभाविनि शक्तिरस्त्रविशेषः शल्यो बाणस्तयोर्द्वन्द्वः शक्तिशल्यम् तस्य अनुभावः प्रभावः पापक्षयकारत्वाद्यस्मिन् तस्मिन् योगे तपोविशेषे मुक्ते परित्यक्ते सति अजरा न जीर्यति जन्मकोटिशतैरपीति जरा कर्मग्रन्थिः जिनं विना जिनेन्द्रप्रभुं विना सुमित्रासम्भवे सुमिद्यति स्निह्यति जनोऽस्यामिति पृथ्वी तस्याः सम्भवे पृथ्वीजाते व्यग्रे दुःखिनि बले संघे व्यापत् प्रापत् ॥ ४९ ॥

रामपक्षे-जीर्यते शरीरमनया इति जरा काचित् शक्तिः तस्याः योगे प्रयोगे शक्तिशल्यानुभाविनि शक्तिशल्योभयप्रभावशालिनि तदा रावणप्रयुक्ते मुक्ते लक्ष्मणाय विक्षिप्ते सति सुमित्रासंभवे लक्ष्मणे व्यग्रे दुःखमापन्ने बले सैन्ये जिनम् जयतीति जिनस्तम् रामम् विना व्यापत् प्रापत् समस्तबलं व्यग्रमभवत् ।

कृष्णपक्षे-तदा जरासंधयुद्धे शक्तिशल्यानुभाविनि शक्तिबाणप्रभावशालिनि जरायोगे जरास्त्रप्रयोगे मुक्ते सति यदस्त्रप्रभावात्सर्वे-

जरायुक्ता भवन्तीति भावः जिनं विना श्रीनेमिनाथं विना सुमित्रासंभवे सुमित्रसमागमे व्यग्रे दुःखमापन्ने बले सैन्ये व्यापत् जरा सर्वत्र प्रासरदिति भावः ॥ ४९ ॥

**कृते नागवराह्वाने वामेयार्चा समागता । तया विशल्यया सेना जिनोक्त्या साऽभवत् पटुः ॥ ५० ॥**

अन्वयः— नागवराह्वाने कृते वामेयार्चा समागता तया विशल्यया जिनोक्त्या सा सेना पटु अभवत् ॥ ५० ॥

व्याख्या—न गच्छतीति नागः कामः सर्वदा शरीरस्थितत्वात् स चासौ वरश्चेति नागवरः तस्य आह्वाने आकारिते सति कामपरतंत्रे सति वामाया इयम् वामेया अर्चा पूजा आराधना तदनुसरणा समागता समुपस्थिता परंतु जिनोक्त्या जिनशब्दोच्चारणेन तथैव विशल्यया विशल्यकरणया दुःखनिवारिकया सा सेना जनप्रवृत्तिः पटुः साधीयसी अभवत् अजायत जिनस्य कामजितत्वात्तन्नामोच्चारणमात्रेण कामो व्यपलायत ॥

रामपक्षसाधारणमेतत् ।

कृष्णपक्षे—नागवराह्वाने नागवरस्य धरणेन्द्रस्य आह्वाने आकरणे कृते सति वामेयस्य पार्श्वजिनेन्द्रस्य या अर्चा पूजा सा समागता समुपस्थिता जिनोक्त्या जिनस्य श्रीनेमिनाथस्य या उक्तिः सा जिनोक्तिः तया जिनेन्द्रोपदेशभूतया तया श्रीपार्श्वजिनेन्द्रपूजया विशल्यया विशल्यकरणया जराविद्राविकया सा सेना पटुः पट्वी कार्यक्षमा अभवत् अजायत ॥ ५० ॥

**राजद्राजी समाजानां सा–धो–रणविनिग्रहात् । कुम्भकर्णे रक्तलेपात् शुशुभे या–स–भागजा ॥ ५१ ॥**

अन्वयः—सा रणविनिग्रहात् साधो समाजानां राजद्राजी कुंभकर्णे रक्तलेपात् सभागजा शुशुभे ॥ ५१ ॥

व्याख्या—रणविनिग्रहात् संग्रामपरित्यागात् साधोः मुनेः समाजानां समुदायानां या राजद्राजी विरोचमानश्रेणी कुम्भ इव कर्णः यथा कुम्भो जलादिकं धारयति तथायमपि बहुशास्त्रविचारग्राहक इति भावः तस्मिन् रक्तलेपात् रक्तस्य शास्त्रानुरागस्य लेपादा- सञ्जनात् "रक्तम् कुंकुमे ताम्रे रुधिरे रागे इति शब्दस्तोममहानिधिः" भजनम् भागः "भावे घञ्" भक्तिरित्यर्थः तेन सहितः सभागः तेन सभागः ततो जायते इति सभागजा देवविषयकभक्तिजनिता साशुशुभे बभौ ॥

रामपक्षे—घोरणविनिग्रहात् घोरणानां हस्त्यश्वादियानानाम् विनिग्रहात् विनाशनात् हननादित्यर्थः कुम्भकर्णे रावणानुजे रक्तलेपात् रक्तस्य रक्तचन्दनस्य रुधिरस्य वा लेपात् अभ्यञ्जनात् " रक्तसंकोचपिशुनं धीरं लोहितचन्दनमित्यमरः " भा प्रभा तया सहिताः सभाः सभाः सदीप्ताः गजाः हस्तिनो यत्र सा सभागजा दीप्तिमद्गजमती मदोन्मत्तगजबहुलेति यावत् समाजानाम् रणगतानां सैनिकानाम् राजद्राजी शोभमाना श्रेणी रोचिष्णुसैन्यपंक्तिः सा शुशुभे दिदीपे ॥

कृष्णपक्षे—घोरणविनिग्रहात् हस्त्यश्वादिवाहननाशात् अत एव कुम्भकर्णे कुम्भ इव कर्णौ यस्य स कुम्भकर्णस्तस्मिन् रक्तलेपात् हस्त्यश्वादिशरीरशोणितलेपात् सभागजा समानभागे जायते तिष्ठतीति सभागजा एकदेशस्थिता समाजानां रणगतसेनानाम् राजद्राजी विरोचमानसंहतिः शुशुभे रेजे ॥ ५१ ॥

हर्योऽहरयोगेन निद्रामुद्राविमुद्रिताः । पुरश्चेरुः सपर्याणाः कुर्वाणा दर्शनोत्सवम् ॥ ५२ ॥

अन्वय —अहः अयोगेन निद्रामुद्राविमुद्रिता, हरयः सपर्याणां दर्शनोत्सवम् कुर्वाणा, पुरश्चेरु ॥ ५२ ॥

व्याख्या—हरति पापमिति हरिस्ते हरयो जिनेन्द्राः अहः प्रातः अयोगेन योगराहित्येन जिनेन्द्राणां निद्रामुद्राविमुद्रिताः निद्रायाः स्वापस्य या मुद्रा नेत्रसंकोचादिस्तां विमुद्रितास्त्यक्ताः सपर्याणाः परित एति इति पर्याणस्तेन सहिताः सपर्याणाः परितो गमनशीलाः दशनोत्सवम् नेत्रोत्सवं कुर्वाणाः दर्शनानन्ददायकाः पुरः अग्रे चेरुः चेलुः ॥ ५१ ॥

रामपक्षे—अहः प्रातः अयोगेन अनायासेन स्वत एवेत्यर्थः निद्रामुद्राविमुद्रिताः निद्रोत्थिता हरयः कपयः सपर्याणाः पर्याणेण अश्वमञ्जनेन सहिताः यथाऽश्वादिरारोहणार्थं कम्बलादिपृष्ठास्तरणेन मज्जिता भवन्ति तथा सपर्याणाः पृष्ठास्तरणसंयुक्ताः अत एव दर्शनोत्सव नयनानन्दं कुर्वाणा विदधानाः पुरः अग्रे चेरुः विचेरुः ॥

कृष्णपक्षे—हरयोऽश्वा अन्यत् पूर्ववद्व्याख्येयम् ॥ ५२ ॥

**दशा–स्याभिमुखे रामानुजे या–जनि संमतिः । जयश्रीर्निश्रिता देवे नृदेवेऽद्भुतया–तया ॥ ५३ ॥**

अन्वय.—दशास्याभिमुखे रामानुजे या सम्मिति. अजनि अद्भुतया तया देवे नृदेवे जयश्रीर्निश्रिता ॥ ५३ ॥

व्याख्या—दशास्याभिमुखे दशसु इन्द्रियेष्विति शेषः आस्यं प्रवृत्तिर्यस्य स दशास्यः कामः तस्य आभिमुख्ये समक्षे कथंभूते रामानुजे रामाम् कामिनीम् अनुजाति अनुसरतीति रामानुजस्तस्मिन् यद्वा रामे रमन्तेऽस्मिन्निति रामो ध्यानम् तम् तस्मिन् वा अनुजाति अधितिष्ठतीति रामानुजः श्रीजिनेन्द्रः तस्मिन् या सम्मितिः संग्रामोऽजनि कामे जिनेन्द्रे च सम्मितिरभूत् नृदेवे मनुष्यदेवे देवे जिनेन्द्रे विषये अद्भुततया निरतिशयप्रभावतया जयश्रीः कामविजयलक्ष्मीः निश्रिता अवश्यंभाविनी ॥ ५३ ॥

रामपक्षे—दशास्याभिमुखे दशास्यस्य रावणस्य अभिमुखे सन्निधौ रावणेन सहेत्यर्थः रामानुजे लक्ष्मणे या सम्मितिः संग्रामोऽजनि उदपादि अद्भुततया विलक्षणतया देवे द्योतनात्मके नृदेवे लक्ष्मणे जयश्रीर्विजयलक्ष्मीः निश्चिता नियमिता अवश्यं भवित्री ॥

कृष्णपक्षे—दशास्याभिमुखे जरासंधसंमुखे रामानुजे रामादनु जायते इति रामानुजः बलरामानुजे कृष्णे सम्मितिः अजनि अजनिष्ट अद्भुततया अलौकिकचमत्कारतया नृदेवे देवे कृष्णे जयश्रीर्विजयलक्ष्मीर्निश्चिता क्लृप्ता ॥ ५३ ॥

**नागाहत–विवाहेन तत्क्षणे सदृशः श्रियः । नागाहत–विवाहेन तत्क्षणे सदृशः श्रियः ॥ ५४ ॥**

अन्वयः—विवाहेन सदृशः तत्क्षणे श्रियः न अगाहत विवाहेन तत्क्षणे ना सदृशः श्रियः अगाहत ॥ ५४ ॥

व्याख्या—विशुद्धता निर्मलता वाहयति लभते "प्रेरणाशत्यागात्" इति विवाहस्तेन विवाहेन उपलक्षितः उपलक्षणे तृतीया निर्मल्यत्वोपलक्षितः पश्यत्यनेनेति दृशः ज्ञानम् तेन सहितः सदृशः विशेषज्ञानवान् तत्क्षणे प्रव्रज्यासमये श्रियः राज्यलक्ष्मीः न अगाहत ना अगाहत वि-श्रेष्ठताम् वाहयति निर्वाहयतीति विवाहस्तेनोपलक्षितः श्रेष्ठतामुपगतः जिनेन्द्रप्रभुः तत्क्षणे केवलज्ञानोत्पत्तिक्षणे ना पुरुषः कर्मनिरसनादेव विशिष्टपुरुषः सदृशः सदृशीः स्वस्वरूपयोग्याः श्रियः केवलज्ञानलक्ष्मीः अगाहत अलभत ॥

रामपक्षे-सदृशः दृशेन सहितः सदृशः " दृशेः क्स् " सनयनः तस्य विंशतिनयनत्वेन तथा निर्देशः रावणः विवाहेन राक्षसा द्विविवाहेन विधिना श्रियः सीताः ' पूज्यत्वाद्बहुवचनम् ' न अगाहत न अलभत सदृशः ज्ञानवान् ना मनुष्यो लक्ष्मणः विः पक्षी गरुडः वाहो वाहनं यस्य तेन विवाहेन गरुत्मद्वाहनेन कारणेन तत्क्षणे रावणयुद्धसमये श्रियः विजयलक्ष्मीः यद्वा श्रियः रावणस-

म्पदः अगाहत अप्राप्नुत ॥ ५४ ॥

अथवा अगति कुटिलं गच्छतीति अग् "कर्त्तरि क्विप्" न अग् नाग् तेन नागा अकुटिलगामिना अहतविवाहेन अपराहतगरुत्मद्वाहनेन उपलक्षितः श्रियः विजयलक्ष्म्याः सदृशः योग्यः सदृशः ज्ञानवान् ना नरः विवाहेन श्रियः रावणराजलक्ष्मीः अगाहत आसादयत् ॥ ५४ ॥

कृष्णपक्षे—नागयोः पद्मोत्तरचपकयोः यत् आहतम् आहननम् तत् नागाहतम् विः पक्षी गरुडः स एव वाहनम् इति विवाहनम् नागाहतश्च विवाहश्च इति नागाहतविवाहः तेन नागाहतविवाहेन उपलक्षितः तत्क्षणे तत्समये श्रियः लक्ष्म्याः सदृशः योग्यः ना पुरुषः तत्क्षणे शिशुपालविवाहोत्सवे सदृशः शोभनयनाः श्रियः रुक्मिणीः विवाहेन राक्षसविवाहेन अगाहत अप्राप्नोत् ॥

श्लोकार्धयमकं प्रकृते ॥ ५४ ॥

**प्राहरद्विजयः कर्णे-जपमाश्रित्य शाम्भवम् । अस्तस्तत्तेजसा द्रोण-भीष्माहितपराभवः ॥ ५५ ॥**

अन्वयः—विजयः शाम्भवमाश्रित्य कर्णेजपम् प्राहरत् तत्तेजसा द्रोणभीष्माहितपराभवः न्यस्तः ॥ ५५ ॥

व्याख्या—विजयते कषायादीनिति विजयः शाम्भवम् शं कल्याणम् जनानामिति शेषः भवत्यनेनेति शंभवस्तस्य भावस्तम् आश्रित्य अभिलक्ष्य कर्णेजपम् सूचकम् प्राहरत् निरस्यत् यदि कर्णेजपानां स्थिर्भवेत्तदा कदाचिदपि लोककल्याणं न संभाव्यते इति विचार्य तं निरास्यदिति भावः "कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खल इत्यमरः" तत्तेजसा तस्य जिनेन्द्रस्य तेजसा प्रभावेन द्रोणभीष्माहितपराभवः द्रुणाति हिंसयति कौटिल्ययतीति द्रोणः भीषयतीति भीष्मः तयोर्द्वन्द्वः ताभ्यामाहितः स्थापितः जनितः यः

परागतः दुःखम् च यतः निरस्तः जिनेन्द्रतेजसा केषामपि कुतश्चिदपि भयो न जात इति तत्त्वम् ॥ ५५ ॥

रामपक्षे—विजयते इति विजयो रामः शाम्भवम् शंभुसंबन्धिनं विजयावहं वा कर्णजपम् कर्णे किमपि कथयतीवेति कर्णपर्यन्त-माकृष्य धनुः आश्रित्य मौर्वीं कर्णपर्यन्तमाकृष्य प्राहरत् तत्तेजसाऽऽकर्णा कृष्टबाणस्य तेजसाऽनुभावेन द्रोणभीष्माहितपराक्रमः हिंप-कर्मीपकजनितदुःखम् अस्तः निराकृतः ॥

कृष्णपक्षे—विजयः अर्जुनः कर्णजपम् सूचकमाश्रित्याभिलक्ष्य शाम्भवम् शंभुदत्तम् गाण्डीवं धनुः प्राहरत प्रहृतवान् तत्तेजसा तन्महिम्ना द्रोणभीष्माहितपराक्रमः द्रोणश्च भीष्मश्चेति द्वन्द्वस्तयोराहितः स्थापितः पराभवः विपत्तिः अस्तः निर्दिष्टः द्रोणादिषु कर्णान्तर पराभवो जातः अथवा शांभवं शम्भुदेवताकं जपं भजनमाश्रित्य कर्णे कर्णनामनि राज्ञि प्राहरत् अथवा संप्रति कर्णार्जुनीययुद्धे द्रोणभीष्माहितपराभवः युद्धव्यसनः अस्तः निराकृतः ॥ ५५ ॥

नरः सवासवं चक्रं प्राप्य तद्भेदमादधे । सालङ्कारसमासन्नं जज्ञे जयजयारवः ॥ ५६ ॥

अन्वय — नरः सवासवं सालङ्कारसमासन्नं चक्रं प्राप्य तद्भेदम् आदधे जयजयारवः जज्ञे ॥ ५६ ॥

व्याख्या—नृणाति विशुद्धधर्मं प्रचारयतीति नरः जिनेन्द्रः वासवेन महेन्द्रेण सहित सवासवम् ऐन्द्रम् सालङ्कारसमासन्नम् अलंकारेण सहितः सालंकारः सालंकारेण समासन्नः समागतः इति सालङ्कारसमासन्नः सभूषणसन्निहितस्तम् चक्रम् संघम् इन्द्रमण्डितजनसहितं समुदायं प्राप्य लब्ध्वा तत्सभासामाद्य भेदम् पापपुण्यविवेचनम् जीवाजीवविवेचनम् वा यद्वा अविद्याभेदम् आदधे स्वकीय-

सदुपदेशेन विवेचयामास तत इति शेषः जयजयारवः जयजयध्वनिः जज्ञे सर्वे जना उपदेशामृतामास्वाद्य जयशब्दं चक्रुरित्यर्थः ॥

रामकृष्णपक्षे—स नरः लक्ष्मणः कृष्णो वा वासवम् चक्र वसुरश्मिन्नस्तीति वासवम् समृद्धम् राजमण्डलम् सालकारसमासन्नम् आभूषणमहितसमागतम् शौर्यादिगुणभूषणसमन्वितम् चक्रं राजमण्डलम् प्राप्य लब्ध्वा समासाद्य तच्छेदं तदीयच्छेदम् आदधे समृद्धशूरराजमण्डलस्य छेदनम् छिन्नभिन्नमाचक्रे तेनेति शेषः जयजयारवः जयजयस्वनः जज्ञे जयजयशब्द चक्रे ॥ ५६ ॥

## सुमित्राङ्गजसंगत्या सदशाननभासुरः । अलिमुक्तेर्दानकार्य-सारोऽभाल्लक्ष्मणाधिपः ॥ ५७ ॥

अन्वय —सुमित्रागजसगत्या दशाननभासुरः लक्ष्मणाधिप. अलिमुक्तेर्दानकार्यसार अभात् ॥ ५९ ॥

व्याख्या—सुष्ठु मेद्यति स्निह्यति अनुबध्नातीति सुमित्रम् केवलज्ञानम् तदेवाङ्गजम् स्वतनूद्भवत्वात् इति सुमित्राङ्गजम् तस्य संगत्या सम्बन्धेन केवलज्ञानयोगेन दशाननभासुरः दशसु दिक्षु आनन मुखमुपदेशकाले यस्य स दशाननः तेन भासुरः दीप्यमानः लक्ष्मणाधिपः लक्ष्म चिह्नमेव लक्ष्मणं 'स्वार्थेऽण्' तत् अधिपाति रक्षति स्वसङ्गेन धारयतीति लक्ष्मणाधिपः अलिमुक्तेः अलेः सुरायाः मुक्तेस्त्यागात् सर्वथा वर्जनात् दानकार्यसारः दानकार्यमुपदेशनमेव सारो यस्य स अभात् अशोभिष्ट ॥५७॥ अलिर्भ्रमरेऽष्टश्चिके काके कोकिले सुरायाश्चेति शब्दस्तोममहानिधिः ॥

रामपक्षे—स लक्ष्मणाधिपः लक्ष्मणश्चासौ अधिपश्चेति लक्ष्मणाधिपः लक्ष्मणाभिन्नो नृपः दशाननभासुरः दशाननस्य भा दीप्तिः दशाननभा ताम् अस्यति विक्षिपति तिरस्करोतीति दशाननभासुरः "अस्यते वास्यतीत्यादि नौणादिक उर प्रत्ययः" दशाननशोभानि-

गकरिष्णुः सुमित्राङ्गजसंगत्या सुमित्राया अङ्गजः तनयः सुमित्रांगजः तस्य संगत्या यः सुमित्राङ्गजः स कदाचिदपि दुर्मित्रं न महत इत्यन्वर्थतया अलिमुक्तेर्बाणमोचनात् पतत्रित्वेन साम्यादलिशब्दस्य बाणार्थत्वेनेति भावः दानकार्यसारः दानं च्छेदनमेव कार्यसारं यस्य स अभात् अशोभत ॥ यद्वा ।

स रावणः सुमित्राङ्गजसंगत्या अङ्गाज्जायते अङ्गजः सुमित्रं च सोऽङ्गजश्चेति सुमित्राङ्गजः कामस्तस्य संगत्या संगमेन कामपराधीनतया दशाननभासुरः दशाननेन शोभमानः लक्ष्मणाधिपः लक्ष्मणाना लक्ष्मीवतामधिपः अलिमुक्तेर्बाणमोचनाद्दानकार्यसारः छेदनपटुः अभात् अशोभत ॥

कृष्णपक्षे—सुष्ठु मेद्यति स्निह्यतीति सुमित्रं तच्चासावङ्गजश्चेति सुमित्राङ्गजः प्रद्युम्नः यद्वा सुमित्रः अर्जुनस्तस्याङ्गजोऽभिमन्युः तस्य संगत्या सम्मेलनेन दशाननभासुरः दशदिक्षु शोभमानः लक्ष्मणाधिपः लक्ष्मणायाः स्वपत्न्या अधिपः कृष्णस्य अलिमुक्तेः बाणमोचनात् दानकार्यसारः छेदनकार्यतत्परः अभात् अराजत ॥ ५७ ॥

नरक्षितिं परपरिग्रहात् विदन् स चारिणा । विभिदे हरिणा दर्पं धरन्मन्दोदरीवरः ॥ ५८ ॥

अन्वयः—परपरिग्रहात् नरक्षितिम् विदन् दर्पं धरन् मन्दोदरीवरः स चारिणा हरिणा विभिदे ॥ ५८ ॥

व्याख्या-परपरिग्रहात् परेषामन्येषाम् परिग्रहः कलत्रम् तस्मात् अन्यस्त्रीसंसर्गात् नरक्षितिम् म्रियते इति नरः नयः तस्य क्षितिम् नाशम् विदन् जानन् दर्पम् अहंकारं धरन् बिभ्रत् मन्दोदरीवरः मन्दं कृशमुदरं यस्याः सा मन्दोदरी इति तस्याः वरः पतिः काम

इत्यर्थः अथवा मन्दोदरीम् वनिताम् धर्मिपारतन्त्र्यात् वृणोति स्वाङ्गेण स्वीकरोतीति मन्दोदरीवरः यद्वा मन्दोदरीभिः कामिनीभिः व्रियते इति मन्दोदरीवरः स कामः चारिणा विहरणशीलेन हरिणा जिनेन्द्रेण विभिदे चिच्छिदे निराचक्रे ॥

रामपक्षे—स मन्दोदरीवरः रावणः परपरिग्रहात् अन्यदीयभार्यातः नरस्य नीतेः क्षितिम् नाशं विदन् मन्यमानः यद्वा नरस्य नरजीवनस्य क्षितिं क्षयम् विदन् दर्पम् अहंकारम् मानम् धरन् बिभ्रत् चारिणा वनवासिना हरिणा लक्ष्मणेन विभिदे जघ्ने ॥

कृष्णपक्षे—परस्य शत्रोः परिग्रहात् स्वीकारात् नरक्षितिम् जनविनाशम् विदन् जानन् दर्पमहंकारं धरन् धारयन् मन्दोदरीवरः मन्दोदरी काचिज्जरा नाम्नी स्त्री तया व्रियते संयुज्यते यः स मन्दोदरीवरः जरया संधितो जरासंधः चारिणा रणाङ्गणचारिणा हरिणा कृष्णेन विभिदे विदारितः ॥ ५९ ॥

कुमारीवेदसाहस्रान् सराज्यान् यत्कृते दधत् । इक्ष्वाकुवंशवृषभः शं-के-वलश्रिया श्रितः ॥ ५९ ॥

अन्वयः—कुमारी सराज्यान् वेदसाहस्रान् यत्कृतेऽदधत् इक्ष्वाकुवशवृषभः शं केवलश्रियाश्रित. अभवदिति ॥ ५९ ॥

व्याख्या—कुमारी कुमारितुम् आत्ममनने क्रीडितुं शीलमस्य स आत्मानुभवशीलः राजते इति राजः तस्य भावः राज्यम् राज्येन सहिताः सराज्यास्तान् सदीप्तान् वेदसाहस्रान् विदन्त्यनया इति वेदः ज्ञानम् तेषां साहस्रान् वेदसाहस्रान् अत्र सहस्रशब्दोऽनन्तार्थ इति अनन्तज्ञानानि यत् कृते यन्निमित्तम् दधत् धारयन् इक्ष्वाकुवंशवृषभः इक्ष्वाकुवंशश्रेष्ठः सर्ववर्णनीयतीर्थङ्कराणामिक्ष्वाकुवंशप्रभवत्वं पूर्वं प्रदर्शितमेवेति भावः जिनेन्द्रः सम् सम्यक् केवलश्रिया केवलज्ञानलक्ष्म्या आश्रितः अवलम्बितः अभवदिति शेषः ॥

नेमिपक्षे—कुमारीवेदमाहस्रान् कुमारीणाम् कन्यकानाम् वेदमाहस्रान् चतुःसहस्रान् सराज्यान् स्वराज्यसमृद्धिसहितान् यत्कृते यन्निमित्तम् दधत् नृपः धारयति यदि नेमिर्मत्सुतां परिणेष्यति तदा स्वराज्यमपि तस्मै दास्यामीति मतिमान् राजाऽभवत् स इक्ष्वाकुवंशवृषभः इक्ष्वाकुवंशश्रेष्ठः नेमिः अवलश्रियाश्रितः अवला चासौ श्रीः अवलश्रीः तया न श्रितः इति अश्रितः अनाश्रितोऽभवदिति शेषः । इत्यहं शंके मन्ये नेमिना कन्याग्रहणमकृतमित्यर्थः ॥

रामपक्षे—कुमारीणां कन्यकानां वेदसाहस्रान् त्रिसाहस्रान् "इति वेदास्त्रयस्त्रयीत्यमरः" सराज्यान् राज्यार्धसहितान् यत् यस्याः सीतायाः कृते निमित्तम् दधत् प्रत्यर्पणाय मनसि धारयन् इक्ष्वाकुवंशवृषभः इक्ष्वाकुवंशश्रेष्ठः केवलश्रिया कान्तिमात्रेण शं रावणहननजन्यकल्याणं मङ्गलम् आश्रितः प्राप्तः यावता रावणो मनसि कन्यानां सहस्रत्रयं राज्यञ्च दातुमिच्छति तावता लक्ष्मणेन हत इति भावः ॥ ५१ ॥

"दशास्यस्त्वां वदत्येवं बन्धुवर्गं विमुञ्च मे । जानकीमनुमन्यस्व राज्यार्धञ्च गृहाण मे ॥

त्रीणि कन्यासहस्राणि तुभ्यं दास्यामि तेन च । संतुष्य नो चेत्ते सर्वत्र-क्षेतन्न च जीवित"मितितच्चरित्रे ॥

श्रीकृष्णपक्षे—कुमारीणाम् कन्यकानाम् वेदमाहस्रान् षोडशसाहस्रान् विदन्त्यनेनेति वेदः शास्त्रम् तच्च "षडङ्गीवेदाश्चत्वारो मीमांसाऽन्वीक्षिकी तथा । धर्मशास्त्रम्पुराणं च विद्या एताश्चतुर्दश" इति चतुर्दशधा अनङ्गविद्या गानविद्या वेति षोडशविद्या सराज्यान् राजन्ते इति राजानो मणयः तेषां भावः राज्यम् तेन सहितान् अनेकमणिसहितान् यत्कृते यस्य कृष्णस्य कृते कृष्णनिमित्तम् दधत् धारयन् बलाश्रितः बलदेवाश्रितः इक्ष्वाकुवंशवृषभः यदुवंशस्यापि इक्ष्वाकुवंशमूलकत्वात् इक्ष्वाकुकुलश्रेष्ठः कृष्णः अवलश्रिया अवला

एव श्रीस्तया आश्रितः अवलम्बित इत्यहं शंके मन्ये ॥

भूपाः षोडश साहस्रा वासुदेवाय भक्तितः । रत्नानि ढौकयामासुर्द्वे द्वे च वरकन्यके ॥

ताभ्यः षोडश साहस्राः कन्याः कृष्ण उपायत । अष्टौ सहस्राणि वलोऽन्ये कुमाराश्च तावती इति कृष्णचरित्रे ॥ ५९ ॥

**चक्रे प्रभाविनि दशाननराजराजि, भाति स्मयागजदशाननराजराजिः ॥**
**चक्रे प्रभाविनि दशाननराजराजि-भातिस्मयागजदशा न नराजराजि ॥ ६० ॥**

अन्वयः—दशाननराजराजि प्रभाविनि चक्रे स्मयागजदशाननराजराजि. भाति प्रभाविनि दशाननराजराजि चक्रे नर अजराजि यागजदशा न भातिस्म ॥ ६० ॥

व्याख्या—आसमन्तादन्यते प्रकाश्यते इति आननः प्रकाशः दशसु दिक्षु आननः प्रकाशो यस्य स दशाननः राजते उद्योतते इति राजा तत्र राजते शोभते इति राजराट् दशाननश्चासौ राजराट् चेति दशाननराजराट् तस्मिन्, प्रभाविनि प्रभावशालिनि चक्रे भरतस्य राज्ञः चक्रास्त्रे प्रकटिते सतीति शेषः स्मयागजदशाननराजराजिः स्मयः चित्रोत्कर्ष एव अगः पर्वतः तस्माज्जायते इति स्मयागजः तेन दशसु दिक्षु अनिति प्रकाशते इति स्मयागजदशाननः राजसु राजते इति राजराजिः स्मयागजदशाननश्चासौ राजराजिश्चेति स्मयागजदशाननराजराजिः चित्तोद्रेकगिरिप्रभूतप्रकाशमाननृपमण्डलीश्रेष्ठः भरतः श्रीशान्तिनाथः श्रीनेमिनाथश्च भाति द्योतते प्रभाविनि प्रभावशालिनि दशाननराजराजि प्रकाशमाननृपश्रेष्ठनृपे चक्रे मण्डले समूहे हेनर अजराजि अजेषु छागेषु राजते इति अजराट् तस्मिन् यागजदशा यागे वलिप्रयोजकविधौ जायते इति यागजा सा चासौ दशा चेति यागजदशा इव न भातिस्म न शोभतेस्म यथा

रक्षपक्षे तात्कालिकीदशा न शोभते तथा प्रभावशालिनि नृपमण्डलेऽपि यागजदशायुद्धरूपयजनदशा न भातिस्मेति भावः ॥ ६० ॥
अत्र श्लोके वसन्ततिलकं वृत्तम् "ज्ञेयम् वसन्ततिलकं तभजा जगौग" इति तल्लक्षणात् ॥

रामपक्षे—प्रभाविनि प्रभवितु शीलं यस्य स प्रभावी तस्मिन् प्रभावशालिनि दशाननराजराजि दशाननराजः राजा यस्य स दशाननराजराट् तस्मिन् तथोक्ते चक्रे मण्डले या गजदशाननराजराजिः गजः मत्तः विवेकशून्य इत्यर्थः यः दशाननः स चासौ राजा चेति गजदशाननराजः तस्य राजिः तदीयपक्षीयश्रेणी भातिस्म शोभतेस्म हे—नर प्रभाविनि प्रभावशालिनि दशाननराजराजि भाति चक्रे दशाननराजस्य या राजिः तत्पक्षीयश्रेणी तत्र चक्रे भाति देदीप्यमाने सति तदीयपक्षे चक्रे प्रभवति सति सयागजदशा न गच्छती-त्यगः सयोऽहंकार एवागः सयागः तस्माज्जायते इति सयागजा सा चासौ दशा चेति सयागजदशा अहंकारगिरिसंभूता दशा आजराजि आजस्य संग्रामस्य राजि प्रांगणे रणभूमौ न भातिस्म न राजतेस्म देहलीदीपन्यायेन भातीत्यस्योभयत्रान्वयः ॥

कृष्णपक्षे - जरासंधरूपविपक्षगजदशाद्यादिरूपेण व्याख्यावसेया । प्रकृते व्यपेतभेदान्वयः समुद्गयमकालंकारः 'अर्धाभ्यासः—समुद्गः स्या' दिति सरस्वतीकण्ठाभरणोक्तेः ॥ ६० ॥

योगारक्षमादिसहसा-दशकन्धरं-तं, तीव्रारिभावमधिगम्य निशम्य कामम् ।
योधो बिभेद सरयाजरया ससन्धं, श्रीलक्ष्मणेत्य निहितः स तु वासुदेवः ॥ ६१ ॥

अन्वयः—क्षमादिसहसा योगात् स तु वासुदेव. श्रीलक्ष्मणोपनिहितः बोधः काम तीव्रारिभावम् अधिगम्य दशकन्धरं त निशम्य ससन्ध रयात् जरया विभेद ॥ ६१ ॥

व्याख्या—क्षमादिसहसा योगात् क्षमा दयादाक्षिण्यादिरेव सहः बलम् तेन योगात् संबन्धात् वासुदेवः वसु एव वासु तेन दीव्यति प्रकाशते इति वासुदेवः तेजोविशेषेण देदीप्यमानः श्रीलक्ष्मणा तत्तत् स्वस्वविशेषचिह्नेन वृषभादिना एत्य प्राप्य निहितः युक्तः बोधः बुध्यति जानातीतितथा ज्ञानवान् कामम् मदनम् तीव्रारिभावमुत्कटरिपुभावम् शत्रुतामधिगम्य प्राप्य स्थितमिति शेषः दशा मृतिरेवदशकः तन्धरतीति दशकंधरः तम् अनङ्गताङ्गतम् ससन्धम् सप्रतिज्ञम् रयात् स प्रभुर्जिनेन्द्रः जरया विभेद निर्वतयामास' युवावस्थायामेव शरीरपाताज्जरायोगो नैव प्रापेति भावः ॥

रामकृष्णपक्षे—क्षमादिसहो बलं यस्य स क्षमादिसहा तेन क्षमादिसहसा उपलक्षितः क्षमादिबलवान् बोधः ज्ञानवान् श्रीलक्ष्मणा श्रीरेवलक्ष्म चिह्नम् तेन श्रीलक्ष्मणा एत्य निहितः श्रीलक्ष्मोपलक्षितः स तु वासुदेवः श्रीरामलक्ष्मणः कृष्णबलदेवश्च तीव्रारिभावम् अतिशयविपक्षभूतम् अधिगम्य बुध्वा तं दशकंधरं कामम् यथेष्टम् निशम्य दृष्ट्वा जरया ससन्धम् जरयायुक्तं संधम् जरासंधम् प्रतिवासुदेवम् रयात् शीघ्रम् विभेद चिच्छेद निहतवान् ॥ ६१ ॥

विश्वाङ्गजापहरणोद्भवसंपरायात्, षट्खण्डभूमिभरतेशकलाधिकारे ।
देवो निवृत्य भुवनाद्भुतराज्यलक्ष्मीः, कक्षीचकार विविधोत्सवकेवलेन ॥ ६२ ॥

अन्वयः—विश्वागजापहरणोद्भवसंपरायात् षट्खण्डभूमिभरतेशकलाधिकारे देवः भुवनाद्भुतराज्यलक्ष्मीः निवृत्य विविधोत्सवकेवलेन कक्षीचकार ॥६२॥

व्याख्या—विश्वाङ्गजापहरणोद्भवसंपरायात् विश्वः समस्तः स्मरणं कीर्तनमित्याद्यष्टरूपो यः अंगजः कामः तस्य अपहरणे निराकरणे निर्गमन इत्यर्थः यद्वा तस्य अपहरणाय निराकरणाय उद्भवो जातः यः संपरायः संग्रामः "युद्धायत्योः संपराय इत्यमरः" तस्मात् अष्टविधकामसंग्रामनिराकरणोद्भूतरणात् भुवनाद्भुतराज्यलक्ष्मीः त्रिभुवनविलक्षणराज्यसंपदः षट्खंडभूमिभरतेशकलाधिकारे षट्खंडा या भूमिः पृथ्वी तां बिभर्त्ति धारयति स्वामित्वेन अधिकरोतीति षट्खंडभूमिभरतः स चासौ ईशश्चेति षट्खंडभूमिभरतेशः तस्य या कला योगक्षेमरूपा तस्या अधिकारे प्रभुत्वे शासने निवृत्य स्थापयित्वा देवः जिनेन्द्रः विविधोत्सवकेवलेन विविधोत्सवेन अनेकविधकृतजन्मजरामरणादिमंगलेन केवलेन केवलज्ञानेन कक्षीचकार क्रोडीचकार केवलज्ञानवान् सम्पन्नः ॥

अन्यजिनेन्द्रपक्षे—षट्खण्डभूमिभरतेशकलाधिकारे षट्खण्डः यः भूमिभरतः भरतखण्डभूमिस्तत्र ईष्टे प्रभवतीति षट्खंडभूमिभरतेशः तस्य या कला तदधिकारे भुवनाद्भुतराज्यलक्ष्मीः निवृत्य निराकृत्येत्यर्थः षट्खण्डभूमिभरतेशयोग्यतायामपि तन्न जग्राहेति तत्त्वम् ॥ ३२ ॥

रामपक्षे—देवः देवनशीलः षट्खण्डभूमिभरतेशकलाधिकारे षट्खण्डभूमिम् बिभर्त्तीति "भृ अतच्" षट्खण्डभूमिभरतः स चासौ ईशश्चेति षट्खण्डभूमिभरतेशः कलायाः कृत्स्नायाः अधिकारः कलाधिकारः षट्खण्डभूमिभरतेशस्य कलाधिकारस्तस्मिन् भुवनाद्भुतराज्यलक्ष्मीः त्रैलोक्यविलक्षणराज्यसंपदः रावणाधिकारस्य राज्यलक्ष्मीः विश्वाङ्गजापहरणोद्भवसंपरायात् विश्वांगजायाः जानक्याः अपहरणेन उद्भवः उत्पन्नः यः संपरायः संग्रामस्तस्मात् कारणात् निवृत्य आच्छिद्य रावणाधिकारे या राज्यलक्ष्मीस्ता निवृत्य तत आकृष्य विविधोत्सवकेवलेन अनेकोत्सवप्रधानेन कक्षीचकार क्रोडीचकार ॥

कृष्णपक्षे—विश्वायाः कसमातुः अंगजः कंसः तस्य अपहरणात् नाशनात् उद्भवति यः संपरायः संग्रामस्तस्मात् षट्खण्डभूमिभरतेशकलाधिकारे जरासंधनृपाधिकारे शासने या भुवनाद्भुतराज्यलक्ष्मीः निवृत्य निराकृत्य देवः कृष्णः विविधोत्सवकेवलेन अनेकविधमंगलप्रधानेन कक्षीचकार स्वायत्तीचकार जरासंधराज्यसक्ष्मीः पराकृत्य स्वाधीनामकरोदित्यर्थः ॥ ६२ ॥

ज्ञानं केवलमार्षभं हरमिते मुख्ये तपस्येऽभव–

त्सत्पोषे नवमे सिते हिमरुचा हीनेऽर्यमासेविते ।

प्राक्कल्याणकवासरेऽन्तिमविभौ दिक्संमिते माधवे,

राज्ये सा नियतिर्जिने निगदिता रामेऽभिरामे त्विषा ॥ ६३ ॥

इतिश्री सप्तसंधाने महाकाव्ये महोपाध्यायश्रीमेघविजयगणिविरचिते भगवत्केवलज्ञानसाम्राज्यवर्णनोनाम षष्ठः सर्गः ॥ ६ ॥

अन्वयः—हरमिते मुख्ये तपस्ये आर्षभ केवलं ज्ञानम् अभवत् सत्पौषे नवमे सिते हिमरुचा अहीनेऽर्यमासेविते प्राक्कल्याणकवासरे अन्तिमविभौ दिक्संमिते माधवे जिने राज्ये सा नियतिर्निगदिता त्विषा अभिरामे रामे च निगदिता ॥ ६३ ॥

व्याख्या—हरमिते हरेण परिमिते एकादश्याम् मुख्ये प्रधाने तपस्ये फाल्गुने " स्यात्तपस्यः फाल्गुनिक इत्यमरः " आर्षभम् ऋषभस्येदम् आर्षभम् ऋषभनाथसंबन्धि केवलं ज्ञानम् केवलज्ञानम् अभवत्, सत्पौषे शोभनपौषमासे नवमे नवमीतिथौ सिते शुक्लपक्षे "अवदात्तः सितो गौरोऽवलक्षो धवलोऽर्जुन इत्यमरः" पौषशुक्लनवम्याम् शान्तेः केवलं ज्ञानमभवत् , हिमरुचा चन्द्रेण अहीने युक्ते

'र्यमणा आसेविते इति अर्यमासेविते सूर्यचन्द्रोभयसम्मिते तिथाविति शेषः अमावास्यातिथौ आश्विनकृष्णामावास्यायाम् नेमेः केवलज्ञानम् अभवत्, प्राक्कल्याणकवासरे प्राथमिककल्याणकदिने च्यवनकल्याणदिने चैत्रकृष्णचतुर्थ्याम् पार्श्वनाथस्य केवलज्ञानमभवत्, चरिमविभौ चरमतीर्थंकरे श्रीवर्धमाने जिने दिक्सम्मिते दशम्याम् तिथौ माधवे वैशाखे राज्ये केवलज्ञानरूपे साम्राज्ये सा नियतिः स्थितिः निगदिता कविना, त्विषा कान्त्याऽभिरामे मनोहरे रामे बलरामे रामलक्ष्मणे च राज्ये सा नियतिः स्थितिर्निगदिता निरूपिता ॥ अत्र पद्ये शार्दूलविक्रीडितं छन्दः 'सूर्याश्वैर्मसजस्तताः स गुरवः शार्दूलविक्रीडितम्' इति लक्षणात् ॥ ६३ ॥

इति शास्त्रविशारद, कविरत्न, भट्टारकाचार्य-श्रीविजयामृतसूरीश्वरप्रणीतायां सप्तसन्धानमहाकाव्य-सरणी-टीकायां षष्ठः सर्गः ॥ ६ ॥

## ॥ अथ सप्तमः सर्गः ॥

समवसरणे सत्रा तत्रागमद् रमणैर्भुवः, सकलभरतस्वामी भावी नवोदितचक्रभृत् ।
धरणिवलयादश्वक्षुण्णार्जुनोत्थरजोऽणुभि-र्गणिपरिणतैश्चित्रं कुर्वन्नेवाम्बरमम्बरैः ॥ १ ॥

अन्वयः—तत्र समवसरणे भुव. रमणै· सत्रा सकलभरतस्वामी भावी नवोदितचक्रभृत् धरणिवलयात् अश्वक्षुण्णार्जुनोत्थरजोऽणुभिर्गणिपरिणतैः अम्बरैरिव अम्बर चित्रीकुर्वन् अगमत् ॥ १ ॥

व्याख्या—तत्र जिनेन्द्रस्य समवसरणस्थाने भुवः पृथिव्याः रमणैः भूपतिभिः सत्रा सह सकलभरतस्वामी सकलानाम् अखिलानां भरतानाम् भरतखण्डानाम् स्वामी अधिपतिः भावी नवोदितचक्रभृत् नवः नूतनः यश्चक्रश्चक्रास्त्रः स नवोदितचक्रः तम्बिभर्तीति नवोदितचक्रभृत् नूतनप्रकटितचक्रधारकः भावी भविष्यन् इतो गत्वा चक्रं धारयिष्यतीत्येवभूतः धरणिवलयात् भूमण्डलात् अश्वक्षुण्णार्जुनोत्थरजोऽणुभिः अश्वैः वाजिभिः क्षुण्णाः सम्पिष्टाः अर्जुनाः शुक्लाः धवला इत्यर्थः उत्थाः उच्छ्रिता उद्गता ये रजसां धूलीनाम् अणवः क्षुद्रांशाः तैः तथोक्तैः तुरङ्गमकुट्टितश्वेतोच्छ्रितधूलिकणैः गणिः गण्यते दिव्यपदप्राप्तया इति गणिः तत्र परिणतैः आकाशपरिणतैः आकाशस्थैः अम्बरैरिववसनैरिव अम्बरम् आकाशम् चित्रम् अद्भुतम् नानावर्णवत् कुर्वन् विदधत् आगमत् आयासीत् ॥

अन्यजिनेन्द्रपक्षेऽपि समानमेतत् ॥ १ ॥

रामपक्षे—तत्र समवसरणे लंकापरिसरकुसुमायुधोद्यानसमागताप्रमेयबलनामर्षिसमुत्पन्नकेवलज्ञानोत्सवचिकीर्षुमहेन्द्राधिष्ठितस्थाने भुवः पृथिव्याः रमणैः पृथ्वीपतिभिः सत्रा समम् सकलभरतस्वामी भावी नवोदितचक्रभृत् रामः आगमत् अन्यत् पूर्ववद्योज्यम् ॥

कृष्णपक्षे—समवसरणे युद्धसमाप्ते निवृत्तयुद्धे सति तत्र कृष्णसन्निधिभूमौ भुवः रमणैः सह जरासन्धपक्षीयनृपैः समम् सकलभरतस्वामी नवोदीतचक्रभृत् कृष्णः अगमत् अन्यद्विशेषणं यथापूर्वमनुसन्धेयम् ॥ १ ॥

अत्र सर्गे हरिणीवृत्तन्तल्लक्षणं यथा 'रसयुगहयैर्न्सौम्रौस्लौ गो यदा हरिणी तदा' ॥ १ ॥

तपनतनयस्तस्याप्यग्रेसहः सह सेनया, करटिघटनाटोपारोपादियाय जयाश्रयः ।
असहनजनक्षोभं तन्वन् सधन्वभटैः श्रिया. हरितनुजवद् गन्धर्वाणां समरध्वजगर्जितैः ॥ २ ॥

अन्वयः—तपनतनयः सह सेनयाऽपि अग्रेसहः करटिघटनाटोपारोपात् जयाश्रयः गन्धर्वाणाम् समरध्वजगर्जितैः सधन्वभटैः श्रिया हरितनुजवत् असहनजनक्षोभं तन्वन् इयाय ॥ २ ॥

व्याख्या–तपनतनयः तप्यते लोकोत्तरमैश्वर्यमश्नुते इति तपनः अथवा तपति कामादीनिति तपनः यद्वा तापयति कर्मादिकपापानिति तपनः तनोति धर्ममिति तनयः तपनश्चासौ तनयश्चेति तपनतनयः परमैश्वर्यसम्पन्नधर्मप्रवर्त्तकः सह सेनया अग्रेसहः एति स्वामिनं यया सा इना शासनपद्धतिः तया सहिता इति सेना तया अग्रेसहः शासनपद्धतिमनुसृत्याग्रेसरः करटिघटनाटोपारोपात् करोति शब्दमिति करटः करट एव करटी "स्वार्थे इन्" तस्य या घटना आयोजना तस्या आटोप आडम्बरः तस्य आरोपात् अस्य

शाब्दिकायोजनाडम्बराध्यवसायतः जयाश्रयः कर्मादिकपायजयाश्रयः गन्धर्वाणां स्वाधिष्ठायकदेवयोनिविशेषाणाम् स्मरध्वजगर्जितैः वसायात् वाद्यशब्दविशेषैः सधन्वभटैः धनुषा सह वर्त्तते यः स सधन्वा स चासौ भटश्चेति सधन्वभटैः सकोदण्डयोधैरिव श्रिया कान्त्या हरेः सूर्यस्य तनुजवत् सूर्यतनुजं यत्तेजस्तद्वत् यद्वा हरेश्चन्द्रस्य तनुजवत् चन्द्रकान्तिवत् असहनजनक्षोभम् तेजः सहनासमर्थ-जनचाञ्चल्यम् तन्वन् विस्तारयन् जिनेन्द्रः प्रभुः इयाय परिवव्राज ॥

रामपक्षे—तस्यापि ततोऽपि सेनया सह स्वसैन्ययुक्तः अग्रेसहः अग्रगामी जयाश्रयः जयम् संग्रामविजयम् आश्रयतीति जया-श्रयः करटिघटनाटोपात् करटिनो गजस्य या घटना योजना तस्या आटोपो गर्वः तस्य आरोपात् अध्यवसायात् गजसन्निभवानरसैन्य-समुदायात् सधन्वभटैः सकोदण्डसैन्यैः स्मरध्वजगर्जितैः स्मरध्वजानाम् वाद्यानाम् " वाद्यं वादित्रमातोद्यं तूर्यं तूरं स्मरध्वजः इति हैमः" गर्जितैः कोलाहलैः हरितनुजवत् इन्द्रपुत्रवत् वालीव तपनतनयः सूर्यपुत्रः सुग्रीवः असहनजनस्य शत्रुजनस्य क्षोभम् वैकल्यम् तन्वन् प्रथयन् गन्धर्वाणां च क्षोभम् रावणसहायार्थमागतानां दैवयोनिविशेषाणां च क्षोभम् चाञ्चल्यम् तन्वन् विस्तारयन् इयाय संग्रामाभिमुखम् प्रससार ॥ २ ॥

कृष्णपक्षे—तापयति शत्रूनिति तपनः तनोति स्वकीयवैभवमिति तनयस्तयोः कर्मधारयः शत्रुतापकारकैश्वर्यवान् अथवा तप्यते लोकोत्तरशरीरशोभामश्नुते इति तपनो वसुदेवस्तस्य तनयः पुत्रः कृष्णः सेनया यादवसेनयाग्रेसहः अग्रगः करटिनां गजानां घटना सैन्यसंमेलना तस्या आटोपस्याडम्बरस्य आरोपादध्यवसायात् विजयाश्रयः विजयाभिलाषुकः स्मरध्वजगर्जितैः वाद्यशब्दैः सधन्वभटैः

कोदण्डकाण्डकम्पितमन्यः गन्धर्वाणां असहनजनक्षोभं शत्रुजनवैमनस्यं तन्वन् श्रिया कान्त्या हरितनुजवत् सूर्य इव इयाय चचाल तथा तनतनयः सूर्यपुत्रः कर्णः जयाश्रयः जयश्रिजयम् अर्जुनम् आश्रयति युद्धाय सम्मुखीनं करोतीति तथा हरितनुजवत् वालीव इयाय समामात्रां ययौ अन्यद्विशेषणं पूर्ववद्योज्यमित्यर्थः ॥ २ ॥

अनुदिशमपि ध्यायन्नन्तर्दशाननसंगमं, दिनमुदयिनं भानुं कर्णे निधाय विचारयन् ।
करिशिरसि च न्यस्तं हस्तं तथेन्द्रजिता समं, नयनविषयीकुर्वन् गुर्वीं पुरः सुरवाहिनीम् ॥ ३ ॥

अन्वयः—अनुदिशम् प्रतिदिशम् दशाननसंगमम् ध्यायन् दिनमुदयिनम् भानु कर्णे निधाय विचारयन् तथा इन्द्रजिता समम् करिशिरसि च न्यस्तं हस्तं पुरः गुर्वीम् सुरवाहिनीं नयनविषयीकुर्वन् अगमदिति पूर्वेणान्वयः ॥ ३ ॥

व्याख्या—अनुदिशम् प्रतिदिशम् दशाननसंगमम् ध्यायन् दश इन्द्रियाणि आनयति तोषयतीति दशाननम् ज्ञानम् वस्तुतत्त्वम् अन्तर्मनसि ध्यायन् विचारयन् उपयुञ्जन् कथंभूतम् दशाननसंगमम् दिनम् द्यति पापम् कर्म वा इति दिनम् उदयिनम् प्राप्तोदयम् भानुम् प्रत्यक्षाप्रत्यक्षविषयप्रकाशकम् कर्णे निधाय शब्दं श्रुत्वा विचारयन् तत्तद्वस्तुसत्ताविचारपरः यद्वा करो राजप्राप्यां शोऽस्या-स्तीति करी नृपः "बलिहस्तांशवः करा इत्यमरः" तस्य करिणो नृपस्य शिरसि न्यस्तम् मूर्ध्नि स्थापितम् धर्ममित्यर्थः नृपस्य धर्ममूल-त्वात् कर्णे निधाय विचारयन् तत्त्वनिर्णयं कुर्वन् तथा इन्द्रजिता समम् इन्द्रम् परमैश्वर्यसम्पन्नमपि जयतीति इन्द्रजित् साधुः, निस्पृ-हत्वे गुणाज्जयदिति तेन समम् अथवा इन्द्रजिदसुरस्तेन असमम् असुरसंगतिरहितम् पुरः अग्रे गुर्वीम् गरीयसीम् सुरवाहिनीम् देवसंह-तिम् नयनविषयीकुर्वन् नेत्रगोचरं कुर्वन् अगमदिति पूर्वश्लोकेनान्वयः ॥

श्रीरामपक्षे—अनुदिशम् प्रतिदिशम् अन्तर्हृदये दशाननसंगमम् रावणसन्निधानम् ध्यायन् विचारयन् उदयिनम् अचिरराज्य-प्राप्त्या प्राप्तोदयम् भानुम् सूर्यतनयम् "अपत्यप्रत्ययस्य लुक्" अथवा भातीति भानुस्तम् सुग्रीवम् कर्णे निधाय कर्णसमीपं नीत्वा "सामीप्ये सप्तमी" विचारयन् किमपि चिन्तयन् रामः करिशिरसि हस्तिमस्तके न्यस्तं स्थापितं हस्तम् इन्द्रजिता मेघनादेन समम् सार्धम् गुर्वीम् गरीयसीम् सुरवाहिनीम् सुरति ऐश्वर्यदीप्तिम् प्राप्नोतीति सुरः राक्षसः तस्य वाहिनीम् सेनाम् नयनविषयीकुर्वन् अवलोकयन् अगमदिति पूर्वश्लोकेनान्वयः ॥

कृष्णपक्षे—अनुदिशम् प्रतिदिशम् दशाननस्य कामस्य प्रद्युम्नस्येत्यर्थः संगतिम् संगम् ध्यायन् विचारयन् उदयिनम् प्राप्तोदयम् भानुं तदभिधानम् कञ्चिन्नृपम् कर्णे निधाय कर्णसमीपन्नीत्वा विचारयन् रहो मंत्रयन् कार्यजातमिति शेषः करिशिरसि न्यस्तं स्थापितम् हस्तम् इन्द्रजिता ऐश्वर्येण महेन्द्रमपि पराभवता नृपेण समम् सार्धम् पुरः अग्रे गुर्वीम् महीयसीम् सुरवाहिनीम् दैत्यसैन्यम् राजसैन्यम्वा नयनविषयीकुर्वन् पश्यन् अगमत् इयाय ॥ ३ ॥

मारीचः समयः स सुन्दरविधिः श्रीमेघनादोऽप्यगा—च्चन्द्रोऽर्कः प्रथितः प्रहस्तकथितः कामाक्षनामा-शुको(कः)।
गम्भीरो मकरध्वजः कमलभूः कान्त्या(पिना?)शारणो, बीभत्सः प्रबलायुधैः क्षितिभृतोऽन्येऽपीयुरुत्साहसाः॥४॥

अन्वयः—मारीचः समयः सुन्दरविधि. सः श्रीमेघनादः चन्द्रः अर्कः प्रथितः प्रहस्तकथितः कामाक्षनामा शुकः गंभीरः कान्त्या कमलभूः मकरध्वजः शारणो ना बीभत्सः प्रबलायुधैः अगात् अन्येऽपि उत्साहसाः क्षितिभृतः ईयु ॥ ४ ॥

व्याख्या—मारीचः ताडकेयः समयः समयनामा स प्रसिद्धः सुन्दरविधिः तदाख्यः यद्वा सुन्दरो विधिः अनुष्ठानं आभिचारिकं यस्य स श्रीमेघनादः रावणज्येष्ठतनयः चन्द्रः चन्द्रज्वलननामा रावणिः अर्कः अर्कप्रभः प्रथितः प्रसिद्धः प्रसस्त इति नाम्नाख्यातः रावणमातामहः प्रधानमंत्री कामाक्षनामा कामाक्षेत्यभिधेयः रावणतनुजः शुकः राज्ञः प्रणिधिः गंभीरः मकरध्वजः यः कान्त्या कमनीयतया कमलभूः चतुराननसन्निभः शारणः रावणचरः बीभत्सः प्रबलायुधैः महदस्त्रशस्त्रैः सह रामरावणयुद्धे अगात् योद्धुमगमत् अन्येऽपि क्षितिभृतः रावणसहायकनृपाः उत्साहसाः युद्धोत्साहस्थायिभावभावितान्तःकरणाः ईयुः समाजग्मुः इति रामपक्षे।

तीर्थङ्करपक्षे—यथायथं विशेषणविशिष्टाः मुनीन्द्रा नरेन्द्रा देवेन्द्राश्च समीयुः इति अवसेयम् ॥ ४ ॥

शार्दूलविक्रीडितम् छन्दः।

जातातपस्य वलिता ललिता दिनस्य, श्रीर्नातिशीतमधुरा मधुराङ्गभाजाम्।
आपानमप्युपवने पवनेरितेषु, यूनां द्रुमेषु चरणाद् रमणान्मयूनाम् ॥ ५ ॥

अन्वयः—जातातपस्य दिनस्य वलिताललिताश्रीः मधुरांगभाजाम् नातिशीतमधुरा जाता पवनेरितेषु द्रुमेषु मयूना चरणात् यूनां रमणात् आपानमपि मधुरं जातम् ॥ ५ ॥

व्याख्या—अत्र सर्गे "नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते" इति साहित्यदर्पणधृतमहाकाव्यलक्षणान्नानावृत्तयः किञ्च प्रातर्मध्याह्नमृगयाशैलर्तुवनसागराः वर्णनीया इत्यपि तत्रत्यवचनादृतुवर्णनं सर्वसाधारणतया कविः प्रस्तौति जातेति—जातातपस्य

जाततापस्य अह्नः बलिता ओजस्विता ललिता मनोहरा अथ च आतपस्य रौद्रस्य बलिता बलस्य भावः बलिता सामर्थ्यम् जाता अपगता निवृत्तत्यर्थः सर्वसहिष्णुत्वात् दिनश्रीः दिनशोभा मधुरांगभाजाम् सुकुमारशरीराणाम् नातिशीतमधुरा अधिकशीताभावात् मधुरा मनोज्ञा अथ च अङ्गभाजां शरीरिणाम् मधुरा सेवनयोग्या उपवने उद्याने पवनेरितेषु पवनवीजितेषु द्रुमेषु पादपेषु च रणाद्विचरणात् मधूनाम् मृगानाम् यूना–तरुणानाम् रमणाद्विहारात् आपानमपि पानगोष्ठी अपि मधुरमिति शेषः मधुःस्यात्किन्नरे मृगे इति शब्दस्तोममहानिधिः ॥ ५ ॥ यमकालङ्कारः ॥

अत्र सर्गे इत आरभ्य एकविंशतिश्लोकपर्यन्त वसन्ततिलकं वृत्तम् तल्लक्षणञ्चज्ञेयं वसन्ततिलकं तभजा जगौग इति ॥

सा फाल्गुनस्य यशसां जगति प्रशस्तिः, प्रादुर्बभूव महसा जितसौरभासः ।
मन्ये तदर्कतनुजन्मविभाविनोद–स्तत्याज मौढ्यमचिरान्न तथा प्रसह्य ॥ ६ ॥

अन्वयः—महसा जितसौरभासः फाल्गुनस्य जगति यशसा प्रशस्तिः प्रादूर्बभूव तत् अर्कतनुजन्मविभाविनोद अचिरान्मौढ्यम् तत्याज तथा प्रसह्य न इत्यहम्मन्ये ॥ ६ ॥

व्याख्या—महसा जितसौरभासः महसा तेजसा जिता लब्धासौरस्य सूर्यसम्बन्धिनः भा कान्तिर्येन तस्य जितसौरभासः प्राप्तसूर्यकान्तेः यद्वा महसा स्वकीयतेजसा जिता पराभूता सौरभा सूर्यप्रभा येन स जितसौरभाः तस्य जितसौरभासः अथवा महसाजितसौरभासः अप्राप्तसूर्यरुचेः फाल्गुनस्य तपस्यस्य यशसां कीर्त्तीनां प्रशस्तिः प्रशंसा प्रादुर्बभूव समुत्पेदे तत् अर्कतनुजन्मविभाविनोदः

सूयाज्ञया शुद्धैषणादिविधिना शुद्धः उत्तेजितः य एषणः बाणः स आदिर्यस्य विधेः तेन मदनहेतुकतीक्ष्णबाणादिविधानेन उच्चैः अतिशयम् सुरवृष्टिः सुष्ठु राजन्ते शोभन्ते इति सुराः पुष्पाणि तेषाम्वृष्टिर्वर्षणं सृष्टिः मुक्तानुयुक्तकरणैः मुक्ता विकसिता अनुयुक्ता विकाशोन्मुखाः तेषां करणैर्विधानैः जनयाम्बभूवे विरचयामासे वसन्ते कामस्य बाणाय पुष्पाणि सज्ज्यन्ते ॥

अन्यपक्षे—सिद्धोपदेशवचसा सिद्धानां केषांचित् त्रिकालज्ञानवताम् यत् उपदेशवचः तेन कृतकर्णभेदम् कृतः विहितः कर्णस्य भूपतेर्भेदः छेदो येन तत् श्वेताश्ववाहनबलम् श्वेताश्ववाहनस्य अर्जुनस्य बलम् सैन्यम् स्वनृपानुमत्या अर्जुनाज्ञया शुद्धैषणादिविधिना शुद्धस्तीक्ष्णीकृतः य एषणः बाणः स आदिर्यस्य स नितान्तोत्तेजितबाणादिः तस्य विधिना विधानेन मुक्तानुयुक्तकरणैः मुक्ताः शत्रौ प्रक्षिप्ताः अनुयुक्ताः मोचनाय तूणिरान्निष्कासिताः तेषां करणैर्विधानैः सुरवृष्टिः सुन्वन्ति विपक्षान् पीडयन्तीति सुराः बाणाः तेषाम् वृष्टिर्वषणम् उच्चैः अतिशयम् जनयांबभूवे उत्पादयामासे ॥ ७ ॥

एषणो लौहमये बाणे इति शब्दस्तो० श्लेषः ॥

सीतापहारविधिरेष तवोपहार—व्याहारनिर्भयविहारविनाशनाय ।
तेनाधुनापि मधुनाशनतां जहीही—त्याहेव रावणमिह स्वधियालिजन्यम् ॥ ८ ॥

अन्वयः—एष सीतापहारविधि तवोपहारव्याहारनिर्भयविहारविनाशनाय तेन अधुनापि मधुनाशनताम् जहीहि इति अलिजन्यम् स्वधिया इह रवणाम् आह इव ॥ ८ ॥

व्याख्या—सीतापहारविधिः सीतायाः मदिरायाः " सीता लांगलपद्धतौ जनकदुहितरि लक्ष्म्यां मदिरायामुमायां चेति शब्दार्णवः" अपहारविधिः परित्यागविधिः तत्र उपहारव्याहारनिर्भयविहारविनाशनाय स्वच्छन्दत इतस्ततोगमनागमननिर्भयविहारविनाशनाय तेन अधुनापि इदानीमपि मधुनाशनताम् मद्यप्रधानभोजशीलताम् जहीहि परित्यज इति रावणम् रावयति लोकमिति रावणस्तम् मद्यजनितविभ्रान्तवचनम् इह वसन्तसमये स्वधिया स्वमत्या अलिजन्यम् भ्रमरनादः भ्रमराणाम्परस्परशब्दः आहेव उवाचेव "जन्यंस्याज्जनवादेऽपीत्यमरः" अत्र क्रियागतोत्प्रेक्षालंकारः ॥

अन्यच्च एष सीतापहारविधिः सीतायाः जानक्या अपहारविधिः अपहरणव्यापारः तत्र सर्वैश्वर्यसम्पन्नस्यापि रावणस्य उपहारव्याहारनिर्भयविहारविनाशनाय उपहाराणाम् उपढौकनानाम् व्याहाराणान्निर्भयवचनानाम् निर्भयविहाराणाम् क्रीडाविशेषाणाम् विनाशनाय निवृत्तः तेन तद्धेतुना अधुनापि इदानीमपि मधुनाशनताम् मधुप्रधानभोजनताम् मद्यपानमित्यर्थः यद्वा मधुना तदभिधानेन राक्षसेन सह संगताम् सवन्धताम् अथवा मधुना कुम्भनसीभर्त्रा सह असनतामुपवेशनताम् तेन संगतिम् जहीहि परित्यज इत्थमेवम् अलिजन्यम् भ्रमरनादः अथवा बलेः काकस्य जन्यम् युद्धम् स्वधिया स्वबुद्ध्या इह समये आह इव कथयतीवेत्यर्थः ॥ ८ ॥ श्लेषः ।

व्यर्था सपक्षरुचिरम्बुजसंधिवन्धे, राज्ञा न दर्शनमिहास्तगतिश्च मित्रे ।

किं किं करोति न मधु-व्यसनं च देवा–दस्माद्विचार्य कुरु सज्जन ! तन्निवृत्तिम् ॥ ९ ॥

अन्वय·—अम्बुजसधिबन्धे सपक्षरुचिः व्यर्था इह राज्ञो न दर्शनम् मित्रे अस्तगतिश्च दैवात् मधु-व्यसनम् किम् किम् न करोति अस्मात् विचार्य हे सज्जन ! तन्निवृत्तिम् कुरु ॥ ९ ॥

व्याख्या—राज्ञः चन्द्रस्य भूपस्य च मधुव्यसनम् वसन्तसंगमम् मद्यपानव्यसनं किं किन्न करोति सर्वमपि करोति तथाहि इह मधुप्रवृत्तौ सपक्षे पक्षसहिते पतत्रिणि कोकिले रुचिः प्रीतिः कोकिले दृढा प्रीतिर्भवतीति भावः अथ च सपक्षे तुल्यरूपे सूर्ये रुचिः विशेषकान्तिः, यद्वा सपक्षे बाणे मृगयार्थे बाणसंधाने रुचिः, अम्बुजसन्धिबन्धे अम्बुजस्य सरसिजस्य सन्धिबन्धे संकोचे मुकुलतायाम् सपक्षरुचिः समानोदरप्रीतिः व्यर्था समानोदरप्रेम नैव भवति दर्शनमपि न भवति तत्र गगनस्य धूलिधूसरत्वान्न चन्द्रदर्शनं भवतीत्यर्थः मित्रे सति अस्तगमनम् सूर्योदयेऽस्तमितिः दैवात् भवति अस्मात् उक्ताद्धेतोः हे सज्जन ! सत्पुरुष ! विचार्य प्रभावशालिनि राज्ञि यद्येवविधा प्रवृत्तिस्तदाऽस्मदादीनां का कथेति निरुप्य तन्निवृत्तिम् मधुनिवृत्तिम् मद्यव्यसननिरोधं कुरु विधेहि ॥ अत्र प्रस्तुतस्य राज्ञश्चन्द्रमसोऽप्रस्तुतेन केनचिद्राज्ञा सह समानधर्माभिनिवेशात् दीपकालंकारः ॥ ९ ॥

दीप्त्या मधोः प्रतिहरेश्चलचक्ररूप–व्यूहे धरासु-तनयोद्धरणप्रसिद्धेः ।
चक्रं सुदर्शनमजायत माधवस्य, तज्ज्योतिषामुदयतः परिपन्थिभित्त्यै ॥ १० ॥

अन्वयः—प्रतिहरेः मधोः दीप्त्या चलचक्ररूपे व्यूहे धरासुतनयोद्धरणप्रसिद्धे. तज्ज्योतिषामुदयतः परिपन्थिभित्त्यै माधवस्य सुदर्शनं चक्रं अजायत ॥१०॥

व्याख्या—प्रतिहरेः हरेर्माधवात् वैशाखात् प्रति पूर्वम् मधोश्चैत्रस्य दीप्त्या प्रभावेन धरासु भूमिषु चलचक्ररूपव्यूहे चलति सात-

ञ्जेनेति नलो वायुः महागतिन्वात् तस्य चक्ररूपे घूर्णनरूपे व्यूहे समूहे चक्रवाते वात्यायामित्यर्थः तनयोद्धरणप्रसिद्धेः तन्यते विस्तार्यते इति तनयो रजः धूली तस्योद्धरणं निराकरणम् तत्र प्रसिद्धिः ख्यातिर्यस्य तस्मात् तदनन्तरम् परिपन्थिभिरयै परिपन्थिनाम् व्यापानकानां शीतानाम् भिदयै विनाशनाय माधवस्य वैशाखस्य तज्ज्योतिषामुदयतः तत् कान्तीनाम् प्रादुर्भावतः सुदर्शनम् सुन्दरावलोकनम् चक्रम् समूहम् कान्तिसमूहम् अजायत उद्भवत ॥ श्लेषः ।

अन्यत्र प्रतिहरः प्रतिवासुदेवस्य जरासंधस्य चलचक्ररूपव्यूहे चक्रव्यूहरूपयुद्धसंस्थानविशेषे मघोः मघस्य दीप्त्या आतिशय्येन पराभूतनयस्य जरासंधस्य उद्धरणम् उच्छेदनम् तस्य प्रसिद्धेः ख्यातेः ज्योतिषाम् तेजसाम् उदयतः प्रादुर्भावात् परिपन्थिभिदयै शत्रुभेदनाय माधवस्य कृष्णस्य सुदर्शनम् सुदर्शननामक चक्रम् चक्रास्त्रम् अजायत अभवत् उपपद्यत इति यावत् ॥ १० ॥

दुर्योधनान्तकरणं धरणं क्षमाया, भीतस्य तस्य ननु पश्यत एव पुंसः ।
इष्टा तपोवनकथा जिनसेवना वा, नावाधिरुह्य यदिवाम्बुधिमज्जना वा ॥ ११ ॥

अन्वय.—दुर्योधनान्तकरणम् क्षमाया धरणम् भीतस्य तस्य पुंस पश्यत एव तपोवनकथा वा जिनसेवना नावाधिरुह्य अम्बुधिमज्जना वा इष्टा ॥ ११ ॥

व्याख्या—दुर्योधनान्तकरणम् दुःखेन युध्यते सह्यते इति दुर्योधनः शीतम् हिममित्यर्थः तस्य अन्तकरणम् विनाशकारकम् क्षमायाः पृथिव्या आश्रयणम् ग्रीष्मबाहुल्यात् भूमिशय्याश्रयणम् कस्येत्याकांक्षायामाह भीतस्येति भीतस्य ग्रीष्मतापपरितप्तस्य, नन्विति

संबोधने पश्यत एव शीतलस्थानमन्विष्यत एव पुंसो, जनस्य तपोवनकथा तपोवनस्य विपिनस्य कथा इष्टा गता "इष्यतेः क्तः" केपि तपोवनचर्चा न कुर्वन्ति दावाग्निबाहुल्यात् वा अजिनसेवना मृगचर्मसेवना वा इष्टा गता तस्य ग्रीष्मजनकत्वात् "त्वक्छविश्छादनी-कृत्तिश्चर्माजिनमसृग्धरेति हैमः" अथ च नावा नौकायामुपविश्य अम्बुधिमज्जना समुद्रजलश्लेषणा जलाशयजलावगाहना इष्टा अभिलषिता तापबाहुल्याज्जनानां जलावगाहनाभिलाषो जात इति भावः ॥

अन्यार्थे भीतस्य संसाराद्विरक्तस्य पुंसः पश्यत एव लोकममक्षमेव दुर्योधनान्तकरणम् दुर्योधनस्य कामस्य दुर्योधनस्य धार्त्तराष्ट्रस्य अन्तकरणम् विनाशनम् क्षमायाः शान्तेः धरणम् अथ च दुर्योधनान्तकरणेन क्षमायाः पृथिव्याः धरणम् आश्रयणम् इष्टम् तस्य तपोवनकथा तपोवनगमनम् वा अथवा जिनसेवना–जिनेद्रभक्तिः इष्टा–आशंसिता, वा अथवा नावाधिरुह्य नौकाधिष्ठितः अम्बुधिमज्जना समुद्रपातो वा इष्टा अभिलषिता कर्त्तव्यत्वेन निर्धारितेत्यर्थः ॥ ११ ॥

दुःशासनस्य पुरशासनजन्मनैव, संप्रापितोऽध्वनियमो विघटोत्कटत्वात् ।
अन्येऽभिमन्युजयिनो गुरुगौरवार्हा–स्ते कौरवा अपि कृता हतचौरवाचः ॥ १२ ॥

अन्वयः—पुरशासनजन्मनैव विघटोत्कटत्वात् दुःशासनस्य अध्वनियमः सप्रापित. अन्ये अभिमन्युजयिनः गुरुगौरवार्हा ते कौरवा अपि हतचौरवाचः कृता· ॥ १२ ॥

व्याख्या—पुरशासनजन्मनैव पुरम् कुसुमदलवृत्तिम् शास्ति विघटयतीति पुरशासनो वसन्तः "पुरम् देहे गेहे कुसुमदलवृत्तौ

चर्मणि प्रतानग्रामे इति शब्दस्तोममहानिधिः, तस्य जन्म उदयस्तेन दुःशासनस्य दुःखेन शास्यते सह्यते इति दुःशासनम् हिमम्, तस्य विघटोत्कटत्वात् विघटे विनाशे उत्कटत्वात् उच्छृङ्खलत्वात् अध्वनः मार्गस्य नियमः गमनप्रतिबन्धः संप्रापितः समासः मधुमासे गमनस्य प्रशमनत्वात् गमननिरोधो निवारितः अन्ये अभिमन्युजयिनः अभिमन्यन्ते प्रशंसन्ते जनैरिति अभिमन्यवः जात्यादिकुसुमविशेषाः ते च ते जयिनश्चेति अभिमन्युजयिनः प्रशस्ततराः जातीयकुसुमानि गुरुर्महान् यो गौरवः गरीयस्त्वम् तदर्हा तद्योग्याः को पूर्णन्यायाम् रताः प्रसिद्धाः ते हतचौरवाचः कृताः हताः निवृत्ताः चौरवाचः एकान्तस्मरणानि येषान्ते कृता तेषान्नामापि कैरपि न गृह्यन इति भावः न स्याज्जातीयवसन्ते इति साहित्यदर्पणस्मरणात् ॥ १२ ॥

अन्यार्थे पुरशासनजन्मनेव पुरम् शरीरम् शास्ति कार्ये प्रवर्त्तयतीति पुरशासनो वायुः तस्माज्जन्म यस्य तेन भीमसेनेन यद्वा पुरं तन्नामकमसुरविशेषं शास्ति हिनस्तीति पुरशासनः पुरन्दरः ततो जन्मयस्य तेन अर्जुनेन विघटोत्कटत्वात् वि-विपरीतम् विरुद्धं वा घटयत्याचरतीति विघटः विरुद्धाचारः द्रौपदी चीराद्याकर्षकत्वादित्यर्थः तेन उत्कटः उग्रः उल्वणः विघटोत्कटस्तस्यभावस्तत्त्वम् तस्मात् विरुद्धोल्वणाचारत्वात् दुःशासनस्य तदभिधानकौरवस्य अध्वनियमः अध्वनो मार्गस्य नियमः अन्तः, अतः परङ्गन्तव्यन्न वर्त्तते इति निश्चयः महाप्रस्थानमित्यर्थः संप्रापितः उपलम्भितः तथा अन्ये ततो भिन्नाः अभिमन्युजयिनः अभिमन्युपराजयकारकाः गुरुगौरवार्हाः गुरवो द्रोणाचार्यप्रभृतयः गौरवार्हाः स्ववंशोद्भवत्वेन गुरुत्वमाप्ता भीष्मादयः ते च ते गुरुगौरवार्हा ते प्रसिद्धाः कौरवाश्च हतचौरवाचः हताः विनष्टाः चौराः चोरिताः वाचः येषां ते कृता विनष्टमुखवचनाः कृताः तेऽपि मृता अप्रशंसार्हाश्च जाता इति भावः ॥ १२ ॥ श्लेषः ।

तत्रार्कभूः समुदितो भटकोटियोद्धा, रोद्धाऽपहस्तयति हस्तिशतं स्वतन्त्रः ।
बाणप्रकर्षपिहिताम्बरदिग्विधानः, स्वर्गेशनन्दनजयेन कृताभिमानः ॥ १३ ॥

अन्वय —तत्र अर्कभूः समुदितः भटकोटियोद्धा रोद्धा स्वतत्र. हस्तिशतम् अपहस्तयति बाणप्रकर्षपिहिताम्बरदिग्विधान. स्वर्गेशनन्दनजयेन कृताभिमानः ॥ १३ ॥

व्याख्या—तत्र ऋतुप्रसंगे अर्कभूः अर्कात् सूर्याद्भवतीत्यर्कभूः राधेयः वैशाखः "वैशाखे माधवो राध इत्यमरः" यद्वा अर्कभूः अर्कस्य पुष्पविशेषस्य भूरुत्पत्तिस्थानमिति " आकडा " इतिख्यातस्येत्यर्थः तत्र तस्य प्रभूतत्वात् "अर्काह्ववसुकास्फोटगणरूपविकीरणा इत्यमरः" वैशाखमासः समुदितः ऋतुप्रसंगेन प्राप्तः भटकोटियोद्धा भटन्ति हिमं धारयन्तीति भटा हिमधारका तेषां कोटिः भटकोटिः तं योधयतीति भटकोटियोद्धा हिमनाशकः "वैशाखे नरवानरावित्यभियुक्तोक्तेः" रोद्धा अत एव हिमरोद्धा निवर्त्तकः स्वतंत्रः स्वाधीनः हस्तिशतम् हस्तो हस्तनक्षत्रमस्मिन्नस्तीति, हस्ती हस्तः अश्विन्यादित्रयोदशनक्षत्रम् "हस्तः देहावयवभेदे, हस्तिशुण्डे, अश्विन्यादि त्रयोदशनक्षत्रे, इति शब्दस्तोममहानिधिः" तद्वान् अश्विन्याम्मेषेरविर्यदा भवति तत एव नक्षत्रप्रवृतिरिति नक्षत्रप्रवर्त्तकत्वेनेति भावः तेषां शतम् अपहस्तयति प्रवर्त्तयति बाणानाम् वनवह्नीनाम् "बाणः शरे वह्नौ गवांस्तने दैत्यभेदे इति शब्दस्तोममहानिधिः" प्रकर्षेण प्राबल्येन पिहित आच्छादितः अन्धकारीकृतः दिग्विधानः दिग्विभागो येन स बाणप्रकर्षपिहिताम्बरदिग्विधानः, स्वर्गेशनन्दनजयेन कृताभिमानः स्वर्गेश इन्द्रः तन्नन्दयतीति स्वर्गेशनन्दनो वायुः तस्य जयः उत्कर्षप्राप्तिस्तेन कृताभिमानः कृतगौरवः, वैशाखे वायोः प्राबल्येन वैशाखस्य गर्विष्ठतेति भावः ॥

अन्यत्र अर्कभूः अर्कात् सूर्यात् भवतीत्यर्कभूः कर्णः समुदितः प्राप्तोदयः भटकोटियोद्धा भटानाम् योद्धृणाम् " भटा योधाश्च योद्धार इत्यमरः" कोटिः भटकोटिस्तं योधयतीति तथा, रोद्धा विपक्षाणां रोधनकर्त्ता स्वतन्त्रः स्वाधीनः हस्तिशतम् गजशतम् अपहस्तयति गन्धहस्तिकान्ददाति, बाणानाम् शराणाम् प्रकर्षणमाकर्षणम् तेन पिहितम् आच्छादितम् दिग्विधानम् दिग्विभागो येन स बाणप्रकर्षपिहिताम्बरदिग्विधानः स्वर्गेशः इन्द्रः तस्य नन्दनोऽर्जुनः, तस्य जयेन विजयेन कृताभिमानः कृतगर्व इति स्वर्गेशनन्दनजयेन कृताभिमानः अभूदिति शेषः ॥ १३ ॥

अथ च । अर्कभूः अर्कः इन्द्रः " अर्कः सूर्ये इन्द्रे ताम्रे स्फटिके विष्णौ पण्डिते चेति शब्दस्तोममहानिधिः " तस्मात् भवतीति अर्कभूः अर्जुनः अन्यद्विशेषणम् पूर्ववद्योज्यम् स्वर्गेशनन्दनजयेन कृताभिमानः स्वर्गस्य ईशः स्वर्गेशः इन्द्रः तस्य नन्दनः इति स्वर्गेशनन्दनः, जयति शत्रूनिति जयः स्वर्गेशनन्दनश्चासौ जयश्चेति स्वर्गेशनन्दनजयः तेन कृताभिमानः कृताहंकारः अहं महेन्द्रपुत्रः जयी नेति कृतगर्व इत्यभिप्रायः ॥ १३ ॥ श्लेषः ।

तत्रोद्बभूव सुरभिः सुरभित्प्रसङ्गी, पद्मप्रबोधविधिना भुवनानुरागी ।
चक्रे निशाचरबलक्षयतो वियोगं, भिन्दन् शिलीमुखबहुप्रसरोपयोगात् ॥ १४ ॥

भाषा —तत्र सुरभित्प्रसङ्गी पद्मप्रबोधविधिना भुवनानुरागी सुरभि उद्बभूव, शिलीमुखबहुप्रसरोपयोगात् भिन्दन् निशाचरबलक्षयत. वियोगम् चक्रे ॥ १४ ॥

१ पद्मप्रबोधात् भुवनानुरागाम् ।

व्याख्या—तत्र ऋतुप्रसंगे सुरभृत्प्रसंगी सुरैर्देवैर्भ्रियते धार्यते इति सुरभृत् कुसुमम् तस्य प्रसङ्गः सम्बन्धो यत्र स सुरभृत्प्रसङ्गी पुष्पसमृद्धिसमृद्धः, सुरभिः वसन्तः "वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म उष्मक इत्यमरः" उद्भभूव उपाययौ कथभूतः पद्मप्रबोधविधिना पद्मस्य कमलस्य यः प्रबोधविधिः विकाशविधिः, तेन भुवनानुरागी भुवनस्य कृत्स्नस्य जनस्य अनुरागः प्रेम यस्मिन् स भुवनानुरागी, सकलजनानुरागभाजनः शिलीमुखबहुप्रसरोपयोगात् शिलीमुखानाम् भ्रमराणाम् ''मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखावित्यमरः" बहुप्रसरस्य बहुसंगस्य यः प्रसरः संबन्धः तस्य उपयोगात् आयोजनात् निशाचरबलक्षयतः निशाचरस्य चन्द्रस्य बल क्षयतः दौर्बल्यात् वियोगम् कमलभ्रमरवियोगम् भिन्दन् छिन्दन् निशाचराणाम् घूकपक्षिणाम् बलक्षयतः बलविनाशात् वियोगम् वीनाम् कोकिलविहगानाम् योगम् सम्बन्धम् चक्रे विदधे, पेचकानां वायसारातित्वात् काकपिकयोः साम्यात् घूकबलक्षयात् कोकिलसम्बन्ध इति भावः "निशाचरबिलक्षयतो वियोगम्" इति पाठांतरे. निशाचराणाम् सर्पाणाम् "निशाचरः राक्षसे पिशाचे शृगाले पेचके सर्पे चक्रवाके चौरे इति शब्दस्तोममहानिधिः" बिलक्षयतः बिलानाम् विवराणाम् क्षयतः वसन्ते पतितपर्णैस्तद्बिलाच्छादनेन बिलक्षयः सुतराम् वियोगः विवरवियोगो भवतीति भावः यद्वा वियोगः वीनां पक्षिणा योगः सम्बन्धः वहिः पक्षिणोऽहीनुल्लुण्ठयन्तीति प्रसिद्धिः ॥ १४ ॥

अन्यत्र सुरमैश्वर्यम्बिभर्त्तीति सुरभृत् राजा तत्र प्रसङ्गः प्रचारो यस्य सुरभृत्प्रसंगी राजजनप्रबोधकः पद्मे रामे आत्मज्ञाने आत्मानन्दे "आनन्दो नन्दनः पद्मो राम इत्यभिधानचिन्तामणिः" यो बोधः ज्ञानम् ईश्वरविषयकबोधः तस्य विधिर्विधानम् तेन भुवनानुरागी

भुवनस्य जगतः अनुरागः गुरुत्वप्रेम यस्मिन् स यद्वा भुवनस्य अनुरागो वात्सल्यं यस्य स अथवा पद्मप्रबोधविधिना आत्मज्ञानेन भुवनानुरागी संसारविरक्तः "सुरभिर्विद्वान् सुरभिः स्वर्णं सुन्दरे चम्पके चैत्रमासि पण्डिते धीरे इति शब्दस्तोममहानिधिः" उद्भूत [illegible] विदितुने इति यावत् निशाचरबलक्षयतः निशा तमः तत्र चरतीति निशाचरः अज्ञानम् तस्य बलक्षयतः अज्ञानप्रसरविनाशात् वियोगम् विज्ञानमिति शब्द० म० तस्य योगः सम्बन्धः अज्ञाननाशाद्विज्ञानयोगः तं चक्रे विदधौ शिलीमुखबहुप्रसरोपयोगात् शिलीमुखानाम् जडानाम् शिलीमुखो जडीभूत इति शब्द० म० बहुप्रसरस्य अधिकसंबन्धस्य उपयोगात् लाभात् वियोगम् परिभवम् भिन्दन् अपसारयन् वियोगम् शुद्धयोगम् चक्रे विदधे ॥ १४ ॥

यत्रार्कसूतिरभवद्वहुलातपश्री–रामाभियोगकलया विलयात् शुकादेः ।
आमोदमोदकरसाद्वशाशनेन, चित्रातिशायिनि विधौ परशासनेन ॥ १५ ॥

अन्वय.—बहुलातपश्रीः रामाभियोगकलया शुकादेः विलयात् आमोदमोदकरसाद्वशाशनेन चित्रातिशायिनि विधौ परशासनेन अर्कसूतिः यत्र अभवत् ॥ १५ ॥

व्याख्या—यत्रतौ बहुलातपश्रीः बहुलस्य अतिशयस्य आतपस्य तापस्य श्रीः शोभा यस्मिन् स शुकादेः शुकस्य पत्रस्य विलयात् पातात् यद्वा शुकस्य कीरस्य पक्षिविशेषस्य विः आकाशे लयो लीनता तस्मात् अथवा शुकादेः शोकादेः विलयात् विनाशात् रामाभियोगकलया रामस्य मृगस्य योऽभियोगः सम्बन्धः तस्य कलया कलनेन "गन्धर्वः शरभो रामः सृमरो गवयः शश इत्य

मरः" यद्वा रामाया रमण्याः अभियोगकलया सङ्गमाकलनेन आमोदमोदकरसादवशासनेन प्रचुरसुगन्धेन तत्र पुष्पातिशयात् यो मोदः हर्षः तं करोतीति आमोदमोदकरः तेन सादस्य विषादस्य "विषादोऽवसादः सादो विषण्णतेति हैमः" यत् अवशासनम् उल्लङ्घनम् तेन चित्रातिशायिनि विधौ चित्रया चित्रानक्षत्रेण अतिशयते इति चित्रातिशायिनि चित्रानक्षत्रयोगिनि विधौ चन्द्रे यद्वा चित्रं यथास्था-त्तथा अतिशायिनि अधिकचमत्कारशालिनि विधौ चन्द्रे सति परमुत्कृष्टम् यत् शासनम् तेन उपलक्षितः अभवत् अजायत अत्र सर्वत्र उपलक्षणे तृतीयाऽवसेया ॥ १५ ॥

अन्यत्र । अर्कसुतिः सूर्यवंशोद्भवो रामः कर्णनृपतिः सुग्रीवो वा बहुलातपश्रीः बहुलोघनीभूतो य आतपस्तस्य श्रीरिवश्रीर्यस्येति निदर्शनालंकारः, स शुकादेः शोकादेः विलयात् अपगमात् रामाभियोगकलया रामायाः सीतायाः कर्णपक्षे रामस्य परशुरामस्य सुग्रीवपक्षे रामायास्ताराया अभियोगकलया संबंधसंकलनेन आमोदमोदकरसादवशासनेन आमोदेन हर्षेण यो मोदकरः सुखकरस्तस्मात् सादस्य विषादस्य अवशासनेन उल्लंघनेन चित्रातिशायिनि विधौ चित्रो विलक्षणो य अतिशयते स चित्रातिशायि तस्मिन् विधौ अदृष्टे सानुकूले दैवे परशासनेन परस्य शत्रोः शासनेन अवसादनेन उपलक्षितः अभवत् अराजत ॥ १५ ॥

राधानुनायकतयाऽप्यमुनाऽनुविद्धा-श्वेताश्वनोदनकृता न कृता विरुद्धा ।
तद्वासवस्य कमलाद्यनुरागमस्मिन्, दध्रे बलात् स्वबलहस्तविनाशनेन ॥ १६ ॥

भावः—राधानुनायकतयाऽपि अनुविद्धाश्वेताश्वनोदनकृता अमुना विरुद्धा न कृता बलात् स्वबलहस्तविनाशनेन तत् वासवस्य कमलाद्यनुरागम् अस्मिन् दधे ॥ १६ ॥

व्याख्या—राधस्य वैशाखस्य अनुनायकतयापि अनुराधकतयापि प्रसाधकत्वेऽपि अनुविद्धः अश्वेताश्वनोदनकृता अश्वेताश्वो राधः अनुविद्धश्चासौ अश्वेताश्वश्चेति अनुविद्धाश्वेताश्वः अनुगताश्वेताश्व इत्यर्थः तस्य नोदनकृता प्रेरकतया अमुना वसन्तेन विरुद्धा न कृता "यः राधायाः द्रौपद्याः आराधकः स यदि अनुविद्धाश्वेताश्वस्याऽर्जुनस्य नोदनकृत् भवेत् तदा सुतरामेव विराधको जात इति सम्बन्धमङ्गीकृत्याह विरुद्धा न कृतेति भावः" तत् वासवस्य कमलाद्यनुरागम् सरोजादिप्रेम तदेव अस्मिन् वसन्ते जातम् " अन्यथा प्रतिरोधकः तथा न संभवेदित्यर्थः " बलात् बलतः स्वबलानाम् स्वसैन्यानाम् हस्तविनाशनेन "हस्तवारणम् मारणोद्यतस्य निवारणमिति शब्द० म०" मारणोद्यतनिवारणेन दधे वसन्तो यद्यपि फाल्गुनस्य विनाशकस्तथापि कमलविनाशकत्वेन स्वबलहस्तविनाशनेन न वासवः अस्मिन् वसन्त दधे इति तत्त्वम् ॥ १६ ॥

अन्यच्च । राधानुनायकतयापि राधस्य माधवस्य कृष्णस्य अनुनायकतयापि अनुराधकत्वेऽपि "वैशाखे माधवो राध इत्यमरः" अनुविद्धाश्वेताश्वनोदनकृता अनुविद्ध आहतो य अश्वेताश्वः कर्णस्तस्य नोदनकृतापि निराकरणकृतापि यद्वा अश्वस्य नोदनं प्रेरणं करोतीति अश्वनोदनकृत् श्वेतः कृष्णश्चासौ अश्वनोदकृच्चेति अश्वेताश्वनोदनकृत् अनुविद्धः योजितः अश्वेताश्वनोदनकृत् येन तेन विरुद्धा न कृता "यः साराध्यः स आराधको न भवतीति विरोधः उक्तार्थं सति विरोधपरिहारः" तत् वासवस्य वसुसर्वसमृद्धिरस्यास्तीति वासवः कृष्णः तस्य कमलाद्यनुरागम् स कमलहस्त इति कमलापतिश्चेति कमलादेरिव अस्मिन् अर्जुनेऽनुराग इति अन्यत् पूर्ववत् ॥

तेनाङ्गभूपशमने सुमवः सुतत्वात्, वैशाखनाम तदमुष्य न फाल्गुनोऽयम् इति पाठान्तरम् ॥ तेन अंगभूपशमने कर्णनृपदमने सति अथ च अङ्गभूः कामः तस्य शमने शान्तौ सुमनसां देवानामिन्द्राणाम् सुतत्वात् पुत्रत्वात् सुमनसां पुष्पाणां सुतत्वादुत्पादकत्वात् अथ च सुमनसां सुष्ठुचित्तानाम् सुतत्वाज्जनकत्वात् अमुष्य अस्य वैशाख इति नाम अथवा वैशाखः रणसंस्थाविशेषः सोऽस्यास्तीति वैशाख इति नाम अयम् उक्तकार्यकारी फाल्गुनः न फाल्गुनमासः न अथ च फल्गु असारम् तदेव फाल्गुनः "प्रसादित्वादण्" असारो न "असारन्तु फल्गु इति हैमः" ॥ १६ ॥

धारां पुपोष विपरीततया न राधां, राजाङ्गजाभ्युदयितां दयिताङ्गरागात् ॥
उक्तिः प्रिया पवनशालिवनप्रियाणां, कामं जनेषु विनयाजनयाम्बभूव ॥ १७ ॥

अन्वय —दयिताङ्गरागात् राजागजाभ्युदयिनाम् धाराम् पुपोष राधा न पवनशालिवनप्रियाणा उक्तिः प्रिया विनयात् जनेषु कामम् जनयाम्बभूव ॥१७॥

व्याख्या-दयिताङ्गराग त् दयितः प्रेयान् योऽङ्गरागः अंगं रज्यतेऽनेनेति अङ्गरागः अङ्गलेपनम् तस्मात् राजांगजाभ्युदयिताम् राज्ञः चन्द्रस्य अङ्गजम् शैत्यम् तस्याभ्युदयिताम् समृद्धिम् धाराम् जलधाराम् शैत्यातिशयकारिणीम् जलधाराञ्च पुपोष सिषेवे यद्वा दयितायाः प्रेयस्याः अङ्गरागात् अङ्गस्पर्शसुखात् चन्द्रजशैत्यवतीम् धारां श्रेणीम् पुपोष भेजे विपरीततया वैपरीत्येन पुरुषायितत्वेन राधाम् रिरंसाम् न पुपोष नानुभवतिस्म ग्रीष्मबाहुल्यात् अथ च विपरीततया धारापदगताक्षरवैपरीत्योच्चारणेन राधाम् गजमदप्रसूतिम् हस्तिमदस्रावम् न पुपोष न ररक्ष तत्र गजमदप्रवृत्तेः प्रसिद्धत्वात् पवनशालिवन प्रियाणाम् पवनान्दोलितारण्यपिकानाम् "वनप्रियः

परभृतः कोकिलः पिक इत्यपीत्यमरः " उक्तिः पञ्चमालापः प्रिया मनोज्ञा जनानामिति शेषः सा उक्तिः जनेषु लोकेषु विनयात् अनुरागमधुरात् कामम् मदनम् जनयाबभूव उत्पादयामास कामोत्पादिका जातेति भावः ॥

अन्वय । राजाङ्गजाभ्युदयिताम् राज्ञः राज्यस्य अङ्गः राजाङ्गः राजाङ्गाज्जायते इति राजाङ्गजः " स्वाम्यमात्यसुहृत् कोशो राष्ट्रदुर्गे बलानि च राज्याङ्गानि प्रकृतय इति हैमः" तेन अभ्युदयी राजाङ्गजाभ्युदयी तस्य भावस्तत्ता ताम् राजाङ्गजत्वेन भाग्यशालिनीम् दयिताङ्गरागात् दयित उत्पन्नोऽङ्गरागो यस्य तस्मात् धाराम् रथांगविशेषम् सैन्याग्रिमस्कन्धं वा अश्वगतिविशेषम्वा "धोरितं वलित प्लुतोत्तेजितोत्तेजितानि च, गतयः पञ्चधाराख्यास्तुरगानां क्रमादिमा इति हैमः" पुपोष ररक्ष विपरीततया धाराशब्दवैपरीत्येन राधाम् राम् हाव्रनं दधातीति राधा ताम् यद्वा रा विभ्रमं विलासं धारयतीति राधा ताम् विलासिताम् अथवा दानम् धीयते अनेनेति राधा संप्रदानता ताम् अथवा राधा वृषभानुनन्दिनी तां न पुपोष न ररक्ष राधा वृन्दावनस्थितस्यैव कृष्णप्रिया द्वारकास्थितस्य तु काचन अन्या एवेति भावः प्रियापवनशालिवनप्रियाणाम् प्रियाणा प्रेयसीना यत् पवनम् कूर्दनम् तेन शालते शोभते यत् वनम् समुद्रजलम् तत् प्रियम् मनोज्ञं येषां तेषां प्रियासहितजलविहारकर्तॄणाम् उक्तिः मनोहरवचनम् विनयात् माधुर्यात् जनेषु लोकेषु कामम् मदनम् अभिलाषम्वा जनयाबभूव उत्पादयामास ॥ १७ ॥

ग्रीष्मर्तुराड् भुवि ददाह न शाखिनोऽन्यान्, स्वैः पत्रवाहनिवहैः परपत्रवाहान् ।

व्याशोषयन्नवजडाशयपङ्कभागान्, मुक्त्वैवमेव सहकारमुखं स भीष्मः ॥ १८ ॥

अन्वय.—भीष्मः ग्रीष्मर्तुराट् स्वैः पत्रवाहनिवहैः परपत्रवाहान् अन्यान् शाखिनः सहकारमुख त्यक्त्वैव न ददाह किन्तु ददाहैव एवम् नवजडाशयपङ्कभागान् व्याशोषयत् ॥ १८ ॥

व्याख्या—स भीष्मः तापजनकः ग्रीष्मर्तुराट् ऋतुषु राजते इति ऋतुराट् ग्रीष्मश्चासौ ऋतुराट् चेति ग्रीष्मर्तुराट् स्वैः स्वकीयैः पत्रवाहनिवहैः पत्रम् दलम् वाहयन्ति इतस्ततश्चालयन्तीति पत्रवाहा वायवः तैः दावाग्निसंसर्गेण वह्निप्रायैः परपत्रवाहान् परमुत्कृष्टम् पत्रम् पर्णम्वहन्ति धारयन्तीति परपत्रवाहाः तान् अन्यान् भिन्नान् शाखिनः वृक्षान् सहकारमुखम् सहकारप्रधानम् चूतप्रमुखम् मुक्त्वैव परित्यज्यैव न ददाह किन्तु ददाहैव एवम् इत्थम् नवजडाशयपंकभागान् डलयोः साम्यात् नवाना नूतनाना जलाशयाना अल्पसरसां पङ्कभागान् कर्दमाशान् व्याशोषयत् शुष्कतामनयत् ॥ वक्रोक्त्यलंकारः ॥

अन्यत्रार्थे । ग्रीष्मर्तुराट् ग्रीष्मर्तुरिव राजते इति ग्रीष्मर्तुराट् स भीष्मः भीष्मपितामहः अथवा ग्रीष्मर्तौ राजते विशेषेण तापयति जनानिति ग्रीष्मर्तुराट् सूर्यः भीष्मः प्रचण्डः अन्यान् निरपेक्षानुदासीनानित्यर्थः पराङ्मुखान्वा परपत्रवाहान् परेषां पत्रम् सन्देशपत्रम् वहन्ति प्रापयन्तीति तान् परप्रेष्यान् शाखिनः शाखा देहावयवविशेषः येषा सन्ति ते शाखिनः तान् स्वपत्रवाहनिवहैः स्वकीयबाणैर्न ददाह न भस्मचकार सहकारमुखम् सहायकनृपप्रमुखम् त्यक्त्वा परित्यज्य नवजडाशयपङ्कभागान नवानाम् नवीनानाम् जडाशयानाम् कुटिलहृदयानाम् पङ्कभागान् पापान् मालिन्यभागान् "अस्त्रीपङ्क पुमान् पाप्मा पापं किल्विषकल्मषमित्यमरः" व्याशोषयत् शुष्कतामनयत् ॥ १८ ॥

शौचं प्रभातसमयं शमयन्तमन्त-र्दाहं घनाघनघटाप्रकटाम्बुवृष्ट्या ।

व्यालोक्य चारुकुटजातिशयेन केन, साकेतकेश्वरदृशोदयतीति नोचे ॥ १९ ॥

अन्वय —घनाघनप्रकटाम्बुवृष्ट्या अन्तर्दाहं शमयन्तम् शौचं प्रभातसमयं व्यालोक्य कुटजातिशयेन केन साकेतकेश्वरदृशा उदयतीति नोचे ॥१९॥

व्याख्या—घनाघनप्रकटाम्बुवृष्ट्या घनाघनस्य मेघस्य "वार्मुकोऽब्दो घनाघन इत्यमरः" या घटा आडम्बरम् तया प्रकटाम्बुवृष्ट्या प्रकटा प्रभूता या अम्बुवृष्टिः जलवर्षणम् तया अन्तर्दाहं ग्रीष्मसमया जनिततापं शमयन्तं निराकुर्वन्तं शौचं शुचिभवम् आषाढमासीयं प्रभातसमयं प्रातःकालम् व्यालोक्य दृष्ट्वा चारुकुटजातिशयेन चारुर्मनोज्ञः यः कुटजः गिरिमल्लिकावृक्षः तस्य अतिशयेन आधिक्येन "कुटजो गिरिमल्लिकेति हैमः" साकेतकेश्वरदृशा आसमन्तात् केतकः केतकीपुष्पम् तदेव ईश्वरः प्रधानत्वात् तेन सहिता आकेतकेश्वरसहिता दृक् यस्य तेन केन केनापि उदयतीति न उचे न जगदे अथवा केतनमेव केतकः ध्वजा आसमंतात् केतकः आकेतकः इन्द्रध्वजम् तेन सहिता दृक् यस्य तेन आकाशे इन्द्रध्वजबाहुल्येन तत्सहितत्वन्नेत्रस्येति तेन दृशेत्यर्थः ॥

अन्वय-घनाघनः हन्त्यज्ञानमिति घनाघनः अज्ञाननिरासकः तस्य घटा परम्परा तया प्रकटा आविर्भूता या अम्बुवृष्टिः अमृतवृष्टिः "पयः कीलालममृतं जीवनं भुवनम्वनमित्यमरः" तया अज्ञाननिरासकरूपोपदेशामृतवृष्ट्या शौचम् शोकादुत्पन्नम् अन्तर्दाहम् मानसिकसन्तापम् शमयन्तम् निराकुर्वन्तम् अत एव प्रभातसमयम् प्रभा तनोति प्रकाशमाविर्भावयतीति प्रभातः स चासौ समयश्चेति प्रभातसमयम् "सामान्ये नपुंसकमिति नपुंसकतया निर्देशः" व्यालोक्य श्रुत्वा धातूनामनेकार्थत्वात् चारुकुटजातिशयेन कुटात् कौटिल्याज्जाता यस्य इति कुटजः तस्य अतिशयः महानिद्रा "शयः हस्ते सर्पे निद्रायां शय्यायां पणे चेति शब्दस्तोममहानिधिः" तेन साके-

तकेश्वरदशा अयोध्याधीश्वरेण तीर्थंकरप्रभुणा इव उदयतीति केन जनेन नोचे न उद्यतेस्म ॥ १९ ॥

अम्भोधरेणजनिता-वनिता-विशल्या, द्रोणाह्वयेन गिरिणा हरिणाभिनीता ।
कौशल्यहारिमनसा हरिमप्यशल्यं, स्नानाम्भसैव विदधे त्वमुनाहतैव ॥ २० ॥

अन्वय.—द्रोणाह्वयेन अम्भोधरेण गिरिणा वनिताविशल्यया जनि ा कौशल्यहारिमनसा हरिणा अमुनाहतैव अशल्यम् हरिम् स्नानाम्भसैव विदधे ॥ २० ॥

व्याख्या—गिरिणा पतनशीलेन द्रोणाह्वयेन द्रोणनाम्ना अम्भोधरेण मेघेन वनिता महिला विशल्या विगतम् शल्यम् दुःखं यस्याः सा विशल्या निःशोका जनिता कृता वर्षाया गमनागमनाभावात् सर्वा अप्रोषितभर्तृका जाता इति विशोकत्वं तासामिति भावः कौश ल्यहारिमनमा कुशलस्य भावः कौशल्यम् मागलिकम् तेन हारि मनोहारि मनो यस्य तेन लोकमांगल्यपराधीनचित्तेन हरिणा सूर्येण अमुना अभिनीता मुक्ता वृष्टिरिति शेषः स्नानाभसैव सेकजलेनैव हरिम् भेकम् अशल्यम् तापरहितम् विदधे चक्रे वर्षासमये दर्दुराणाम् हर्षप्रकर्षो भवतीति तत्वम् ॥ २० ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति मनुः ॥

अन्यत्र गिरिणा सदुपदेशकेन द्रुणति हिनस्ति पापमिति द्रोणः स आह्वोऽभिधानं यस्य तेन द्रोणाह्वयेन पापनाशकेन अम्भोधरेण समुद्रविजयनाम्ना नृपेण अवनिता अवनेः पृथिव्याः भावः अवनिता विशल्या निष्पापा जनिता कृता अथवा अवनं रक्षणमेवावनिः तस्य

मानस्तत्र ना यानिता रमणा विशल्या निष्कलंका जनिता विहिता यद्वा अम्भोवरेण समुद्रविजयेन विशल्या अकुलपा अवनिता मानस्तत्र ना यानिता रमणा विशल्या निष्कलंका जनिता विहिता यद्वा अयोनिप्रभुना पुरुषार्थविशिष्टा पुंप्रवृत्तिः जनिता उत्पादिता कौशल्यहारिमनसा नैपुण्यवशंवदचित्तेन प्रभुगुणदर्शनात्तदधीनमनसा अमुना हरिणा इन्द्रेण अभिनीता प्रेरिता आदृता कृतादरा शासनदेवतेति शेषः कृता विहिता हरति पापमिति हरिः तम् नेमिनाथप्रभुम् स्नानाम्भसैव स्नात्रजलेनैव विशल्यम् गार्भक्लेदरहितम् विदधे चक्रे ॥ २० ॥

द्रोणो धनञ्जयमहाहवलब्धकीर्त्ति-र्धन्वादधद् बहुगुणं भुवि गर्जिवर्जः ।
तन्वन् शरप्रसरमेव तदाजगाम, सौरप्रभावसमयं सहसाऽनुभाव्य ॥ २१ ॥

अन्वयः—धनञ्जयमहाहवलब्धकीर्त्तिः बहुगुणम् धनु आदधत् गर्जिवर्जः शरप्रसरमेव तन्वन् सौरप्रभावसमयं सहसानुभाव्य द्रोणस्तदा भुवि आजगाम ॥ २१ ॥

व्याख्या—धनञ्जयमहाहवलब्धकीर्त्तिः धनञ्जयेन वनाग्निना यो महाहवः दावाग्निशान्तये रचितमहायुद्धः तेन लब्धकीर्त्तिः प्राप्तयशाः "वह्निर्धनञ्जयो धनञ्जय इत्यमरः" बहुगुणमनेकवर्णम् धनुः इन्द्रधनुर्दधत् धारयन् "शरावापोधनुः स्त्रीस्यादितित्रिकाण्ड-शेषात्" गर्जिवर्जः ध्वानरहितः वार्पुरुत्वेन मन्दगर्जः शरप्रसरम् जलवृष्टिम् तन्वन् विस्तारयन् "शरम् जले इति शब्दस्तोममहानिधिः" सौरस्य सूर्यसम्बन्धिनः प्रभावसमयं तेजःप्रसरम् अनुभाव्य विचार्य "आदित्याज्जायते वृष्टिर्वृष्टेरन्नन्ततः प्रजेति स्मृतिः" तदा तस्मिन् समये सहसा अटिति द्रोणः वार्पूरो मेघः भुवि भूसमीपमाजगाम आययौ ॥

अन्यत्र । धनञ्जयमहाहवलब्धकीर्त्तिः धनञ्जयस्यार्जुनस्य महाहवेन विपुलरणेन लब्धा प्राप्ता कीर्त्तिर्येन स, शिष्याणां विजयेनो

पाध्यायस्यैवकीर्त्तिर्भवतीति भाव. बहुगुणम् अनेकमौर्वीकं धनुः आदधत् धारयन् गर्जिवर्जः संग्रामगर्जनारहितः वृद्धत्वात् शरप्रसर-
मेव बाणप्रचारम् तन्वन् विस्तारयन् "कम्बलमार्गणशरा इत्यमरः" सौरस्य कर्णस्य प्रभावसमयं सेनापतित्वं सहसा अनुभाव्य विचार्य
अथवा सौरस्य कर्णस्य प्रभा दीप्तिः तस्या अवसमवसानम् विभाव्य विचार्य अयं द्रोणः द्रोणाचार्यः भुवि संग्रामाङ्गणे आजगाम समा-
ययौ ॥ २१ ॥ श्लेषः ।

न दानवानां न महावहानां नदा नवानां न महावहानाम् ।
नदानवानां न महावहानां न दानवानां न महावहानाम् ॥ २२ ॥

अन्वय.—नवानां महावहाना नदा दानवानां नन महावहानान्न महावहाना दानवानान्न दानवाना न महावहानान्न ॥ २२ ॥

व्याख्या—नवानां नूतनानाम् महावहानाम् वहतीति वहा महती चासौ वहा महावहा तासाम् नवीननदीनाम् नदाः शब्दाः दान-
वानाम् दैत्यानां न न नैव अथ च महावहानाम् महती चासौ वहा सेना महावहा तासां सैन्यसमुदायानां च न, एवं च वहन्ति
धारयन्तीति वहाः पर्वताः महान्तश्चते वहाश्चेति महावहाः विपुलगिरयः तेषां दानवानां दानञ्छेदनं वाति करोतीति दानवः वज्रः
तेषां न न नैव वज्राणामपि तादृशाः शब्दा न दानवानाम् दानम्मदजलं वान्ति प्राप्नुवन्तीति दानवाः गजास्तेषान्न हस्तिनामपि न
महावहानां समुद्राणां च न, यथा प्रावृषि नवीननदीनां शब्दास्तथा न केषामपीति भावः ॥ २२ ॥ अत्र पद्ये 'स्यादिन्द्रवज्रा यदि तौ
जगौ ग' इति लक्षणादिन्द्रवज्रावृत्तम्, यमकालंकारः ।

कलाकलापैः सकलाकलापैः कलाकलापैः सकलाकलापैः ।

एव वाजिस्थ एव परसंगरस्य अन्ययुद्धस्य रसं परिणामम् स्मरन्निव स्वस्थः स्वर्गस्थः समभूत् ॥ २४ ॥ उत्प्रेक्षा वसन्ततिलकं छन्दः ।

यो वा-रिवाहनिवहेषु कृपाणपाणि-र्विद्युन्मिषाद् यदभिधापरिवृत्तिमैक्ष्य ।
धाराबलेन कुरुतेस्म तदङ्गभङ्गं, धन्वागुणं पुरत एव निदर्श्य लोके ॥ २५ ॥

अन्वय —यः वारिवाहनिवहेषु कृपाणपाणि विद्युन्मिषात् अभिधापरिवृत्तिमैक्ष्य लोके पुरत एव धन्वागुण निदर्श्य धारावलेन अङ्गभङ्ग कुरुतेस्म ॥२५॥

व्याख्या—यः वारिवाहनिवहेषु वारि जलं वहन्तीति वारिवाहा मेघास्तेषान्निवहेषु समूहेषु अथ च वारिम् गजबन्धनीम्वहन्तीति वारिवाहा गजास्तेषां निवहेषु संघेषु अथवा यो वा अरिवाहनिवहेषु शत्रुसैन्यसमूहेषु कृपाणपाणिः खड्गहस्तः विद्युन्मिषाद्विद्युच्छलात् अभिधापरिवृत्तिम् संज्ञापरिवर्त्तनं ऐक्ष्य विधाय लोके जगति पुरतः अग्रतः धन्वागुणम् कोदण्डगुणम् धनुर्ज्याम् निदर्श्य प्रदर्श्य धाराबलेन खड्गधाराबलेन अश्वगतिविशेषेण वा अथ च धाराबलेन वर्षजलधाराबलेन तदङ्गभंगं तदङ्गविच्छेदम् कुरुतेस्म विदधतिस्म ॥ २५ ॥

द्रौणिः स्फुटं विघटयन् शिखरेषु वाहा-वार्यं स्ववीर्यमधिगम्य स साम्यमाधात् ।
निस्तन्द्रसान्द्रपरवासविनाशनाय, स्वं नाम नामपरिणाममवेक्ष्य संधेः ॥ २६ ॥

अन्वय.—स द्रौणिः स्फुटम् विघटयन् शिखरेषु वाहा वार्यं स्ववीर्यम् अधिगम्य साम्यम् अधात् सन्धेः निस्तन्द्रसान्द्रपरवासविनाशनाय नाम स्वम् नामपरिणामम् अवेक्ष्य साम्यमाधात् ॥ २६ ॥

व्याख्या—स द्रौणिः तन्नामा कश्चिन्मेनः शिखरेषु पर्वतोच्चप्रदेशेषु वाहाया नद्या अवार्यमरोधकम् तथा वर्षति यथा प्रस्तरोऽपि नंदगत्र निरुणद्धि स्वीयं स्वसामर्थ्यम् अधिगम्य अभिगत्य सन्धेः संमिलितस्य विघटयन् विश्लेषयन् कर्मणः शेषत्वविवक्षया षष्ठी निस्तन्द्रसान्द्रपरवामविनाशनाय निस्तन्द्रं निष्प्रत्यूहं सान्द्रं निविडं सघनमित्यर्थः यत् परवामम् परगृहम् कलत्रम्वा तस्य विनाशनाय विनाशनयोग्यम् नाम इति सम्भावनायाम् स्वम् स्वकीयम् नाम्नः परिणामम् यौगिकार्थं द्रुणति हिनस्ति कौटिल्यं करोतीति द्रोणस्य एव द्रौणिरिति स्वाभिधेयवाच्यार्थम् अवेक्ष्य विचार्य साम्यम् समताम् अधात् व्यदधत् ॥ २६ ॥

अन्यच्च द्रौणिः द्रोणाचार्यतनयोऽश्वत्थामा शिखरेषु उन्नतेष्वपि वाहानामश्वानाम् वार्यन्निरोधकम् यद्वा वाहस्य भुजस्य वार्यन्निरोधकम् बाहुवीर्यरोधकम् स्ववीर्यम् स्वसामर्थ्यम् अधिगम्य ज्ञात्वा निस्तन्द्रसान्द्रपरवासविनाशनाय निस्तन्द्रं निरुद्विग्नं सांद्रम् दृढम् यत् परवासं परसेनासन्निवेशम् तस्य विनाशनाय विनाशयितुं स्वनामपरिणामम् स्वकीययौगिकार्थमवेक्ष्य दृष्ट्वा सन्धेः विघटयन् संधिविश्लेषकान् साम्यम् आधात् आचरत् ॥ २६ ॥

वर्षाधिकामितफलाविगमेन शल्यं, भित्त्वाऽभजद् विभुवने भुवने जयश्रीः ।
नित्यानुकूलपवनाङ्गजसंप्रयोगं, धर्मात्मजः सविजयस्तत एव राजा ॥ २७ ॥

अन्वयः—वर्षाधिकामितफलाविगमेन शल्यम् भित्त्वा विभुवने भुवने जयश्रीः अभजत् नित्यानुकूलपवनाङ्गजसंप्रयोगं सविजयः धर्मात्मजः तत एव राजा ॥ २७ ॥

व्याख्या—वर्षा प्रावृट् अधिकामितफलाधिगमेन अधिकामितम् अभिलषितम् यत् फलम् उद्देश्यम् तस्य अधिगमेन प्राप्त्या शल्यं दुःखम् अवृष्टिजनितदुःखम् खेदमित्यर्थः भित्वा विनाश्य विभुवने समस्ते भुवने जगति जयश्रीः सर्वोत्कर्षता अभजत् प्राप्नोत् तथा च नित्यानुकूलपवनांगजसंप्रयोगम् नित्यमहर्निशम् अनुकूलः अनुगतः यः पवनः वायुः तस्य अङ्गजसंप्रयोगम् वेगानुकौल्यम् अधिगम्येति शेषः तत एव वर्षात एव सविजयः विजयसहितः धर्मात्मजः जीवः राजते इति राजा विराजमानः भवतीति शेषः जलवृष्टित एव सर्वे राजन्ते इति भावः ॥

अन्यत्र । वर्षे भारतवर्षे अधिकामितस्य अभिलषितस्य फलस्य अधिगमेन लाभेन शल्यम् शल्यनामानम् नृपम् भित्वा विनाश्य विभुवने समस्ते भुवने जगति जयश्रीः विजयलक्ष्मीः अभजत् आप्नोत् नित्यम् अहर्निशम् अनुकूलः अनुगतः यः पवनांगजः भीमसेनः तस्य संप्रयोगम् युद्धोद्योगम् अधिगम्येति शेषः सविजयः अर्जुनसहितः धर्मात्मजः युधिष्ठिरः तत एव तस्मादेव शल्यविजयात् भीमपराक्रमाच्च राजा सार्वभौमः भीमसेनेन दुर्योधनविनाशाद्युधिष्ठिरः राजपदभागिति भावः ॥ २७ ॥ श्लेषः ।

नभसि रभसा वेणीश्रेणी रसोद्गमाश्रयद् , भुवि घनरवाश्चक्रुः प्रीतिं समं यदि वा दिवा ।
प्लवगशिविरे हर्षोत्कर्षो न रक्षसि वक्षसि, सभयमनसा नालङ्कायास्तदा निरगुर्गृहात् ॥ २८ ॥

अन्वय —नभसि वेणीश्रेणी रभसा रसोद्गमम् आश्रयत् भुवि यदि वा वनरवा. दिवा समं प्रीतिम् चक्रु· प्लवगशिविरे हर्षोत्कर्षो न रक्षसि वक्षसि सभयमनसा तदा लकाया गृहात् नानिरगु. ॥ २८ ॥

व्याख्या—नभसि आकाशे वेणीश्रेणी वेण्या जलधारायाः श्रेणी पंक्तिः रसोदग्रम् रसस्य जलस्य उदग्रम् औन्नत्यम् रभसा राभ स्येन आश्रयत् अध्यगच्छत् घनरवाः घना निबिडा ये रवाः शब्दाः यद्वा घनानाम् ये रवाः शब्दाः मेघशब्दाः दिवा समम् नभसा समम् यदि वा अथवा दिवा दिवसे भुवि क्षितौ प्रीतिम् अनुरागम् चक्रुः दधुः प्लवगशिविरे हर्षोत्कर्षः प्लवगानां मेकानां मयूरानां वानराणां वा शिविरे मध्ये हर्षोत्कर्षः प्रमोदप्रचुरः रक्षसि रात्रौ वक्षसि हृदयेन अत एव सभयमनसा भययुक्तचित्तेन तदा तस्मिन् समये लंकायाःकम् जलमेव का तस्याः ततः गृहात् गेहात् अलम् ना निरगुर्नैव निरगच्छन् ।

अत्र प्लवगशिविरे कापेयसेनासन्निवेशे हर्षोत्कर्षो जातो रक्षसि वक्षसि राक्षसीयसेनामनसि अत एव सभयमनसा भयभीतचित्तेन लंकाया गृहात् न निरगुर्न निष्क्रान्ता इत्यर्थान्तरोऽपि स्फुरतीति ॥ २८ ॥ श्लेषः । हरिणीवृत्तम् ।

रजनिबहुधान्योच्चै रक्षाविधौ धृतकम्बलः, सपदि दुधुवे वारांभाराद् गवा गलकम्बलः ।
कृपिरिव परक्षेत्रं सेवे कृषीवलपुङ्गव—श्चपलसवलं भीत्या जज्ञे वलं च पलाशजम् ॥ २९ ॥

अन्वयः—सपदि वारांभारात् गवा गलकम्बलः दुधुवे रजनिबहुधान्योच्चै रक्षाविधौ धृतकम्बलः कृषीवलपुङ्गवः कृपिरिव परक्षेत्रं सेवे पलाशजं वलम् भीत्या चपलसवलम् जज्ञे ॥ २९ ॥

व्याख्या—सपदि लघु वारां वारीणां भारात् जलबाहुल्यात् "आपस्त्रीभूम्नि वार्वारिसलिलमिति अमरः" गवा गलकम्बलः सास्ना दुधुवे धूयतेस्म रजनिबहुधान्योच्चैरक्षाविधौ धृतकम्बलः रजनि रजन्यां रात्रौ बहु अति धान्यानां शस्यानां रक्षाविधौ पालन

विधौ धृतकम्बलः अवलम्बितकम्बलः कृषीबलः कर्षकः ऋषिरिव मुनिरिव परक्षेत्रम् परं च तत्क्षेत्रञ्चेति सिद्धस्थानम् यद्वा परङ्केवलम् क्षेत्रम् शस्यक्षेत्रम् भीत्या–पशवः शस्यभक्षणेन क्षेत्रं विकलं मा कुर्युरिति भयेन सेवे सेवितवान् पलाशजम् बलम् पलम् मांसम् तृणम् अश्नातीति पलाशः अग्निः तस्माज्जायते इति तत् बलम् चपलसबलम् चपलानां वृष्टिजनितशीतार्त्तानां सबलम् सावधानम् जज्ञे उत्पेदे ॥ २९ ॥ उपमालंकारः ॥

प्राप्त्याश्विनेयसुभगक्रियया जनाग्रे, गर्जन्महासुरघटा गतिरङ्गना सा ।
यस्या नु बृंहितरवप्रियमादधाति, तस्याः सतः प्रतिपदं शिवसंपदेति ॥ ३० ॥

अन्वय —प्राप्त्या आश्विनेयसुभगक्रियया गर्जन्महासुरघटा गतिः सा अङ्गना यस्यानुबृंहितरव' प्रियमादधाति तस्याः सत. प्रतिपदम् शिवसपद् एति ॥ ३० ॥

व्याख्या—जनाग्रे लोकाग्रे आश्विनेययोः अश्विनीकुमारयोः स्वर्वैद्ययोः अथवा आश्विने भवः आश्विनेयः शरदृतुः तस्य शुभगक्रियया सौभाग्येन प्राप्त्या लाभेन गर्जन्महासुरघटा महाश्चासौ सुरश्चेति महासुरः महासुराणां घटा महासुरघटा गर्जन्ती चासौ महासुरघटा इति गर्जन्महासुरघटा यत्र सा तथोक्ता अङ्गना गजमहिषी गतिः प्राप्त्या “ शरदतौ तासा सौभाग्यं जायते इति समयः ” यस्या अङ्ग नायाः नु इति वितर्के बृंहितरवः गर्जितशब्दः प्रियम् अनुकूलम् आदधाति अनुकूलतां जनयति तस्याः प्रतिपदम् प्रतिक्रमम् सतः सज्जनस्य सौभाग्यवतः शिवसंपदम् कल्याणमेति प्राप्नोति ॥ ३० ॥

इतः श्लोकत्रयपर्यन्तम्वसन्ततिलकं वृत्तम् ज्ञेयं वसन्ततिलकं तभजा जगौग इति तल्लक्षणात् ॥

पद्मोदयः सरसि निर्मलता प्रयुक्ता-संपत्त्रकम्पनगतिर्मधुराध्वराजाम् ।
नैपुण्यपुण्यचरिताद् दुरितान्निवृत्तिः, किं किं शरन्न तनुते स्म सुखं जनेऽस्मिन्? ॥ ३१ ॥

अन्वय—सरसि पद्मोदय निर्मलता प्रयुक्ता अध्वराजाम् सम्पत्त्रकम्पनगतिर्मधुरा नैपुण्यपुण्यचरितात् दुरितान्निवृत्ति. अस्मिन् जने शरद् किं किं सुखं न तनुते स्म ॥ ३१ ॥

व्याख्या—सरसि सरोवरे पद्मोदयः पद्मानां कमलानामुदयः उद्भवः तथा सरसि निर्मलता निष्पंकता स्वच्छतेत्यर्थः प्रयुक्ता योजिता अध्वराजाम् अध्वनि मार्गे राजन्ते शोभन्ते इति अध्वराजस्तेषाम् मार्गवृक्षाणां सम्पत्त्रकम्पनगतिः संपत्राणां सम्यक् यथा-स्यात्तथा दलाना कम्पनगतिश्चांचल्यं मधुरा मनोहारिणी यद्वा अध्वनि मार्गे राजन्ते स्वचंक्रमणेन शोभन्ते इति अध्वराजः पथिकास्तेषां सम्पत्राणां सम्यक् वाहनानां कम्पनगतिः सविलासगमनं मधुरा मनोज्ञा निराबाधा "सर्वं स्याद्वाहनं यानं युग्यं पत्रं च धोरणमित्य-मरः" नैपुण्यपुण्यचरितात् नैपुण्येण कौशल्येन पुण्यचरितात् पवित्राचरणतः दुरितात् दुष्कृतात् निवृत्तिर्निरोधः, यथारुचिवारिदवर्षणजनितस्वास्थ्येन सर्वे जनाः शरदि धर्मकर्मणि विशेषेण रता भवतीति भावः। इति अस्मिन् जने लोके शरद् शरदृतुः किं किं सुखम् किं किं सौख्यम् न तनुते स्म न विदधाति स्म सर्वं सौख्यं जनयति स्मेति भावः ॥ ३१ ॥

पक्षः पुरः सुरसमागमरागदक्षः, साक्षाद्दशाननरुचिज्वलनेन मोदः ।
सीतान्तरप्रणयिता नृपतिप्रयोगः, संजात एव नृपलक्ष्मणसन्नियोगः ॥ ३२ ॥

अन्वयः—पक्षः पुर. सुरसमागमरागदक्षः साक्षाद्दशाननरुचिज्वलनेन मोदः सीतांतरप्रणयिता नृपतिप्रयोगः नृपलक्ष्मणसन्नियोगः संजात एव ॥ ३२ ॥

व्याख्या—पक्षः कृष्णशुक्लरूपः पक्षः बलम् सैन्यम्वा पक्षः खगः पक्षी वा पक्षः राजकुञ्जरो वा पुरः सुरसमागमरागदक्षः पुरः अग्रे सुष्ठु रातीति सुरः मार्गमासः "तत्र धान्यसंचयप्राचुर्यात्" तस्य समागमः संयोगः तस्य रागः अनुरागः तत्र दक्षः पटुः अथवा पुरः अग्रे सुरा एषामस्तीति सुराः "अर्शादित्वादच्" सुराणां मद्यपायिनाम् समागमस्य यो रागः प्रेमा तत्र दक्षः समुत्सुकः अन्यत्र सुष्ठु रसो यस्य स सुरसः शोभनजलम् तत् माति यत्र स सुरसमः तत्र आगमनम् आगतिः तत्र दक्षः पटुः हंसादीनाम्मानसादागमनं तत्र प्रसिद्धम् कुञ्जरपक्षे सुराणां नृपानां विजयोत्सुकानां समागमे यो रागोऽभिनिवेशस्तत्र दक्षः साक्षाद्दशाननरुचिः दशसु दिक्षु आननं प्रकाशो यस्य स दशाननः सूर्यः तत्र रुचिः प्रीतिर्यत्र स च ज्वलनो वह्निः ताभ्यां मोदः प्रमोदः सीतान्तरस्य अन्यशोभा सम्पत्तेः मदिरान्तरस्य वा प्रणयिता प्रीतिः नृपतिप्रयोगः सूर्यस्य राश्यन्तरगमनम् भूपतिगमनं वा उत्तरदिशिगमनं वा खगानाम् नृपलक्ष्मणसन्नियोगः नृपश्चासौ लक्ष्मणश्चेति नृपलक्ष्मणः सारसः तस्य सन्नियोगः इतस्ततो गमनम् संजात एव प्रववृते ॥ ३२ ॥

अन्यत्र—पक्षः सहायः पार्श्वो वा "पार्श्वे गृहे विरोधे बले सहाये सख्यौ पक्ष इति शब्द० म०" पुरः अग्रे सुरसमागमरागदक्षः सुरा णान्देवानां समागमेन सान्निध्येन यो रागः अनुरागः प्रेम तत्र दक्षः पटुः साक्षात् सद्यः दशाननरुचिज्वलनेन मोदः दशाननस्य रावणस्य या रुचिः कांतिस्तस्या ज्वलनेन दाहेन रावणविनाशनेन मोदः हर्षः यद्वा साक्षात् प्रत्यहं दशसु दिक्षु आननं मुखं यस्य स दशाननस्तेन रुचिर्दीप्तिर्यस्य स दशाननरुचिः स चासौ ज्वलनश्चेति दशाननरुचिज्वलनः सर्वतः प्रज्वलद्वह्निस्तेन सीताशुद्ध्यर्थज्वलनेन मोदः हर्षः सीतान्तरप्रणयिता सीतायां जानक्यां आन्तरप्रणयिता आभ्यन्तरिकप्रेम अथवा सीतान्तरे अग्निशुद्धसीतायां प्रणयिता

प्रेमवृद्धिः नृपतियोगः नृपतेः रावणस्थाने विभीषणस्य प्रयोगः स्थापनम् नृपलक्ष्मणसन्नियोगः नृपश्चासौ लक्ष्मणश्चेति तस्य सन्नियोगः विधानम् संजात एव मधुतपश्च इत्यर्थः ॥ ३२ ॥

मार्गप्रवृत्तिरुचिता निचितात्मलक्ष्मी-र्निर्माणनर्मणि जनो रमते मतेन ।
निश्छद्मपद्मनयनानयनानि गेहे, स्नेहेन मित्त्रवसनाद्यशनासनानि ॥ ३३ ॥

अन्वय —मार्गप्रवृत्तिरुचिता आत्मलक्ष्मीर्निचिता जनः मतेन निर्माणनर्मणि रमते गेहे निश्छद्मपद्मनयनानयनानि स्नेहेन मित्रवसनाद्यशनासनानि ॥३३॥

व्याख्या—मार्गप्रवृत्तिरुचिता मार्गस्य मार्गशीर्षमासस्य प्रवृत्तिः प्रवर्त्तनम् उचिता प्राप्तकाला अथवा मार्गस्य अध्वनः प्रवृत्तिः प्रवर्त्तनम् उचिता शोभना निराबाधा आत्मलक्ष्मीः आत्मनः स्वस्य लक्ष्मीः संपत् निचिता संपादिता जनः लोकः निर्माणस्य कामस्य नर्मणि केलौ कामकेलौ मतेन स्वेच्छातः रमते विहरति गेहे सद्मनि निश्छद्मपद्मनयनानयनानि निच्छद्मम् निष्कपटम् यत् पद्मं न कमलम् तद्वन्नयननेत्रम् यासाम् ताः निश्छद्मपद्मनयनाः निस्तन्द्रकमललोचनाः तासाम् आनयनम् आगमनम् इति निश्छद्मपद्मनयनानयनानि स्नेहेन प्रेम्णा गेहे गृहे मित्रवसनाद्यशनासनानि मित्रस्य सुहृदः वसनमाच्छादनम् तदादिर्यस्मिन् तत् मित्रवसनादि अशनम् भोजनम् आसनमुपवेशनम् तानि तथोक्तानि अथ च मित्रस्य सूर्यस्य वसनादि प्रवेशनादि अशनम् भोग्यम् सूर्यातपसेवनम् आसनम् पूजनम् तानि तथोक्तानि भवन्तीति सर्वत्रान्वयः ॥ ३३ ॥ यमकम् ।

उष्णभोजनरसः परकान्तासंगमेन बहुधा लयभावः। कृष्णवर्त्मरुचिरप्यतिजाड्यात्सैष तेपनववेपविशेषः ॥

अन्वयः—उष्णभोजनरसः परकांतासंगमेन बहुधा लयभावः अतिजाड्यात् कृष्णवर्त्मरुचिरपि सैष तैपनववेषविशेषः ॥ ३४ ॥

व्याख्या—उष्णभोजनरसः उष्णभोजने तप्तभोजने रसः अनुरागः तप्तभोजनशीलता परकांतासंगमेन बहुधा लयभावः परमुत्कृष्टम् अनन्यसाधारणमित्यर्थः कांतस्य मनोहरस्य साधोरित्यर्थः संगमम् संगतिः तेन अत्युत्कृष्टजनसंगमेन बहुधा अनेकशः लयभावः तदैकमानसत्वम् अथवा परस्य केवलज्ञानस्य यः कांतासंगमः मनोहरसंगतिः तेन बहुधा अनेकधा लयभावः अज्ञानादीनां कर्मणां विनाशः अथवा परस्य सर्वोत्कृष्टस्य मोक्षस्य कान्तासंगमेन सुन्दरसंबन्धेन बहुधा लयभावः संसारनिवृत्तिः यद्वा परा अनुपमा या कान्ता मुक्तिरूपाङ्गना तस्याः संगमेन प्राप्त्या बहुधा लयभावः अत्यन्तोपरतिः अथच परकांतायाः परस्त्रिया असंगमेन संगपरिहारेण बहुधा लयभावः अनेकधाकर्मनिवृत्तिः अतिजाड्यात् अतिशीतात् कृष्णवर्त्मरुचिः वह्निसेवनप्रीतिः यद्वा कृष्णवर्त्मरुचिः दुष्टकर्मणि प्रवृत्तिः अतिजाड्यात् अत्यज्ञानात् सैष अयम् तैपनववेषविशेषः तैपस्य पौषस्य नवः नूतनः वेषविशेषः सरूपविशेषः तैपमाहात्म्यविलसितमेतत् शांतेः प्रभोर्ज्ञानकल्याणकप्रसंगेन हेमन्तवर्णनमिदम् । अत्र स्वागतावृतम् "स्वागता रनभगैर्गुरुणा चेतिलक्षणात्" ॥ ३४ ॥

स-सीतासंतापस्तपसि जपसिद्धेः कपिपते-र्विशल्या कौशल्यात्समितिरुचिता भारतभुवि ।
नृचक्षोर्विक्षोभाद्धिमकरविधौ कान्तिरुद्धौ, निलीनाशालीना विलसदमलीनाद्दततपाः ॥ ३५ ॥

अन्वयः—तपसि जपसिद्धेः कपिपते' स सीतासतापः कौशल्यात् भारतभुवि विशल्या समितिः उचिता हिमकरविधौ कान्तिरुद्धौ नृचक्षोर्विक्षोभात् निलीना शालीना विलसदमलीनाद्दनतपा ॥ ३५ ॥

व्याख्या—आसमंतात्तापयति क्लेशयति इति आसंतापः सीतेन हिमेन सहितः ससीतः स चासौ आसंतापश्चेति ससीतासंतापः

तपसि मासे शीतजनितसंतापस्यापि दुःखजनकत्वात् तापः कविना वर्णितः हिमकरविधौ हिमकरस्य विधिरिव विधिरिति तस्मिन् शी तकाले जा सिद्धेः जपेन मौनेन सिद्धिर्निष्पत्तिर्यस्य तस्य कपिपतेर्वानरपतेः तेषां शीताधिक्यात् कौशल्यात् नैपुण्यात विशल्या दुःख निवारिका समितिः यथा भारतभुवि साग्निभुवि प्रज्वलिताग्निप्रदेशे उचिता योग्या नृचक्षोः विक्षोभात् मनुष्यनेत्रभ्रमरचैकल्यात् कान्तिर्दीप्तिः उदधौ समुद्रे नेत्रपिधानकारकहिमावरणतः उदधिप्रायस्सर्वमत्राभासते निलीनाशालीना शालीना निर्लज्जता निलीना नष्टा सर्वेषामाच्छादकत्वात्निर्लज्जता गता विलसदमलीनादृततया विलसन्तः प्राप्तविलासाः ते च अमलीनाः अकलुषिताश्चेति विलसद-मलीनाः ते च आदृततपाश्चेति विलसदमलीनादृततपा भवन्तीति शेषः ॥ ३५ ॥

शिखरिणीवृत्तम् रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणीति लक्षणात् ॥

अन्यपक्षे—कपिपतेः सुग्रीवस्य अथवा कम्पते सङ्ग्रामाय प्रचलतीति कपिः सेनापतिस्तस्य नायकस्य रामादेः तपसि तपश्चर्यायां व्रतनियमे जपसिद्धेः मानसिकतपोव्यापारसिद्धेः प्राग्गिति शेषः स प्रसिद्धः सीतासंतापः सीताहरणजन्यदुःखं जातमिति शेषः कौशल्या रामजाता विशल्या दुःखशोकरहिता जातेति शेषः नारदवचनादिति भावः आत् अस्मात् भारतभुवि लंकानगरे समितिः नरवानरराक्षसाना परिषद् उचिता संमता विगतः क्षोभो यस्मात् स विक्षोभस्तस्मात् नृचक्षोर्नरनेत्रस्य रामनयनस्य क्षोभराहित्यात् हिमकरविधौ चन्द्रे समुद्रे च कान्तिः प्रसन्नता जगदाक्रान्दकारिणो रावणस्योच्छेदात् शालीना औद्धत्यम् राक्षसानामिति शेषः निलीना निरस्ता विलसन्तः विलसमानाश्च अमलीनाः निष्कल्मषाः निरस्तापकारबुद्धयश्च आदृततपाः गृहीतव्रता तेषां द्वन्द्व इति विलसदमलीनादृततपाः अभवन्निति शेषः तदानीम्मेघनादादिना दीक्षाग्रहणत्वादिति भावः ॥ ३५ ॥

कैवल्यशालिभगवत्कपिले नयार्चा श्रेष्ठा प्रतिष्ठितिमनीयत सौम्यदृष्टिः ।
इत्यादिदेश जिनराट् स तदादि देश-देवादयः सहृदया हृदये दधुर्गाम् ॥ ३६ ॥

अन्वय —कैवल्यशालिभगवत्कपिले (येन) श्रेष्ठा नयार्चा प्रतिष्ठितिमनीयत स सौम्यदृष्टिः इति जिनराट् आदिदेश तदादि देशदेवादयः सहृदया. गाम् हृदये दधुः ॥ ३६ ॥

व्याख्या—कैवल्यशालिभगवत्कपिले=केवलस्य भावः कैवल्यं तत्र शालन्ते=शोभन्ते इति कैवल्यशालिनः ते च ते भगवन्त श्चेति कैवल्यशालिभगवन्तः । कम्पते जनो यतः इति कपिः=कामः तं लाति छिनत्ति इति कपिलः=स्मरघ्न इत्यर्थः । कैवल्यशालि-भगवन्तश्च ते कपिलाश्च कैवल्यशालिभगवत्कपिलाः तत्र कैवल्यशालिभगवत्कपिले । येन श्रेष्ठा=सद्भावभाविता=सत्सम्पत्सम्पादिता नयार्चा=नयेन=विधिना या अर्चा=सपर्या सा नयार्चा "पूजा नमस्यापचितिः सपर्यार्चार्हणा समा" इत्यमरः प्रतिष्ठितिम्=सुस्थितिम् अनीयत=नीता । स सौम्यदृष्टिः=सौम्या=ऋजु दृष्टिः=दर्शनं यस्य स सौम्यदृष्टिः=सम्यग्दृष्टिरित्यर्थः । इति=एवंप्रकारेण जिनराट्—जिनेषु=सामान्यकेवलिषु राजते=शोभते इति जिनराट्=तीर्थंकरः आदिदेश उपदिष्टवान् । तदादि=तत आरभ्य देशदेवादयः-दिशन्ति अभिलषितमिति देशाः ते च ते देवा देशदेवास्ते आदौ येषान्ते देशदेवादयः=सुरासुरप्रभृतयः । सहृदया=समानं हृदयं येषान्ते सहृदयाः=मनिषिणः गाम्=पूर्वप्रथितां परमात्मवाचं हृदये=अन्तःकरणे दधुः=दधति स्म ॥ ३६ ॥

यमकालङ्कारः ।

भूमीभुजः समनुजा दनुजानुजात्या-कान्त्या लसत्सुमनसो मनसोऽनुरागात् ।
तत्रैत्य चैत्यनमनान्न मनाक् प्रमत्ता-स्तस्थुर्गणेशपददर्शनदत्तचित्ताः ॥ ३७ ॥

अन्वयः—समनुजा भूमीभुजः नु दनुजा जात्या कान्त्या लसत्सुमनसो मनसोऽनुरागात् तत्रैत्य चैत्यनमनात् मनाक् न प्रमत्ताः गणेशपददर्शनदत्त-चित्ता तस्थुः ॥ ३७ ॥

व्याख्या—समनुजाः सलोकाः भूमीभुजः राजानः नु इति वितर्के दनुजाः दानवाश्च जात्या श्रेष्ठभूताः कान्त्या दीप्त्या लस-त्सुमनसः लसन्तः शोभमानाः सुष्ठु मनो येषान्ते लसत्सुमनसः शोभमानहृदयाः देवाश्च मनसः स्वान्तस्य अनुरागात् प्रेमतः तत्र तस्मिन् स्थाने एत्य समागत्य चैत्यनमनात् नमस्कारात् मनाक् ईषदपि न प्रमत्ताः न सालसाः सर्वदैव सावधाना इत्यर्थः गणेशप-ददर्शनदत्तचित्ताः गणेशा नाम् गणधराणाम् पददर्शने चरणदर्शने दत्तचित्ताः संलग्नमनसः तस्थुः स्थिताः "चैत्यविहारौ जिनसद्मनीति हैमः" अत्रश्लोके वसंततिलकं वृत्तम् "तेयं वसन्ततिलकं तभजा जगौगः" इति तल्लक्षणात् ॥ ३७ ॥

सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकस इत्यमरः ॥

स-श्रेणिकस्यनृपतेः सुदृशोऽनुपङ्गं, मेघाभयादिचरणप्रतिपत्तिरङ्गम् ।
अर्हेतसौधरसभृच्चरितोपदेशं, चक्रे प्रभुः ससहकारफलोपहारम् ॥ ३८ ॥

अन्वयः—स प्रभु सुदृशः श्रेणिकस्य नृपतेः अनुपङ्गम् मेघाभयादिचरणप्रतिपत्तिरङ्गम् अर्हत्सौधरसभृच्चरितोपदेशं ससहकारफलोपहारम् चक्रे ॥३८॥

व्याख्या—स महावीरप्रभुः सुदृशः सु शोभना दृक् नेत्रं यस्य तस्य सम्यक्दर्शनस्य यद्वा सुदृक् ज्ञानं यस्य तस्य सुज्ञानिनः श्रेणिकस्य श्रेणिकनाम्नः नृपतेर्भूभुजः अनुषङ्गम् अनुगतम् मेघाभयादिचरणप्रतिपत्तिरंगम् मेघः मेघकुमारः अभयः अभयकुमारः तौ आदिर्यस्मिन् स मेघाभयादिः तेषा मेघाभयादीनां चरणप्रतिपत्तिः चारित्र्यग्रहणम् तस्या रंगः अनुरागः यस्मिन् तम् तथोक्तम् मेघाभयादिभव्यजनचारित्र्यग्रहणप्रयोजकम् अद्वैतसौधरसभृच्चरितोपदेशम् अद्वैतः अभिन्नः अनुपम इत्यर्थः सुधायां भवः सौधः स चासौ रसश्चेति सौधरसः अद्वैतश्चासौ सौधरसश्चेति अद्वैतसौधरसः सुधास्वादसहोदरः तम् बिभर्त्तीति अद्वैतसौधरसभृत् स चासौ चरितोपदेशश्चेति तम् सहकारफलेन सहितम् ससहकारफलम् तस्य उपहारः ढौकनम् यत्र तमिव आम्रफलोपहारकल्पम् चक्रे विदधे प्रभुस्सदेशनान्ददाविति भावः ॥ ३८ ॥

अन्यपक्षे—स जिनेन्द्रः श्रेणिकस्य प्राप्तश्रेणिकस्य संख्यावतः अनुषंगम् अनुगतम् मेघाना पापिनां भयादिचरणम् भयप्रापणादिकम् तस्य प्रतिपत्तिरङ्गम् प्राप्तिजनकमन्यत् पूर्ववत् यद्वा श्रेणिकस्य श्रेणीभूतस्य पंक्त्याकारेणोपविष्टस्य नृपतेः अनुषङ्गमुद्दिष्टम् मेहतिसिञ्चतीति मेघः वागमृतसेकः अभयः कुतश्चनभयाभावः इत्यनयोर्द्वन्द्वः स आदिर्यत्र तम् वागमृतवर्षणाभयप्रदानादिप्रवृत्तिप्रयोजकम् अन्यत् पूर्ववत् ॥ ३८ ॥

रामकृष्णपक्षे—सुदृशः शोभनज्ञानवतः नृपतेर्भूपस्य स श्रेणिकस्य समंडलस्य मेघाभयादिचरणप्रतिपत्तिरङ्गम् मेघात् मेघनादात् रक्षसः यः अभयादिः निरुपद्रवता तस्य चरणप्रतिपत्तिरंगम् निर्बाधप्रचारम् कृष्णपक्षे मेघेन मेघवड्ढकावादनेन ये केचन दीक्षा ग्रहीष्यन्ति तेषां परिवाराणा यथावत्पालनं कारिष्यामीतिरूपं, अभयादिना गृहपरिवारचिन्तानिरासेन चरणस्य चारित्र्यस्य प्रतिपत्तिरङ्गम् ग्रहणप्रचारम् अन्यत् पुर्ववत् ॥ ३८ ॥

स-श्रेणिकक्षितिपसन्मतिशासनेन, दुर्गन्धिकाधिगमनेन सुगन्धिवाक्यात् ।
मैत्र्यार्द्रभाविययनाङ्गजसन्निरोध-स्तस्मात् बभूव भविनां मदनान्निरोधः ॥ ३९ ॥

अन्वय — तस्मात् सुगन्धिवाक्यात् श्रेणिकक्षितिपसन्मतिशासनेन दुर्गन्धिकाधिगमनेन मैत्र्या स आर्द्रभाविययनाङ्गजसन्निरोधः भविनां मदनान्निरोधः बभूव ॥ १ ॥

व्याख्या—तस्मात् सुगंधिवाक्यात् शोभनसंबन्धयुक्तात् वाक्यात् उपदेशादित्यर्थः श्रेणिकक्षितिपसन्मतिशासनेन श्रेणिकश्चासौ क्षितिपश्चेति श्रेणिकक्षितिपः तस्य सन्मतिशासनेन सद्बुद्धिसदुपदेशेन नियोगेन दुर्गन्धिकाधिगमनेन दुर्गन्धिकाभिधानमहिषीचारित्र-गमनेन मैत्र्या सौहार्देन स प्रसिद्धःअभयकुमारसौहार्देन आर्द्रभावि आर्द्रदेशोत्पन्नः यः यवनाङ्गजः यवनतनयः तस्य सन्निरोधः सज्ज्ञानम् भविना भाग्यवता मदनात् कामात् अभिलाषात् निरोधः निवृत्तिश्च बभूव जज्ञे सदुपदेशादेव दुर्गन्धिकाधिगमनं यवनकुमार-बोधश्च बभूवेति भावः ॥ ॥ ३९ ॥

अन्यार्थे—तस्मात्पूर्वोक्तादुपदेशात् सुगंधिवाक्यात् शोभनो लोकविलक्षणो गन्धः संबंधो यत्र स सुगंधिः "समासान्त इत्" स चासौ वाक्यश्चेति तस्मात् सदुपदेशवचनात् स श्रेणिकक्षितिपसन्मतिशासनेन समण्डलराजबुद्धिपरिवर्त्तनेन दुर्गन्धिकाधिगमनेन दुः दुष्टः गंधः संबन्धो यस्याः सा दुर्गन्धा सैवदुर्गन्धिका तस्याः अधिगमनेन सदसद्विवेकेन मैत्र्यार्द्रभावि मैत्र्यात् सर्वजनापकारराहित्येन सर्वोपकारेण आर्द्रम् दयाक्लिन्नं भावोऽभिप्रायो येषान्ते मैत्र्यार्द्रभाविनः यवनः वेगवान् यः अङ्गजः क्रोधादिः मैत्र्यार्द्रभाविनश्च यवनाङ्गश्च तेषां सन्निरोधः सज्ज्ञानं भविनां कल्याणवतां मदनात् कामात् सन्निरोधः कामुकता निवृत्तिश्च बभूव ॥ ३९ ॥

ानन्दधीऋषभवृत्तशमप्रवृत्तिं, नोसज्जमालिवदनं तदनन्तकायम् ।
सानन्दशङ्खचुलनीप्रियदीर्घवृत्त्या, गोशालिभद्रचरितस्फुरितं जगाद ॥ ४० ॥

अन्वयः—सानन्दधीऋषभवृत्तशमप्रवृत्तिम् जमालिवदनम् तदनन्तकायम् नो सत् सानन्दशखचुलनीप्रियदीर्घवृत्त्या गोशालिभद्रचरितस्फुरित जगाद ॥४०॥

व्याख्या—आनन्दः आनन्दनामा श्रावकः तस्य धीः बुद्धिः तस्याम् ऋषभा श्रेष्ठा वृत्ता दृढा "वृत्तं वृत्तौ दृढे मृते" इति हैमः या शमप्रवृत्तिः शांतिभावसंचारस्तेन सहिता इति मानन्दधीऋषभवृत्तशमप्रवृत्तिः ताम् जगाद अथ च जमालिवदनम् जमालेः प्रथमनिह्नवस्य वदनं. उद्यत इति वद्धातोः भावे अनट् कथनं नो सत् न परमार्थसाधनयोग्यम् यतः अनन्तकायम् अनन्तानन्तशरीरसम्पादकम् सानन्दशंखचुलनीप्रियदीर्घवृत्त्या सानन्दः मप्रमोदः यः शंखः स च चुलनीप्रियश्च तयोर्द्वन्द्वः तस्य दीर्घवृत्त्या चिरवृत्त्या गोशालिभद्रचरितस्फुरितम् गोशालिभद्रस्य यच्चरितं चरित्रम् तेन स्फुरितम् विलसितम् जगाद उपदिदेश ॥

अन्यतीर्थकरचतुष्टयपक्षे—आनन्देन सहिता धीर्येषां ते सानन्दधियः ते च ते ऋषभाः श्रेष्ठाश्चेति सानन्दधीऋषभाः "अविवक्षया न संधिः" तेषां वृत्ते व्यवहारे शमं प्रवर्त्तयति योजयतीति शमप्रवृत्तिम् असज्जम् परस्परबाधसहितम् आलिवचनम् आलम् अनर्थोऽत्रास्तीति आलि तच्चवदनश्चेति आलिवचनम् नो नैव भवति तद् अनन्तकायम् अनन्तशरीरजनकत्वादेव न तथाभूतन्न सानन्दशंखचुलनीप्रियदीर्घवृत्त्या आनन्दयति श्रावकजनमनो ह्लादयतीति आनन्दः शं सुख जनयतीति शंखः श्रेयस्करः चोलयति समुच्छाययतीति चुलनी यद्वा चुल समुच्छ्रायं नयतीति उत्पादयतीति चुलनी एतेषान्द्वन्द्वः इति आनन्दशंखचुलन्यः तैः सहितः प्रिय इति सानन्दशं-

मनुरनीप्रियः तेषां दीर्घवृत्त्या चिरानुवृत्त्या अनन्तकालस्थित्या अनन्तकालपर्यन्त मानन्दकल्याणसमुच्छ्रायजनकम् इत्यर्थः गोशालिभद्रचरितस्फुरितम् गया वाण्या शालते शोभते इति गोशालि भद्राणां पुण्यशालिनाम् चरितेन आख्यानेन स्फुरितम् विलसितम् जगाद उवाच ॥ ४० ॥

रामकृष्णपक्षे—मानन्दधी ऋषभवृतशमप्रवृत्तिम् मानन्दधियः ये ऋषभाः श्रेष्ठाः तेषां वृत्ते व्यवहारे शमप्रवृत्तिम् शान्तिसंपादकम् अनन्तकायम् अनन्ता अनेकशः कायाः संघा यत्र तम् आलिवदनम् रोचकवचनम् अमज्जम् अस्फीतम् नो नैव किन्तु स्फीतम् विशदम् आनन्दयतीति आनन्दः लक्ष्मण. बलदेवश्च अथवा आसमन्तान्नन्दयतीति आनन्दः नन्दकनामातयोः खड्गः " कौमोदकी गदा खड्गो नन्दकः कौस्तुभोमणिरित्यमरः " शंखः पाचजन्यनामा चुलनी चुलमैश्वर्यन्नयतीति चुलनी कौमोदकीगदा तेषां प्रिया मनोज्ञा दीर्घवृत्तिः अत्यन्तसंबन्धः तया गोशालिभद्रचरितस्फुरितम् यथास्यात्तथा जगाद कथयामास ॥ ४० ॥

सद्भावभावितमना भविता कुमार–स्तच्चिल्लणातनुजभूपतिसाधनानि ।
वैशालिकोक्तिरणमंशुकरोपतापे, शुद्धाम्बुदेवमुनिभिर्ह्यमृतं न पीतम् ॥ ४१ ॥

अन्वयः—कुमारः सद्भावभावितमना भविता तत् चिल्लणातनुजभूपतिसाधनानि वैशालिकोक्तिरणं अंशुकरः अपतापे देवमुनिभि. शुद्धाम्बु न पीतम् अमृत हि (पीतम्) ॥ ४१ ॥

व्याख्या—महावीरपक्षे—वैशालिकस्य वर्धमानस्वामिनो या उक्तिः उपदेशना तस्या रणं श्रवणं तदेव अंशुकरः प्रभाकरः अज्ञानतिमिरनिराकरणनिपुण इत्यर्थः तत एव अपतापे अपगतः निराकृतः तापः सांसारिकत्रिविधतापो येन तस्मिन् सति देवमुनिभिः

आत्मतत्त्वप्रकाशभासमानमुनिभिः यद्वा देवमान्यमुनिभिः किंवा देवाश्च मुनयश्च तैर्देवमुनिभिः शुद्धाम्बु निरवद्यजलं प्राकृतमित्यर्थः न पीत तदानीं तापविरहात् प्राकृतनिरवद्यजलाभिलाषिणो न जाता इत्यर्थः किन्तु अमृतं तदीयोपदेशवचनामृतं पीतं श्रुतमित्यर्थः किञ्च तस्मादेव कुमारः अभयकुमारः सद्भावभावितमना सद्भावेन चारित्रजिघृक्षया भावितं वासितं मनोऽन्तःकरणं यस्य स सद्भावभावितमना भविता भविष्यति तदेव कुमारसंयमग्रहणमेव चिल्लणातनुजभूपतिसाधनानि चिल्लणायाः तनुजस्य तनयस्य कोणिकस्येति यावत् भूपतिसाधनानि नृपत्वप्रयोजकानि भविष्यन्तीति शेषः ॥

अन्यतीर्थकरपक्षे—वैशालिकोक्तिरणं विशालायां अयोध्यायां भवः वैशालिकः यद्वा विशेषेण शालते शोभते महापुरुषजन्मपावितत्वात् विशाला तत्र भवः वैशालिकः तस्य उक्तिः तस्याः रणं श्रवणं उपदेशनम् तदेव अंशुकरः उद्योतकारकः अज्ञाननिरसनः अत एव अपतापे तापरहिते सति देवमुनिभिः पूर्ववर्णितप्रकारमेवावसेयम् तच्चिल्लणेति तत्–तदुपदेशश्रवणमेव चित्ज्ञानं रणति प्राप्नोति इति चिल्लणः "रलयोरैक्यात्" तस्य ज्ञानवतः अतनुजशुवः अयोनिजायाः मुक्तेः पतिसाधनानि स्वामित्वकारणानि कैवल्यप्रापकाणीत्यर्थः तथा च कुमारः कौ भुवि मार इव अप्रतिहतप्रभावः भव्यजीव इत्यर्थः सद्भावभावितमना भविता "भूते श्वस्तनी" आदिना-

थरामपक्षे कुमारो भरतः ॥

कृष्णपक्षे—कुमारः प्रद्युम्नः शाम्बश्च देवमुनिः नारद इति ॥ ४१ ॥

एवं देवनृदेवसेवितपदश्रीमद्विभोः केवले, सिद्धे राज्यविधिर्नयो दयमयः प्रासीसरन्निर्भयः ।

ध्वस्तं दुर्जनकल्किदुष्कृतमिह प्रादुष्कृतं सत्कृतं, संलग्ने सकले कलेरपि बले सोऽयं प्रभावो विभोः ४२

इतिश्री सप्तसंधाने महाकाव्ये महोपाध्यायश्रीमेघविजयगणिकृते भगवत्केवलज्ञानसाम्राज्यविहारनामा सप्तमः सर्गः ॥ ७ ॥

अन्वय.—एवं देवनृदेवसेवितपदश्रीमद्विभोः केवले सिद्धे नयो दयमय राज्यविधि. निर्भयः प्रासीसरत् इह दुर्जनकल्किदुष्कृत ध्वस्तम् सत्कृतम् प्रादुष्कृतम् कलेः सकले अपि बले संलग्ने सति सोऽयं विभोः प्रभावः ॥ ४२ ॥

व्याख्या—एवं पूर्वोक्तप्रकारेण देवनृदेवसेवितपदश्रीमद्विभोः देवा अमराः नृदेवाः नराधिपाश्चतैः सेवित आराधितः पदश्चरणो यस्य स देवनृदेवसेवितपदः स चासौ श्रीमद्विभुश्चेति तस्य तथोक्तस्य देवा देवसेवितचरणस्य जिनेन्द्रस्य केवले केवलज्ञाने सिद्धे प्राप्ते सति इह भूमौ दुर्जनकल्किदुष्कृतम् कल्कम् पापमस्यास्तीति कल्की दुर्जनश्चासौ कल्की चेति दुर्जनकल्की तस्य दुष्कृतम् पापम् ध्वस्तम् निरस्तम् कलेः कलहस्य सकले अपि समस्ते अपि बले सामर्थ्ये संलग्ने समागते सत्यपि "युद्धं तु संख्य कलिरिति हैमः" सत्कृतम् शोभनकल्याणं सुकृतमित्यर्थः प्रादुष्कृतम् प्रादुर्भूतम् नयो दयमयः नयस्य नीतेः उदयः प्रादुर्भावस्तन्मयः तत्प्रचुरः "प्राचुर्ये मयट्" राज्यविधिः शासनविधिः निर्भयः विगतभीः प्रासीसरत् प्रावर्त्तत सोऽयं विभोः जिनेश्वरस्य प्रभावः ॥ शार्दूलविक्रीडितं छन्दः । अन्यपक्षेऽपि साधारणम् ॥ ४२ ॥

इति तपागच्छाधिराजभट्टारकाचार्यश्रीविजयामृतसूरीश्वरप्रणीतायां सप्तसंधानमहाकाव्यसरणीटीकायां सप्तमः सर्गः ॥ ७ ॥

## ॥ अथ अष्टमः सर्गः ॥

अथ जगत्त्रयभावनिवेदिना भविभयङ्करभावविभेदिना ।
दिवि पुरस्सरचक्रमहाध्वजानुगमनैगमनैपुणतो जगे ॥ १ ॥

अन्वय – अथ जगत्त्रयभावनिवेदिना भविभयङ्करभावविभेदिना दिवि पुरस्सरचक्रमहाध्वजानुगमनैगमनैपुणतो जगे ॥ १ ॥

व्याख्या–अथ अथानन्तरम् जगत्त्रयभावनिवेदिना जगतां त्रयम् जगत्त्रयम् जगत्त्रयाणां भावः अभिप्रायः जगत्त्रयभावः तन्निवेदितुं ज्ञातुं शीलमस्येति जगत्त्रयभावनिवेदी तेन तथोक्तेन भविभयङ्करभावविभेदिना भविनाम् भाग्यवताम् यो भयङ्करभावः दुःखजनकदुरदृष्टः त भिभेत्तुं पृथक्कर्तुं शीलमस्येति भविभयङ्करभावविभेदी तेन तथोक्तेन दिवि पुरस्सरचक्रमहाध्वजानुगमनैगमनैपुणतो दिवि आकाशे पुरस्सरः अग्रेसरः यः चक्रः दैवप्रभावावनताख्रविशेषः महाध्वजश्चेति तयोर्द्वन्द्वः पुरस्सरौ च तौ चक्रमहाध्वजाविति पुरस्सरचक्रमहाध्वजौ तयोः अनुगमनेऽनुसरणे यो नैगमः नितिः विवेकःस्तस्मिन् यो नैपुणः दाक्ष्यम् स पुरःसरचक्रमहाध्वजानुगमनैगमनैपुणः तस्मात नैपुणतः दाक्ष्यात् जगे जग्मे यद्वा सार्वविभक्तिकस्तसिल् इत्यनुगमनैगमनैपुणेनेति तथोक्तः तृतीयान्तविशेषणम् । अत्र सर्गे भरतचक्रवर्त्तिनो दिग्गिजयवर्णनम् । द्रुतविलम्बितश्चवृत्तम् द्रुतविलम्बितमाह नभौ भरौ इति तल्लक्षणात् ॥

अन्यपक्षे—अथ अथानन्तरम् जगत्रयस्य त्रिजगतो यो भावः पदार्थः जीवाजीवादिरूपः तन्निवेदयति बोधयतीति तच्छीलः तेन भविभयंकरभावविभेदिना भविनां सद्भाग्यवता यो भयंकरभावः दुर्गतिजनकाचारः तं विभेदयति निराकरोतीति तच्छीलस्तेन सद्भा-

स्वप्नालिदुर्गतिनिवारकेण जिनेन्द्रेण दिवि आकाशे पुरःसरः अग्रेसरः यश्चक्रमहाध्वजस्तस्यानुगमनेऽनुसरणे ये नैगमास्तेषां नैपुण्येन कौशल्यतः सततसंगमतो जगे विजह्रे अन्यपक्षे भरतपक्षेऽज्ञेयम् ॥ १ ॥

हयरयक्षुरभिन्नमहीतलाद् दिवि समुद्गमनेन रजोव्रजः ।
किमिव वक्ति स शक्तिमहोदयं स्वरपितारपितामहसंसदि ॥ २ ॥

अन्वय.—रजोव्रजः हयरयक्षुरभिन्नमहीतलात् दिवि समुद्गमनेन स्वरपि तारपितामहसंसदि शक्तिमहोदयम् स किम् वक्तीव ॥ २ ॥

व्याख्या—रजोव्रजः धूलीसमूहः हयरयक्षुरभिन्नमहीतलात् हयानां अश्वाना यो रयः वेगो द्रुतगतिरित्यर्थः स हयरयः क्षुरेण शफेन भिन्नः क्षुण्णः छिद्रित उत्खात इति यावत् इति क्षुरभिन्नः हयरयेण क्षुरभिन्नः यो महीतलम् भूतलम् स हयरयक्षुरभिन्नमहीतलम् तस्मात् दिवि समुद्गमनेन दिवि आकाशे समुद्गमनेन संलग्नेन हेतुना स्वरपि स्वर्गेऽपि तारपितामहसमदि तारा अत्युन्नता या पितामहस्य ब्रह्मणः संसद् सभा तत्र स रजोव्रजः शक्तिमहोदयम् शक्तेः चक्रास्त्रस्य महोदयमाविर्भावम् अथ च शक्तेः भरतचक्रवर्तिनः प्रभुत्वस्य महोदयम् प्रभूताधिपत्यम् किम् किमु वक्तीव कथयतीव ब्रह्मसंसदि तत्सामर्थ्यं सूचयतीति क्रियोत्प्रेक्षातिशयोक्तिमूला सर्वसाधारणमेतत् ॥ २ ॥

पुरत एव दिगम्बरसंवराद् विहितसन्निहितारुणमण्डलः ।
किमु विभोरवदत् स सुसौरभाढ्यदशां यदसान्ध्यरजोभरः ॥ ३ ॥

अन्वय.—पुरत एव दिगम्बरसंवरात् विहितसन्निहितारुणमण्डलः असान्ध्यरजोभरः स विभो सुसौरभाढ्यदशा किमु अवदत् ॥ ३ ॥

व्याख्या—पुरतः प्रथमतः दिगम्बरसंवरात् दिक्शून्यमेव अम्बरं वसनं यस्य तद्दिगम्बरं नभः तस्य संवरणादाच्छादकत्वात् आव

रक्तत्वादित्यर्थः विहितसन्निहितारुणमण्डलः विहितः कृतः सन्निहितः अभ्यर्णः अरुणस्य सूर्यसारथेर्मण्डलो येन स अरुणमण्डलसमीपस्थः स असांध्यरजोभरः सांध्यरजोभिन्नरजः सैन्यपदोत्थधूलीसमूहः सुसौरभाद्वयदशा सुष्ठु सौरभस्य अद्वयदशाम् अद्वितीयकान्तिम् यद्वा सुष्ठु सौरभा सूर्यसम्बन्धिकान्तिः तस्या द्वयदशां द्वितीयावस्थां अन्यसौरकान्तिम् विभोर्ब्रह्मणः अवदत् किमु अकथयत् किमुत्प्रेक्षयमिति भावः ॥ ३ ॥

हरिपरिस्फुरितां दिशमाविशत्, स्थितिमुदीर्य विभुर्भरतं प्रति ।
शुभरते भरतेऽविरते रतेः, प्रथमतोऽथ मतोऽवनिचक्रिणाम् ॥ ४ ॥

अन्वयः—अथ विभु हरिपरिस्फुरितान्दिशम् आविशत् भरत प्रतिस्थितिमुदीर्य शुभरते रते अविरते महते अवनिचक्रिणा प्रथमतः मतः ॥ ४ ॥

व्याख्या—अथ विभुर्व्यापकः देवताधिष्ठातृत्वात् चक्ररत्नम् हरिपरिस्फुरिताम् दिशम् ऐन्द्रीदिशां पूर्वामित्यर्थः आविशत् आयात् योजनमात्रं गत्वा भरतं प्रति भरतराजानं प्रति स्थितिमेव स्थानमुदीर्य यत्र चक्रस्थितस्तत्रैव सर्वसैनिकानां स्थितिर्जातेति भावः शुभरते शुभे कर्मणि कल्याणजनकाचारे रते व्यावृते रतेः रागात् अविरते रागाशक्ते भरते भरतचक्रवर्त्तिनि विषये अवनिचक्रिणाम् पृथ्वीतल चक्रवर्त्तिनाम् प्रथमतः मतः प्रथमोऽयञ्जातः सर्वचक्रवर्त्तिनामाद्योऽयमिति भावः ॥ ४ ॥

अभिनमय्य पुरः सुरमागधं तदनु तद्वरदाम मुदः पदम् ।
वरुणदिक्प्रभयासभयाऽमुना परिगताऽरिगतासुहृता कृता ॥ ५ ॥

अन्वय—पुरः सुरमागधम् अभिनमय्य तदनु मुदः पद तद्वरदाम अभिनमय्य अमुना प्रभया सभया वरुणदिक् परिगता अरिगता सुहृता कृता ॥५॥

व्याख्या—पुरः पूर्वम् सुरमागधं सुरत्वाभिमानिनम्मगधनीर्थेशम् अभिनमय्य अभिनामयित्वा तन्नम्रीभूतं विधायेत्यर्थः तदनु तत्पश्चात् मुदः पदम् हर्षकारकम् अथ च मुदः प्रमदस्य प्रकर्षगर्वस्य पदम् स्थानम् अत्यंतगर्विष्ठम् तत् प्रसिद्धम् वरदाम वरदामाधिपतिम् अभिनमय्य नामयित्वा स्वाधीनं विधाय प्रभया कात्या प्रतापेन सभया भययुक्ता वरुणदिक् प्रतीचीदिक् परिगता गमनविषयीकृता तत्रेति शेषः अरिगता शत्रुभूता विपक्षायिना सुहृदा कृता ये शत्रवस्तेऽपि मित्राण्यासन्निति भावः ॥

अन्यपक्षे गुरु गजने इति सुरः स चासो मागधः मगधानामीशीता इति सुरमागधः जरासंधस्तम् अभिनमय्य पराजित्य तदनु तत्पश्चात् तद्वरदाम तेन जरासंधेन वरन्दाम वन्धनं यस्य तत् तद्वरदाम जरासंधनियमितराजसमुदायम् मुदः पदम् सहर्षम् विधायेति शेषः वन्यत् पूर्ववत् ॥ ५ ॥

रामपक्षे पुरः अग्रे प्रथमं सुरमागधं सुरैर्देवैः महस्त्रयक्षैश्च मगध्यति परिवेष्ट्यते इति सुरमगधः स एव सुरमागधस्तं महस्त्रयक्षाधिष्ठितं वज्रावर्तार्णवावर्तनामकन्धनुः अभिनमय्य नमयित्वा तदनु धनुर्नमनानन्तर मुदः पदम् हर्षकारकं तद्वरदाम सीतावरणस्रजम् अभिनमय्य स्वकण्ठार्पितं विधाय वरुणदिक् प्रभया सभया अरिगता शत्रुभूता अमुना रामेण सुहृदा मित्रभूता ॥ ५ ॥

सवरंगं वरणं सरितस्तटे, हरिरधाद्‌ धरणेः स्ववलस्थितो ।
सवलयः खलु सिन्धुमनीतरत्, स्वमहसा महसारमहानृपैः ॥ ६ ॥

अन्वय.—धरणे· हरि· स्वबलस्थितौ सरितस्तटे सवरण वरण अधात् स खलु सवलय: स्वमहसा महसारमहानृपैः सिन्धुमतीतरत् ॥ ६ ॥

व्याख्या—धरणेः पृथिव्याः हरिः इन्द्रः धरणीन्द्रः स्वबलस्थितौ स्वबलस्य सैन्यस्य स्थितौ स्वसैन्यनिवेशाय सरितस्तटे सरतः अपरोदधेस्तटे रोधसि सवरणं वरणं वरणेन प्राकारेण सहितम् तदानीं सेनारक्षकरूपप्राकारसहितम् वरणं स्थितिं उपनिवेशम् अधात् कृतवान् सेनासन्निवेशं कृतवानित्यर्थः सबलयः सपरिकरः स्वमहसा निजतेजसा महसारमहानृपैः महेन उत्सवेन सारः श्रेष्ठः यो महानृपः तैः यद्वा महस्तेजोवत् यः सारो बलम् स महसारः स चासौ महानृपश्चेति महसारमहानृपः तैः तेजोवद्भिर्नृपैः सहेति शेषः सिन्धुम् सिन्धुनामानं नदीविशेषम् अतीतरत् तरतिस्म ॥ ६ ॥

शिवमगुः किल कोटिमुनीश्वरा, यदिह तां स शिलां सहसा दधे ।
प्रतिकृतीः प्रणनाम ततोऽर्हतां, व्रजनतो जनतोषकरीर्नृपः ॥ ७ ॥

अन्वयः—यदिह किलकोटिमुनीश्वराः शिवमगु. ता शिलां स सहसा दधे ततः व्रजनत. नृपः जनतोषकरी. अर्हतां प्रतिकृतीः प्रणनाम ॥ ७ ॥

व्याख्या—यद् यस्मात् इह कोटिशिलातीर्थे कोटि मुनीश्वराः कोटिसंख्यकमुनिप्रवराः शिवम् मोक्षम् अगुः किल गताः किल ताम् शिलाम् स भरतचक्रवर्त्ती सहसा झटिति आदधे धृतवान् ततः तदनन्तरम् व्रजनतः गमनतः नृपः भरतमहीपतिः जनतोषकरीः जनानां लोकानां तोषकरीःतुष्टिकरीः कल्याणसंपादिकाः अर्हतां जिनानाम् प्रतिकृतीः प्रतिमाः प्रणनाम प्रणतिस्म ॥ ७ ॥

उपतमिस्रचलद्बहुसेनया, व्यपनयन्ननयाद्विनयादरात् ।
अवितथाः पथि पूर्वकथा बुधात् , समशृणोन्मसृणोऽवनिजे निजे ॥ ८ ॥

अन्वयः—उपतमिस्रचलत् बहुसेनया विनयादरात् अनयात् व्यपनयन् पथि बुधात् अवितथाः पूर्वकथाः निजे अवनिजे मसृणः समशृणोत् ॥ ८ ॥

व्याख्या-बहुसेनया अनेकविधसैन्येन सह उपतमिस्रचलन् तमिस्रानामकगुहां प्रति चलत् उपतमिस्रं चलतीति उपतमिस्रचलत् विनयादरात् विनयस्य शिक्षाया अनुनयस्य सौजन्यस्य वा आदरात् सन्मानात् अनयात् अनीतेः लोकमिति शेषः व्यपनयन् विनयादरेण अनीतितः लोकान् पृथक्कुर्वन् इति भावः निजे स्वकीये अवनिजे लोके मसृणः ऋजुः अकर्कश इत्यर्थः स्वकीयजनानुकूल इति भावः पथिमार्गे बुधात् पण्डितात् अवितथाः सत्याः पूर्वकथाः प्राचीनेतिहासाः पूर्वपाम्ना चरित्राणि समशृणोत् आकर्णितवान् ॥ ८ ॥

जगति यः सविता भविताऽर्चिषा, स नु गुहां सवहां नवपद्यया ।
ध्रुवमतीत्य गिरेस्तदुदग्दिशो, वशमधाच्छमधीरणया-जनम् ॥ ९ ॥

अन्वयः—यः जगति अर्चिषा सविता भविता स नु नवपद्यया सवहां गिरेः गुहां ध्रुवमतीत्य शमधीरणया तदुदग्दिशः जनम् वशमधात् ॥ ९ ॥

व्याख्या—यः भरतचक्रवर्ती अर्चिषा तेजसा प्रतापेनेत्यर्थः जगति भुवने सविता सूर्यः भविता भविष्यति स नु इति वितर्के नवपद्यया नूतनसेतुरूपपद्धत्या सवहां वहया उन्मग्नानिमग्नाभिधाननदीद्वयया सहिता इति सवहा ताम् गिरेः वैताढ्यपर्वतस्य गुहां तमि-

स्रा नाम्नीं गुफां ध्रुवमतीत्य समुल्लंघ्य तदुदग्दिशः तदुत्तरदिशायाः जनम् तदुदग्दिशस्थितम्लेच्छादिलोकम् शमधीरणया शमा शान्ता या धीर्बुद्धिस्तस्या ईरणया प्रेरणया शातिबुद्धिप्रयोगेन वशम् स्वाधीनम् आत्ममात् अधात् अकृत ॥ ९ ॥

परदलत्रितयं दलयन् बलं, प्रचलयन् कलयन् सततो धनम् ।
ऋषभकूटनिजाह्वयलेखने, महिमभूहिमभूभृतमभ्यगात् ॥ १० ॥

अन्वय —स परदलत्रितय दलयन् बलम् प्रचलयन् तत. धनम् कलयन् ऋषभकूटनिजाह्वयलेखने महिमभूहिमभृतम् अभ्यगात् ॥ १० ॥

व्याख्या—स चक्रवर्त्ती परदलत्रितयं परेषां शत्रूणां आपात, नागकुमार, हिमाद्रिकुमाराणां दलत्रितयं सैन्यत्रयम् दलयन् पराजयमानः बलं स्वकीयसैन्यम् प्रचलयन् गमयन् ततः पराजितनृपात् धनम् संपत् कलयन् संचिन्वन् ऋषभकूटनिजाह्वयलेखने ऋषभकूटनामपर्वते यन्निजाह्वयलेखनम् स्वाभिधानाङ्कनम् तस्मिन् " निमित्ते सप्तमी " महिमभूहिमभूभृतम् महिम्नः महत्तायाः भूःस्थानम् इति महिमभूः स चासौ हिमभूभृच्चेति महिमभूहिमभूभृत् हिमालयपर्वतस्तं अभ्यगात् अभ्ययासीत ॥ १० ॥

पुनरुपेत्य धरं खचरेशिनां, परदरीमपि खण्डनिपातिनीम् ।
समतिगत्य निधीन्नव सन्निधौ, न स मदी समदीधरदीश्वरः ॥ ११ ॥

अन्वयः—पुनः खचरेशिनाम् धरम् उपेत्य खंडनिपातिनीम् परदरीमपि समतिगत्य न समदी ईश्वरः सन्निधौ नवनिधीन् समदोधरत् ॥ ११ ॥

व्याख्या—पुनः पुनरपि खचरेशिनाम् विद्याधरगणाम् नमिविनमिप्रभृतीनाम् धरम् पर्वतम् उपेत्य आगत्य तत्रत्यान् विजित्य खंडनिपातिनीम् खण्डप्रपातानाम्नीम् पादरीम् महतीं गुहाम् समतिगत्य समतीत्य स राजा मदी अहङ्कारवान न ईश्वरः. ऐश्वर्यम-स्पन्नः सरितो समीपे नवनिधीन् नवप्रकारान् निधीन् ऐश्वर्यविशेषान् समदीधरत् धृतवान " महापद्मश्च पद्मश्च शंखो मकरकच्छपौ । मुकुन्दकुन्दनीलाश्च खर्वश्च निधयो नवेत्यमरः" ॥ ११ ॥

सुरधुनीतटगानधुनीत स, क्षतपरातपराज्यपरिग्रहः ।
स्वपुरमाप्य समास्त पुनः पुना, रसमयान् समयाननयन्महैः ॥ १२ ॥

अन्वय—स सुरधुनीतटगान् अधुनीत क्षतपरातपराज्यपरिग्रहः स्वपुरमाप्य पुनः पुनः महैः रसमयान् समयान् अनयत् समास्त ॥ १२ ॥

व्याख्या—स भरतचक्रवर्ती सुरधुनीतटगान् गंगातटस्थान् अधुनीत अकंपयत पराजितवान् क्षतपरातपराज्यपरिग्रहः क्षतात् दुःखात् परे भिन्नाः रहिता इत्यर्थः इति क्षतपराः तपतीति तपः सूर्यः आतपात् सूर्यप्रकाशपर्यन्तं मर्यादायामव्ययीभावः क्षतपराः आतपं राज्यपरिग्रहो यस्य सक्षतपरातपराज्यपरिग्रहः स्वपुरं स्वनगरम् आप्य प्राप्य समागत्येत्यर्थः पुनः पुनः भूयोभूयः महैः उत्सवैः "मह उद्धव उत्सव इत्यमरः" रसमयान् सरसान् समयान् कालान् अनयन् व्यतीतयन् समास्त आतिष्ठत् ॥

अन्यपक्षेऽपि स सुरधुनीतटगान् सुरान् देवान् धुनाति स्वसामर्थ्येन कम्पयतीति सुरधुनी राक्षससेना तस्यास्तटं समीपं कक्षं वा तत्र गच्छतीति तान् राक्षससेनापक्षपातिनः अधुनीत व्यकंपयत यद्वा सुरधुनी गंगा तां तटति स्वसंगमेन सौभाग्योन्नतिङ्करोतीति

सुरधुनी तटः समुद्रः तत्र गच्छतीति तान् समुद्रतटगान् राक्षमान् पापिष्ठान् अधुनीत इत्यर्थोपि परिस्फुरति अन्यत् ममानम् ॥१२॥

विहितवान् हितवार्षिकदानतो, व्रतदशां तदशान्तमहोत्सवैः ।
घनतपा नतपादकजः सुरै-र्मदनतोदनतो वनभावनः ॥ १३ ॥

अन्वयः—घनतपा सुरैः नतपादकज. मदनतोदनतो वनभावनः हितवार्षिकदानत. तदशांतमहोत्सवै· व्रतदशां विहितवान् ॥ १३ ॥

व्याख्या—घनतपाः घनो महान् तपः प्रभावो यस्य स महत्पराक्रमः नतपादकजः सुरैर्देवैर्विद्याधरादिभिः नतः प्राणतः पादकजं चरणकमल यस्य स अथवा सुष्ठु रांतीति सुराः नृपाः तैः नतपादकजः नमस्कृतचरणकमलः मदनतोदनतो वनभावनः मदयतीति मदनं मधु सुरेति यावत् तस्य तोदनतः निराकरणतः अथवा मदनस्य कामस्य तोदनतः स्वसौन्दर्यात् पराजयतः यद्वा मदनस्याहंकारस्य तोदनतस्त्यागतः अहंकारपरित्यागात् अवनभावनः अवने रक्षणे भावना विचारणा यस्य स प्रजारक्षणसावधानः यद्वा वने तपोवने भावना बुद्धिर्यस्य स हितवार्षिकदानतः हित हितार्थं यद्वार्षिकदानं तस्मात् तदशांतमनोरथैः तस्याः सुन्दर्याः अशान्तमहोत्सवैः अहर्निशमुद्भवैः व्रतदशां सुन्दरी व्रतग्रहणदशा विहितवान् कृतवान् ॥ १३ ॥

अन्यपक्षे—हितवार्षिकदानतः हितमिष्टसाधनभूतं परिणाममंगलजनकं यद्वार्षिकदानं संवत्सरव्यापकदानम् रामपक्षे चतुर्दशवर्ष यावत् वनवासस्येति शेषः दानं पालनम् ततः "दानं गजमदे पालने छेदने इति शब्दस्तोममहानिधिः" व्रतदशां दीक्षाग्रहणदशां वन वासनियमं वा विहितवान् कृतवान् कैः अशांतमहोत्सवैः अन्यदुक्तप्रायम् ॥ १३ ॥

विभविनां भविनां सहिते हिते, वितरणात्तरणात्तरसा भवात् ।
श्रितसमेतसमेतगिरो कृता-ऽव्यसनभासनभाक् प्रभुराययो ॥ १४ ॥

अन्वयः - विभविनां भविनां सहिते हिते श्रितसमेतसमेतगिरो तरसा भवात् वितरणात् हिते वितरणात् कृताऽव्यसनभासनभाक् प्रभु आययो ॥१४॥

व्याख्या—विभविना विभवशालिनां धनिनामित्यर्थः सहिते संयुक्ते श्रितसमेतसमेतगिरौ श्रितः आश्रितः शमेन शांत्या इतः युक्तः शमेतः श्रितः शमेतो यत्र सश्रितशमेतः स चासौ समेतगिरिश्चेति श्रितशमेतसमेतगिरिस्तत्र हिते कल्याणजनके तरसा झटिति भवात् संसारात् वितरणात् निवारकात् संसारविरक्तिकरणात् कृताऽव्यसनभासनभाक् कृतः समाश्रितः यो व्यसनः संसारानभिनिवेशः तस्य भासनं तेजः तस्माद्भासन तेजो भजते इति तथोक्तः प्रभुः जिनेश्वर आययौ आजगाम ॥ १४ ॥

रामकृष्णपक्षे—वितरणात् वितः निवृत्तः यो रणः संग्रामः तस्मात् "वातेरितड औणादिकः" तरसा झटिति भवात् समुद्रजलात् तरणात् पारगमनात् विभविना धनिना भविनां कल्याणवता सहिते युक्ते हिते हितकारके श्रितसमेतसमेतगिरौ शमेन शांत्या इतः युक्तः शमेतः शांतियुक्तः श्रितः आश्रितः गिरिवासिभिः समेतः सहितः इति श्रितसमेतः स चासौ शमेतः श्रितसमेतशमेतः स चासौ गिरिश्चेति श्रितसमेतसमेतगिरिस्तस्मिन् चित्रकूटेषु बलाद्रौ रैवतके वा कृतः आश्रितः योऽव्यसनः क्वापि अनभिनिवेशः तेन भासने भजते इति तथा प्रभुः रामः कृष्णो वा आययौ समागतवान् ॥ १४ ॥

हततमास्ततमास्तवनैः स्तुतः, क्वचन भाविनयाद् विनयात् क्वचित् ।
शुभविभा भविभाग्यबलात् पदौ, भुवनपावनपावनधीर्दधे ॥ १५ ॥

अन्वय.—ततमास्तवनेः स्तुत हततमा, भुवनपावनपावनधीः शुभविभाः क्वचन भाविनयात् क्वचिद्विनयात् भविभाग्यबलात् पदौ दधे ॥ १५ ॥

व्याख्या—ततमा विस्तृता ये स्तवनास्ते ततमास्तवनास्तैः अतिविस्तृतस्तुतिभिः स्तुतः कृतस्तवनः हततमा हतं विनष्टं तमः किल्विषं यस्य स विनिवृत्ततमाः शुभविभाः शुभा शोभनाविभा प्रकाशो यस्य स भुवनपावनपावनधीः भुवनस्य जगतः पावने पवित्रतायां पावना पूता निर्मला धीर्यस्य संसारपूतकरणपवित्रज्ञानवान् क्वचन कुत्रापि भाविनयात् भाविनां भाग्यवतां जनानां नयात् अनुनयात् यद्वा भावी भविष्यन् यो नयः शुभावहो विधिः तस्मात् "नयः शुभावहो विधिरित्यमरः" क्वचित् कुत्रापि विनयात् श्रद्धालुजनविनयतः प्रार्थनातः भविभाग्यबलात् भविनां शुभानुध्यायिनां भाग्यबलात् शुभादृष्टवशात् पदौ पादौ दधे धृतवान् निहितवान् यत्रायं गच्छति तत्रत्यजनानां शुभादृष्टमेव प्रभवतीति भावः ॥ १५ ॥

भृशमये समये किल केवलं, स कलयन् वलयन्नगमाश्रयत् ।
अधिकृताधिकृतानशनने वै, शिवरमां वरमाङ्गलिकीं दधौ ॥ १६ ॥

अन्वय.—भृशमये समये स किल केवलं कलयन् नग कलयन् आश्रयत् अधिकृताधिकृतानशनेन वै शिवरमा वरमागलिकीन्दधौ ॥ १६ ॥

व्याख्या—भृशमये समये अयने गच्छतीति अयः तस्मिन् भृशमतिशयम् समये काले अये गते सति "दीक्षाकालात् पूर्वलक्षं श्रवित्वा ततः प्रभु"रिति तच्चरिते किल इति निश्चये स प्रभुर्युगादीश्वरः केवलम् केवलज्ञानम् कलयन् आश्रयन् नगम् अष्टापदगिरिमाश्रयन् अष्टापदपर्वतं प्रतिगच्छन् नगम् पर्वतम् आश्रयत् प्रापत् अधिकृताधिकृतानशनेन अधिकृतम् अधिकारप्राप्तम् यत् अधिकृतानशनम् स्वीकृतानशनम् अधिकारप्राप्तत्वेन स्वीकृतानशनः त्यक्तचतुर्विधाहारः तेन शिवम् मोक्ष एव रमा लक्ष्मीस्तां शिवरमां मोक्षलक्ष्मीं परमाङ्गलिकीं परा श्रेष्ठा या मांगलिकी मङ्गलसाधिका ताम् निरतिशयमङ्गलप्रयोजिकाम् दधौ धारयामास मोक्षं प्रापेति भावः॥

श्रीशांतिनाथपार्श्वनाथपक्षे—नगमित्यस्य समेतगिरिम् समेतशिखरमिति प्रसिद्धम् ॥

श्रीनेमिनाथपक्षे—नगमिति गिरिनारपर्वतम् अधुनापि गिर इति नाम्ना प्रसिद्धोऽयन्नगः ॥

श्रीमहावीरपक्षे—न गच्छतीति नगः नगरम् पावापुरमित्यर्थः ॥

रामपक्षे—भृशमये समये भृशमतिशयं समये काले अये गते सति स रामः केवलं केवलज्ञानम् कोटिशिलायाम् कलयन् आश्रयन् कलयन् ततोऽपि विहरन् नगम् शत्रुञ्जयगिरिम् आश्रयत् प्रापत् अधिकृताधिकृतानशनेन अधिकारप्राप्तत्वेन स्वीकृतचतुर्विधाहारपरित्यागेन परमांगलिकीम् अतिशयकल्याणजननीं शिवरमा मोक्षलक्ष्मीन्दधौ धारयामास प्राप ॥ १६ ॥

कृष्णपक्षे—स कृष्णः केवलम् के जले समुद्राम्बुनि वलयति रमते इति केवलम् कलयन् भृशमतिशयं समये अये व्यतीते सति कलयन् परिभ्रमन् नगम् अनन्तकम् आश्रयत् प्रापत् अधिकृताधिकृतानशनेन अत्यंताधिकृतायोऽनशनो जलानशनः जलतृषाजनित-

इति अमहा रोगनाशकः ध्रुवम् निश्चितम् रजताचलम् हैमाद्रिम् इतः गतः दिग्विजयक्रमेण हैमाचलं गतः अक्रिययारजताचलम् अ-क्रियया अव्यापारेणैव रजताचलम् स्वर्णपर्वतम् इतः प्राप्तः ये गत्यर्थकास्ते प्राप्त्यर्थका इति भावः रतरागविमोचनात् रते स्त्रीपुंसगे यो रागोऽनुरागस्तस्य विमोचनात् त्यागात् अमधावपि अवसन्तेपि वसन्तऋतुं विनापि तद्दिशा तदिव वसन्त इव मुदम् हर्षम् अधात् धारयतिस्म ॥ १९ ॥

अन्यपक्षे—धनमहान् अतिशयमहत्तरः अमहा रोगविनाशकारकः रजताचलम् स्वर्णपर्वतम् इतः प्राप्तः "रजत रूप्ये, गजदन्ते, रुधिरे, हरि, शैले, स्वर्णे धवले इति शब्दस्तोममहानिधिः" क्रियया व्यापारेण धैर्येणेत्यर्थः, रजताचलमिव रजतगिरिरिव भरतराट् भरति लोकान् पोषयतीति भरतः तेषु राजते इति भरतराट् भरणकर्तृषु श्रेष्ठः रतरागविमोचनात् रते रमणे मोहने यो रागोऽनुरागस्तस्य विमोचनात् त्यागात् अमधावपि अवमन्तऽपि मुदम् हर्षम् अधात अयात् ॥ १९ ॥

तदनु तन्नगरं नगरञ्जनं, व्यधित साधितसाभ्रककुङ्कुमैः ।
द्रुतमपातमपापमतो न तत्, ऋभुवनैर्भुवनैस्तुलितश्रिभिः ॥ २० ॥

अन्वयः—तदनु साधितसाभ्रककुंकुमैः तन्नगरं नगरञ्जनं व्यधित अपातम् अपापम् अतः तुलितश्रिभिः ऋभुवनैः भुवनैर्द्रुतन्न तत् ॥ २० ॥

व्याख्या—तदनु तत्पश्चात् तत् नगरं स्वकीयं पुरम् साधितसाभ्रककुंकुमैः अभ्रकेन सहितः साभ्रकः स चासौ कुंकुमश्चेति साभ्रककुंकुमः साधितः शोधितश्चासौ साभ्रककुंकुमश्चेति तैः साधितसाभ्रककुंकुमैः शुद्धाभ्रककुंकुमैः नगरंजनम् नग इव पर्वत इव रञ्जनं

शोभितम् तत् नगरमिति शेषः अपातम् पातरहितम् अपापम् पापशून्यम् निष्कल्मषम् तुलितश्रिभिः तुलिता साम्यीकृता श्रीर्यैः तैः समानसमृद्धिः कैर्भुवनैः स्वर्गैः भुवनैरन्यैरन्यभुवनैरन्यैः नानुसृतम् क्वचित् क्वचन केनापि भुवनेन तुलितमित्यर्थः ॥ २० ॥

स्थलमभूद् भुवि योगिवियोगि तत्, बहुशुचा नु शुचावचिराज्ज्वलत् ।

नदवनन्दवनन्दनतोऽभवद्, न हरिणा हरिणातिशये कृते ॥ २१ ॥

अन्वयः—भुवि तत् स्थलम् योगिवियोगि अभूत् बहुशुचा नु इति वितर्के शुचौ अचिराज्ज्वलत् हरिणा हरिणातिशयेकृते नदवनम् दवनन्दनतो न अभवत् ॥ २१ ॥

व्याख्या—भुवि पृथिव्यां तत् स्थलम् यत्र वर्णनीयनायकाः शरीरं त्यक्तवन्तः तत्स्थानम् अचिरात् योगिवियोगि योगिनां वर्णितनायकानां वियोगि रहितमभूत् जातम् तत्स्थलम् बहुशुचा अत्यधिकशोकेन नु इति वितर्के शुचौ आषाढे ग्रीष्मसमयेऽपी-त्यर्थः ज्वलत् उत्तप्तमभवत् हरिणा हरिणातिशये कृते हरिणा मेघेन हरिणा गता च अतिशये उत्कृष्टे कृते रचितेऽपीत्यर्थः भरता-दिनद्‌नरराज्याधिकारिणा मेघेन च शोकशान्तिरचितेऽपि दवनन्दनतः दवस्य अन्तर्दाहस्य नन्दनतः आश्लेषतः विशेषार्थकस्यापि सामान्यार्थकत्वग्रहणादिति कविसमयोऽत एव दवशब्दस्य वनाग्निवाचकत्वेऽपि प्रकृते संतापकत्वमात्रार्थकत्वमिति भावः नन्द-नवत् नन्दस्य इन्द्रस्य वनम् न अभवत् संतापशामकं न जातमित्यर्थः ॥ २१ ॥

प्रथमतीर्थकृता परिपालिता, तदनु बाहुबलीशजयश्रिता ।

शुष्ककण्ठता तेन वरमांगलिकीम् मंगं गमनम् लाति गृह्णातीति मंगलः मंगलाय परलोकगमनाय हिता मांगलिकी वरा मांगलिकी वरमांगलिकी ताम् शिवरमां शेतेऽस्मिञ्जगत् इति शिवः 'मरण सैव रमा रमते जीवो यस्यां सा रमा इति शिवरमां मरणक्रीडानन्दधौ धारयमास ॥ १६ ॥

उपरतापरतापरतापना-द्विरताद्विरतापि यदुग्रता ।
शुचिरसौ चिरसौख्यमधारय-द्समधीः शमधीरजितात्मना ॥ १७ ॥

अन्वय.—अविरताद् उपरतापरतापरतापनात्' यदुग्रतापि विरता असौ शुचि. असमधीः शमधीरजितात्मना चिरसौख्यम् अधारयत् ॥ १७ ॥

व्याख्या—अविरतात् संततात् उपरतापरतापरतापनात् उपरतम् निरस्तम् पृथक्कृतमित्यर्थः अपरस्य भावः अपरता भिन्नता तस्याः अपरतायाः भिन्नतायाः पृथक्त्वस्येत्यर्थः परम् उत्कृष्टम् अतिशयम् तापनम् सन्तापनम् उपरतं निरस्तम् यत् परतापरतापनम् तस्मात् तथोक्तात् यदुग्रतापि यस्य यदीयस्य उग्रतापि तीक्ष्णता कर्कशतेत्यर्थः विरता निर्गता उग्रतापि त्यक्तेति भावः शुचिः पवित्रोऽसौ असमधीः असमे अयोग्येऽपि धीर्बुद्धिर्यस्य स असमधीः असमेपि समानबुद्धिः शमधीरजितात्मना शमधीरेण शमज्ञानेन जितः स्वायचीकृतः आत्मा येन स शमधीरजितात्मा तेन तथोक्तेन चिरसौख्यं अतिसौख्यम् अधारयत् आश्रयत् ॥ १७ ॥

असितताकृतिविश्वतपोदिवा-परततपरमानववासरे ।
प्रवरसंवरसंवृतविक्रिये-ऽजनि शिवे निशि वेश्म परात्मनः ॥ १८ ॥

अन्वयः—असिततकृतिविश्वतपोदिवा परततपरमानववासरे प्रवरसम्वरसंवृतविक्रियेऽनिशि शिवे परात्मनः वेश्म अजनि ॥ १८ ॥

व्याख्या—असिततकृति सितस्य शुक्लस्य भावः सितता शुक्लता न सितता असितता आकृतिः स्वरूपं यस्य स असिततकृतिः कृष्णः विश्वान् तापयतीति विश्वतपः "तपेः कसुन्" कामः तस्य तपः विश्वतपस्तप इत्यत्रैकतपशब्दस्य लोपाऽविवक्षातः इति विश्व-तप इत्यस्यैव माघकृष्णत्रयोदशीत्यर्थः कथमपि समायातः तस्य दिवा दिनेऽपरः पूर्वभागः पूर्वाह्न इति यावत् तत्परो यो मानवः स फाल्गुननामधेयाऽर्जुनः तस्य वासरः रविः श्वेतवाहनत्वात् श्वेताश्वः सूर्य इति सादृश्येन सूर्यः तस्मिन् माघकृष्णे त्रयोदशीरवौ प्रवरस-म्वरसम्वृतविक्रिये प्रवरः श्रेष्ठः यः सम्वरः वैराग्यः स प्रवरसंवरः तेन संवृता निरुद्धा विक्रिया विकारो यस्मिन् तस्मिन् तथोक्ते शिवे मोक्षेऽनिशि दिवसे परात्मनः परमात्मनः ऋषभस्वामिनः वेश्म प्रवेशनम् अजनि मोक्षगमनमभूत् इति भावः ॥ १८ ॥

शान्तिनाथपक्षे असिततकृतिः कृष्णो यो विश्वस्य द्वादश्यास्तपो ज्येष्ठः तस्मिन् अर्थात् ज्येष्ठकृष्णद्वादशस्यामन्यत् सुगमम् ॥

घनमहानमहा रजताचलं, ध्रुवमितोऽक्रियया रजताचलम् ।
भरतराड् रतरागविमोचनाद्, मुदमधादमधावपि तद्दिशा ॥ १९ ॥

अन्वयः—घनमहान् अमहा रजताचलम् ध्रुवम् इतः अक्रियया रजताचलम् रतरागविमोचनात् भरतराट् अमधावपि तद्दिशामुदत अधात् ॥ १९ ॥

व्याख्या—घनमहान् घनः अतिशयः महान् घनमहान् अथवा घन इव मेघ इव महान् घनमहान् अमहा अमम् रोगं हतवान्

इति अमहा रोगनाशकः ध्रुवम् निश्चितम् रजताचलम् हैमाद्रिम् इतः गतः दिग्विजयक्रमेण हैमाचलं गतः अक्रिययारजताचलम् अक्रियया अव्यापारेणैव रजताचलम् स्वर्णपर्वतम् इतः प्राप्तः ये गत्यर्थकास्ते प्राप्त्यर्थका इति भावः रतरागविमोचनात् रते स्त्रीपुंसगे यो रागोऽनुरागस्तस्य विमोचनात् त्यागात् अमधावपि अवसन्तेपि वसन्तऋतुं विनापि तद्दिशा तदिव वसन्त इव मुदम् हर्षम् अधात् धारयतिस्म ॥ १९ ॥

अन्यपक्षे—धनमहान् अतिशयमहत्तरः अमहा रोगविनाशकारकः रजताचलम् स्वर्णपर्वतम् इतः प्राप्तः "रजत रूप्ये, गजदन्ते, रुधिरे, हरि, शैले, स्वर्णे धवले इति शब्दस्तोममहानिधिः" क्रियया व्यापारेण धैर्येणेत्यर्थः रजताचलमिव रजतगिरिरिव भरतराट् भरति लोकान् पोषयतीति भरतः तेषु राजते इति भरतराट् भरणकर्तृषु श्रेष्ठः रतरागविमोचनात् रते रमणे मोहने यो रागोऽनुरागस्तस्य विमोचनात् त्यागात् अमधावपि अवसन्तेऽपि मुदम् हर्षम् अधात अयात् ॥ १९ ॥

तदनु तन्नगरं नगरञ्जनं, व्यधित साधितसाभ्रककुङ्कुमैः ।
द्रुतमपातमपापमतो न तत्, ऋभुवनैर्भुवनैस्तुलितश्रिभिः ॥ २० ॥

अन्वयः—तदनु साधितसाभ्रककुंकुमैः तन्नगर नगररजन व्यधित अपातम् अपापम् अत तुलितश्रिभि ऋभुवनैः भुवनैद्रुतम्च तत् ॥ २० ॥

व्याख्या—तदनु तत्पश्चात् तत् नगरं स्वकीयं पुरम् साधितसाभ्रककुंकुमैः अभ्रकेन सहितः साभ्रकः स चासौ कुंकुमश्चेति साभ्रककुंकुमः साधितः शोधितश्चासौ साभ्रककुंकुमश्चेति तैः साधितसाभ्रककुंकुमैः शुद्धाभ्रककुंकुमैः नगरंजनम् नग इव पर्वत इव रञ्जनं

शोभितम् तत् नगरमिति शेषः अपातम् पातरहितम् अपापम् पापशून्यम् निष्कल्मषम् तुलितश्रिभिः तुलिता साम्यीकृता श्रीर्यैस्तैः भवाननगाद्रिः क्रमुकैः स्वर्गैः भुवनैरन्यान्यभुवनैर्द्रुतम् नानुसृतम् व्यभित व्यरचयत कैरपि भुवनैर्न तुलितमित्यर्थः ॥ २० ॥

स्थलमभूद् भुवि योगिवियोगि तत्, बहुशुचाहुशुचावचिराज्ज्वलत् ।
तदवनन्दवनन्दनतोऽभवद्, न हरिणा हरिणातिशये कृते ॥ २१ ॥

अन्वयः—भुवि तत् स्थलम् योगिवियोगि अभूत् बहुशुचा हु इति वितर्के शुचौ अचिराज्ज्वलत् हरिणा हरिणातिशये कृते तदवनम् दवनन्दनतो न अभवत् ॥ २१ ॥

व्याख्या—भुवि पृथिव्या तत् स्थलम् यत्र वर्णनीयनायकाः शरीरं त्यक्तवन्तः तत्स्थानम् अचिरात् योगिवियोगि योगिनां चरित्रनायकानां वियोगि रहितमभूत् जातम् तत्स्थलम् बहुशुचा अत्यधिकशोकेन हु इति वितर्के शुचौ आषाढे ग्रीष्मसमयेऽपि वा अग्निः ज्वलत् उत्तप्तमभवत् हरिणा हरिणातिशये कृते हरिणा मेघेन हरिणा राज्ञा च अतिशये उत्कृष्टे कृते रचितेऽपीत्यर्थः भरता-दिनद्भरराज्यादिकारिणा मेघेन च शोकशान्तिरचितेऽपि दवनन्दनतः दवस्य अन्तर्दाहस्य नन्दनतः आश्लेषतः विशेषार्थकस्यापि सामान्यार्थकत्वग्रहणादिति कृत्रिमसगोऽत्र एव दवशब्दस्य वनाग्निवाचकत्वेऽपि प्रकृते संतापकत्वमात्रार्थकत्वमिति भावः नन्द-नवनं नन्दस्य हृदयस्य वनम् न अभवत् संतापशामकं न जातमित्यर्थः ॥ २१ ॥

प्रथमतीर्थकृता परिपालिता, तदनु बाहुबलीशजयश्रिता ।

**भरतचक्रभृता ह्यभिनन्दिता, युगलिता गलितात्र यतो दिनात् ॥ २२ ॥**

अन्वय.—प्रथमतीर्थकृता परिपालिता तदनुबाहुबलीशजयश्रिता हि भरतचक्रभृता अभिनन्दिता अत्र यतो दिनात् ततो दिनात् युगलिता गलिता । २२॥

व्याख्या—यतो दिनात् यद्दिनमारभ्य इयम्भूमिरिति शेषः प्रथमतीर्थकृता ऋषभप्रभुणा परिपालिता परिरक्षिता तदनु तत्पश्चात् बाहुबलीशजयश्रिता बाहुबली चासौ ईशश्चेति बाहुबलीशः तस्य जयम्बिजयमाश्रयतीति बाहुबलीशजयश्रिता बाहुबलीनृपविजयविश्रुता भरतचक्रभृता भरतचक्रवर्त्तिना अभिनन्दिता कृताभिनन्दना तद्दिनादारभ्य " यत्तदोर्नित्यसाकांक्षत्वात् " अत्र भूमौ युगलेर्भावः युगलिता युगलिधर्मत्वम् गलिता निवृत्ता निरस्तेत्यर्थः ॥

अन्यत्र—प्रथमतीर्थकृता प्रथमम् तीर्थंकृता तीर्थङ्करेण परिपालिता परि सर्वतः पालिता रक्षिता "पार्श्वनाथवीरस्वामिपक्षे रलयोः साम्यात्" परिपारिता सर्वतोभावेन पारिता कर्मसमापिता परिधातोः कर्मसमाप्त्यर्थकत्वात् यद्वा प्रथमं तीर्थकृतं आसमंतात् परि पालय तीति तथा प्रथमतीर्थकरलालनपोषणवर्धनसंपादिकेत्यर्थः तदनु बाहुबलीचासौ ईशश्चेति तथा भुजबलशालीनृपः तस्योत्कर्षेण श्रिता आश्रिता भरति लोकमिति भरतः अथवा भरति धर्मादिकमिति भरतः तेषा चक्रः समूहस्तं बिभर्त्तीति भरतचक्रभृत् तेन अभिनन्दिता स्वनिवासेन मण्डिता यतः दिनात् तस्माद्दिनादारभ्येति शेषः अत्र भूमौ नगरे वा युगलिता युगं युग्मं लाति गृह्णातीति युगलः तस्य भावो युगलिता पापपुण्यौ " सुखदुःखौ " वियोगसंयोगौ वा गलिता निरस्ता जिनेन्द्रप्रभावात् तत्र पुण्यस्य धर्मस्य सुखसंयोगस्यैव स्थितिर्न तत्सहचरस्य पापादेरित्यर्थः ॥ २२ ॥

रामकृष्णपक्षे—प्रथमतीर्थकृता प्रथमम् आदौ तीर्थकृता तीर्थं हितगामनं करोतीति तीर्थकृत् तेन रामेण कृष्णेन वा परिपालिता तस्यगत्रेरिता तदनु तत्पश्चात् बाहुबलीशजयश्रिता भुजबलशालिनृपोत्कर्षश्रिता भरतचक्रभृता भरणपोषणकारकेन अभिनन्दिता या नगरी यतो दिनादारभ्य ततोदिनादत्रनगरे युगलिता प्रतिद्वन्दिता गलिता सर्वेषां राजानधीनत्वात् परस्परन्नस्पर्द्धन्त इति भावः ॥२२॥

तृपितभूपितभूरिवियोगिनामृतमृतेन मृतेन (?) पदात्स्वयम् ।
तदनु तन्नगरे नगरैवतेत्युभयतो भयतोयधिविप्लवः ॥ २३ ॥

अन्वय—हे मृते ! तृपितभूपितभूरिवियोगिनाम् ऋताम् ऋते स्वयपदात् तदनु तन्नगरे नगरैवत इति उभयतः भयतोयधिविप्लवः ॥ २३ ॥

व्याख्या—हे मृतेन ! मृतः परलोकंगतः इनः राजा यस्य स मृतेनस्तत् संबुद्धौ हे मृतेन मृताधिप ! तदनु तदनन्तरम् तस्मिन् नगरे अस्मिन्पुरे नगरैवता रै अस्यास्तीति रैवान् नग इव रैवान् नगरैवान् तेन प्रच्छन्नगुप्तधनवता तृपितभूपितभूरिवियोगिना तृपितः संजाततृषः भूपितः अलंकृतः अथवा भूवि भूमौ उषितः स्थितः तृपितश्चासौ भूपितश्चेति तृपितभूपितः स चासौ भूरिवियोगी चेति तृपितभूपितभूरिवियोगी तेन अमृतमृतेन अमृताय मोक्षाय मृतेः मृत्युवशंगतः इनो यस्य स अमृतमृतेनस्तत्संबुद्धौ हे अमृत मृतेन उभयतः इहलोकतः परलोकतश्च यद्वा उभयतः भूरिवियोगिजनत्वेन किमपि कर्त्तुमलसेन नगरैवता गुप्तधनेन कस्मैचिदपि किमप्यप्रयच्छतेति उभयथा भयात् माध्वसात् तोयधेश्च तुद्यते तुद्यते वा तोयः व्यथा हिंसा वा तद्धीयते यस्मिन् स तोयधिः तस्माच्च विप्लवः पराभवः जात इति शेषः ॥ २३ ॥

यमकालंकारः ।

कृष्णपक्षे—भयतोयधिविप्लवः भयः भयजनकः तोयधिविप्लवः समुद्रकर्तृक उपद्रवः सर्वतो जलमग्नता जातेति शेषः कृष्णप्रयाणानन्तर द्वारकायाः समुद्रमग्नतेति पौराणिका इति भावः ॥ २३ ॥

सकमलाकमलाशयभूरभून्नरमणी रमणीललनैः श्रिया ।
असुरभिः सुरभिप्रसवेऽपि सा, नरचिता रचिताद्दवधूमतः ॥ २४ ॥

अन्वयः—नरचिता स कमला कमलाशयभूः रचिताद्दवधूमतः सुरभिप्रसवेऽपि असुरभिः रमणीललनैः श्रिया रमणी न अभूत् ॥ २४ ॥

व्याख्या—नरचिता नरैर्नागरिकजनैश्चिता व्याप्ता परिपूर्णा अपि स कमला कमलेन पंकजेन सहिता यद्वा कमलया लक्ष्म्या शोभा संपत्त्या वा सहिता सकमला सश्रीका कमलाशयभूः आसमंताच्छेते यस्मिन् स आशयः "आङ्पूर्वकाच्छतेराधारेऽप्" कमलायाः लक्ष्म्याः आशयः कमलाशयः सा चासौ भूश्चेति कमलाशयभूः अथवा कमलस्य सरोजस्य आशयः कमलाशयः स चासौ भूश्चेति कमलाशयभूः रचितात् जनितात् दवधूमतः वनाग्निधूमात् सुरभिप्रसवेऽपि सुरभेर्वसंतस्य प्रसवे उत्पत्तावपि सुरभिसाम्राज्येऽपि असुरभिः अमनोहरा यद्वा सद्गन्धरहिता "वसन्ते पुष्पसमयः सुरभिग्रीष्म उष्मक इत्यमरः" तथा च रमणीललनैः श्रियाः रमण्याः रामायाः ललनः प्रेयान् इति रमणीललनः तैः श्रिया शोभया संपत्त्या वा रमणी मनोह्लादिनी न अभूत् न अजनिष्ट ॥ २४ ॥

यमकः विशेषोक्तिश्चालंकारौ ॥

स विषयो विषयोजनभक्ष्यवत्, सुमनसां मनसां भयकारणम् ।
भुवि दितो विदितोऽपि तदाभया-शवरसंवरसंकलितोऽभवत् ॥ २५ ॥

अन्वयः—स विषयः विषयोजनभक्ष्यवत् सुमनसां मनसां भयकारणम् भुवि दितो विदितोऽपि तदा अभयाशवरसंवरसंकलितः अभवत् ॥ २५ ॥

व्याख्या—स विषयः सांसारिकविषयाभिलाषः देशश्च विषयोजनभक्ष्यवत् विषेण गरलेन योजन संयोजनम् यस्य तत् विषयोजनम् तच्च भक्ष्यश्चेति विषयोजनभक्ष्यम् तदिवेति विषयोजनभक्ष्यवत् विषमिश्रितान्नवत् सुमनसां सहृदयानां मनसां चित्तानां भयकारणम् भयहेतुः भुवि जगति विदितोऽपि प्रसिद्धोऽपि अनेकजनसेवितोऽपि दितः खण्डितः सन् तदा तस्मिन् समये अभयाशवरसंवरसंकलितः अभये मोक्षे आशा अभिलाषा यस्य स अभयाशः तस्य यो वरः श्रेष्ठः संवरः सन्निरोधः संयम इत्यर्थः तेन संकलितः संयुक्तः इति अभयाशवरसंवरसंकलितः मुमुक्षुजनप्रबलवैराग्यविहितनिरोधः अभवत् सर्वथा मुमुक्षुजनपरित्यक्तोऽजायत इति भावः ॥

पुनरपि प्रबलाकृतिकौशला, भगवतामुदयेन नु भाविनी ।
नवनवेभ्यनिवासविलासिनी, वसुमती सुमतीशजयश्रिया ॥ २६ ॥

अन्वयः—भगवतामुदयेन पुनरपि प्रबलाकृतिकौशला नवनवेभ्यनिवासविलासिनी सुमतीशजयश्रिया वसुमती भाविनी ॥ २६ ॥

व्याख्या—भगवतां जिनेन्द्राणां उदयेन आविर्भावेन पुनरपि भूयोऽपि प्रबलाकृतिकौशला प्रबला महती या आकृतिः स्वरूपम्

सा प्रबलाकृतिः तत्र कौशला चतुरा सा प्रबलाकृतिकौशला सुन्दराकृतिपटीयसी नवनवेभ्यनिवासविलासिनी नवनवः नूत्नः य इभ्यः धनी यद्वा इभं हस्तिनमर्हतीति इभ्यः नृपः नवनवश्चासौ इभ्यश्चेति नवनवेभ्यस्तेषां निवासःस्थितिरिति नवनवेभ्यनिवासस्तेन विलासिनी शोभमाना अतिनूतननृपनिवासमनोहरा सुमतीशजयश्रिया सुष्ठु मतिर्यस्य स सुमतिः स चासौ ईशश्चेति सुमतीशः तस्य जयश्रिया विजयलक्ष्म्या वसुमती पृथ्वी "सर्वसहा वसुमती वसुधोर्वी वसुन्धरेत्यमरः" भाविनी भवित्री पुनरपि जिनेन्द्रोदये पृथ्वी सर्वगुणविशिष्टा भविष्यतीति भावः ॥ २६ ॥ अनुप्रासः ।

अन्यत्र भगवतां भाग्यशालिनामुदयेन समभ्युदयेनेति पूर्वप्रायमन्यत् ॥ २६ ॥

ध्रुवरमं वरमङ्गलसंगमं, विभवसंभवसंज्ञतुरङ्गमम् ।
पुरमदो रमदोर्बलनायकं, सुरसभारसभासि भविष्यति ॥ २७ ॥

अन्वयः—अदः पुरम् ध्रुवरम वरमंगलसगमम् विभवसंभवसज्ञतुरङ्गमम् रमदोर्बलनायकम् सुरसभारसभासि भविष्यति ॥ २७ ॥

व्याख्या—अदः पुरम् इदं नगरम् ध्रुवरमम् ध्रुव निश्चितं सततं वा रमणं यत्र तत् अथवा ध्रुवन्नियतं रमा लक्ष्मीः शोभा संपत्तिर्वा यत्र तत् ध्रुवरमम् नित्योत्सव नियतलक्ष्मीकं वा वरमंगलसंगमम् वरमगलानां निरतिशयोत्सवानाम् संगमम् संबंधो यत्र तत्तथोक्तम् विभवसंभवसंज्ञतुरङ्गमम् विभवस्य सर्वसंपत्तेः संभव उत्पत्तिरिति विभवसंभवः सम्यक् जानातीति संज्ञः "आतश्चोपसर्गे इति जानातेः कः" बुद्धिमान् तुरं शीघ्रं गच्छतीति तुरंगमः अश्वः विभवसंभवश्च संज्ञश्च तुरंगमश्चेत्येषां द्वन्द्वः इति विभवसंभवसंज्ञतुरंग-

मानि यत्र तत् अथवा विभवमंभवमंज्ञौ तदभिधानौ तुरंगमौ जात्यश्वौ यत्र तत् 'रमदोर्बलनायकम् रमम् शोभमानं दोर्बलम् बाहुबलं यस्य स रमदोर्बलः रमदोर्बलो नायको यत्र तत् यद्वा रमं दोर्बलम् यस्य स रमदोर्बलः रमदोर्बलो नायको यत्र तत्' सुरसभारमभासि सुराणां देवानां सभा परिषत् इति सुरसभा तस्याः रसः अनुरागः सुरसभारसः तेन भासितुं प्रकाशितुं शीलमस्येति तत् सुरसभारसभासि अथवा सुष्ठु राति ददातीति सुरः तस्य सभा तया भासि विकस्वरम् अथ च सुरः पंडितः तस्य सभा तया भासि भासनशीलम् भविष्यति जनिष्यति ॥ २७ ॥ यमकः ।

राज्यादिस्थितिरद्भुता विजयतेऽद्यापि प्रभोस्तेजसा, नाम्ना सिद्धिरपि प्रसिद्धिसहिता सर्वैहितार्थे हिता ।
वृद्धिः साभ्युदया सतां समुदयानन्दाय संजायते, श्रीसार्वप्रभुसार्वभौममहितो भूयात् स भूयः श्रियै॥२८॥

इति श्रीसप्तसंधाने महाकाव्ये महोपाध्यायश्रीमेघविजयगणिकृते दिग्विजयवर्णनो नामाष्टमः सर्गः संपूर्णः ॥ श्रीः ॥

अन्वय —अद्यापि प्रभोस्तेजसा राज्यादिस्थितिः अद्भुता नाम्ना सिद्धिरपि प्रसिद्धिसहिता सर्वैहितार्थे हिता सतां समुदयानन्दाय साभ्युदया वृद्धिः संजायते श्रीसार्वप्रभुसार्वभौममहितः स भूयःश्रियै भूयात् ॥ २८ ॥

व्याख्या—प्रभोर्जिनेन्द्रस्य तेजसा प्रभावेण अद्यापि अधुनापि राज्यादिस्थितिः राज्यादिमर्यादा अद्भुता सर्वातिशायिनी विलक्षणेत्यर्थः विजयते सर्वोत्कर्षेण वर्तते नाम्ना अभिधेयेन प्रसिद्धिसहिता प्रख्यातियुता सिद्धिरपि अणिमाद्यष्टसिद्धिरपि सर्वैहितार्थे सर्व-

षामीहितः सर्वेहितः स चासौ अर्थश्चेति सर्वेहितार्थः तत्र हिता अनुकूला साभ्युदया श्रेयस्करी बुद्धिर्मतिः सतां सज्जनानां भव्याना-
मित्यर्थः समुदयानन्दाय अभ्युदयसुखाय संजायते सम्पद्यते श्रीसार्वप्रभुः अर्हत्प्रभुः सर्वेभ्यो हितः सार्वः स चासौ प्रभुश्चेति सार्वप्रभुः
सर्वपुरुषाभ्यां णढञाविति णः ५ पं. त्रु. सर्वजनीनः सार्वभौममहितः सार्वभौमेन चक्रवर्त्तिना नृपेणेति शेषः महितः पूजितः इति
सार्वभौममहितः सार्वप्रभुश्चासौ सार्वभौममहितश्चेति श्रीसार्वप्रभुसार्वभौममहितः स जिनेन्द्रः भूयः पुनः पुनः श्रिये निरतिशयानन्दाय
भूयात् स्तात् अत्र श्लोके शार्दूलविक्रीडितम् ॥ २८ ॥

इति शास्त्रविशारद–कविरत्न-भट्टारकाचार्यश्रीविजयामृतसूरीश्वरप्रणीतायां सप्तसंधानमहाकाव्यीय "सरणी" टीकायां अष्टमः सर्गः ॥ ८ ॥

## ॥ अथ नवमः सर्गः ॥

अथार्ककीर्त्तेः प्रससार कीर्त्तिर्देवस्य वश्यं भुवनं विधातुम् ।
मूर्त्तेव कल्याणवती सुनन्दा सुमङ्गलाङ्गोन्नयनेऽनुपक्ता ॥ १ ॥

अन्वयः—अथ अर्ककीर्तेर्देवस्य भुवनं वश्यं विधातुं मूर्त्तेव कल्याणवती सुनन्दा सुमङ्गलाङ्गोन्नयनेऽनुपक्ता कीर्त्तिः प्रससार ॥ १ ॥

व्याख्या—अथ अथानन्तरम् अर्ककीर्तेः अर्कः सूर्यः इन्द्रो वा स्फटिकमणिर्वा विष्णुर्वा स इव कीर्तिः प्रतिष्ठा यस्य तस्य "प्रकाशकत्वात् सर्वशक्तिमत्त्वात् निर्मलत्वात् सत्यगुणमात्राश्रयत्वाच्चोपमानत्वं सर्वेषाम्" देवस्य दीप्तिमतः भुवनम् लोकम् जगत् "विष्टपं भुवनं जगदित्यमरः" वश्यं स्वानुकूलं स्वाधीनं विधातुं मूर्तेव कल्याणवती मूर्त्ता सत्स्वरूपा कल्याणवती कल्याणयुक्ता सुनन्दा सुष्ठु नन्दयतीति सुनन्दा आनन्ददायिका सुमंगलागोन्नयनेऽनुपक्ता सुमंगलस्य कल्याणस्य भद्रस्येत्यर्थः अङ्गोन्नयने अङ्गोत्थाने अनुपक्ता अनुरक्ता कीर्तिः यशः प्रतिष्ठेति यावत् प्रससार पप्राथ ॥ १ ॥ अत्र सर्गे उपजातिवृत्तिः ॥

आदीश्वरपक्षे—सुनन्दा सुमंगलाभिधाने पत्नीद्वये कीर्त्तेरुन्नयने विस्तारणे अनुपक्ता व्यापृतेति भावः ॥ १ ॥

यशोमती नाम परैव सिन्धुर्व्यावर्णनीया शतलब्धवर्णैः ।
नैर्मल्यवृत्तेः पयसां प्रवृत्तेस्तदुग्रजात्याः स महानुभावः ॥ २ ॥

अन्वय —यशोमती नाम परासिन्धुरेव शतलब्धवर्णैर्व्यावर्णनीया नैर्मल्यवृत्ते. पयसा प्रवृत्ते तदुग्रजात्या स महानुभावः ॥ २ ॥

व्याख्या—यशोमतीनाम परैव सिन्धुः यशोमती नाम्नी परा काचित् अन्या जलप्रवाहरूपतो भिन्नासिन्धुर्नदी एव उभयोर्विशेषणं यथा व्यावर्णनीया शतलब्धवर्णैः शतानि शतसंख्यका अथवा शतशब्दस्यानेकसंख्यावाचकत्वात् अनेकसंख्यका ये लब्धवर्णाः पण्डितास्तैरनेककविभिर्व्यावर्णनीया विख्यापनीया कीर्त्तनीयेत्यर्थः अन्यत्र शतानि लब्धानि वर्णानि रूपाणि यैस्तैः शतलब्धवर्णैः अनेकवर्णैः पक्षिभिः व्यावर्णनीया कीर्त्तनीया "लब्धवर्णो विचक्षण इत्यमरः" नैर्मल्यवृत्तेः नैर्मल्यस्थितौ नैर्मल्यविधौ निर्मलतायामित्यर्थः तदुग्रजात्याः अत्युच्चकोटिभूतायाः अन्यत्र उच्चैर्गिरिसंभूतायाः पयसां प्रवृत्तेः जलधाराया इवेति शेषः "यथा उग्रजातिः अत्युग्ररूपा जलधारा निसर्गनिर्मला भवति तथेयमिति भावः" स महानुभावः यस्यैतादृशी कीर्त्तिः स इति शेषः महानुभावः महाशयः ॥

यशोमती महावीरस्वामिनो धर्मपत्नी सापि यथोक्तविशेषणविशेषिता इति ॥ २ ॥

प्रभावती यन्महसाऽभ्रतारा, सायंप्रकाशाद् बहुबन्दिपाठैः ।
कीर्त्तेर्विभोस्तच्छ्रवणाय मन्ये-ऽष्टौ स्वश्रुतीस्तेन विधिर्विधत्ते ॥ ३ ॥

अन्वयः—प्रभावती यन्महसा अभ्रतारा बहुबन्दिपाठे. सायप्रकाशात् विभोः कीर्त्तेः तच्छ्रवणाय विधिस्तेन अष्टौ स्वश्रुतीर्विधत्ते इत्यहम्मन्ये ॥ ३ ॥

व्याख्या—प्रभावती विद्योतमाना यत् यस्मात् या कीर्त्तिर्विभोर्जिनेन्द्रस्य काव्यनायकानां वास्तीति शेषः सा कीर्त्तिः सायं प्रकाशात् रात्रौ प्रकाशबाहुल्यात् महसा तेजसा प्रकाशविशेषेण अभ्रतारा गगनस्य तारका इवेत्यर्थः विभोः प्रभोः कीर्त्तेर्यशसः बहुबन्दि-

पाठैः अनेकस्तुतिपाठकैर्मागधजनैस्तद्वारा तत् श्रवणाय श्रोतुं विधिर्ब्रह्मा अष्टौ अष्टसंख्यकाः स्वश्रुतीः श्रवणेन्द्रियाणि विधत्ते विरच तीत्यहम्मन्ये जानामि अष्टदिग्भ्यस्तदीयकीर्त्तिश्रवणायैव विधिःस्वकर्णमष्टधाऽधादित्यहम्मन्ये जानामीति क्रियागतोत्प्रेक्षोपमा ॥

अन्यत्र प्रभावती पार्श्वनाथप्रभोः पत्नी यत्महमा स्वसौभाग्येन अभ्रतारा विभोः पार्श्वप्रभोः कीर्त्तेस्तच्छ्रवणाय विधिः स्वश्रुतीः अष्टौ विधत्ते इति ॥ ३ ॥

प्रभोः प्रवृत्तिं बहुधा यशोदा-मनोविनोदात् सुमनःसमूहाः ।
गायन्ति नाके तरवः सुगणां, तान् वर्धयन्ते कुसुमैर्भदम्भात् ॥ ४ ॥

अन्वय —यशोदा सुमन समूहा मनोविनोदात् प्रभो प्रवृत्ति बहुधानाके गायन्ति सुगणा तरव तान् भदम्भात् कुसुमैर्वर्धयन्ते ॥ ४ ॥

व्याख्या—यशोदाः यशो ददतीति यशोदाः यशोदातारः सुमनः—समूहाः सुमनसान्देवानां समूहाः वृन्दाः वृन्दारकवृन्दाः मनोविनोदात् हृदयोल्लासात् प्रभोर्जिनेन्द्रस्य रामस्य कृष्णस्य च प्रवृत्ति पुण्यचरितं कीर्त्तिमित्यर्थः बहुधा अनेकशः नाके स्वर्गे गायंति गायंति तान् प्रभुकीर्त्तिगायकान् देवान् सुगणा देवाना तरवः कल्पवृक्षाः भदम्भात् ताराच्छलात् कुसुमैः प्रसूनैः वर्धयन्ते वर्धापयन्ति तीर्थकरस्तीति भावः ॥ ४ ॥ गम्योत्प्रेक्षा ।

क्वचित्र विशल्या विहिता त्रिलोकी, गन्धर्वमुच्चैःश्रवसं विधाय ।
कीर्त्या विभोर्भावनीया नयानां, मुधा विधानेन सुधाशनानाम् ॥ ५ ॥

अन्वय.—विभोः कीर्त्या नयानां भावनया सुधाशनानां मुधाविधानेन गन्धर्वमुच्चैःश्रवसं विधाय त्रिलोकी क्वचिद्विशल्या विहिता ॥ ५ ॥

व्याख्या—विभोर्जिनेन्द्रप्रभोः कीर्त्या यशसा सहेति शेषः नयानाम् प्रभुप्रचारितसन्नीतीनां विभावनया विचारेण सुधाशनानाम् सुधाया अमृतस्य अशनम्भक्षणन्तेषाममृतभोजनानां मुधाविधानेन मिथ्याविधानेन निरर्थकत्वेन "यदा प्रभुगुणाः कर्णनस्वादुमांस्वाद्यते तदा सुधाशनं अनेकप्रयत्नप्रलब्धसुधाभोजनम्व्यर्थन्नीरसत्वादिति भावः" गन्धर्वमुच्चैःश्रवसं विधाय गन्धर्वं गानम् प्रभुकीर्त्तिगानम् उच्चैःश्रवसं उच्चैः श्रवणं विधाय कृत्वा प्रभुकीर्त्तिगानमाकण्ठं श्रुत्वा त्रिलोकी त्रयाणा लोकानां समाहारस्त्रिलोकी त्रिजगत् क्वचित् यत्र कीर्त्तिश्रवणम्भवति तत्रैव विशल्या दुःखरहिता विहिता कृता कीर्त्तिश्रवणेन सर्वेषा त्रिविधदुःखमुन्मूलितं भवतीति भावः ॥

अन्यत्र । विशल्या लक्ष्मणपत्नी त्रिलोकी गंधर्वमुच्चैःश्रवसं विधाय त्रिलोक्या तदीयकीर्त्तिमतिशयं श्रुत्वा विहिता पत्नीत्वेन स्वीकृता लक्ष्मणेन विवाहितेति तात्पर्यम् ॥ ५ ॥

**मनोरमा वा रतिमालिका वा, रम्भापि सा रूपवती प्रिया स्यात् ।**
**न सुत्यजा स्याद् वनमालिकापि, कीर्त्तिर्विभोर्यत्र सुरैर्निपेया ॥ ६ ॥**

अन्वयः—सुरैर्यत्र प्रभोः कीर्त्तिर्निपेया तत्र मनोरमा वा इति मालिका वा रूपवती सारंभा वनमालिकापि न सुत्यजा स्यात् किन्तु सुत्यजैव ॥ ६ ॥

व्याख्या—यत्र विभोर्जिनेन्द्रस्य कीर्त्तिः सुरैर्देवैर्निपेया पीता प्रभुकीर्त्तिः सादरेण श्रुता तत्र मनोरमा इति मालिका वा रूपवती सा प्रसिद्धा रम्भापि प्रिया मनोज्ञा स्यात् किन्नैव सा प्रेयसीभवितुमर्हति कीर्त्तौ समधिकमाधुरीत्वात्. वनमालिकापि न सुत्यजा स्यात्

आदरमेव सुन्यजा भवेत कीर्तेर्मधुरिमा एतास्योऽप्यधिकेति भावः ॥ ६ ॥ अतिशयोक्तिरलंकृतिः ।

यया स-आमोद्‌वती विधेया, गानेन कीर्त्तेः सरसा रसज्ञा ।

आस्येन सा स्याज्जितपद्मरूपा, सैवोदिता चाभयवत्यपि ज्ञैः ॥ ७ ॥

अन्वयः—यया स-आमोदवती विधेया कीर्तेर्गानेन रसज्ञा सरसा आस्येन सा जितपद्मरूपा स्यात् सैव ज्ञैः अभयवती अपि उक्ता ॥ ७ ॥

व्याख्या—यया कीर्त्या स-आमोदवती आमोदवत्या सहिता स-आमोदवती आमोदकारिणी कीर्तेः जिनेन्द्रकीर्त्तेः गानेन कीर्तनेन रसज्ञा जिह्वा सरसा रसवतीविधेया कर्त्तव्या आस्येन मुखेन सा कीर्तिः जितपद्मरूपा जितम् पराजितम् पद्मरूपं कमलसौन्दर्यं यया सा जित पद्मरूपा सैव सा एव कीर्तिरेव ज्ञैः पण्डितैः अभयवती निर्भयकारिका उदिता कथिता सा कीर्तिरेव सर्वाभयकारिणीत्यर्थः ॥ ७ ॥

यशस्सुवर्णं विहसत्सकर्णं, सदोपकर्णं विदधाति नृणाम् ।

सा सत्यभामा च गिरा सुसीमा, सा लक्ष्मणा रुक्मिनृपस्वसा या ॥ ८ ॥

अन्वय.—नृणां सा सत्यभामा च गिरा सुसीमा सा लक्ष्मणा या च रुक्मिनृपस्वसा विहसत् सकर्णं यशःसुवर्णं सदोपकर्णं विदधाति ॥ ८ ॥

व्याख्या—नृणाम्मनुष्याणां मध्ये सा प्रसिद्धा सत्यभामा कृष्णपत्नी गिरा वाण्या वाचकशब्देन सुसीमा तदभिधाना सा लक्ष्मणा या च रुक्मिनृपस्वसा रुक्मिराजभगिनी रुक्मिणीति यावत् एताः कृष्णपत्न्यः विहसत् सकर्णं कर्णेन सहितः सकर्णस्तं विहसत् यश-

स्विनम् कर्णनृपमपि विहसत् निन्दत् यशःसुवर्ण कीर्तिसुवर्ण सदा सर्वदा उपकर्ण कर्णसमीपं विदधाति शृणोति कृष्णपत्न्य अपि एताः प्रभोर्यशः सदैवाकर्णयन्तीति भावः ॥ ८ ॥

गौरीव कान्त्या परिपूरणेन, पद्मेव निश्छद्मतया जयाय ।
गान्धारिका जाम्बवती च साम्ब-प्रद्युम्नलीलालयमाश्रयन्ती ॥ ९ ॥

अन्वय—कान्त्या परिपूरणेन गौरीव निश्छद्मतया जयाय पद्मेव साम्बप्रद्युम्नलीलालयमाश्रयन्ती गाधारिका जाम्बवती च ॥ ९ ॥

व्याख्या—सा कीर्त्तिः जिनेश्वरकीर्त्तिरितिभावः कान्त्या दीप्त्या परिपूरणेन कान्तिसमूहेन गौरीव कृष्णपत्नी वीतभयतनयेव अथ च गौरी पार्वतीव निश्छद्मतया निष्कपटतया जयाय त्रैलोक्यविजयाय पद्मेव पद्मा कृष्णपत्नी हिरण्यनामकन्या सेव अथ च पद्मा लक्ष्मीः सेव साम्बप्रद्युम्नलीलालयमाश्रयन्ती साम्बश्च प्रद्युम्नश्चेति साम्बप्रद्युम्नौ तयोर्लीला साम्बप्रद्युम्नलीला तस्या लयं संश्लेषं संम्बन्धम् आश्रयन्ती संस्पृशन्ती गांधारिका कृष्णपत्नी नग्नजित्तनया जाम्बवती कृष्णमहिषी जाम्बवतः दुहिता वा अथ च साम्ब-प्रद्युम्नलीलालयमाश्रयन्ती अम्ब्यते सिनह्यतीत्यम्बा प्रकृष्टं द्युम्नं बलं यस्य स प्रद्युम्नः तयोः स्नेहबलयोः लीलालयं लीलासंबन्धम् आश्रयन्ती गांधारी जाम्बवती इत्युभे शासनदेवते इव स कीर्तिर्विराजते इति शेषः ॥ उपमालकारः ।

पटीयसी कीर्त्तिरियं नटीव, लोके नरीनर्ति विभोर्विभाते ।
यद्बन्दिवृन्दैरुपगीयतेऽसौ, निपानतोऽस्या विधुरेतिकामी ॥ १० ॥

अन्वयः—प्रभो पटीयसी इयं कीर्तिः लोके नटीव नरीनर्ति विभाते असौ वन्दिवृन्दैः यद् उपगीयते अस्याः निपानतः इति कामी विधुरा ॥१०॥

व्याख्या—प्रभोर्जिनेन्द्रस्य पटीयसी पटुतरा इयं कीर्तिः लोके जगति नटीव नरीनर्ति भृशं नृत्यति विभाते प्रातःकाले वन्दिवृन्दैः मागधैः यद् असौ कीर्तिरुपगीयते वर्ण्यते अस्याः कीर्त्तेः निपानतः श्रवणतः कामी कमनीयः विधुः चन्द्रः इति समासः यत् कीर्तिनिपानेन चन्द्रसुषमा समाप्तेव भवतीति भावः अथवा इति प्रकाशः तं कामयते इति इतिकामी विधुरा विषण्णा कीर्त्तेः सप्रकाशादन्यप्रकाशाभावादिति भावः 'इति हेतुप्रकरणप्रकाशादिसमाप्ति'ष्वित्यमरः ॥ १० ॥

विदेहशोभाकरणेन सीता, प्रभावती या च भुवः शिवस्य ।
लीना कवेर्बोधभरस्मराङ्गे, रतिप्रभाश्रीर्हृदि कुन्ददामा ॥ ११ ॥

अन्वय.—विदेहशोभाकरणेन सीता भुवः शिवस्य या च प्रभावती कवेः लीना बोधभरस्मरा अङ्गे रतिप्रभा श्रीर्हृदि कुन्ददामा ॥ ११ ॥

व्याख्या—विदेहस्य विदेहदेशस्य मिथिलादेशस्य अथवा विदेहस्य देहाभिमानरहितस्य जनकनृपस्य शोभाकरणे मण्डनकरणे सौन्दर्यसंपादने कान्तिविस्तारे इति यावत् सीताजनकनन्दिनीव यद्वा विशेषेण देहशोभाकरणे देहसौन्दर्यसंपादने सीता लक्ष्मीरिव अथ च विदेहस्य शिवस्य देहशोभाकरणे अर्धाङ्गसंपादने सीता उमा इव यद्वा विदेहस्य देहममतारहितस्य साधोः सीता गंगेव निर्मलेति भावः भुवः शिवस्य प्रभावती भुवः पृथिव्याः शिवस्य देवस्य सूर्यस्येत्यर्थः प्रभावती प्रभा प्रकाशिका शक्तिः कवेः कवित्वशक्तिमतः लीना आश्लिष्टा बोधभरस्मरा बोधभरेण ज्ञानभरेण स्मरा स्मृतिरिव अंगे शरीरे रतिप्रभा रतेः कामपत्न्याः प्रभा इव सौन्दर्यसम्प-

त्तिरिव श्रीहृदि श्रियः लक्ष्म्याः हृदि हृदये कुन्ददामा कुन्दपुष्पस्रगिव कुन्दकुसुममालेव मा कीर्तिर्विरराजेति शेषः ॥

सीता–प्रभावती–रतिप्रभा–श्रीदामा–इति चतस्रो रामपत्न्यः विराजन्त इति शेषः ॥ ११ ॥

तदा समुद्भूतमया (?) दनीति-भावः पुरे व्यासि तमः प्रसन्नम् ।
कौलीनवांस्तद्धरणेन सीता-मापन्नसत्त्वां स वने मुमोच ॥ १२ ॥

अन्वय —तदा समुद्भूतमयात् अनीतिः भावः तमः प्रसन्नम् पुरे व्यासि कौलीनवान् स तद्धरणेन आपन्नसत्त्वां सीता वने मुमोच ॥ १२ ॥

व्याख्या—तदा रामराज्यकाले समुद्भूतमयात् उत्पन्नमयात् अनीतिभावः अन्यायभावः जात इति शेषः सीतां विद्विषतीभिः सपत्नीभिस्तथा प्रपञ्चित यथा राममनसि किमप्यनीतिभावः जात इति तत्त्वम् तद्धरणेन तस्याः सीतायाः धरणेन रावणगृहादानीय-स्वीकारेण तमः प्रसन्नम् सीतारावणाङ्कगताऽऽसीदिति कथ निष्कलमषेति सीतामाश्रित्य जनापवादरूपं तमः मालिन्यं प्रसन्नम् बहुलीभूत पुरे नगरे अयोध्याया व्यासि व्याप्तम् कौलीनवात् कुलाभिमानी स रामः आपन्नसत्त्वाम् सगर्भाम् सीताम् जनकराजदुहितरम् वने निर्जनारण्ये मुमोच तत्याज जनापवादमीत्या सगर्भामपि मीता वने त्यक्तवानित्यर्थः ॥ १२ ॥

अन्यपक्षे—तदा समुद्भूतमयादनीतिभावः तस्याः मदिरायाः समुद्भूतमयात् उत्पत्तेः पुरे देहे "पुरे देहे च गेहे शब्दस्तोम-महानिधिः" अनीतिभावः अन्यायभावः अकीर्त्तिः व्याप्तिर्जातेति शेषः अनीतिभावो व्याप्तः प्रसन्नम् प्रभूतं तमः अज्ञानम् व्याप्तिः

'सर्वतो व्याप्य तद्वागात् तस्या आसेवनात् कौलीनवान् कुलीनस्य भावः कौलीनः कुलीनता सोऽस्यास्तीति कौलीनवान् कुलाभिमानी तथा कौलीनः परीवादः निन्देत्यर्थः तद्वान् स आपन्नसत्वाम् आपन्नः अधिष्ठितः व्यन्तरादिर्यस्यां सा आपन्नसत्वा ताम् सीताम् मदिराम् वने निर्जने मुमोच तत्याज परिजहौ 'सीता लाङ्गलपद्धतौ जनकदुहितरि लक्ष्म्यां उमाया मदिरायां चेति' शब्दस्तोममहानिधिः ॥ १२ ॥

श्रीसूर्यवंश्यक्षितिपाश्रयेण, प्रभूतसून्वोरभवत्प्रसिद्धिः ।
अनङ्गशब्दाल्लवणोऽग्रजन्मा, परः परर्द्ध्या मदनाङ्कुशाख्यः ॥ १३ ॥

अन्वयः—श्रीसूर्यवंश्यक्षितिपाश्रयेण प्रभूतसून्वोः अनङ्गशब्दाल्लवणोऽग्रजन्मा परः परर्द्ध्या मदनाङ्कुशाख्यः प्रसिद्धिरभवत् ॥ १३ ॥

व्याख्या—श्रीसूर्यवंश्यक्षितिपाश्रयेण श्रीसूर्यवंशस्य यः क्षितिपः राजा तदाश्रयेण तदधिकारेण तदनुसारेणेत्यर्थः प्रभूतसून्वोः प्रभूतयोरुत्पन्नयोः सीताकुक्षिसंभूतयोः सून्वोः पुत्रयोर्मध्ये इति शेषः अग्रजन्मा प्रथमप्रसूतः अनंगशब्दात् परः लवणशब्दस्तथा जनकात्मजः ज्येष्ठः परः कनिष्ठः परर्द्ध्या महर्द्ध्या मदनाङ्कुशाख्यः मदनाङ्कुशनामा प्रसिद्धिः प्रख्यातः अभवत् अनङ्गलवणमदनाङ्कुशनामानौ प्रसिद्धौ अभवतामित्यर्थः ॥ १३ ॥

पक्षान्तरे—श्रीसूर्यवंशक्षितिपाश्रयेण पञ्चानामपि चरित्रनायकानां तीर्थकराणां स्वतः परम्परया वा सूर्यवंशप्रभवत्वात् कृष्णस्य च तथात्वात् श्रीसूर्यवंशक्षितिपाश्रयेण प्रभूतसून्वोः सूनश्च सून्वश्च पुत्रश्च पुत्रश्चेत्यनयोरेकशेष इति सून्वौ प्रभूतौ च तौ सून्वौ चेति

प्रभूतसून्वौ तयोः प्रभूतसून्वोः प्रसिद्धिः प्रख्यातिरभवत् अजायत अग्रजन्मा पुत्रः अनङ्गशब्दाल्लवणः अनङ्गं कामं लुनाति स्वसौन्दर्येणाद्यः करोतीति अनंगलवणः परः द्वीतियः कन्यारूपः सन्तानः मदनांकुशाख्यः मदनं काममङ्कुशयति उत्तेजयतीति मदनांकुशा आख्याऽभिधानं यस्य स मदनांकुशाख्यः संतानशब्दस्य पुंस्त्वात्पुन्निर्देशः मदनां कुशनाम्नी कन्या प्रसिद्धा जातेति भावः श्रीनेमिनाथपक्षे सून्वोरित्यस्यानुजयोरित्यर्थः ॥ १३ ॥

विभावसोरभ्युदये सुरायः, प्रपञ्चतः कोऽपि महर्षियोगात् ।
चक्रे स तद्भूमिसुतात्मशुद्धिं, सापि प्रपेदे व्रततीव्रभावम् ॥ १४ ॥

अन्वय —कोऽपि सुराय प्रपचतः महर्षियोगात् विभावसो. अभ्युदये स तद्भूमिसुतात्मशुद्धिं चक्रे सापि व्रततीव्रभावम्प्रपेदे ॥ १४ ॥

व्याख्या—विभावसोः अग्नेः अभ्युदये प्रज्वलिते अग्निकुण्डे इत्यर्थः कोऽपि कश्चिदपि सुरायः सुरान् देवान् अयते नियोजयतीति सुरायः सुरेन्द्रः महर्षियोगात् महर्षेः—तदानीमयोध्याबहिरुद्याने स्थितस्य जयभूषणमुनेः केवलज्ञानमुत्पन्नमिति सुनासीराद्यः सुरास्तत्रसमाजग्मुः देवाश्च सीताशुद्धिं महेन्द्रं व्यजिज्ञपन् महेन्द्रोऽपि प्रत्यनीकपतिन्तत्र नियुज्य स्वयं मुनेः केवलज्ञानमहोत्सवं विदध्रे इति प्रपंचतः निधानतः स रामः तत् प्रसिद्धम् भूमिसुतात्मशुद्धिं भूमिसुताया जानक्या आत्मशुद्धिं आत्मपूतां दिव्यरूपामित्यर्थः चक्रे विदधे सापि आत्मविशुद्धा सीतापि व्रततीव्रभावम् व्रतस्य चारित्र्यग्रहणस्य तीव्रभावम् चारित्र्यग्रहणनिश्चयनियमम् प्रपेदे स्त्री-

चकार यदा वनवासप्रवासम् वनस्य काठिन्ये यथावन्नियमपालनसंकल्पं प्रपेदे सीता विशुद्धा सती जयभूषणकेवलिनः पादे प्रव्रज्याम-गृहीदिति तत्त्वम् ॥ १४ ॥

सुरानुभावात् भुवि सत्रनिष्ठे, जिनाग्रजाते हरिविप्रयोगात् ।
हिरण्यरेतःपुरसन्नियोगे, देवस्तुरियादिभुवं दिदेव ॥ १५ ॥

अन्वयः—सुरानुभावात् भुवि सत्रनिष्ठे जिनाग्रजाते हरिविप्रयोगात् हिरण्यरेतःपुरसन्नियोगे देवः तुरियादिभुवं दिदेव ॥ १५ ॥

व्याख्या—सुरानुभावात् सुरायाः मदिरायाः अनुभावात् प्रभावात् अथवा सुरस्य अग्निकुमारस्य अनुभावात् प्रभावतः भुवि पृथिव्यां जिनाग्रजाते जिनस्य नेमिनाथस्य अग्रजाते अग्रगे कृष्णे सत्रनिष्ठे वनस्थे अग्निकुमारेण दह्यमानां द्वारकां विलोक्य वनवासिनि कृष्णे सति हरिविप्रयोगात् हरेर्विप्रयोगात् विशेषेण प्रयोगात् प्रवर्धमानात् यद्वा हरति पापमिति हरिर्जिनेन्द्रो नेमिनाथः तस्य विप्रयोगात् वियोगात् हिरण्यरेतः पुरसन्नियोगे पुरे सन्नियोगः संयोगः पुरसन्नियोगः हिरण्यरेतसः अग्नेः पुरसन्नियोगः हिरण्यरेतःपुरसन्नियोगे अग्निसात्भूते नगरे "हिरण्यरेता हुतभुग् दहनो हव्यवाहन इत्यमरः" देवः कृष्णः तुरीयादिभुवं तुरीयस्य चतुर्थस्य आदिस्तृतीयः स नाम्नो भूरिति तुरीयादिभुवं तृतीयभुवं तृतीयनरकं दिदेव जगाम ॥ १५ ॥

'सत्रं स्थाने गृहभेदे सदादाने अरण्ये' इति शब्दस्तोममहानिधिः ॥

तदाग्रजन्मा बहुशोचनेन, मोहात्समुल्लासिविलोचनेन ।
पदे पदे चानकमोचनेन, प्रवृत्तिमाधत्त विरोचनेन ॥ १६ ॥

अन्वय —तदा अग्रजन्मा बहुशोचनेन मोहात् समुल्लासिविलोचनेन पदे पदे च आनकमोचनेन विरोचनेन प्रवृत्तिम् आधत्त ॥ १६ ॥

व्याख्या—तदा कृष्णदेहपरित्यागे सति अग्रजन्मा अग्रे प्रथमं जन्म यस्य स अग्रजन्मा जन्मतः श्रेष्ठः बलदेवः बहुशोचनेन अत्यंतमन्युना मोहात् कृष्णप्रेमतः समुल्लासी विकस्वरे विलोचने यस्य स मोहात् समुल्लासिविलोचनस्तेन भ्रातृस्नेहवशान्निर्निमेषचक्षुषा पदे पदे च स्थाने स्थाने आनकस्य उत्साहस्य धैर्यस्येति यावत् मोचनेन परित्यागेन विरोचनेन विगतं नष्टं रोचनं कुत्रापि रुचिर्मनोनिर्वृतिर्यस्य तेन विगतसुखेन प्रवृत्तिम् प्रवर्त्तनं विहरणम् आधत्त प्रत्यपत्त कृष्णं स्कन्धे निधायेतस्ततः परिबभ्रामेत्यर्थः ॥ १६ ॥

बभ्राम नभ्राडिव वृष्टिधारा, नन्दन् स वर्षार्धमुदूढबन्धुः ।
वृथा कथाभिर्ननु योधनेन, पटुर्बभूवामरबोधनेन ॥ १७ ॥

अन्वय —उदूढबंधु स नभ्राडिव वृष्टिधारा नन्दन् वर्षार्धम् बभ्राम वृथाकथाभिर्ननु योधनेन अमरबोधनेन पटुर्बभूव ॥ १७ ॥

व्याख्या—उदूढबंधुः उदूढः स्कन्धेन धृतः बधुः कृष्णो येन स उदूढबंधु स्कंधधृतकृष्णः नभ्राडिव मेघ इव वृष्टिधारा वर्षधारा नन्दन् अभिनन्दन् वर्षासमये वृष्टिधाराः सहन् यद्वा वृष्टिधारा नयनाश्रुधारा नन्दन् प्रस्रवन् स बलदेवः वर्षार्धम् षड्मासपर्यन्तं बभ्राम विचचार वृथाकथाभिः 'कोऽपि देवः सिद्धार्थस्तदीयभ्राता मृतो देवः सन् अश्ममयं भग्नरथं योजयन् बलेन विहसितः प्रत्याह यः संग्रामे

कदाचिदपि न मृतः स इदानीम्मृतो यदि जीवेत्तदा दृषदोऽयं मज्जो भवेत् अथ च ग्रावणिकमलमारोपयन् तथैव विहसितः यदि मृतो जीवेत्तदाऽश्मनि कमलमपि रोहेदित्यादि कथाभिः अमरबोधनेन सिद्धार्थजीवभूतदेवबोधनेन पटुज्ञानवान् अयम्मे भ्राता मृतः किमेनं वहामीति ज्ञानप्रत्ययः बभूव जातः ॥ १७ ॥

आत्तव्रतस्तप्ततपाः स रामः, क्षमाश्रमान्निर्वृतिरूपधाम ।
लब्ध्वाऽमृतस्याशनमाससाद, द्राक् पञ्चमीं तां च दिवं व्यतीत्य ॥ १८ ॥

अन्वयः—आत्तव्रतः तप्ततपाः स रामः क्षमाश्रमात् निर्वृतिरूपधाम लब्ध्वा द्राक् पञ्चमीम् ताम् च दिवं व्यतीत्य अमृतस्याशनम् आससाद ॥ १८ ॥

व्याख्या—आत्तव्रतः आत्तम् प्राप्तम् स्वीकृतमिति यावत् व्रतं चारित्र्यं येन स आत्तव्रतः गृहीतचारित्र्यः तप्ततपाः तप्तमनुष्ठितं तपः योगः समाधिर्वा येन स तप्ततपाः समनुष्ठितयोगः स रामः बलदेवः क्षमाश्रमात् चारित्र्यग्रहणात् साधुवेषात् निर्वृतिरूपधाम अत्यन्तसुखमयसदनम् यत्रा क्षमा क्षान्तिः तद्रूपाश्रमात् चतुर्थाश्रमादित्यर्थः प्रव्रज्याग्रहणतः द्राक् झटिति ताम् प्रसिद्धाम् पञ्चमीन्दिवम् पञ्चमस्वर्गस्थानम् व्यतीत्य उपभुज्य तत्र भोग्यसमयं यावत् भुक्त्वा अमृतस्य अशनं यत्र तत् अमृतभोजनम् देवत्वम् आससाद देवो बभूव ॥ १८ ॥

अथ क्षपारक्षिगणे गणेशा, विद्यातपःसत्यगवीन्निवेशाः ।
संप्राप्तनिःश्रेयसभूप्रदेशाः, परम्पराम्नायविदां सदेशाः ॥ १९ ॥

अन्वय.—अथ क्षमारक्षिगणे गणेशाः विद्यातप सत्यगवीनिवेशा' सप्राप्तनि.श्रेयसभूप्रदेशा परम्पराम्नायविदा सदेशा ॥ १९ ॥

व्याख्या—अथ अथानन्तरम् भगवन्निर्वाणानन्तरम् क्षमारक्षिगणे क्षमां तितिक्षा "बाह्ये वाध्यात्मिके चैव दुःखे चोत्पातिके क्वचित् न कुप्यति न वा हंति मा क्षमा परिकीर्त्तिता ॥ आक्रुष्टोऽभिहतो वापि वा कौशेन्न च हंति वा । अदुष्टैर्वाङ्मनःकायैस्तितिक्षोः सा क्षमा स्मृतेति स्मृतिः" ता रक्षितुं पालयितुं शीलमस्येति क्षमारक्षी स चासौ गणश्चेति क्षमारक्षिगणः तत्र यद्वा क्षमारक्षिणां गणः संघस्तत्र गणेशाः प्रधानभूताः विद्यातपःसत्यगवीनिवेशाः सत्या चासौ गौर्वाणी चेति सत्यगवी विद्या च तपश्च सत्यगवी चेति द्वन्द्वः तेषु निवेशः अभिनिवेश आग्रहो येषां ते विद्यातपःसत्यगवीनिवेशाः ज्ञानाध्ययनसूनृतप्रवृत्तयः संप्राप्तनिःश्रेयसभूप्रदेशाः संप्राप्ता अधिगता निःश्रेयमस्य मोक्षस्य भूप्रदेशाः भूमान्निःर्यं यैस्ते अधिगतकल्याणभूमिसन्निकर्षाः परंपराम्नायविदां सदेशाः परंपरा अविच्छिन्नो य आम्नायः संप्रदायः गुरुक्रमो वा स परम्पराम्नायः तं विन्दन्ति जानन्तीति परम्पराम्नायविदः निरवच्छिन्नसंप्रदायज्ञानिनस्तेषां सदेशाः सन्निभाः सदृशा इत्यर्थः गणधरा राजानश्च अभवन्निति शेषः ॥ १९ ॥

**गणाग्रणीः श्रीऋषभादिसेन–स्त्विषा जितग्लौर्वृषभादिसेनः ।**
**श्रीनाभिसेनान्वयिपुण्डरीकः, प्रभाविभासी यतिपुण्डरीकः ॥ २० ॥**

अन्वय.—गणाग्रणी. स ऋषभादिसेन त्विषा जितग्लौ वृषभादिसेनः श्रीनाभिसेनान्वयपुण्डरीक. विभाविलासी यतिपुण्डरीक. ॥ २० ॥

व्याख्या—गणाग्रणीः गणेषु गणधरेषु अग्रणीः अग्रे नीयतेऽसौ अग्रणीः गणाग्रणीः गणश्रेष्ठः श्रीऋषभः आदिर्यस्य सेनस्य स ऋषभादिसेनः ऋषभसेनः तदभिधानः त्विषा जितग्लौः त्विषा कांत्या जितः पराजितः ग्लौश्चन्द्रो येन स कान्तिपराजितचन्द्रः 'ग्लौ-

मृगांकः कलानिधिरित्यमरः" अनेन तस्मिन् सर्वश्लाघ्यत्वं व्यज्यते वृषभादिसेनः वृषभसेनः श्रीनाभिसेनान्वयपुण्डरीकः श्रीनाभिसेनस्य नाभिनृपतेर्योऽन्वयः वंशः कुलमित्यर्थः स नाभिसेनान्वयः तत्र पुण्डरीकमिव कमलमिवेति श्रीनाभिसेनान्वयपुण्डरीकः प्रभाविलासी प्रभया दीप्त्या विभासितुं शोभितुं शीलमस्येति प्रभाविलासी दीप्तिमान् यतिपुण्डरीकः यतिषु संयमिषु पुण्डरीकमिवेति यतिपुण्डरीकः अथवा यतिश्चासौ पुण्डरीकश्चेति यतिपुण्डरीकः ऋषभसेनः भरतचक्रवर्त्तिस्तनयस्तस्यैवापरनाम पुण्डरीक इति अत एवात्र कर्मधारयोऽपि सगच्छते ॥ २० ॥

चक्रायुधः श्रीवरदक्षशक्ति-स्त्वथार्यदत्ताभिधयाऽवधार्यः ।
श्रियेन्द्रभूतिर्विबुधार्चितत्वात्, तत्त्वानि वेत्ता तपसाऽग्निभूतिः ॥ २१ ॥

अन्वय—चक्रायुधः श्रीवरदक्षशक्तिः तु अथ आर्यदत्ताभिधया अवधार्यः. श्रिया इन्द्रभूतिः. विबुधार्चितत्वात् तत्त्वानि वेत्ता तपसा अग्निभूतिः ॥२१॥

व्याख्या—चक्रायुधः श्रीशान्तिनाथस्य तनयः श्रीवरदक्षशक्तिः श्रीनेमिनाथस्य गणधरः तु पुनः अथ आर्यदत्तः इति अभिधया नाम्ना अवधार्यः बोध्यः श्रिया संपत्त्या कान्त्या इन्द्र इव देवेन्द्र इव भूतिरैश्वर्यं यस्य स श्रियेन्द्रभूतिः इन्द्रभूतिनामा श्रीमहावीरस्वामिनो गणधरः विबुधार्चितत्वात् विबुधैर्देवैः पण्डितैर्वा अर्चितत्वात् पूजितत्वात् तत्त्वानि परमार्थवस्तूनि वेत्ता ज्ञानवान् तत्त्वज्ञानवान् तपसा संयमेन अग्निभूतिः अग्निरिव भूतिः विभूतिः पराक्रमो यस्य स तपसाऽग्निभूतिः कर्मदाहकत्वादिति भावः अथ च अग्निभूतिरित्याख्यः श्रीमहावीरस्वामिनो गणधरः ॥ २१ ॥

चर्याप्रबन्धात् स हि वायुभूति-र्व्यक्तः सुधर्मा शुभपट्टधर्मा ।
अकम्पितोऽर्चिर्निचयः प्रभासः, श्रीमण्डितः पण्डितवीर्यवासः ॥ २२ ॥

अन्वयः—चर्याप्रबधात् स हि वायुभूति व्यक्त सुधर्मा शुभपट्टधर्मा अकपितः अर्चिनिचयः प्रभासः पंडितवीर्यवासः श्रीमण्डित ॥ २२ ॥

व्याख्या—चर्या प्रबंधात् चर्याया सम्यङ्नियमपरिपालनस्य गुरूपदिष्टव्रताद्यनुष्ठानस्य अथवा चर्याया इर्यापथस्थितेः अटाट्या वा प्रबंधात् प्रकृष्टबंधात् नियमात् संदर्भादित्यर्थः स हि वायुभूतिः वायुरिव भूतिः यस्य स अथवा वायुभूतिनामा गणधरः व्यक्तः व्यज्यते गुणैरिति व्यक्तः गणधरः शुभपट्टधर्मा शोभनः प्रशस्तः पट्टधर्मः पीठधर्मो यस्य स सुधर्मा शोभनो धर्मोऽस्य स तदाख्यो गणधरः अकम्पितः न कम्पते कुतोऽपीति अकंपितः तदाख्यो गणधरः अर्चिर्निचयः प्रभासः अर्चिषान्तेजसां निचयः पुञ्जः राशिर्वा प्रभासः प्रकर्षेण भासते इति प्रभासः पण्डितवीर्यवासः श्रीमण्डितः श्रिया तपःश्रिया दीप्त्याप्रभया मण्डितः शोभितः इति श्रीमण्डितः अथवा गुणैर्दयादाक्षिण्यादिभिः मण्डयते स्मेति मण्डितः श्रीयुक्तश्चासौ मण्डितश्चेति श्रीमण्डितः मध्यमपदलोपी समासः तन्नामको गणधरः ॥ २२ ॥

स मौर्यपुत्रः प्रतिभापवित्रो, मेतार्यनामाप्यनिवार्यधामा ।
श्रुतोऽचलभ्रातृतया नयाढ्यो-ऽनङ्गोऽप्यनङ्गाङ्कुशलब्धसिद्धिः ॥ २३ ॥

अन्वयः—प्रतिभापवित्र. स मौर्यपुत्र. अनिवार्यधामापि मेतार्यनामा नयाढ्यः अचलभ्रातृतया श्रुत अनङ्गोऽपि अनङ्गाकुशलब्धसिद्धि. ॥ २३ ॥

व्याख्या—प्रतिमया बुद्ध्या पवित्रः निष्कल्मषः इति प्रतिभापवित्रः निर्मलबुद्धिः स मौर्यपुत्रः तदाह्वो गणधरः अनिवार्यधामा अनिवार्यमनिरुद्धं अपराभूतमित्यर्थः धाम तेजो यस्य स अप्रतिमतेजस्कः मेतार्यनामा मां लक्ष्मीमितः प्राप्तः इति मेतः स चासौ आर्यश्चेति मेतार्यः तदाख्यो गणधरः नयाद्यः नीतिमान् अचलभ्रातृतया श्रुतः ख्यातः अनंगोऽपि अनंगाद् कुशलव्यसिद्धिश्चेति सर्वे गणधराः ॥ २३ ॥

सुश्रीधरः सर्वहितैर्यशोभि-र्दिक्शोभिना यस्य सुपार्श्वकीर्तिः ।
श्रीकेशवः क्लेशवतो विनेता, नयेन पृथ्वीतिलकः प्रथावान् ॥ २४ ॥

अन्वय—सर्वहितैर्यशोभिः सुश्रीधरः दिक्शोभिना नयेन यस्य सुपार्श्वकीर्तिः क्लेशवतो विनेता पृथ्वीतिलकः प्रथावान् श्रीकेशवः ॥ २४ ॥

व्याख्या—सर्वहितैः सर्वेषां चराचराणां हितैर्हितप्रयोजकैर्यशोभिः कीर्त्तिभिः सुश्रीधरः सुष्ठु शोभना चासौ श्रीश्चेति सुश्रीस्तां धरतीति सुश्रीधरः शोभनश्रीमान् अथवा सर्वहितैर्यशोभिरुपलक्षितः सुश्रीधरस्तन्नामा श्रीपार्श्वनाथस्वामिगणधरः यस्य प्रभोरिति शेषः दिक्शोभिना दिशांशोभयतीति तेन दिशामुद्योतकारकेण नयेन नीत्या सुपार्श्वकीर्त्तिस्तदाख्यः क्लेशवतो विनेता क्लिश्यते उपतापयतीति क्लेशः स अस्यास्तीति क्लेशवान् तस्य विनेता शिक्षकः सत्यार्थप्रवर्त्तयिता पृथ्वीतिलकः पृथ्व्यां भूमौ तिलक इवेति पृथ्वीतिलकः भूविशेषकः प्रथावान् कीर्त्तिमान् श्रीकेशवः केसुखे शेते प्रभवतीति केशवः यद्वा के जले शेते इति केशवः केशाद्वोऽन्यतरस्यामिति वः 'मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनो'रित्यमरः 'को ब्रह्मणि समीरात्मयमदक्षेषु भास्करे मयूरेऽग्नौ च पुंसि स्यात्सुखशीर्षज-

लेपु क'मिति मेदिनी श्रीकृष्ण इत्यर्थः ॥ २४ ॥

स्फुरन्मनीषाविमलः सुभद्रा–नुरागभागर्जुन एव लोके ।
श्रीसत्यकीर्तिर्ध्रुवमङ्गलाख्यो, निर्व्याजसाम्राज्यवतामपीज्यः ॥ २५ ॥

अन्वयः—स्फुरन्मनीषा विमल सुभद्रानुरागभाग् अर्जुन एव लोके निर्व्याजसाम्राज्यवतामपीज्य श्रीसत्यकीर्त्ति ध्रुवमङ्गलाख्य· ॥ २५ ॥

व्याख्या–स्फुरन्मनीषा विमलः स्फुरन्ती देदीप्यमाना या मनीषा बुद्धिः सा स्फुरन्मनीषा प्रस्फुरद्बुद्धिः तया विमलः निर्मलः सुभद्रानुरागभाग् सुभद्रायाः कृष्णभगिन्या योऽनुरागः प्रीतिस्तां भजते इति स अर्जुनः तदभिधानः पाण्डवः निर्व्याजसाम्राज्यवतामपीज्यः निर्व्याजम् निष्कपटम् संपूर्णमित्यर्थः यत् साम्राज्यं सार्वभौमत्वम् तदस्यास्तीति निर्व्याजसाम्राज्यवान् तेषामपि ईज्यः पूज्यः श्रीसत्यकीर्त्तिः सत्या निश्चला कीर्त्तिर्यशो यस्य स ध्रुवमङ्गलाख्यः ध्रुवमङ्गलनामा अभूदिति शेषः ॥ २५ ॥

तेजोविशेषाज्जितभानुभानु–स्तस्यानुयातो भरतः सशङ्खः ।
प्रद्युम्नशाम्बावनुविष्णु कृष्णौ, तथोदधिर्धीरगभीरसंज्ञः ॥ २६ ॥

अन्वय.—तेजोविशेपात् जितभानुभानुः तस्य अनुजातः भरतः सशंख. प्रद्युम्नशाम्बौ अनुविष्णु कृष्णौ तथा उदधि. धीरगभीरसज्ञ. ॥ २६ ॥

व्याख्या—तेजोविशेषात् तेजसा प्रभावानां विशेषात् आधिक्यात् जितः पराभूतः भानुः सूर्यो येन स तेजोविशेषात् जितभानुः स चासौ भानुश्चेति तेजोविशेषाज्जितभानुभानुः यद्वा तेजोविशेषाज्जितः पराजितः भानोः सूर्यस्य भानुः किरणो येन स तथोक्तः भानु-

नामा कृष्णतनयः तस्यानुजातः भरतः सशंखः तस्य भानोः कृष्णतनयस्य अनुजातः अनुजः पश्चाज्जायमानः भरतः सशंखः इमावपि कृष्णतनयौ प्रद्युम्नशाम्बौ प्रद्युम्नः रुक्मिणीतनयः शाम्बः जाम्बवतीतनयः तयोर्द्वन्द्वः तौ प्रद्युम्नशाम्बौ अनुविष्णु कृष्णौ अनु पश्चात् विष्णुः कृष्णो यस्य स बलरामः कृष्णः वासुदेवः तयोर्द्वन्द्वः तौ अनुविष्णु कृष्णौ रामकृष्णौ तथा उदधिः धीरः गम्भीरः एते सर्वे कृष्णतनयाः तौ धीरगम्भीरौ संज्ञे ययोः सधीरगम्भीरसंज्ञः धीरगम्भीरनामा ॥ २६ ॥

इत्यादिनालङ्कृतमन्तरीपं, जम्बूसुनाम्ना प्रभवेन नित्यम् ।
शय्यम्भवेनादधताऽद्भुताय, श्रीमद्यशोभद्रपदं स्वगोत्रे ॥ २७ ॥

अन्वय —इत्यादि॥ अलङ्कृ। अन्तरीपम् जम्बूसुनाम्ना प्रभवेन नित्यम् अद्भुताय स्वगोत्रे श्रीमद्यशोभद्रपदम् आदधता शय्यम्भवेन ॥ २७ ॥

व्याख्या—इत्यादिना पूर्वोक्तप्रकारेण अथवा जम्बूसुनाम्ना जम्बू इति सुष्ठुनाम यस्य तेन तथोक्तेन गुणरत्नमयत्वेन जम्बूद्वीपे जम्बूरिव जम्बूः स चासौ स्वामी चेति जम्बुस्वामी तेन प्रभवेन प्रभुत्ववता अथ च तत्पट्टे क्रमागतेन प्रभवस्वामिना प्रभवति प्रधान भवतीति प्रभवेन स्वगोत्रे गां पृथ्वीं त्रायते इति गोत्रः स्वस्य गोत्रः स्वगोत्रः तस्मिन् यद्वा स्वस्य गौः स्वगौः तां त्रायते इति स्वगोत्रस्तस्मिन् अथवा स्वगोत्रे स्वकीयपरम्परापदे शय्यंभवेन शय्यायां भवतीति शय्यंभवः गुम्फनकर्त्ता " शय्या गुम्फनमिति शब्दस्तोममहानिधिः " सृष्टिविधानदक्षः पालकत्वेनेत्यर्थः तेन अथ च शय्यंभवनाम्ना स्वामिना स्वशिष्यपरंपरागतेन श्रीमद्यशोभद्रपदम् यशसा कीर्त्या भद्रपदम् कल्याणपदम् आदधतो स्वस्थाने निवेशयता यशोभद्रस्वामी तत्पश्चात्तत्पट्टेऽभवदिति भावः अन्तरी-

पम् द्वीपम् जम्बूद्वीपम् अद्भुताय लोकानामिति शेषः अलंकृतं शोभितम् श्रीमहावीरस्वामिगुरुपरम्परागतैरेतैर्जम्बूद्वीपमलंकृतमिति तात्पर्यः ॥ २७ ॥

संभूतपूर्वं विजयं दधानः, स भद्रबाहुर्यशसां समुद्रः ।
श्रीस्थूलभद्रोऽपि गिरिस्तथार्य–नाम्ना ततश्चार्यसुहस्तिसूरिः ॥ २८ ॥

अन्वयः—सभूतपूर्व विजय दधानः सभूतविजय यशसा समुद्रः स भद्रबाहुः श्रीस्थूलभद्र तथा आर्यमहागिरिः ततः नाम्ना आर्यसुहस्तिसूरिः ॥२८॥

व्याख्या—संभूतपूर्व विजय दधानः संभूत इति पूर्व पूर्वभागं यस्य एवंभूतं विजयं तं पदं दधानः अथ च संभूतो रागादिविजयो यस्य स संभूतविजयः यशसां कीर्त्तीनां समुद्रः कीर्त्तिरत्नाकरः स प्रसिद्धः भद्रबाहुः भद्रौ कल्याणगुणसंपन्नौ बाहू यस्य स तथोक्तः ततस्तदनन्तरम् स्थूलभद्रः स्थूलमुपचितं भद्रं कल्याणं यस्य स तथा आर्यनाम्नागिरिः आर्यमहागिरिः परिषहाद्युपद्रवैरकंप्यत्वात् महागिरिरिवेति महागिरिः स चासौ आर्यश्चेति आर्यमहागिरिः ततस्तदनन्तरम् आर्यसुहस्तिसूरिः कर्मद्रुमोन्मूलने सुहस्तीवेति सुहस्ती आर्यश्चासौ सुहस्तिसूरिश्चेति आर्यसुहस्तिसूरिः तत् परम्परायां क्रमादागता एते नव श्रुतकेवलिनः ॥ २८ ॥

अन्येऽपि मान्या हरिभद्रसूरि–शीलाङ्कनामाभयदेवमुख्याः ।
श्रीहेमचन्द्रा मलयाद्र गिरीशा, जीयासुरुद्योगधिया गिरीशाः ॥ २९ ॥

अन्वयः—अन्येऽपि नाम्ना हरिभद्रसूरिशीलाङ्कनाम्ना अभयदेवमुख्या. श्रीहेमचन्द्रा. मलयाद् गिरीशा उद्योगधिया गिरीशा जीयासु ॥ २९ ॥

व्याख्या—अन्येऽपि पूर्ववर्णितेभ्योऽन्ये भिन्नाः हरिभद्रसूरिः हरिभद्रसूरिनामा १४४४ चतुश्चत्वारिंशदधिकचतुर्दशशतग्रंथप्रणेता शीलांकनामा श्रीशीलांकाचार्यः आचारांगसूत्रटीकाकारः अभयदेवमुख्याः अभयदेवसूरिः नवांगटीकाकृत् तथा श्रीहेमचन्द्राः श्रीहेमचन्द्राचार्याः अनेकग्रंथप्रणेतारोऽपरनाम्नपतिरूपाः उद्योगधिया उद्युज्यते इत्युद्योगः तस्य धिया बुद्धया उद्योगबुद्धया गिरीशाः सुमेरुपर्वताः द्वेषाना कार्यारोगस्तत्रैव भवतीति यथा सुमेरुर्मन्त्रणास्थानम् तथा एते इति भावः अथवा उत् उत्कृष्टो यो योगश्चित्तवृत्तिनिरोधः यद्वा योगः शासनाराधनाप्रयमायः तद्धिया तन्मत्या गिरीशाः सुमेरुपर्वतकल्पाः अनेकानेकप्रत्यूहपवनेऽपि निःप्रकम्पा इति भावः मलयात् गिरीशाः मलयगिरीशा इत्यादयः सूरीश्वरा जीयासुः सर्वोत्कर्षेण वर्त्तिषीरन् ॥ २९ ॥

सुवर्णवर्णं गजराजगामिनं, प्रलम्बबाहुं सुविशाललोचनम् ।
नरामरेन्द्रैः स्तुतपादपङ्कजं, नमामि भक्त्या वृषभं जिनोत्तमम् ॥ ३० ॥

अन्वयः—सुवर्णवर्णं गजराजगामिनम् प्रलम्बबाहुम् सुविशाललोचनम् नरामरेन्द्रैः स्तुतपादपङ्कजम् जिनोत्तमम् वृषभम् भक्त्या नमामि ॥ ३० ॥

व्याख्या—सुवर्णवर्णम् सुवर्णः स्वर्ण इव वर्णो यस्य स सुवर्णवर्णस्तम् प्रकाशमयत्वात् तथा गजराजगामिनम् गजाना गजेषु वा राजा गजराजः हस्तिराजः स इव गतुं शीलं यस्य स गजराजगामी तम् धीरोदात्तत्वात् निर्भीकगमनः प्रलम्बबाहुम् प्रलम्बौ बाहू यस्य स प्रलम्बबाहुस्तम् आजानुबाहुम् सुविशाललोचनम् सुविशाले अतिदीर्घे लोचने नेत्रे यस्य तम् पृथुनयनम् नरामरेन्द्रैः स्तुतपादपंकजम्

नराश्च अमराश्च इति नरामरास्तेषामिन्द्रास्तैः स्तुतम् स्तुतिविषयीकृत पादपंकजम् चरणकमल यस्य तम् जिनोत्तमम् जिनेश्वरम् वृषभम् ऋषभप्रभुम् भक्त्या श्रद्धया प्रेम्णेत्यर्थः नमामि नमस्करोमि ॥ ३० ॥

सौरं महः श्रीतपसां गणेऽस्मिन्, देदीप्यते सौम्यमपीह कीर्त्या ।
सप्तार्थसंधानजकाव्यमेतत्, तदुद्भवं तेन शुभं चिराय ॥ ३१ ॥

अन्वय —श्रीतपसा गणेऽस्मिन् सौरम् मह. इह कीर्त्या सौम्यम् अपि मह. देदीप्यते एतत् सप्तानुसधानजकाव्यम् तदुद्भवम् तेन चिराय शुभम् ३१

व्याख्या—अस्मिन् पुरो दृश्यमाने तपसांगणे तपोगच्छे अथवा तपसां व्रतविशेषाणा गणे समुदाये सौरम्महः सूरस्य सूर्यस्य इदम् सौरम् महस्तेजः तपसः कर्मदाहकत्वात् सौरतेज इव तेजस्तत्रेति अथ च सूरेराचार्यपदपदकस्य इदम् सौरम् सूरिसंबन्धिमहस्तेजोऽस्मिन् अथ च कीर्त्या यशसा सौम्यम् सोमस्य चन्द्रस्येदम् सौम्यम् चान्द्रम् सर्वेषामनुकूलत्वात् महस्तेजः इह गणे देदीप्यते अतिशयेन विराजते एतत् सप्तार्थसधानजकाव्यम् सप्तार्थस्य सप्ताभिधेयस्य यत् संधानमनुसरणम् तस्माज्जातमिति सप्तार्थसंधानजं च तत् काव्यञ्चेति सप्तार्थसंधानजंकाव्यम् तदुद्भवम् सूर्यवंशीयराजतेजोभवम् चन्द्रवशीयनृपोद्भवम् सूरिपरम्परोद्भवञ्चैतत् तेन उभयतः पूतत्वात् चिराय चिरम् शुभम् कल्याणजनकं भूयादिति शेषः ॥ ३१ ॥

पूर्वं श्रीहीररूपं तदनु कनकवत्पुण्यशीलानुभूतं, पश्चार्हद्रामकृष्णाभ्युदयकमलया सिद्धिचारित्रपूतम् ।
शुद्धं राज्ये कृपायाश्चरितमदुरितं नन्दतात् सत्प्रसादात्, श्रीमन्मेघायमान मनसि रसभरैर्नित्यमुन्नीयमानम् ॥

समस्यासन्धान महाकाव्यम् ॥४४३॥

अन्वय —पूर्वं श्रीहीरत्वम् तदनु कनकवत् पुण्यशीलानुभूतम् पञ्चार्हद्रामकृष्णाभ्युदयकमलया सिद्धचारित्र्यपूतम् शुद्धम् कृपाया राज्ये अदुरित चरितं श्रीमत् रसभरमनसि मेघायमानम् उन्नीयमानम् सत्प्रसादात् नन्दतात् ॥ ३२ ॥

व्याख्या—पूर्वम् प्रथमम् श्रीहीरमिव वज्रमणिरिव रूपं स्वरूप यस्य तत् तथोक्तम् तदनु तत्पश्चात् कनकवत् स्वर्णवत् सुवर्णतुल्यम् पुण्यशीलानुभूतम् पुण्यम् सुकृतम् शीलमाचारः ताभ्यामनुभूतम् सम्बद्धम् अथवा पुण्यशीलैः पवित्राचारिभिः अनुभूतमधिष्ठितम् चरित्रनायकत्वेनोपवर्णितम् पंच त अर्हन्तश्चेति पञ्चार्हन्तः रामश्च कृष्णश्चेति रामकृष्णौ पञ्चार्हन्तश्च रामकृष्णौ चेति पंचार्हद्रामकृष्णाः तेषाम् अभ्युदय एव उत्थानमेव कमला लक्ष्मीः इति पचार्हद्रामकृष्णाभ्युदयकमला तया सिद्धिचारित्र्यपूतम् मोक्षजनकचारित्र्येण प्रत्रज्यया अथवा सिद्धिर्वृद्धिः सुखादिलब्धिः तया पूतम् पवित्रम् निष्कलमषम् कृपायाः दयाया राज्ये दयासाम्राज्ये अदुरितम् दुरितरहितम् निष्पापम् चरितम् आख्यानम् मनसि चित्ते रसभरैः शातादिरसाना भरैर्भारै अथ च रसाना जलाना भरैर्भारै,श्रीमन्मेघायमानम् मेघमिवाचरितम् घनायमानम् नित्यम् सततम् उन्नीयमानम् उर्द्ध्वीक्रियमाणम् अथ च दृश्यमानम् सत्प्रसादात् सताम् सज्जनानाम् प्रसादात् अनुग्रहात् नन्दतात् आनन्दम् प्राप्नुयात् महत्त्वमनुभूयादित्यर्थः ॥ ३२ ॥

अथ च पूर्वम् श्रीहीररूपम् श्रीहीरविजयस्वरूपम् श्रीहीरविजयस्वरूपेण स्थितम् तदनु तत्पश्चात् कनकवत् कनकविजयस्वरूपवत् ततः पुण्यशीलानुभूतम् पुण्यः पवित्रो यः शीलः शीलविजयः तेन अनुभूतम् अधिष्ठितम् पञ्चसंख्यकाये अर्हन्तः रामकृष्णौ च इति पञ्चार्हद्रामकृष्णाः तेषामभ्युदयकमलया कमलविजयश्च इति पञ्चार्हद्रामकृष्णाभ्युदयकमला तया सिद्धविजयः चारित्र्यविजयः ताभ्यां

सरणी-टीकया समन्वितम् ॥४४३॥

पूतम् पवित्रम् कृपायाः कृपाविजयस्य अदुरितम् निर्दुष्टम् चरितम् मेघायमानम् मेघविजयेन अपमानम् नीयमानम् एतच्चरितम् सत्प्रसादात् सज्जनजनानुग्रहात् नन्दतात् आनन्दमाप्नुयात् ॥ ३२ ॥

इति श्रीसप्तसंधाने महाकाव्ये तपागच्छे भट्टारकश्रीविजयरत्नराज्ये महोपाध्यायश्रीमेघविजयगणिविरचिते परम्पराधिकारवर्णनो नाम नवम सर्ग· ॥ श्री. ॥

---

## ॥ ग्रन्थ प्रशस्तिः ॥

सूत्रतः सूत्रिता ग्रन्थे, द्विचत्वारिंशदन्विता । चतुःशतीह काव्यानां, सप्तसंधाननामनि ॥ १ ॥

श्रीहेमचन्द्रसूरीशैः, सप्तसंधानमादिदम् । रचित तदलाभे तु, स्तादिदं तुष्टये सताम् ॥ २ ॥

वियद्रसमुनीन्दूना (१७६०) प्रमाणात् परिवत्सरे । कृतोऽयमुद्यमः पूर्वाचार्यचर्याप्रतिष्ठितः ॥ ३ ॥

॥ इति ग्रन्थ प्रशस्तिः ॥

## टीका प्रशस्तिः ।

श्रीमन्महेन्द्रमुकुटोपलरञ्जितांघ्रि-पंचार्हतस्तवनसंस्तवसंस्कृता या ।
श्रीरामकृष्णचरिते सरणी नवीना, नेमेः पवित्रचरणे क्रियतेऽर्पणा सा ॥ १ ॥

यस्याविर्जननोपकारकरणप्रख्यातकीर्त्तिव्रजः, शुद्धाचारवनप्रचारचरणादक्षुण्णरक्षाव्रतः ।
विद्याशांतनिशांतशांतमहजन्मांतप्रभाखण्डिता-ऽविद्याध्वानततिः सदा विजयते श्रीवर्धमानः प्रभुः ॥ २ ॥

अमन्दस्वच्छन्दोच्छलितललितच्छन्दविशद-च्छटाच्छायाक्षिप्तक्षणिकजगदच्छुद्रविभवः ।
क्षमापीठे शांतिः प्रसरति यदीयाक्षरतरा, क्षमाभूमिः क्षित्या चरमजिनपोऽसौ विजयते ॥ ३ ॥

तदीये सत्पट्टे क्षपिततत्कर्मागततमाः, शमागमग्रामक्रमणघनधामानिगममाः ।
अजिस्रं चाचारक्षमभृतसुलक्ष्माशितरमा-समालम्बप्रेमाऽभवदिह सुधर्मामुनितमः ॥ ४ ॥

ततो जम्बूनामी रुचिरवरजाम्बूनदरुचि-स्तदीये पट्टाब्धावजनि जनतानन्दनकरः ।
जगज्जन्तूद्यागाङ्कुरजनननिर्व्याजजलदो, ज्वलत्कर्मज्वालाशमनजलधिर्जैनविभवः ॥ ५ ॥

तपोगच्छच्छायायदवधिरभूत्साधुनिकरे, यदीयाच्छच्छाया क्षपयति महामोहतपनम् ।
समागच्छत्पट्टे तदनु भुवि रोचिष्णुरधिक-श्चतुश्चत्वारिंशत्तम इह जगच्चन्द्रमुनिराट् ॥ ६ ॥

यस्योपदेशमहिमा ननु वर्ण्यते किं, सम्राट्महानकबरोऽपि च संप्रबुद्धः ।
पट्टेऽष्टमागरमिते प्रबभूव हीर–सूरिः समस्तमुनिवृन्दविविक्तहीरः ॥ ७ ॥

सद्बुद्धिबुद्धिविजयस्तदनुक्रमेण, पट्टेऽक्षिवासरमितेऽजनि शान्तमूर्त्तिः ।
यः सर्वदा भुवि जनावनबद्धलक्ष्यो, लक्षीचकार निरवद्यशिवाख्यलक्ष्मीम् ॥ ८ ॥

तत्पट्टपङ्कजविकासनभानुमाली, चंचन्निशाकरसमुज्ज्वलकीर्त्तिशाली ।
श्रीवृद्धिवृद्धिविजयोऽभवदुग्रशील–शाली सुशासनविभावकशिष्यमाली ॥ ९ ॥

राजद्राजगुणोजनावनमहत्संधानुसंधानवान्, तीर्थोद्धारदृढव्रतो व्रतिजनज्ञानप्रचारोत्सुकः ।
सम्यग्बोधितराजमण्डलनमत्पादारविन्दोऽभव–त्तत्पट्टाम्बुनिधावखण्डशशभृत् श्रीनेमिसूरीश्वरः ॥ १० ॥

योऽयं सम्प्रतिशासनोन्नतिकरः शिष्यान्विनेयान् भृशं–नानादेशविशेषकेषु सुकृतोद्धाराय संप्रेषयन् ।
नित्यं सज्जनतोपकारकरणे लग्नो निमग्नः शिवे–सद्धर्मोपचयाश्रितो विजयते ह्येको धरामण्डले ॥ ११ ॥

तस्यप्रभोश्चरणपंकजचंचरीको–विद्यावदातविजयामृतसूरिनामा ।
स्वीयान्यदीयनिगमागमपारदृश्वा–विश्वासभूमिरधिभूमिममस्तजन्तोः ॥ १२ ॥

सोऽयं शास्त्रविशारदो बहुगुणग्रामैकधामा कवि–रत्नः प्रोच्छलदच्छशारदशशिज्योत्स्नाभकीर्त्तिव्रजः ।
विद्वन्मण्डलमण्डनोऽमलमना भट्टारकाचार्यकः, शुद्धाचारविचारचर्चितसदाचाराञ्चितो राजते ॥ १३ ॥

कार्पण्यवाणिज्यपुरे पुरन्दराऽमरावतीह्रीपदमाददाने ।
श्रीमद्गुरोः शासनमन्नतागो वासं चतुर्मासमचीकरत्सः ॥ १४ ॥

श्री न्यालचन्द्रादिकसंघसत्कृत–स्तेषामतीवादरणीयभावतः ।
श्री सप्तसंधानककाव्यटीका–कृते मुहुः प्रार्थनयानुरञ्जितः ॥ १५ ॥

अनन्यचेतनकमना अनाविलामरीरचत्तरणीं सुविवृतिम् ।
न धीधनाः क्वापि परार्थभावनापृथक्मना जायत एव जातुचित् ॥ १६ ॥

कृतिरियं कृतिना नयनक्रमावतरणात्परिपूतकृता यदि ।
सफलता फलमेत तदा भृशं सुजनतुष्टिरहोऽतिगरीयसी ॥ १७ ॥

गुणनिधाननिधिचन्द्रे १९९३ सम्मिते हायने स-न्नभसि विमलपक्षे व्यालतिथ्यां बुधेऽह्नि ।
इयमलभत पूर्ति नेमिमज्जन्मतिथ्यां, भवतु च सरणीयं तेन तेषां मुदेद्राक् ॥ १८ ॥

तदियं सरणी लभतां गुरुजनपादप्रसन्नता शश्वत् । आकल्पांतं भूमौ भूयान्निःपङ्किला भूयः ॥ १९ ॥

तदीय—

विनीतविनेयविनेयो धुरन्धरविजयः

शुभमस्तु